ताम् । २२५८ आत्मनेपदेष्वनतः ७।१।५॥ अनकारात्परस्यात्मनेपदेषु झस्य 'अत्' इत्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' ( सू २२४७ ) । ऐधिढ्वम् । इड्भिन्न एव इणिह 'गृह्यत' इति मते तु ऐधिध्वम् । ढधयोर्वस्य मस्य च द्वित्वविकल्पात्षोडश रूपाणि । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्य-

---

आदेर्झकारस्य झोऽन्त इत्यन्तादेशे प्राप्ते—आत्मनेपदेषु । 'झोऽन्त' इत्यतः झ इति षष्ठ्यन्तमनुवर्तते । 'आत्मनेपदेष्वि'ति षष्ठ्यर्थे सप्तमी । आत्मनेपदावयवस्य झकारस्येति लभ्यते । 'अदभ्यस्ता'दित्यतः अदित्यनुवर्तते । न अत् अनत् । तस्मादिति विग्रहः । तदाह—अनकारादित्यादिना । ऐधिषतेति । झावयवझकारस्य अत् इत्यादेशः । च्लिः । सिच् । इट् । आट् । वृद्धिः । षत्वम् । ऐधिष्ठा इति । थास् च्लिः । सिच् इट् । आट् । वृद्धिः । षत्वं थकारस्य ष्टुत्वेन ठकारः । रुत्वविसर्गौ । ऐधिषाथामिति । आथाम् । च्लिः । सिच् । इट् । आट् । वृद्धिः । षत्वम् । अथ ध्वमो धस्य ढत्व स्मारयति—इणः षीध्वमिति । ऐधिढ्वमिति । ध्वम् । च्लिः । सिच् । इट् । आट् । वृद्धिः । 'धि चे'ति सस्य लोपः । 'इणः षीध्व'मिति धकारस्य ढत्वम् । इटः लुप्तसिज्भक्ततया सिजन्ताङ्गान्तभूतत्वेन इडन्तस्य इण्णन्ताङ्गत्वादिति भावः । इड्भिन्न एवेति । उत्तरसूत्रे 'विभाषेटः' इत्यत्र इड्ग्रहणात् पूर्वसूत्रे 'इणः षीध्व'मित्यत्र इड्भिन्न एव इण् गृह्यत इति केचिदाहुः । तन्मते तु प्रकृते इटः परत्वात् धकारस्य ढत्वाभावे ऐधिध्वमित्येव रूपमित्यर्थः । इदं तु मतान्तर भाष्याऽनारूढमिति सूचयितु तुशब्दः । ढधयोरिति । मतभेदमाश्रित्येदम् । तत्र ढत्वाभावपक्षे धकारस्य अनचि चेति द्वित्वविकल्पात् द्विधमेकधमिति रूपद्वयम् । एवं ढत्वे द्विढम्, एकढमिति रूपद्वयम् । रूपचतुष्टयेऽपि 'यणो मयो द्वे वाच्ये' इत्यत्र मय इति पञ्चमीमाश्रित्य वकारस्य द्वित्वविकल्पादेकवकाराणि द्विवकाराणि च प्रागुक्तानि चत्वारि रूपाणि भवन्ति । तथा च अष्टौ रूपाणि सम्पन्नानि । मकारस्य द्वित्वविकल्पादेतान्यष्टौ रूपाणि एकमकाराणि द्विमकाराणि चेति षोडश रूपाणि सम्पन्नानीत्यर्थः । ऐधिषीति । लुङ इडादेशः । च्लिः । सिच् । इडागमः । आट् । वृद्धिः । वहिमहोस्तु च्लेः सिचि इडागमे आटि वृद्धौ, ऐधिष्वहि, ऐधिष्महीति रूपे । इति लुङ्प्रक्रिया । ऐधिष्यतेति । लृङः तादेशः । स्यः । इट् । आट् । वृद्धिः । षत्वम् । ऐधिष्येतामिति । आतां स्यः । इट् । आकारस्य इय् । आद्गुणः । यलोपः । आट् । वृद्धिः । षत्वम् । ऐधिष्यन्तेति झावयवझकारस्यान्तादेशः । स्यः । इट् । आट् । वृद्धिः । षत्वम् । ऐधिष्यथा इति । थास् । स्यः । इट् । आट् । वृद्धिः । रुत्वविसर्गौ । ऐधिष्येथामिति । आथाम् । स्यः । इट् । आकारस्य इय् । आद्गुणः । यलोपः । आट् । वृद्धिः । षत्वम् । ऐधिष्यध्वमिति । ध्वम् । स्यः । इट् । आट् । वृद्धिः ।

ध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि । उदात्तत्वाद्धलादेरिट् प्रसङ्गादनुदात्ताः सङ्गृह्यन्ते—

ऊदॄदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥
शक्लृपच्मुच्रिच्वच्विच्सिच्प्रच्छित्यज्निजिर्भजः ।
भञ्जभुज्भ्रस्ज्मस्जियज्युज्रुज्रञ्ज्विजिर्स्वञ्जिसञ्ज्सृजः ॥
अद्क्षुद्खिद्छिद्तुदिनुदः पद्यभिद्विद्यतिर्विनद् ।
शद्सदी स्विद्यतिः स्कन्दि हदी क्रुध् क्षुधिबुध्यती ॥

षत्वम् । ऐधिष्य इति । इडादेशः । स्यः । इडागमः । षत्वम् । आद्गुणः । वहिमह्योस्तु स्यः । इट् । अतो दीर्घः । आट् । वृद्धिः । षत्वम् । ऐधिष्यावहि, ऐधिष्यामहि, इति रूपे । नन्वेधधातोरनुदात्तेत्कत्वात् 'एकाच उपदेशेऽनुदात्तादि'तीण्निषेधः कुतो न स्यादित्यत आह—उदात्तत्वादिति । एधधातुर्यद्यपि अनुदात्तेत् तथापि अनुदात्तस्येतः लोपे सति परिशिष्टो धातुर्नानुदात्त इति भावः । ननु कतिपये धातवः पाणिनिना अनुदात्ता उच्चरिता इति कथमिदानीन्तनैरवगन्तव्यमित्यत आह—प्रसङ्गादिति । स्मृतस्योपेक्षानर्हत्वम्–प्रसङ्गः । पाणिनिपठितानामनुदात्तधातूनां तदानीतनशिष्यपरम्परया आनुनासिक्यवदिदानीं ज्ञानं सम्भवतीति भावः । ऊदॄदन्तैरिति । अजन्तेषु धातुषु ऊदन्तैः ॠदन्तैश्च धातुभिर्विना, यु रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रि एतैश्च धातुभिर्विना, वृङ् वृञ् आभ्यां च विना, अन्ये एकाच अजन्तधातवः । निहताः । अनुदात्ताः स्मृताः । पाणिनिशिष्यपरम्परया ज्ञाता इत्यर्थः । अथ हलन्तेषु अनुदात्तान् धातून् परिगणयति—शक्लृ पच् मुचीति । शक्लृ पच मुच् रिच् वच विच सिच् प्रच्छि त्यज् निजिर भज् एषां द्वन्द्वः । तत्र कान्तेषु शक्लृ इत्येकः । लृकार इत् । भाष्ये तु अनुबन्धरहितः पाठो दृश्यते । चान्तेषु पच् मुच रिच् वच् विच् सिच् इति षट् । अत्र डुपचष् इत्यस्यैव ग्रहणं, प्रसिद्धत्वात् । न तु पचि व्यक्तीकरणे इत्यस्येत्याहुः । मुच्लृ मोक्षणे इत्यस्यैव ग्रहणं, न तु मुचि कल्कन इति भौवादिकस्य । अविशेषात्सर्वस्येत्यन्ये । छान्तेषु प्रच्छ एकः । प्रच्छीतीकार उच्चारणार्थः । णिजिरित्यत्र इर इत्सञ्ज्ञा वक्ष्यते । भञ्ज भुजित्यादि सृज इत्यन्तमेकं पदम् । जान्तेषु त्यज् निज् भज् भञ्ज् भुज् भ्रस्ज् मस्ज् यज् युज् रुज् रञ्ज् विज् स्वञ्ज् सञ्ज् सृज् इति पञ्चदश । अद् क्षुदित्यादि नुद इत्यन्तमेकं पदम् । तत्र नुदेरिकार उच्चारणार्थः । पद्यभिद्वित्येकं पदम् । समाहारद्वन्द्वः । पद्येति श्यना निर्देशः । विद्यतिरिति श्यना निर्देशः । विनदिति श्नमा निर्देशः । शद्सदी स्कन्दिहदी क्षुधिबुध्यती इति द्विवचनान्तानि । सदि स्कन्दि हदि क्षुधि इति इका निर्देशः । स्विद्यति बुध्यतीति श्तिपा श्यन्विकर-

बन्धिर्युधिरुधी राधिव्यधशुधः साधिसिध्यती ।
मन्यहन्नाप्क्षिप्छुपितप्तिपस्तृप्यतिदृप्यती ॥
लिप्लुप्वप्शप्स्वप्सृपियभ्रभ्लभ्गम्नम्यमो रमिः ।
क्रुशिर्दंशिदिशी दृशमृशरिशरुशलिशविशस्पृशः कृषिः ॥
त्विषतुषद्विषदुषपुष्यपिषविषशिषशुषश्लिष्यतयो घसिः ।
वसतिर्दहदिहिदुही नहमिहरुहलिहवहिस्तथा ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ।
तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥

णयोर्निर्देशः । ततश्च दान्तेषु अद् क्षुद् खिद् छिद् तुद् नुद् पद् ( श्यन्विकरणः ) भिद् विद् ( श्यन्विकरणः ) विद् ( श्नम्विकरणः ) शद् सद् स्विद् (श्यन्विकरणः) स्कन्द् हद् इति पञ्चदश । बन्धिरिति । इका निर्देशः । युधिरुधी इत्येकं पदम् इका निर्देशः 'राधिव्यधशुधः' इत्येकं पदम् । राधीति इका निर्देशः । साधिसिध्यती इति द्वन्द्वः । साधीति इका निर्देशः । ततश्च धान्तेषु क्रुध् क्षुध् बुध् (श्यन्विकरणः) बन्ध् युध् रुध् राध् व्यध् शुध् साध् सिध् (श्यन्विकरणः) इत्येकादश । मन्येत्यादि तिप इत्यन्तमेकं पदम् । मन्येति श्यना निर्देशः । छुपीति इका निर्देशः । 'तृप्यतिदृप्यती' इति द्वन्द्वः श्यना निर्देशः । लिबित्यादि यम इत्यन्तमेकं पदम् । सृपीति इका निर्देशः । रमिरिति भिन्नं पदम् । इका निर्देशः । तथा च नान्तेषु मन् हन्निति द्वौ । मनिः श्यन्विकरणः । पान्तेषु आप क्षिप् छुप् तप् तिप् तृप् दृप् लिप् लुप् वप् शप् स्वप् सृप् इति त्रयोदश । भान्तेषु यभ् रभ् लभ् इति त्रयः । मान्तेषु गम् नम् यम् रम् इति चत्वारः । क्रुशिरित्यादि स्पृश इत्यन्तमेकं पदम् । दंशिरिति च इरित् । क्रुशि दिशि दंशीति इका निर्देशः । तथा च शान्तेषु क्रुश् दंश् दिश् दृश् मृश् रिश् रुश् लिश् विश् स्पृश् इत्येते दश । कृषिरिति पृथक् पदम् । इका निर्देशः । त्विषित्यादि श्लिष्यतय इत्यन्तमेकं पदम् । पुष्येति श्यना निर्देशः । श्लिष्यतीति श्यन्विकरणस्य श्तिपा निर्देशः । तथा च षान्तेषु कृष् त्विष् तुष् द्विष् दुष् पुष् ( श्यन्विकरणः ) पिष् विष् शिष् शुष् श्लिष् ( श्यन्विकरणः ) इत्येकादश । घसिरिति पृथक्पदम् । इका निर्देशः । वसतिरिति पृथक्पदं श्तिपा निर्देशः । सान्तेषु घस् वस् इति द्वौ । दहदिहिदुह इति द्वन्द्वः । दिहीति इका निर्देशः । नह् मिह् रुह लिह् इति समाहारद्वन्द्वः । वहिः इति पृथक्पदं इका निर्देशः । तथेति चकारपर्यायः । हान्तेषु दह् दिह् दुह् नह् मिह् रुह् लिह् वह् इत्यष्टौ । द्व्यधिकं शतमिति । भाष्ये मृषेः षान्तेषु पाठ-स्तु लेखकप्रमादकृत इति भावः । अथ पान्तेषु द्वयोः श्यना निर्देशस्य फलमाह-तुदादावित । यौ तृप्दृपी तुदादौ चुरादौ च मतान्तरीयत्वेन धातुपाठे स्थितौ

तृपदृपी तौ वारयितुं श्यना निर्देश आदृतः ।
किं च-'श्विदृपत्ती सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना ॥
वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ।
ञिजिर्विजिर्शक्लृ इति सानुबन्धा अमी तथा ॥
विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते ।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥
रञ्जिमस्जी अदिपदी तुद् (नुद्) क्षुध् शुषिपुषी शिषिः ॥
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसम्मतेः ॥

३ स्पर्ध संघर्षे । संघर्षः पराभिभवेच्छा । धात्वर्थेनोपसंग्रहादकर्मकः । स्पर्धते ।

---

तौ अनुदात्तेष्वा वारयितु श्यना निर्देशः अभ्युपगत इत्यर्थः । अत एव 'शे मुचादीनाम्' मिति सूत्रभाष्ये तृपितो दृपित इत्युदाहृतं सङ्गच्छत इति भावः ।

किं चेति । अन्यदपि वक्ष्यत इत्यर्थः । अन्यनिवृत्तय इति । विकरणान्तरनिवृत्तय इत्यर्थः । तच्चाग्रे तदार्द्धधातुकनिरूपणे स्पष्टीभविष्यति । अमी तथेति । उक्तानुबन्धरहितानां व्यावृत्तय इत्यर्थः । एतदपि तत्तदार्द्धधातुकनिरूपणे स्पष्टीभविष्यति । विन्दतिरिति । 'विदॢ लाभे' इति तौदादिकः । चान्द्रदौर्गादिव्याकरणसम्मतः । भाष्येऽपि दृश्यत इति । विन्दतिविन्दत्तिविन्दतीति तत्र पाठादिति भावः । एनमिति । विन्दतिमित्यर्थः । नेह पेठुरिति । तथापि भाष्यप्रामाण्यादस्यानिट्कत्वमिति भावः । 'रञ्जिमस्जी' इत्येकं पदम् । नुदक्षुध् इति पृथक्कृते पदे । 'शुषिपुषी' इत्येकं पदम् । शिषिरित्यन्तरम् इत्येते इति शेषः । नवेहेति । नव धातवः भाष्यानुक्ता अपि इहानुदात्तेषु परिगणिता इत्यर्थः । कुत इत्यत आह—व्याघ्रभूत्यादिसम्मतेरिति । भाष्ये स्वेभ्यो नवभ्योऽन्येषां परिगणनं नवानामप्येषामुपलक्षणमिति भावः । 'तेन रक्तं रागात्', 'तदस्मिन्नन्नं प्रायेण' 'क्तोऽकृतमितप्रतिपन्नाः' 'शुष्कधृष्टौ' 'वतेन नञ्विशिष्टेने'त्यादिसौत्रप्रयोगाः । नुन्नः, मग्नः, पुष्टः, मङ्क्त्वा, मङ्क्ष्यमित्यादिभाष्यप्रयोगाश्चात्र लिङ्गम् । इत्यनिट्कारिकाः । स्पर्ध संघर्षे इति । 'वर्तते' इति शेषः । पराभिभवेति । परस्याभिभवः पराजयः । तद्विषयेच्छेत्यर्थः । नन्वत्रेच्छायां पराभिभवस्य कर्मतया स्पर्धधातोः सकर्मकत्वात्, 'देवदत्तः यज्ञदत्तं स्पर्धयती'त्यादौ 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणा'मित्यकर्मककार्यं कथमित्यत आह—धात्वर्थेनोपसंग्रहादकर्मक इति । 'धात्वर्थबहिर्भूतकर्मकत्वमेव सकर्मकत्वमिति 'सुप आत्मनः क्यजि'ति सूत्रभाष्ये प्रपञ्चितत्वादिति भावः । नचैवं सति पदव्यवस्थायां 'स्पर्धायामाङ' इत्यत्र 'कृष्णश्चाणूरमाह्वयते' स्पर्धत इत्यर्थं इति मूलग्रन्थविरोध इति वाच्यम् । तत्र स्पर्धाभिभवपूर्वकाह्वाने वृत्तेरित्यक्षम् । स्पर्धत इति । 'कत्थन्ताः षट्त्रिंशदनुदात्तेत' इत्युक्तेरात्मनेपदम् । एधधातुवत्

२२५६ शर्पूर्वाः खयः ७।४।६१॥ अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते । 'हलादिः शेषः' ( सू० २१७९ ) इत्यस्याऽपवादः । पस्पर्धे । स्पर्धिता । स्पर्धिष्यते । स्पर्धताम् । अस्पर्धत । स्पर्धेत । स्पर्धिषीष्ट । अस्पर्धिष्ट । अस्पर्धिष्यत । ४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । गाधते । जगाधे । ५ बाधृ लोडने । लोडनं प्रतिघातः । बाधते । ६ नाथृ ७ नाधृ याच्ञोपतापैश्वर्याशीःषु । 'आशिषि नाथ इति वाच्यम्' । अस्याशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र नाथति । नाधते ।

लोट रूपाणीति भावः । धातोरिजादित्वाभावादिजादेश्चेति लिट्याम् न । अत एव नानुप्रयोगोऽपि । किन्तु लिटस्तादेशे 'लिटस्तझयो'रिति तस्यैशि 'लिटि धातो'रिति द्वित्वे 'हलादिः शेष' इत्यभ्यासे प्रथमहल्व्यतिरिक्तहलां निवृत्तौ सस्पर्धे इति प्राप्ते । शर्पूर्वाः खयः । अभ्यासस्येति । 'अत्र लोपोऽभ्यासस्ये'त्यतस्तदनुवृत्तेरिति भावः । 'शर्पूर्वाः' इत्यत्र शर् पूर्वः येभ्य इत्यतद्गुणसंविज्ञानो बहुव्रीहिः । तेन शर् न शिष्यते । शिष्यन्त इति । 'हलादिः शेष' इत्यतः शेषः इत्यनुवृत्तं कर्मणि घञन्तं बहुवचनान्ततया विपरिणम्यत इति भावः । तथा च प्रकृते अभ्यासे खय् पकारः शिष्यते । 'न न्द्राः संयोगादय' इति रेफस्य द्वित्वनिषेधो न शङ्क्यः । द्वितीयैकाजवयवस्यैव तन्निषेधात् । तदाह—पस्पर्ध इति । न च वक्षरचेत्यत्राभ्यासे चकार एव शिष्येतेति वाच्यम् । हलादिः शेष इत्यतो हि आदिरित्यप्यनुवर्तते । शर्व्यतिरिक्तवर्णापेक्षया धात्वादिभूता इत्यर्थः । पस्पर्धाते । पस्पर्धिरे । पस्पर्धिषे । पस्पर्धाथे । पस्पर्धिध्वे । पस्पर्धे । पस्पर्धिवहे । पस्पर्धिमहे, इति लिटि रूपाणि सुगमानि । स्पर्धितेति । लुटि एधधातुवत् रूपाणि सुगमानीति भावः । स्पर्धिष्यत इति । लृटि एधधातुवद्रूपाणीति भावः । स्पर्धतामिति । लोटि एधिवद्रूपाणीति भावः । अस्पर्धतेति । लङि एधिवद्रूपाणीति भावः । हलादित्वादडेव न त्वाडिति विशेषः। स्पर्धेतेति। विधिलिङि एधिवद्रूपाणि। स्पर्धिषीष्टेति । आशिषि लिङि एधिवद्रूपाणि। अस्पर्धिष्टेति'। लुङि एधिवद्रूपाणि । अडागमः,न त्वाट् इति विशेषः । अस्पर्धिष्यतेति । लृङि एधिवद्रूपाणि,। अडागमो विशेषः। न त्वाट् । गाधृ प्रतिष्ठेति । चतुर्थान्तो धातुः । ऋकारो 'नाग्लोपिशास्वृदिता'मिति निषेधार्थः । अजगाधत् । प्रतिष्ठा आधारे स्थितिः । ग्रन्थः ग्रन्थन रचनम् । जगाधे इति । लिटि द्वित्वादि । अभ्यासस्य ह्रस्वः । चुत्वम् । बाधृ इति । प्रतिघातः पीडनम् । नाथ नाधृ इति । द्वितीयचतुर्थान्तो धातू । उपतापः ज्वरप्रयुक्ता पीडा । आशीः आशासनम् । द्वितीयान्तस्य नाथधातोर्विशेषमाह—आशिषि नाथ इति । अत्र 'नाथ' इति षष्ठी । 'अनुदात्तङित' इत्यतः आत्मनेपदमित्यनुवर्तते । अनुदात्तेत्वादेव सिद्धे नियमार्थमिदं वार्तिकम् । तदाह—अस्याशिष्येवेति । आशासनार्थवृत्तेरेव नाथधातोरात्मनेपदम् । याच्ञाद्यर्थवृत्तेस्तु 'शेषात् कर्तरी'ति परस्मैपदमेवेत्यर्थः । नाथत इति । आशास्ते इत्यर्थः अन्यत्रेति । याच्ञाद्यर्थे विद्यमानस्येत्यर्थः । अथ चतुर्थान्तस्य नाधधातोरुदाहरति—नाध

८ दध धारणे। दधते। २२६० **अत एकहल्मध्येऽनादेशादेर्लिटि** ६।४।१२०॥ लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्यैकारः स्यादभ्यासलोपश्च किति लिटि। २२६१ **थलि च सेटि** ६।४।१२१॥ प्रागुक्तं स्यात्। आदेशश्चेह वैरूप्यसम्पादक एवाश्रीयते। शसिदद्योः प्रतिषेधवचनाज्ज्ञापकात्। तेन प्रकृतिजश्चरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव। देधे। देधाते। देधिरे। अतः किम्। दिदिवतुः। तपरः किम्। ररासे। एक—इत्यादि किम्। तत्सरतुः।

इति। दधते इति। चतुर्थान्तोऽयम्। तस्य लटि एधिवद्रूपाणि सिद्धवत्कृत्य लिटस्ता-देशे तस्यैशि द्वित्वे दध् दध् ए इति स्थिते। अत एकहल्मध्ये। आदेशः आदिर्यस्येति बहुव्रीहिः। अङ्गस्येत्यधिकृतम् अन्यपदार्थः। लिटीति निमित्तसप्तमी अनादेशादेरि-त्यस्यैकदेशे आदेशेऽन्वेति। लिटि परे निमित्ते य आदेशः सः आदिर्यस्य न भवति तथाविधस्याङ्गस्येति लभ्यते। अङ्गस्येत्यवयवषष्ठी। तथाच तथाविधाङ्गावयवस्यात इति लभ्यते। एकशब्दः असहायवाची। 'एके मुख्यान्यकेवलाः' इत्यमरः। एकौ असंयुक्तौ हलौ एकहलौ, तयोर्मध्यः, एकहल्मध्यः तस्येति विग्रहः। 'अत' इत्यस्यैव विशेषणमिदम्। 'घ्वसोरेद्धा'वित्यतः एदिति अभ्यासलोप इति चानुवर्तते। 'गमहने'-त्यतः क्ङितीत्यनुवर्तते, नतु ङितीति लिडादेशानां ङित्वासम्भवात्। लिटीत्येतद्विधौ परनिमित्तं च। आवृत्त्या उभयार्थलाभः। तदाह—लिण्निमित्तेत्यादिना। थलि च। प्रा-गुक्तमिति। एकहल्मध्य इति यत् प्रागुक्तमेत्वादि तत् सेटि थलि च स्यादित्यर्थः। थलः कित्त्वाऽभावात् पूर्वसूत्रेणाप्राप्तौ वचनम्। ननु देधे पेततुरित्यादौ 'अभ्यासे चर्चे'ति जशां चरां च जशि चरि च लिण्निमित्तादेशादित्वात् कथमेत्वाभ्यासलोपा-वित्यत आह—आदेशश्चेति। इह 'अत एकहल्मध्य' इति सूत्रे, आदेशशब्देन स्थान्यपेक्ष-या विरूप एवादेशो विवक्षितः। तथा च तथाविधादेशादेरेव एत्वाभ्यासलोपौ न भवतः स्थानिसरूपादेशस्तु न पर्युदास इत्यर्थः। शसिदद्योरिति। 'न शसददवादिगुणानाम्' इति शसिदद्योरेत्वाभ्यासलोपयोः प्रतिषेध उच्यते। यदीह यथाकथञ्चिदादेशादेः पर्यु-दासः स्यात्, तर्हि शसिदद्योरभ्यासे शकारदकारयोश्चर्जशोः शकारदकारादेशे सति आदेशादित्वादेव एत्वाभ्यासलोपयोः अभावसिद्धौ 'न शसददवे'ति तत्प्रतिषेधोऽनर्थकः स्यात्। अतः वैरूप्यसम्पादकादेशादेरेव पर्युदासो विज्ञायत इत्यर्थः। तेनेति। स्थानि-सरूपादेशादेः पर्युदासाऽभावादित्यनेनेत्यर्थः। सत्स्वपीति। देधे पेततुः इत्यादौ दकारा-द्यादेशेषु सत्स्वपीत्यर्थः। देधे इति। दध् दध् ए इति स्थिते दकाराद्कारस्य एत्वेऽ-भ्यासलोपे च रूपम्। 'असंयोगाल्लिट्कित्' इति कित्त्वमिह बोध्यम्। देधिरे इति। देधिषे। देधाथे। देधिध्वे। देधे। देधिवहे। देधिमहे। इति रूपाणि सम्भवन्तीति भावः। दिदिवतुरिति। दिव्धातोरतुसि द्वित्वे हलोर्मध्ये अतोऽभावादेत्वाभ्यासलोपौ नेति भावः। तपरः किमिति। 'अत' इति तपरकरणं किमर्थमित्यर्थः। ररासे इति। 'रासृ शब्दे'

अनादेशादेः किम् । चकणतुः । लिटा आदेशविशेषणादिह स्यादेव । नेमिथ । सेहे ॥ ९ स्कुदि आप्रवणे । आप्रवणमुत्प्लवनमुद्धरणं च । २२६२ इदितो नुम्धातोः । ७।१।५८॥ स्कुन्दते । चुस्कुन्दे । १० श्विदि श्वैत्ये । अकर्मकः । श्विन्दते । शिश्विन्दे । ११ वदि अभिवादनस्तुत्योः । वन्दते । १२ भदि कल्याणे सुखे च । भन्दते । बभन्दे । १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । मन्दते । ममन्दे । १४ स्पदि

न्वादिरात्मनेपदी । अत्र हल्मध्यस्थत्वाभावादेत्वाभ्यासलोपौ नेति भावः । एकेत्यादि किमिति । एकहल्मध्यस्थस्येति किमर्थमित्यर्थः । तत्सरुरिति । 'त्सर छद्मगतौ' । लिटोऽतुसि द्वित्वे अभ्यासाकारस्य नाऽसंयुक्तहल्मध्यस्थत्वमिति भावः । चकणतुरिति । 'कण शब्दे' । लिटोऽतुसि द्वित्वे कुहोश्चुः इति ककारस्य चुत्वेन चकारः । तथाच वैरूप्यमस्त्यादेकादेशादित्वादेत्वाभ्यासलोपौ नेति भावः । अथ 'लिङ्निमित्तादेशादिक'मित्यत्र लिङ्निमित्तेत्यस्य प्रयोजनमाह—लिटेति । नेमिथेति । 'णमु प्रह्वत्वे शब्दे च' । 'णो नः' इति नत्वम् । थलि इटि द्वित्वे नत्वसम्पन्ननकारादेशादित्वेऽपि नत्वस्य लिङ्निमित्तकत्वाभावाल्लिङ्निमित्तकादेशादित्वाभावादेत्वाभ्यासलोपौ निर्बाधाविति भावः । सेहे इति । 'षह मर्षणे' धात्वादेः षः सः' इति सत्वे लिटि द्वित्वे सत्वसम्पन्नसकारादेशादित्वेऽपि सत्वस्य लिङ्निमित्तकत्वाभावात् लिङ्निमित्तकादेशादित्वविरहादेत्वाभ्यासलोपौ निर्बाधाविति भावः । दधिता । दधिष्यते । दधताम् । अदधत । दधेत । दधिषीष्ट । अदधिष्ट । अदधिष्यत ।

स्कुदीति । उत्प्लवनमुत्प्लुत्य गमनम् । इदितः । इत् ह्रस्व इकारः, इत् इत्संज्ञकः यस्य सः इदित्, तस्येति विग्रहः । इत्संज्ञकेदन्तधातोरित्यर्थः । तेन चिक्कादौ न दोषः । नुमि मकार इत् । उकार उच्चारणार्थः मित्त्वादन्त्यादचः परः । स्कुन्दत इति । 'नश्चापदान्तस्य—' इत्यनुस्वारः परसवर्णः । चुस्कुन्द इति । लिटि द्वित्वे 'शर्पूर्वाः खयः' इत्यभ्यासे ककारः शिष्यते । 'कुहोश्चुः' इति तस्य कुत्वेन चकारः । श्विदिति । श्वैत्यं-श्वैत्यकरणम् । अकर्मक इति । श्वैत्यस्य धात्वर्थनोपसंग्रहादिति भावः । ततश्च 'श्विन्दयति देवदत्तं यज्ञदत्त' इत्यादौ 'गतिबुद्धिप्रत्यवसान' इत्यादिना अकर्मककार्यं द्वितीया भवति । श्वेतीभवनं वा श्वैत्यम् । श्विन्दत इति । श्वेतीभवतीत्यर्थः । इदित्वान्नुम् । अनुस्वारपरसवर्णौ । शिश्विन्द इति । नुमि कृते गुरुमत्त्वेऽपि इजादित्वाभावादाम् नेति भावः । वदीति । अभिवदनम् आशीर्वादः, तत्कारणभूतो व्यापारः, प्रणामादिरभिवादनम् । वन्दत इति । इदित्वान्नुम् । भदीति । कल्याणं शुभक्रिया । सुखं सुखीभावः । भन्दत इति । इदित्वान्नुम् । बभन्द इति । अभ्यासे भकारस्य जश्त्वेन बकारः । मदीति । मोदः सन्तोषः । मदः गर्वः । मन्दत इति । इदित्वान्नुम् । ममन्द इति । नुमि सति संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ नेति भावः । स्पदीति । अकर्मकः ।

किञ्चिच्चलने । स्पन्दते । पस्पन्दे । १५ क्लिदि परिदेवने । शोक इत्यर्थः । सकर्मकः । क्लिन्दते चैत्रम् । चिक्लिन्दे । १६ मुद हर्षे । मोदते । मुमुदे । १७ दद दाने । ददते । **२२६३ न शसददवादिगुणानाम् ६।४।१२६॥** शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्यैत्वाभ्यासलोपौ न । ददे । ददाते । ददिरे । १८ ष्वद १९ स्वर्द आस्वादने । अयमनुभवे सकर्मकः; रुचावकर्मकः । **२२६४ धात्वादेः षः सः ६।१।६४॥** धातोरादेः षस्य सः स्यात् । 'सात्पदाद्योः' ( सू०

स्पन्दत इति । इदित्वान्नुम् । पस्पन्द इति । 'शर्पूर्वाः खयः' इत्यभ्यासे पकारः शिष्यते । क्लिदीति । परिदेवनशब्दं व्याचष्टे—शोक इति । स्मृत्वा क्लेशः शोकः । तदाह—सकर्मक इति । क्लिन्दते चैत्रमिति । अतीतं चैत्रं स्मृत्वा क्लिश्नातीत्यर्थः । इदित्वान्नुम् । चिक्लिन्द इति । अभ्यासे ककारस्य चुत्वेन चकार इति भावः । मुदीति । हर्षः तुष्टिः । मोदत इति । शपि लघूपधगुणः । मुमुद इति । 'असंयोगाल्लिट्कित्' इति कित्त्वान्न गुणः ।

ददेति । न ममेति त्यागो दानम् , न तु द्रव्यत्यागः । तथा सति धात्वर्थोपसंग्रहादकर्मकत्वापत्तेः । न शसदद । शस दद वादि गुण एषां द्वन्द्वः । अवयवषष्ठी । गुणशब्देन विहित एव गुणोऽत्र गुणशब्देन विवक्षितः । अन्यथा शसिददिग्रहणवैयर्थ्यात् । 'अत एकहल्मध्ये' इत्यस्मात् अत इति, 'घ्वसोरेद्धौ—' इत्यतः एदिति, अभ्यासलोप इति चानुवर्तते । तदाह—शसेरित्यादिना । गुणशब्देनेति किम् । पेचे । अत्र पचेरकारस्य गुणत्वेऽपि गुणशब्देन विहितत्वाऽभावान्नाय निषेधः । 'पृधातोः' पपरतुरिति तु गुणस्योदाहरणम् , गुणशब्देन विहितः यः अर् तदवयवत्वादकारस्येति बोध्यम् । ददद इति । ददेर्लिटस्तादेशस्य एशि द्वित्वे 'अत एकहल्मध्य' इति प्राप्तावेत्वाभ्यासलोपौ न भवतः । 'ष्वद स्वर्देति । आस्वादनं अनुभवः । प्रीतिविषयीभावात्मिका रुचिर्वा । तदाह—अयमिति । प्रत्येकाभिप्रायमेकवचनम् । धात्वादेः । 'ष' इति षष्ठ्यन्तम् । तदाह—धातोरादेः षस्य सः स्यादिति । षकारस्य सः स्यादित्यर्थः । धातुग्रहणं किम् । षट् । अत्र धात्वादित्वाभावान्न सकारः । आदिग्रहणं किम् । लषति । न चैवमपि षकारीयतीत्यादौ सुब्धात्वादेरपि षस्य सकारः स्यादिति वाच्यम् , 'आदेच उपदेशेऽशिति' इत्यतः उपदेश इत्यनुवृत्तेः । एवं च षडित्यादावपि उपदेशग्रहणानुवृत्त्यैव व्यावृत्तिसिद्धेर्धातुग्रहणं भाष्ये प्रत्याख्यातम् ।

ननु धातुपाठे स्वद् स्वर्दत्येवं सकार एव उपदिश्यताम् । एवं च 'धात्वादेः षः सः' इत्यपि मास्तु इति चेन्मैवम्—ण्यन्तात लुङि असिष्वददित्यत्र षकारश्रवणार्थकत्वात् धातुपाठे सकारस्यैवोपदेशे तु असिष्वददित्यत्र सकारस्य आदेशसकारत्वाऽभावेन षत्वाऽसम्भवात् । नन्वेवं सति असुस्वदत इत्यत्रादेशसकारत्वात् षत्वापत्ति-

२१२३ ) इति षत्वनिषेधः । अनुस्वदते । सस्वदे । स्वर्दते । सस्वर्दे । २० उर्द माने क्रीडायां च । २२६५ उपधायां च ८।२।७८॥ धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । ऊर्दते । ऊर्दाञ्चक्रे । २१ कुर्द २२ खुर्द २३ गुर्द २४ गुद क्रीडायामेव । कूर्दते । चुकूर्दे । खूर्दते । गूर्दते । गोदते । जुगुदे । २५ षूद क्षरणे । सूदते । सुषूदे ।

सेक्सृप्सृस्तृसृजस्तृस्त्यान्ये दन्त्याजन्तसादयः ।
एकाचः षोपदेशाः ष्वष्क्ष्विद्स्वद्स्वञ्जस्वपस्मिङः ॥

रित्यत आह—सास्वदादोरिति । सस्वद इति । लिटि द्वित्वे संयुक्तहल्मध्यस्थत्वादेत्त्वाभ्यासलोपौ नेति भावः । उर्देति । चकारादास्वादनेऽपीति केचित् । उपधायां च । सिपि धातोरिति, 'र्वोरुपधाया' इत्यतः र्वोरिक इति, 'हलि च' इत्यतः हलीति चानुवर्तते । 'उपधयो'रित्यर्थे उपधायामित्यार्षम् । तदाह—धातोरित्यादि । ऊर्दत इति । अत्र धातोः रेफवान्तत्वाभावात् 'र्वोरुपधायाः' इत्यस्य 'हलि च' इत्यस्य चाप्राप्तौ 'उपधायां च'इत्यारम्भः । धातोरित्यभावे पदाधिकारस्थत्वात् पदस्य उपधाभूतयोरित्यर्थः स्यात् । ततश्च क्विबन्ते ऊर्द् इत्यत्रैव स्यात् , ऊर्दत इत्यादौ न स्यात् । रेफवकारयोः किम् ? पुष्यति । हल्परयोः किम् ? चिरिणोति । इकः किम् ? नर्दति । ऊर्दाञ्चक्र इति । इजादित्वादाम् । 'कृञ्चानुप्रयुज्यते' इत्यनुप्रयोगः । कूर्दते । गुदेत्यपि पृथग्धातुः । 'क्रीडायामेवे'त्यर्थनिर्देशः । एवकारस्तु इतोऽन्यत्र धात्वर्थनिर्देशस्य उपलक्षणत्वं ज्ञापयति—कूर्दत इति । 'उपधायां च' इति दीर्घः । चुकूर्द इति । 'कुहोश्चुः' इति चुत्वम् । खूर्दत इति । 'उपधायां च' इति दीर्घः । एवं गूर्दत इति । गोदत इति । शपि लघूपधागुणः । जुगुद इति 'असंयोगात्' इति कित्त्वान्न गुणः । षूदेति । क्षरणं प्रस्रवणम् । सूदत इति । प्रस्रवतीत्यर्थः । 'धात्वादेः' इति षस्य सः । अलघूपधत्वान्न गुणः । सुषूद इति । 'धात्वादे'रिति षस्य सत्वे लिटि द्वित्वादौ इणः परस्यादेशसकारत्वात् षत्वम् । यदि धातुपाठे सकारस्यैव पाठः, तर्हि इहादेशसकारत्वाऽभावात् षत्वं न स्यात् । षोपदेशे तु षस्य सत्वे सति आदेशसकारत्वात् षत्वं सूपपादमिति भावः । ननु धातुपाठे के धातवः षादयः पठिताः, के वा सादयः? पाणिनिकृतषोपदेशपाठस्य इदानीं परिभ्रष्टत्वादित्याशङ्क्य पाणिनीयपरम्परासिद्धान् षोपदेशान् पठति—सेगिति श्लोकेन । दन्त्याजन्तषादय एकाचः षोपदेशाः स्युरित्यन्वयः । दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य सः दन्त्याजन्तः, तथाविधः षः षकारः आदिर्येषां ते दन्त्याजन्तषादयः । दन्त्यपरकः अच्परकश्च यः षकारः तदादय एकाचो धातवः इदानीं कृतसत्वाः सकारादित्वेन परिदृश्यमाना अपि षकारादित्वेन पाणिनिना उपदिष्टाः प्रत्येतव्या इत्यर्थः । 'सादय' इति पाठेऽप्येवमेव व्याख्येयम् । 'अज्दन्त्यपराः षादयः षोपदेशाः' इतिभाष्यम् । षद् क्षरणे इत्यादयः अच्परकषोपदेशाः । 'ष्ठा गतिनिवृत्ता'वित्यादय-

दन्त्यः केवलदन्त्यो; न तु दन्तोऽष्ठजोऽपि ॥ ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात् । २६ ह्लाद अव्यक्ते शब्दे । ह्लादते । जह्लादे । २७ ह्लादी सुखे च । चादव्यक्ते शब्दे ॥ ह्लादते । २८ स्वाद आस्वादने । स्वादते । २९ पर्द कुत्सिते शब्दे । पर्दते । ३० यती प्रयत्ने । यतते । येते । ३१ युतृ ३२ जुतृ भासने । योतते । युयुते । जोतते । जुजुते । ३३ विथृ ३४ वेथृ याचने । विविथे । विवेथे ।

---

स्तु दन्त्यपरकषोपदेशाः । दन्त्याजन्तेति किम् । ष्वष्कि आप्रवणे । चुष्कुन्दे । अत्र सकारो न दन्त्यपरकः नाप्यच्परकः । एकाचः किम् । सोसूत्र्यते । 'सूत्र वेष्टने' चुरादिरजन्तः अनेकाच् । यद्यप्येकाच इति भाष्ये न दृश्यते, तथापि यङ्विधौ सोसूत्र्यत इति भाष्यं तत्र मानमिति बोध्यम् । एवं च 'साध संसिद्धौ' इत्यादौ सकारपाठस्यैव दृश्यमानत्वेऽपि षोपदेशत्वमेव । ननु 'सेकृ गतौ, 'सृप्लृ गतौ' सृ गतौ' 'सृज विसर्गे' एते चत्वारः अच्परकसादयः । स्तृञ् आच्छादने, ऋदन्तः श्नुविकरणः, । 'स्तॄञ् आच्छादने' ॠदन्तः श्नाविकरणः, 'स्त्यै शब्दसङ्घातयोः' । एते त्रयो दन्त्यपरकसादयः । एतेषां सप्तानामपि षोपदेशत्वं स्यादित्यतिव्याप्तिमाशङ्क्य तद्भिन्नत्वं विशेषणमाह—सेक सृप सृ स्तृ सृज स्तॄ स्त्यान्ये इति । स्त्यैधातोः कृतात्वस्य निर्देशः श्लोके समावेशार्थः । स्त्यै इत्यैकारान्तस्य निर्देशे 'स्त्यायन्य' इत्येकस्याक्षरस्याधिक्यापत्तेः । नन्वेवमपि 'ष्वष्क् गतौ' 'ञिष्विदा गात्रप्रस्रवणे' 'ष्वद आस्वादने' 'ष्वञ्ज परिष्वङ्गे' 'ञिष्वप् शये' 'ष्मिङ् ईषद्धसने' इत्येतेषु सकारस्य दन्त्यपरकत्वाऽभावात् अच्परकत्वाभावाच्च षोपदेशत्वसंग्रहः स्यादित्यव्याप्तिमाशङ्क्य तानपि संगृह्णाति—ष्वष्क् स्विद् स्वद् स्वञ्ज स्वप् स्मिङ् इति । 'अपीति' शेषः । ननु 'स्वृ शब्दोपतापयोरित्यादीनामपि दन्त्यवकारपरकत्वात् षोपदेशत्वं स्यादित्यत आह—दन्त्यः केवलदन्त्य इति । कुत इत्यत आह—ष्वष्कादीनामिति । अन्यथा दन्त्यपरकत्वादेव सिद्धे ष्वष्कादिग्रहणं व्यर्थं स्यादिति भावः । यद्यपि ष्वष्कतिरत्र भाष्ये न दृश्यते, तथापि सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधः इति वार्तिकात्तल्लाभ इति भावः । ह्लादेति । रेफवानयम् । अव्यक्तशब्दः अमनुष्यवाक् । जह्लाद इति । अभ्यासस्य ह्रस्वः । चुत्वम् । ह्लादीति । लकारवानयम् । 'श्वीदितो निष्ठायाम्' इति इण्निषेधार्थमीत्वम् । स्वादेति । केवलदन्त्यपरकत्वाभावान्नायं षोपदेशः असिस्वदत् । पर्देति । गुदरव इत्यर्थः । यतीति । ईदित्वमिण्निषेधार्थम् । येते इति । 'अत एकहल्मध्ये' इत्येत्वाभ्यासलोपौ । युतृ जुतृ इति । ऋदित्वम् 'नाग्लोपिशास्वृदिताम्' इत्याद्यर्थम् । योतत इति । शपि लघूपधगुणः । युयुत इति । 'असंयोगादिति कित्वान्न गुणः । विथृ वेथृ इति । द्वितीयान्ताविमौ । ननु 'विथ' इत्येवास्तु, लघूपधगुणे सति वेथत इत्यस्याऽविशिष्टत्वादित्यत आह—विविथे विवेथे इति । वेथृधातोर्विवेथे इति रूपम् । विथृधातोस्तु असंयोगादिति कित्वाद्

३५ श्रथि शैथिल्ये । श्रन्थते । ३६ ग्रथि कौटिल्ये। ग्रन्थते। ३७ कत्थ श्लाघायाम् । कत्थते । एधादयोऽनुदात्तेतो गताः ।

अथाष्टात्रिंशत्तवर्गीयान्ताः परस्मैपदिनः । ३८ अत सातत्यगमने । अतति । 'अत आदेः' ( सू० २२४८ ) आत, आततुः, आतुः । लुङि आतिस् ई त् इति स्थिते । २२६६ इट ईटि ७।२।२३॥ इटः परस्य सस्य लोपः स्यादीटि परे । 'सिज्लोप एकादेशे सिद्धो वाच्यः' । आतीत् । आतिष्टाम् । आतिषुः । २२६७ वदव्रजहलन्तस्याचः ७।२।३॥ वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु । इति प्राप्ते । २२६८ नेटि ७।२।४॥ इडादौ सिचि प्रागुक्तं न

गुणाभावे विविध इति रूपमिति भावः । श्रथीति। द्वितीयान्तः । शैथिल्यम् । स्रसनम् । श्रन्थते इति । इदित्त्वान्नुम् । ग्रथीति । द्वितीयान्तः । कौटिल्यं । वक्रीभवनम् । ग्रन्थत इति । इदित्त्वान्नुम् । कत्थेति । अविद्यमानगुणज्ञापनं श्लाघा । अथाष्टात्रिंशदिति । अष्टौ च त्रिंशच्चेति द्वन्द्वः । अष्टाधिका त्रिंशदिति वा । 'द्व्यष्टनः संख्याया' मित्यात्त्वम् । 'अष्टत्रिंश'दिति पाठे तु अष्टेति पृथक्पदम् । परस्मैपदिन इति । अनुदात्तस्वरितञित्त्वाभावात् 'शेषात् कर्तरि' इति परस्मैपदिन एवेति भावः । अतेति । सातत्यगमनं सन्ततगमनम् । लिटि णलि द्वित्वे हलादिशेषे अ अत् अ इति स्थिते पररूपे प्राप्ते आह – अत आदेरिति । 'इतिस्थीर्घ' इति शेषः । तथा च अभ्यासाऽकारस्य दीर्घे सति सवर्णदीर्घः । तदाह—आतेति । अकारस्य हलमध्यस्थत्वाभावादेत्वाभ्यासलोपौ न । लुङीति । अतधातोर्लुङस्तिपि इतश्चेति इकारलोपे च्लेः सिचि तस्य इडागमे 'अस्तिसिचोऽपृक्त' इति ईडागमे आटि वृद्धौ आतिस् ई त् इति स्थिते सतीत्यर्थः । इट ईटि । 'इट' इति पञ्चमी । राल्लस्येत्यतः सस्येति, संयोगान्तस्येत्यतो लोप इति चानुवर्तते । तदाह—इटः परस्येति । एवं च आति स् ई त् इति स्थिते सकारस्य लोपे आति ई त् इति स्थिते सवर्णदीर्घं आतीदिति रूपं वक्ष्यति । तत्र सलोपस्यासिद्धत्वात् कथं सवर्णदीर्घ इत्यत आह—सिज्लोप एकादेशे सिद्धो वक्तव्य इति । आतिष्टामिति । तुकस्तस् । तस्य ताम् । च्लेः सिच् । तस्य इटि आटि वृद्धौ षत्वम् । अपृक्तत्वाभावेन ईडभावात् सलोपो न । आतिषुरिति । तुको झिः । च्लेः सिच् । जुस् इट् आट् वृद्धि । षत्वं रुत्वविसर्गौ । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । अत्र वृद्धिमाशङ्कितुमाह—वदव्रज । वद् व्रज हलन्त एषां समाहारद्वन्द्वात् षष्ठ्येकवचनम् । अङ्गस्येत्यधिकृतम् । 'सिचि वृद्धिः परस्मैपदेष्वि'त्यनुवर्तते । तदाह—वदेरित्यादिना । हलन्तत्वादेव सिद्धे वदव्रजग्रहणं तु अवादीदव्राजीदित्यत्र 'अतो हलादेर्लघो'रिति वृद्धिविकल्पबाधनार्थम् । नेटि । प्रागुक्तं नेति । 'वदव्रजहलन्तस्याच' इत्युक्तं नेत्यर्थः । तत्र वदव्रजयोर्विशिष्य विधानात् हलन्तलक्षणाया एव वृद्धेर्निषेधोऽयम् ।

स्यात् । मा भवानतीत् । अतिष्टाम् । अतिषुः । ३९ चिती संज्ञाने । चेतति । चिचेत । अचेतीत् । अचेतिष्टाम् । अचेतिषुः । ४० च्युतिर् आसेचने । सेचनमार्द्रीकरणम् । आङीषदर्थेऽभिव्याप्तौ च । 'इर इत्संज्ञा वाच्या' । च्योतति । चुच्योत । २२६८ इरितो वा ३।१।५७॥ इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदे परे । अच्युतत् । अच्योतीत् । ४१ श्च्युतिर् क्षरणे । श्च्योतति । चुश्च्योत । अश्च्युतत् । अश्च्योतीत् । यकाररहितोऽप्ययम् । श्चोतति । ४२ मन्थ विलोडने । विलोडनं प्रतिघातः । मन्थति । ममन्थ । यासुटः 'किदाशिषि' ( सू० २२१६ ) इति कित्त्वात् 'अनिदिताम्' ( सू० ४१५ ) इति नलोपः । मथ्यात् । ४३ कुथि ४४ पुथि ४५ लुथि ४६ मथि हिंसासंक्लेशनयोः । इदित्वान्नलोपो न । कुन्थ्यात् । पुन्थ्यात् । लुन्थ्यात् ।

---

हलन्तलक्षणा वृद्धिस्तु अचारीदित्यादावनिडादौ सिचि चरितार्था । नन्वातीदित्यादौ अकारस्य वृद्धौ सत्यामसत्यां च आटा एकादेशे सति रूपे विशेषाभावात् किं तन्निषेधेनेत्याशङ्क्याह–मा भवानतीदिति । माङ्योगे आडभावे सति वृद्धिनिषेधः सफल इति भावः । चितीति । ईदित्त्वम् 'श्वीदितो निष्ठायाम्' इति इण्निषेधार्थम् । चेततीति । शपि लघूपधगुणः । चिचेतेति । तिबादेशणलः पित्त्वेन असंयोगाल्लिडिति कित्त्वस्याऽप्रवृत्तेर्न गुणनिषेधः । चिचिततुरित्यादौ तु कित्त्वान्न गुणः । अचेतीदिति । 'इट ईटी'ति सलोपः । अचेतिष्टामिति । अपृक्तत्वाऽभावादीडभावान्न सिज्लोपः । नेटीति निषेधान्न हलन्तलक्षणा वृद्धिः । च्युतिरिति । अत्र इकारस्य रेफस्य च प्रत्येकमित्सञ्ज्ञायामिदित्त्वान्नुमि प्राप्ते आह—इर इत्सञ्ज्ञेति । तथा च इर् इति समुदायस्य इत्सञ्ज्ञकत्वादिदित्त्वाऽभावान्न नुमिति भावः । च्योततीति । लघूपधगुणः । चुच्योतेति । णलः पित्त्वेन कित्त्वाभावान्न गुणनिषेध इति भावः । चुच्युततुरित्यादौ तु कित्त्वान्न गुणः । लुङि च्लेः सिचि प्राप्ते । इरितो वा । 'धातोरेकाचः' इत्यतो धातोरिति 'च्लेः सि'जित्यतः च्लेरिति 'अस्यतिवक्तिख्यातिभ्य' इत्यतः अङिति 'पुषादिद्युताद्यॢदितः परस्मैपदेष्विति' चानुवर्तते । तदाह—इरितो धातोरित्यादिना । अच्युतदिति । अङि सति ङित्त्वान्न गुणः । अच्युतताम् । अच्युतन् । अच्युतः । अच्युततम् । अच्युतत । अच्युतम् । अच्युताव । अच्युताम । अङभावे त्वाह—अच्योतीदिति । 'इट ईटी'ति सिज्लोपः । अच्योतिष्टामित्यादि । श्च्युतिरिति । च्युतिवद्रूपाणि । चुश्च्योतेति । 'शर्पूर्वाः' इति चकारः शिष्यते । यकाररहितोऽपीति । 'मधुश्चुतं घृतमिव सुपूत'मित्यादौ तथा दर्शनादिति भावः । मन्थेति । विलोडनमास्फालनम् । मन्थतीत्यादि । सुगमम् । आशीर्लिङि विशेषमाह—यासुट इति । कुथीति । चत्वारोऽपि द्वितीयान्ताः । इदित्त्वान्नुमि कुन्थतीत्यादि सुगमम् । आशीर्लिङि यासुटः कित्त्वेऽपि इदित्त्वेन अनिदितामिति पर्युदासात् नलोपो नेत्याह—इदित्वादिति । कुन्थ्यादिति । पुन्थ्यात् । लुन्थ्यात् । मन्थ्यात् । एतदर्थमेव

मन्थ्यात् । ४७ षिध गत्याम् । सेधति । सिषेध । सेधिता । असेधीत् । 'सात्पदाद्योः' (सू० २११३) इति षत्वनिषेधे प्राप्ते । **२२७० उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ८।३।६५॥** उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात् । **२२७१ सदिरप्रतेः ८।३।६६॥** प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात् । **२२७२ स्तन्भेः ८।३।६७॥** सौत्रस्य सस्य षः स्यात् । योगविभाग उत्तरार्थः । किञ्च अप्रतेः इति नानुवर्तते । 'बाहुप्रतिष्टम्भविवृद्धमन्युः' इति ( रघुवंशे स० २ श्लो० ३२ ) । **२२७३ अवाच्चालम्बनाविदू-**

---

मन्थधातोः पृथक् मधीतिनिर्देशः । षिध गत्यामिति । अच्परकषकारादित्वात् षोपदेशोऽयम् । ततश्च धात्वादेरिति सः । तदाह—सेधतीति । सिषेधेति । आदेशसकारत्वात् षत्वम् । अनिट्सु श्यन्विकरणस्यैव सिधेर्ग्रहणात् सेट्कोऽयम् । असेधीदिति । 'इट ईटी'ति सिज्लोपः । नेटीति निषेधात् न हलन्तलक्षणा वृद्धिः । असेधिष्टामित्यादि । अथ निषेधतीत्यादौ 'उपसर्गात्सुनोती'ति षत्वं वक्ष्यति । तत्किमर्थं 'आदेशप्रत्यययो'रित्येव सिद्धेरित्याशङ्क्याह—सात्पदाद्योरिति । उपसर्गात्सुनोतीति । उपसर्गस्थादिति । उपसर्गशब्द उपसर्गस्थे लाक्षणिक इति भावः । निमित्तादिति । इण्कवर्गादित्यर्थः । 'इण्को'रित्यधिकारेऽपि कोरिति नात्र सम्बध्यते, असम्भवात् । सस्येति । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तत इति भावः । षः स्यादिति । 'अपदान्तस्य मूर्धन्य' इत्यधिकारादिति भावः । अत्र सुनोतीत्यादिः श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थं इति प्राञ्चः । स्पष्टार्थं इति प्रौढमनोरमायाम् । सेनयेति णिजन्तो नामधातुः । सेधतीति शपा निर्देशात् सिध्यतेर्न ग्रहणम् । अभिषुणोतीत्याद्युदाहरणम् । प्रकृते निषेधतीत्याद्यर्थमिह सूत्रोपन्यासः ।

प्रसङ्गादाह—सदिरप्रतेः । उपसर्गादिति । उपसर्गस्थादिणः परस्येत्यर्थः । सदिरिति षष्ठ्यर्थे प्रथमेत्यभिप्रेत्याह—सदेः सस्येति । निषीदतीत्युदाहरणम् । स्तन्भेः । नकारोपधनिर्देशस्य प्रयोजनमाह—सौत्रस्येति । 'स्तन्भुस्तुन्भु' इति सूत्रनिर्दिष्टस्य नोपधस्येत्यर्थः । स हि प्रतिपदोक्तः । 'ष्टभि प्रतिबन्धे' इत्यस्य तु धातोरिदित्वान्नुमि लाक्षणिकत्वान्न ग्रहणम् । तेन विस्तम्भत इत्यादौ न षत्वम् । 'उदःस्थास्तम्भो'रिति सूत्रे तु मोपधग्रहणादुभयोरपि ग्रहणम्, मकारस्य उभयत्रापि लाक्षणिकत्वात् । ननु 'सदिस्तन्भ्योरप्रते'रित्येकमेव सूत्रं कुतो न कृतमित्यत आह—योगविभाग उत्तरार्थ इति । 'अवाच्चालम्बनाविदूर्ययो'रित्युत्तरसूत्रे सदेरननुवृत्त्यर्थं इत्यर्थः । ननु सदेरस्वरितत्वादालम्बनाविदूर्ययोरसम्भवादेव च अनुवृत्त्यभावः सिद्ध इत्यस्वारस्यादाह—किञ्चेति । नानुवर्तत इति । स्तन्भेरित्यत्र अप्रतेरित्यस्य अनुवृत्तिर्नेष्टा । एकसूत्रत्वे तु अप्रतेरित्यस्य स्तन्भिनाऽपि सम्बन्धः स्यादिति भावः । 'अप्रते' रित्यस्य स्तन्भावनन्वयो वृद्धप्रयोगानुगत इत्याह—बाहुप्रतिष्टम्भेति । अवाच्च । आलम्बनं च आविदूर्यं चेति द्वन्द्वा-

र्थयोः ८।३।६८॥ अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात्। **२२७४ वेश्च स्वनो भोजने ८।३।६९॥** व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने। **२२७५ परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ८।३।७०॥** परिनिविभ्यः परेषामेषां सस्य षः स्यात्। निषेधति। **२२७६ प्राक्सितादड्व्यवायेऽपि ८।३।६३॥** 'सेवसित'-(सू० २२७५) इत्यत्र सितशब्दात्प्राक् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्। **२२७७ स्थादिष्वभ्यासेन चाभ्यासस्य ८।३।६४॥** प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्। एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्। निषिषेध। निषिषिधतुः। **२२७८ सेधतेर्गतौ ८।३।११३॥** गत्यर्थस्य सेधतेः षत्वं न स्यात्। गङ्गां विसेधति। ४८ षिधू

स्सप्तमीद्विवचनम्। एतयोरिति। आलम्बनाविदूर्ययोरर्थयोविद्यमानस्य अवात्परस्य स्तन्भेरित्यन्वयः। अपूर्वविधिरयम्, इणः परत्वाऽभावादप्राप्तेः। आलम्बने यथा—यष्टिमवष्टभ्य तिष्ठतीति। आश्रित्येत्यर्थः। आविदूर्यं सामीप्यम्। अवष्टब्धा गौः। निरुद्धा सती समीपे आस्त इत्यर्थः। वेश्च। अवादित्यनुकर्षणार्थश्चकारः। तदाह—व्यवाभ्यामिति। विष्वणति। अवष्वणति। सशब्दं भुङ्क्त इत्यर्थः। अट्कुप्वाङिति णत्वम्। परिनिविभ्यः। सेवेत्यकार उच्चारणार्थः 'षेवृ सेवायाम्'इति धातोर्ग्रहणम्। परिषेवते। निषेवते। विषेवते। सितेत्यनेन षिञ् बन्धन इति क्तान्तस्य ग्रहणम्। अस्यैव धातोः एरजन्तो वा पचाद्यजन्तो वा सयशब्दः। विषितः विषयः। 'षिवु' तन्तुसन्ताने परिषीव्यति। 'षह' मर्षणे। परिषहते। सुट् आगमः। परिष्करोति। स्तुस्वञ्जो'रुपसर्गात् सुनोती'त्येव सिद्धे 'सिवादीनां वे'ति विकल्पार्थं पुनर्वचनम्। प्राक्सितात्। सुनोत्यादय इति। 'उपसर्गात्सुनोतीत्यादिसूत्रोपात्ता' इति शेषः। तेषामिति। पञ्चदशानामित्यर्थः। न्यषेधदिति। अकारेण व्यवहितत्वादिणः परत्वाभावादप्राप्तौ वचनम्। अभ्यषुणोदित्यप्युदाहार्यम्। स्थादिषु। अभ्यासेनेति तृतीयान्तम्। प्राक्सितादित्यनुवर्तते। तदाह—प्राक्सितादिति। उपसर्गात्सुनोतीति सूत्र स्थाधातुमारभ्य 'परिनिविभ्यः सेवसिते'त्यत्र सितशब्दात्प्राक् ये धातव उपात्ताः तेषु दशस्वित्यर्थः। निषिषेधेत्यादौ अभ्यासात्परस्य सस्य अभ्यासव्यवहितत्वेन उपसर्गात्परत्वाभावादप्राप्तौ वचनम्। ननु निषिषेधेत्यादौ अभ्यासस्येकारस्य उपसर्गात्सुनोतीत्यनेनैव सिद्धत्वादभ्यासस्येति व्यर्थमित्याशङ्क्य नियमार्थमित्याह—एषामेवेति। अभ्यासस्थसकारस्य चेत् षत्वं तर्हि स्थादिदशानामेवेत्यर्थः। एवं च 'षू प्रेरणे' अभिसुसूषति। अत्राभ्यासस्य न षत्वम्। अभ्यासात्परस्य तु सस्य स्तौतिण्योरेवेति नियमान्न षत्वम्। सेधतेः। न षत्वमिति। 'न रपरे'त्यतो नेत्यनुवृत्तेरिति भावः। गङ्गां विसेधतीति। गच्छतीत्यर्थः। इह 'उपसर्गात्सुनोती'ति षत्वं न भवति। अनन्तरस्येति

शास्त्रे माङ्गल्ये च । शास्त्रं शासनम् । २२७९ स्वरतिसूतिसूयतिधूञूदितो वा ७।२।४४॥ स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात् । २२८० झषस्तथोर्धोऽधः ८।२।४०॥ झषः परयोस्तथोर्धः स्यान्न तु दधातेः । जश्त्वम् । सिषेद्ध । सिषेधिथ । सेद्धा-सेधिता । सेत्स्यति-सेधिष्यति । असैत्सीत् । २२८१ झलो झलि ८।२।२६॥ झलः परस्य सस्य लोपः स्याज्झलि । असैद्धाम् । असैत्सुः । असैत्सीः । असैद्धम् । असैद्ध । असैत्सम् । असैत्स्व । असैत्स्म । पक्षे असेधीत् । असेधिष्टा-

न्यायेन 'उपसर्गात्सुनोती'त्यस्यैवायं निषेधः, न स्वादेशप्रत्यययोरित्यस्यापि । तेन सिषेधस्यादौ आदेशप्रत्यययोरिति षत्वं भवत्येव ।

षिधू इति । ननु वाक्यसङ्घविशेषात्मकस्य शास्त्रस्य अक्रियारूपत्वात्कथं धात्वर्थत्वमित्यत आह—शास्त्रं शासनमिति । माङ्गल्यं तु शुभकर्म । षिध गत्यामितिवदस्यापि रूपाणि । तत्र वलादावार्धधातुके नित्यमिटि प्राप्ते । स्वरति । 'आर्धधातुकस्येड्वलादे'रित्यनुवर्तते । स्वरति सूति सूयति धूञ् ऊदित् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । फलितमाह—स्वरत्यादेरिति । स्वरतीति स्वृधातोः शपा निर्देशः । सूतीति सूयतीति च लुग्विकरणस्य श्यन्विकरणस्य च सूधातोर्निर्देशः । एवं च 'षू प्रेरणे' इति तौदादिकस्य न ग्रहणम् । 'धूञ् कम्पने' स्वादिः क्र्यादिश्च । अकारानुबन्धनिर्देशात् 'धू विधूनने' इत्यस्य न ग्रहणम् । 'इट्सनि वे'त्यतो वेत्यनुवर्तमाने वाग्रहणं 'लिङ्सिचोरात्मनेपदेष्वि'ति सूत्रयोः विकल्पनिवृत्त्यर्थमिति भाष्यम् । एवं च थलि इडभावपक्षे द्वित्वादौ सिसेध् थ इति स्थिते । झषस्तथोः । झष इति पञ्चमी । तश्च थ् चेति द्वन्द्वः । तकारादकार उच्चारणार्थः । तकारथकारयोरिति लभ्यते । 'धः' इति प्रथमैकवचनम् । अकार उच्चारणार्थः । धकार इति लभ्यते । 'अध' इति षष्ठ्यन्तम् । धाधातुभिन्नस्येति लभ्यते । तदाह—झषः परयोरिति । जश्त्वमिति । सिसेध् ध इति स्थिते 'झलां जश् झशि' इति प्रथमधकारस्य दकारे सिषेद्धेति रूपमित्यर्थः । सिषिधिव-सिषिध्व सिषिधिम-सिषिध्म । क्रादिनियमस्तु नेड्वशीति प्रक्रमात्तत्प्रापितस्यैवाभावस्य निवर्तकः, न तु विभाषादिप्रापितस्यापि, अनन्तरस्यैति न्यायात् । इट्पक्षे आह-सिषेधिथेति । सेद्धेति । लुट् तास इडभावः डा टिलोपः गुणः । धत्वं जश्त्वम् । सेद्धारौ । सेद्धार इत्यादि । सेधितेति । इट्पक्षे रूपम् । सेत्स्यति सेधिष्यतीति । लृटि स्यः इड्विकल्पः । असैत्सीदिति । लुङ्तिप् । इकारलोपः । च्लिः । सिच् । इडभावः । 'अस्तिसिचः' इति ईट् । 'वदव्रजे'ति वृद्धिः । धकारस्य चर्त्वम् । असैध् स् तामिति स्थिते, अपृक्तत्वाभावादीडभावादिडभावाच्च, 'इट ईटी'ति सिचो लोपे अप्राप्ते । झलो झलि । झल इति पञ्चमी । संयोगान्तस्येत्यतो लोप इति, 'रात्सस्ये'त्यतः, सस्येति चानुवर्तते । तदाह—झलः परस्य सस्य लोपः स्यादिति । असैद्धामिति । असैध् स् तामिति स्थिते सलोपे धत्वे जश्त्वे च रूपम् । पक्ष इति । इट्पक्षे इत्यर्थः । असेधीदिति ।

मित्यादि । ४९ खादृ भक्षणे । ऋकार इत् । खादति । चखाद । ५० खद स्थैर्ये हिंसायां च । चाद्भक्षणे । स्थैर्येऽकर्मकः । खदति । २२८२ अत उपधायाः ७।२।११६॥ उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । चखाद । २२८३ णलुत्तमो वा ७।१।९१॥ उत्तमो णल्वा णित्स्यात् । चखाद—चखद । २२८४ अतो हलादेर्लघोः ७।२।७॥ हलादेर्लघोरकारस्येडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात् । अखादीत्-अखदीत् । ५१ बद स्थैर्ये । पवर्गीयादिः । बदति । बबाद । बेदतुः । बेदिथ । बबाद—बबद । अबादीत्—अबदीत् । ५२ गद व्यक्तायां वाचि । गदति । २२८५ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ८।४।१७॥ उपसर्गस्थान्निमित्तात्परस्य नेर्णः

'इट ईटीति' सलोपः । नेटीति वृद्धिप्रतिषेधः । लघूपधगुणः । खादृ इति । अत्र ऋदित्वं 'नाग्लोपी'त्याद्यर्थमित्यभिप्रेत्याह—ऋकार इदिति । खदेति । स्थैर्यम्—स्थिरीभवनम् । णलि अजन्तत्वाभावादचो ञ्णितीति वृद्धेरप्राप्तौ । अत उपधायाः । वृद्धिः स्यादिति । 'मृजेर्वृद्धि'रित्यतः तदनुवृत्तेरिति भावः । ञिति णिति चेति । 'अचो ञ्णिती'त्यतः तदनुवृत्तेरिति भावः । चखादेति । एत्वाभ्यासलोपौ तु नात्र भवतः । पित्त्वे अकित्त्वात्, आदेशादित्वात्, तदपेक्षया वृद्धेः परत्वाच्च । णलुत्तमः । णित् स्यादिति । 'गोतो णि'दित्यतस्तदनुवृत्तेरिति भावः । चखाद-चखदेति । णित्त्वे उपधावृद्धिः । तदभावे न । अतो हलादेः । 'सिचि वृद्धिः परस्मैपदेष्व'त्यनुवर्तते । 'नेटी'त्यस्मादिटीति 'ऊर्णोतेर्विभाषे'त्यतो विभाषेति च । तदाह—हलादेरिति । हलाद्यङ्गावयवस्येत्यर्थः । आदिग्रहणं स्पष्टार्थम् । हलः परस्येत्येव सिद्धः । अखादीत्-अखदीत् इति । वृद्धौ तदभावे च इट ईटीति सिज्लोपः । अखादिष्टाम्, अखदिष्टामित्यादि ।

बदेति । स्थैर्यम् स्थिरीभवनम् । पवर्गीयादिरिति । पवर्गतृतीयादिरित्यर्थः । ननु दन्त्योष्ठ्यादिरिति भावः । बबादेति । 'अत उपधाया' इति वृद्धिः । बेदतुरिति । अभ्यासजश्त्वेन आदेशादित्वेऽपि जश्त्वस्य वैरूप्यापादकत्वाऽभावादेत्वाभ्यासलोपाविति भावः । बबादेत्यत्र तु पित्त्वेन 'कित्त्वाभावादेत्वाभ्यासलोपौ न । बेदिथेति । अकित्त्वेऽपि 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । बेदथुः बेद । अथ उत्तमपुरुषणलि 'णलुत्तमो वे'ति णित्त्वविकल्पादुपधावृद्धिविकल्प इत्याह—बबाद-बबदेति । बेदिव बेदिम । अबादीत्-अबदीत् इति । 'अतो हलादे'रिति वृद्धिविकल्पः । गदेति । व्यक्तवाक् मनुष्यकृतशब्दप्रयोगः । जगादेति । चुत्वजश्त्वे । 'उपधावृद्धिः । वैरूप्यापादकादेशादित्वादेत्वाभ्यासलोपौ न । जगदतुः जगदुरित्यादि । नेर्गद । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादसमासेऽपि' इत्यत उपसर्गादिति च । तच्च उपसर्गस्थे लाक्षणिकम् । तदाह—उपसर्गस्थादिति । श्तिपा शपा च निर्देशाः यङ्लुङ्निवृत्त्यर्थाः ।

स्याद् गदादिषु । प्रणिगदति । जगाद । ५३ रद विलेखने । विलेखनं भेदनम् । रराद । ५४ णद अव्यक्ते शब्दे । २२८६ णो नः ६।१।६५॥ धातोरादेर्णस्य नः स्यात् । नदति । 'णोपदेशास्त्वनर्द् नाटिनाथ्नाध्नन्द्नक्कनृतः ।' नाटेर्दीर्घाईस्य पर्युदासाद्घटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेः नृनन्द्योश्च केचिण्णोपदेशतामाहुः । २२८७ उपसर्गादसमासेऽपि णोपदेशस्य ८।४।१४॥ उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेपि । प्रणदति । प्रणिनदति । ५५ अर्द गतौ याचने च । 'अत आदेः' सू (२२४८) २२८८ तस्मा-

प्रणिगदतीति । भिन्नपदस्थत्वादप्राप्तौ वचनम् । ररादेति । णलि उपधावृद्धिमभिप्रेत्याह-रारादेति । रेदतुरित्यादि । अरादीत् । अरदीत् । णदेति । अव्यक्तशब्दः अमनुष्यपशुपक्ष्यादिकृतशब्दप्रयोगः । णो नः । 'णः' इति षष्ठ्यन्तम् । 'धात्वादेः षः सः' इत्यतोऽनुवर्तनादाह-धातोरादेरिति । तेन अणतीत्यादौ न नत्वम् । नः स्यादिति । नकारः स्यादित्यर्थः । नदतीति । 'भेघादि,रिति शेषः । 'णो नः' इति नत्वस्यानैमित्तकतया लिण्निमित्तादेशादित्वाऽभावादेत्वाभ्यासलोपौ स्त एव—नेदतुरित्यादि । अथ 'नृतनर्द्नन्दनक्कनाटनाथ्नाध्नवर्जं णोपदेशाः' इति भाष्यं श्लोकार्धेन सङ्गृह्णाति—णोपदेशास्त्विति । 'नर्द शब्दे' । 'नट अवस्कन्दने' चुरादिः । 'नाथृ नाधृ याच्ञादौ' । द्वितीयचतुर्थान्तौ । 'टु नदि समृद्धौ' । 'नक्क नाशने' । 'णृ नये' । 'नृती गात्रविक्षेपे' । एभ्योऽष्टभ्योऽन्ये णकारादिधातवः इदानीं नकारादित्वेन दृश्यमाना अपि नत्वसम्पन्ननकारादितया णोपदेशाः प्रत्येतव्या इत्यर्थः । 'नाटो'ति ण्यन्तस्य प्रयोजनमाह—नाटेरिति । घटादिरिति । 'नट नृतौ'विति घटादिपठित इत्यर्थः । तत्फलं घटादौ वक्ष्यते । मतान्तरमाह—तवर्गेति । तवर्गचतुर्थान्तनाधधातोः नृनन्द्योश्च णोपदेशेषु पर्युदासाऽभावमङ्गीकृत्य तेषामपि णोपदेशत्वमाहुरित्यर्थः । अत्र मते पञ्चभ्यो भिन्ना णोपदेशा इति फलितम् । भाष्यविरोधोऽत्रारुचिबीजम् । ननु णकारमुपदिश्य तस्य किमर्थं नकारो विधीयते । नकार एवोपदिश्यतामित्याशङ्क्य तत्प्रयोजनमाह—उपसर्गात् । 'रषाभ्यां नो णः' इत्यधिकृतम् । तदाह—उपसर्गस्थादिति । 'समासेऽङ्गुलेः सङ्गः' इत्यतः समास इत्यनुवृत्तेरसमासे न स्यादित्यसमासग्रहणम् । तथा सति 'प्रणाम' इत्यादौ समासे न स्यादित्यपिग्रहणम् । तदाह—समासे असमासेऽपीति । णस्योपदेशो यस्मिन्निति विग्रहः । प्रणदतीति । भिन्नपदस्थत्वादप्राप्तिः । प्रणिनदतीति । नेर्गदेति णत्वम् । नत्वात्र 'उपसर्गादसमासे' इति धातुनकारस्य णत्व शङ्क्यम् , अट्कुप्वाङ्भिन्नेन व्यवधानात् । अर्देति । 'उपधायां च' इत्यत्र हुक इत्यनुवर्तनात् अर्दतीत्यादौ न दीर्घः । लिटि णलि द्वित्वे हलादिशेषे अत आदेरित्यभ्यासाकारस्य दीर्घे आ अर्देति स्थिते-तस्मान्नुट् । द्वौ हलौ यस्य तस्येति विग्रहः । तच्छब्देन 'अत आदे'रिति कृतदीर्घः परा-

२२५५ नुड्द्विहलः ७।४।७१ ॥ द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्द । आर्दीत् । ५६ नर्द ५७ गर्द शब्दे । णोपदेशत्वाभावान्न णः । प्रनर्दति । गर्दति । जगर्द । ५८ तर्द हिंसायाम् । तर्दति । ५९ कर्द कुत्सिते शब्दे । कुत्सिते कोष्ठे । कर्दति । ६० खर्द दन्दशूके दशनहिंसादिरूपायां दन्दशूकक्रियायामित्यर्थः । खर्दति । चखर्द । ६१ अति ६२ अदि बन्धने । अन्तति । आनन्त । अन्दति । आनन्द । ६३ इदि परमैश्वर्ये । इन्दति । इन्दाञ्चकार । ६४ बिदि अवयवे । पवर्गतृतीयादिः । बिन्दति । अवयवं करोतीत्यर्थः । भिदि इति पाठान्तरम् । ६५ गडि वदनैकदेशे । गण्डति । अन्तस्यादयः पञ्चैते न तिङ्विषया इति काश्यपः । अन्ये तु तिङमपीच्छन्ति । ६६ णिदि कुत्सायाम् । निन्दति । प्रणिन्दति । ६७ टुनदि समृद्धौ । २२५६ आदिर्ञिटुडवः १।३।५। उपदेशे धातोराद्या एते इतः स्युः । नन्दति । इदित्वान्नलोपो न । नन्द्यात् । ६८ चदि आह्लादे ।

---

भूयते । तदाह—दीर्घीभूतादिति । टकार इत् । उकार उच्चारणार्थः । टित्त्वादाद्यव- यवः । तदाह—आनर्देति । आर्दीदिति । 'इट ईटि' इति सिज्लोपः । नर्देत्यादि । स्प- ष्टम् । कर्दति । कुत्सितशब्देन कुत्सितविशेषो विवक्षित इत्याह—कुत्सिते कोष्ठ इति । कुक्षिभवे इत्यर्थः । खर्दति । दन्दशूकः दंशनस्वभावः सर्पः । 'दन्दशूको बिलेशयः' इत्य- मरः । ननु सर्पस्य क्रियात्वाभावात् कथं धात्वर्थत्वमित्यत आह—दंशनेति ।

अति अदीति । इदित्वान्नुम् । तदाह—अन्ततीति । आनन्तेति । 'अत आदेः' इति दीर्घः । 'तस्मान्नुड्द्विहलः' इति नुट् । एवम् अन्दति । आनन्देति । नुट् । आन्दीत् । इदीति । परमैश्वर्यम्—परमेश्वरीभवनम् । इन्दतीति । इदित्वान्नुम् । इन्दाञ्चकारेति । 'इ- जादेश्च' इत्याम् । बिदीति । इदित्वान्नुमित्याह—बिन्दतीति । नन्ववयवस्य अक्रिया- रूपत्वात् कथं धात्वर्थत्वमित्यत आह—अवयवं करोतीत्यर्थ इति । अबिन्दीत् । अबि- न्दिष्टामित्यादि । पाठान्तरमिति । पवर्गीयचतुर्थादिरित्यर्थः । गडीति । वदनैकदेश इति । तत्क्रियायामित्यर्थः । गण्डति । अगण्डीत् । अन्तस्यादय इति । अति अदि बन्धने, इदि परमैश्वर्ये, बिदि अवयवे, गडि वदनैकदेशे इति पञ्च धातवः तिङ्प्रकृतयो न भव- न्तीति काश्यपमतमित्यर्थः । अन्ये इति । काश्यपादन्ये मुनयः तिङमपि एभ्य इच्छ- न्तीत्यर्थः । णिदीति । इदित्वान्नुम् । णोपदेशत्वात् णस्य नत्वम् । तदाह—निन्द- तीति । प्रणिन्दतीति । 'उपसर्गादसमासेऽपी'ति णत्वम् । टु नदीति । समृद्धिः प्रजाप- श्वादिसम्पत्तिः । आदिः । 'भूवादयो धातवः' इत्यस्मात् धातव इत्यनुवृत्तं षष्ठ्या वि- परिणम्यते । 'उपदेशेऽजनुनासिकः' इत्यस्मात् उपदेश इति, इदिति चानुवर्तते । आ- दिरिति इदिति च बहुत्वे एकवचनम् । तदाह—उपदेश इति । टित्करणं 'ट्वितोऽथुः' इत्येतदर्थम् । नन्दतीति । इदित्वान्नुम् । इदित्वादिति । आशीर्लिङि यासुटः कित्त्वेऽपि

चन्दति । चचन्द । ६९ त्रदि चेष्टायाम् । त्रन्दति । तत्रन्द । ७० कदि ७१ क्रदि ७२ क्लदि आह्वाने रोदने च । चकन्द । चक्रन्द । चक्लन्द । ७३ क्लिदि परिदेवने । चिक्लिन्द । ७४ शुन्ध शुद्धौ । शुन्धति । शुशुन्ध । नलोपः । शुध्यात् ।

अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत् । ७५ शीकृ सेचने । तालव्यादिः । दन्त्यादिः इत्येके । शीकते । शिशीके । ७६ लोकृ दर्शने । लोकते । लुलोके । ७७ श्लोकृ संघाते । संघातो ग्रन्थः । स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मको द्वितीये सकर्मकः । श्लोकते । ७८ द्रेकृ ७९ ध्रेकृ शब्दनोत्साहयोः । उत्साहो वृद्धिरौद्धत्यं च । 'एच इग्घ्रस्वादेशे' इति ह्रस्वः । दिद्रेके । ८० रेकृ शङ्कायाम् । रेकते । ८१ सेकृ ८२ स्रेकृ ८३ स्रकि ८४ श्रकि ८५ श्लकि गतौ । त्रयो दन्त्यादयः । द्वौ तालव्यादी । अषोपदेशत्वान्न षः । सिसेके । ८६ शकि शङ्कायाम् । शङ्कते ।

इदित्वात् । अनिदितामिति नलोपो नेत्यर्थः । नन्दादिति । अनन्धात्, अन्धाविषयस्याप्युपलक्षणम् । चदात । इदित्वान्नुमित्याह—चन्दतीति । त्रदीति । अदुपधोऽयम् । इदित्वान्नुमित्याह—त्रन्दतीति । क्रदि क्लदीति । अदुपधौ । क्लिदि परिदेवने इति । अनुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः । शुन्ध शुद्धाविति । अकर्मकोऽयम् । शुन्धतीति । शुचिर्भवतीत्यर्थः । ननु शुधीत्येवमिदिदेवाऽयं कुतो न पठित इत्यत आह—नलोप इति । आशीर्लिङि 'अनिदिता'मिति नलोपे शुध्यादिति रूपमिष्टम् । इदित्वे तु नलोपो न स्यादिति भावः । अथ कवर्गीयान्ता इत्यादि 'लोकृ' इत्यन्तम । स्पष्टम् । श्लोकृ इति । संघातशब्दं व्याचष्टे—ग्रन्थ इति । ननु वाक्यसमुदायात्मकस्य ग्रन्थस्य अक्रियात्वात् कथं धात्वर्थत्वमित्याशङ्क्याह—स चेहेति । ग्रन्थनं ग्रन्थः सङ्घीभावः सङ्घीकरणं वा । तत्र सङ्घीभवनं सङ्घनिष्ठम् । सङ्घीकरणं तु सङ्घीकर्तृनिष्ठम् । तत्र सङ्घीभवनार्थकत्वे अकर्मकः । सङ्घीकरणार्थत्वे सकर्मक इत्यर्थः । श्लोकत इति । सङ्घीभवतीत्यर्थः, सङ्घीकरोतीति वा । द्रेकृ ध्रेकृ इति । शब्दनम् शब्दः । एच इति । लिट एशि द्वित्वे 'हलादिः शेषे' देद्रेक् ए इति स्थिते अभ्यासे एकारस्य ह्रस्वो भवन् 'एच इग्घ्रस्वादेशे' इति इकारो भवतीत्यर्थः । दिध्रेक इति । अभ्यासे धकारस्य जश्त्वेन दकारः । एकारस्य तु ह्रस्व इकारः । रेकृ इति । शङ्का संशयः आक्षेपो वा । शीकृ सेचन इत्यारभ्य एतत्पर्यन्ता ऋदितः । सेकृ इति । आद्यौ एकारमध्यौ ऋदितौ । इतरे त्रयः अदुपधाः इदितः । त्रय इति । पञ्चसु आद्यास्त्रय इत्यर्थः । अषोपदेशत्वादिति । सेकृधातोः पर्युदासान्न षोपदेशत्वम् । द्वितीयतृतीययोस्तु दन्त्याच्परकसादित्वाभावान्न षोपदेशत्वम् । ततश्च सकारस्यादेशसकारत्वाभावान्न षत्वमिति भावः । 'एच इग्घ्रस्वादेशे' इत्यभिप्रेत्याह—सिसेक इत्यादि । 'सस्रङ्के' इत्यादावपि इदित्वान्नुम् । शकीति । इदित्वान्नुमि-

शशङ्के। ८७ अकि लक्षणे। अङ्कते। आनङ्के। ८८ वकि कौटिल्ये। वङ्कते। ८९ मकि मण्डने। मङ्कते। ९० कक लौल्ये। लौल्यं गर्वश्चापल्यं च। ककते। चकके। ९१ कुक ९२ वृक आदाने। कोकते। चुकुके। वर्कते। ववृके। 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन। ९३ चक तृप्तौ प्रतिघाते च। चकते। चेके। ९४ ककि ९५ वकि ९६ श्वकि ९७ त्रकि ९८ ढौकृ ९९ त्रौकृ १०० ष्वष्क १०१ वस्क १०२ मस्क १०३ टिकृ १०४ टीकृ १०५ तिकृ १०६ तीकृ १०७ रघि १०८ लघि गत्यर्थाः। कङ्कते। डुढौके। तुत्रौके। 'षुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः।' ष्वष्कते। षष्वष्के। अत्र तृतीयो दन्त्यादिः इत्येके। टेकते। टीकते। एवं तेकते। तीकते। लघि भोजननिवृत्तावपि। १०९ अघि ११० वघि १११ मघि गत्याक्षेपे। आक्षेपो निन्दा। गतौ गत्यारम्भे च इत्यन्ये। अङ्घते। आनङ्घे। वङ्घते। मङ्घते। मघि कैतवे च। ११२ राघृ ११३ लाघृ ११४

इत्याह—शङ्कत इति। शशङ्क इति। अकीति। लक्षणं चिह्नीकरणम्। अङ्कत इति। इदित्वान्नुम्। आनङ्क इति। 'तस्मान्नुड्द्विहलः' इति नुट्। वकि कौटिल्ये इत्यादि स्पष्टम्। कुक वृकेति। द्वितीयः ऋदुपधः। शपि लघूपधगुणं मत्वा आह—कोकत इति। चुकुक इति। 'असंयोगादि'ति कित्त्वात् न लघूपधगुणः। अभ्यासे चुत्वम्। लघूपधगुणे रपरत्वं मत्वाह—वर्कत इति। लिटि 'असंयोगा'दिति कित्वान्न गुण इति मत्वाह—ववृके इति। उरदत्वं हलादिशेषः। ननु कित्वात् परत्वात् गुणः स्यात्, कृते गुणे रपरत्वे संयोगात्परत्वेन कित्वस्याऽप्रवृत्त्या अनित्यत्वादित्यत आह—ऋदुपधेभ्यो लिटः कित्वं गुणात् पूर्वविप्रतिषेधेनेति। चकेति। तृप्तावकर्मकः। प्रतिघाते सकर्मकः। एत्वाभ्यासलोपौ मत्वाह—चेक इति। ककीति। एते पञ्चदश धातवः। आद्याश्चत्वारः इदितः। द्वितीयो वकारादिः। तृतीयस्तालव्यादिः। पञ्चमषष्ठौ दशमाद्याश्चत्वारश्च ऋदितः। दशमद्वादशौ इदुपधौ। रघिलघी इदितौ चतुर्थान्तौ। कङ्कत इत्यादावीदित्वान्नुम्। डुढौके तुत्रौक इति। अभ्यासे ढस्य जश्त्वेन डकारः, ओकारस्य ह्रस्व उकारः। अथ ष्वष्कधातोः षोपदेशपरिगणनात् 'धात्वादे'रिति सत्वे प्राप्ते आह—षुब्धातिवति। षष्वष्क इति। संयुक्तहलमध्यस्थत्वादेत्त्वाभ्यासलोपौ न, संयोगात्परत्वेन लिटः कित्वाभावाच्च। तृतीय इति। तथा च स्वष्कते इति रूपम्। केवलदन्त्यपरकसादित्वाभावेन षोपदेशत्वाऽभावः। टेकते इति। लघूपधगुणः। टीकत इति। दीर्घोपधत्वान्न गुणः। एवं तेकते तीकत इति। रङ्घते लङ्घते। इदित्वान्नुम्। लघि भोजननिवृत्तावपीति। निवृत्तिः विमुखीभवनम्। लङ्घते। न भुङ्क्त इत्यर्थः। अघीति। त्रयोऽपि चतुर्थान्ता इदितः। आनङ्घ इति। 'तस्मान्नुड्द्विहलः' इति नुट्। वङ्घत इति। इदित्वान्नुम्। लिटि तु ववङ्घे इति रूपम्। वादित्वात्संयुक्तहलमध्यस्थत्वात् संयोगात्परत्वेन लिटः कित्वाऽभावाच्च एत्वाभ्यासलोपौ न। मघि कैतवे चेति। कैतवं वञ्चना। राघृ इति।

द्राघृ सामर्थ्ये । राघते । लाघते । भ्राघृ इत्यपि केचित् । द्राघृ आयामे च । आयामो दैर्घ्यम् । द्राघते । ११५ श्लाघृ कत्थने । श्लाघते ।

अथ परस्मैपदिनः पञ्चाशत् । ११६ फक्क नीचैर्गतौ । नीचैर्गतिर्मन्दगमनम-सद्व्यवहारश्च । फक्कति । पफक्क । ११७ तक हसने । तकति । ११८ तकि कृच्छ्र-जीवने । तङ्कति । ११९ बुक्क भषणे । भषणं श्वरवः । बुक्कति । १२० कख हस-ने । प्रनिकखति । १२१ ओखृ १२२ राखृ १२३ लाखृ १२४ द्राखृ १२५ ध्राखृ शोषणालमर्थयोः । ओखति । ओखाञ्चकार । १२६ शाखृ १२७ श्लाखृ व्याप्तौ । शाखति । १२८ उख १२९ उखि १३० वख १३१ वखि १३२ मख १३३ मखि १३४ णख १३५ णखि १३६ रख १३७ रखि १३८ लख १३९ लखि १४० इख १४१ इखि १४२ ईखि १४३ वल्ग १४४ रगि १४५ लगि १४६ अगि १४७ वगि १४८ मगि १४९ तगि १५० त्वगि १५१ श्रगि १५२ श्लगि १५३ इगि १५४ रिगि १५५ लिगि गत्यर्थाः । द्वितीयान्ताः पञ्चदश । तृतीयान्तास्त्रयोदश । इह खा-न्तेषु रिख त्रख त्रिखि शिखि इत्यपि चतुरः केचित्पठन्ति । ओखति । २२९० अ-**भ्यासस्यासवर्णे** ६।४।७८॥ इवर्णोवर्णान्तस्य अभ्यासस्येयङुवङौ स्तोऽसवर्णेऽ-चि । उवोख । सन्निपातपरिभाषया 'इजादेः—' ( सू २२३७ ) इत्याम् न ।

अयोऽपि **अर्दितः । सामर्थ्यं कार्यक्षमोभवनम्** । भ्राघृ इत्यपीति । **चतुर्थादिमपि केचित् पठन्तीत्यर्थः** । द्राघृ इति । **आयामः दीर्घीभवनम्** । श्लाघृ कत्थन इति । कत्थनं **स्तुतिः** । **ओकृ इत्यादयो द्विचत्वारिंशदात्मनेपदिनो गताः** ।

फक्क नीचै**रित्यादि स्पष्टम्** प्रनिकखतीति । **'शेषे विभाषा' इत्यत्र अकखादाविति पर्युदासान्नेर्णत्वं नेति भावः** । ओखृ इति । अलमर्थः-**भूषणक्रिया, पर्याप्तिः, वारणं वा** । **ओखति । ओखाञ्चकार** । शाखृ श्लाखृ इति । **श्लाघृ इति चतुर्थान्त आत्मनेपदेषु गतः** । उख उखीति । पञ्चदशेति । **'इखि इत्यन्ता' इति शेषः** । त्रयोदशेति । **'वल्गादय' इति शेषः । तत्र इदित्त्वान्नुम् । आशीर्लिङि नलोपाभावश्च** । पठन्तीति । **तेषां मते खा-न्ता एकोनविंशतिरिति बोध्यम्** । ओखतीति । **इहापि लघूपधगुणः । क्ङिति चलः पित्त्वेन ङित्त्वाभावात् प्राप्तस्यापि लघूपधगुणस्य द्विर्वचनेऽचीति निषिद्धतया गुरुमत्त्वाभावा-दामभावे सति पूर्वं द्वित्वे कृते हलादिशेषे पश्चात् 'वार्णादाङ्गं बलीय' इति परि-भाषया अन्तरङ्गमपि सवर्णदीर्घं बाधित्वा लघूपधगुणे कृते उ ओख् अ इति स्थिते, उवर्णस्य यणि प्राप्ते—**अभ्यासस्य । **'अचि श्नुधात्विति'त्यतः अचीति, य्वोरियङुवङा-विति चानुवर्तते । इश्च उश्च यू तयोरिति** विग्रहः । **अभ्यासविशेषणमिदं तदन्तविधिः तदाह**–इवर्णोवर्णान्तस्येति । **ङित्त्वादन्तादेशौ** । उवोखेति । **'अचि श्नुधात्वि'त्यस्य तु नात्र प्राप्तिः, अजादौ प्रत्यये परत एव तत्प्रवृत्तेः, अभ्यासस्य अङ्गत्वाभावाच्च** ।

कामयते । २३११ अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५॥ आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः । कामयाञ्चक्रे । 'आयादय आर्धधातुके वा'(सू २३०५) । चकमे । कामयिता-कमिता । कामयिष्यते-कमिष्यते । २३१२ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८॥ ण्यन्तात्, श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । अ काम् इ अ त इति स्थिते । २३१३ णेरनिटि ६।४।५१॥ अनिडादावार्धधातुके परे णेर्लोपः स्यात् । परत्वात् 'एरनेकाचः-' (सू २७२) इति यणि प्राप्ते । 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन'

भावे 'चकम' इत्यादौ चरितार्थमिति भावः । कामयत इति । णिङि 'अत उपधायाः' इति वृद्धौ कामि इति णिङन्तम् । 'क्ङिति च' इति निषेधस्तु न, अनिग्लक्षणत्वात् । णिङन्तस्य धातुत्वात् लडादयः । तत्र लटि शपि गुणे अयादेशे कामयते इति रूपम् । कामयेते इत्यादि सुगमम् । लिटि 'कास्यनेकाच' इत्यामि, आम इति लिटो लोपे, कामि आम् इति स्थिते सार्वधातुकेति गुणं बाधित्वा 'णेरनिटि' इति वक्ष्यमाणे णिलोपे प्राप्ते-अयामन्त । अय् इति च्छेदः 'णेरनिटी'त्यतो णेरित्यनुवर्तते । तदाह-णेरयादेशः स्यादिति । तथाच कामयामित्यामन्तं स्थितम् । ततः 'कृञ्चानुप्रयुज्यते' इत्यनुप्रयोगाल्लिडिति मत्वाह-कामयाञ्चक्र इति । णिङ आयादित्वात्तदभावाल्लिडादावार्धधातुके तद्विकल्पमुक्तं स्मारयति—आयादय इति । चकम इति । सेट्कोऽयम् । चकमिषे । चकमिध्वे । चकमिवहे । चकमिमहे । कामयितेति । लुटि णिङ्पक्षे तासि इटि वृद्धौ गुणे अयादेशे रूपम् । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट-कमिषीष्ट । अथ णिङन्तात् कामि इत्यस्माल्लुङः तादेशे च्लेः सिजादेशे प्राप्ते-णिश्रि । णि श्रि द्रु स्रु एषां द्वन्द्वः । प्रत्ययग्रहणपरिभाषया णीति तदन्तस्य ग्रहणम् । 'च्लि लुङी'त्यतो लुङीति, 'च्लेः सिजि'त्यतः च्लेरिति चानुवर्तते । तदाह—ण्यन्तादित्यादिना । चङावितौ । णेरनिटि । आर्धधातुक इत्यधिकृतम् । 'अतो लोप' इत्यस्मात् लोप इत्यनुवर्तते । अनिटीत्यस्य आर्धधातुकविशेषणत्वात् तदादिविधिः । तदाह—अनिडादाविति । तथाच णिलोपे काम् अ त इति स्थिते-परत्वादिति । 'एरनेकाच' इत्यस्य 'णेरनिटी'त्यपेक्षया परत्वाणिलोपं बाधित्वा यणि प्राप्ते सतीत्यर्थः । कृते तु यणि लोपो दुर्लभः, णेरभावात् । स्थानिवत्त्वेऽपि यणा बाधितस्य पुनरुन्मेषो दुर्लभः । वस्तुतस्तु स्थानिवत्त्वमेवेह दुर्लभम् । यणस्थानिनमिकारम् अल्रूपम् णित्वरूपेणाश्रित्य प्रवर्तमानस्य णिलोपस्याऽल्विधित्वेन तत्र स्थानिवत्त्वाऽसम्भवात् । स्पष्टा चेयं रीतिः 'भोभगो' इति सूत्रभाष्ये इति शब्देन्दुशेखरे विस्तरः । ण्यल्लोपाविति । णिलोपः इयङ्यण्गुणवृद्धिदीर्घेभ्यः, अल्लोपस्तु वृद्धिदीर्घाभ्यां पूर्वविप्रतिषेधेनेति विवेकः । तथाच पूर्वविप्रतिषेधादिह यणं बाधित्वा णिलोपो भवतीति स्थितम् । ननु-अततक्षत्, आटिटत्, कारणा, कारकः, कार्यते इति वक्ष्यमाणेषु वार्तिकोदाहरणेषु क्रमेण इयङ्यण्गुणवृद्धिदीर्घाणामवश्यं प्राप्ते-

इति वार्तिकम्। णिलोपस्य तु पाचयतेः पाक्तिरित्यादि क्तिजन्तमवकाश इति भावः। वस्तुतस्तु अनिटि इति वचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः। तथा चेयङादेरपवाद एवायम्। इयङ् अततक्षत्। यण् आटिटत्। गुणः कारणा। वृद्धिः कारकः। दीर्घः कार्यते। २३१४ णौ चङ्युपधाया ह्रस्वः ७।४।१॥ चङ्परे णौ यदङ्गं

णिलोपस्य निरवकाशत्वादेव इयङादिबाधकत्वसम्भवादिदं वार्तिकं व्यर्थम्। सुधियौ, प्रध्यौ, कर्ता, चिकाय, सुषाव इत्यादौ इयङ्यण्गुणवृद्धिदीर्घाणां सावकाशत्वादित्यत आह—णिलोपस्य त्विति। पचधातोर्णिचि उपधावृद्धौ पाचि इति ण्यन्तात् 'स्त्रियां क्तिन्'ति क्तिनि, 'तितुत्रतथसिसुसरकसेषु च' इति इण्निषेधे 'णेरनिटी'ति णिलोपे कुत्वे पाक्तिरिति स्थितिः। 'क्तिजन्तमि'ति पाठे तु 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् बोध्यः। 'पाक्ति'रिति कस्यचित्संज्ञा। अत्र इयङादीनाम् अप्रसक्तेर्णिलोपस्यापि सावकाशत्वं तुल्यम्। तत्र अततक्षदित्यादौ परत्वादियङादिप्राप्तौ तन्निवृत्त्यर्थं वार्तिकमिदमारम्भणीयमिति भावः। वार्तिकं व्यर्थमेवेत्याह—वस्तुतस्त्विति। आर्द्धधातुकमात्रमिति। कृत्स्नमनिडार्धधातुकमस्य णिलोपस्य विषय इत्यर्थः। तथाच अततक्षदित्यादौ परानपि इयङादीन् णिलोपः अपवादत्वात् बाधते, परापेक्षया अपवादस्य प्रबलत्वात्। परत्वादियङादीनां णिलोपबाधकत्वाभ्युपगमे हि णेरनिटीत्यत्र अनिटीति व्यर्थम्। कारयितेत्यादाविडार्धधातुके गुणेनैव णिलोपस्य बाधसिद्धेः। ततश्च अनिटीति वचनसामर्थ्यादनिडादावार्द्धधातुके सर्वस्मिन्परे णिलोप इति विज्ञायते। एवं च अततक्षदित्यादावियङादिप्रवृत्तियोग्येऽप्यार्धधातुके सर्वत्र णिलोप इत्यस्य निरवकाशत्वादपवादत्वादेव णिलोपेन इयङादिबाधसिद्धेर्वार्तिकमिदं व्यर्थमिति भावः। अपवाद एवायमिति। णिलोप इत्यर्थः। अतो लोपस्तु 'चिकीर्षकः' इत्यत्र वृद्धिं 'चिकीर्ष्यात्'दित्यत्र 'अकृत्सार्वधातुकयोरि'ति दीर्घं च बाधित्वा पूर्वविप्रतिषेधाद्भवति। न ह्यतो लोपो वृद्धिदीर्घयोरपवादः, गोपायितेत्यादौ वृद्धिदीर्घयोरप्राप्तयोरप्यतो लोपस्यारम्भादित्यलम्। इयङिति। उदाहरणसूचनमिदम्। अततक्षदिति। तक्षधातोर्ण्यन्ताल्लुङस्तिपि इकारलोपे च्लेः चङि द्वित्वे संयोगपूर्वकत्वादेरनेकाच इति यणभावे इयङि प्राप्ते पूर्वविप्रतिषेधात् णिलोपे हलादिशेषे अडागमे अततक्षदिति रूपम्। यणिति। उदाहरणसूचनम्। आटिटदिति। अटधातोर्ण्यन्तात् आटि इत्यस्मात् लुङि तिपि इकारलोपे च्लेः चङि टि इत्यस्य द्वित्वे 'एरनेकाच' इति यणं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपे आटि वृद्धौ रूपम्। गुण इति। उदाहरणसूचनम्। कारणेति। 'स्त्रियामि'त्यधिकारे कृञ्धातोर्ण्यन्तात् कारि इत्यस्मात् 'ण्यासश्रन्थो युच्' इति युचि अनादेशे सार्वधातुकार्द्धधातुकयोरिति गुणं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपे स्त्रीत्वाट्टापि कारणेति रूपम्। वृद्धिरिति। उदाहरणसूचनम्। कारक इति। कृञ्धातोर्ण्यन्तात्कारि इत्यस्माण्ण्वुलि अकादेशे वृद्धिं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपे रूपम्। दीर्घ इति। उदाहरणसूचनम्। कार्यत इति। कृञ्धातोर्ण्यन्तात्कारि इत्यस्मात् कर्मणि लटि यकि

तस्योपधाया ह्रस्वः स्यात्। २३१५ चङि ६।१।११॥ चङि परेऽनभ्यासधातोरवय-वस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य। २३१६ सन्वल्लघुनि चङ्परेऽन-ग्लोपे ७।४।९३ चङ्परे इति बहुव्रीहिः। (अन्यपदार्थो णिः)। स च अङ्गस्य इति च द्वयमप्यावर्तते। अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् तत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति। अथवा अङ्गस्य इति नाव-

'अकृत्सार्वधातुकयो'रिति दीर्घं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपः। तथाच प्रकृते काम् इ अ त इत्यत्र 'एरनेकाच' इति यणं बाधित्वा णिलोपे काम् अ त इति स्थितम्। णौ चङि। अङ्गाधिकारादाह—यदङ्गमिति। उपधायाः किम्? अचकाङ्क्षत्। चङि किम्?। कारयति। णौ किम्? 'चङ्युपधाया ह्रस्व' इत्युच्यमाने अदीदपदित्यत्र दाधातोः ण्यन्तात् लुङि चङि दा इ अ त् इति स्थिते आकारस्य ह्रस्वे सति पुक् न स्यात्। णावित्युक्तौ तु आकारस्य णौ परतः उपधात्वाभावान्न ह्रस्वः। 'द्विर्वचनेऽची'ति निषेधस्तु न शङ्क्यः, द्वित्वनिमित्तचङः उपधया व्यवहितत्वात्। तथाच प्रकृते कम् अ त इति स्थितम्। चङि। 'एकाचो द्वे प्रथमस्ये'ति 'अजादेर्द्वितीयस्ये'ति चाधिकृतम्। 'लिटि धातोरनभ्यासस्ये'ति सूत्रं लिटि इति वर्जमनुवर्तते, तदाह—चङि पर इत्यादिना। तथाच कम् इत्यस्य द्वित्वे हलादिशेषे क कम् अ त इति स्थितम्। सन्वल्लघुनि। 'अनग्लोप' इतिच्छेदः। बहुव्रीहिरिति। चङ् परो यस्मादिति विग्रह इति भावः। कर्मधारयमाश्रित्य चङि परे इति नार्थः, परग्रहणवैयर्थ्यात्। ननु बहुव्रीह्याश्रयणेऽपि 'अत्र लोपोऽभ्यासस्ये'त्यतः अभ्यासस्येत्यनुवृत्तौ चङ्परके लघुनि परे अभ्यासः सन्वदित्यर्थो लभ्यते। तथा सति अण्यन्तेभ्यः श्रिद्रुस्रुभ्यश्चङि द्वित्वे अशिश्रियत् अदुद्रुवत् असुस्रुवदित्यत्रापि सन्वत्त्वं स्यात्। ततश्च 'दीर्घो लघो'रिति सन्वद्भावविषये अभ्यासस्य वक्ष्यमाणो दीर्घः स्यादित्यत आह—अन्यपदार्थो णिरिति। तथाच चङ्परे णौ इति लभ्यते। अशिश्रियदित्यादौ च णेरभावान्न सन्वत्त्वमिति भावः। स चाङ्गस्येति चेति। बहुव्रीहिगम्यो णिः अङ्गस्येत्यनुवृत्तं चेत्यर्थः। तत्र णावित्यावृत्तौ एकं लघुनीत्यत्रान्वेति। तथाच चङ्परे णौ यल्लघु तस्मिन्परत इति लभ्यते। द्वितीयं तु अनग्लोपे इत्यत्रान्वेति। तथाच णौ परतः यः अग्लोपः तस्याऽभावे सतीति लभ्यते। अङ्गस्येत्यावृत्तौ एकं चङ्परे इत्यत्रान्वेति। निमित्तनिमित्तिभावे षष्ठी। तथाच अङ्गसंज्ञानिमित्तभूते चङ्परके वर्णे परे इति लभ्यते। चङ्परकश्च वर्णः अर्थात् णेरिकार एव। न तु श्रिद्रुस्रूणामन्त्यवर्णः, तस्य अप्रत्ययत्वेन अङ्गसंज्ञाप्रापकत्वाऽभावात्। एतदर्थमेव अङ्गस्येत्यस्य निमित्तषष्ठ्यन्ततामाश्रित्य चङ्पर इत्यनेनान्वयाऽभ्युपगतः। चङ्पर इत्येतावतैव तु णाविति न लभ्यते, श्रिद्रुस्रुषु व्यभिचारात्। द्वितीयं त्वङ्गस्येत्येतत् अभ्यासस्येत्यनुवृत्तेन अन्वेति। 'सन्व'दिति सप्तम्यन्ताद्वतिः। तदाह—अङ्गसंज्ञानिमित्तमित्यादिना। अथवेति। अस्मिन्व्याख्याने 'चङ्परे' इत्येतत् अङ्गस्येत्यत्रान्वेति। न तु लघुनि। अङ्गस्य च प्रत्ययनिमित्तत्वादेव णेरप्र-

र्तते चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् । २३१७ सन्यतः ७।४।७६॥ अभ्यासस्यात इकारः स्यात्सनि । २३१८ दीर्घो लघोः ७।४।९४॥ अभ्यासस्य लघोः दीर्घः स्यात्सन्वद्भावविषये । अचीकमत । णिङभावपक्षे तु 'कमेश्च्लेश्चङ् वक्तव्यः' । णेरभावान्न दीर्घसन्वद्भावौ । अचकमत ।

> संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ।
> तत्रैव दीर्घः सन्वच्च नानेकाद्विरिति माधवः ॥ १ ॥

---

पदार्थस्य लाभः । लघुनीति तु अभ्यासस्येत्यत्रैवान्वेति । तदाह—चङ्परे णौ यदङ्गमित्यादिना । प्राग्वदिति । सनीव कार्यं स्याण्णावग्लोपे असतीत्यर्थः । अत्र प्रथमपक्ष एव भाष्यसंमतः, 'अजजागर'दित्यत्र 'चङ्परे णौ यल्लघु तदभ्यासव्यवहितमिति न सन्वत्त्व'मिति भाष्योक्तेः एवं च प्रथमपक्षे उन्देर्ण्यन्ताच्चङि द्वित्वे उन्दिदत् इत्यत्र अभ्यासोत्तरखण्डे चङ्परे णौ लघोरभावेनाऽभ्यासस्य तथाविधलघुपरकत्वविरहात् सन्वत्त्वाभावान्नाभ्यासदीर्घः । द्वितीयपक्षे तु चङ्परे णौ यदङ्गम् उन्दिद् इत्येतत् तदीयोऽभ्यासश्चङमादाय लुप्तं णिमादाय वा लघुपर इति सन्वत्त्वसत्त्वादभ्यासदीर्घ इति भेदः । एवं च प्रकृते क कम् अ त इत्यतः व्याख्याद्वयेऽपि सन्वत्त्वं स्थितम् । सन्यतः । सनि अतः इति च्छेदः । 'अत्र लोप' इत्यत्र अभ्यासस्येत्यनुवर्तते । 'भृञामि'दित्यस्मात् इदिति । तदाह—अभ्यासस्येति । कि कम् अ त इति स्थितम् । दीर्घो लघोः । 'अत्र लोपोऽभ्यासस्ये'त्यतः अभ्यासस्येत्यनुवर्तते । तदाह—अभ्यासस्य लघोर्दीर्घ इति । अभ्यासावयवस्य लघोरित्यर्थः । 'सन्वल्लघुनि चङ्परे' इति सूत्रं सन्वच्छब्दवर्जमनुवर्तते । तच्च प्राग्वदेव द्विधा व्याख्येयम् । तथा च फलितमाह—सन्वद्भावविषय इति । 'सन्यत' इत्यत्र तपरत्वं स्पष्टार्थमिति 'दीर्घोऽकित' इति सूत्रे भाष्ये स्पष्टम् । तथा च कि कम् अ तेत्यत्र अभ्यासेकारस्य दीर्घे अभ्यासचुत्वे अडागमे परिनिष्ठितं रूपमाह—अचीकमतेति । अत्र लघोर्णिपरत्वं येन नाव्यवधानन्यायाद्बोध्यम् । णिङभावपक्षे त्विति । 'आयादय आर्धधातुके वे'ति णिङो वैकल्पिकत्वादिति भावः । कमेश्च्लेश्चङ् वक्तव्य इति । अण्यन्तत्वादप्राप्तौ वचनम् । णेरभावादिति । णिङभावपक्षे कमिधातोरनुदात्तत्त्वात्तङि प्रथमपुरुषैकवचने च्लेश्चङि द्वित्वे हलादिशेषे अभ्यासचुत्वे अडागमे अचकमतेति रूपं वक्ष्यते । तत्र णेरभावात् दीर्घो लघोरित्यभ्यासलघोर्दीर्घो न भवति, तत्र लघुनि चङ्परेऽनग्लोप इत्यनुवर्त्य चङ्परे णावेव तद्विधानोक्तेः । अत एव सन्वत्त्वाभावात्सन्यत इत्यभ्यासाऽकारस्य इत्त्वं च न भवतीत्यर्थः । 'दीर्घो लघो'रिति दीर्घविधौ सन्वत्त्वं न निमित्तम् । किन्तु लघुनि चङ्परे इत्यस्य तत्रानुवृत्त्या सन्वद्भावविषये तत्प्रवृत्तिः । अतः दीर्घसन्वद्भावाविति पृथगुक्तिः ।

अथ पञ्चभिः श्लोकैः सन्वद्भावसूत्रं 'दीर्घो लघो'रिति सूत्रं च विशदयति—संज्ञाया इत्यादिना । अस्मिन् शास्त्रे 'कार्यकालं संज्ञापरिभाष'मित्येकः पक्षः । 'कार्यकाल'मित्यस्य कार्यप्रदेशकमित्यर्थः । अस्मिन्पक्षे तत्तत्कार्यविधिप्रदेशेषु संज्ञा-

चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ।
किं त्वस्यावयवः कश्चित्तस्मादेकाच्त्विदं द्वयम् ॥ २ ॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ।
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥ ३ ॥

शास्त्रस्य परिभाषाशास्त्रस्य च उपस्थितिः । 'यथोद्देशं संज्ञापरिभाष'मिति पक्षान्तरम् । उद्देशाः संज्ञापरिभाषाशास्त्राम्नायप्रदेशाः तान् अनतिक्रम्य यथोद्देशम् । संज्ञाशास्त्रं परिभाषाशास्त्रं च स्वप्रदेशे स्थितमेव तत्तद्विध्यपेक्षितं स्वं स्वमर्थं समर्पयतीति यावत् । अस्मिन्पक्षे कार्यप्रदेशेषु संज्ञापरिभाषायां तदर्थस्यैवोपस्थितिः, न तु संज्ञापरिभाषाशास्त्रयोरिति स्थितिः । 'सन्वल्लघुनी'ति सूत्रे, 'दीर्घो लघो'रिति सूत्रे च अङ्गस्येति अभ्यासस्येति चानुवृत्तम् । तत्र कार्यकालपक्षे 'पूर्वोऽभ्यास' इति सूत्रं सन्निहितम् । ततश्च अङ्गस्य ये द्वे उच्चारणे तयोः पूर्वः अभ्याससंज्ञः स सन्वद्भवतीति फलितम् । तत्र कृदन्तोच्चारणशब्दयोगादङ्गस्येति कर्मणि षष्ठी, न त्ववयवषष्ठी, कारकषष्ठ्या बलवत्त्वात् । अङ्गं च प्रत्यये परतः कृत्स्नमेव प्रकृतिरूपम् , न तु तदेकदेशः । ततश्च कृत्स्नमङ्गं च प्रत्यये परतः कृत्स्नमेव प्रकृतिरूपम्, न तु तदेकदेशः । ततश्च कृत्स्नमङ्गं यत्र द्विरुच्यते, न तु तदेकदेशमात्रं तत्रैव 'दीर्घो लघो'रिति दीर्घः 'सन्वल्लघुनी'ति सन्वद्भावश्च भवति । एवं च अङ्गस्य एकाच्कत्वे सत्येव तयोः प्रवृत्तिः, तत्र कृत्स्नस्याङ्गस्य द्विरुक्तेः । अनेकाच्केषु तु अङ्गेषु न तयोः प्रवृत्तिः, तत्र एकस्यैव एकाचः अङ्गैकदेशस्य द्विरुक्तेरिति माधवो मन्यत इति प्रथमश्लोकस्यार्थः । 'नानेकाचि'त्यग्युक्तं विशदयति-चकास्तीति श्लोकेन । 'चकासृ दीप्तौ' । अर्थमाचष्टे इत्यर्थे णिचि 'अर्थवेदयो'रिति प्रकृतेरापुगागमे अर्थापिधातुः । 'ऊर्णुञ् आच्छादने' । एते त्रयः अनेकाच्का धातवः । आदिना 'जागृ निद्राक्षये' इत्यादिसंग्रहः । एभ्यो धातुभ्यश्चङि अङ्गं कृत्स्नं न द्विरुच्यते । किन्तु अङ्गस्य कश्चिदेकाजवयव एव द्विरुच्यते । तस्मात् अनेकाच्केषु कृत्स्नस्याङ्गस्य द्विरुक्त्यभावात् एकाच्केष्वेवाङ्गेषु 'दीर्घो लघो'रिति दीर्घः, 'सन्वल्लघुनी'ति सन्वद्भावश्चेत्येतद्द्वयं भवति, नत्वनेकाच्काङ्गेष्वित्यर्थः । नन्वेवं सति 'दिदरिद्रासति' इत्यादौ 'हलादिः शेष' इत्याद्यभ्यासकार्यमनेकाच्केष्वङ्गेषु न स्यात् कृत्स्नाङ्गस्य द्विरुक्त्यभावात् । किञ्च 'अजजागर'दित्यत्र सन्वत्त्वमाशङ्क्य 'णिपरकलघोगकाराकारस्य 'जा' इत्यनेन व्यवहितत्वादभ्यासस्य न सन्वत्त्व'मिति समाहितं भाष्ये । तदेतत् अनेकाच्काङ्गेषु सन्वत्त्वस्याऽप्रवृत्तौ विरुध्येत, कृत्स्नस्याङ्गस्य द्विरुक्त्यभावादेव तत्र सन्वत्त्वस्याप्राप्तौ तच्छङ्काया एवानुन्मेषादित्यस्वारस्याद्यथोद्देशपक्षमालम्ब्याह-वस्तुत इति । 'अङ्गस्ये'त्यवयवषष्ठी । अङ्गावयवस्याभ्यासस्येति लभ्यते । ततश्च ऊर्णुञि णिचि चङि 'नु' इत्येकदेशस्य द्वित्वेऽपि 'औणूनुव'दित्यत्र 'दीर्घो लघो'रित्यभ्यासलघुर्दीर्घो भवति । सन्वत्त्वं तु प्रयोजनाभावादुपेक्षितम्, अभ्यासे अकाराभावेन 'सन्यत' इत्यस्यासम्भवात् । अर्थमाचष्टे इत्यर्थे णिचि प्रकृतेरापुकि अर्थापिधातोश्चङि णि-

चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया ।
णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ ४ ॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् ।
णेरग्लोपेऽपि सन्वत्त्वमिगितामपि सिद्धये ॥ ५ ॥

अथ क्रम्यन्तास्त्रिंशत्परस्मैपदिनः।४४४ अण ४४५ रण ४४६ वण ४४७ भण ४४८ मण ४४९ कण ४५० क्वण ४५१ व्रण ४५२ भ्रण ४५३ ध्वण शब्दार्थाः। अणति । रणति । वणति । वकारादित्वादेत्त्वाभ्यासलोपौ न । ववणतुः । ववणिथ । धणिरपि केश्चित्पठ्यते । धणति । ४५४ ओणृ अपनयने । ओणति । ओणाञ्चकार । ४५५ शोणृ वर्णगत्योः । शोणति । शुशोण । ४५६ श्रोणृ संघाते । श्रोणति।४५७ श्लोणृ च।शोणादयस्त्रयोऽमी तालव्योष्मादयः।४५८पैणृ गतिप्रेरणश्लेषणेषु।प्रैणृ इति क्वचित्पठ्यते। पिपैण । ४५९ ध्रण शब्दे। उपदेशे नान्तोऽयम्। 'रषाभ्याम्'

लोपे उपधाह्रस्वे थप् इत्यस्य द्वित्वेऽपि 'आर्तथप'दित्यत्र सन्वद्भावात् 'सम्यत' इत्यभ्यासस्य इत्वम् अभ्यासदीर्घश्चेति द्वयं भवतीति जानीम इति तृतीयश्लोकार्थः । 'अङ्गस्यावयव' इति पक्षेऽपि चकास्तौ विशेषमाह—चकास्तौ तिवि । चतुर्थश्लोकोऽयम् । अवस्था—वस्तुस्थितिः । व्यवस्थया पक्षद्वयेनेति यावत् । 'चङ्परे' इत्यनेन अन्यपदार्थतया लब्धस्य णाविरयस्य सन्निहित लघुनीत्येतत् विशेष्यम् । तथा व 'चङ्परे णौ यल्लघु' इति प्रथमव्याख्यान फलितम् । अङ्गमेव वा णेविशेष्यम् । तथाच 'चङ्परे णौ यदङ्गमिति द्वितीयं व्याख्या फलितम् । इति व्यवस्थया पक्षद्वयेन सन्वत्वं दीर्घश्चेत्युभयमिदं चकास्तौ न स्यात् चकि णिलोपे द्वित्वे 'अचचकासत्' इत्यत्र न स्यात्, स्याच्चेत्यन्वयः । तत्र 'चङ्परे णौ यल्लघ्वि'ति व्याख्याने सति नैव उभयं स्यात् । चङ् परस्य णेः कास् इत्यनेन व्यवहितत्वात् । अचीकमतेत्यादौ त्वेकव्यवधानं येन नाव्यवधानन्यायात्सोढव्यमेव । 'चङ्परे णौ यदङ्ग'मिति व्याख्याने तु 'अचीचकास'दित्यत्र उभयं स्यादेव, अङ्गस्य णिपरत्वसत्त्वादिति बोध्यम् । ननु 'चङ्परे णौ यल्लघ्विति' 'चङ्परे णौ यदङ्ग'मिति च व्याख्याभेदे किं प्रमाणमित्यत आह—इति व्याख्याविकल्पस्य कैयटेनैव वर्णनादिति। आश्रयितव्यतेति शेषः । ननु णौ इत्यस्यावृत्तिमभ्युपगम्य अग्लोपेऽपि तदन्वयः किमर्थं इत्यत आह—णेरग्लोपेऽपीति । अगितामिति । 'कमु कान्ता'वित्यादीनामपीत्यर्थः। सिद्धय इति । दीर्घसन्वत्त्वसिद्ध्यर्थमित्यर्थः। अन्यथा कमुप्रभृतीनामुकाराद्यनुबन्धलोपमादाय अग्लोपित्वात् दीर्घसन्वद्भावौ न स्यातामित्यर्थः। इति धिणिप्रभृतयः क्रम्यन्ता दश गताः ।

क्रम्यन्ता इति । 'क्रमु पादविक्षेपे' इत्येतत्पर्यन्ता इत्यर्थः । 'अनुनासिकान्ता' इति शेषः । अण रणेति । इतः प्रभृति कन दीप्तावित्यतः प्राक् मूर्धन्यान्ताः । ओणृ इति । ऋदित्वं नाग्लोपीति निषेधार्थम् । ध्रण शब्द इति । अनुपधोऽयम् । उपदेश इति ।

(सू २३५) इति णत्वम् । प्रणति । णोपदेशफलं यङ्लुकि । दन्घ्रन्ति । वण इत्यपि केचित् । वेणतुः । वेणिथ । ४६० कनी दीप्तिकान्तिगतिषु । चकान । ४६१ ष्टन ४६२ वन शब्दे । स्तनति । वनति । ४६३ वन ४६४ षण सम्भक्तौ । वनेरर्थभेदात्पुनः पाठः । सनति । ससान । सेनतुः । २३१९ ये विभाषा ६।४।४३॥ जनसनखनामात्वं वा स्याद्यादौ क्ङिति । सायात्-सन्यात् । ४६५ अम गत्यादिषु । कनी-दीप्तिकान्तिगति-इत्यत्र गतेः परयोः शब्दसम्भक्त्योरादिशब्देन ग्रहः । अमति । आम । ४६६ द्रम ४६७ हम्म ४६८ मीमृ गतौ । द्रमति । दद्राम । 'ह्म्यन्त—' (सू २२९९) इति न वृद्धिः । अद्रमीत् । हम्मति । जहम्म । मीमति । मिमीम । अयं शब्दे च । ४६९ चमु ४७० छमु ४७१ जमु ४७२ झमु अदने । २३२० ष्ठिवुक्लमुचमां शिति ७।३।७५॥ एषामचो दीर्घः स्याच्छिति । आङि चम इति

---

धातूपदेशे नकारान्तोऽयम् । अकारस्य उच्चारणार्थस्य निवृत्तौ तवर्गपञ्चमान्त इत्यर्थः॥ तर्हि णकारस्य कथं श्रवणमित्यत आह—णत्वमिति णत्वमिति । ननु स्वाभाविक एव णकार इत्यस्तु, किं नकारस्य कृतणत्वस्य निर्देश इति कल्पनयेत्यत आह-णोपदेशेति । नकारस्यानिकणोपदेशस्य 'नश्चे'त्यनुस्वारात्मकं फलं यङ्लुकि प्रत्येतव्यमित्यर्थः । दन्घ्रनीति । घ्रणधातोर्यङ्लुकि द्वित्वे हलादिशेषे 'नुगतोऽनुनासिकान्तस्ये'त्यभ्यासस्य नुकि उत्तरखण्डे णकारस्याऽसिद्धत्वेन अनुस्वारे परसवर्णे तस्याऽसिद्धत्वात् णत्वाभावे नकारस्यैव श्रवणम् । स्वाभाविकणकारोपदेशे तु उत्तरखण्डे णकार एव श्रूयेतेति भावः । वणेत्यपीति । पवर्गतृतीयादिरिति भावः । 'कन दीप्तौ' इत्यारभ्य अम गत्यादिष्वित्यतः प्राक् तवर्गपञ्चमान्ताः । ष्टन वनेति । आद्यः षोपदेशः । ष्टुत्वसम्पन्नः टकारः । तदाह—स्तनतीति । वन षणेति । द्वितीयः षोपदेशः । ननु 'ष्टन वन शब्दे' इति वनेः पठितस्य पुनः पाठो व्यर्थ इत्यत आह-अर्थभेदादिति । वनेः शब्दे सम्भक्तौ च वृत्तिरिष्टा । ष्टनेस्तु शब्द एव वृत्तिरिष्टा । तत्र 'ष्टन वन शब्दे सम्भक्तौ च'त्युक्तौ ष्टनेरपि सम्भक्तौ वृत्तिः स्यात् । 'ष्टन शब्दे' इत्युक्त्वा 'वन सम्भक्तौ चे'ति पाठे गौरवमिति भावः । आशीर्लिङि विशेषमाह—ये विभाषा । 'जनसनखनां सञ्झलो'रित्यतः जनसनखनामित्यनुवर्तते । अनुदात्तोपदेशेत्यतः क्ङितीति । 'ये' इति तद्विशेषणम् । अकार उच्चारणार्थः । तदादिविधिः । 'विड्वनोरनुनासिकस्या'दित्यतः आदित्यनुवर्तते । तदाह-जनसनखनामित्यादिना । सायादिति । नकारस्य आत्वे सवर्णदीर्घः । द्रम हम्म मीमृ गताविति । आद्योऽदुपधः । न वृद्धिरिति । 'अद्रमी'दित्यत्र हलन्तलक्षणायां वृद्धौ नेटीति निषिद्धायां 'ह्म्यन्ते'त्यतः 'अतो हलादे'रिति वृद्धिर्नेत्यर्थः । जहम्मेति । अभ्यासचुत्वेन हस्य झः । तस्य 'अभ्यासे चर्चे'त्यनेन जः । मिमीमेति । मीमृधातोर्णलि द्वित्वे अभ्यासह्रस्वः । अयं शब्दे चेति । मीमृधातुरित्यर्थः । ष्ठिवुक्लमु । 'शमामष्टानां दीर्घः श्यनी'त्यतः दीर्घ इत्यनुवर्तते । दीर्घश्रुत्या अच इत्यु-

वक्तव्यम् । आचामति । आङि किम् । चमति । विचमति । अजमीत् । जिमिं केचित्पठन्ति । जेमति । ४७३ क्रमु पादविक्षेपे । २३२१ वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३।१।७०॥ एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे । २३२२ क्रमः परस्मैपदेषु ७।३।७६॥ क्रमेर्दीर्घः स्यात्परस्मैपदपरे शिति । क्राम्यति क्रामति । चक्राम । क्राम्यतु क्रामतु । २३२३ स्नुक्रमोरनात्मनेपदनिमित्ते ७।२।३६॥ अक्रमीत् । अक्रमीत् ।

अथ रेवत्यन्ता अनुदात्तेतः । ४७४ अय ४७५ वय ४७६ पय ४७७ मय ४७८ चय ४७९ तय ४८० णय गतौ । अयते । २३२४ दयायासश्च ३।१।३७॥ दय अय आस् एभ्य आम् स्याल्लिटि । अयाञ्चक्रे । अयिता । अयिषीष्ट । २३२५ ।

परिस्थितम् । तदाह—एषामचो दीर्घ इति । ष्ठिवु क्लमु चम् एषां द्वन्द्वः । चम् इत्यनेन आङ्पूर्वस्य चमेर्ग्रहणम् । अचमीदिति । ह्मयन्तेति न वृद्धिः । क्रमु पादेति । उदित्वमुदितो वेति विकल्पार्थम् । वा भ्राश । 'दिवादिभ्यः श्यन्'नित्यतः श्यन्निति, 'कर्तरि शप्'नित्यतः कर्तरीति, 'सार्वधातुके यक्'नित्यतः सार्वधातुक इति चानुवर्तते । तदाह-एभ्यः श्यन्वेत्यादि । क्रमः । दीर्घः स्यादिति । 'शमामष्टाना'मित्यतः तदनुवृत्तेरिति भावः। शितीति । 'ष्ठिवुक्लमुचमा'मित्यतस्तदनुवृत्तेरिति भावः । क्रामतीति । मध्यमपुरुषैकवचने क्रामेत्यत्र तु 'क्रमः परस्मैपदेष्वि'ति दीर्घो भवत्येव। नच दीर्घस्याङ्गाधिकारस्थत्वात् न लुमतेति निषेधः शङ्क्यः, लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्यं एव तस्य प्रवृत्तेः । शिति परतः क्रमेरङ्गस्य दीर्घस्तु न लुप्तप्रत्यये परस्मैपदे परे अङ्गस्य कार्यम्, किन्तु शिति परे अङ्गस्य कार्यमिति बोध्यम् । स्नुक्रमोः । पञ्चम्यर्थे षष्ठी । आत्मनेपदनिमित्तस्याऽभावः अनात्मनेपदनिमित्तम्, अर्थाभावे अव्ययीभावेन सह नञ्तत्पुरुषो विकल्प्यत इत्युक्तेः समासः । आत्मनेपदनिमित्ताभावे सति स्नुक्रमभ्यां परस्य वलाद्यार्धधातुकस्य इट् स्यादित्यर्थः । स्नुक्रमोरनुदात्तोपदेशानन्तर्भावादिटि सिद्धे वचनमिदं नियमार्थमित्याह—अक्रंस्तेति । एवञ्च भावकर्मलकारेषु इण्न भवति । उपस्नोष्यते जलेन । भावलकारोऽयम् । उपक्रंस्यते । कर्मणि लृट् । स्यः । 'प्रस्नुत'मित्यत्र तु 'श्र्युकः किती'ति निषेधान्नेट्, 'आर्धधातुकस्येड्वलादे' रिति इड्विधेः पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् । 'स्नुक्रमोरनात्मनेपदे' इति तु न सूत्रितम्, आत्मनेपदभिन्ने परस्मैपदे परे इत्यर्थे चिक्रमिषिष्यतीत्यसिद्धेः स्येन व्यवधानात् । आत्मनेपदे परे नेडित्यर्थे तु प्रचिक्रंसिष्यत इत्यसिद्धिः । अतो निमित्तग्रहणमित्यलम् । अक्रमीदिति । 'ह्मयन्ते'ति न वृद्धिः । इति क्रम्यन्ताः परस्मैपदिनो गताः ।

रेवत्यन्ता इति । 'रेवृ' प्लवगतावित्येतत्पर्यन्ता इत्यर्थः । अयत्येत्यारभ्य णय च-लने इत्यतः प्राक यकारान्ताः । दयायासश्च । दय अय आस् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । 'कास्प्रत्ययात्'दित्यतः आम् लिटीत्यनुवर्तते । तदाह—एभ्य आम् स्या-

**विभाषेटः ८।३।७९॥** इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात् । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट । आयिढ्वम्-आयिध्वम् ।
**२३२९ उपसर्गस्यायतौ ८।२।१९॥** अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते । निस्दुसो रुत्वस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते । निर्दुरोस्तु-निलयते-दुलयते । प्रत्यय इति त्विणो रूपम् । अथ कथम् 'उदयति विततोर्ध्वरश्मिरज्जौ' इति माघः । इट किट कटी इत्यत्र प्रश्लिष्टस्य भविष्यति । यद्वा 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' (प ९७), चक्षिङो ङित्करणाज्ज्ञापकात् । वादित्वात् , ववये । पेये । मेये । चेये । तेये । प्रणयते । नेये । ४८१ दय दानगतिरक्षणहिंसादानेषु । आदानं ग्रहणम् । दयाञ्चक्रे । ४८२ रय गतौ । ४८३ ऊयी तन्तुसन्ताने । ऊयाञ्चक्रे । ४८४ पूयी विशरणे दुर्गन्धे च । पूयते । पुपूये ।

---

ल्लिटि इति । विभाषेटः । 'इणः षीध्वंलुङ्लिटां धः' इत्यनुवर्तते । 'अपदान्तस्ये'त्यतो मूर्धन्य इति च । तदाह—इणः परो य इडित्यादि । इण्णन्तादङ्गादित्यर्थः । अयिषीढ्वमिति । आशीर्लिङो ध्वमः सीयुट् । यलोपः । आर्धधातुकत्वान्न सलोपः । इट् । यकाराद्विणः परो य इट् ततः परत्वात् धस्य मूर्धन्यो ढः । इटः परभक्तत्वाद्यकारान्तादङ्गात् परस्य इषीध्वमः इण्णन्तादङ्गात्परत्वान्नित्ये प्राप्ते विकल्पोऽयम् । आयिढ्वमिति । लुङो ध्वमि च्लेः सिचि आटि वृद्धौ सिच इटि 'धि चे'ति सलोपः । ध्वम इवर्णान्तादङ्गात्परत्वान्नित्ये प्राप्ते विकल्पः । अङ्गादिति निवृत्तमिति केचित् । उपसर्गस्यायतौ । अयताविति श्तिपा निर्देशः । 'कृपो रो लः' इत्यतः रो ल इत्यनुवर्तते । तदाह—अयतिपरस्येत्यादिना । प्लायत इति । प्र इत्युपसर्गः । पलायत इति । परा इत्याकारान्त उपसर्गः । ननु निरयते दुरयत इत्यत्रापि लत्वं स्यादित्यत आह—निस्दुसोरिति । तर्हि निलयते दुलयत इति कथमित्यत आह—निर्दुरोस्त्विति । एतदर्थमेव प्रादिषु सान्तयो रेफान्तयोश्च निर्देश इति भावः । तर्हि 'प्रत्यय' इत्यत्रापि प्रतेरयतिपरत्वात् रस्य लत्वं स्यादित्यत आह—प्रत्यय इति त्विति । प्रतिपूर्वकादिण्धातोरच्प्रत्यये 'प्रत्यय' इति रूपम् । अयतिपरत्वाऽभावान्न लत्वमित्यर्थः । अयधातुमादाय 'प्लत्यय' इति न अनभिधानादिति कैयटः । कथमुदयतीति । उत्पूर्वकादयधातोः शत्रन्तात्सप्तम्यन्तमिति मत्वा आक्षेपः । अनुदात्तेत्त्वेन लटः शानच्प्रसङ्गादिति भावः । प्रश्लिष्टस्येति । 'इधातो'रिति शेषः । तस्य अनुदात्तेत्त्वाऽभावाच्छतृप्रत्ययो निर्बाध इति भावः । ज्ञापकादिति । 'चक्षिङ्'धातोः इकारस्य अनुदात्ततया अनुदात्तेत्त्वादेव आत्मनेपदसिद्धौ ङित्करणं अनुदात्तेत्त्वप्रयुक्तात्मनेपदस्य अनित्यतां ज्ञापयति । तस्य अनित्यत्वे तु नित्यात्मनेपदार्थं ङित्करणमर्थवदिति भावः । इदं तु भाष्ये न दृश्यते । वादित्वादिति । वयधातोर्लिटि वादित्वादेत्त्वाभ्यासलोपयोरभावे सति 'ववये' इति रूपमित्यर्थः । णयधातुर्णोपदेश इति मत्वा आह—प्रणयत इति । 'उपसर्गादसमासेऽपी'ति णत्वमिति भावः । दयाञ्चक्र इति । 'दयायासश्च' इत्याम् । ऊयाञ्चक्र इति । इजादित्वा-

४८५ क्नूयी शब्दे उन्दने च। चुक्नूये। ४८६ क्ष्मायी विधूनने। चक्ष्माये। ४८७ स्फायी ४८८ ओप्यायी वृद्धौ। स्फायते। पस्फाये। प्यायते। २३२७ लिड्यङोश्च ६।१।२९॥ लिटि यङि च प्यायः पीभावः स्यात्। पुनः प्रसङ्गविज्ञानात् पीशब्दस्य द्वित्वम्। 'एरनेकाचः-' (सू २७२) इति यण्। पिप्ये। पिप्याते। पिप्यिरे। २३२८ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१॥ एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे। २३२९ चिणो लुक् ६।४।१०४॥ चिणः परस्य तशब्दस्य लुक् स्यात्। अप्यायि। अप्यायिष्ट। ४८९ तायृ सन्तानपालनयोः। सन्तानः प्रबन्धः। तायते। तताये। अतायि। अतायिष्ट। ४९० शल चलनसंवरणयोः। ४९१ वल ४९२ वल्ल संवरणे सञ्चरणे च। ववले। ववल्ले। ४९३ मल ४९४ मल्ल धारणे। मेले। ममल्ले। ४९५ भल ४९६ भल्ल परिभाषणहिंसादानेषु। बभले। बभल्ले। ४९७ कल शब्दसंख्यानयोः। कलते। चकले। ४९८ कल्ल अव्यक्ते शब्दे। कल्लते। अशब्दे इति स्वामी, अशब्दस्तूष्णींभाव इति च। ४९९ तेवृ ५०० देवृ देवने। तितेवे। दिदेवे। ५०१ षेवृ ५०२ गेवृ ५०३ ग्लेवृ ५०४ पेवृ ५०५ मेवृ ५०६ म्लेवृ सेवने। 'परिनिविभ्यः-' (सू २२७५) इति षत्वम्। परिषेवते। सिषेवे। अयं सोपदेशो-

---

दाम्। उन्दने चेति। क्लेदने चेत्यर्थः। स्फायी ओप्यायीति। ओदित्वम् 'ओदितश्च' इति निष्ठानत्वार्थम्। ईदित्वं तु 'श्वीदितो निष्ठाया'मिति इण्निषेधार्थम्। लिड्यङोश्च। लिट् च यङ् चेति द्वन्द्वात्सप्तमी। 'प्यायः पी' इति सूत्रमनुवर्तते। तदाह—लिटि यङि चेति। ननु प्यायतेर्लिटि द्वित्वं बाधित्वा परत्वात् पीभावे द्वित्वे एरनेकाचः इति यणि पिप्ये इति रूपमिष्यते। तत्र द्वित्वं बाधित्वा परत्वात् पीभावे कृते पुनर्द्वित्वं न सम्भवति, 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायादित्यत आह—पुनः प्रसङ्गेति। 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति परिभाषा। विप्रतिषेधे बाधितस्यापि पुनः प्रवृत्त्यभ्युपगमात्कृतेऽपि पीभावे द्वित्वादिकं सिद्धमिति तदर्थः। दीपजन। 'च्लेः सिच्' इत्यतः च्लेरिति, 'चिण् ते पदः' इत्यस्मात् चिण् ते इति चानुवर्तते। तदाह—एभ्यश्च्लेरिति। एकवचन इति। दीपादीनामात्मनेपदित्वेन तेभ्यस्तशब्दस्य एकवचनत्वनियमादिति भावः। चिणो लुक्। चिण इति पञ्चमी। तदाह—चिणः परस्येति। चिणः परश्च अर्थात् तशब्द एव भवति। चिणभावे च्लेः सिचि रूपमाह—अप्यायिष्टेति। तायृ सन्तानेति। लुङि 'दीपजन' इति च्लेश्चिणि तलोपे रूपमाह—अतायीति। चिणभावे सिचि 'अतायिष्टेति' रूपम्। शल चलनेत्यारभ्य तेवृ इत्यतः प्राक् लान्ताः। तेवृ इत्यारभ्य रेवृत्यन्ता वकारान्ताः। षेवृधातोः षोपदेशत्वात्सत्वे सेवत इत्यादि रूपम्। परिषेवत इत्यत्र 'सात्पदाद्योः' इति निषेधे प्राप्ते आह—परिनिविभ्य इति।

ऽपीति न्यासकारादयः। तत् भाष्यविरुद्धम्। गेवते। जिगेवे। जिग्लेवे। पिपेवे। मेवते। म्लेवते। शेवृ खेवृ क्लेवृ इत्यप्येके। ५०७ रेवृ प्लवगतौ। प्लवगतिः प्लुतगतिः। रेवते।

अथावत्यन्ताः परस्मैपदिनः। ५०८ मव्य बन्धने। ममव्य। ५०९ सूर्क्ष्य ५१० ईर्क्ष्य ५११ ईर्ष्य ईर्ष्यार्थाः। ५१२ हय गतौ। अहयीत्। यान्तत्वान्न वृद्धिः। ५१३ शुच्य अभिषवे। अवयवानां शिथिलीकरणं सुरायाः सन्धानं वा अभिषवः स्नानं च। शुशुच्य। चुच्य इत्येके। ५१४ हर्य गतिकान्त्योः। जहर्य। ५१५ अल भूषणपर्याप्तिवारणेषु। अलति। आल। २३३० अतो ल्रान्तस्य ७।२।२॥ ल्र- इति लुप्तषष्ठीकम्। अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात्परस्मैपदपरे सिचि। 'नेटि' (सू २२६८) इति निषेधस्य 'अतो हलादेः' (सू २२८४) इति विकल्पस्य चापवादः। मा भवानालीत्। अयं स्वरितेदित्येके। तन्मते अलते इत्याद्यपि। ५१६ ञिफला विशरणे। 'तृफल-' (सू २३०१) इत्येत्वम्। फेलतुः।

---

सिषेवे इति। आदेशसकारत्वात् षत्वमिति भावः। अयं सोपदेशोऽपीति। षेवृधातुरित्यर्थः। तद्भाष्यविरुद्धमिति। 'सेकृसृपृसृस्तृसृजस्तृस्त्यानामेव भाष्ये षोपदेशपर्युदासा- दिति भावः। रेवृ प्लवगताविति। प्लवेति न धात्वन्तरमिति सूचयन्नाह—प्लवगतिः प्लुतगतिरिति। अथपयेत्यादिरेवत्यन्ता गताः।

अवत्यन्ता इति। 'अव रक्षणे' इत्येतत्पर्यन्ता इत्यर्थः। मव्येत्यारभ्य अल भूषणे- त्यतः प्राक् यकारान्ताः। अल भूषणेत्यारभ्य 'खोर्ऋ प्रतीघाते' इत्यतः प्राक् लकारान्ताः। अतो ल्रान्तस्य। 'सिचि वृद्धिः परस्मैपदेषु' इत्यनुवृत्तम्। अङ्गस्येत्यधिकृतम्। तद्विशेषणत्वात्तदन्तविधिनैव सिद्धे अन्तग्रहणं व्यर्थम्। तत्राह—ल्रेति लुप्तषष्ठीकमिति। ल्र अन्तस्य इति छेदः। ल् च र् चेति समाहारद्वन्द्वात् षष्ठ्येकवचनं लुप्तम्। ल्रस्यान्तस्येति सामानाधिकरण्येनान्वयः। 'अत' इति व्यधिकरणषष्ठ्यन्तम्, अन्तस्येत्यत्रान्वेति। अन्तशब्दः समीपवर्तिवाची। तथा च अतः समीपवर्तिनो ल्रस्येति लभ्यते। ल्रस्येत्यङ्गविशेषणत्वात्तदन्तविधिः। ततश्च अत्समीपवर्तिरेफलकारान्तस्य अङ्गस्य सिचि वृद्धिरिति लभ्यते। 'अत' इत्यावृत्तं वृद्धौ स्थानित्वेनान्वेति। तदाह— अतः समीपावित्यादिना। अतः समीप इति किम्। अखोरीत्। अमीलीत्। ल्रान्तस्येति किम्। मा भवानतीत्। अतो वृद्धिरित्युक्त्वा अतः समीपावित्यनुक्तौ तु अवधीत् अश्वल्लीदित्यत्रातिव्याप्तिः। अत्र अङ्गस्यान्तौ रेफलकारौ नातः समीपाविति न वृद्धिः। नचात्र अतः मकारेण लकारेण च व्यवहितत्वादेव न वृद्धिः। आलीदित्यादौ एकव्यवधाने चरितार्थत्वादिति वाच्यम्, सिचि परे यदङ्गं तदकारस्य वृद्धिरित्यर्थाश्रयणे अतिव्याप्तिवारणार्थत्वात्। ञिफलेति। विशरणं शिथिलीभावः। 'आदिर्ञिटुडवः' इति ञिरित्। 'ञीतः क्तः' इति प्रयोजनम्। 'आदितश्च' इति इण्निषेधार्थमादित्त्वम्।

फेलुः। अफालीत्। ५१७ मील ५१८ श्मील ५१९ स्मील ५२० क्ष्मील निमेषणे। निमेषणं सङ्कोचः। द्वितीयस्तालव्यादिः। तृतीयो दन्त्यादिः। ५२१ पील प्रतिष्टम्भे। प्रतिष्टम्भो रोधनम्। ५२२ णील वर्णे। निनील। ५२३ शील समाधौ। शीलति। ५२४ कील बन्धने। ५२५ कूल आवरणे। ५२६ शूल रुजायां संघोषे च। ५२७ तूल निष्कर्षे। निष्कर्षो निष्कोषणम्। तच्चान्तर्गतस्य बहिर्निस्सारणम्। तुतूल। ५२८ पूल संघाते। ५२९ मूल प्रतिष्ठायाम्। ५३० फल निष्पत्तौ। फेलतुः। फेलुः। ५३१ चुल्ल भावकरणे। भावकरणमभिप्रायाविष्कारः। ५३२ फुल्ल विकसने। ५३३ चिल्ल शैथिल्ये भावकरणे च। ५३४ तिल गतौ। तेलति। तिल्ल इत्येके। तिल्लति। ५३५ वेलृ ५३६ चेलृ ५३७ केलृ ५३८ खेलृ ५३९ क्ष्वेलृ ५४० वेल्ल चलने। पञ्च ऋदितः। षष्ठो लोपधः। ५४१ पेलृ ५४२ फेलृ ५४३ शेलृ गतौ। षेलृ इत्येके। ५४४ स्खल सञ्चलने। चस्खाल। अस्खालीत्। ५४५ खल सञ्चये। ५४६ गल अदने। गलति। अगालीत्। ५४७ षल गतौ। सलति। ५४८ दल विशरणे। ५४९ श्वल ५५० श्वल्ल आशुगमने। शश्वाल। अश्वालीत्। शश्वल्ल। अश्वल्लीत्। ५५१ खोलृ ५५२ खोर्ऋ गतिप्रतिघाते। खोलति। खोरति। ५५३ धोर्ऋ गतिचातुर्ये। धोरति। ५५४ त्सर छद्मगतौ। तत्सार। अत्सारीत्। ५५५ क्मर हूर्छने। चक्मार। ५५६ अभ्र ५५७ वभ्र ५५८ मभ्र ५५९ चर गत्यर्थाः। चरतिर्भक्षणेऽपि। अभ्रति। आनभ्र। मा भवानभ्रीत्। अत्रान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः। ५६० ष्ठिवु निरसने। 'ष्ठिवुक्लमु–' (सू० २३२०) इति दीर्घः। ष्ठीवति। अस्य द्वितीयो वर्णस्थकारठकारो वेति वृत्तिः।

---

लिण्निमित्तादेशादित्वादप्राप्ते आह—तृफलेति। 'मील श्मीलेति'। निमेषणं नेत्रसंकोचः। सङ्कोच इति पाठेऽप्ययमेवार्थः। णील वर्ण इति। वर्णक्रियायामित्यर्थः। फल निष्पत्ताविति। ञि फलेति पूर्वं पठितम्। अनुबन्धभेदात्पुनः पाठः। खोलृ खोर्ऋ इति। द्वितीयो रेफान्तः। ऋदित्। इत आरभ्य ष्ठिवेः प्राक् रेफान्ताः। धोर्ऋ गतिचातुर्य इति। अश्वगतिविशेष इत्यर्थः। रेफान्तोऽयम्। ऋदित्। त्सर छद्मगताविति। कपटगताविस्यर्थः। क्मर हूर्छन इति। कुटिलीभवन इत्यर्थः। ष्ठिवु निरसन इति। इदुपधः। उदित्। इत आरभ्य ऊष्मान्तेभ्यः प्राक् वकारान्ताः। तिपि शपि लघूपधगुणे प्राप्ते आह—'ष्ठिवुक्लम्वितीति। ल्युटि तु ञिरपरकत्वाभावात् दीर्घाभावे लघूपधगुणः। ष्ठीवनमिति तु पृषोदरादित्वात् समाधेयम्। अस्येति। ष्ठिवुधातोः द्वितीयो वर्णः थकार इत्यर्थः। कृतष्टुत्वस्य निर्देश इति भावः। षोपदेशोऽयम्, केवलदन्त्यथकारपरकसादित्वात् षोपदेशत्वेऽपि न सत्वम्, 'सुब्धातुष्ठिवु' इति निषेधात्। लिटि तु 'शर्पूर्वाः खयः' इति षकारवकारयोर्निवृत्या ष्टुत्वनिवृत्तौ रूपमाह–तिष्ठेवेति।

तिष्ठेव । तिष्ठिवतुः। तिष्ठिवुः । टिष्ठेव । टिष्ठिवतुः । टष्ठिवुः । 'हलि च' (सू ३५४) इति दीर्घः । ष्ठीव्यात् । ५६१ जि जये । अयमजन्तेषु पठितुं युक्तः । जयः उत्कर्षप्राप्तिः । अकर्मकोऽयम् । जयति । २३३१ सन्लिटोर्जेः ७।३।५७॥ जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात् । जिगाय । जिग्यतुः । जिग्युः । जिगयिथ । जिगेथ । जिगाय । जिगय । जिग्यिव । जिग्यिम । जेता । जीयात् । अजैषीत् । ५६२ जीव प्राणधारणे । जिजीव ।५६३ पीव ५६४ मीव ५६५ तीव ५६६ णीव स्थौल्ये । पिपीव । मिमीव । तितीव । निनीव । ५६७ क्षीवु ५६८ क्षेवु निरसने । ५६९ उर्वी ५७० तुर्वी ५७१ थुर्वी ५७२ दुर्वी ५७३ धुर्वी हिंसार्थाः । ऊर्वाञ्चकार । 'उपधायां च' (सू २२६५) इति दीर्घः । तुतूर्व । ५७४ गुर्वी उद्यमने । गूर्वति । जुगूर्व । ५७५ मुर्वी बन्धने । ५७६ पुर्व ५७७ पर्व ५७८ मर्व पूरणे । ५७९ चर्व अदने । ५८० भर्व हिंसायाम् ५८१ कर्व ५८२ खर्व ५८३ गर्व दर्पे । ५८४ अर्व ५८५ शर्व ५८६ षर्व हिंसायाम् । आनर्व । शर्वति । सर्वति । ५८७ इवि व्याप्तौ । इन्वति । इन्वाञ्चकार । ५८८ पिवि ५८९ मिवि ५९० णिवि सेचने । तृतीयो मूर्धन्योष्मादिरित्येके । सेवने इति तरङ्गिण्याम् । पिन्वति । पिपिन्व । ५९१ हिवि ५९२ दिवि ५९३ धिवि ५९४ जिवि प्रीणनार्थाः। हिन्वति । दिन्वति। २३३२ धिन्विकृण्व्योरच ३।१।८०॥ अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये ।

---

ठकारस्य स्वाभाविकत्वे तु टिष्ठेवेति रूपम् । जि जय इति । जिधातुरनिट्कः । सन्लिटोर्जेः । 'अभ्यासाच्च' इति सूत्रात् अभ्यासादित्यनुवर्तते । 'चजोः कुघिण्यतोः' इत्यस्मात् कु इति च । 'सन्लिटोरि'ति निमित्तसप्तमी, अभ्यासे अन्वेति । तदाह-सन्लिण्निमित्तो योऽभ्यास इत्यादि । 'सनि लिटि च अभ्यासात् परस्य कुत्व'मिति व्याख्याने तु यङ्लुगन्तात् सनि जेजयिषति इत्यत्र कुत्वं स्यात् । अतः 'सन्लिण्निमित्तो योऽभ्यास' इति व्याख्येयमिति माधवः । जिगायेति । णलि द्वित्वे वृद्धौ उत्तरखण्डे जस्य कुत्वेन गः । जिग्यतुरिति । कित्वाद्गुणाभावः । लिटि 'एकाच' इति इण्निषेधं बाधित्वा क्रादिनियमादिटि प्राप्ते, थलि 'अचस्तास्वत्' इति तन्निषेधस्य भारद्वाजनियमाद्विकल्पः। तदाह—जिगयिथ जिगेथेति । जिग्यथुः । जिग्य । 'णलुत्तमो वा' इति मत्वा आह—जिगाय, जिगयेति । क्रादिनियमादिटं मत्वा आह—जिग्यिव जिग्यिमेति । जेतेति । जेष्यति । जयतु । अजयत् । आशीर्लिङि 'अकृत्सार्वधातुकयोः इति दीर्घं मत्वा आह-जीयादिति । अजैषीदिति । सिचि वृद्धिरिति वृद्धिरिति भावः । अजेष्यत् । षर्वधातुः षोपदेशः । इवि धातोरिदित्वान्नुम् । तदाह—इन्वतीति । इन्वाञ्चकारेति । नुमि इजादिगुरुमत्त्वादामिति भावः । पिविमिवीत्यादयः इदितः । धिन्विकृण्व्योः । 'अ' इति लुप्तप्रथमाकम् । धिविकृव्योः कृतनुमोः धिन्विकृण्वेति निर्देशः । 'तनादिकृञ्भ्य उः' 'इत्यतः उरिति

'अतो लोपः' (सू० २३०८) तस्य स्थानिवद्भावाल्लघूपधगुणो न । उप्रत्ययस्य पित्सु गुणः । धिनोति । धिनुतः । धिन्वन्ति । २३३३ लोपश्चास्यान्यतरस्यां म्वोः ६।४।१०७॥ असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात् म्वोः परयोः । धिन्वः । धिनुवः । धिन्मः । धिनुमः । मिपि तु परत्वाद्गुणः । धिनोमि । २३३४ उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६॥ असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक्स्यात् । धिनु । नित्यत्वादुकारलोपात्पूर्वमाट् । धिनवाव । धिनवाम । जिन्वतीत्यादि । ५९५ रिवि ५९६ रवि ५९७ धवि गत्यर्थाः ।

---

चकारादनुकृष्यते । 'कर्तरि शप्' इत्यतः कर्तरीति, 'सार्वधातुके यक्' इत्यतः सार्वधातुक इति च । तदाह—अनयोरित्यादिना । वकारस्याऽकारः धिन् अ उ ति इति स्थितम् । अतो लोप इति । युगपत्सन्नियोगशिष्टतया उप्रत्ययाऽकारयोर्विधानेऽपि अतक्रमानुरोधेन प्रवृत्त्या आर्धधातुकोपदेशकाले 'धिन' इत्यस्यादन्तत्वमिति भावः । नन्वत्र वकारस्य लोप एव विधीयतां किमकारविधिनेत्यत आह—तस्येति । वकारस्य लोपविधौ तु अजादेशत्वाभावात् स्थानिवत्त्वं न स्यादिति भावः । तथा च धिनु ति इति स्थिते आह—उप्रत्ययस्येति । धिनुत इति । धिविधातोर्नुमि तसि उप्रत्यये वकारस्य अकारादेशे अतो लोपे तसो ङित्वादुकारस्य न गुणः । धिन्वतीति । धिन्व इत्यस्मात् झिः । झोऽन्तः । उप्रत्ययः । वकारस्य अकारः । अतो लोपः । उकारस्य यणिति भावः । अत्र वकारस्य स्थानिवत्त्वेन आर्द्धधातुकत्वेऽपि नेट् । उकारवृत्यार्द्धधातुकत्वस्य अलधर्मत्वेन अनल्विधाविति निषेधात् । तदिदं 'भोभगो' इति सूत्रभाष्ये स्पष्टम् । धिनोषि । धिनुथः । धिनुथ । धिनोमि । लोपश्च । 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति पूर्वसूत्रोक्त उकारः अस्येत्यनेन परामृश्यते । प्रत्ययशब्दः प्रत्ययसम्बन्धिनि वर्तते । असंयोगपूर्वात् प्रत्ययादिति च उकारे अन्वेति । स च अङ्गस्य विशेषणम् । तदन्तविधिः । तदाह—असंयोगेति । प्रत्ययोकार इति । प्रत्ययसम्बन्धी उकार इत्यर्थः । 'प्रत्यय उकार' इति व्याख्याने तु सुनुवः । सुनुमः इत्यत्र न स्यात्, तत्र श्नोरेव प्रत्ययत्वात् । प्रत्ययेति किम् । युवः । युमः । असंयोगपूर्वादिति किम् । शक्नुवः । शक्नुमः । धिन्वः-धिनुव इति । अत्र उप्रत्ययस्य उकारान्तत्वं व्यपदेशिवत्त्वेन बोध्यम् । नन्वेवं धिनोमीत्यत्र मिपि धिनु मि इति स्थिते उकारस्य लोपः स्यादित्यत आह—मिपि त्विति । दिधिन्व । धिन्विता । धिन्विष्यति । धिनोतु । उतश्च । हेर्लुक्स्यादिति । 'चिणो लु'गित्यतः 'अतो हे'रित्यतश्च तदनुवृत्तेरिति भावः । लोटो मिपि उप्रत्यये वकारस्य अकारे अतो लोपे धिनु मि इति स्थिते मेर्निभावम् आडुत्तमस्येत्याडागमं च बाधित्वा परत्वादुकारस्य 'लोपश्चास्यान्यतरस्याम्' इति लोपमाशङ्क्याह—नित्यत्वादुकारलोपात् पूर्वमाडिति । निभावस्याप्युपलक्षणम् । उकारलोपे कृते अकृते च निभावस्य आडागमस्य च प्रवृत्त्या नित्यत्वादुकारलोपात्पूर्वमेव निभावाडागमयोः कृतयोः

रिणवति । रण्वति । धन्वति । ५९८ कृवि हिंसाकरणयोश्च । चकाराद्गतौ । कृणोतीत्यादि धिनोतिवत् । अयं स्वादौ च । ५९९ मव बन्धने । मवति । मेवतुः । मेवुः । अमवीत्—अमावीत् । ६०० अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अवति । आव । मा भवानवीत् । ६०१ धावु गतिशुद्ध्योः । स्वरितेत् । धावति–धावते । दधाव–दधावे । अथोष्मान्ता आत्मनेपदिनः । ६०२ धुक्ष ६०३ धिक्ष सन्दीपनक्लेशनजीवनेषु । धुक्षते । दुधुक्षे । धिक्षते । दिधिक्षे । ६०४ वृक्ष वरणे । वृक्षते । ववृक्षे । ६०५ शिक्ष विद्योपादाने । शिक्षते । ६०६ भिक्ष भिक्षायामलाभे लाभे च । भिक्षते । ६०७ क्लेश अव्यक्तायां वाचि । बाधने इति दुर्गः । क्लेशते । चिक्लेशे । ६०८ दक्ष वृद्धौ शीघ्रार्थे च । दक्षते । ददक्षे । ६०९ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । ६१० ईक्ष दर्शने । ईक्षाञ्चक्रे । ६११ ईष गतिहिंसादर्शनेषु । ईषाञ्चक्रे । ६१२ भाष व्यक्तायां वाचि । भाषते । ६१३ वर्ष स्नेहने । दन्त्योष्ठ्यादिः । ववर्षे । ६१४ गेषृ अन्विच्छायाम् । ग्लेषृ इत्येके । अन्विच्छा अन्वेषणम् । जिगेषे । ६१५ पेषृ प्रयत्ने । पेषते । ६१६ जेषृ ६१७ णेषृ ६१८ एषृ ६१९ प्रेषृ गतौ । जेषते । नेषते । एषाञ्चक्रे । पिप्रेषे । ६२० रेषृ ६२१ हेषृ ६२२ ह्रेषृ अव्यक्ते शब्दे । आद्यो वृकशब्दे । ततो द्वौ अश्वशब्दे । रेषते । हेषते । ह्रेषते । ६२३ कासृ शब्दकुत्सायाम् । कासाञ्चक्रे । ६२४ भासृ दीप्तौ । बभासे । ६२५ णासृ ६२६ रासृ शब्दे । नासते । प्रणासते । ६२७ णस कौटिल्ये । नसते । ६२८ भ्यस भये । भ्यसते । बभ्यसे । ६२९ आङः शसि इच्छायाम् । आशंसते । आशशंसे । ६३० ग्रसु ६३१

उकारलोपस्याप्रसक्तौ आटः पित्त्वेन ङित्त्वाभावादुकारस्य गुणे अवादेशे च धिनवानीति रूपमिति भावः । अधिनोत् । धिनुयात् । धिन्व्यात् । अधिन्वीत् । अधिन्विष्यत् । कृणोतीत्यादीति । धिविवद्रूपाणीति भावः । अयं स्वादौ चेति । कृविरित्यर्थः । अव रक्षणेति । स्वाम्यर्थः-ऐश्वर्यम् । मा भवानवीदिति । 'नेटी'ति न वृद्धिः । मव्यादयोऽवत्यन्ताः परस्मैपदिनो गताः । धावु गतीति । उदिदयम् । स्वरितेदिति । ततश्च कर्तृगामिनि फले आत्मनेपदम् । अन्यथा परस्मैपदमिति भावः । अथोष्मान्ता इति । तत्र 'धुक्षे' त्यारभ्य कासृधातोः प्राक् षकारान्ताः । तत्र क्लेशधातुरेकः शकारान्तः । दीक्ष मौण्ड्येति । पञ्चार्थाः । णेषृधातुर्णोपदेशः । कासृधातुमारभ्य ईहधातोः प्राक् सकारान्ताः । कासाञ्चक्र इति । कास्प्रत्ययादित्याम् । णासृधातुर्णसधातुश्च णोपदेशः । आङः शसीति । आङः परः शसिधातुरिच्छायामित्यर्थः । ईहेत्यारभ्य काशृधातुवर्जं घुषिकान्तीत्यतः प्राक् हकारान्ताः । काशृधातुस्तु शकारान्तः । ग्लिहधातुरि-

ग्लसु अदने। जग्रसे। जग्लसे। ६३२ ईह चेष्टायाम्। ईहाञ्चक्रे। ६३३ वहि ६३४ महि वृद्धौ। वंहते। ववंहे। मंहते। ६३५ अहि गतौ। अंहते। आनंहे। ६३६ गर्ह ६३७ गल्ह कुत्सायाम्। जगर्हे। जगल्हे। ६३८ बर्ह ६३९ बल्ह प्राधान्ये। ओष्ठ्यादी। ६४० वर्ह ६४१ वल्ह परिभाषणहिंसाच्छादनेषु। दन्त्योष्ठ्यादी। केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः। ६४२ प्लिह गतौ। पिप्लिहे। ६४३ वेहृ ६४४ जेहृ ६४५ बाहृ प्रयत्ने। आद्यो दन्त्योष्ठ्यादिः। अन्त्यः केवलोष्ठ्यादिः। उभावप्योष्ठ्यादी इत्येके। दन्त्योष्ठ्यादी इत्यपरे। जेहतिर्गत्यर्थोऽपि। बबाहे। ६४६ द्राहृ निद्राक्षये। निक्षेपे इत्येके। ६४७ काशृ दीप्तौ। चकाशे। ६४८ ऊह वितर्के। ऊहांचक्रे। ६४९ गाहू विलोडने। गाहते। जगाहे। जगाहिषे-जघाक्षे। जगाहिढ्वे। जगाहिध्वे। जघाढ्वे। गाहिता। २३३५ ढो ढे लोपः ८।३।१३॥ ढस्य लोपः स्यात् ढे परे। गाढा। गाहिष्यते-घाक्ष्यते। गाहिषीष्ट-घाक्षीष्ट। अगाहिष्ट-अगाढ। अघाक्षाताम्। अघाक्षत। अगाढाः। अघाढ्वम्। अघाक्षि।

दुपधः। ऊह वितर्के इति। युक्त्या अर्थनिर्णयो वितर्कः। 'अनुक्तमप्यूहति पण्डितो जनः' इत्यत्र तु अनुदात्तेत्त्वलक्षणात्मनेपदमनित्यमिति बोध्यम्। गाहूधातुरूदित्त्वादिट्। तदाह—जगाहिषे जघाक्षे इति। इडभावे जगाह् से इति स्थिते हो ढः 'एकाचः' इति भष्भावेन गस्य घः, 'षढोः' इति ढस्य कः, सस्य षः। जगाहिढ्वे-जगाहिध्वे इति। इट्पक्षे 'विभाषेटः'। इति ढत्वविकल्पः। इडभावे त्वाह—जघाढ्व इति। जगाह् ध्वे इति स्थिते हस्य ढः, धस्य ष्टुत्वेन ढः, गस्य भष् घकारः, पूर्वस्य ढस्य 'ढो ढे लोपः' इति वक्ष्यमाणो लोपः। ढलोपसूत्रं त्विहैव पठितुं युक्तम्। गाहितेति। इट् पक्षे रूपम्। इडभावे तु गा ह् ता इति स्थिते हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वे, ष्टुत्वेन धस्य ढत्वे, गाढ् ढा इति स्थिते—ढो ढे। ढः इति षष्ठ्यन्तम्। तदाह—इत्येति। ढकारस्येत्यर्थः। इति पूर्वस्य ढकारस्य लोपे 'गाढा' इति रूपम्। ढलोपे ष्टुत्वस्यासिद्धत्वं तु न, तथा सति ढलोपविधिवैयर्थ्यात्। घाक्ष्यते इति। इडभावे हस्य ढः, गस्य भष् घकारः, ढस्य कः, सस्य ष इति भावः। घाक्षीष्टेति। आशीर्लिङि सीयुटि इडभावपक्षे हस्य ढः, गस्य भष् घकारः, ढस्य कः सस्य ष इति भावः। अगाहिष्टेति। सिच इट्, सस्य षः, तकारस्य ष्टुत्वेन टः। इडभावे त्वाह—अगाढेति। अगाह् स् त इति स्थिते सिच इडभावे 'झलो झली'ति लोपः। ढत्वधत्वष्टुत्वढलोपाः। सलोपात्पूर्वं भष्भावस्तु न, भष्भावस्यासिद्धतया 'झलो झली'ति सलोपस्य पूर्वं प्रवृत्तेः। न च कृतेऽपि सलोपे प्रत्ययलक्षणेन सकारपरकत्वात् भष् दुर्वार इति शङ्क्यम्, 'वर्णाश्रये प्रत्ययलक्षणाभावा'दिति भावः। अघाक्षातामिति। इडभावपक्षे ढकषाः। अघाक्षतेति। पूर्ववत्। अगाढा इति। थास् सिच्। इडभावे सलोपः। ढत्वधत्वष्टुत्वढलोपाः। अघाढ्वमिति। ध्वमि इडभावपक्षे सलोपः। ढत्वधत्वष्टुत्वढलोपाः।

६५० गृहू ग्रहणे । गर्हते । जगृहे । 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन' ( वा ५६३ ) जगृहिषे-जघृक्षे । जघृढ्वे । गर्हिता-गर्ढा । गर्हिष्यते-घर्क्ष्यते । गर्हिषीष्ट-घृक्षीष्ट । लुङि अगर्हिष्ट । इडभावे-२३३६ **शल इगुपधादनिटः क्सः** ३।१।४५॥ इगुपधो यः शलन्तस्तस्मादनिटः च्लेः क्सादेशः स्यात् । अघृक्षत । -२३३७ **क्सस्याचि** ७।३।७२॥ अजादौ तङि क्सस्य लोपः स्यात् । 'अलोऽन्त्यस्य' । ( सू ४२ ) अघृक्षाताम् । अघृक्षन्त । ६५१ ग्लह च । ग्लहते । ६५२ घुषि कान्तिकरणे । घुंषते । जुघुषे । केचित् घष इत्यदुपधं पठन्ति ।

ध्वममाश्रित्य ढलोपात्पूर्वं भष्भावः । अघाक्षीति । इडभावे हस्य ढः, भष्भावः, ढस्य कः, सस्य षत्वमिति भावः । अघाक्ष्वहि । अघाक्ष्महि । अगाहिष्यत । अघाक्ष्यत । गृहूधातुः ऊदित् ऋदुपधः । गर्हते इति । लटस्तिपि शपि लघूपधगुणे रपरत्वम् । जगृहे इति । 'असंयोगा'दिति कित्त्वाद्गुणाभावः । न च कित्त्वात् परत्वाद्गुणः शङ्क्यः, 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात् पूर्वविप्रतिषेधेन' इति वार्तिकादिति भावः । ऊदित्त्वादिड्विकल्पं मत्वा आह—जगृहिषे जघृक्षे इति । अभ्यासे उरदत्वं, हलादिःशेषः, जश्त्वम्, इट्, षत्वम् । इडभावे तु ढत्वभष्भावकत्वषत्वानि । ध्वमि जगृहिध्वे इति सिद्धवत्कृत्य इडभावे आह—जघृढ्वे इति । हस्य ढः, भष्भावष्टुत्वढलोपाः । गर्हेति । इडभावे गुणे रपरत्वे ढत्वधत्वष्टुत्वढलोपाः । घर्क्ष्यते इति । गुणः, रपरत्वं हस्य ढः, भष्भावः, ढस्य कः, षत्वम् । घृक्षीष्टेति । आशीर्लिङः सीयुटि इडभावे 'लिङ्सिचा'विति कित्त्वाद्गुणाऽभावे, हस्य ढः, भष्भावः, ढस्य कः, षत्वम् । अगर्हिष्टेति । सिचि इटि गुणे रपरत्वे षत्वे रूपम् । शल इगुपधा । शलन्त इति । 'धातोरेकाचः' इत्यतोऽनुवृत्तधातुविशेषणत्वात्तदन्तविधिरिति भावः । सिचोऽपवादः । क्सादेशः अदन्तः । ककार इत् । अघृक्षतेति । च्लेः क्सः । तस्य कित्त्वाद्दकारस्य न गुणः । हस्य ढः, भष्भावः, ढस्य कः, षत्वमिति भावः । अघृक्ष आताम् इति स्थिते 'आतो ङितः' इति इयादेशे प्राप्ते—क्सस्य । अचीत्यस्याऽङ्गाक्षिप्तप्रत्ययविशेषणत्वात् तदादिविधिः । 'घोर्लोपो लेटि वा' इत्यतः लोप इत्यनुवर्तते । तदाह—अजादावित्यादिना । अलोऽन्त्यस्येति । अन्त्यस्याऽकारस्य लोप इति भावः । वस्तुतस्तु 'लुग्वा दुहदिह' इत्युत्तरसूत्रादात्मनेपदे इत्यपकृष्य तद्विशेषणत्वादचीति तदादिविधिः । तेन दृशेः क्सप्रत्यये 'तादृक्षाः' इत्यादौ नायं लोपः । 'अजादौ तङी'त्येव क्वचित्पाठो दृश्यते । अघृक्षातामिति । अघृक्ष आताम् इति स्थिते क्साकारस्य लोपे अतः परत्वाभावात् 'आतो ङितः' इति इय् नेति भावः । अघृक्षन्तेति । झस्य अजादित्वाभावात्तस्मिन्परे क्सस्य अकारलोपाऽभावादतः परत्वात् 'आत्मनेपदेष्वनतः' इत्यदादेशो न । कृते तु झोऽन्तादेशे क्सस्याकारलोपः पररूपं वा । ग्लह चेति । ग्लह धातुरपि ग्रहणे वर्तत इत्यर्थः । अदुपधोऽयम् । घुषि कान्तीति । उदुपधोऽयम् । इदित्त्वान्नुम् । 'नश्चे'त्यनु-

अथार्हत्यन्ताः परस्मैपदिनः । ६५३ घुषिर् अविशब्दने । विशब्दनं प्रतिज्ञानम्, ततोऽन्यस्मिन्नर्थे इत्येके । शब्दे इत्यन्ये पेठुः । घोषति । जुघोष । घोषिता । इरित्त्वादङ्वा । अघुषत्-अघोषीत् । ६५४ अक्षू व्याप्तौ । **२३३८ अक्षोऽन्यतरस्याम् ३।१।७५॥** अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे । पक्षे शप् । अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति । अक्षति । अक्षतः । अक्षन्ति । आनक्ष । आनक्षिथ-आनष्ठ । अक्षिता-अष्टा । अक्षिष्यति । 'स्कोः' ( सू ३८० ) इति कलोपः । 'षढोः कः सि' ( सू २९५ ) अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्णुयुः । अक्ष्यात् । ऊदित्त्वाद्वेट् । 'नेटि'

---

स्वारः । यत्परकत्वाभावान्न परसवर्णः । तदाह—घुषत इति । सेट्कोऽयम् । अदुपधपक्षे तु घषते । जघषे । ऊष्मान्ता आत्मनेपदिनो गताः ।

अथार्हत्यन्ताः परस्मैपदिन इति । 'ऊष्मान्ता' इति शेषः । तत्र तुस हसेत्यतः प्राक् षान्ताः । घुषिरिति । इर् इत् । प्रतिज्ञानमिति । 'वेदाः प्रमाण' मित्याद्यभ्युपगम इत्यर्थः । ततोऽन्यस्मिन्निति । विशब्दनात् अन्यत् अविशब्दनं तस्मिन्नित्यर्थः । इरित्त्वादङ् वेति । 'इरितो वेत्यनेनेति शेषः । अघुषदिति । अङो ङित्त्वान्न लघूपधगुणः । अघोषीदिति । अङभावपक्षे लघूपधगुणे 'इट ईटि' इति सिज्लोपः । हलन्तलक्षणवृद्धेः 'नेटि' इति निषेधः । अक्षूधातुः ऊदित्त्वाद्वेट्कः । अक्षोऽन्यतरस्याम् । 'अक्ष' इति पञ्चमी । 'स्वादिभ्यः श्नु'रित्यतः श्नुरिति, 'कर्तरि शबि'त्यतः कर्तरीति, 'सार्वधातुके यगि'त्यतः सार्वधातुक इति चानुवर्तते । तदाह—अक्षो वेति । श्नुप्रत्ययस्य शित्त्वं सार्वधातुकत्वार्थम् । तत्फलं तु 'स्वादिभ्यः श्नुः' इत्यत्र वक्ष्यते । अक्ष्णोतीति । तिपि श्नुः तस्य तिपः पित्त्वेन ङित्त्वाऽभावात् 'सार्वधातुके'ति गुणः । णत्वम् । अक्ष्णुत इति । तसः अपित्त्वेन ङित्त्वात् श्नोर्न गुणः । अक्ष्णुवन्तीति । ङित्त्वाद् गुणाऽभावे उवङ् । अक्ष्णोषि । अक्ष्णुथः । अक्ष्णुथ । अक्ष्णोमि । अक्ष्णुवः । अक्ष्णुमः । अक्षतीति । शप्पक्षे रूपम् । आनक्षेति । णलि द्विहलत्वान्नुट् । आनक्षतुः । आनक्षुः । ऊदित्त्वादिट्पक्षे आह-आनक्षिथेति । इडभावे आह-आनष्ठेति । आनक्ष् थ इति स्थिते 'स्कोरि'ति कलोपः । षस्य ष्टुत्वेन ठः । अष्टेति । लुटि तासि इडभावपक्षे 'स्को' रिति कलोपे तकारस्य ष्टुत्वेन टः । अक्ष् स्य तीति स्थिते प्रक्रियां दर्शयति—स्कोरिति कलोपः, षढोः कः सीति । कात्परत्वात् सस्य षत्वं च । अक्ष्णोत्विति । अक्ष्णोतु । अक्ष्णुतात् । अक्ष्णुताम् । अक्ष्णुवन्तु । अक्ष्णुहीति । संयोगपूर्वत्वादुतश्चेति हेलुक् न । हेरपित्त्वेन ङित्त्वात् श्नोर्न गुणः । अक्ष्णुतात् । अक्ष्णुतम् । अक्ष्णुत । अक्ष्णवानीति । आटः पित्त्वेन ङित्त्वाऽभावान्न गुणनिषेधः । गुणे अवादेशः । अक्ष्णवाव । अक्ष्णवाम । शपि तु अक्षतीत्यादि । आक्ष्णोदिति । लङ्स्तिप् श्नोर्गुणः आट् वृद्धिः । आक्ष्णुताम् । आक्ष्णुवन् । आक्ष्णोः । आक्ष्णुतम् । आक्ष्णुत । आक्ष्णवमिति । मिपः अम् । श्नोर्गुणः । अवादेशः ।

( सू २२६८ ) मा भवानक्षीत् । अक्षिष्टाम् । अक्षिषुः । इडभावे तु मा भवानाक्षीत् । आष्टाम् । आक्षुः । ६५५ तक्ष ६५६ त्वक्षू तनूकरणे । २३३९ तनूकरणे तक्षः ३।१।७६॥ श्नुः स्याद्वा शब्विषये । तक्ष्णोति-तक्षति वा काष्ठम् । ततक्षिथ-ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् । वाग्भिः सन्तक्षति । भर्त्सयतीत्यर्थः । ६५७ उक्ष सेचने । उक्षाञ्चकार । ६५८ रक्ष पालने । ६५९ णिक्ष चुम्बने । प्रणिक्षति । ६६० त्रक्ष ६६१ष्ट्रक्ष ६६२ णक्ष गतौ ।

---

आक्ष्णुव । आक्ष्णुम । अक्ष्णुयादिति । विधिलिङि यासुटो ङित्त्वात् श्नोर्न गुणः । अक्ष्णुयुरिति । 'लिङः सलोपः' इति सलोपे 'उस्यपदान्तात्' इति पररूपमिति भावः । अक्ष्णुयाः । अक्ष्णुयातम् । अक्ष्णुयात । अक्ष्णुयाम् । अक्ष्णुयाव । अक्ष्णुयाम । शप्पक्षे अक्षेदित्यादि । अक्ष्यादिति । आशीर्लिङि आर्धधातुकत्वान्न श्नुः, नापि शप् । लुङि सिचि विशेषमाह—ऊदित्त्वाद्वेडिति । तत्र इट्पक्षे आह—नेटीति । हलन्तलक्षणा वृद्धिर्नेत्यर्थः । नच अभैत्सीदित्यादावेकेन हला व्यवधाने हलन्तलक्षणवृद्धेश्चरितार्थत्वादत्र न तत्प्रसक्तिरिति शङ्क्यम्, रञ्जेः अराङ्क्षीदित्यत्र वृद्धिसिद्धये अनेकहल्व्यवधानेऽपि हलन्तलक्षणवृद्धिप्रवृत्तेर्भाष्यादौ प्रपञ्चितत्वादिति भावः । मा भवानक्षीदिति । आटि सति हलन्तलक्षणवृद्धौ सत्यामसत्यां च रूपे भेदाभावात् 'मा भवान्' इत्युपात्तम् । अक्षिष्टाम् । अक्षिषुरिति । अत्रापि'मा' इति सम्बध्यते । इडभावे त्विति । लुङस्तिपि अक्ष् स् ईदिति स्थिते इडभावान्नेटीति निषेधाऽप्रसक्त्या हलन्तलक्षणवृद्धौ'स्कोः' इति कलोपे 'षढोः' इति कत्वे षत्वमिति भावः । अत्र 'नेटि'इति निषेधाभावेन हलन्तलक्षणवृद्धिर्निर्बाधेति स्पष्टयितुमेव 'मा भवान्' इत्यत्राप्युपात्तमिति बोध्यम् । आष्टामिति । अक्ष् स् ताम् इति स्थिते हलन्तलक्षणवृद्धौ 'झलो झलि'ति सिज्लोपे 'स्कोरि'ति ककलोपे तकारस्य ष्टुत्वम् । आक्षुरिति । अक्ष् स् उस् इति स्थिते हलन्तलक्षणवृद्धौ 'स्कोरि'ति कलोपे षस्य कत्वे सस्य षत्वमिति भावः । आक्षीः । आष्टम् । आष्ट । आक्ष्म । आक्ष्व । आक्ष्म । आक्षिष्यत् । आक्ष्यत् । आक्ष्यताम् । आक्ष्यन् । आक्ष्यः । आक्ष्यतम् । आक्ष्यत । आक्ष्यम् । आक्ष्याव । आक्ष्याम । तक्षू त्वक्षू इति । स्थूलस्य काष्ठादेः कतिपयावयवापनयनेन सूक्ष्मीकरणं तनूकरणम् । तनूकरणे । शेषपूरणेन सूत्रं व्याचष्टे—श्नुः स्याद्वा शब्विषये इति । 'स्वादिभ्यः श्नु'रित्यतः श्नुरिति, 'कर्तरि शबि'त्यतः कर्तरीति, सार्वधातुके यगित्यतः सार्वधातुक इति चानुवर्तते । तनूकरणेऽर्थे विद्यमानात् तक्षधातोः श्नुः स्यात्कर्त्रर्थे सार्वधातुके इति फलितम् । न च तक्षूधातोस्तनूकरणार्थकत्वाऽव्यभिचारात् श्नुविधौ तनूकरणग्रहणं व्यर्थमिति वाच्यम्, अत एव धातुपाठे अर्थनिर्देशस्य उपलक्षणत्वावगमात् । तक्ष्णोतीत्यादि । अक्षूवद्रूपाणि । लुङि सिचि इट्पक्षे 'नेटी'ति वृद्धिनिषेधे अतक्षीदिति, इडभावे तु अताक्षीदिति च रूपम् अक्षूवत् । एवं त्वक्षूधातुरपि । णिक्षधातुर्णोपदेशः । प्रणिक्षतीति । 'उपसर्गादस-

अक्षति। स्तक्षति। नक्षति। ६६३ वक्ष रोषे। संघाते इत्येके। ६६४ मृक्ष संघाते। म्रक्ष इत्येके। ६६५ तक्ष त्वचने। त्वचनं संवरणं त्वचो ग्रहणं च। पक्ष परिग्रहे इत्येके। ६६६ सूर्क्ष आदरे। सुसूर्क्ष। अनादरे इति तु क्वाचित्कोऽपपाठः। 'अवज्ञावहेलनमसूर्क्षणम्' इत्यमरः। ६६७ काक्षि ६६८ वाक्षि ६६९ माक्षि काङ्क्षायाम्। ६७० द्राक्षि ६७१ ध्राक्षि ६७२ ध्वाक्षि घोरवाशिते च। ६७३ चूष पाने। चुचूष। ६७४ तूष तुष्टौ। ६७५ पूष वृद्धौ। ६७६ मूष स्तेये। ६७७ लूष ६७८ रूष भूषायाम्। ६७९ शूष प्रसवे। प्रसवोऽभ्यनुज्ञानम्। तालव्योष्मादिः। ६८० यूष हिंसायाम्। ६८१ जूष च। ६८२ भूष अलङ्कारे। भूषति। ६८३ ऊष रुजायाम्। ऊषाञ्चकार। ६८४ ईष उञ्छे। ६८५ कष ६८६ खष ६८७ शिष ६८८ जष ६८९ झष ६९० शष ६९१ वष ६९२ मष ६९३ रुष ६९४ रिष हिंसार्थाः। तृतीयषष्ठौ तालव्योष्मादी। सप्तमो दन्त्योष्ठ्यादिः। चकाष। चखाष। शिशेष। शिशेषिथ। शेष्टा। क्सः अशिक्षत्। अशेक्ष्यत। जेषतुः। जझषतुः। शेषतुः। ववषतुः। मेषतुः। **२३४० तीषसहलुभरुषरिषः** ७।२।४८॥ इच्छत्यादेः परस्य ता-

---

मासेऽपि' इति वाच्यम्। अक्ष धातु गतावित्ति। अयोऽप्यकारमध्यः द्वितीयः षोपदेशः। तदाह—स्तक्षतीति। षस्य सत्वे ष्टुत्वनिवृत्तिरिति भावः। णक्षधातुर्णोपदेशः। सिचि 'नेटी'ति हलन्तलक्षणावृद्धिनिषेधः। वक्ष रोषे इति। दन्त्योष्ठ्यादिः। अयधातुरकारमध्यः। त्वचनशब्दस्य विवरणं—संवरणमिति। सूर्क्षधातुः रेफमध्यः अपपाठत्वे हेतुमाह—अवज्ञेति। सूर्क्षधातोरनादरार्थकत्वे असूर्क्षणमित्यस्य आदरार्थकत्वापत्त्या अमरकोशे अवज्ञापर्यायत्वावगमविरोध इति भावः। घोरवाशिते चेति। चात् काङ्क्षायामपि। घोरवाशितं क्रूरशब्दः। चूषेत्यारभ्य ऊष रुजायामिति यावदूदुपधाः। ईष उञ्छ इति। ईदुपधः। कषेत्यारभ्य दश धातवः। तत्र तृतीयो दशमश्च इदुपधः। शिषधातुरनिट्कः। क्रादिनियमात्थलि वसि मसि च नित्यमिट्, अजन्ताकारवत्त्वाऽभावेन थलि वेट्कत्वाभावात्। शिशेषिथ। शिशिषिव। शिशिषिम। अशिक्षदिति। 'शल इगुपधात्' इति च्लेः क्सादेशे कित्त्वाल्लघूपधगुणनिषेधे षस्य कत्वे सस्य षत्वमिति भावः। ववषतुरिति। 'न शसदद' इति निषेधादेत्त्वाभ्यासलोपौ न। रुषधातुः सेट्कः। रोषति। रुरोष। रुरुषतुः। रुरुपुः। रुरोषिथ। रुरुषथुः। रुरुष। रुरोष। रुरुषिव। रुरुषिम। तीषसह। आर्धधातुकस्येत्यतः इडित्यनुवर्तते। 'स्वरतिसूति' इत्यतो वेति च। तीति सप्तम्युपादानात्तदादिविधिः। इष सह लुभ रुष रिष एषां द्वन्द्वात्पञ्चम्येकवचनम्। तदाह—इच्छत्यादेरिति। इच्छतीति इषेः श्तिपा निर्देशः। इषधातुर्विवक्षितः। 'इषु इच्छायां' तुदादिः शविकरणः। 'इष गतौ' दिवादिः श्यन्विकरणः। 'इष आभीक्ष्ण्ये' क्र्यादिः श्नाविकरणः। तत्र 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' इति वार्ति-

यमयन्' इत्यादि सम्यगेव । उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्य इति नियमात्प्रस्खादयतीत्याह । तस्मात्सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः । इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम् । ८२१ फण गतौ । न इति निवृत्तम् असम्भवात् । निषेधात्पूर्वमसौ न पठितः । फणादिकार्यानुरोधात् । २३५४ फणां च सप्तानाम् ६।४।१२५॥ एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । फेणतुः । फेणुः । पफणतुः । पफणुः । फेणिथ-पफणिथ । फणयति । वृत् । घटादिः समाप्तः । फणेः प्रागेव वृदित्येके । तन्मते फाणयतीत्येव । ८२२ राजृ दीप्तौ । स्वरितेत् । राजति-राजते । रेजतुः-रराजतुः । रेजे-रराजे । अतः इत्यनुवृत्तावपि विधान-

र्गस्य चेत् स्खदेर्मित्त्वं तर्हि अवपरिभ्यां परस्यैव मित्त्वं न तूपसर्गान्तरादिति । एवंच प्रस्खादयतीत्यत्र मित्त्वाभावान्न ह्रस्वः । अवस्खदयति परिस्खदयति इत्यत्र तु मित्त्वाद्ध्रस्व इति फलति । तदाह—उपसृष्टस्येति । सोपसर्गस्येत्यर्थः । पूर्वमते तु अवपरिभ्यां परस्य मित्त्वनिषेधादवस्खादयति परिस्खादयतीति न ह्रस्वः । प्रस्खदयतीत्यत्र तु अवपरिपूर्वकत्वाभावेन मित्त्वनिषेधाऽभावाद्ध्रस्व इति विपरीतम् । तस्मादिति । 'यमोऽपरिवेषणे' 'स्खदिरवपरिभ्यां च' इति सूत्रद्वये उक्तरीत्या मित्त्वनियमविवक्षाश्रयणादुदाहरणप्रत्युदाहरणयोरुक्तरीत्या व्यत्यासः फलित इत्यर्थः । उपेक्ष्यमिति । 'न पादम्याङ्' इति सूत्रव्याख्यावसरे 'यमोऽपरिवेषणे' इति मित्त्वं प्रतिषिध्यत' इति वृत्तिन्यासयोरुक्तत्वादिति भावः । केचित्तु स्वामिमते 'पर्यवसितं नियमय'न्नित्यादिसामञ्जस्यात्तावेवोपेक्ष्याविन्याहुः । फण गताविति । ननु घटादित्वेऽपि नायं मित्, इतः प्राक् 'स्वन अवतंसने,इत्युत्तरमेव 'घटादयो मित' इत्युक्तेः । अतः कथमत्र निषेधः तत्राह—न इति निवृत्तमसम्भवादिति । प्राप्तिं विना मित्त्वस्य निषेधाऽसम्भवादिह नेति नानुवर्तते,किंतु मिदित्येवानुवर्तते इत्यर्थः । ननु फण गतावित्यत्र मिन्नेति यदि नानुवर्तते तर्हि 'न कम्यमिचमाम्' इति निषेधकाण्डात् प्रागेवाऽयं कुतो न पठितः । तत्राह—निषेधात्पूर्वमसौ न पठित इति । कुत इत्यत आह—फणादिकार्यानुरोधादिति । निषेधकाण्डात्प्रागेव फणेः पाठे कम्यमिचमादीनामपि फणादिष्वन्तर्भावः स्यादिति भावः । फणां च । 'अत एकहल्मध्ये' इत्यतो लिटीति 'थलि च सेटि' इति चानुवर्तते । 'द्वसोः' इत्यतः एदिति, 'गमहन-' इत्यतः कितीति, 'वा जॄभ्रमुत्रसाम्' इत्यतो वेति च । तदाह-एषामिति । फणादीनामित्यर्थः । फणामिति बहुवचनात् तदादिलाभः । 'फण गतौ' इत्यत्र मिदित्येवानुवर्तते नेति तु नानुवर्तते इत्यस्य प्रयोजनमाह—फणयतीति । वृदिति । कर्तरि क्विबन्तम् । वृतुधातुरिह समाप्त्यर्थकः । तदाह-घटादिः समाप्त इति । फणेः प्रागेवेति । एवं सति फणेरघटादित्वान्न मित्त्वमिति भावः । तदाह—तन्मते फाणयतीत्येवेति । इति घटादयः । राजृ दीप्ताविति । इत आरभ्य फणामेत्वाभ्यासलोपौ फणादित्वात्पक्षे भवतः । तदाह—रेजतुरित्यादि । ननु 'फणां च सप्तानाम्' इत्यत्र अत

सामर्थ्यादात एत्वम्। ८२३ टु भ्राजृ ८२४ टु भ्राशृ ८२५ टु भ्लाशृ दीप्तौ। अनुदात्तेतः। भ्राजतेरिह पाठः फणादिकार्यार्थः। पूर्वं पाठस्तु भ्रस्जादिषत्वाभावार्थः। तत्र हि राजिसाहचर्यात्फणादेरेव ग्रहणम्। भ्रेजे। बभ्राजे। 'वा भ्राश-' (सू २३२१) इति श्यन् वा। भ्राश्यते—भ्राशते। भ्रेशे-बभ्राशे। भ्लाश्यते-भ्लाशते। भ्लेशे-बभ्लाशे। द्वावपीमौ तालव्यान्तौ। ८२६ स्यमु ८२७ स्वन ८२८ ध्वन शब्दे। स्यमादयः क्षरत्यन्ताः परस्मैपदिनः। स्येमतुः-सस्यमतुः। अस्यमीत्। स्वेनतुः-सस्वनतुः। अस्वनीत्-अस्वानीत्। विष्वणति। अवष्वणति। सशब्दं भुङ्क्त इत्यर्थः। 'वेश्च स्वनः-' (सू २२७८) इति षत्वम्। फणादयो गताः। दध्वनतुः। ८२९ षम ८३० ष्टम अवैक्लव्ये। ससाम। तस्ताम। ८३१ ज्वल दीप्तौ। 'अतो ल्रान्तस्य' (सू २३३०) अज्वालीत्। ८३२ चल कम्पने। ८३३ जल घातने। घातनं तैक्ष्ण्यम्। ८३४ टल ८३५ ट्वल वैक्लव्ये। ८३६ ष्ठल स्थाने। ८३७ हल विलेखने। ८३८ णल गन्धे। बन्धने इत्येके। ८३९ पल गतौ। पलति। ८४० बल प्राणने धान्यावरोधने च। बलति। बेलतुः। बेलुः। ८४१ पुल महत्त्वे। पोलति। ८४२ कुल संस्त्याने बन्धुषु च।

इत्यनुवृत्तेः कथमिह एत्वाभ्यासलोपावित्यत आह—अत इत्यनुवृत्तावपीति। अत इति नानुवर्तते। तदनुवृत्तावपि फणादिसप्तानामपि वचनसामर्थ्यात् राजृधातोराकारस्याप्येत्वाभ्यासलोपस्य विकल्पः स्यादेवेत्यर्थः। अत इति राजादिधातौ न सम्बध्यते, असम्भवादिति यावत्। टु भ्राजृ टु भ्राशृ टु भ्लाशृ दीप्ताविति। टुरित् 'ट्वितोऽथुच्' इत्येतदर्थः। अनुदात्तेत इति। 'एते त्रय' इति शेषः। ननु पूर्वं चवर्गान्तेष्वनुदात्तेत्सु भ्राजतेः पाठात् पुनरपि तस्येह पाठः किमर्थं इत्यत आह—भ्राजतेरिति। तर्हि 'एजृ भ्रेजृ भ्राजृ दीप्तौ' इति भ्राजेः पूर्वं पाठो व्यर्थ इत्यत आह—पूर्वं पाठस्त्विति। षत्वाभावार्थ इति। 'व्रश्चभ्रस्जे'ति षत्वविधौ भ्राजेर्ग्रहणाऽभावार्थं इत्यर्थः। ननु पूर्वं पठितस्यापि षत्वविधौ कुतो न ग्रहणमित्यत आह—तत्र हीति। षत्वविधौ हीत्यर्थः। एत्वाभ्यासलोपयोः पाक्षिकत्वादाह—भ्रेजे बभ्राजे इति। द्वावपीमाविति। द्वितीयतृतीयावित्यर्थः। ननु 'विष्वणती'त्यत्र कथं षत्वम्? केवलदन्त्याऽजन्तसादित्वाऽभावेन अषोपदेशतया आदेशसकारत्वाभावात्, अवष्वणतीत्यत्र इण्कवर्गाभ्यां परत्वाभावाच्च षत्वस्य प्रसक्तिः। 'सात्पदाद्यो'रिति निषेधाच्चेत्यत आह—वेश्च स्वन इतीति। तत्र चकारेण अवाच्चेत्यपि लभ्यत इति भावः। फणादयो गता इति। ध्वनतेः प्रागिति शेषः। तत्तश्च ध्वनेर्न फणादिकार्यमिति भावः। तदाह—दध्वनतुरिति। षम ष्टमेति। षोपदेशौ। तस्तामेति। सत्वे सति ष्टुत्वनिवृत्तिरिति। तैक्ष्ण्यमिति। तीक्ष्णीभवनमित्यर्थः। टल ट्वल वैक्लव्ये इति। वैक्लव्यं भयादिजनितो व्यग्रीभावः। णल गन्धे इति। णोपदेशोऽ-

घोस्यानं संघातः। बन्धुशब्देन तद्व्यापारो गृह्यते। कोलति। चुकोल। ८४३ शल ८४४ हुल ८४५ पत्लृ गतौ। शशाल। जुहोल। पपात। पेततुः। पतिता। २३५५ पतः पुम्। ७।४।१९॥ अङि परे। अपप्तत्। 'नेर्गद-' ( सू २२८५ ) इति णत्वम्। प्रण्यपप्तत्। ८४६ क्वथे निष्पाके। क्वथति। चक्वाथ। अक्वथीत्। ८४७ पथे गतौ। अपथीत्। ८४८ मथे विलोडने। मेथतुः। अमथीत्। ८४९ टुवम् उद्गिरणे। इहैव निपातनात् ऋत इत्त्वमिति सुधाकरः। ववाम। ववमतुः। वादित्वादेत्वाभ्यासलोपौ न। माधवृत्तौ तु वेमतुरित्याद्यप्युदाहृतम्। तद्भाष्यादौ न दृष्टम्। ८५० भ्रमु चलने। 'वा भ्राश-' (सू २३२१) इति श्यन्वा। भ्रम्यति-भ्रमति। 'भ्राम्यति' इति तु दिवादौ वक्ष्यते। २३५६ वा जॄभ्रमुत्रसाम्। ६।४। १२४॥ एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च। भ्रेमतुः। बभ्रमतुः। अभ्रमीत्। ८५१ क्षर सञ्चलने। अक्षारीत्।

अथ द्वावनुदात्तेतौ। ८५२ षह मर्षणे। 'परिनिविभ्यः—'(सू २२७५) इति षत्वम्। परिषहते। सेहे। सहिता। 'तीषसह-' ( सू० २३४० ) इति वा इट्। इडभावे ढत्वधत्वष्टुत्वढलोपाः। २३५७ सहिवहोरोदवर्णस्य ६।३।११२॥

---

यम्। गन्धः-गन्धक्रिया। तद्व्यापार इति। बन्धुतानुकूलो विवाहादिव्यापार इत्यर्थः। पत्लृधातुस्तवर्गप्रथमान्तः सेट्कः। लुङि लृदित्वात् च्लेरङि कृते अपत अ त् इति स्थिते—पतः पुम्। शेषपूरणेन सूत्रं व्याचष्टे—अङि परे इति। 'ऋदृशोऽङि' इत्यतः तदनुवृत्तेरिति भावः। पतेः पुम् स्यादङि परे इति फलितम्। पुमि मकार इत् उच्चारणार्थः। मित्वादन्त्यादचः परः। तदाह—अपप्तदिति। क्वथे निष्पाके इति। जलक्षीरघृतादीनां पादभागादिशोषणपर्यन्तः पाको निष्पाकः। अक्वथीदिति। एदित्वान्न वृद्धिः। एवं अमथीत्। टु वम् उद्गिरणे इति। टुरित्। नायमुदित्। तेन 'उदितो वा' इति क्त्वायामिड्विकल्पो न। 'गॄ निगरणे' इति दीर्घान्तोऽयम्। नन्वस्माद्धातोर्ल्युटि 'ऋत इद्धातोः' इति इत्त्वं बाधित्वा परत्वात् 'सार्वधातुक' इति गुणे सति 'उद्गरण'इत्येव निर्देशो युज्यत इत्यत आह-इहैवेति। उद्गिरण इत्यर्थनिर्देशः पाणिनीय इति सुधाकरो मन्यते। भ्रमु चलने इति। वक्रमार्गसंचारे इत्यर्थः। अयथार्थज्ञानेऽप्ययम्। 'उदितो वे'ति क्त्वायामिड्विकल्पार्थमुदित्त्वम्। वा जॄभ्रमु। 'अत एकहल्मध्ये' इत्यतो लिटि इति 'थलि च सेटि' इति चानुवर्तते। 'ध्वसोरेद्धौ' इत्यतः एदिति 'गमहन' इत्यतः क्ङितीति च। तदाह—एषामिति। अभ्रमीदिति। 'ह्म्यन्ते'ति न वृद्धिः। अक्षारीदिति। 'अतो हलादेर्लघोः' इति वृद्धिः।

षह मर्षणे इति। अपराधे सत्यपि कोपाऽनाविष्करणं मर्षणम्। इडभावे इति। सह् ता इति स्थिते 'हो ढः' इति ढत्वं 'झषस्तथोः' इति तकारस्य धत्वम्। धस्य ष्टुत्वेन

अनयोरवर्णस्य ओत्स्याड्ढलोपे सति। २३५८ सोढः ८।३।११५॥ सोढ्रूपस्य सहेः सस्य षत्वं न स्यात्। परिसोढा। २३५९ सिवादीनां वाड्व्यवायेऽपि ८।३।७१॥ परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि। पर्यषहत। पर्यसहत। ८५३ रमु क्रीडायाम्। रेमे। रेमिषे। रन्ता—रंस्यते। रंसीष्ट। अरंस्त।

अथ कसन्ताः परस्मैपदिनः। ८५४ षद्लृ विशरणगत्यवसादनेषु। २३६० पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छ-पश्यर्च्छधौशीयसीदाः ७।३।७८॥ पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। सीदति। ससाद। सेदतुः। सेदिथ—ससत्थ। सत्ता। सत्स्यति। लृदित्वादङ्। असदत्। 'सदिरप्रतेः'(सू २२७१)। निषीदति। न्यषीदत्। २३६१

ढः। 'ढो ढे लोपः' इति पूर्वस्य ढस्य लोप इत्यर्थः। सढा इति स्थितम्। सहिवहोः। ढलोपे इति। 'ढ्लोप' इत्यतः तदनुवृत्तेरिति भावः। 'रलोप' इति तु नानुवर्तते, असम्भवात्। तथा च सकारादकारस्य ओत्वे सोढेतिरूपम्। 'परिसोढे'त्यत्र 'परिनिविभ्य' इति षत्वे प्राप्ते। सोढः। 'सोढ' इति सहेरोत्वसम्पन्नस्य षष्ठ्यन्तम्। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते। 'न रपर' इत्यतो नेति। 'मूर्धन्य' इत्यधिकृतम्। तदाह—सोढ्रूपस्येत्यादिना। सिवादीनाम्। 'परिनिविभ्यः' इति सूत्रादुत्तरमिदं सूत्रम्। तदाह-परिनिविभ्यः परेषामिति। 'सिवुसहसुट्स्तुस्वञ्जा'मिति शेषः। रमु क्रीडायामिति। नायमुदिदिति माधवः। केचित्तु उदितं मत्वा 'उदितो वा' इति क्त्वायामिड्विकल्पमिच्छन्ति। अनिट्कोऽयम्। लिटि क्रादिनियमादिट्। तदाह—रेमिषे इति।

अथ कसन्ता इति। 'कस गतौ' इत्येतत्पर्यन्ता इत्यर्थः। षद्लृधातुः षोपदेशः अनिट्कश्च। लटि शपि सद् अ ति इति स्थिते—पाघ्राध्मा। पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद् सद् एषां द्वन्द्वात् षष्ठीबहुवचनम्। पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद एषां द्वन्द्वात् प्रथमाबहुवचनम्। यथासङ्ख्यमादेशाः। 'ष्ठिवुक्लमु' इत्यतः शितीत्यनुवर्तते। शकारः इत् यस्य स शित्, तस्मिन् शिति। शू चासौ इच्चेति कर्मधारयः। अङ्गाक्षिप्तप्रत्ययविशेषणत्वात् तदादिविधिः। तदाह—इत्संज्ञकेति। ससादेति। इत्संज्ञकशकारादिप्रत्ययाऽभावान्न सीदादेशः। श् इत् यस्य सः शित्। शितीति बहुव्रीह्याश्रयणे तु पाधातोः कर्मणि लिटि एशि आल्लोपे 'पपे' इत्यत्रापि पिबादेशः स्यादिति बोध्यम्। थलि क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति निषेधेऽपि भारद्वाजनियमादिट्। तत्र इट्पक्षे 'थलि च सेटी'त्येत्वाभ्यासलोपौ। तदाह—सेदिथ। ससत्थेति। सेदिव, सेदिम। क्रादिनियमादिट्। न्यषीददिति। 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्।

सदेः परस्य लिटि ८।३।११८॥ सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि । निषसाद । निषेदतुः । ८५५ शद्लृ शातने । विशीर्णतायामयम् । शातनं तु विषयतया निर्दिश्यते । २३६२ शदेः शितः १।३।६०॥ शिद्भाविनोऽस्मादात्मनेपदं स्यात् । शीयते । शशाद । शेदतुः । शेदिथ-शशत्थ । शत्ता । अशदत् । ८५६ क्रुश आह्वाने रोदने च । क्रोशति । क्रोष्टा । २क्षोः क्सः । अक्रुक्षत् । ८५७ कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कोचति । चुकोच । ८५८ बुध अवगमने । बोधति । बोधिता । बोधिष्यति । ८५९ रुह बीजजन्मनि प्रादुर्भावे च । रोहति ।

'निषसादे'त्यत्र अभ्यासात् परस्य 'स्थादिष्वभ्यासेन' इति षत्वे प्राप्ते—सदेः परस्य । 'न रपर' इत्यतः नेत्यनुवर्तते । 'मूर्धन्य' इत्यधिकृतम् । सदेरित्यवयवषष्ठी । परशब्द उत्तरखण्डपरः । सदेरुत्तरखण्डस्य षत्वं नेति लभ्यते । फलितमाह—सदेरभ्यासात्परस्येति । शद्लृ शातने इति । ननु शद्धातोरस्मात् हेतुमण्ण्यन्तात् ल्युटि 'शदेरगतौ तः' इति दकारस्य तकारे शातनशब्दः। तथा च शातनं शीर्णतानुकूलक्रियेति फलति । एवं च सकर्मकत्वापत्तौ विशीर्यतीत्यर्थे शीयत इति वक्ष्यमाणमुदाहरणं कथमित्यत आह-विशीर्णतायामिति । विशरणे इत्यर्थः । तर्हि कथं शातनमिति हेतुमण्णिजित्यत आह—शातनं तु विषयतयेति । विपूर्वात् 'षिञ् बन्धने' इत्यस्मात् विषयशब्दः । अविनाभावेनेत्यर्थः । प्रयोजकव्यापारं विना विशरणस्याऽसम्भवात् शातननिर्देशः । ण्यर्थस्याऽविवक्षितत्वात् विशरणमेव शद्लृधात्वर्थं इति यावत् । शदेः शितः । 'अनुदात्तङितः' इत्यस्मादात्मनेपदमित्यनुवर्तते । श् इत् यस्य सः शित् । शप् विवक्षितः । शिति विवक्षिते सतीत्यर्थः, तिङुत्पत्तेः पूर्वं सार्वधातुकाभावेन शपोऽसम्भवात् । तदाह-शिद्भाविन इति । शित् भावी भविष्यन् यस्मात्स शिद्भावी तस्मादित्यर्थः । शीयते इति । शपि शदेः शीयादेशः । विशीर्यतीत्यर्थः । शीयेते शीयन्ते इत्यादि: । शिद्विषयादित्युक्तेर्लिटि नात्मनेपदम् । 'इत्पञ्चकशकारादा'वित्युक्तेर्न शीयादेशः । तदाह—शशादेति । अनिट्कोऽयम् । क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति निषेधात्थलि भारद्वाजनियमात् वेट् । तदाह—शेदिथ शशत्थेति च । इट्पक्षे 'थलि च सेटि' इत्येत्वाभ्यासलोपाविति भावः । शेदिव । शेदिम । क्रादिनियमादिट् । अशददिति । ऌदित्वादङिति भावः । क्रुशधातुरनिट्कः । चुक्रोशिथ । क्रादिनियमात्थलि नित्यमिट् । अजन्ताऽकारवत्त्वाभावान्न भारद्वाजनियमः । चुक्रुशिव । चुक्रुशिम । क्रोष्टेति । व्रश्चादिना शस्य षत्वे ष्टुत्वेन तकारस्य टः । २क्षोः क्सः इति । इगुपधशलन्तत्वादिति भावः । अक्रुक्षदिति । व्रश्चादिना शस्य षः । 'षढोः' इति षस्य कः, सस्य षत्वम् । क्त्वात्र गुणः । कुच सम्पर्चनेति । 'कुच शब्दे' इति पठितस्य पुनरिह पाठः सम्पर्चनादावेव ज्वलादिकार्यणप्रत्ययार्थः । अर्थनिर्देशः क्वचित्राचिनीय इति भूषायां प्रपञ्चितम् । बुध अवगमने इति । सेट्कोऽयम्, अनिट्सु श्यन्विकरणस्यैव बुधेर्ग्रहणात् । तदाह—बोधितेति ।

करोह । करोहिथ । रोढा । रोढ्यति । अरुक्षत् । ८६० कस गतौ । अकासीत्-अकसीत् । वृत् । ज्वलादिगणः समाप्तः ।

अथ गूहत्यन्ताः स्वरितेतः । ८६१ हिक्क अव्यक्ते शब्दे । हिक्कति—हिक्कते । ८६२ अञ्चु गतौ याचने च । अञ्चति—अञ्चते । अचु इत्येके । अचि इत्यपरे । ८६३ टु याचृ याञ्चायाम् । याचति-याचते । ८६४ रेटृ परिभाषणे । रेटति । रेटते । ८६५ चते ८६६ चदे याचने । चचात—चेते । अचतीत् । चचाद-चेदे । अचदीत् । ८६७ प्रोथृ पर्याप्तौ । पुप्रोथ । पुप्रोथे । ८६८ मिदृ ८६९ मेदृ मेधाहिंसनयोः । मिमेद—मिमिदे । थान्ताविमौ इति स्वामी । मिमेथ । धान्तौ इति न्यासः । ८७० मेधृ सङ्गमे च । मेधति । मिमेधे । ८७१ णिदृ ८७२ णेदृ कुत्सासन्निकर्षयोः । निनेद । निनिदतुः । निनिदे । निनेदे । ८७३ शृधु ८७४ मृधु उन्दने । उन्दनं क्लेदनम् । शर्धति-शर्धते । शर्धिता । मर्धति-मर्धते । ८७५ बुधिर् अवबोधने । बोधति— बोधते । इरित्त्वादङ्वा । अबुधत्— अबोधीत्—अबोधिष्ट । 'दीपजन—' ( सू २३२८ ) इति चिण्तु न भवति । पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात् । ८७६ उ बुन्दिर् निशामने । निशामनं ज्ञानम् । बुबुन्दे । अबुदत्—अबुन्दीत् । ८७७ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ।

---

अबोधीत् । रुहधातुरनिट्कः । क्रादिनियमात्थल्यपि नित्यमिट् । अजन्ताऽकारवत्त्वाऽभावात् न भारद्वाजनियमः । रोढेति । लुटि तासि गुणे ढत्वधत्वष्टुत्वढलोपाः । रोढ्यतीति । लृटि स्ये ढकषाः । अरुक्षदिति । इगुपधशलन्तत्वात् क्से ढकषाः क्त्त्वाच्च गुणः । वृदिति । 'ज्वलितिकसन्तेभ्यः' इति उत्तराऽवधेरपि कसंग्रहणादेव सिद्धेः इहकरणं स्पष्टार्थमित्याहुः । इति ज्वलादयः ।

गूहत्यन्ता इति । 'गुहू संवरणे' इत्येतत्पर्यन्ता इत्यर्थः । चते चदे याचने । अचतीदिति । एदित्त्वान्न वृद्धिः । एवमचदीत् । बुधिर् अवबोधने इति । 'बुध अवगमने' इति केवलपरस्मैपदी गतः स तु ज्वलादिकार्यार्थः । अयं तु इरित् स्वरितेत् । अनिट्सु श्यन्विकरणस्यैव पाठादयं सेट् । अबुधदिति । इर इत्त्वेऽपि तदवयवस्य इकारस्य प्रत्येकमित्त्वाभावान्न नुम् । स्वरितेत्त्वप्रयुक्तमात्मनेपदं तु भवत्येव, स्वरितेत्सु पाठसामर्थ्यात्, वस्तुतस्तु इकारस्य प्रत्येकमित्त्वेऽपि न नुम्, 'इदितो नुम्' इत्यत्र कर्मधारयमाश्रित्य इत्संज्ञकेकारान्तस्यैव नुम्विधेः । पूर्वोत्तरेति । जनपूरिसाहचर्येणेत्यर्थः । उ बुन्दिरिति । आद्य उकार इत् 'उदितो वे'ति क्त्वायामिड्विकल्पार्थः । अबुददिति । इरित्त्वादङि 'अनिदिताम्' इति नलोपः । इर इकारस्य प्रत्येकमित्संज्ञाविरहात्, 'अनिदिताम्' इत्यस्य इत्संज्ञकेकारान्तभिन्नानामित्यर्थाश्रयणाच्चेति शब्देन्दुशेखरे स्थितम् । वेणृ गतीति । वाद्यमानस्य वादनार्थं ग्रहणं वादित्रग्रहणम् । खनुधातुरुदित् ।

वेणति-वेणते । नान्तोऽप्ययम् । ८७८ खनु अवदारणे । खनति-खनते । २३६३ **गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८॥** एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । चख्नतुः । 'ये विभाषा' ( सू २३१९ ) । खायात्-खन्यात् । ८७९ चीवृ आदानसंवरणयोः । चिचीव-चिचीवे । ८८० चायृ पूजानिशामनयोः । ८८१ व्यय गतौ । अव्ययीत् । ८८२ दाशृ दाने । ददाश—ददाशे । ८८३ भेषृ भये । गतौ इत्येके । भेषति-भेषते । ८८४ भ्रेषृ ८८५ भ्लेषृ गतौ । ८८६ अस गतिदीप्त्यादानेषु । असति-असते । आस-आसे । अयं षान्तोऽपि । ८८७ स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रथनम् । स्पशति—स्पशते । ८८८ लष कान्तौ । 'वा भ्राश—' ( सू २३२१ ) इति श्यन्वा । लष्यति—लषति । लेषे । ८८९ चष भक्षणे । ८९० छष हिंसायाम् । चच्छषतुः । चच्छषे । ८९१ झष आदानसंवरणयोः । ८९२ भ्रक्ष ८९३ भ्लक्ष अदने । भक्ष इति मैत्रेयः । ८९४ दासृ दाने । ८९५ माहृ माने । ८९६ गुहू संवरणे । २३६४ **ऊदुपधाया गोहः ६।४।८९ ॥** गुह उपधाया ऊत्स्याद्गुणहेतावजादौ प्रत्यये । गूहति—गूहते । ऊदित्त्वादिड्वा । गूहिता—गोढा । गूहिष्यति—घोक्ष्यति । गूहेत् । गुह्यात् ।

---

क्त्वायामिड्विकल्पः । गमहन । उपधाया इति । 'ऊदुपधायाः' इत्यतः तदनुवृत्तेरिति भावः । अजादाविति । 'अचि श्नुधात्रि' इत्यतः अनुवृत्तस्य अचि इत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणतया तदादिविधिलाभ इति भावः । क्ङितीत्युक्तेः चखानेत्यत्र नोपधालोपः । अनङीति किम् । अगमत् । चख्ने । चख्नाते इत्यादि । व्यय गताविति । अयं वित्तत्यागेऽपि, अर्थनिर्देशस्योपलक्षणत्वात् । अव्ययीदिति । ह्म्यन्तेति न वृद्धिः । चष भक्षणे इति । चचाष, चेषतुः । छष हिंसायामिति । वैरूप्यसम्पादकादेशादित्वादेत्वाभ्यासलोपौ न । तदाह—चच्छषतुः इति । गुहू संवरणे इति । ह्रदुपधोऽयम् । ऊदित् । ऊदुपधायाः । 'गोह' इति कृतलघूपधगुणस्य गुहेर्निर्देशः । ततश्च गुणविषय एवेदं भवति । अचि श्नुधात्वित्यतः अनुवृत्तस्य अचीत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिः । तदाह—गुह उपधाया इत्यादिना । गुणहेताविति । गुणं प्रति परनिमित्तभूत इत्यर्थः । गुणापवादः । जुगूह । गुणहेतावविति किम् । जुगुहतुः । जुगुहुः । जुगुहे । जुगुहाते । जुगुहिरे । जुगूहिथ-जुगोढ । ढत्वधत्वष्टुत्वढलोपाः । जुगुहथुः । जुगुह । जुगुहिषे-जुघुक्षे । ढत्वभष्भावकत्वषत्वानि । जुगुहाथे । जुगुहिध्वे—जुघुढ्वे । जुगूह । जुगुहिव-जुगुह्व । जुगुहिम-जुगुह्म । जुगुहे । जुगुहिवहे-जुगुह्वहे । जुगुहिमहे-जुगुह्महे । इति लिटि रूपाणि सिद्धवत्कृत्य लुटि इट्पक्षे ऊत्वे रूपमाह-गूहितेति । इडभावे अजादिप्रत्ययाऽभावात् ऊत्वाऽभावे गुणे ढत्वधत्वष्टुत्वढलोपेषु रूपमाह—गोढेति । लृटि स्ये इट्पक्षे ऊत्वे रूपमाह—गूहिष्यतीति । इडभावे तु गुणढत्वभष्भावकत्वषत्वेषु रूप-

अगूहीत् । इडभावे क्सः । अघुक्षत् । २३६५ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७।३।७३॥ एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ-अघुक्षत । 'क्सस्याचि' ( सू २३३७ ) इत्यन्त्यलोपः । अघुक्षाताम् । अघुक्षन्त । अगुह्वहि-अघुक्षावहि । अघुक्षामहि ।

अथाजन्ता उभयपदिनः । ८९७ श्रिञ् सेवायाम् । श्रयति—श्रयते । शिश्रियतुः । श्रयिता । 'णिश्रि—' ( सू २३१२ ) इति चङ् । अशिश्रियत् । ८९८ भृञ् भरणे । भरति । बभार । बभ्रतुः । बभर्थ । बभृव । बभृषे । भर्ता । २३६६

माह—घोक्ष्यतीति । गूहिष्यते, घोक्ष्यते इत्यप्युदाहार्यम् । गूहतु । गूहताम् । अगूहत् । अगूहत । गूहेदिति । 'गूहेत'इत्यपि ज्ञेयम् । गुह्यादिति । आशीर्लिङि अजादिप्रत्ययाऽभावादूत्वं न । कित्त्वान्न गुणः । लुङि इट्पक्षे सिज्लोपे ऊत्वे रूपमाह—अगूहीदिति । अगूहिष्टाम् । अगूहिषुरित्यादि । इडभावे क्सः इति । इगुपधशलन्तत्वादिति भावः । अघुक्षदिति । ढत्वभष्भावकत्वषत्वानि । अघुक्षताम् । अघुक्षन्नित्यादि । लुङस्तङि विशेषमाह—लुग्वा दुह । दन्त्ये तङीति । दन्त्यादौ तङीत्यर्थः । प्रत्ययाऽदर्शनत्वात्सर्वादेशोऽयं लुक् । अगूढेति । अगुह् स त इति स्थिते क्सस्य कित्त्वेन गुणहेतुत्वाभावादजादित्वाभावाच्च ऊत्वाभावे क्सलुकि अगुह् त इति स्थिते प्रक्रियां दर्शयति—ढत्वधत्वष्टुत्वढलोपदीर्घा इति । अघुक्षतेति । क्सलुगभावे ढत्वभष्भावकत्वषत्वानीति भावः । अघुक्षातामिति । च्लेः क्सादेशे कमस्य कित्त्वेन गुणहेतुत्वाभावादूत्वाभावे ढत्वभष्भावकत्वषत्वेषु कृतेषु 'क्सस्याची'त्यन्त्यलोपे अतः परत्वाभावादातो ङित इति न भवतीति भावः । अघुक्षन्तेति । अस्य अजादित्वाभावात्तस्मिन्परे क्सस्य अन्त्यलोपाभावादतः परत्वाऽभावात् "आत्मनेपदेष्वनत" इत्यदादेशो न भवति। कृते तु झोऽन्तादेशे क्सस्याऽन्त्यलोप इति भावः । अघुक्षथाः । अघुक्षाथाम् । अघुक्षध्वम् । अघुक्षि । इति रूपाणि सिद्धवत् कृत्याह—अगुह्वहीति । दन्त्यादिप्रत्ययपरत्वात् क्सस्य लुकि अजादिप्रत्ययाभावात् ऊत्वाभावे रूपम् । अघुक्षावहीति । क्सलुगभावे ढत्वभष्भावकत्वषत्वानि । अतो दीर्घश्च । अघुक्षामहीति । दन्त्यादिप्रत्ययपरत्वाऽभावान्न क्सलुक् इति गुहत्यन्ताः स्वरितेतः ।

उभयपदिन इति । ञित्त्वादिति भावः । श्रिञ् धातुः सेट् । शिश्रियतुरिति । कित्त्वान्न गुणः । इयङ् । शिश्रियुः । शिश्रयिथ । शिश्रियथुः । शिश्रिय । शिश्राय—शिश्रय । शिश्रियिव । शिश्रियिम । शिश्रिये । शिश्रियाते । शिश्रियिरे । शिश्रियिषे । शिश्रियाथे । शिश्रियिढ्वे—शिश्रियिध्वे । शिश्रिये । शिश्रियिवहे । शिश्रियिमहे । श्रयितेति । श्रयिष्यति । श्रयिष्यते । श्रयतु । श्रयताम् । अश्रयत् । अश्रयत । श्रयेत् । श्रयेत । श्रीयात् । श्रयिषीष्ट । लुङि विशेषमाह— णिश्रीति । अशिश्रियदिति । चङीति द्वित्वम् । अशिश्रियत । अश्रयिष्यत्-अश्रयिष्यत । भृञ् धातुरनिट् । भरतीति । भरते इत्यपि

ऋद्धनोः स्ये ७।२।७०॥ ऋतो हन्तेश्च स्यस्य इट् स्यात् । भरिष्यति । २३६७ रिङ् शयग्लिङ्क्षु ७।४।२८॥ शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न । भ्रियात् । २३६८ उश्च १।२।१२॥ ऋवर्णात्परौ झलादी लिङ्सिचावात्मनेपदेषु कितौ स्तः । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः । २३६९ ह्रस्वादङ्गात् ८।२।२७॥ सिचो लोपः स्याज्झलि । अभृत । अभृषाताम् । अभरिष्यत् । ८९९ हृञ् हरणे ।

जयम् । बभर्तुरिति । कित्त्वान्न गुणः । यण् । बभ्रुः । थलादौ 'एकाच' इति नेट्, कृसृभृवृस्तुद्रुस्रुश्रुषु लिट्यपि तन्निषेधस्य प्रवृत्तेः । थलि 'अचस्तास्व'दिति निषेधाच्च, ऋदन्तेषु भारद्वाजमतेऽपि थलि निषेधाच्च । तदाह—बभर्थेति । बभ्रथुः । बभ्र । बभार-बभर । इति सिद्धवत्कृत्याह—बभृवेति । बभृम । बभ्रे । बभ्राते । बभ्रिरे । इति सिद्धवत्कृत्याह—बभृषे इति । बभ्राथे । बभृढ्वे । बभ्रे । बभृवहे । बभृमहे । लृटि स्ये इण्निषेधे प्राप्ते—ऋद्धनोः । ऋत् हन् अनयोर्द्वन्द्वात् पञ्चम्यर्थे षष्ठी । 'स्ये' इति षष्ठ्यर्थे सप्तमी । 'आर्द्धधातुकस्ये'डित्यतः इडित्यनुवर्तते । तदाह—ऋत इत्यादिना । 'एकाच' इति इण्निषेधस्यापवादः । भरिष्यतीति । भरिष्यते । भरतु । भरताम् । अभरत् । अभरत । भरेत् । भरेत । आशीर्लिङि परस्मैपदे भृ यात् इति स्थिते—रिङ् शय । श यक् लिङ् एषां द्वन्द्वात्सप्तमीबहुवचनम् । 'अयङ् यि क्ङिती'त्यतो यीति सप्तम्यन्तमनुवृत्तं लिङो विशेषणम् । तदादिविधिः । शे तु यीति नान्वेति, असम्भवात् । नापि यकि, अव्यभिचारात् । अत एव 'अकृत्सार्वधातुकयो'रित्यनुवृत्तमपि लिङ एव विशेषणम् । तदाह—शे यकीत्यादिना ऋत इति । 'रीङृत' इत्यतः तदनुवृत्तेरिति भावः । अङ्गस्येत्यधिकृतम् । 'ऋत' इति तद्विशेषणम् । तदन्तविधिः । ऋदन्तस्याऽङ्गस्येति लभ्यते । आदेशे ङकार इत् । ङित्त्वात् अन्तादेशः । निर्दिश्यमानपरिभाषयैव सिद्धे ङकारोच्चारणम्, इडागमेनैव सिद्धे रेफोच्चारणं च स्पष्टार्थम् । ननु भ्रियादिति वक्ष्यमाणमुदाहरणमयुक्तम्, कृते रिङि 'अकृत्सार्वधातुकयो'रिति दीर्घप्रसङ्गादित्यत आह—रीङि प्रकृते इति । कृते रिङि यदि दीर्घः स्यात्तर्हि रिङ्विधिर्व्यर्थः स्यात्, 'रीङृत' इत्येव सिद्धेः । अतो रिङि कृते सति न दीर्घ इत्यर्थः । भ्रियादिति । भ्रियास्तामित्यादि सुगमम् । आशीर्लिङि भृषीष्टेत्यत्र गुणे प्राप्ते—उश्च । 'लिङ्सिचावात्मनेपदेषु' इति सूत्रमनुवर्तते । 'इको झल्' इत्यतो झलिति च । तदाह—ऋवर्णादिति । भृषीष्टेति । कित्त्वान्न गुणः । अभार्षीदिति । परस्मैपदे सिचि वृद्धौ रपरत्वम् । तङि तु अभृ स् त इति स्थिते—ह्रस्वादङ्गात् । ह्रस्वान्तादित्यर्थः । सिच इति भाष्यम् । 'झलो झलि' इत्यतो झलीति, 'संयोगान्तस्य लोपः' इत्यतो लोप इति चानुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—सिचो लोपः स्याज्झलीति । ह्रस्वात्किम् । अच्योष्ट । अङ्गात्किम् । अलाविष्टाम् । सिचः किम् । हिष्टराम् । हिष्टमाम् । पुत्रन्वा·

हरणं प्रापणं स्वीकारः स्तेयं नाशनं च । जहर्थ । जह्रिव । जह्रिषे । हर्ता । हरिष्यति । ९०० धृञ् धारणे । धरति । अधार्षीत् । अधृत । ९०१ णीञ् प्रापणे । निनयिथ-निनेथ । निन्यिषे ।

अथाजन्ताः परस्मैपदिनः । ९०२ धेट् पाने । धयति । २३७० आदेच उपदेशेऽशिति ६।१।४५॥ उपदेशे एजन्तस्य धातोरात्वं स्यान्न तु शिति ।

---

स्तरसमपौ । अभृतेति । 'उश्च' इति सिचः कित्त्वान्न गुणः । 'झलो झलि' इत्युक्तेः अभृषाताम्, अभृषतेत्यत्र न सिज्लोपः । अनतः परत्वात् झस्य अदादेशः । अभृथाः । अभृषाथाम् । अभृढ्वम् । अभृषि । अभृष्वहि । अभृष्महि । हृधातुरनिट् । हरणं चतुर्विधमित्याह—प्रापणमित्यादि । तद्यथा—भारं हरति, प्रापयतीत्यर्थः । अंशं हरति, स्वीकरोतीत्यर्थः । परस्वं हरति, चोरयतीत्यर्थः । पापं हरति हरते वा । नाशयतीत्यर्थः । जहार । जह्रतुः । जह्रुः । 'एकाचः' इति इण्निषेधस्य क्रादिष्वेव लिटि नियमितत्वादिह थलि इटि प्राप्ते 'अचस्तास्वत्' इति तन्निषेधः । ऋदन्तत्वेन भारद्वाजमतेऽपि इण्निषेध एव । तदाह—जहर्थेति । जह्रथुः । जह्र । जहार-जहर । इति सिद्धवत्कृत्याह—जह्रिवेति । क्रादिनियमादिट् । जह्रिम । जह्रिषे । क्रादिनियमादिट् । जह्राथे । जह्रिढ्वे—जह्रिध्वे । जह्रे । जह्रिवहे । जह्रिमहे । लुङादिषु भृञ इव रूपाणि । धृञ् धातुरनिट् । हृञ इव रूपाणि । णीञ् धातुरनिट् णोपदेशः । नयति-नयते । निनाय । निन्यतुः । निन्युः । क्रादिनियमाल्लिटि इट् । थलि तु 'अचस्तास्वत्' इति इण्निषेधस्य भारद्वाजनियमादिड्विकल्प इत्यभिप्रेत्याह—निनयिथ निनेथेति । निन्यिषे । निन्याथे । निन्यिढ्वे—निन्यिध्वे । निन्ये । निन्यिवहे । निन्यिमहे । नेता । नेष्यति । नेष्यते । नयतु । नयताम् । अनयत् । अनयत । नयेत् । नयेत । नीयात् । नेषीष्ट । अनैषीत् । अनेष्ट । अनेष्यत् । अनेष्यत । इत्यजन्ता उभयपदिनो गताः ।

परस्मैपदिन इति । 'जि क्षि अभिभवे' इत्येतत्पर्यन्ता' इति शेषः । धेट् पाने इति । 'स्तनंधयी'त्यादौ ङीबर्थं टित्त्वम् अवयवे टित्त्वस्य व्यर्थतया समुदायार्थत्वादिति हरदत्तः । आदेचः । एजन्तस्य धातोरिति । 'लिटि धातोः' इत्यतः धातोरित्यनुवृत्तं एचा विशेष्यते, तदन्तविधिरिति भावः । न तु शितीति । श् चासौ इच्चेति कर्मधारयात्सप्तमी, प्रत्ययविशेषणत्वात्तदादिविधिः, इत्संज्ञकशकारादौ प्रत्यये परे इति लभ्यते । 'ह्वयति च' 'न व्यो लिटि' इत्यादिपूर्वोत्तरसूत्राणां प्रत्ययेष्वेव प्रवृत्त्या प्रत्यये इति विशेष्यलाभः । 'अशिती'ति न पर्युदासः । तथा सति भिन्नमिन्ने 'प्रत्यये' परे इत्यर्थः स्यात् । ततश्च 'सुग्लः' इत्यत्र ग्लैधातोः 'आतश्चोपसर्गे' इति कप्रत्ययो न स्यात्, कप्रत्ययनिमित्तमात्त्वम्, आदन्तात्प्रत्यय इत्यन्योन्याश्रयात् । 'शिति नेति' प्रसज्यप्रतिषेधे तु आत्वस्य अनैमित्तिकतया कप्रत्ययनिमित्तकत्वाऽभावात् प्रथममात्वे कृते कप्रत्यय. सूपपादः । शितीति बहुव्रीह्याश्रयणे ग्लैधातोर्भावे लिटि 'भावकर्मणोः' इति

२३७१ आत औ णलः ७।१।३४॥ आदन्ताद्धातोर्णल औकारादेशः स्यात् । दधौ । २३७२ आतो लोप इटि च ६।४।६४॥ अजाद्योरार्धधातुकयोःक्ङिदिटोः परयोरातो लोपः स्यात् । द्वित्वात्परत्वाल्लोपे प्राप्ते 'द्विर्वचनेऽचि' (सू २२४३) इति निषेधः । द्वित्वे कृते आलोपः । दधतुः । दधुः । दधिथ-दधाथ । दधिव । दधिम । धाता । २३७३ दाधा घ्वदाप् १।१।२० ॥ दारूपा धारूपाश्च धातवो

---

तङि एशि आत्वे आतो लोपे 'जग्ले' इति न सिध्येत्, एशः शित्वेन तस्मिन्परे आत्वस्य निषेधात् । अतः कर्मधारयमाश्रित्य इत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थं आश्रितः । एवं च पर्युदासेऽपि न क्षतिः । इत्संज्ञकशकाराद्भिन्नप्रत्यये विवक्षिते इत्याश्रयणेन सुग्लः इत्यत्र कप्रत्ययात्प्रागेव आत्वोपपत्तेः । उपदेशे किम् ? चेता, स्तोता । धातोः किम् ? गोभ्याम् । 'गमेर्डोः' इति डोप्रत्ययोपदेशात् उपदेशे यः एच् तदन्तत्वात् गो इत्यस्य प्राप्तिः । न च मेङादीनामुपदेशे एजन्तत्वाभावात् कथमात्वमिति न शङ्क्यम्, 'उदीचां माङः' इति निर्देशेन 'नानुबन्धकृतमनेजन्तत्वम्' इति ज्ञापनादित्यास्तां तावत् । तथा च प्रकृते लिटि द्वित्वादौ दधा अ इति स्थिते—आत औ । औ इति लुप्तप्रथमाकम् । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । 'आत' इति तद्विशेषणम् । तदन्तविधिः । तदाह—आदन्ताद्धातोरिति । णल् प्रकृतिश्च धातुरेवेति धातुग्रहणम् । तथाच णल औत्वे वृद्धौ रूपमाह—दधाविति । दधा अतुसिति स्थिते —आतो लोपः । 'आर्धधातुके' इत्यधिकृतम् । 'दीङो युडचि' इत्यतः अचि क्ङितीति चानुवर्तते । अचीत्यार्द्धधातुकविशेषणत्वात्तदादिविधिः । क्ङिति अजाद्यार्द्धधातुके इटि च आतो लोप इति लभ्यते । फलितमाह—अजाद्योरिति । इटः आर्द्धधातुकत्व तु तदवयवत्वाद्बोध्यम् । क्ङितीति च इटो न विशेषणम्, इड्ग्रहणसामर्थ्यात् । इडित्यनेन उत्तमपुरुषैकवचनम् इडागमश्च गृह्यते । अजाद्योः किम् ? ग्लैधातोः कर्मणि लटि यकि ग्लायते । आर्धधातुकयोः किम् ? यान्ति वान्ति । दधौ इत्यत्र तु क्ङित्त्वाभावान्नाल्लोपः । सति तस्मिन् औत्वं न स्यात् । ननु धा अतुस् इति स्थिते द्वित्वात्परत्वादाल्लोपे सति एकाच्त्वाभावात् द्वित्वं न स्यादित्याशङ्क्य परिहरति—द्वित्वादित्यादिना । धेट्धातुरनिट् । भारद्वाजनियमात् थलि वेडित्याह—दधिथ दधाथेति । इट्पक्षे आल्लोपः । दधथुः । दध । दधौ । इति सिद्धवत्कृत्याह-दधिवेति । वसि आत्त्वे क्रादिनियमादिटि आल्लोप इति भावः । दधिमेत्यपि एवं ज्ञेयम् । धातेति । लुटि आत्वे तासादि इति भावः । धास्यति । धयतु । अधयत् । धयेत् । आशीर्लिङि घुसंज्ञाकार्यं वक्ष्यन् घुसंज्ञां दर्शयति—दाधा घ्वदाप् । 'दे'इत्यनेन स्वाभाविकाऽऽकारान्तयोः 'डु दाञ् दाने' 'दाण् दाने' इत्यनयोः कृतात्त्वयोः 'दो अवखण्डने' 'देङ् रक्षणे' इत्यनयोःश्चाक्षणिकयोश्च, 'धे'इत्यनेन स्वाभाविकाऽऽकारान्तस्य 'डु धाञ् धारणपोषणयोः' इत्यस्य, लाक्षणिकस्य 'धेट् पाने' इत्यस्य च ग्रहणम् । 'गामादाग्रहणेष्वविशेषः' इति परिभा-

घुसंज्ञाः स्युर्दाप्दैपौ विना। २३७४ **एर्लिङि** ६।४।६७॥ घुसंज्ञानां मास्थादीनां चैत्वं स्यादार्धधातुके किति लिङि। धेयात्। धेयास्ताम्। धेयासुः। २३७५ **विभाषा धेट्श्व्योः** ३।१।४९॥ आभ्यां च्लेश्चङ् वा स्यात्कर्तृवाचिनि लुङि परे। 'चङि' (सू २३१५) इति द्वित्वम्। अदधत्। अदधताम्। २३७६ **विभाषा घ्राधेट्शाच्छासः** २।४।७८॥ एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे। अधात्। अधाताम्। अधुः। २३७७ **यमरमनमातां सक्च** ७।२।७३॥ एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु। अधासीत्। अधासिष्टाम्। अधासिषुः। ९०३

---

षाबलात् तत्र दाग्रहणेन धाऽरूपस्यापि ग्रहणाच्च। अत एव 'दो दद् घोः' इत्यत्र घेञिवृत्त्यर्थं दाग्रहणमर्थवत्, दधातेर्हिभावविधानादेव निवृत्तिसिद्धेः। तदाह—दारूपा धारूपाश्चेति। एर्लिङि। एरिति प्रथमान्तम्। 'आर्धधातुके' इत्यधिकृतम्। 'घुमास्थागापाजहातिसाम्' इत्यनुवर्तते। घु मा स्था गा पा जहाति सा एषां द्वन्द्वात् षष्ठीबहुवचनम्। तदाह—घुसंज्ञानां मास्थादीनामिति। किति लिङि इति। 'दीङो युडचि' इत्यतः। कितीत्यनुवृत्तेरिति भावः। ङितीति नानुवर्तते। लिङः आर्धधातुकस्य ङित्त्वासंभवात्। लुङि च्लेः सिचि प्राप्ते—विभाषा धेट्। 'च्लि लुङि' इत्यनुवर्तते। 'णिश्रिद्रुस्रुभ्यः' इत्यतः कर्तरि चङिति च। तदाह—आभ्यामिति। धेट् श्वि आभ्यामित्यर्थः। अदधदिति। चङि द्वित्वे आल्लोप इति भावः। अदधताम्। अदधन्। अदधः। अदधतम्। अदधत। अदधम्। अदधाव। अदधाम। चङभावपक्षे विशेषमाह—विभाषा घ्रा। 'ण्यक्षत्रियार्ष' इत्यतः लुगित्यनुवर्तते। 'गातिस्था' इत्यतः 'सिचः परस्मैपदेष्विति'। तदाह—एभ्य इति। 'घ्रा गन्धोपादाने' 'धेट् पाने' 'शो तनूकरणे' 'छो छेदने' 'षो अन्तकर्मणि' एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। शोप्रभृतीनां कृतात्वानां निर्देशः। धेटः 'गातिस्थाघु' इति नित्यं प्राप्ते अन्येषामप्राप्ते वचनम्। अधुरिति। 'उस्यपदान्तात्' इति पररूपम्। अधाः। अधातम्। अधात। अधाम्। अधाव। अधाम। सिचो लुगभावपक्षे आह—यमरम। यम, रम, नम, आत् एषां द्वन्द्वात्षष्ठीबहुवचनम्। 'आदित्येन आदन्तं गृह्यते। तदाह—एषां सक् स्यादिति। सकि ककार इत्, अकार उच्चारणार्थः। कित्त्वादन्तावयवः। चकारेण 'इडत्यर्ति' इत्यतः इडिति 'स्तुसुधूञ्भ्यः' इत्यतः परस्मैपदेष्विति चानुकृष्यते। 'अञ्जेः सिचि' इत्यतः सिचीति च, तच्च षष्ठ्या विपरिणम्यते। तदाह—एभ्यः सिच इट् चेति। अधासीदिति। धातोः सगागमः। सिच इट्, ईट्। 'इट ईटि' इति सिज्लोपः। अपृक्तत्वाऽभावादीडभावाच्च सिज्लोपः। सस्य षत्वे तकारस्य ष्टुत्वेन टः। अधासिषुरिति। अधासीः। अधासिष्टम्। अधासिष्ट। अधासिषम्। अधासिष्व। अधासिष्म। यद्यपि अधासीदित्यत्र सगिटोर्विधिस्त्वर्थ एव, तथापि अधासिष्टामित्याद्यर्थम् आतः सगिड्विधानम्। यमादीनां

ग्लै ९०४ म्लै हर्षक्षये । हर्षक्षयो धातुक्षयः । ग्लायति । जग्लौ । जग्लिथ—जग्लाथ । २३७८ वाऽन्यस्य संयोगादेः ६।४।६८॥ घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि । ग्लायात् । ग्लेयात् । अग्लासीत् । म्लायति । ९०५ ष्टै न्यक्करणे । न्यक्करणं तिरस्कारः । ९०६ द्रै स्वप्ने । ९०७ ध्रै तृप्तौ । ९०८ ध्यै चिन्तायाम् । ९०९ रै शब्दे । ९१० स्त्यै ९११ ष्ट्यै शब्दसङ्घातयोः । स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम् । षोपदेशफलं तु तिष्ट्यासति, अतिष्ट्यपदित्यत्र षत्वम् । ९१२ खै खदने । ९१३ त्रै ९१४ जै

तु अयंसीदित्यादौ हलन्तलक्षणवृद्धेरभावार्थम्, अयासिष्टामित्याद्यर्थं च तदेतत् तत्तद्धातुषु स्पष्टीभविष्यति । अथारभत । ग्लै म्लै हर्षक्षये । धातुक्षय इति । बलक्षय इत्यर्थः । अनिटाविमौ । ग्लायतीति । शपि आयादेशः । शिद्विषयत्वादात्त्वं न । जग्लाविति । णलि आत्त्वे 'आत औ णलः' इति औभावे वृद्धिरिति भावः । अनुसारौ द्वित्वे कृते आतो लोपः । जग्लतुः । जग्लुः । भारद्वाजनियमार्थत्वात् थेऽडयाह—जग्लिथ जग्लाथेति । इट्पक्षे आल्लोपः । जग्लथुः । जग्ल । जग्लौ । जग्लिव । जग्लिम । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् । आशीर्लिङि आत्त्वे कृते ग्ला यात् इति स्थिते—वाऽन्यस्य । आर्धधातुक इत्यधिकृतम् । 'एर्लिङि' इत्यनुवर्तते । 'एः' इति प्रथमान्तम् । 'आतो लोप इटि च' इत्यतः 'आत' इत्यनुवर्तते । कस्मादन्यस्येत्यपेक्षायां घुमास्थागापाजहातिसां हलीति प्रकृतत्वात्तेभ्योऽन्यस्येति लभ्यते । तदाह—घुमास्थादेरित्यादिना । कितीति । 'दीङो युडचि क्ङिति' इत्यतः तदनुवृत्तेरिति भावः । ङितीति तु नानुवर्तते, लिङार्धधातुकस्य ङित्त्वाऽसम्भवात् । अग्लासीदिति । 'यमरमे'त्यादन्तत्वात् सगिटौ । अग्लासिष्टाम् । अग्लासिषुरित्यादि । अग्लास्यत् । म्लायतीति । ग्लैधातोरिव रूपाणीति भावः । ष्टै न्यक्करणे इति । यकारमध्योऽयम् । इत आरभ्य ऐकारान्तानां संयोगादीनां ग्लैवदेव रूपाणि प्रत्येतव्यानि । 'रै शब्दे' इत्यादीनां तु असंयोगादीनाम् आशीर्लिङि 'वाऽन्यस्य संयोगादेः' इत्येत्वं न भवति, तेन रायादित्यादि रूपमिति विशेषः । स्त्यै ष्ट्यै इति । षोपदेशेषु स्त्याधातोः पर्युदासादाद्यो न षोपदेशः । द्वितीयस्तु षोपदेशः । तकारस्य ष्टुत्वसम्पन्नटकारनिर्देशः । सत्वे कृते इति । 'धात्वादे'रिति षस्य सकारे सति निमित्ताऽपायात् ष्टुत्वनिवृत्तिरिति भावः । तिष्ट्यासतीति । ष्ट्यैधातोः कृतसत्वात् सनि आत्त्वे स्त्या स इति सन्नन्तात् लटि तिपि शपि 'सन्यङोः' इति द्वित्वे 'शर्पूर्वाः खयः' इति सकारथकारनिवृत्तौ 'तास्त्यासति' इति स्थिते अभ्यासह्रस्वे 'सन्यतः' इति इत्वे सकारस्य इणः परत्वादादेशसकारत्वाच्च षत्वे 'तिष्ट्यासती'ति रूपम् । स्वाभाविकसकारादित्वे त्वादेशसकारादित्वाऽभावात् षत्वं न स्यादिति भावः । अतिष्ट्यपदिति । ष्ट्यैधातोः कृतसत्वात् णौ आत्त्वे 'अर्तिह्री' इति पुकि स्थापि इति ण्यन्तात् लुङि अडागमे तिपि 'इतश्च'

९१५ षै क्षये । क्षायति । जज्ञौ । ससौ । साता । 'घुमास्था—' (सू २४६२) इत्यत्र 'विभाषा घ्राधेट्—' (सू २३७६) इत्यत्र च स्यतेरेव ग्रहणं न त्वस्य । तेन एत्वसिज्लुकौ न । सायात् । असासीत् । ९१६ कै ९१७ गै शब्दे । गेयात् । अगासीत् । ९१८ शै ९१९ श्रै पाके । ९२० पै ९२१ ओवै शोषणे । पायात् । अपासीत् । 'घुमास्था-'(सू २४६२) इतीत्त्वं, तदपवाद 'एर्लिङि'(सू २३७४) इत्येत्वं, 'गातिस्था'(सू २२२३) इति सिज्लुक् च न । पारूपस्य लाक्षणिकत्वात् ९२२ ष्टै वेष्टने । स्तायति । ९२३ ष्णै वेष्टने । शोभायां च इत्येके । स्नायति । ९२४ दैप् शोधने । दायति । अघुत्वादेत्वसिज्लुकौ न । दायात् । अदासीत् । ९२५ पा पाने । 'पाघ्राध्मा—' (सू २३६०) इति पिबादेशः । तस्यादन्तत्वान्नोपधागुणः । पिबति ।

---

इति इकारलोपे 'णिश्रिद्रुस्रुभ्यः' इति चङि 'णेरनिटि' इति णिलोपे 'णौ चङ्युपधायाः' इति ह्रस्वे 'चङि' इति स्थप् इत्यस्य द्वित्वे 'शर्पूर्वाः' इति सकारयकारपकाराणां निवृत्तौ सत्यां 'सन्यतः' इति इत्वे इणः परत्वादादेशसकारत्वाच्च सत्यं षत्वे, तस्य ष्टुत्वे अतिष्ठिपदिति रूपम् । स्वाभाविकसकारत्वे त्वादेशसकारत्वाभावात् षत्वं न स्यादिति भावः । जज्ञौ ससाविति । ज्ञैधातोः षैधातोश्च णलि आत्त्वे द्वित्वादौ वृद्धिरिति भावः । ननु 'एर्लिङि' इत्यत्र 'घुमास्थागापाजहातिसाम्' इत्यनुवृत्त्या सैधातोराशीर्लिङि 'सायात्'दित्यत्र एत्वं स्यात् । तथा लुङि सगिटोः असासीत् असासिष्टामित्येव इष्यते । तत्र 'विभाषा घ्राधेट्शाच्छासः' इति सिचः पाक्षिके लुकि असात् असातामित्यपि प्रसज्येतेत्यत आह—घुमास्थेत्यत्रेत्यादि । स्यतेरिति । 'षो अन्तकर्मणि' इति श्यन्विकरणस्येत्यर्थः । अत्र व्याख्यानमेव शरणम् । 'विभाषा घ्राधेट्' इत्यत्र श्यन्विकरणाभ्यां साहचर्याच्च । पै ओवै शोषणे । पायति । वायति । 'ओदितश्च' इति निष्ठानत्वार्थमोदित्त्वम् । ननु पैधातोः कर्मणि लटि यकि आत्त्वे पायते इत्यत्र 'घुमास्थागापाजहातिसां हलि' इति ईत्त्वं स्यात् । तथा आशीर्लिङि पायात् इत्यत्र 'एर्लिङि' इति एत्वं स्यात्, तत्रापि 'घुमास्थागापाजहातिसाम्' इत्यनुवृत्तेः । तथा लुङि 'अपासी'दित्यत्र 'गातिस्था' इति सिचो लुकि 'यमरम' इति इटः अभावात्तत्सन्नियोगशिष्टः सगपि न स्यादित्यत आह—घुमास्थेतीत्त्वमित्यादिना । पारूपस्येति । उदाहृतसूत्रत्रये लक्षणप्रतिपदोक्तपरिभाषया आदन्तत्वेन उपदिष्टस्यैव पाधातोर्ग्रहणम्, नतु पैधातोः कृतात्त्वस्येति भावः । एवञ्च प्रकृते पैधातोराशीर्लिङि पायादित्येव रूपम् । लुङि सगिटोः अपासीत्, अपासिष्टामित्येव रूपम् । ष्टै वेष्टने इति । षोपदेशोऽयम् । कृतष्टुत्वनिर्देशः । सत्वे कृते ष्टुत्वनिवृत्तिः । तदाह—स्तायतीति । ष्णैधातुरपि षोपदेशः कृतष्टुत्वनिर्देशः । सत्वे कृते ष्टुत्वनिवृत्तिः । तदाह—स्नायतीति । दैप् शोधने । अघुत्वादिति । घुसञ्ज्ञाविधौ दाब्दैपौ विनेत्युक्तेरिति भावः । पा पाने । पिबादेश इति । 'शिद्विषय' इति शेषः । तस्येति । पिबादेशस्य अदन्तत्वात् न लघूपधगुण इति

पेयात् । अपात् । ९२६ घ्रा गन्धोपादाने । जिघ्रति । घ्रायात्—घ्रेयात् । अघ्रात्—अघ्रासीत् । ९२७ ध्मा शब्दाग्निसंयोगयोः । धमति । ९२८ ष्ठा गतिनिवृत्तौ । तिष्ठति । 'स्थादिष्वभ्यासेन'-(सू २२७७) इति षत्वम् । अधितष्ठौ 'उपसर्गात्-' (सू २२७०) इति षत्वम् । अधिष्ठाता । स्थेयात् । ९२९ म्ना अभ्यासे । मनति । ९३० दाण दाने । प्रणियच्छति । देयात् । अदात् । ९३१ ह्वृ कौटिल्ये । ह्वरति ।

भाष्ये स्पष्टम् । अनिडयम् । पपौ । पपतुः । पपुः । भारद्वाजनियमात् थलि वेट्—पपिथ—पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । क्रादिनियमादिट् । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् । आशीर्लिङि 'एर्लिङि' इत्येत्वमभिप्रेत्याह–पेयादिति । 'गातिस्था' इति सिचो लुगित्यभिप्रेत्याह-अपादिति । अपाताम् । अपुः । अपाः । अपातम् । अपात । अपाम् । अपाव । अपाम । अपास्यत् । घ्रा गन्धोपादाने । 'पाघ्राध्मा' इति शिति विषये जिघ्रादेशः । तदाह—जिघ्रतीति । अनिडयम् । जघ्रौ । जघ्रतुः । जघ्रुः । भारद्वाजनियमात् थलि वेट्—जघ्रिथ । जघ्राथ । जघ्रथुः । जघ्र । जघ्रौ । जघ्रिव । जघ्रिम । क्रादिनियमादिट् । घ्राता । घ्रास्यति । जिघ्रतु । अजिघ्रत् । जिघ्रेत् । आशीर्लिङि 'वाऽन्यस्य संयोगादेः' इत्येत्वविकल्पं मत्वा आह—घ्रायात्–घ्रेयादिति । 'विभाषा घ्राधेट्' इति सिचो वा लुक् । लुगभावपक्षे आदन्तत्वात्सगिटौ । तदाह—अघ्रात् । अघ्रासीदिति । ध्माधातुरनिट् । 'पाघ्राध्मा' इति शिति विषये धमादेशः । तदाह—धमतीति । दध्मौ । दध्मतुः । दध्मुः । दध्मिथ—दध्माथ । दध्मथुः । दध्म । दध्मौ । दध्मिव । दध्मिम । ध्माता । ध्मास्यति । धमतु । अधमत् । धमेत् । ध्मायात्—ध्मेयात् । अध्मासीत् । अध्मास्यत् । ष्ठाधातुः षोपदेशः कृतष्टुत्वनिर्देशः । शिति विषये 'पाघ्रा' इति तिष्ठादेशः । तदाह—तिष्ठतीति । तस्थौ । अधितष्ठाविस्यत्र इण्कवर्गाभ्यां परत्वाभावेऽपि षत्वमाह—स्थादिष्विति । तस्थतुः । तस्थुः । तस्थिथ—तस्थाथ । तस्थथुः । तस्थ । तस्थौ । तस्थिव । तस्थिम । स्थाता । अधिष्ठातेत्यत्र 'सात्पदाद्योः' इति षत्वनिषेधमाशङ्क्याह—उपसर्गादिति । षत्वमिति । स्थास्यति । तिष्ठतु । अतिष्ठत् । तिष्ठेत् । आशीर्लिङि संयोगादित्वेऽपि घुमास्थादेरन्यत्वाऽभावादेत्वविकल्पो न, किन्तु 'एर्लिङि' इति नित्यमेव एत्वम् । तदाह—स्थेयादिति । 'गातिस्था' इति सिचो लुक् । अस्थात् । अस्थास्यत् ॥ म्ना अभ्यासे इति । अयमप्यनिट् । 'पाघ्रा' इति शिति विषये मनादेशः । तदाह—मनतीति । मम्नौ । मम्नतुः । मम्नुः । मम्निथ—मम्नाथ । मम्नथुः । मम्न । मम्नौ । मम्निव । मम्निम । म्नाता । म्नास्यति । मनतु । अमनत् । मनेत् । म्नायात्—म्नेयात् । अम्नासीत् । अम्नास्यत् । दाण् दाने इति । अयमप्यनिट् । 'पाघ्रा' इति शिति विषये यच्छादेशः । प्रणियच्छतीति । 'नेर्गद' इति णत्वम् । ददौ । ददतुः । ददुः । ददिथ—ददाथ । ददथुः । दद । ददौ । ददिव । ददिम । दाता । दास्यति ।

२३७९ ऋतश्च संयोगादेर्गुणः ७।४।१०॥ ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि। किदर्थमपीदं परत्वाण्णल्यपि भवति। रपरत्वम्। उपधावृद्धिः। जहार। जह्वरतुः। जह्वरुः। जह्वर्थ। ह्वर्ता। 'ऋद्धनोः स्ये' (सू २३६६) ह्वरिष्यति।
२३८० गुणोऽर्तिसंयोगाद्योः ७।४।२९॥ अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च। ह्वर्यात्। अह्वार्षीत्। अह्वार्ष्टाम्। ९३२ स्वृ शब्दोपतापयोः। 'स्वरतिसूति—' (सू २२७९) इति वेट्। सस्वरिथ—सस्वर्थ। वमयोस्तु—२३८१ अयङ् कः क्ङिति ७।२।११॥ श्रिञ एकाच उगन्ताच्च पर-

स्येटो न। अयस्वरत। यच्छेत्। आशीर्लिङि 'एलिङि' इत्येव मत्वा आह—दैयादिति। 'गातिस्था' इति सिचो लुकं मत्वा आह—अदादिति। ह्वृ कौटिल्ये इति। अयमप्यनिट्। ह्वरतीति। शपि गुणे रपरत्वम्। ऋतश्च। लिटीति। 'दयतेर्दिगि लिटि' इत्यतः तदनुवृत्तिरिति भावः। ननु तिप्सिप्मिप्सु सार्वधातुकार्धधातुकयोरित्येव गुणे सिद्धे किमर्थमिदमित्यत आह—किदर्थमपीदमिति। अतुसादिकिदर्थं णलादावकिदर्थं चेत्यर्थः। ननु अस्य गुणस्य अतुसादिषु चरितार्थत्वात् णलि 'अचो ञ्णिति' इति वृद्धिप्रसङ्गात्कथं णलि अयं गुण इत्यत आह—परत्वाण्णल्यपि भवतीति। 'अचो ञ्णिति' इति वृद्ध्यपेक्षया अस्य गुणस्य परत्वादित्यर्थः। तर्हि 'जह्वार' इति कथमित्यत आह—उपधावृद्धिरिति। 'अत उपधायाः' इत्यनेनेति शेषः। जह्वर्थेति। क्रादिनियमप्राप्तस्य इटः 'अचस्तास्वत्' इति 'ऋतो भारद्वाजस्य' इति च निषेधादिति भावः। जह्वरथुः। जह्वर। जह्वार-जह्वर। जह्वरिव। जह्वरिम। क्रादिनियमादिट्। ह्वरतु। अह्वरत्। ह्वरेत्। आशीर्लिङि ह्वृ यात् इति स्थिते किस्त्वाद्गुणनिषेधे प्राप्ते—गुणोऽर्तीति। औवादिकः जौहोत्यादिकश्च ऋधातुः अर्तीत्यनेन गृह्यते। लुका निर्देशस्तु न विवक्षितः। अङ्गस्येत्यधिकृतम्। 'शीङ्तः' इत्यतः ऋत इत्यनुवर्तते। तच्च अङ्गविशेषणं तदन्तविधिः ऋदन्तस्याङ्गस्येति लभ्यत। संयोगाद्योरित्यपि तद्विशेषणम्। 'अकृत्सार्वधातुकयोः' इत्यतः असार्वधातुकग्रहणमनुवर्तते। आर्धधातुके इति लभ्यते। 'रिङ् शयग्लिङक्षु' इत्यतः यकि लिङीति च लभ्यते। 'अयङ् यि क्ङिति' इत्यतः यीति सप्तम्यन्तमनुवर्तते। आर्धधातुकविशेषणत्वात्तदादिविधिः। तदाह—अर्तेरित्यादिना। तथाच ह्वृ यात् इति स्थिते गुणे रपरत्वे रूपमाह—ह्वर्यादिति। अह्वार्षीदिति। सिचि वृद्धिः। रपरत्वम्। षत्वम्। अह्वरिष्यत्। स्वृ शब्दोपतापयोरिति। अयमप्यनिट्। स्वरति। लिटि तु किस्यपि गुणः। णलि तु कृते गुणे रपरत्वे उपधावृद्धिः। सस्वार। सस्वरतुः। सस्वरुः। थलि तु क्रादिनियमप्राप्तस्य इटः 'अचस्तास्वत्' इति 'ऋतो भारद्वाजस्य' इति च नित्यनिषेधप्राप्ते आह—स्वरतिसूतीति वेडिति। सस्वरिथ—सस्वर्थेति। सस्वरथुः। सस्वर। सस्वार-सस्वर। इत्यपि ज्ञेयम्। वमयोरिवति। क्रादिनियमान्नित्यमिडित्यन्वयः। अत्र इण्निषेधं शङ्कितुमाह—अयुकः क्ङितीति। श्रिञ

योर्गित्किता रिवन स्यात् । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधका-ण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वात् 'ऋद्धनोः स्ये' (सू २३६६) इति नित्यमिट् स्वरिष्यति । स्वर्यात् । अस्वारीत् । अस्वारिष्टाम् । अस्वार्षीत् । अस्वार्ष्टाम् । ६३३ स्मृ चिन्तायाम् । ६३४ द्वृ संवरणे । ६३५ सृ गतौ । क्रादित्वादिट् । ससर्थ । ससृव । रिङ् ।

श्रुक् नेति समाहारद्वन्द्वात् षष्ठी । उक् प्रत्याहारः । अङ्गस्येत्यधिकृतं पञ्चम्या विपरि-णतम् उका विशेष्यते । तदन्तविधिः । 'एकाच उपदेशे' इत्यतः एकाच इत्यनुवृत्तं इ-गन्तेऽन्वेति । 'नेड्वशिकृति' इत्यतो नेडिति । क्कितीति सप्तमी षष्ठ्यर्थे । ग् च क् च क्कौ तौ इतौ यस्येति विग्रहः । गकारस्य चर्त्वेन निर्देशः तदाह—श्रिञ् पचाच इत्यादि-ना । गकारप्रश्लेषः किम् ? भूष्णुः । 'ग्लाजिस्थश्च ग्स्नुः' इति चकाराद् भूधातोःग्स्नुः । तस्य गित्त्वादिट् न । कित्त्वे तु स्यात्स्नुरित्यत्र 'घुमास्था' इति ईत् स्यात् । इण्न स्यादित्यनन्तरं अनेन निषेधे प्राप्ते इत्यन्वयः । नन्वियं शङ्का न युज्यते । 'श्र्युकः क्किति' इति निषेधं बाधित्वा परत्वात् 'स्वरतिसूती'ति विकल्पस्य प्राप्तेरित्यत आह—परमपीत्यादि सामर्थ्यादित्यन्तम् । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्परमपि स्वर-त्यादिविकल्पं बाधित्वा अनेन निषेधे प्राप्ते इत्यन्वयः । 'आर्द्धधातुकस्येड्'त्यादि-विधिकाण्डात्प्रागेव 'नेड्वशि कृति' इत्यादिप्रतिषेधकाण्डारम्भसामर्थ्यात् 'स्वरति' इति विकल्पोऽप्यनेन बाध्यते इत्यर्थः । परमपीत्यादिः प्राप्ते इत्यन्तः शङ्काग्रन्थः । परिहरति—क्रादिनियमान्नित्यमिडिति । प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावान् इण्निषेधः स लिटि चेत् तर्हि क्रादिभ्य एवेत्युक्तत्वादिति भावः । लुटि—स्वरिता-स्वर्ता । लृटि स्ये 'स्वरति' इति विकल्पं निरस्यति—परत्वादिति । स्वरतु । अस्वरत् । स्वरेत् । स्व-र्यादिति । आशीर्लिङि 'गुणोऽर्तिसंयोगाद्योः' इति गुणः । अस्वारीदिति । 'स्वरति' इति इट्पक्षे वृद्धिरिति भावः । अस्वार्षीदिति । इडभावे 'सिचि वृद्धिः' इति वृद्धिरिति भावः । स्मृ चिन्तायामिति । अयमप्यनिट् । स्मरति । लिटि 'ऋतश्च' इति कित्यपि गुणः । णलि तु गुणे उपधावृद्धिः । सस्मार । सस्मरतुः । सस्मरुः । ऋदन्तत्वाद्भारद्वा-जमतेऽपि क्रादिनियमप्राप्तस्य इटः थलि नित्यनिषेधः । सस्मर्थ । सस्मरथुः । सस्मर । सस्मार—सस्मर । सस्मरिव । सस्मरिम । स्मर्ता । लृटि स्ये 'ऋद्धनोः' इति इट्—स्मरिष्यति । स्मरतु । अस्मरत् । स्मरेत् । आशीर्लिङि 'गुणोऽर्ति' इति गुणः—स्म-र्यात् । लुङि सिचि वृद्धौ रपरत्वम्—अस्मार्षीत् । अस्मरिष्यत् । द्वृ संवरणे इति । अयमपि स्मृधातुवत् । सृ गताविति । ऋदन्तोऽयमनिट् । सरति । लिटि संयोगादि-त्वाऽभावात् 'ऋतश्चे'ति गुणो न । ससार । सस्रतुः । सस्रुः । क्रादित्वान्नेडिति । सृधातोः क्रादिस्थत्वादिति भावः । ससर्थेति । क्रादित्वात्थल्यपि नित्यं निषेध इति भावः । सस्रथुः । सस्र । ससार । ससर । सस्रुव । सस्रुम । इत्यपि ज्ञेयम् । सर्ता । लृटि

स्रियात् । असार्षीत् । असार्ष्टाम् । २३८२ सर्तिशास्त्यर्तिभ्यश्च ३।१।५६॥ एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि । इह लुग्विकरणस्य शासिना साहचर्यात् सर्त्यर्ती जौहोत्यादिकावेव गृह्येते । तेन भ्वाद्योर्नाङ् । शीघ्रगतौ तु 'पाघ्राध्मा' ( सू २३६० ) इति शिति धौरादेशः । धावति । ९३६ ऋ गतिप्रापणयोः । ऋच्छति । २३८३ ऋच्छत्यृताम् ७।४।११॥ तौदादिकस्य ऋच्छतेः ऋधातोः ॠतां च गुणः स्याल्लिटि । णलि प्राग्वदुपधावृद्धिः । आर । आरतुः । आरुः । २३८४ इडत्त्यर्ति-

'ऋद्धनोः' इति इट्—सरिष्यति । सरतु । असरत् । सरेत् । आशीर्लिङि संयोगादित्वाऽभावात् 'गुणोऽर्ति' इति न गुणः । किन्तु 'रिङ् शयग्लिङ्क्षु' इति रिङित्याह—रिङिति । स्रियादिति । रीङि प्रकृते रिङ्विधिसामर्थ्यान्न दीर्घ इति भावः । असार्षीदिति । सिचि वृद्धौ रपरत्वम् । अत्र च्लेरङमाशङ्कितुमाह—सर्ति । च्लि लुङीत्यनुवर्तते । 'णिश्रिद्रुस्रुभ्यः' इत्यतः कर्तरि, चङिति । तदाह—एभ्य इति । ततश्च प्रकृते 'असार्षी'दित्यत्र अङ् स्यादिति शङ्का सूचिता । तां परिहरति—इह लुगित्यादिना । इह अङ्विधौ शास्तीत्यनेन लुग्विकरणः शासिर्गृह्यते इति निर्विवादम्, तस्य विकरणान्तराभावात् । एवं च तत्साहचर्यात् सृधातुः ऋधातुश्च जौहोत्यादिकौ श्लुविकरणावेव गृह्येते इत्यर्थः, लुग्विकरणत्वसाम्यादिति भावः । तेनेति । लुग्विकरणयोरेव ग्रहणेन भ्वादिगणस्थयोः सृधातुऋधात्वोरङ् नेत्यर्थः । तदेवं सृधातोर्गतिसामान्यवृत्तेरुक्तानि रूपाणि । यदि शीघ्रगतौ सृधातुः, तदा तस्य विशेषमाह—शीघ्रगतौ त्विति । धौरादेश इति । धौशब्दस्य 'धौरि'ति प्रथमान्तम् । 'धौ' इत्यौकारान्त आदेश इत्यर्थः । 'पाघ्रा' इति सूत्रे सर्तीति श्तिपा निर्देशः । लुग्विकरणनिर्देशस्तु अविवक्षित इति भावः । 'सर्तेर्वेगितायां गतौ धावादेशः' इतिवार्तिकमभिप्रेत्येदम् । धावतीति । शपि सृधातोर्धौभावे आवादेशः । धावतु । अधावत् । धावेत् । ऋ गतिप्रापणयोः । अनिट् । 'पाघ्राध्मा' इति शिद्विषये ऋच्छादेशः । तदाह—ऋच्छतीति । ननु ऋ अतुस् इति स्थिते द्वित्वे उरदत्वे रपरत्वे हलादिशेषे 'अत आदेः' इति दीर्घे आ ऋ अतुस् इति स्थिते 'असंयोगात्' इति कित्त्वादुत्तरखण्डस्य गुणाऽभावे यणं बाधित्वा परत्वादादूगुणे अरतुरिति स्यादित्यतस्तत्र गुणविधानमाह—ऋच्छत्यृताम् । 'दयतेर्दिगि लिटि' इत्यतो लिटीति, 'ऋतश्च संयोगादेर्गुणः' इत्यतो गुण इति चानुवर्तते । ऋच्छति ऋ ॠत् एषां द्वन्द्वाद्बहुवचनम् । बहुवचनादेव ॠकारप्रश्लेषो गम्यते । प्रश्लिष्टेन च ऋकारेण ऋधातुरेव गृह्यते । ॠवर्णान्तधातुग्रहणे ,'ऋतश्च संयोगादेर्गुणः' इत्यस्य वैयर्थ्यात् । 'ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु' इति तौदादिकस्य 'ऋच्छती'ति श्तिपा निर्देशः । भौवादिकस्य धातोस्तु ऋग्रहणेनैव सिद्धेः । तदाह—तौदादिकस्य ऋच्छतेरित्यादिना । किदर्थमपीदं सूत्रं परत्वादकित्यपि भवति । णलि प्राग्वदिति । 'हृ कौटिल्ये' इत्यत्र उक्तया रीत्या किन्तु चरितार्थोऽप्ययं गुणः

व्ययतीनाम् ७।२।६६॥ अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात्। आरिथ। अर्ता। अरिष्यति। अर्यात्। आर्षीत्। आर्ष्टाम्। ९३७ गृ ९३८ घृ सेचने। गरति। जगार। जगर्थ। जग्रिव। रिङ्। ग्रियात्। अगार्षीत्। ९३९ ध्वृ हूर्च्छने। ९४० स्रु गतौ। सुस्रोथ। सुस्रुव। स्रूयात्। 'णिश्रि—' (सू२३१२) इति

'अचो ञ्णिति' इति वृद्ध्यपेक्षया परत्वात् गुणोऽपि भवति। ततो रपरत्वे उपधावृद्धि-रित्यर्थः। आरेति। ऋधातोर्लिटि तिपो णलि द्वित्वे उरदत्वे हलादिशेषे 'अत आदेः' इति दीर्घे उत्तरखण्डस्य वृद्धौ रपरत्वे सवर्णदीर्घं इति भावः। आरतुरिति। पूर्ववत् द्वित्वादौ आ ऋ अतुसिति स्थिते कित्त्वाद्गुणनिषेधे प्राप्ते 'ऋच्छत्यृताम्' इति गुणे रपरत्वे सवर्णदीर्घं इति भावः। आरुरित्यप्येवम्। थलि तु क्रादिनियमप्राप्तस्य इटः 'अचस्तास्वत्' इति ऋदन्तत्वात् भारद्वाजमतेऽपि निषेधे प्राप्ते आह—इडत्यर्ति। पञ्चम्यर्थे षष्ठी। 'अचस्तास्वत्' इत्यतः थलीत्यनुवर्तते। 'विभाषा सृजिदृशोः' इति पूर्वसूत्राद्विभाषाग्रहणमस्वरितत्वान्नानुवर्तते। तदाह—अद् ऋ इत्यादिना। आर्द्धधातु-कस्येडित्यनुवृत्तौ पुनरिड्ग्रहणं तु 'न वृद्भ्यश्चतुर्भ्यः' इत्यतो नेत्यनुवृत्तिनिवृत्तये इ-त्याहुः। आरिथेति। आरथुः। आर। आर। आरिव। आरिम। क्रादिनियमादिट्। अरिष्यतीति। 'ऋद्धनोः' इति इट्। ऋच्छतु। आर्च्छत्। अर्यादिति। 'गुणोऽर्ति' इति गुणे रपरत्वमिति भावः। आर्षीदिति। सिचि वृद्धिः। 'सर्तिशास्त्यर्तिभ्यश्च' इति अङ् तु न, तत्र भौवादिकस्य ऋधातोर्न ग्रहणमित्यनुपदमेवोक्तेरिति भावः। आरिष्यत्। 'ऋद्धनोः स्ये' इति इट्। गृ घृ सेचने। अनिटौ। गरतीति। जगार। असंयोगादित्वात् 'ऋतश्च' इति गुणो न। जग्रतुः। जग्रुः। क्रादिनियमेन इटि प्राप्ते 'अचस्तास्व'दिति नेट्। ऋदन्तत्वाद्भारद्वाजमतेऽपि नेट्। तदाह—जगर्थेति। जग्रथुः। जग्र। जगार-जगर। जग्रिवेति। क्रादिनियमादिट्। जग्रिम। गर्ता। गरिष्यति। 'ऋद्धनोः' इति इट्। गरतु। अगरत्। गरेत्। रिङिति। आशीर्लिङि असंयोगादित्वात् 'गुणोऽर्ति' इति गुणाभावे 'रिङ् शयग्लिङ्क्षु' इति रिङित्यर्थः। ग्रियादिति। रीङि प्रकृते रिङ्वि-धेर्न दीर्घः। अगार्षीदिति। सिचि वृद्धौ रपरत्वम्। अगार्ष्टाम्। अगरिष्यत्। 'ऋद्धनोः' इति इट्। घृधातोस्तु भौवादिकस्य घृतं घर्मः घृणा इत्यत्रैव प्रयोगः, नान्यत्रेति 'तृ-ज्वत्क्रोष्टुः' इति सूत्रे भाष्ये स्पष्टम्। ध्वृ हूर्च्छने इति। हूर्च्छनं कुटिलीभवनम्। ध्व-रति। दध्वार। 'ऋतश्च' इति गुणः। दध्वरतुः। दध्वरुः। थलि 'अचस्तास्वत्' इति क्रादिनियमप्राप्त इट् न। ऋदन्तत्वाच्च भारद्वाजमतेऽपि नेट्। दध्वर्थ। दध्वरथुः। द-ध्वर। दध्वार-दध्वर। दध्वरिव। दध्वरिम। क्रादिनियमादिट्। ध्वर्ता। 'ऋद्धनोः' इति इट्-ध्वरिष्यति। ध्वरतु। अध्वरत्। ध्वरेत्। आशीर्लिङि 'गुणोऽर्ति' इति गुणः। ध्वर्यात्। अध्वार्षीत्। अध्वरिष्यत्। स्रु गतौ। अनिट्। स्रवति। सुस्राव। अतुसादौ कित्त्वात् गुणाभावे उवङ्। सुस्रुवतुः। सुस्रुवुः। क्रादित्वान्नेट्। तदाह—सुस्रोथेति।

चङ् । लघूपधगुणादन्तरङ्गत्वादुवङ् । असुस्रुवत् । ९४१ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सुषोथ-सुषविथ । सुषुविव । सोता । २३८५ स्तुसुधूञ्भ्यः परस्मैपदेषु ७।२।७२॥ एभ्यः सिच इट् स्यात्परस्मैपदेषु । असावीत् । पूर्वोत्तराभ्यां सिद्धत्वात् साहचर्यात्सुनोतेरेव ग्रहणमिति पक्षे असौषीत् । ९४२ श्रु श्रवणे । २३८६ श्रुवः शृ च ३।१।७४॥ श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च शब्विषये । शपोऽपवादः । श्नोर्ङित्त्वाद्धातोर्गुणो न । शृणोति । शृणुतः । २३८७ हुश्नुवोः सार्वधातुके ६।४।८७॥ जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चा-

सुस्रवथुः सुस्रव । सुस्राव—सुस्रव । सुस्रुवेति । क्रादिनियमान्नेट् । सुस्रुमेत्यपि ज्ञेयम् । स्रोता । स्रोष्यति । स्रवतु । अस्रवत् । स्रवेत् । स्रूयादिति । 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः । लुङि विशेषमाह—'णिश्रि' इति चङिति । 'चङि' इति द्वित्वमित्यपि द्रष्टव्यम् । ननु असुस्रु अ त् इति स्थिते रेफादुत्तरस्य उकारस्य 'सार्वधातुकार्धधातुकयो'रिति गुणस्य चङ्निमित्तकस्य ङित्त्वान्निषेधेऽपि उवङपेक्षया परत्वात् णिपं निमित्तीकृत्य रेफादुकारस्य लघूपधगुणः स्यादित्यत आह—लघूपधगुणादन्तरङ्गत्वादुवङिति । बहिर्भूतणिचपेक्षत्वाल्लघूपधगुणः बहिरङ्गः । अन्तर्गतचङपेक्षत्वादुवङन्तरङ्गः । अतः उवङेव भवति । परादन्तरङ्गस्य बलवत्त्वादिति भावः । असुस्रुवदिति । अस्रोष्यत् । षु प्रसवेति । अत्र प्रसवशब्दस्य गर्भमोचनपरत्वभ्रमं वारयति—प्रसवोऽभ्यनुज्ञानमिति । 'ओं प्रणयेति ब्रह्मा प्रसौति' इत्यादौ तथा दर्शनादिति भावः । षोपदेशोऽयम् । शपि उवर्ण बाधित्वा परत्वात्सार्वधातुकयोरिति गुणः । सवति । सुषाव । अतुसादौ कित्त्वाद्गुणाऽभावे उवङ् । सुषुवतुः । सुषुवुः । भारद्वाजनियमात्थलि वेट् । तदाह—सुषविथ-सुषोथेति । अकित्त्वात् गुण इति भावः । सुषुवथुः । सुषुव । सुषाव—सुषव । वमयोस्तु क्रादिनियमान्नित्यमिट् । तदाह—सुषुविवेति । कित्वाद्गुणाभावे उवङ् । सोतेति । सोष्यति । सवतु । असवत् । सवेत् । सूयात् । लुङि असोषीदिति प्राप्ते—स्तुसुधूञ्भ्यः । 'इडत्यर्ति' इत्यतः इडित्यनुवर्तते । 'अञ्जेः सिचि' इत्यतः सिचीत्यनुवृत्तं षष्ठ्या विपरिणम्यते । तदाह—एभ्यः सिच इति । असावीदिति । सिचि वृद्धौ 'इट ईटि' इति सिज्लोपः । पूर्वोत्तराभ्यामिति । स्तुधूञ्भ्यामित्यर्थः । सुनोतेरिति । षुञ् अभिषवे इति श्नुविकरणस्येत्यर्थः । असौषीदिति । इडभावे सिचि वृद्धिः इति भावः । असोष्यत् । श्रु श्रवणे इति । उदन्तोऽयमनिट् । श्रुवः शृ च । 'श्रु' इति लुप्तप्रथमाकम् । चकारेण 'स्वादिभ्यः श्नुः' इति सूत्रस्थः श्नुः समुच्चीयते । तदाह—श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्चेति । शपोऽपवाद इति । अनेन शब्विषये कर्त्रर्थसार्वधातुक एवास्य प्रवृत्तिः सूचिता । श्नोर्ङित्त्वादिति । 'सार्वधातुकमपि'दित्यनेनेति भावः । शृणोतीति । तिपमाश्रित्य श्नोर्गुणः । तसादीनां ङित्त्वात् श्नोर्न गुणः । तदाह—शृणुत इति । शृणु अन्तीति स्थिते अन्तेः ङित्त्वात्

अवक्षत। अवोढाः। अवोढ्वम्। १००५ वस निवासे। परस्मैपदी। वसति। उवास। २४१० शासिवसिघसीनां च ८।३।६०॥ इण्कुभ्यां परस्यैषां सस्य षः स्यात्। ऊषतुः। ऊषुः। उवसिथ—उवस्थ। वस्ता। 'सः स्यार्धधातुके' (सू २३४२)। वत्स्यति। उष्यात्। अवात्सीत्। अवात्ताम्। वेञ् १००६ तन्तुसन्ताने। वयति—वयते २४११ वेञो वयिः २।४।४१॥ वा स्याल्लिटि। इकार उच्चारणार्थः। उवाय। २४१२ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चति-

सलोपे ढत्वधत्वष्टुत्वढलोपाः ओत्वं चेति भावः। अवाक्षुरिति। हसि सिचि वृद्धौ ढकषाः। अवाक्षीः। अवोढम्। अवोढ। अवाक्षम्। अवाक्ष्व। अवाक्ष्म। अवोढेति। लुङि आत्मनेपदे प्रथमपुरुषैकवचने अवह् स् त इति स्थिते सलोपः ढत्वधत्वष्टुत्वढलोपाः ओत्वं च। अवक्षातामिति। आतामि सिचि ढकषा इति भावः। अवक्षतेति। 'आत्मनेपदेष्वनतः' इत्यदादेशः। अवोढवमिति। अवक्षि। अवक्ष्वहि। अवक्ष्महि। अवक्ष्यत्—अवक्ष्यत। इति वहत्यन्ताः स्वरितेतो गताः। वसधातुरनिट्। अकिति लिटि परे 'लिट्यभ्यासस्य' इत्यभ्यासस्य सम्प्रसारणम्। तदाह—उवासेति। किति तु 'वचिस्वपि' इति सम्प्रसारणे कृते द्वित्वादौ ऊस् अतुस् इति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाभावादप्राप्ते षत्वे—शासिवसि। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते। 'इण्कोः' इति 'अपदान्तस्य मूर्धन्यः' इति चाधिकृतम्। तदाह—इण्कवर्गाभ्यामिति। भारद्वाजनियमात्थलि वेट् इति मत्वा आह—उवसिथ-उवस्थेति। 'न शसदद' इति निषेधात् 'थलि च सेटि' इति न भवति। ऊषथुः। ऊष। उवास—उवस। ऊषिव। ऊषिम क्रादिनियमादिट। वस् स्य ति इति स्थिते आह—सः स्यार्द्धधातुके इति। अनेन सकारस्य तकार इति भावः। वसतु। अवसत्। वसेत्। उष्यादिति। आशीर्लिङि यासुटः कित्वात् वस्य सम्प्रसारणे 'शासिवसि' इति षत्वमिति भावः। अवात्सीदिति। सिचि हलन्तलक्षणवृद्धौ सस्य तकारः। अवात्तामिति। अवस् स् तामिति स्थिते वृद्धौ 'झलो झलि' इति सलोपे प्रत्ययलक्षणमाश्रित्य सकारार्धधातुकपरत्वात् धातुसकारस्य 'सः सि' इति तकारः। वस्तुतस्तु सिज्लोपस्याऽसिद्धत्वात् 'सः सि' इति तकारे सिज्लोप इति बोध्यम्। अवात्सुः। अवात्सीः। अवात्तम्। अवात्त। अवात्सम्। अवात्स्व। अवात्स्म। अवत्स्यत्। वेञ्धातुरनिट्। ञित्वादुभयपदी। तन्तुसन्तानः पटनिर्माणार्थं तन्तूनां तिर्यक्प्रसारणविशेषः। वयति-वयते इति। शपि अयादेशः। वेञो वयिः। शेषपूरणेन सूत्रं व्याचष्टे—वा स्याल्लिटीति। 'लिट्यन्यतरस्याम्' इत्यतः अन्यतरस्यामित्यनुवृत्तेरिति भावः। उच्चारणार्थ इति। इकारस्य इत्संज्ञकत्वे तु नुम् स्यादिति भावः। उवायेति। वयि यादेशे यजादित्वादकिति लिटि परे 'लिट्यभ्यासस्य' इति वकारस्य सम्प्रसारणे उपधावृद्धिरिति भावः। अत्र यकारस्य तु न सम्प्रसारणम्, 'लिटि वयो यः'

पृच्छतिभृज्जतीनां ङिति च ६।१।१६॥ एषां किति ङिति च सम्प्रसारणं स्यात्। इति यकारस्य प्राप्ते—२४१३ लिटि वयो यः ६।१।३८॥ वयो यस्य सम्प्रसारणं न स्याल्लिटि। ऊयतुः। ऊयुः। २४१४ वश्चास्यान्यतरस्यां किति ६।१।३९॥ वयो यस्य वो वा स्यात्किति लिटि। ऊवतुः। ऊवुः। उवयिथ। वयस्तासावभावात्थलि नित्यमिट्। स्थानिवद्भावेन ञित्त्वात्तङ्। ऊये। ऊवे। वयादेशाभावे—२४१५ वेञः ६।१।४०॥ वेञो न संप्रसारणं स्याल्लिटि। ववौ।

---

इति तन्निषेधस्यानुपदमेव वक्ष्यमाणत्वादिति भावः। यद्यपि णलि वयादेशाभावेऽपि द्वित्वे अभ्यासस्य सम्प्रसारणे 'अचो ञ्णिति' इति वृद्धौ आयादेशे उवायेति सिध्यति। तथापि ऊयतुरित्याद्यर्थं वयादेशस्य आवश्यकत्वादिहापि वयादेशो न्याय्यत्वादुपन्यस्तः। वे अतुस् इति स्थिते वयादेशे कृते–ग्रहिज्या। चकारेण 'वचिस्वपियजादीनाम्' इत्यतः कितीति समुच्चीयते। 'ष्यङः सम्प्रसारण'मित्यनुवर्तते। तदाह–एषामित्यादि। अत्र परस्मैपदिग्रहादिसाहचर्यात् 'अय–वय–पय' गतौ इति पठितस्यात्मनेपदिनो वयेर्न ग्रहणम्। यजादित्वादेव वयेः सम्प्रसारणे सिद्धे अत्र वयग्रहणं स्पष्टार्थमिति भाष्ये स्पष्टम्। इति यकारस्य प्राप्ते इति। 'न सम्प्रसारणे सम्प्रसारणम्' इति लिङ्गादन्त्यस्य यणः पूर्वं सम्प्रसारणमिति विज्ञानाद्यकारस्य संप्रसारणे प्राप्ते सतीत्यर्थः, लिटि वयो। सम्प्रसारणं नेति। 'न सम्प्रसारणे सम्प्रसारणम्' इत्यतः तदनुवृत्तेरिति भावः। तथा च यकारस्य सम्प्रसारणनिषेधे वकारस्य संप्रसारणमिति भावः तदाह–ऊयतुरिति। वश्चास्य। 'लिटि वयो यः' इत्यनुवर्तते। तदाह–वयो यस्येत्यादि। उवयिथेति। अकित्त्वान्न वः। अजन्तत्वादकारवत्त्वाच्च थलि इड्विकल्पमाशङ्क्याह—वयस्तासावभावात्थलि नित्यमिडिति। वयेर्लिट्येव विहितत्वेन तासावभावात् 'अचस्तास्वत्' इति 'उपदेशेऽत्वतः' इति च इण्निषेधाऽप्रसक्त्या क्रादिनियमान्नित्यमिडित्यर्थः। 'यस्तासावस्ति नित्याऽनिट् च' इति भाष्यम्। ऊयथुः-ऊवथुः। ऊय-ऊव। उवाय-उवय। ऊयिव-ऊविव। ऊयिम—ऊविम। ननु वयेरञित्त्वात् कथमुभयपदित्वमित्यत आह—स्थानिवद्भावेनेति। ऊये—ऊवे इति। 'वश्चास्यान्यतरस्याम्' इति वत्वविकल्पः। वत्वाभावे 'लिटि वयो यः' इति यकारस्य सम्प्रसारणनिषेधः। वकारस्य 'ग्रहिज्या' इति 'वचिस्वपि' इति वा सम्प्रसारणम्। ऊयाते। ऊयिरे। ऊयिषे। ऊयाथे। ऊयिध्वे। ऊये। ऊयिवहे। ऊयिमहे। क्रादिनियमादिट्। एवं, ऊवाते। ऊविरे। इत्यादि। वयादेशाभावे इति। यजादित्वात् 'लिट्यभ्यासस्य' इति 'वचिस्वपि' इति च सम्प्रसारणे प्राप्ते सतीति शेषः। वेञः। 'लिटि वयो यः' इत्यतो लिटीति 'न सम्प्रसारणे सम्प्रसारणम्' इत्यतो न सम्प्रसारणमिति चानुवर्तते। तदाह—वेञो नेति। अत्र कितीति नानुवर्तते। तदाह–ववाविति। णलि सम्प्रसारणनिषेधे 'आदेच उपदेशे' इत्या-

ववतुः । वबुः । वविथ—ववाथ । ववे । वाता । ऊयात् । वासीष्ट । अवासीत् ।
१००७ व्येञ् संवरणे । व्ययति—व्ययते । २४१६ न व्यो लिटि ६।१।४६॥
व्येञ आत्वं न स्याल्लिटि । वृद्धिः । परमपि हलादिशेषं बाधित्वा यस्य सम्प्रसारणम् । उभयेषां ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेन । विव्याय । विव्यतुः । विव्युः । 'इडत्त्यर्ति—' ( सू २३८४ ) इति

त्वे 'आत औ णलः' इत्यौभावे 'वृद्धिरेचि' इति वृद्धौ रूपम् । ववतुरिति । 'आदेचः' इत्यात्वे 'आतो लोपः' । एवं ववुः । भारद्वाजनियमात्थलि वेट्, वेञस्तासावनिट्कत्वात् । तदाह—वविथ-ववाथेति । इट्पक्षे अकित्त्वेऽपि इट्परत्वादाल्लोप इति भावः । ववथुः । वव । ववौ । ववित्र । वविम । क्रादिनियमादिट् । ववे इति । ववाते । वविरे । वविषे । ववाथे । वविढ्वे । ववे । वविवहे । वविमहे । वातेति । लुटि तासि आत्वम् । वास्यति—वास्यते । वयतु—वयताम् । अवयत्—अवयत । वयेत्—वयेत । ऊयादिति । आशीर्लिङि यासुटि कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः । वासीष्टेति । आशीर्लिङि आत्मनेपदे, सीयुटि आत्वे रूपम् । वासीयास्ताम् । अवासीदिति । आत्वे कृते इट्सकौ । अवास् इ स् ईदिति स्थिते 'इट ईटि' इति सिज्लोपः । अवासिष्टामित्यादि । आत्मनेपदे—अवास्त, अवासाताम् इत्यादि । अवास्यत्-अवास्यत । व्येञ संवरणे इति । ञित्वादुभयपदी । अनिट् । व्ययति—व्ययते इति । शपि अयादेशः । णलादौ तु आत्त्वे विव्यौ, विव्यतुरित्यादि प्राप्तम् । तत्राह—न व्यो लिटि । 'व्ये' इत्यस्य कृतात्त्वस्य षष्ठ्यन्तस्य 'व्यः' इति निर्देशः । आत्वमिति । 'आदेच उपदेशे' इत्यतः आदित्यनुवृत्तेरिति भावः । वृद्धिरिति । णलि व्ये अ इति स्थिते 'अचो ञ्णिति' इति वृद्धिरित्यर्थः । तथाच व्यै अ इति स्थितम् । ननु तत्र द्वित्वे 'लिट्यभ्यासस्य' इत्यभ्यासे यकारस्य सम्प्रसारणे पूर्वरूपे उत्तरखण्डस्य आयादेशे विव्याय इति रूपं वक्ष्यति । तदयुक्तम्, सम्प्रसारणात्प्राक् परत्वात् हलादिशेषेण यकारस्य निवृत्तौ वकारस्य सम्प्रसारणे उकारे सति उव्यायेत्यापत्तेरित्यत आह—परमपीति । उभयेषामिति । 'लिट्यभ्यासस्य' इति सूत्रे 'उभयेषा'मिति ग्रहणसामर्थ्यादित्यर्थः । तदेवोपपादयति—अन्यथेति । 'वचिस्वपियजादीनाम्' इत्यस्य 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनाम्' इत्यस्य च स्वरितत्वादेवानुवृत्त्यैव सिद्धे पुन'र्लिट्यभ्यासस्य' इत्यत्र 'उभयेषां'ग्रहणं पुनर्विधानार्थम् । तथाच वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं स्याल्लिटीति द्विर्विधानं लब्धम् । तत्र द्वितीयं विधानं नियमार्थम्-उभयेषामभ्यासस्य सम्प्रसारणमेव स्यान्नेतरदिति । तेनाभ्यासे एतत्सम्प्रसारणविषये कार्यान्तरनिवृत्तिः सिद्धेत्यर्थः । तथाच प्रकृते अभ्यासयकारस्य सम्प्रसारणे सिद्धं रूपमाह-विव्यायेति । विव्यतुः । विव्युरिति । 'वचिस्वपि' इति सम्प्रसारणे द्वित्वे णलीति भावः । थलि भारद्वाजनियमादिड्विकल्पमाशङ्क्याह—इड

नित्यमिट्। विव्ययिथ। विव्याय—विव्यय। विव्ये। व्याता। वीयात्। व्यासीष्ट। अव्यासीत्—अव्यास्त। १००८ ह्वेञ् स्पर्धायां शब्दे च। ह्वयति-ह्वयते।

२४१७ अभ्यस्तस्य च ६।१।३३॥ अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात्। ततो द्वित्वम्। जुहाव। जुहुवतुः। जुहुवुः। जुहोथ—जुहविथ। जुहुवे। ह्वाता।

---

स्यतीति। विव्ययिथेति। अकित्त्वादभ्यासस्य सम्प्रसारणमिति भावः। विव्यथुः। विव्यय विव्याय—विव्ययेति। अकित्त्वादभ्यासस्य सम्प्रसारणे णित्त्वविकल्पाद्वृद्धिविकल्प इति भावः। विव्यिव। विव्यिम। विव्ये इति। कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे वि इत्यस्य द्वित्वे यणिति भावः। विव्याते। विव्यिरे। विव्यिषे। विव्याथे। विव्यिढ्वे—विव्यियध्वे। विव्ये। विव्यिवहे। विव्यिमहे। व्यातेति। तासि एकारस्य आत्वम्। व्यास्यति-व्यास्यते। व्ययतु व्ययताम्। अव्ययत्—अव्ययत। व्ययेत्—व्ययेत। वीयादिति। कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयोः' इति दीर्घः। वीयास्ताम्। व्यासीष्टेति। आशीर्लिङि सीयुटि आत्वम्। अव्यासीदिति। लुङि सिचि आत्वे इट्सकोः सिज्लोपः। अव्यासिष्टामित्यादि। अव्यास्तेति। लुङि आत्मनेपदे अव्ये स् त इति स्थिते आत्वमिति भावः। अव्यासातामित्यादि। अव्यास्यत्—अव्यास्यत। ह्वेञ्धातुरनिट्। ञित्वादुभयपदी। शब्दे चेति। आकारणार्थः 'आगच्छे'-त्यादिशब्दोऽत्र विवक्षितः। ह्वयति—ह्वयते इति। शपि अयादेशः। णलादौ अकिति 'लिट्यभ्यासस्य' इति अभ्यासस्यैव सम्प्रसारणे प्राप्ते-अभ्यस्तस्य च। 'ह्वः सम्प्रसारणम्' इत्यनुवर्तते 'ह्व' इति कृतात्वस्य 'ह्वे' इत्यस्य षष्ठ्यन्तम्। तथाच अभ्यस्तीभूतस्य ह्वेञः सम्प्रसारणमिति लभ्यते। तथा सति णलि ह्व अ इति स्थिते द्वित्वे कृते 'उभे अभ्यस्तम्' इत्यभ्यस्तसंज्ञायामुत्तरखण्डस्य सम्प्रसारणे कृते पूर्वखण्डस्याभ्यासस्य 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधः स्यादित्यत आह-अभ्यस्तीभविष्यत इति। ननु यद्यभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं तर्हि द्वित्वं बाधित्वा परत्वात्सम्प्रसारणे सति 'विप्रतिषेधे यद्बाधितं तद्बाधितम्' इति न्यायात् द्वित्वं न स्यादित्यत आह—ततो द्वित्वमिति। सम्प्रसारणानन्तरं द्वित्वमित्यर्थः, पुनः प्रसङ्गविज्ञानादिति भावः। तथाच णलि आत्वे कृते सम्प्रसारणे पूर्वरूपे 'हु' इत्यस्य द्वित्वे 'कुहोश्चुः' इति चुत्वे तस्य जश्त्वे 'अचो ञ्णिति' इति वृद्धौ अवादेशे परिनिष्ठितं रूपमाह—जुहावेति। जुहुवतुरिति। अतुसि आत्वे आल्लोपं बाधित्वा अन्तरङ्गत्वात् 'अभ्यस्तस्य च' इत्यनेन सम्प्रसारणे 'वार्णादाङ्गं बलीयः' इत्यस्याऽनित्यतया अन्तरङ्गत्वात्पूर्वरूपे कृते द्वित्वे उवङिति भावः। यद्यपि किति 'वचिस्वपि' इति सम्प्रसारणेऽपि सिद्धमिदम्। तथापि अकिति आवश्यकमभ्यस्तस्य चेत्येतत् न्याय्यत्वादिहापि भवतीति बोध्यम्। एवं जुहुवुः। भारद्वाजनियमात्थलि वेट्। तदाह—जुहोथ, जुहविथेति। जुहुवथुः। जुहुव। जुहाव—जुहव। जुहुविव। जुहुविम। क्रादिनियमादिट्। जुहुवे। जुहुवाते। जुहुविरे। जुहुविषे। जुहुवा-

हूयात् । ह्वासीष्ट । २४१८ लिपिसिचिह्वश्च ३।१।५३॥ एभ्यश्च्लेरङ् स्यात् । २४१९ आत्मनेपदेष्वन्यतरस्याम् ३।१।५४॥ 'आतो लोपः—' ( सू २३७२ ) । अह्वत् । अह्वताम् । अह्वन् । अह्वत-अह्वास्त ।

अथ द्वौ परस्मैपदिनौ । १००९ वद व्यक्तायां वाचि । अच्छ वदति । उवाद । ऊदतुः । उवदिथ । वदिता । उद्यात् । 'वदव्रज—' ( सू २२६७ ) इति वृद्धिः । अवादीत् । १०१० टुओ श्वि गतिवृद्ध्योः । श्वयति । २४२० विभाषा श्वेः ६।१।३०॥ श्वयतेः सम्प्रसारणं वा स्याल्लिटि यङि च । शुशाव । शुशुवतुः ।

थे । जुहुविष्वे । जुहुवे । जुहुविवहे । जुहुविमहे । ह्वातेति । तासि आत्वम् । ह्वास्यति-ह्वास्यते । ह्वयतु-ह्वयताम् । अह्वयत्-अह्वयत । ह्वयेत्-ह्वयेत । हूयादिति । आशीर्लिङि आत्वे यासुटि कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयोः' इति दीर्घं इति भावः । ह्वासीष्टेति । आशीर्लिङि सीयुटि रूपम् । लुङि विशेषमाह-लिपिसिचि । लिपि सिचि ह्वा एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । 'च्लेः सिच्' इत्यतः च्लेरिति 'अस्यतिवक्तिख्यातिभ्यः' इत्यतः अङिति चानुवर्तते । तदाह-एभ्य इति । इदं परस्मैपदविषयम्, आत्मनेपदे विकल्पविधानात् । तदाह-आत्मनेपदेषु । आतो लोपः इति । अ ह्वा अ त् इति स्थिते 'आतो लोप इटि च' इत्यालोप इत्यर्थः । अह्वदिति । अह्वताम् । अह्वन्नित्यादि । अह्वतेति । लुङि आत्मनेपदे अङि रूपम् । अह्वेताम् । अह्वन्तेत्यादि । अङभावपक्षे त्वाह—अह्वास्तेति । अह्वासाताम् । अह्वासत । इत्यादि । अह्वास्यत्-अह्वास्यत ।

वद व्यक्तायां वाचीति । अक्षरविभागेन स्पष्टोच्चारणे इत्यर्थः । सेडयम् । अच्छ वदतीति । 'अच्छे'त्यव्ययमाभिमुख्ये । अभिमुखं वदतीत्यर्थः 'अच्छ गत्यर्थवदेषु' इति गतित्वादच्छेत्यस्य धातोः प्रागेव प्रयोग इति भावः । अकिति लिटि द्वित्वे 'लिट्यभ्यासस्य' इति सम्प्रसारणमिति मत्वा आह—उवादेति । किति लिटि तु 'वचिस्वपियजादीनाम्' इति द्वित्वात्प्राक् सम्प्रसारणे कृते द्वित्वे सवर्णदीर्घ इति मत्वाह—ऊदतुरिति । उवदिथेति । द्वित्वे अभ्यासस्य सम्प्रसारणमिति भावः । ऊदथुः । ऊद । उवाद-उवद । ऊदिव । ऊदिम । वदितेति । तासि इट् । वदिष्यति । वदतु । अवदत् । वदेत् । उद्यादिति । आशीर्लिङि यासुटः कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणमिति भावः । 'अवादीत्' इत्यत्र हलन्तलक्षणवृद्धेः 'नेटि' इति निषेधेऽपि 'अतो हलादेः' इति वृद्धिविकल्पमाशङ्क्य वदधातोः पृथक् ग्रहणाद्वृद्धिरित्यभिप्रेत्याह—वदव्रजेति वृद्धिरिति । एतदर्थमेव 'वदव्रजहलन्तस्य' इत्यत्र वदधातोः पृथक् ग्रहणमिति भावः । टु ओ श्वि इति । टुरोकारश्चेत् । श्वयतीति । शपि गुणाऽयादेशौ । लिटि तु अकिति णलादौ 'लिट्यभ्यासस्य' इत्यभ्यासस्य नित्यं सम्प्रसारणे प्राप्ते, किति तु अतुसादौ द्वित्वात्प्राक् 'वचिस्वपि' इति नित्यं सम्प्रसारणे प्राप्ते आह—विभाषा श्वेः । सम्प्रसा-

'श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः' ( वा ३४६२ )। तेन 'लिट्यभ्यासस्य-' ( सू २४०८) इति सम्प्रसारणं न। शिश्वाय । शिश्वियतुः । श्वयिता । श्वयेत् । शूयात्। 'जृस्तम्भु—' ( सू २२६१ ) इत्यङ् वा । २४२१ श्वयतेरः ७।४।१८॥ श्वयतेरिकारस्याकारः स्यादङि । पररूपम् । अश्वत् । अश्वताम् । अश्वन् । 'विभाषा धेट्श्व्योः' ( सू २३७५ ) इति चङ् । इयङ् । अशिश्वियत् । 'ह्मयन्त—' ( सू

रणमिति । 'ष्यङः सम्प्रसारणम्' इत्यतस्तदनुवृत्तेरिति भावः । लिटि यङि चेति। 'लिड्यङोः' इत्यनुवृत्तेरिति भावः । शुशावेति । वालि अभ्याससम्प्रसारणं बाधित्वा द्वित्वात्प्रागेव परत्वादनेन सम्प्रसारणे कृते ततो द्वित्वे वृद्ध्यावादेशाविति भावः । अकित्त्वाद्वचिस्वपीत्यस्य नात्र प्राप्तिः । तथाच लिट्यकित्स्वेकवचनेषु द्वित्वात् प्रागप्राप्तस्य सम्प्रसारणस्य विकल्पविधिः । 'शुशुवतु'रित्यादिद्विवचनबहुवचनेषु तु द्वित्वात्प्राक् वचिस्वपीति प्राप्तस्य सम्प्रसारणस्य विकल्पविधिः । तथाच उभयत्र विभाषेयम् । यङि त्वप्राप्तविभाषैवेयम्-शोशूयते । शेश्वीयते । तत्र णलि एतत्सम्प्रसारणाऽभावपक्षे श्वि इत्यस्य द्वित्वानन्तरमभ्याससम्प्रसारणे शुश्वाय इति प्राप्ते आह—श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध इति । लिट्यभ्याससम्प्रसारणस्य प्रतिषेधो वक्तव्य इत्यर्थः । तथा च 'श्वि' इत्यभ्यासस्य सम्प्रसारणाऽभावादभ्यासे इकार एव श्रूयते इत्याह—तेनेति । शूयादिति । आशीर्लिङि यासुटः कित्त्वाद्वचिस्वपीति सम्प्रसारणे पूर्वरूपे 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः । लुङि विशेषमाह—जृस्तम्भ्विति । तथाच अश्वि अ त् इति स्थिते इयङि प्राप्ते—श्वयतेरः । श्वयतेः अः इति च्छेदः । श्वयतेरिति श्तिपा निर्देशः । श्विधातोरित्यर्थः । 'अलोऽन्त्यस्य' इत्यन्त्यस्य इकारस्येति लभ्यते । 'ऋदृशोऽङि' इत्यतः अङीत्यनुवर्तते । तदाह—श्वयतेरिकारस्येति । अश्व अ त् इति स्थिते सवर्णदीर्घमाशङ्क्याह—पररूपमिति । आर्धधातुकोपदेशे अदन्तत्वाभावात् न अल्लोपः । अश्वन्निति । अश्वः । अश्वतम् । अश्वत । अश्वम् । अश्वाव । अश्वाम । अङभावपक्षे त्वाह-विभाषेति । इयङिति । 'चङि' इति द्वित्वमित्यपि ज्ञेयम् । तदाह—अशिश्वियदिति । अङश्चङश्चाऽभावे तु अश्वि ईत् इति स्थिते इकारस्य सिचि वृद्धौ सत्याम् आयादेशे अश्वायीदिति प्राप्ते आह—ह्मयन्तेति न वृद्धिरिति । श्विग्रहणादिति भावः । न च 'नेटि' इत्येव सिचि वृद्धेः निषेधसिद्धेः पृथक् श्विग्रहणं व्यर्थमिति वाच्यम्, 'नेटि' इति निषेधस्य हलन्तलक्षणवृद्धिमात्रविषयत्वात् । न च अश्वि ई त् इति स्थिते सिचि वृद्ध्यपेक्षया परत्वादन्तरङ्गत्वाच्च इकारस्य गुणे एकारे कृते इगन्तत्वाभावेन सिचि वृद्ध्यप्राप्त्या अयादेशे कृते यान्तत्वादेव हलन्तलक्षणवृद्धेर्निषेधसिद्धेः 'ह्मयन्त' इत्यत्र श्विग्रहणं व्यर्थमिति वाच्यम्, अनवकाशतया अपवादत्वेन गुणं बाधित्वा सिचि वृद्धेः प्राप्तौ तन्निषेधार्थत्वाच्छ्विग्रहणस्य । ह्मयन्तेत्यस्य व्याख्या-

२२९९ ) इति न वृद्धिः । अश्वयीत् । वृत् । यजादयो वृत्ताः । भ्वादिस्त्वाकृतिगणः । तेन चुलुम्पतीत्यादिसंग्रहः । इति भ्वादयः ।

२४२२ ऋतेरीयङ् ३।१।२९॥ ऋतिः सौत्रस्तस्मादीयङ् स्यात्स्वार्थे । जुगुप्सायामयं धातुः इति बहवः । कृपायां च इत्येके । 'सनाद्यन्ताः—' (सू २३०४) इति धातुत्वम् । ऋतीयते । ऋतीयांचक्रे । आर्धधातुकविवक्षायां तु 'आयादय आर्धधातुके वा' ( सू २३०५ ) इतीयङभावे 'शेषात्कर्तरि—' ( सू २१५९ ) इति परस्मैपदम् । आनर्त । अर्तिष्यति । आर्तीत् । इति तिङन्ते भ्वादिप्रकरणम् ॥

## अथ तिङन्तेऽदादिप्रकरणम् ॥ २ ॥

१०११ अद भक्षणे । द्वौ परस्मैपदिनौ । २४२३ अदिप्रभृतिभ्यः शपः २।४।७२॥ लुक् स्यात । अत्ति । अत्तः । अदन्ति । २४२४ लिटयन्यतर-

---

नम्—यजादयो वृत्ता इति । ननु भ्वादयो वृत्ता इति कुतो न व्याख्यायते इत्यत आह—भ्वादिस्त्वाकृतिगण इति । चुलुम्पतीति । चुलुम्पधातुर्लोपार्थकः, तस्यापि भ्वादिगणे पाठात् शब्विकरणत्वमिति भावः । इति भ्वादय इति । नचैवं सति 'अद भक्षणे' इत्यादीनां वक्ष्यमाणानां धातुत्वं कथमिति शङ्क्यम्, शब्विकरणाः भ्वादयः समाप्ता इत्यर्थात् ।

ऋतेरीयङ् । ऋतेर्धातुपाठे अदर्शनादाह—ऋतेः सौत्र इति । स्वार्थे इति । अर्थविशेषस्यानिर्देशादिति भावः । तकारान्तो धातुरयमिका निर्दिष्टो न श्तिपा। इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धे ईयङिति ईकारोच्चारणं व्यर्थं स्यात् । नच इदन्तत्वे सति 'एरनेकाचः' इति यण् स्यादिति वाच्यम्, एवमपि ऋतेङ्यः इति क्यप्रत्यये कृते 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घेणैव सिद्धे ईयङ्विधिर्व्यर्थः स्यात् । एके इति । अन्ये इत्यर्थः । ऋतीयते इति । ईयङोऽदन्तत्वात् शपि पररूपम् । ऋतीयाञ्चक्रे इति । 'कास्प्रत्ययात्' इत्याम् । ऋतीयिता । ऋतीयिष्यते । ऋतीयताम् । आर्तीयत । ऋतीयेत । ऋतीयिषीष्ट । आर्तीयिष्ट । आर्तीयिष्यत । आनर्तेति । ऋत् इति तकारान्तात् लिटि णलि द्वित्वे उरदत्वे रपरत्वे हलादिशेषे 'अत आदेः' इत्यभ्यासस्य दीर्घे 'तस्मान्नुड् द्विहलः' इति नुट्, 'नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते' इत्युक्तेरिति भावः । आनृततुः । आनृतुः । अनिट्सु अस्याऽपाठात् थलि नित्यमिट् । आनर्तिथ । आनृतथुः । आनृत । आनर्त । आनृतिव । आनृतिम । अर्तिता । अर्तिष्यति । ऋत्यात् । आर्तीदिति । 'इट ईटि' इति सिज्लोपः आडागमः । आर्तिष्यत् । इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां शब्विकरणनिरूपणं समाप्तम् ।

अथ लुग्विकरणान् धातून्निरूपयितुमुपक्रमते-अद भक्षणे इति । अनिडयम् । अदिप्रभृतिभ्यः । 'ण्यक्षत्रियार्षञितः' इत्यतो लुगित्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—लुक् स्यादिति । अदिप्रभृतिभ्यः परस्य शपो लुगिति फलितम् । अत्तीति ।

स्याम् २।४।४०॥ अदो घस्लृ वा स्याल्लिटि। जघास। 'गमहन-' (सू २३६३) इत्युपधालोपः। तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम्। 'शासिवसि-' (सू २४१०) इति षत्वम्। जक्षतुः। जक्षुः। घसेस्तासावभावात्थलि नित्यमिट्। जघसिथ। आद। आदतुः। 'इडत्त्यर्ति—' (सू २३८४) इति नित्यमिट्। आदिथ। अत्ता। अत्स्यति। २४२५ हुझल्भ्यो हेर्धिः ६।४।१०१॥ होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि—अत्तात्। अदानि। २४२६ अदः सर्वेषाम्

शपो लुकि दस्य चर्त्वेन तकारः। एवमत्त इत्यपि। अदन्तीति। एतदर्थमेव 'झोऽन्तः' इत्यत्र अकारादिरादेश आश्रितः। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः। लिट्यन्यतरस्याम्। 'अदो जग्धिः' इत्यतः अद इति 'लुङ्सनोर्घस्लृ' इत्यतो घस्लृ इति चानुवर्तते। तदाह—अद इति। आदेशे लृकार इत्। घसादेशः अनिट्। जघासेति। अकित्त्वात् 'गमहन' इत्युपधालोपो नेति भावः। जघस् अतुसिति स्थिते आह—गमहनेत्युपधालोप इति। 'असंयोगात्' इति कित्त्वादिति भावः। जघ्स् अतुसिति स्थिते घकारस्य चर्त्वं वक्ष्यन् उपधालोपस्य स्थानिवत्त्वमाशङ्क्याह—तस्येति। उपधालोपस्येत्यर्थः। जघ्स् अतुसिति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाऽभावादाह—शासीति। थलि तु क्रादिनियमान्नित्यमिट्। 'उपदेशेऽत्वतः' इति निषेधस्य तासौ नित्याऽनिड्विषयत्वात्। घस् तु तासौ न विद्यत एव, कुतस्तस्य तासावनिट्कत्वम्। 'यस्तासावस्ति अनिट् च' इति हि भाष्यम्। तदाह—घसेस्तासावित। जघसिथेति। जक्षथुः। जक्ष। जघास-जघस। जक्षिव। जक्षिम। घसादेशाभावपक्षे त्वाह—आदेति। थलि भारद्वाजनियमादिड्विकल्पे प्राप्ते आह—इडत्त्यर्तीति। आदिथेति। आदथुः। आद। आद। आदिव। आदिम। अत्ता। अत्स्यतीति। अनिट्। दस्य तः। अत्तु-अत्तात्। अत्ताम्। अदन्तु। अद् हि इति स्थिते 'झयो होऽन्यतरस्याम्' इति हकारस्य पूर्वसवर्णविकल्पेन धकारविकल्पे प्राप्ते—हुझल्भ्यो हेर्धिः। झलन्तेभ्य इति। अङ्गविशेषणत्वात् तदन्तविधिरिति भावः। अनेकाल्त्वात् सर्वादेशः। 'रुदिहि'त्यत्र तु न, निर्दिश्यमानहेरिटा व्यवहितत्वात्, इट्सहितस्य त्वनिर्दिश्यमानत्वादिति भाष्ये स्पष्टम्। अत्तादिति। धित्वात् परत्वात्तातङ्। तस्य स्थानिवत्त्वेन हित्वेऽपि न पुनर्धित्वम् 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायात्। अत्तम्। अत्त। अदानीति। 'आडुत्तमस्य' इत्याडागमः। एतदर्थमेव आडागमे दीर्घोच्चारणमिति भावः। अदाव। अदाम। लङि आद् स् इति स्थिते—अदः सर्वेषाम्। अद इति पञ्चमी। 'तस्मादित्युत्तरस्य' इति परिभाषया परस्येति लभ्यते। 'गुणोऽपृक्ते' इत्यतः अपृक्त इति 'तुरुस्तुशम्यमः' इत्यतः 'सार्वधातुके' इति चानुवर्तते। सप्तमीद्वयं च षष्ठ्या विपरिणम्यते। 'अड् गार्ग्यगालवयोः' इत्यतः अडित्यनुवर्तते। 'गार्ग्यगालवयो'रित्यस्यानुवृत्तिनिवृ-

७।३।१०॥ अदः परस्यापृक्तसार्वधातुकस्याऽडागमः स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यास्ताम् । अद्यासुः । २४२७ **लुङ्सनोर्घस्लृ २।४।३७॥** अदो घस्लृ स्याल्लुङि सनि च । लृदित्वादङ् । अघसत् । १०१२ हनहिंसागत्योः । प्रणिहन्ति । २४२८ **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६।४।३७॥** अनुनासिक इति लुप्तषष्ठीकं पदं वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनु [षणु] क्षणुक्षिणुऋणतृणुघृणुवनुमनु

त्यये सर्वेषामिति, तदाह—अदः परस्येत्यादिना टित्त्वादाद्यवयवः । तदाह—आदादिति । आत्तामिति । अपृक्तग्रहणान्नाऽडागम इति भावः । विधिलिङि रूपमाह—अद्यादिति । शपो लुकि अतः परत्वाऽभावात् 'अतो येयः' इति नेति भावः । मिपः अमि यासुटि सलोपे सवर्णदीर्घे अद्याम् । अद्याव । अद्याम । आशीर्लिङि अद्यादिति सिद्धवत्कृत्याह—अद्यास्तामिति । लुङि अद् स् त् इति स्थिते—लुङ्सनोर्घस्लृ । 'अदो जग्धिः' इत्यतः अद इत्यनुवर्तते । तदाह—अद इति । लृदित्त्वस्य प्रयोजनमाह—लृदित्वादिति । हनधातुरनिट् । प्रणिहन्तीति । शपो लुक् । नस्याऽनुस्वारपरसवर्णौ । 'नेर्गद' इति णत्वम् । अनुदात्तोपदेश । 'ऊदॄदन्तै'रित्यादिभिः संगृहीता अनुदात्तोपदेशाः, वनतिर्भौवादिकः, तनोत्यादयस्तु 'तनु विस्तारे' इत्यादिना पठिष्यन्ते । एतेषामनुनासिकस्य लोपः स्यात् झलादौ क्ङिति इति प्रतीयमानार्थः । एवं सति मुक्तमित्यादौ मुचादीनामपि मकारादिलोपः स्यात् । तत्राह—अनुनासिक इति । लुप्तषष्ठीक पदमिति । एवमप्युक्तातिप्रसङ्गतादवस्थ्यादाह—वनतीतरेषां विशेषणमिति । अनुदात्तोपदेशानां तनोत्यादीनां चेत्यर्थः । तथाच विशेषणत्वात्तदन्तविधौ अनुनासिकान्तानामनुदात्तोपदेशानां तनोत्यादीनां वनतेश्चेत्येषामन्तस्य लोपः स्यादित्यर्थलाभान्मुक्तमित्यादौ नातिप्रसङ्गः । तदाह—अनुनासिकान्तानामित्यादिना । वनधातोस्तु अनुनासिकान्तत्वान्न विशेषणम्, अव्यभिचारादिति भावः । अत्रानुदात्तोपदेशान् अनुनासिकान्तान् दर्शयति—यमिरमीति । अनुदात्तोपदेशेषु एतेषामेव षण्णामनुनासिकान्तत्वादिति भावः । अथ तनोत्यादीननुनासिकान्तान् दर्शयति—तनुक्षणु क्षिण्वति । 'मनु' इत्यन्तसमाहारद्वन्द्वात् प्रथमैकवचनान्तम् । एतेऽष्टौ तनोत्यादयोऽनुनासिकान्ता इत्यर्थः । 'तनु विस्तारे' इत्यारभ्य 'डु कृञ् करणे' इत्यन्ता दश धातवस्तनोत्यादयः । तत्र करोतिरनुनासिकान्तत्वाभावादिह न गृह्यते । 'जनसनखनां सञ्झलोः' इति सनोतेरात्त्वस्य वक्ष्यमाणत्वात् सोऽप्यत्र न गृहीतः । 'वनु याचने' इति तनादौ पठितम् । तस्य उविकरणतया, उदित्वेन च वनतिग्रहणेनाग्रहणात् तनादौ पठितस्यापि पृथग्ग्रहणम् । तत्र तत्र तानादिकस्य वनेरुदित्त्वात् 'उदितो वा' इति क्त्वायामिड्विकल्पात् 'यस्य विभाषा'

तनोत्यादयः । हतः । घ्नन्ति । **२४२९ वमोर्वा ८।४।२३॥** उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः । प्रहण्मि—प्रहन्मि । प्रहण्वः—प्रहन्वः । 'हो हन्तेः—' (सू ३५८) इति कुत्वम् । जघान । जघ्नतुः । जघ्नुः । **२४३० अभ्यासाच्च ७।३।५५॥** अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ-जघन्थ । हन्ता । 'ऋद्धनोः—' ( सू १३६६ ) इतीट् । हनिष्यति । हन्तु-हतात् । घ्नन्तु । **२४३१ हन्तेर्जः ६।४।३६॥** हौ परे । आभीयतया जस्यासिद्धत्वाद्धेर्न लुक् । जहि । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहनम् । **२४३२ आर्धधातुके २।४।३५॥** इत्यधिकृत्य । **२४३३ हनो वध**

---

इति निष्ठायामिडभावे वतः वतवान् इत्युदाहरणम् । वनतेस्तु भौवादिकस्य उदित्त्वाभावान्निष्ठायां सेट्कत्वेऽपि क्तिनि वतिरित्युदाहरणम्, तत्र 'तितुत्रतथसिसुसरकसेषु च' इति इण्निषेधादित्यलम् । हत इति । तसि अनुदात्तोपदेशानुनासिकान्तत्वादनकारलोपः, 'सार्वधातुकमपित्' इति तसो ङित्त्वात् । घ्नन्तीति । अजादिङित्परकत्वात् 'गमहन' इत्युपधालोपे 'हो हन्तेः' इति कुत्वेन हस्य घः । हंसि । हथः । हथ । वमोर्वा । 'उपसर्गादसमासेऽपि' इत्यतः उपसर्गादित्यनुवर्तते । 'रषाभ्यां नो णः' इति सूत्रमनुवर्तते । 'हन्तेरत्पूर्वस्य' इत्यतो हन्तेरिति । तदाह—उपसर्गस्थान्निमित्तादिति । णलि जहानेति स्थिते आह—हो हन्तेरिति । 'अभ्यासाच्च' इत्यपेक्षया अस्यान्तरङ्गत्वेन न्याय्यत्वादिति भावः । जघ्नतुरिति । 'गमहन' इत्युपधालोपे 'हो हन्तेः' इति कुत्वम् । थलि भारद्वाजनियमादिड्विकल्पे जहनिथ जहन् थ, इति स्थिते ञ्णित्प्रत्ययपरत्वाभावान्नकारपरत्वाभावाच्च 'हो हन्तेः' इति कुत्वाऽप्राप्तौ—अभ्यासाच्च । 'हो हन्तेः' इत्यनुवर्तते । 'चजोः कु घिण्ण्यतोः' इत्यतः कुग्रहणं च । तदाह—अभ्यासात् परस्येत्यादिना । जघनिथ, जघन्थेति । इडभावे नस्याऽनुस्वारपरसवर्णौ । जघ्नथुः । जघ्न । जघान-जघन । जघ्निव । जघ्निम । लृटि स्ये इण्निषेधमाशङ्क्याह—ऋद्धनोरिति । हन् हि इति स्थिते 'हुझल्भ्यः' इति धित्वे प्राप्ते—हन्तेर्जः । 'शा हौ' इत्यतः हौ इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—हौ परे इति । कृते जादेशे 'अतो हेः' इति हेर्लुकमाशङ्क्य आह—आभीयतयेति । जहीति । हतात् । हतम् । हत । हनानीति । आटः पित्त्वेन ङित्त्वाऽभावान्नोपधालोप इति भावः । अहन्निति । लङ्स्तिपि, 'हल्ङ्या' इति इकारलोपे 'संयोगान्तस्य' इति तकारलोपः । न्याय्यत्वाद्धल्ङ्यादिलोपो वा । अहनमिति । अहन्व । अहन्म । झलादिपरकत्वाऽभावान्नोपधादीर्घः । विधिलिङि हन्यात्, हन्याताम् इत्यादि । आशीर्लिङि वधादेशं वक्ष्यन्नाह—आर्धधातुके । इत्यधिकृत्येति । 'अदो जग्धिः' इत्यादिविषयो वक्ष्यन्त इति शेषः । तदधिकारस्थं सूत्रमाह—हनो वध । वधेति लुप्तप्रथमाकम् । हनो वधादेशः स्यादार्धधातुके लिङीत्यर्थः ।

लिङि २।४।४२॥ २४३४ लुङि च २।४।४३॥ वधादेशोऽदन्तः । 'आर्धधातुके' ( सू २३०७ ) इति विषयसप्तमी । तेनार्धधातुकोपदेशेऽकारान्तत्वात् 'अतो लोपः–'(सू २३०८) वध्यात् । वध्यास्ताम् । आर्धधातुके किम् । विध्यादौ हन्यात्। 'हन्तेः–' ( सू ३५६ ) इति णत्वम् । प्रहण्यात् । अल्लोपस्य स्थानिवत्त्वात् 'अतो हलादेः–'( सू २२८४ ) इति न वृद्धिः । अवधीत् ।

अथ चत्वारः स्वरितेतः । १०१३ द्विष अप्रीतौ । द्वेष्टि । द्विष्टे । द्वेष्टा । द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु—द्विष्टात् । द्विड्ढि । द्वेषाणि । द्वेषै । द्वेषावहै । अद्वेट् । २४३५ द्विषश्च ३।४।११२॥ लङो झेर्जुस् वा स्यात् । अद्विषुः । अद्विषन् । अद्वेषम् । द्विष्यात् । द्विषीत । द्विक्षीष्ट । अद्विक्षत् । १०१४ दुह प्रपूरणे । प्रपूरण

लुङि च । हनो वधादेशः स्यात् लुङीत्यर्थः स्पष्टः । वधादेशोऽदन्त इति । अकारादकारो न सुखोच्चारणार्थं इति भावः । तत्प्रयोजनं तु अनुपदमेव अवधीत् इत्यत्र वक्ष्यते । ननु आशीर्लिङि हन् यादिति स्थिते आर्द्धधातुके परे कृतस्य वधादेशस्य आर्द्धधातुकोपदेशे अकारान्तत्वाऽभावात् कथं वध्यादित्यत्र अल्लोप इत्यत आह—विषयसप्तमीति । तथाच आर्द्धधातुके विवक्षिते तत्प्रवृत्तेः प्रागेव वधादेशे कृते आर्द्धधातुकप्रवृत्तिरिति फलितम् । ततश्च आर्द्धधातुकोपदेशे वधादेशस्य अकारान्तत्वादल्लोपो निर्बाधः । तदाह–तेनेति । अवधीदिति । सिचि अल्लोपे कृते वधादेशस्य अकारान्ततया एकाच्त्वेऽप्यादेशोपदेशे अनेकाच्त्वेन 'एकाच उपदेशे' इति निषेधाऽभावात् सिच इट् । 'अतो हलादेः' इति वृद्धिस्तु न भवति, 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवत्त्वात् । एतदर्थमेव हि वधादेशस्य अदन्तत्वमाश्रितम् ।

स्वरितेत इति । उभयपदिन इति फलितम् । द्विष अप्रीताविति । अनिट् । द्वेष्टीति । पित्त्वेन ङित्त्वाऽभावाल्लघूपधगुण इति भावः । द्विष्टः । द्विषन्ति । द्वेक्षि । द्विष्ठः । द्विष्ठ । द्वेष्मि । द्विष्वः । द्विष्मः । तङि उदाहरति—द्विष्टे इति । ङित्त्वान्न गुणः । द्विषाते । द्विषते । द्विक्षे । द्विषाथे । द्विड्ढ्वे । द्विषे । द्विष्वहे । द्विष्महे । षढोरिति षस्य कत्वं मत्वा आह—द्वेक्ष्यतीति । द्विड्ढीति । हेर्धिः, षस्य जश्त्वेन डः, ष्टुत्वेन ढः । द्विष्टात् । द्विष्टम् । द्विष्ट । द्वेषाणीति । आटः पित्त्वेन ङित्त्वाभावात् गुणः, षात्परत्वाण्णत्वम् । द्वेषाव । द्वेषाम । द्विष्टाम् । द्विषाताम् । द्विषताम् । द्विक्ष्व । द्विषाथाम् । द्विड्ढ्वम् । द्वेषै इति । आटः पित्त्वेन ङित्त्वाऽभावात् गुण इति भावः । अद्वेडिति । लङस्तिप् । गुणः । इकारलोपः हल्ङ्यादिलोपः । 'वाऽवसाने' इति 'झलां जश्' इति च चर्त्वजश्त्वे इति भावः । अद्विष्टाम् । द्विषश्च । 'झेर्जुस्' इति 'लङः शाकटायनस्य' इति चानुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—लङो झेरिति । अद्विषन्निति । अद्वेट् । अद्विष्टम् । अद्विष्ट । अद्वेषम् । अद्विष्व । अद्विष्म । विधिलिङि परस्मैपदे आह—द्विष्यादिति । द्विष्याताम् । द्विष्युः इत्यादि । तङि आह—द्विषीतेति ।

पूरणाभावः । धात्वर्थं बाधते कश्चित् । दोग्धि । दुग्धः । धोक्षि । दुग्धे । धुक्षे । धुग्ध्वे । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अदुग्ध । अधुग्ध्वम् । अधुक्षत् । अधुक्षत । 'लुग्वा दुह—' ( सू २३६५ ) इति

द्विषीयाताम् । द्विषीरन् इत्यादि । आशीर्लिङि द्विष्यास्ताम् इत्यादि । तङ्याह—द्विक्षीष्टेति । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । द्विक्षीयास्तामित्यादि । लुङि परस्मैपदे आह—अद्विक्षदिति । 'शल इगुपधात्' इति क्सः । अद्विक्षताम् । अद्विक्षन् इत्यादि । तङि अद्विक्षत । अद्विक्षाताम् । अद्विक्षन्त । इत्यादि । अद्वेक्ष्यत् । अद्वेक्ष्यत । दुह प्रपूरणे इति । अयमनिट् । 'पयो दोग्धि' इत्यादौ प्रकृतपूरणस्यार्थस्यानवगमादाह—प्रपूरणं पूरणाभाव इति । ऊधःपूरणप्रतिकूलोभाव इत्यर्थः । ऊधसः सकाशात् क्षारणे इति यावत् । ननु प्रपूरणशब्दस्य कुतोऽयमर्थ इत्यत आह—धात्वर्थं बाधते कश्चिदिति । प्रसिद्धं धात्वर्थं कश्चिदुपसर्गो बाधित्वा अर्थान्तरं नयतीत्यर्थः । दोग्धीति । 'दादेः' इति हस्य घः, 'झषस्तथोः' इति तकारस्य धकारः, घस्य जश्त्वेन गः । एवं दुग्धः इत्यपि । दुहन्ति । धोक्षीति । हस्य घः, चर्त्वेन कः, षत्वमिति भावः । दुग्धः । दुग्ध । दोह्मि । दुह्वः । दुह्मः । लटि आत्मनेपदे आह—दुग्धे इति । धधगाः । दुहाते । दुहते । धुक्षे इति । हस्य घः, दस्य भष् धकारः, घस्य कः, षत्वम् । दुहाथे । धुग्ध्वे इति । हस्य घः, भष्, घस्य गः । दुह्वहे । दुह्महे । दुदोह । दुदुहतुः । दुदुहुः । अजन्ताऽकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट्-दुदोहिथ । दुदुहथुः । दुदुह । दुदोह । दुदुहिव । दुदुहिम । दुदुहे । दुदुहाते । दुदुहिरे । दुदुहिषे । दुदुहाथे । दुदुहिढ्वे-दुदुहिध्वे । दुदुहे । दुदुहिवहे । दुदुहिमहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । दोग्ध्विति । दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धीति । हेर्धिः । घत्वजश्त्वे । दुग्धात् । दुग्धम् । दुग्ध । दोहानीति । आटः पित्त्वादङित्त्वाद्गुणः । दोहाव । दोहाम । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्वेति । घत्वं भष् जश्त्वचर्त्वे षत्वम् । दुहाथाम् । धुग्ध्वमिति । हस्य घः, भष् घस्य जश्त्वम् । दोहै इति । आटः पित्त्वादङित्त्वाद्गुण इति भावः । दोहावहै । दोहामहै । लङि परस्मैपदे आह—अधोगिति । तिप् इकारलोपः, हल्ङ्यादिलोपः, हस्य घः, दस्य भष्, घस्य चर्त्वविकल्पः । अदुग्धाम् । अदुहन् । अधो(ग्) । अदुग्धम् । अदुग्ध । अदोहमिति । अदुह्व । अदुह्म । तङन्तङ्याह—अदुग्धेति । हस्य घः, तकारस्य धः, घस्य गः । अदुहाताम् । अदुहत । अदुग्धाः । अदुहाथाम् । अधुग्ध्वमिति । हस्य घः, दस्य भष् घस्य गः । अदुहि । अदुह्वहि । अदुह्महि । लुङि परस्मैपदे आह—अधुक्षदिति । 'शल इगुपधात्' इति क्सः । हस्य घः, दस्य भष्, घस्य चत्वं, षत्वम् । अधुक्षताम् । अधुक्षन् इत्यादि । लुङस्तङ्याह—अधुक्षतेति । 'क्सस्याऽचि' अधुक्षाताम् । अधुक्षन्त । अधुक्षथाः । अधुक्षाथाम् । अधुक्षध्वम् । अधुक्षि । अधुक्षावहि । अधुक्षामहि । लुग्वेति । त थास् ध्वम् वहि एषु चतुर्षु दन्त्यादिषु परेषु 'लुग्वा

लुक्पक्षे तथाऽध्वम्वहिषु लङ्वदपि । १०१५ दिह उपचये । उपचयो वृद्धिः । प्रणि-देग्धि । १०१६ लिह आस्वादने । लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिक्षे । लीढ्वे । लेढु । लीढाम् । लीढि । लेहानि । अलेट् । अलिक्षत् । अलिक्षत । अलिक्षाताम् । अलीढ । अलिह्वावहि-अलिक्ष्वहि । अलेदयत् । अलेदयत । १०१७ चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । 'विचक्षण:

दुह' इति क्सस्य लुक्पक्षे लङीव रूपाणीत्यर्थः । तथाच अदुग्धः । अदुग्धाः । अधु-ग्ध्वम् । अदुह्वहि । इत्यपि रूपाणीति फलितम् । अदोचयत् । अदोचयत । दिह उपचये इति । उपचयो वृद्धिः । अनिट् । प्रणिदेग्धीति । 'नेर्गद' इति णत्वम् । दुहधातुवद्रूपाणि । लिह आस्वादने इति । अनिट् । लेढीति । शपो लुकि ढत्वध-त्वष्टुत्वढलोपाः । लेक्षीति । सिपि हस्य ढः 'षढोः' इति ढस्य क इति भावः । लीढः । लीढ । लेह्मि । लटि तङ्याह—लीढे इति । लिहाते । लिहते । लिक्षे इति । ढकषाः । लिहाथे इति सुगमम् । लीढ्वे इति । ढत्वधत्वष्टुत्वढलोपदीर्घाः । लिहे । लि-ह्वहे । लिह्महे । लेढा । लेक्ष्यति । लेक्ष्यते । लेढ्विति । लीढात् । लीढाम् । लिहन्तु । लीढीति । हेर्धिः ढत्वधत्वष्टुत्वढलोपदीर्घाः । लीढात् । लीढम् । लीढ । लेहानीति । आटः पित्त्वेन ङित्त्वाऽभावाद्गुण इति भावः । लेहाव । लेहाम । लीढाम् । 'लिहा-ताम् । लिहताम् । लिक्ष्व । लिहाथाम् । लीढ्वम् । लेहै । लेहावहै । लेहामहै । अलेडिति । लङि तिपि शपो लुपि इकारलोपे हल्ङ्यादिलोपे हस्य ढः, चर्त्वविकल्प इति भावः । अलीढाम् । अलिहन् । अलेट् । अलीढम् । अलीढ । अलेहम् । अलिह्व । अलिह्म । अलीढ । अलिहाताम् । अलिहत । अलीढाः । अलिहाथाम् । अलीढ्वम् । अलिहि । अलिह्वहि । अलिह्महि । अलिक्षदिति । लुङि क्सः । अलिक्ष-ताम् । अलिक्षन् । अलिक्षः इत्यादि । तङि आह—अलिक्षतेति । अलीढेति । 'लुग्वा दुह' इति क्सलोपपक्षे रूपम् । अलिक्षाताम् । अलिक्षन्त । अलिक्षथाः-अलीढाः । अलिक्षाथाम् । अलिक्षध्वम्-अलीढ्वम् । अलिक्षि । 'लुग्वा दुह' इति लुग्विकल्पं मत्वा आह—अलिक्षावहि, अलिह्वहीति । अलेदयत, अलेदयतेति । लृङि रूपे । द्विवाद्य-श्चत्वारः स्वरितेतो गताः । चक्षिङ् व्यक्तायां वाचीति । गूढार्थस्य स्पष्टप्रतिपत्त्यर्थं विवरणे इत्यर्थः । अयं दर्शनेऽपीति । अतो 'पूर्वापरं चरतो माययैतौ । शिशू क्रीडन्तौ परियातो अध्वरम् । विश्वान्यन्यो भुवनानि चष्टे । ऋतूनन्यो विदधज्जायते पुनः' इत्यादौ तथा दर्शनादिति भावः । ननु चक्षिङित्यत्र इकारोच्चारणं व्यर्थम् । न च सुखोच्चारणार्थं तदिति वाच्यम्, अकारोच्चारणेनैव तत्सिद्धेः । नाप्यनुदात्तेत्त्वप्रयु-क्तात्मनेपदार्थं तदिति शक्यं वक्तुम्, ङित्त्वादेव तत्सिद्धेरित्यत आह—इकारोऽनु-दात्तो युजर्थ इति । 'अनुदात्तेतश्च हलादेः' इति ल्युडपवादयुच्प्रत्ययार्थः । अकारमु-च्चार्यैव इकारोच्चारणं तु उच्चारणार्थत्वाभावप्रतिपत्त्यर्थमिति भावः । विचक्षणः

प्रथयन्' । नुम् तु न । 'अन्ते इदितः' इति व्याख्यानात् । ङकारस्तु 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्' (प १७) इति ज्ञापनार्थः । तेन 'स्फायन्निर्मोकसन्धि—' इत्यादि सिध्यति । चष्टे । चक्षाते । 'आर्धधातुके' ( सू २४३२ ) २४३६ चक्षिङः ख्याञ् २।४।५४॥ २४३७ वा लिटि २।४।५५॥ अत्र भाष्ये ख्शादिरयमादेशः । असिद्धकाण्डे, 'शस्य यो वा' (वा १५८६) इति स्थितम् । ञित्त्वात्पदद्वयम् । चख्यौ—चख्ये । चक्शौ—चक्शे । चयो द्वितीयाः—' (वा ५०२३) इति तु न, चर्त्वस्यासिद्धत्वात् । चचक्षे । ख्याता—क्शाता । ख्यास्यति—ख्यास्यते ।

---

प्रथयन् इति मन्त्रः । अत्र लित्स्वरनिवृत्तये युच्प्रत्यय इति भावः । ननु युच्प्रत्ययार्थमिकारस्य इत्संज्ञावश्यकत्वे नुमागमः स्यादित्यत आह-नुम् तु नेति । कुत इत्यत आह—अन्ते इदित इति । 'इदितो नुम् धातोः' इत्यत्र 'गोः पादान्ते' इत्यस्मादन्ते इत्यनुवृत्तेरिति भावः । ननिवकारे युजर्थम् अनुदात्तेत्त्वस्य इत्संज्ञकत्वस्य च आवश्यकत्वे तत एवात्मनेपदसम्भवात् ङकारोच्चारणं व्यर्थमित्याशङ्क्य आह-ङकारस्त्विति । ङकारः नित्यात्मनेपदार्थः । अनुदात्तेत्त्वप्रयुक्तं त्वात्मनेपदं कदाचिन्न स्यात् । अतो ङकारोच्चारणम् । अत एव 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्' इति विज्ञायत इत्यर्थः । स्फायन्निति । 'स्फायी वृद्धा'वित्यनुदात्तेतोऽपि लटः शत्रादेशः, न त्वात्मनेपदं शानजिति भावः । वस्तुतस्तु अन्त्येत्कत्वव्याघातेन चरितार्थत्वात् ङकारोच्चारणमुक्तार्थे कथं ज्ञापकम्, भाष्ये तथा अनुक्तत्वाच्च । अतः पृषोदरादित्वकल्पनया स्फायन्निति कथंचित्साध्यमित्याहुः । चष्ट इति । 'स्कोः' इति कलोपः, ष्टुत्वं चेति भावः । चक्षाते इति । चक्षते । थासः सेभावे 'स्कोः' इति कलोपे 'षढोः' इति षस्य कत्वे षत्वे च कृते, चक्षे । चक्षाथे । ध्वमि 'स्कोः' इति कलोपे षस्य जश्त्वेन डकारे चड्ढ्वे । चक्षे । चक्ष्वहे । चक्ष्महे । आर्धधातुके इत्यनन्तरम् 'इत्यनुवर्तमाने' इति शेषः । चक्षिङः ख्याञ् । चक्षिङः ख्याञ् स्यादार्धधातुके परे इत्यर्थः । वा लिटि । चक्षिङः ख्याञ् वा स्याल्लिटीत्यर्थः । अत्रेति । 'चक्षिङः ख्याञ्' इति सूत्रभाष्ये 'ख्शादिरयमादेशः' इति, 'पूर्वत्रासिद्धम्' इत्यधिकारे 'ख्शाञः शस्य यो वा वक्तव्यः' इति च स्थितमित्यर्थः । तेन 'पुंख्यान'मित्यत्र यत्वस्यासिद्धत्वात् 'पुमः खय्यम्परे' इति रुत्वं नेति हल्सन्धिनिरूपणे प्रपञ्चितम् । ञित्त्वात्पदद्वयमिति । परस्मैपदमात्मनेपदं चेत्यर्थः । चख्यौ इति । ख्शादेशस्य शस्य यत्वपक्षे 'आत औ णलः' इति भावः । चख्यतुः । चख्युः । भारद्वाजनियमात्थलि वेट्—चख्यिथ-चख्याथ । चख्यथुः । चख्य । चख्यौ । चख्यिव । चख्यिम । क्रादिनियमादिट् । लिटि तङि ख्शाञादेशस्य शस्य यत्वपक्षे आह—चख्ये इति । चख्याते । चख्यिरे । चख्यिषे । चख्याथे । चख्यिध्वे-चख्यिढ्वे । चख्ये । चख्यिवहे । चख्यिमहे । शस्य यत्वाभावपक्षे त्वाह—चक्शौ चक्शे इति । खस्य चर्त्वेन क इति भावः । कृते चर्त्वे तस्य 'चयो द्वितीयाः शरि' इति खकारमाशङ्क्य निराक

क्शास्यति—क्शास्यते । अचष्ट । चक्षीत । ख्यायात्—ख्येयात् । क्शायात्—क्शेयात् । २४३८ अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२॥ एभ्यश्च्लेरङ् । अख्यत्-अख्यत । अक्शासीत्-अक्शास्त । 'वर्जने क्शाञ् नेष्टः' (वा १५६२) समचक्षिष्ट, इत्यादि ।

अथ पृच्यन्ता अनुदात्तेतः । १०१८ ईर गतौ कम्पने च । ईर्ते । ईराञ्चक्रे । ईरिता । ईरिष्यते । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट । १०१९ ईड स्तुतौ । ईट्टे । २४३९ ईशः से ७।२।७७॥ २४४० ईडजनोर्ध्वे च ७।२।७८॥ ईशीड्जना

---

रोति-चयः इति । अथ ख्याञादेशाऽभावपक्षे आह—चचक्षे इति । चचक्षिषे । चचक्षिध्वे । चचक्षिवहे । ख्यास्यते इति । चष्टाम् । चक्षाताम् । चक्षताम् । चक्ष्व । चक्षाथाम् । चड्ढ्वम् । चक्षै । चक्षावहै । चक्षामहै । लङ्याह—अचष्टेति । अचक्षाताम् । अचक्षत । अचष्ठाः । अचक्षाथाम् । अचड्ढ्वम् । अचक्षि । अचक्ष्वहि । अचक्ष्महि । विधिलिङ्याह—चक्षीतेति । आशीर्लिङि क्शादेशस्य शस्य यत्वपक्षे आह—ख्यायात-ख्येयादिति । 'वाऽन्यस्य' इत्येत्वविकल्पः । शस्य यत्वाऽभावपक्षे आह—क्शायात-क्शेयादिति । लुङि च्लेः सिचि प्राप्ते—अस्यतिवक्ति । 'च्लेः सिच्' इत्यतः च्लेरित्यनुवर्तते । तदाह—एभ्यश्च्लेरिति । अख्यत्-अख्यतेति । यत्वपक्षे रूपम् । आल्लोपः । ञित्वादुभयपदित्वादात्मनेपदेऽपि रूपम् । क्शादेशपक्षे परस्मैपदपक्षे तु आह-अक्शासीदिति । अङ्विधौ ख्यातीति यकारनिर्देशात् यत्वाभावपक्षे अङ् न भवति । किन्तु आदन्तत्वलक्षणौ सगिटौ । अक्शासिष्टाम् इत्यादि । अक्शास्तेति । आत्मनेपदे लुङि रूपम् । अक्शासाताम् , इत्यादि । अख्यास्यत् । अख्यास्यत । अक्शास्यत् । अक्शास्यत । वर्जने क्शाञ् नेष्ट इति । वार्तिकमिदम् । समचचक्षिष्टेति । अवर्जयदित्यर्थः । लुङि रूपम् ।

अथ पृच्यन्ता इति । 'पृची सम्पर्चने' इत्येतत्पर्यन्ता इत्यर्थः । ईर गताविति । सेट् । ईर्ते इति । ईराते । ईरते । ईर्षे । ईराथे । ईर्ध्वे । ईरे । ईर्वहे । ईर्महे । ईराञ्चक्रे इति । 'इजादेश्च' इत्याम् । ईरितेति । ईरिष्यते, इत्यपि ज्ञेयम् । ईर्तामिति । ईराताम् । ईरताम् । ईर्ष्वेति । ईराथाम् , इत्यपि ज्ञेयम् । ईर्ध्वमिति । ईरै । ईरावहै । ईरामहै । ऐर्त । ऐराताम् । ऐरत । ऐर्थाः । ऐराथाम् । ऐर्ध्वम् । ऐरि । ऐर्वहि । ऐर्महि । ईरीत । ईरिषीष्ट । ऐरिष्ट । ऐरिष्यत । ईड स्तुतौ । ईट्टे इति । तकारस्य ष्टुत्वेन टः, डस्य चर्त्वेन ट इति भावः । ईडाते । ईडते । ईड् से इति स्थिते सार्वधातुकत्वादिडागमे अप्राप्ते-ईशः से । ईडजनोर्ध्वे च । 'इडत्यर्ति' इत्यतः इडिति । 'रुदादिभ्यः' इत्यतः सार्वधातुक इति चानुवर्तते । से ध्वे इति लुप्तषष्ठीके इत्यभिप्रेत्य सूत्रद्वयं युगपद्व्याचष्टे-ईशीड्जनामिति । ध्वे इत्यस्य पूर्वं प्राक्कर्षः, से इत्यस्य उत्तरत्रानुवृत्तिरिति भावः । प्रत्येकं व्याख्याने तु ईशो ध्वेशब्दे परे न स्यात्, ईडजनोः सेशब्दे परे न स्यादिति भावः । ननु तर्हि 'ईशीडजनां

से-ध्वे-शब्दयोः सार्वधातुकयोरिट् स्यात्। योगविभागो वैचित्र्यार्थः। ईडिषे। ईडिध्वे। 'एकदेशविकृतस्यानन्यत्वात्' (प ३८) ईडिध्व। ईडिध्वम्। 'विकृतिग्रहणेन प्रकृतेर्ग्रहणात्' ऐड्ढ्वम्। १०२० ईश ऐश्वर्ये। ईष्टे। ईशिषे। ईशिध्वे। १०२१ आस उपवेशने। आस्ते। 'दयायासश्च' (सू २३२४)। आसाञ्चक्रे। आस्स्व। आध्वम्। आसिष्ट। १०२२ आङःशासु इच्छायाम्। आशास्ते। आशासाते। आङ्पूर्वत्वं प्रायिकम्। तेन 'नमोवाकं प्रशास्महे' इति सिद्धम्। १०२३ वस आच्छादने। वस्ते। वस्से। वध्वे। ववसे। वसिता। १०२४ कसि गति-

सेध्वयोः' इत्येकमेव सूत्रं कुतो न कृतमित्यत आह-योगविभागो वैचित्र्यार्थ इति। 'से' इत्यस्य उत्तरत्रानुवृत्तिः, 'ध्वे' इत्यस्य पूर्वत्रापकर्ष इति वैचित्र्यद्योतनार्थं इत्यर्थः। स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वादिति भावः। ईडिषे इति। ईडे। ईड्वहे। ईड्महे। लिटि तु ईडाञ्चक्रे इत्यादि। ईडिता। ईडिष्यते। ईट्टाम्। ननु ईडिध्वेत्यत्र कथमिट् सेशब्दाऽभावात्। तत्राह-एकदेशेति। एकदेशविकृतत्वात् स्वशब्दस्य इटि ईडिध्व इति रूपमित्यर्थः। ननु तर्हि ईड्ढ्वम् इत्यत्र कथं नेट्, ध्वेस्वरूपापेक्षया 'ध्वमित्यस्य एकदेशविकृतत्वादित्यत आह-विकृतीति। प्रकृतिग्रहणे तदेकदेशविकृतस्य ग्रहणम्। न तु विकृतिग्रहणे तदेकदेशविकृताया अपि प्रकृतेर्ग्रहणम्। 'पुरुषमानये'त्युक्ते हि अन्धोऽनन्धो वा पुरुष आनीयते। 'अन्धमानय' इत्यत्र तु अन्ध एवानीयते न त्वनन्धः। तथाच ध्वम एत्वे कृते ध्वेशब्दः, तेन च विकृतेन ध्वमित्यस्य तत्प्रकृतिभूतस्य न ग्रहणमिति नेडिति भावः। ईडे। ईडावहै। ईडामहै। ऐट्ट। ऐडाताम्। ऐडत। ऐट्ठाः। ऐडाथाम्। ऐड्ढ्वम्। ऐडि। ऐड्वहि। ऐड्महि। ईडीत। ईडिषीष्ट। ऐडिष्ट। ऐडिष्यत। ईशधातुरीडिवत्। ईष्टे इत्यादि। शस्य व्रश्चादिना षत्वे ष्टुत्वमिति विशेषः। आस उपवेशने। आस्ते इति। आसाते। आसते। आस्से। आसाथे। 'धि च' इति सलोपः। आध्वे। आसे। आस्वहे। आस्महे। इजादित्वादाम्भावादाह—दयायासश्चेति। आसिता। आसिष्यते। आस्ताम्। आसाताम्। आस्स्वेति। सकारद्वयमत्र बोध्यम्। आसाथाम्। आध्वमिति। 'धि च' इति सलोपः। आसै। आसावहै। आसामहै। आस्त। आसाताम्। आसत। आस्थाः। आसाथाम्। आध्वम्। आसि। आस्वहि। आस्महि। आसीत। आसीयाताम्। आसिषीष्ट। आसिषीयास्ताम्। आसिष्टेति। आसिषातामित्यादि। आसिष्यत। आङः शासु इच्छायामिति। आङः परः शास्धातुरिच्छायामित्यर्थः। नमोवाकमिति। वचेर्घञि वाकः। नमश्शब्दस्य वचनं कुर्महे इत्यर्थः। धातूनामनेकार्थत्वात् आशिषद्रूपाणि। वस आच्छादने इति। परिधाने इत्यर्थः। वध्वे इति। 'धि च' इति सलोपः। ववसे इति। वादित्वादेत्वाभ्यासलोपौ नेति भावः। वसितेति। अनि सु शब्विकरणस्यैव वसेर्ग्रहणमिति भावः। वसिष्यते। वस्ताम्। अवस्त। वसीत। वसिषीष्ट। अवसिष्ट। अवसिष्यत। कसि

शासनयोः। कंस्ते। कंसाते। कंसते। अयमनिदित् इत्येके—कस्ते। तालव्यान्तोऽप्य-निदित्। कष्टे। कशाते। कक्षे। कड्ढ्वे। १०२५ णिसि चुम्बने। निंस्ते। दन्त्यान्तोऽयम्। आभरणकारस्तु तालव्यान्त इति बभ्राम। निंस्से। १०२६ णिजि शुद्धौ। निङ्क्ते। निङ्क्षे। निञ्जिता। १०२७ शिजि अव्यक्ते शब्दे। शिङ्क्ते। १०२८ पिजि वर्णे। सम्पर्चने इत्येके। उभयत्रेत्यन्ये। अवयवे इत्यपरे। अव्यक्ते शब्दे इतीतरे। पिङ्क्ते। पृजि इत्येके। पृङ्क्ते। १०२९ वृजी वर्जने। दन्त्योष्ठ्यादिः। ईदित्। वृक्ते। वृजाते। वृक्षे। 'इदित्' इत्यन्ये। वृङ्क्ते। १०३० पृची सम्पर्चने। पृक्ते। १०३१ षूङ् प्राणिगर्भविमोचने। सूते। सुवाते। सुषुविषे। सोता—सविता। 'भूसुवोः—' (सू २२२४) इति गुणनिषेधः। सुवै। सविषीष्ट। असविष्ट। असोष्ट। १०३२ शीङ् स्वप्ने। २४४१ शीङः सार्वधातुके

गतीति। वसधातुवत् इदित्त्वान्नुमिति विशेषः। तालव्यान्त इति। तालव्योष्मान्त इत्यर्थः। कष्टे इति। 'व्रश्चे'ति शस्य षः, ष्टुत्वम्। कक्षे इति। शस्य षः, षस्य 'षढोः' इति कः, षत्वम्। कड्ढ्वे इति। शस्य षः, तस्य जश्त्वेन डः, धस्य ष्टुत्वेन ढः। णिसि चुम्बने इति। णोपदेशोऽयम्। नुमि 'नश्च' इत्यनुस्वारः। निंस्ते इत्यादि। निंस्से इत्यादि। नुमोऽनुस्वारः थासः सेभावः। दन्त्यान्तोऽयमिति। दन्त्योष्मान्तोऽय-मित्यर्थः। बभ्रामेति। 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सूत्रे वृत्त्यादौ दन्त्योष्मान्त-त्वोक्तेरिति भावः। णिजि शुद्धाविति। णोपदेशोऽयम्। अनिट्सु इरित एव ग्रहणादयं सेट्। निङ्क्ते इति। नुमि निनूज् ते इति स्थिते जस्य कुत्वेन गः, तस्य चर्त्वेन कः, नस्य अनुस्वारे परसवर्णो ङकारः। निञ्जाते। निङ्क्षे। निञ्जाथे। निङ्ग्ध्वे। निञ्जे। निञ्ज्वहे। निञ्ज्महे। लिटि संयोगात्परत्वात् किस्वाऽभावान्नलोपो न। निनिञ्जे। निनिञ्जाते इत्यादि। निञ्जिता। निञ्जिष्यते। निङ्क्ताम्। अनिङ्क्त। निञ्जीत। निञ्जिषीष्ट। अनिञ्जिष्ट। अनिञ्जिष्यत। शिजिपिजी अप्येवम्। पृजि इत्येके इति। ऋदुपधोऽयम्। वृजीधातुःऋदुपधः ईदित्, अतो नुम् नेति भावः। पृची सम्पर्चने इति। ऋदुपधोऽयम्। पपृचे इत्यादि। ईरादयः पृच्यन्ता अनुदात्तेतो गताः। षूङ्धातुः षोपदेशः, वेट्, ङित्वात्तङ्। सूते इति। सुवाते। सुवते। सूषे। सुवाथे। सूध्वे। सुवे। सूवहे। सूमहे। सुषुविषे इति। 'स्वरतीति' इड्विकल्पं बाधित्वा 'श्र्युकः क्किति' इति निषेधे प्राप्ते, क्रादिनियमान्नित्यमिट्। 'स्वरतिसूति' इति इड्विकल्पं मत्वा आह—सोता सवितेति। तिङन्तासां व्यवधानात् 'भूसुवोः' इति न गुणनिषेध इति भावः। सोष्यते। सविष्यते। सूताम्। सुवाताम्। सुवताम्। सूष्व। सूध्वम्। आटः पित्त्वा-द्गुणे प्राप्ते आह—भूसुवोरिति। सुवै इति। सुवावहै। सुवामहै। असूत। सुवीत। सविषीष्ट। सोषीष्ट इत्यादि स्पष्टम्। शीङ् स्वप्ने। सेट्। ङित्वात्तङ्। शीङः सार्वधा-

गुणः ७।४।२१॥ 'क्क्ङिति च' ( सू २२१७ ) इत्यस्यापवादः। शेते। शयाते।
२४४२ शीङो रुट् ७।१।६॥ शीङः परस्य झादेशस्यातो रुडागमः स्यात्। शेरते। शेषे। शेध्वे। शये। शेवहे। शिश्ये। शयिता। अशयिष्ट।

अथ स्तौत्यन्ताः परस्मैपदिनः ऊर्णुस्तूभयपदी। १०३३ यु मिश्रणे अमिश्रणे च। २४४३ उतो वृद्धिर्लुकि हलि ७।३।८९॥ लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य। यौति। युतः। युवन्ति। युयाव। यविता। युयात्। इह 'उतो वृद्धिः—' न, भाष्ये 'पिच्च ङिन्न ङिच्च पिन्न' इति व्याख्यानात्। विशेषविहितेन ङित्वेन पित्वस्य बाधात्। यूयात्। अयावीत्।

---

तुके। स्पष्टम्। 'सार्वधातुकार्द्धधातुकयोः' इत्येव सिद्धे किमर्थमिदमित्यत आह—क्क्ङिति चेत्यस्यापवाद इति। अस्य अदादेशे सति शे अते इति स्थिते—शीङो रुट्। 'झोऽन्तः' इत्यतो झ इत्यनुवर्तते। 'अदभ्यस्तात्' इत्यतः अदित्यनुवृत्तं षष्ठ्या विपरिणम्यते। तदाह—शीङः परस्य झादेशस्येति। रुटि उकार उच्चारणार्थः। टित्वादाद्यवयवः। शेध्वे इति। 'षीध्वलुङ्लिटाम्' इत्युक्तेर्न ढः। शिश्ये इति। शिश्यिषे। शिश्यिढ्वे-शिश्यिध्वे। शयितेति। शयिष्यते। शेताम्। शयाताम्। शेरताम्। शेष्व। शयाथाम्। शेध्वम्। शयै। शयावहै। शयामहै। अशेत। अशयाताम्। अशेरत। अशेथाः। अशयाथाम्। अशेध्वम्। अशयि। अशेवहि। अशेमहि। शयीत। शयिषीष्ट। अशयिष्टेति। अशयिष्यत इत्यपि ज्ञेयम्।

स्तौत्यन्ता इति। 'ष्टुञ् स्तुतौ' इत्यतः प्राक्तना इत्यर्थः। ऊर्णुस्तूभयपदीति। ञित्वादिति भावः। यु मिश्रणे अमिश्रणे चेति। अमिश्रणं पृथग्भावः। सेडयम्। उतो वृद्धिर्लुकि हलि। 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति अचिवर्जमनुवर्तते। लुकीति विषयसप्तमी, दर्शनाऽभावस्य लुकः परत्वासम्भवात्। तदाह—लुग्विषय इत्यादिना। यौतीति। गुणं बाधित्वा वृद्धिः। युत इति। अपित्वान्न वृद्धिः। युवन्तीति। अपित्वाद्वृद्ध्यभावे ङित्वाद्गुणाऽभावे उवङिति भावः। यौषि। युथः। युथ। यौमि। युवः। युमः। युयावेति। युयुवतुः। युयुवुः। युयविथ। युयुवथुः। युयुव। युयाव। युयव। युयुविव। युयुविम। यवितेति। उवङं बाधित्वा परत्वाद्गुणः। यविष्यति। यौतु-युतात्। युताम्। युवन्तु। हौ अपित्वान्न वृद्धिः। युहि-युतात्। युतम्। युत। आटि पित्वेऽपि हलादित्वाऽभावान्न वृद्धिः। पित्वेन ङित्वाऽभावाद्गुणः। यवानि। यवाव। यवाम। अयौत। अयुताम्। अयुवन्। अयौः। अयुतम्। अयुत। अयवम्। अयुव। अयुम। विधिलिङ्याह—युयादिति। अत्र यासुडागमसहितस्य तिपः पित्वादुतो वृद्धिमाशङ्क्याह—इह उतो वृद्धिर्नेति। कुत इत्यत आह—भाष्ये इति। व्याख्यानादिति। 'हलः श्नः शानज्झौ' इति सूत्रव्याख्यावसरे वचनादित्यर्थः। ननु यासुडागमसहितस्य तिपः पित्वात् 'पिच्च ङिन्न' इत्युक्तवचनेन 'यासुट् परस्मैपदेषु' इति ङि-

१०३४ रु शब्दे । २४४४ तुरुस्तुशम्यमः सार्वधातुके ७।३।९५॥ एभ्यः। पर-स्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात् । 'नाभ्यस्तस्य—' ( सू २५०३ ) इत्यतोऽनुवृत्तिसम्भवे पुनः सार्वधातुकग्रहणमपिदर्थम् । रवीति-रौति । रुवीतः-रुतः । हलादेः किम् । रुवन्ति । तिङः किम् । शाम्यति । सार्वधातुके किम् । आशिषि रूयात् । विध्यादौ तु रुयात्-रुवीयात् । अरावीत् । अरविष्यत् । 'तु' इति सौत्रो धातुर्गतिवृद्धिहिंसासु । अयं च लुग्विकरण इति स्मरन्ति । तवीति-तौति । तुवीतः—तुतः । तोता । तोष्यति । १०३५ णु स्तुतौ । नौति । नविता । १०३६ टु क्षु शब्दे । क्षौति । क्षविता । १०३७ क्ष्णु तेजने । क्ष्णौति ।

त्वस्याऽप्यभावात् 'क्ङिति च' इति गुणनिषेधाभावात् गुणः स्यादित्यत आह—विशेषविहितेनेत्यादि, बाधादित्यन्तम् । 'यासुट् परस्मैपदेषु' इति विशेषविहितेन यासुटो ङित्त्वेन तत्सहितस्य तिपो 'ङिच्च पिन्न' इति पित्त्वप्रयुक्तङित्त्वनिषेधस्य बाधात् ङित्त्वाद्गुणनिषेधो निर्बाध इत्यर्थः । आशीर्लिङ्याह—यूयादिति । आर्धधातुकत्वान्न वृद्धिः । 'अकृत्सार्वधातुकयोः' इति दीर्घः । यूयास्ताम् इत्यादि । लुङ्याह—अयावीदिति । सिचि वृद्धिः । 'इट ईटि' इति सिज्लोपः । अयाविष्टाम् इत्यादि । अयविष्यत् । तुरुस्तु । तु रु स्तु शमि अम् एषां समाहारद्वन्द्वात् पञ्चम्येकवचनम् । 'उतो वृद्धिः' इत्यतो हलीति 'भूसुवोः' इत्यतस्तिङीति 'ब्रुव ईट्' इत्यतः ईडिति 'यङो वा' इत्यतः वा इति चानुवर्तते । तदाह—एभ्य इत्यादिना । नाभ्यस्तस्येति । 'नाभ्यस्तस्याचि पिति सार्वधातुके' इत्यतः सार्वधातुके इत्यनुवृत्तिसम्भवे पुनः सार्वधातुकग्रहणं पिति इत्य-स्यानुवृत्तिर्मा भूदित्येतदर्थमित्यर्थः । रवीतीति । ईट्पक्षे हलादित्वाऽभावात् उतो वृद्धि-र्नेति भावः । रौतीति । ईडभावे 'उतो वृद्धिः' इति भावः । रुवीतः रुतः इति । अपित्वेऽपि ईड्विकल्प इति भावः । रुवन्तीति । अन्तादेशे कृते हलादित्वाऽभावान्नेडभावे उवङिति भावः । शाम्यतीति । श्यनस्तिङ्त्वाऽभावादीट नेति भावः । आशिषि रूया-दिति । आर्धधातुकत्वादीडभावे 'अकृत्सार्वधातुकयोः' इति दीर्घः । विध्यादौ त्विति । आदिना निमन्त्रणादिसङ्ग्रहः । रुयात् रुवीयादिति । हलादिसार्वधातुकत्वात् ईड्विकल्प इति भावः । ईडभावपक्षे हलादौ पिति सार्वधातुके 'उतो वृद्धिः' इति बोध्यम् । ननु धातुपाठे तु धातोरदर्शनात् धातुत्वाऽभावात्कथं ततः सार्वधातुकस्य ईड्विधिरित्यत आह—तु इति सौत्रो धातुरिति । गतिवृद्धिहिंसास्विति । अत्र व्याख्यानमेव शरणम् । ननु शपा व्यवधानादस्य सार्वधातुकपरत्वं कथमित्यत आह—अयं च लुग्विकरण इति स्मरन्तीति । अव्यवहिततिङः ईड्विधानमेवात्र बीजम् । शम्यमोस्तु, 'शमीध्वम् , अभ्यमीति' इति वेदे शपो लुकि बोध्यम् । अयमनिट् । हलादौ सार्वधातुके रुधातुवत् । आर्धधातुके तु नेट् । तदाह—तोतेति । णु स्तुताविति । णोपदेशोऽयं सेट् । युधातुवद्रूपाणि । क्षुक्ष्णुस्नुधातवः सेटः । युधातुवद्रूपाणि । चुक्षाव । चुक्ष्णाव । सु-

क्ष्णविता। १०३८ ष्णु प्रस्रवणे। स्नौति। सुष्णाव। स्नविता। स्नूयात्। १०३९ ऊर्णुञ् आच्छादने। २४४५ ऊर्णोतेर्विभाषा ७।३।९०॥ वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति-ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। 'ऊर्णोतेराम्नेति वाच्यम्' (वा १८०१) २४४६ न न्द्राः संयोगादयः ६।१।३॥ अचः पराः संयोगादयो नदराः द्विर्न भवन्ति। नुशब्दस्य द्वित्वम्, णत्वस्यासिद्धत्वात्। 'पूर्वत्रासिद्धीयमद्विर्वचने' (प १२७) इति त्वनित्यम् 'उभौ साभ्यासस्य' (सू २६०६) इति लिङ्गात्। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः। २४४७ विभाषोर्णोः १।२।३॥ इडादिप्रत्ययो वा ङित्स्यात्। ऊर्णुनुविथ। ऊर्णुनविथ। ऊर्णुविता। ऊर्णविता। ऊर्णौतु। ऊर्णवानि।

---

ष्णाव इति। षोपदेशोऽयमिति भावः। ऊर्णुञ्धातुरुभयपदी। सेट्। उतो वृद्धेर्नित्य प्राप्तौ—ऊर्णोतेर्विभाषा। 'उतो वृद्धिः' इत्यतो वृद्धिरिति हलीति चानुवर्तते। 'नाभ्यस्तस्य' इत्यतः पिति सार्वधातुके इति च, इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—वृद्धिः स्यादित्यादिना। लिटि 'इजादेः' इति 'कास्यनेकाच्' इति च आमि प्राप्ते आह—ऊर्णोतेराम् नेति। ऊर्णोतेर्नुवद्भावस्य वक्ष्यमाणतया इजादित्वस्य अनेकाच्त्वस्य चाभावादिति भावः। णलि ऊर्णु अ इति स्थिते 'अजादेर्द्वितीयस्य' इति नु इति रेफसहितस्य द्वित्वे हलादिशेषे नकारस्य निवृत्तौ ऊरुनावेति प्राप्ते—नन्द्राः संयोगादयः। 'एकाचो द्वे प्रथमस्य' इत्यतो द्वे इत्यनुवर्तते। 'अजादेर्द्वितीयस्य' इत्यतः अजादेरिति। अच्चासौ आदिश्चेति कर्मधारयात्पञ्चमी। न्, द्, र् एषां द्वन्द्वः। तदाह—अचः परा इति। ननु 'णु' इत्यस्य द्वित्वे खण्डद्वयेऽपि णकारः श्रूयेतेत्यत आह—नुशब्दस्य द्वित्वमिति। णत्वस्येति। धातुपाठे 'ऊर्णु' इति नकारस्य कृतणत्वस्य निर्देशः द्वित्वे कर्तव्ये तस्य णत्वस्याऽसिद्धत्वादित्यर्थः। लिङ्गादिति। 'उभौ साभ्यासस्य' इत्यस्यायमर्थः—साभ्यासस्याऽनितेरुपसर्गस्थान्निमित्तात्परौ खण्डद्वयगतौ नकारौ णत्वं प्राप्नुत इति। प्राणिणत् इत्युदाहरणम्। अत्र 'अनितेः' इति णत्वे कृते 'पूर्वत्रासिद्धीयमद्विर्वचने' इति णत्वस्याऽसिद्धत्वाऽभावमाश्रित्य णि इत्यस्य द्वित्वादेव खण्डद्वये णकारश्रवणसिद्धेः 'उभौ साभ्यासस्य' इति वचनं 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यतां गमयतीत्यर्थः। ऊर्णुनावेति। नुशब्दस्य द्वित्वे पूर्वनकारस्य 'रषाभ्याम्' इति णत्वम्। द्वितीयस्य तु 'अट्कुप्वाङ्' इति न णत्वम्। 'उभौ साभ्यासस्य' इति लिङ्गादेव। विभाषोर्णोः। 'गाङ्कुटादिभ्यः' इत्यतो ङिदित्यनुवर्तते, 'विज इट्' इत्यतः इडिति, इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—इडादीति। ऊर्णुनुविथेति। ङित्वपक्षे गुणाऽभावादुवङ्। ऊर्णुनविथेति। ङित्वाऽभावपक्षे गुणः। ऊर्णुनुवथुः। ऊर्णुनुव। ऊर्णुनाव। ऊर्णुनव। लुटि तासि इटि ङित्वविकल्पं मत्वा आह—ऊर्णविता ऊर्णुवितेति। ऊर्णु-

ऊर्णवै । २४४८ गुणोऽपृक्ते ७।३।९१॥ ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । इह वृद्धिर्न । 'ङिच्च पिन्न' इति भाष्यात् । ऊर्णूयात् । ऊर्णविषीष्ट-ऊर्णुविषीष्ट । और्णुवीत् । और्णुविष्टाम् । २४४९ ऊर्णोतेर्विभाषा ।७।२।६॥ इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत् । और्णाविष्टाम् । और्णाविषुः । और्णवीत् । १०४० द्यु अभिगमने । द्यौति । द्योता । १०४१ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सोता । असौषीत् । १०४२ कु शब्दे । कोता । १०४३ ष्टुञ् स्तुतौ । स्तौति-स्तवीति । स्तुतः-स्तुवीतः । स्तुते-स्तुवीते । 'स्तुसुधूञ्भ्यः-'

विष्यति । ऊर्णुविष्यति । ऊर्णविष्यते । ऊर्णुविष्यते । लङि और्णु त् इति स्थिते 'ऊर्णोतेर्विभाषा' इति वृद्धिविकल्पे गुणे च प्राप्ते—गुणोऽपृक्ते । 'ऊर्णोतेर्विभाषा' इत्यतः ऊर्णोतेरिति 'नाभ्यस्तस्य' इत्यतः पिति सार्वधातुके इति 'उतो वृद्धिः' इत्यतो हलीति चानुवर्तते । तदाह—ऊर्णोतेरित्यादि । वृद्ध्यपवाद इति । 'ऊर्णोतेर्विभाषा' इति वृद्धिविकल्पस्यापवाद इत्यर्थः । ऊर्णुयात् इत्यत्र 'विभाषोर्णोः' इति वृद्धिविकल्पमाशङ्कयाह—इह वृद्धिर्नेति । भाष्यादिति । तथा च यासुटो ङित्त्वेन पित्त्वाऽभावान्न वृद्धिविकल्प इति भावः । नचवं सति गुणनिषेधोऽपि न स्यादिति शङ्क्यम्, विशेषविहितेन यासुटो ङित्त्वेन 'ङिच्च पिन्न' इति पित्त्वप्रयुक्तङित्त्वनिषेधस्य बाध इति 'यु मिश्रणे' इति धाताववोक्तत्वादिति भावः । परस्मैपदे आशीर्लिङ्याह—ऊर्णूयादिति । 'अकृत्सार्वधातुकयोः' इति दीर्घः । ऊर्णूयास्तामित्यादि । आत्मनेपदे लिङ्याह—ऊर्णविषीष्ट-ऊर्णुविषीष्टेति । 'विभाषोर्णोः' इति ङित्त्वविकल्प इति भावः । लुङि परस्मैपदे और्णु ई त् इति स्थिते 'विभाषोर्णोः' इति ङित्त्वपक्षे गुणाऽभावे उवङि रूपमाह—और्णुवीदिति । ङित्त्वाऽभावपक्षे गुणे नित्यं प्राप्ते—ऊर्णोतेर्विभाषा । 'सिचि वृद्धिः परस्मैपदेषु' इत्यनुवर्तते, 'नेटि' इत्यतः इटीति च । तदाह—इडादावित्यादि । आत्मनेपदे तु लुङि-और्णविष्ट । और्णुविष्ट । और्णविष्यत् । और्णुविष्यत् । और्णविष्यत-और्णुविष्यत । द्यु अभिगमने इति । अनिट् । द्यौतीति । उतो वृद्धिः । सार्वधातुके लिटि च युधातुवत् । द्योतेति । द्योष्यति । अद्यौषीत् । षु प्रसवेति । षोपदेशोऽयम् । अनिट् । सौतीत्यादि युधातुवत् । एवं कु शब्दे इत्यपि । ष्टुञ् स्तुताविति । उभयपदी अनिट् । 'तुरुस्तुशम्यमः' इति ईड्विकल्पम्, ईडभावपक्षे तु उतो वृद्धिं च मत्वा आह—स्तौति स्तवीतीति । स्तुवन्ति । स्तौषि-स्तवीषि । स्तुथः-स्तुवीथः । स्तुथ-स्तुवीथ । स्तौमि-स्तवीमि । स्तुवः-स्तुवीवः । स्तुमः-स्तुवीमः । आत्मनेपदे लटि ईड्विकल्पं मत्वा आह—स्तुते स्तुवीते इति । स्तुवाते । स्तुवते । स्तुषे-स्तुवीषे । स्तुवाथे । स्तुध्वे-स्तुवीध्वे । स्तुवे । स्तुवहे-स्तुवीवहे । स्तुमहे-स्तुवीमहे । लिटि-तुष्टाव । तुष्टुवतुः । तुष्टुवुः । क्रादित्वात्थल्यपि नेट् भवति । तुष्टोथ । तुष्टुवथुः । तुष्टुव । तुष्टाव-तुष्टव । तुष्टुव ।

( सू २३८५ ) इतीट्। अस्तावीत्। 'प्राक्सितात्-' ( सू २२७६ ) इति षत्वम्। अभ्यष्टौत्। 'सिवादीनां वा—' ( सू २३५९ ) । पर्यष्टौत्—पर्यस्तौत्। १०४४ ब्रूञ् व्यक्तायां वाचि। २४५० ब्रुवः पञ्चानामादित आहो ब्रुवः। ३।४।८४॥ ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः। अकार उच्चारणार्थः। आह। आहतुः। आहुः। २४५१ आहस्थः ८।२।३५॥ झलि परे। चर्त्वम्। आत्थ। आहथुः। २४५२ ब्रुव ईट् ७।३।९३॥ ब्रुवः परस्य हलादेः पिति ईट् स्यात्। आत्थ इत्यत्र स्थानिवद्भावात्प्राप्तोऽयं 'झलि'

---

तुष्टुम। तुष्टुवे इत्यादि। स्तोता। स्तोष्यति। स्तोष्यते। स्तौतु-स्तुवीतु। स्तुतात्-स्तुवीतात्। स्तुताम्-स्तुवीताम्, स्तुवन्तु। स्तुहि-स्तुवीहि। स्तुतात्-स्तुवीतात्। स्तुतम्-स्तुवीतम्। स्तुत-स्तुवीत। स्तवानि। स्तवाव। स्तवाम। स्तुताम्-स्तुवीताम्। स्तुवाताम्। स्तुवताम्। स्तुष्व-स्तुवीष्व। स्तुवाथाम्। स्तुध्वम्-स्तुवीध्वम्। स्तवै। स्तवावहै। स्तवामहै। लङि अस्तौत्-अस्तवीत्। अस्तुताम्-अस्तुवीताम्। अस्तुवन्। अस्तौः-अस्तवीः। अस्तुतम्-अस्तुवीतम्। अस्तुत-अस्तुवीत। अस्तवम्। अस्तुव-अस्तुवीव। अस्तुम-अस्तुवीम। अस्तुत-अस्तुवीत। अस्तुवाताम् इत्यादि। विधिलिङि स्तुयात्-स्तुवीयात् इत्यादि। आत्मनेपदे स्तोषीष्टेत्यादि। लुङि सिचि इडभावे प्राप्ते आह—स्तुसुधूञ्भ्य इति। तथाच 'इट ईटि' इति सिज्लोपे सवि वृद्धौ अस्तावीदिति फलति। अस्ताविष्टामित्यादि। 'स्तुसुधूञ्भ्यः' इत्यत्र परस्मैपदेष्वित्यनुवृत्तेरात्मनेपदे इट् न। अस्तोष्ट। अस्तोषाताम् इत्यादि। ब्रूञ् व्यक्तायां वाचीति। ब्रुवः पञ्चानाम्। 'परस्मैपदानां णलतुस्' इत्यतः उत्तरसूत्रमिदम्। 'विदो लटो वा' इत्यतः लटो वेत्यनुवर्तते। तदाह—ब्रुवो लट इति। आदितः पञ्चानामिति। तिप् तस् झि सिप् थस् इत्येषामित्यर्थः। णलादयः पञ्चेति। णल् अतुस् उस् थल् अथुस् इत्येते पञ्चेत्यर्थः। उच्चारणार्थ इति। तत्प्रयोजनमात्थेत्यत्रानुपदमेव व्यक्तं भविष्यति। आहेति। ब्रूधातोर्लटस्तिपो णलि प्रकृतेराहादेशः। सिपस्थलि प्रकृतेराहादेशे आह् थ इति स्थिते हस्य ढत्वे प्राप्ते—आहस्थः। 'आह' इति षष्ठ्यन्तम्। 'झलो झलि' इत्यतो झलीत्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—झलि परे इति। आह् इत्यस्य थकारः स्यात् झलीति फलितम्। 'अलोऽन्त्यस्ये'त्यन्त्यस्य भवति। चर्त्वमिति। आथ् थ इति स्थिते प्रथमथकारस्य 'खरि चे'ति चर्त्वे आत्थ इति रूपमित्यर्थः। आहादेशस्य अकारान्तत्वे तु हकारादकारस्य थकारादेशे हस्य ढत्वे चर्त्वे आट्त्थ इति स्यादिति बोध्यम्। पञ्चानां णलाद्यभावपक्षे आह—ब्रुव ईट्। 'नाभ्यस्तस्य' इत्यतः पितीति 'उतो वृद्धिः' इत्यतो हलीति चानुवर्तते। तदाह—ब्रुवः परस्येत्यादिना। ननु आत्थेत्यत्र आहादेशस्य स्थानिवत्त्वेन ब्रूत्वात्ततः परस्य थस्य ईडागमः स्यादित्यत आह—आत्थेत्यत्रेति। स्थानिवद्भावात् प्राप्तोऽयमीडागमः

इति थत्वविधानान्न भवति । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । आर्धधातुकाधिकारे २४५३ ब्रुवो वचिः २।४।५३॥ उवाच । ऊचतुः । ऊचुः । उवचिथ-उवक्थ । ऊचे । वक्ता । ब्रवीतु-ब्रूतात् । 'ङिच्च पिन्न' इत्यपित्त्वादीण्न । ब्रवाणि । ब्रवै । ब्रूयात् । उच्यात् । 'अस्यतिवक्ति—' ( सू २४३८ ) इत्यङ् । २४५४ वच उम् ७।४।२०॥ अङि परे । अवोचत् । अवोचत ।

अथ शास्यन्ताः परस्मैपदिनः । इङ् त्वात्मनेपदी । १०४५ इण् गतौ । एति ।

---

न भवतीत्यन्वयः । कुत इत्यत आह—झलि इति । थत्वविधानादिति । 'आहस्थः' इति झलि परतः आहादेशस्य थत्वं विधीयते । ईटि तु सति झलादित्वाऽभावात्तद्विषयं स्यात् । अतः आथेत्यत्र ईट् नेति विज्ञायत इत्यर्थः । ब्रुवन्तीति । ब्रवीषि । ब्रूथः । ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः । लट आत्मनेपदे आह—ब्रूते इति । 'ब्रुवः पञ्चानाम्' इत्यत्र परस्मैपदानामित्यनुवृत्तेराहादेशो न । ब्रुवाते । ब्रुवते । ब्रूषे । ब्रुवाथे । ब्रूध्वे ब्रुवे । ब्रूवहे । ब्रूमहे ।

ब्रुवो वचिः । ब्रुवो वचिरादेशः स्यादार्धधातुके इत्यर्थः । इकार उच्चारणार्थः । उवाचेति । अकिति द्वित्वे कृते 'लिट्यभ्यासस्य' इति सम्प्रसारणमिति भावः । ऊचतुरिति । किति द्वित्वात्प्राक् 'वचिस्वपियजादीनाम्' इति सम्प्रसारणे द्वित्वे कृते हलादिशेषे सवर्णपरत्वात् 'अभ्यासस्यासवर्णे' इत्युवङभावे सवर्णदीर्घ इति भावः । वचिरनिट्सु परिगणितः । तस्य भारद्वाजनियमात्थलि वेट् । तदाह—उवचिथ उवक्थेति । इडभावे 'चोः कुः' । 'ब्रुव ईट्' इत्यत्र 'नाभ्यस्तस्य' इत्यतः सार्वधातुकग्रहणस्याप्यनुवृत्तेरीड् न । ऊचथुः । ऊच । उवाच—उवच । ऊचिव । ऊचिम । क्रादिनियमादिट् । ऊचे इति । ऊचाते । ऊचिरे । ऊचिषे । ऊचाथे । ऊचिध्वे । ऊचे । ऊचिवहे । ऊचिमहे । वक्तेति । वच्यादेशे इण्निषेधः । वक्ष्यति-वक्ष्यते । ब्रवीतु ब्रूतादिति । ननु तिबादेशस्य तातङः पित्त्वात् 'ब्रुव ईट्' इति ईडागमः स्यादित्यत आह—ङिच्चेति । ब्रूताम् । ब्रुवन्तु । ब्रूहि-ब्रूतात् । ब्रूतम् । ब्रूत । ब्रवाणीति । आटः पित्त्वेन ङित्त्वाऽभावात् न गुणनिषेध इति भावः । ब्रवाव । ब्रवाम । ब्रूताम् । ब्रुवाताम् । ब्रुवताम् । ब्रूष्व । ब्रुवाथाम् । ब्रूध्वमिति सिद्धवत्कृत्य आह—ब्रवै इति । आटः पित्त्वेन ङित्त्वाऽभावाद्गुणः । ब्रवावहै । ब्रवामहै । लङि-अब्रवीत् । अब्रूताम् । अब्रुवन् । अब्रवीः । अब्रूतम् । अब्रूत । अब्रवम् । अब्रूव । अब्रूम । विधिलिङ्याह—ब्रूयादिति । ब्रूयातामित्यादि । आशीर्लिङ्याह—उच्यादिति । वच्यादेशे 'वचिस्वपि' इति सम्प्रसारणमिति भावः । उच्यास्ताम् इत्यादि । आत्मनेपदे आशीर्लिङि-वक्षीष्ट । वक्षीयास्ताम् इत्यादि । अकित्त्वान्न सम्प्रसारणम् । लुङि सिचि वच्यादेशे अवच् स् त् इति स्थिते आह—अस्यतीति । अवच् अ त् इति स्थिते—वच उम् । शेषपूरणेन सूत्रं व्याचष्टे—अङि परे इति । 'ऋदृशोऽङि' इत्यतस्तदनुवृत्तेरिति भावः । मित्त्वादन्त्यादचः

इतः। २४५५ इणो यण् ६।४।८१॥ अजादौ प्रत्यये परे। इयङोऽपवादः। यन्ति। इयाय। २४५६ दीर्घ इणः किति ७।४।६९॥ इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि। ईयतुः। ईयुः। इययिथ-इयेथ। ऐत्। ऐताम्। आयन्। इयात्। ईयात्। २४५७ एतेर्लिङि ७।४।२४॥ उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यात् किति लिङि। निरियात्। 'उभयत आश्रयणे नान्तादिवत्'। अभीयात्। अणः

---

परः। आद्गुणः। तदाह—अवोचदिति। अवक्ष्यत्। अवक्ष्यत। इङ् इति। 'इङ् अध्ययने' इति धातुस्तु ङित्वादात्मनेपदीत्यर्थः। इण् गताविति। 'इणो यण्' इत्यादौ विशेषणार्थो णकारः। एतीति। शपो लुकि तिपः पित्वेन ङित्वाभावाद्गुणः। इत इति। अपित्वेन ङित्वान्न गुणः। इ अन्तीत्यत्र ङित्वाद्गुणाऽभावे इयङि प्राप्ते—इणो यण्। 'अचि श्नुधातु' इत्यतः अचीत्यनुवृत्तस्य अङ्गाधिकारलब्धाङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिरित्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—अजादौ प्रत्यये परे इति। इयङोऽपवाद इति। इयङि प्राप्ते एव तदारम्भादिति भावः। गुणवृद्धी तु परत्वादस्य बाधिके। यथा-अयनम्, आयकः। यन्तीति। एषि। इथः। इथ। एमि। इवः। इमः। इयायेति। द्वित्वे सति उत्तरखण्डवृद्धौ आयादेशे 'अभ्यासस्यासवर्णे' इति इयङ्। अतुसि तु द्वित्वे कित्वाद्गुणाभावे इ इ अतुस् इति स्थिते 'इणो यण्' इत्युत्तरखण्डस्य यणि इयतुरिति स्थिते—दीर्घ इणः। 'अत्र लोपः' इत्यतः अभ्यासस्येति, 'व्यथो लिटि' इत्यतो लिटीति चानुवर्तते। तदाह—इणोऽभ्यासस्येति। ईयतुरिति। भारद्वाजनियमात्थलि वेडिति मत्वा आह—इययिथ इयेथेति। ईयथुः। ईय। इयाय-इयय। ईयिव। ईयिम। एता। एष्यति। एतु—इतात्। इताम्। यन्तु। इहि—इतात्। इतम्। इत। अयानि। अयाव। अयाम। ऐदिति। लङि तिप इकारलोपे इकारस्य गुणे आटो वृद्धिः। आयन्निति। झेरन्तादेशे इकारलोपे इ-अन् इति स्थिते 'इणो यण्' इति यणि कृते तस्याभीयत्वेनासिद्धत्वादाडिति भावः। ऐः। ऐतम्। ऐत। आयम्। ऐव। ऐम। विधिलिङ्याह—इयादिति। इयाताम्। इयुरित्यादि। आशीर्लिङ्याह—ईयादिति। 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः। ईयास्तामित्यादि। एतेर्लिङि। 'उपसर्गादृध्रस्व ऊहतेः' इत्यतः 'उपसर्गाद्ध्रस्व' इति, 'केऽणः' इत्यतः अण इति, 'अयङ् यि क्ङिति' इत्यतः कितीति चानुवर्तते। तदाह—उपसर्गात्परस्येत्यादि। इह आर्द्धधातुके इति प्रामादिकम्। पूर्वसूत्रेषु तदभावादनुवृत्तेरसम्भवात्, किति लिङीत्येव सिद्धेश्च। ङितीति तु नानुवर्तते। इण आर्द्धधातुकलिङो ङित्वाऽभावात्। नन्वभीयादित्यत्रापि ह्रस्वः स्यादित्यत आह—उभयत इति। अत्र एकादेशस्य ईकारस्य पूर्वान्तत्वे उपसर्गानुप्रवेशादिण्धातुत्व न सम्भवति। परादित्वेन इण्धातुत्वाश्रयणे तु नोपसर्गात्परत्वम्, उपसर्गैकदेशस्य इकारस्य ईकारात्मना सत्त्वेन 'अभ्' इत्यस्य उपसर्गत्वाऽभावात्। एकादेशस्य आदिवत्त्वमाश्रित्य इण्धातु-

किम् । समेयात् । 'समीयात्' इति प्रयोगस्तु भौवादिकस्य । २४५८ इणो गा लुङि २।४।४५॥ 'गातिस्था—' ( सू २२२३ ) इति सिचो लुक् । अगात् । अगाताम् । अगुः । १०४६ इङ् अध्ययने । नित्यमधिपूर्वः । अधीते । अधीयाते । अधीयते । २४५९ गाङ् लिटि २।४।४९॥ इङो गाङ् स्याल्लिटि । लावस्थायां विवक्षिते वा । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अध्यये । गुणायादेशयोः कृतयोरुपसर्गस्य यण् । 'पूर्वं धातुरुपसर्गेण–' इति दर्शन-

त्वम्, अन्तवत्त्वमाश्रित्य तस्य उपसर्गानुप्रवेशश्चेत्यपि न सम्भवति । पूर्वपरशब्दाभ्यां च विरोधस्य पुरस्फूर्तिकतया विरुद्धातिदेशद्वयस्य युगपदसम्भवादित्यर्थः । इदं च अन्तादिवत्सूत्रे भाष्ये स्पष्टम् । न च 'अभ' इति भान्तस्य एकदेशविकृतन्यायेन उपसर्गत्वात् ईकारस्य परादिवत्त्वे ह्रस्वो दुर्वार इति वाच्यम्, लक्ष्यानुसारेण क्वचित् एकदेशविकृतन्यायानाश्रयणादिति शब्देन्दुशेखरे विस्तरः । समेयादिति । आ–इयात् एयात् । समेयादित्यत्र एकारस्य अनणत्वान्न ह्रस्वः । ग्रहणकसूत्रादन्यत्र पूर्वेणैव णकारेण प्रत्याहाराश्रयणादिति भावः । तर्हि क्वचित् 'समीया'दिति प्रयोगः कथमित्याशङ्क्याह—समीयादिति प्रयोगस्तु भौवादिकस्येति । 'इट किट कटी गतौ' इति प्रश्लिष्टस्य इधातोराशीर्लिङि 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घो बोध्य इति भावः । लुङि विशेषमाह—इणो गा लुङि । इण्धातोः गा इत्यादेशः स्याल्लुङीति सूत्रार्थः स्पष्टः । अगा स् त् इति स्थिते आह—गातिस्थेतीति । लुङि ऐष्यत् । इङ् अध्ययन इति । अधिरुपरिभावे । 'उपरिभावश्च पठने नियमपूर्वकत्व'मिति भूवादिसूत्रे भाष्ये स्पष्टम् । नित्यमधिपूर्व इति । धातुपाठे वचनमिदम् । अधीते इत्यत्र धातुरुपसर्गं न व्यभिचरतीति भूवादिसूत्रे भाष्ये । अधीते इति । 'सार्वधातुकमपित्' इति ङित्वात् गुणनिषेधे सवर्णदीर्घः । अजादौ तु इयङ् । तदाह—अधीयाते अधीयते, इति । अधीषे । अधीयाथे । अधीध्वे । अधीये । अधीवहे । अधीमहे । गाङ् लिटि । इङ इति । 'इङश्च' इत्यतस्तदनुवृत्तेरिति भावः । स्थानिवत्त्वादेव ङित्त्वे सिद्धे ङित्करणं 'गाङ्कुटादिभ्यः' इत्यत्र 'इणो गा लुङि' इत्यस्य ग्रहणाभावार्थमिति भाष्यम् । ननु कृते गाङादेशे द्वित्वे अभ्यासजश्त्वे आल्लोपे अधिजगे इति रूपं वक्ष्यति । तदयुक्तम् । 'द्विर्वचनेऽचि' इति गाङादेशनिषेधात् गाङादेशात् प्रागेव द्वित्वे सति उत्तरखण्डस्य गादेशे अधीगे इति रूपापत्तेरित्यत आह—लावस्थायां विवक्षिते वेति । तत्र 'लावस्थाया'मिति वार्तिकमते गाङादेशात् प्रागेव 'द्विर्वचनेऽचि' इति सूत्रं न प्रवर्तते, द्वित्वनिमित्ताऽचोऽभावात् । विवक्षिते इति भाष्यमते तु सुतरां 'द्विर्वचनेऽचि' इति न प्रवर्त्तते, अनैमित्तिकत्वादिति भावः । अधिजगिरे इति । अधिजगिषे । अधिजगाथे । अधिजगिध्वे । अधिजगे । अधिजगिवहे । अधिजगिमहे । लोटि, अधीताम् । अधीयाताम् । अधीयताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । इति सिद्धव-

नेऽन्तरङ्गत्वाद्गुणात्पूर्वं सवर्णदीर्घः प्राप्तः । 'णेरध्ययने वृत्तम्' (सू ३०६६) इति निर्देशान्न भवति । अध्यैत । परत्वादियङ् । तत आट् वृद्धिः । अध्यैयाताम् । अध्यैयत । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीध्वम् । अधीयीय । अध्येषीष्ट । २४६० विभाषा लुङ्लृङोः २।४।५०॥

स्कृत्य आह—अध्ययने इति । तत्र प्रक्रियां दर्शयति—गुणाऽयादेशयोरिति । 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति 'सुट्कात्पूर्वः' इति सूत्रसिद्धान्तादिति भावः । तथाच इट एत्वे आटि वृद्धौ अधि इ ऐ इति स्थिते गुणे अयादेशे यणिति फलितम् । ननु 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इत्यपि पक्षः 'सुट्कात्पूर्वः' इति सूत्रभाष्ये स्थितः । तथाच अधि इ ए इति स्थिते पूर्वसवर्णदीर्घे सति गुणायादेशयोः कृतयोः अध्यै इति स्यादित्याशङ्क्य निराकरोति—पूर्वं धातुरिति । साधनेनेत्यस्य कारकबोधकेनेत्यर्थः । प्रत्ययेनेति यावत् । दर्शने इत्येतस्य मते इत्यर्थः । 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इति पक्षे पूर्वप्रवृत्तिकत्वेन अन्तरङ्गत्वात् 'सार्वधातुकार्द्धधातुकयोः' इति गुणं बाधित्वा सवर्णदीर्घः प्राप्तो न भवतीत्यन्वयः । कुत इत्यत आह—णेरध्ययने वृत्तमिति निर्देशादिति । अन्यथा ल्युटि अनादेशे अधि इ अन इति स्थिते पूर्वं सवर्णदीर्घे ततो गुणाऽयादेशयोः कृतयोः अध्ययनमिति प्रसङ्गादिति भावः । वस्तुतस्तु पूर्वं धातुः साधनेन युज्यते इत्येव भाष्यसंमतम्, पूर्वं धातुरुपसर्गेण, 'नैतत्सारमिति' भाष्योक्तेरित्यन्यत्र विस्तरः । अध्ययावहै अध्ययामहै । लङ्याह—अध्यैतेति । अधि आ इ त इति स्थिते 'आटश्च' इति वृद्धौ यणिति भावः । अधि इ आतामिति स्थिते आटि वृद्धौ यणि अध्यैतामिति प्राप्ते आह—परत्वादियङिति । आटः प्रागेव परत्वादिकारस्य इयङि तत आटि वृद्धौ यणि 'अध्यैयाताम्'मिति रूपमित्यर्थः । अध्यैयतेति । 'आत्मनेपदेष्वनतः' इत्यदादेशः । अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् । इति सिद्धवत्कृत्याह—अध्यैयि । अध्यैवहि । अध्यैमहीति । विधिलिङ्याह—अधीयीतेति । अधि इ त इति स्थिते सीयुटि सुटि सलोपे यलोपे अधि इ ईत इति स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घ इति भावः । अधीयीयातामिति । अधि इ आतामिति स्थिते सीयुटि सुटि सलोपे अधि इ ईयातामिति स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घ इति भावः । झस्य रन्भावे सीयुटि सकारयकारलोपे अधि ई रन् इति स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घे अधीयीरन्, अधीयीथाः, अधीयीयाथाम् इति सिद्धवत्कृत्य आह—अधीयीध्वमिति । ध्वमि सीयुटि सलोपे यलोपे अधि इ ई ध्वमिति स्थिते इङः इयङि सवर्णदीर्घ इति भावः । अधीयीयेति । 'इटोऽत्' सीयुट् । सलोपः । अधि इ ईय इति स्थिते इङः इयङि सवर्णदीर्घ इति भावः । अधीयीवहि अधीयीमहि । आशीर्लिङ्याह—अध्येषीष्टेति । सीयुटि गुणः । यण् षत्वम् । अध्येषीयास्ताम्—अध्येषीरन् । अध्येषीष्ठाः । अध्येषीयास्थाम् । अध्येषीढ्वम् । अध्येषीय । अध्येषीवहि । अ-

इङो गाङ् वा स्यात् । २४६१ गाङ्कुटादिभ्योऽञ्णिन्ङित् १।२।१॥ गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः । २४६२ घुमास्थागापाजहातिसां हलि ६।४।६६॥ एषामात ईत्स्यात् हलादौ क्ङित्यार्धधातुके । अध्यगीष्ट-अध्यैष्ट । अध्यगीष्यत-अध्यैष्यत । १०४७ इक् स्मरणे । अयमप्यधिपूर्वः । 'अधीगर्थदयेशाम्—' ( सू ६१३ ) इति लिङ्गात् । अन्यथा हि 'इगर्थ—' इत्येव ब्रूयात् । 'इणवदिक इति वक्तव्यम्' ( वा १५७७ ) । अधियन्ति । अध्यगात् ।

ध्येषीमहि । लुङि आटि अधि आ इ त इति स्थिते-विभाषा लुङ्लृङोः । शेषं पूरयति-इङो गाङ् वा स्यादिति । 'इङश्च' इत्यतो 'गाङ् लिटि' इत्यतश्च तदनुवृत्तेरिति भावः । सिचि अधि अ गा स् त इति स्थिते-गाङ्कुटादिभ्यो । ञ् णश्च ञ्णौ, तौ इतौ यस्य सः ञ्णित्, सः न भवतीत्यञ्णित् । गाङ् च कुटादयश्चेति द्वन्द्वात्पञ्चमी । गाङिति ङकारानुबन्धात् 'इणो गा लुङि' इत्यस्य न ग्रहणमित्युक्तम् । नापि 'गाङ् गतौ' इत्यस्यात्र ग्रहणम्, तत्र ङकारस्यात्मनेपदप्रापणेन चरितार्थत्वात् । इङादेशस्य गाङो ङकारो नात्मनेपदप्रापणेन चरितार्थः, स्थानिवत्त्वेनैव तत्सिद्धेः । तदाह —गाङादेशादिति । एवं च सिचः ङित्त्वे आह— घुमास्था । 'घो अन्तकर्मणि' इत्यस्य कृतात्वस्य निर्देशः । घु मा स्था गा पा जहाति सा एषां द्वन्द्वात्षष्ठी । 'आर्धधातुके' इत्यधिकृतम् । 'आतो लोप इटि च' इत्यतः आत इति 'ईद्यति' इत्यतः ईदिति 'अनुदात्तोपदेश' इत्यतः क्ङिति इति चानुवर्तते । तदाह—एषामित्यादिना । अध्यगीष्टेति । अधि अ गा स् त इत्यत्र आकारस्य ईकारे षत्वे सिचः परत्वे तकारस्य ष्टुत्वेन ट इति भावः । 'गातिस्था' इति न सिज्लोपः, परस्मैपदाभावात् । अध्यगीषाताम् । अध्यगीषत । अध्यगीष्ठाः । अध्यगीषाथाम् । अध्यगीढ्वम् । अध्यगीषि　अध्यगीष्वहि । अध्यगीष्महि । गाङभावपक्षे आह—अध्यैष्टेति । अधि आ इ स् त इति स्थिते इकारस्य गुणे आटो वृद्धौ षत्वे षत्वष्टुत्वे इति भावः । अध्यैषाताम् । अध्यैषत । अध्यैष्ठाः । अध्यैषाथाम् । अध्यैढ्वम् । 'धि च' इति सलोपः । अध्यैषि । अध्यैष्वहि । अध्यैष्महि । लृङ्याह—अध्यगीष्यतेति । 'विभाषा लुङ्लृङोः' इति गाङादेशे स्ये तस्य 'गाङ्कुटादिभ्यः' इति ङित्त्वे 'घुमास्था' इति ईत्वे अटि षत्वे षत्वमिति भावः । अध्यगीष्येतामित्यादि । गाङभावपक्षे आह—अध्यैष्यतेति । अध्यैष्येतामित्यादि । इक् स्मरणे । अयमपीति । इङ्धातुवदयमपि धातुर्नित्यमधिपूर्वक इत्यर्थः । ननु धातुपाठे इङमधिकृत्य 'नित्यमधिपूर्वः' इति वचनात्, भूवादिसूत्रभाष्याच्च इङो नित्यमधिपूर्वकत्वं युक्तम् । अस्य तु तथात्वे किं प्रमाणमित्यत आह—अधीगर्थेति । तत्र हि अधीगर्थेत्यनेन स्मरणार्थकधातुर्विवक्षितः । इग्धातोरधिपूर्वकत्वाभावेऽपि स्मरणार्थकत्वे इगर्थेत्येतावतैव स्मरणार्थकधातुलाभात् तत्र अधीति व्यर्थं स्यात् । अत इग्धातुरयं नित्यमधिपूर्वक एव स्मरणार्थक इति विज्ञायत इत्यर्थः । इणवदिक इति । षष्ठ्यन्ताद्वतिः । इणः यत्

केचित्तु आर्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः । तन्मते यगन । तथा च भट्टिः—'सशीतयो राघवयोरधीयन्' इति । १०४८ वी गतिव्याप्तिप्रजनकान्त्यसनखाद-नेषु । प्रजनं गर्भग्रहणम् । असनं क्षेपणं । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । अडागमे सत्यनेकाच्त्वाद्यणिति केचित् । अव्यन् । अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । ईतः । इयन्ति । ईयात् ।

कार्यं 'इणो यण्' इत्यादि, तत् इको भवतीत्यर्थः । अध्येति, अधीतः इति सिद्धवत्कृत्य आह—अधियन्तीति । अन्तादेशे इयङपवादः । 'इणो यण्' इति यणिति भावः । अध्येषि । अधीथः । अधीथ । अध्येमि । अधीवः । अधीमः । अधीयाय । अतुसि तु द्वित्वे कृते अधि इ इ अतुसिति स्थिते 'इणो यण्' इति द्वितीयस्य इकारस्य यणि प्रथमस्य इकारस्य 'दीर्घ इणः किति' इति दीर्घे सवर्णदीर्घे, अधीयतुः । अधीयुः । अधीययिथ—अधीयेथ, अधीयथुः । अधीय । अधीयाय-अधीयय अधीयिव । अधीयिम । अध्येता । अध्येष्यति । अध्येतु-अधीतात् । अधीताम् । अधियन्तु । अधीहि-अधीतात् । अधीतम् । अधीत । अध्ययानि । अध्ययाव । अध्ययाम । अध्यैत् । अध्यैताम् । अध्यायन् । अध्यैः । अध्यैतम् । अध्यैत । अध्यायम् । अध्यैव । अध्यैम । इति सिद्धवत्कृत्य लुङ्याह—अध्यगादिति । इण्वत्त्वात् 'इणो गा लुङि' इति गादेशे 'गातिस्था' इति सिचो लुका लुप्तत्वात् 'घुमास्था' इति ईत्वं न । अध्यगाताम् । अध्यगाम् । अध्यगाव । अध्यैष्यत् । केचित्त्विति । आर्द्धधातुके इत्यधिकारे 'इणो गा लुङि' इति सूत्रे एतद्वार्तिकपाठस्य भाष्ये दर्शनात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादिति भावः । तन्मते यण् नेति । 'इणो यण्' इत्यस्य आर्धधातुकाधिकारस्थत्वाभावान्नातिदेश इत्यर्थः । तेन झोऽन्तादेशे इयङि सवर्णदीर्घे अधीयन्तीत्याद्यूह्यम् । राघवयोरधीयन्निति । 'अधीगर्थ'इति षष्ठी । राघवौ स्मरन्नित्यर्थः । अधिपूर्वात् इग्धातोर्लटः शतरि शपो लुकि इकारस्य इयङि सवर्णदीर्घे अधीयदिति शत्रन्तात् सुबुत्पत्तौ सौ रूपम् । वी गताविति । 'अजेर्व्यघञपोः' इति सूत्रभाष्यरीत्या अस्य 'आर्द्धधातुके नास्ति प्रयोगः' इति शब्देन्दुशेखरे स्थितम् । वियन्तीति । एकाच्त्वाद्यणभावादियङिति भावः । लोटि वेतु-वीतात् । वीताम् । वियन्तु । इति सिद्धवत्कृत्याह—वीहीति । हेरपित्त्वेन ङित्त्वान्न गुण इति भावः । वीतात् । वीतम् । वीत । वयानि । वयाव । वयाम । लङ्याह—अवेदिति । अवियन्निति । वी-अन्निति स्थिते परत्वादडागमात् प्रागियङि कृते अडागम इति भावः । मतान्तरमाह—अडागमे सतीति । 'लावस्थायाम'डिति पक्षे इयङं बाधित्वा अनेकाच्त्वात् यणि अव्यन्निति केचिदाहुरित्यर्थः । केचिदित्यस्वारसं सूचयति । तद्बीजं तु कृतेऽप्यटि यणि कर्तव्ये आभीयतया अटः असिद्धत्वादनेकाच्त्वाभावाद्यणभावादि-यङेवोचित इति शब्देन्दुशेखरे विस्तरः । अत्रेति । वी ई इति सवर्णदीर्घे 'वी गतौ'ति निर्देश इति भावः । ईयादिति । विधिलिङि आशीर्लिङि च रूपमिदं समानम् । 'एकोः

ऐषीत् । १०४९ या प्रापणे । प्रापणमिह गतिः । प्रणियाति । यातः । यान्ति । २४६३ लङः शाकटायनस्यैव ३।४।१११॥ आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः-अयान् । यायात् । यायाताम । यायास्ताम् । अयासीत् । १०५० वा गतिगन्धनयोः । गन्धनं सूचनम् । १०५१ भा दीप्तौ । १०५२ ष्णा शौचे । १०५३ श्रा पाके । १०५४ द्रा कुत्सायाम् गतौ । १०५५ प्सा भक्षणे । १०५६ पा रक्षणे । पायास्ताम् । अपासीत् । १०५७ रा दाने । १०५८ ला आदाने । 'द्वावपि दाने' इति चन्द्रः । १०५९ दाप् लवने । प्रणिदाति-प्रनिदाति । दाया-स्ताम् । अदासीत् । १०६० ख्या प्रकथने । अयं सार्वधातुकमात्रविषयः । 'सस्था-नत्वं नमः ख्यात्रे' ( वा १५६१ ) इति वार्तिकं तद्भाष्यं चेह लिङ्गम् । सस्थानो जिह्वामूलीयः । स नेति ख्याञादेशस्य ख्शादित्वे प्रयोजनमित्यर्थः । सम्पूर्वस्य

---

इति सलोपः । तत्र विधिलिङि ईयातामित्यादि, आशिषि तु ईयास्तामित्यादि, इति विशेषः । ऐषीदिति । सिचि वृद्धिः । या प्रापणे इति । ननु गच्छतीत्यर्थे यातीति कथमि-त्यत आह—प्रापणमिह गतिरिति । णिजर्थस्त्वविवक्षित इति भावः । प्रणियातीति । 'नेर्गद' इति णत्वम् । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् । लङः शाकटायनस्यैव । 'झेर्जुस्' इति 'आत' इति चानुवर्तते । तदाह—आदन्तादिति । जुस् वेति । शाकटायनग्रहणाद्विकल्पलाभ इति भावः । एवकारस्तु 'लिट् च' 'लिङाशिषि' इत्युत्तरार्थं इति भाष्ये स्पष्टम् । न च 'लोटो लङ्वत्' इत्यतिदेशात् यान्तु इत्यत्रापि जुस्विकल्पः शङ्क्यः, 'नित्यं ङितः' इत्यतो ङित इत्यनुवृत्त्यैव सिद्धेर्लङ्ग्रहणस्य लङ्-वद्भावमादाय प्रवृत्तिनिवारणार्थत्वात् । इदमपि भाष्ये स्पष्टम् । अयानीति । जुसभावे रूपम् । अयासीत् । ष्णाधातुः षोपदेशः । नस्य ष्टुत्वेन णत्वनिर्देशः । स्नाति । स्ना-यात—स्नेयात् । पा रक्षणे । 'एर्लिङि' इति सूत्रे 'गातिस्था' इत्यत्र च पिबतेरेव ग्रह-णादेत्त्वसिज्लुकौ न । तदाह—पायास्ताम् , अपासीत् इति । दाप् लवने । घुत्वाभावात् 'शेषे विभाषा' इति णत्वविकल्पं मत्वा आह—प्रणिदाति-प्रनिदातीति । घुत्वाऽभावा-दाशीर्लिङि एत्वं, लुङि लुक् च नेति मत्वा आह—दायास्तामिति, अदासीदिति च । ख्या प्रकथने । अयं सार्वधातुकमात्रविषय इति । मात्रशब्दोऽवधारणे । सार्वधातुक एवास्य ख्याधातोः प्रयोगः, न त्वार्द्धधातुक इत्यर्थः । कुत इत्यत आह—सस्थानत्वमिति । 'चक्षिङः ख्याञ्' इति सूत्रे ख्यास्थाने 'ख्शाञ्' इति वक्तव्यम् । अस्य शकारस्य 'पूर्व-त्रासिद्ध'मित्यधिकारे यकारो वक्तव्य इत्युक्त्वा 'प्रयोजनं सौप्रख्ये कुञ्विधि'रित्युप-क्रम्य 'सस्थानत्वं नमः ख्यात्रे' इत्युक्तं वार्तिके । तत्र नञमध्याहृत्य 'नमः ख्यात्रे' इति सस्थानत्वं न भवतीति व्याख्यातं भाष्ये । तदिदं वार्तिकं भाष्यं च ख्याधातो-रस्य सार्वधातुके एव प्रयोग इत्यत्र ज्ञापकमित्यर्थः । तत्र सस्थानपदं व्याचष्टे—सस्थानो जिह्वामूलीय इति । प्राचीनाचार्यसमयादिति भावः । स नेति । सः जिह्वामूलीयः श्रः

ख्यातेः प्रयोगो न' इति न्यासकारः। १०६१ प्रा पूरणे । १०६२ मा माने । अकर्मकः । 'तनौ ममुस्तत्र न कैटभद्विषः' इति माघः । उपसर्गवशेनार्थान्तरे तु सकर्मकः । 'उदरं परिमाति मुष्टिना' । 'नेर्गद—' ( सू २२८५ ) इत्यत्र नास्य ग्रहणम् । प्रणिमाति प्रनिमाति । १०६३ वच परिभाषणे । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । बहुवचनपरः इत्यन्ये । झिपरः इत्यपरे । वग्वि । वच्यात् । उच्यात् । अवोचत् । १०६४ विद ज्ञाने । २४६५ विदो लटो वा ३।४।८३॥

---

ख्यात्रे इत्यत्र न भवतीत्येतत् ख्याञादेशस्य खशादित्वविधौ, शस्य यत्वविधौ च प्रयोजनमित्यर्थः। खशादित्वे इति । यत्वविधावित्यस्याप्युपलक्षणम् । शकारस्थानिकयत्वस्यासिद्धत्वाद् । 'शर्परे विसर्जनीय' इति विसर्जनीयः इष्टः सिध्यति, जिह्वामूलीयस्त्वनिष्टो न भवतीति भाष्यवार्तिकहृदयम्। ख्याधातोरस्यार्द्धधातुकेऽपि प्रयोगसत्त्वे तु तृजन्ते ख्यातृशब्दे यकारस्य शकारस्थानिकत्वाभावात् असिद्धत्वाभावात् 'शर्परे विसर्जनीयः' इत्यस्याऽप्रवृत्तौ 'कुप्वोः' जिह्वामूलीयो दुर्वारः स्यात् । ततश्चार्धधातुके सर्वत्र न ख्याधातोः प्रयोग इति विज्ञायते, ज्ञापकस्य सामान्यापेक्षत्वादिति भावः । सम्पूर्वस्येति । सार्वधातुकेऽपीति भावः । अत्र व्याख्यानमेव शरणम् । एवञ्च 'संख्याति' इत्यादि नास्तीति फलितम् । सङ्ख्यादिशब्दास्तु ख्याञादेशस्येति बोध्यम् । मा माने इति । मानं परिमितिरिति भावः । तदाह—अकर्मक इति । 'माति घृतपात्रेऽस्मिन्निति उदाहरणम् । परिमितं भवतीत्यर्थः, संगृहीतं भवतीति यावत् । अत्रार्थे शिष्टप्रयोगसंवाद दर्शयति—तनौ ममुस्तत्रेति । 'तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः' इति माघकाव्ये (स० १) तपोधनस्य नारदस्य अभ्यागमेन आगमनेन सम्भवाः मुदः सन्तोषाः कैटभद्विषः श्रीकृष्णस्य तनौ शरीरे न ममुः परिमिता न बभूवुः । आधिक्याच्च सगृहीता बभूवुरिति यावत । अर्थान्तरे त्विति । परिच्छेदे त्वित्यर्थः । उदरमिति । 'उदर परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु' इति नैषधकाव्ये । कोऽपि कुतुकी दमस्वसुः दमयन्त्याः उदरं मुष्टिना परिमाति किमु ? परिगृह्णातीत्यर्थः। नास्य ग्रहणमिति । 'घुप्रकृतिमा'ङिति भाष्यादिति भावः । एवञ्च 'शेषे विभाषाऽकखादौ' इति णत्वविकल्प इति मत्वा आह—प्रणिमाति प्रनिमातीति । ममौ । ममिथ-ममाथ । ममिव । माता । मास्यति । मातु । अमात् । अमासीत् । अमास्यत् । वच परिभाषणे । अनिट् । अयमन्तीति । लटि प्रथमपुरुषबहुवचनं नास्तीत्यर्थः । बहुवचनपर इति । 'न प्रयुज्यते' इति शेषः । अस्मिन् पक्षे पुरुषत्रये बहुवचनं नास्ति । झिपर इति । 'न प्रयुज्यत' इति शेषः। अस्मिन् पक्षे लिडादिष्वपि प्र० पु० बहुवचनं नास्तीति भावः । तत्र लिटि अकिति 'लिट्यभ्यासस्य' इति सम्प्रसारणम् । उवाच । किति तु 'वचिस्वपि' इति सम्प्रसारणम् । ऊचतुः । उवचिथ—उवक्थ । ऊचिव । वक्ता । वक्ष्यति । वक्तु । अवक् । वच्यादिति । विधिलिङि रूपम् । आशीर्लिङि 'वचिस्वपि'

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे वेत्ति । वित्तः इत्यादि । विवेद । विविदतुः । 'उषविद' ( सू २३४१ ) इत्याम्पक्षे विद इत्यकारान्तनिपातनान्न लघूपधगुणः । विदाञ्चकार । वेदिता । २४६५ विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ३।१।४१॥ वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते, इति शब्दात् । २४६६ तनादिकृञ्भ्य उः ३।१।७९॥ तनादेः कृञश्च उप्रत्ययः स्यात् । शपोऽपवादः । तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम् । तेन 'न विश्वसेदविश्वस्तम्' इत्यादि सिद्धम् । विदाङ्करोतु ।

इति सम्प्रसारणं मत्वा आह—उच्यादिति । अवोचदिति । लुङि 'अस्यतिवक्ति' इति च्लेरङि 'वच उम्' इति भावः । विद ज्ञाने इति । अनिट्सु लुग्विकरणस्याऽग्रहणात् अयं सेट् । विदो लटो वा । 'परस्मैपदानां णलतुस्' इत्यादिसूत्रमनुवर्तते । 'विद' इति पञ्चमी । तदाह—वेत्तेर्लट इति । विन्दतिविद्यत्योस्तु शेन श्यना च व्यवधानात् नैते आदेशाः । इत्यादीति । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः । विविदतुरिति । विविदुः । विवेदिथ । विविदथुः । विविद । विवेद । विविदिव । विविदिम । आम्पक्षे इति । न लघूपधगुण इत्यन्वयः । कुत इत्यत आह—अकारान्तनिपातनादिति । 'उषविद' इति सूत्रे विदेत्यकारान्तत्वम् आम्सन्नियोगेन 'निपात्यत' इत्यर्थः । आमि अतो लोपः । तस्य 'स्थानिवत्त्वात्' न लघूपधगुण इति भावः । वेदितेति । वेदिष्यतीत्यपि ज्ञेयम् । विदाङ्कुर्वन्त्वित्यन्यतरस्याम् । 'कृञ् चानुप्रयुज्यते लिटि' इत्युत्तरमिदं सूत्रम् । इतिशब्दः प्रकारे । एवंजातीयकं वैकल्पेन प्रत्येतव्यमित्यर्थः । वेत्तेरिति । लुग्विकरणात् विदधातोः लोटि परे आम्प्रत्ययो निपात्यत इत्यर्थः । लोडन्तेति । आमन्ताद्विदेः लोडन्तकृञ्धातोः अनुप्रयोगश्च निपात्यत इत्यर्थः । ननु 'विदाङ्कुर्वन्तु' इति लोटि प्रथमपुरुषबहुवचनस्यैव सूत्रे निर्देशात् कथं लोडन्तसामान्यानुप्रयोग इत्यत आह—पुरुषेति । कुर्वन्त्विति प्रथमपुरुषो बहुवचनं च न विवक्षितमित्यर्थः । तयोस्तु नान्तरीयकमुच्चारणमिति भावः । इति शब्दादिति । तस्य प्रकारवचनस्य लोकप्रयोगानुसारित्वादिति भावः । तनादिकृञ्भ्य उः । शपोऽपवाद इति । अनेन शब्विषय एवास्य प्रवृत्तिरिति सूचितम् 'सार्वधातुके यक्' इत्यतः सार्वधातुकग्रहणस्य 'कर्तरि शप्' इत्यतः कर्तरीत्यस्य चानुवृत्तेरिति भावः । तेनेति । गणकार्यस्याऽनित्यतया 'श्वसेत्' इत्यत्र अदादिगणकार्यं शपो लुक् न भवतीत्यर्थः । वस्तुतस्तु कृञ्ग्रहणस्यात्र भाष्ये प्रत्याख्यातत्वात् उक्तज्ञापनाभावात् विश्वसेदित्यसम्बद्धमेवेत्याहुः । 'विश्वस्त'मित्यत्र तु आगमशास्त्रस्याऽनित्यत्वात् नेडित्याहुः । विदाङ्करोत्विति । अत्र विदेर्लोटि आमि लोटो लुकि आमन्ताद्विदेः कृञो लोडन्तस्यानुप्रयोगः । तत्र लोटस्तिपि 'एरुः' इत्युत्वे शपं बाधित्वा उप्र-

२४६७ अत उत्सार्वधातुके ६।४।११०॥ उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति। उदिति तपरत्वसामर्थ्यान्न गुणः। विदाङ्कुरु-तात्-विदाङ्कुरुताम्। 'उतश्च-' (सू २३३४) इति हेर्लुक्। आभीयत्वेन लुकोऽसिद्धत्वादुत्वम्। विदाङ्कुरु। विदाङ्करवाणि। अवेत्। अविताम्। 'सिजभ्यस्त—' (सू २२२६) इति झेर्जुस्। अविदुः। २४६८ दश्च ८।२।७५॥ धातोर्दान्तस्य पदस्य सिपि परे रुः स्याद्वा। अवेः-अवेत्। १०६५ अस भुवि। अस्ति। २४६९ श्नसोरल्लोपः ६।४।१११॥ श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति। स्तः। सन्ति। 'तासस्त्योः—' (सू २१९१) इति सलोपः। असि। स्थः। स्थ। अस्मि। स्वः। स्मः। 'आर्द्धधातुके' (सू २४३२) इत्यधिकृत्य। २४७० अस्तेर्भूः २।४।५२॥ बभूव। भविता। अस्तु-स्तात्। स्ताम्। सन्तु। २४७१

---

त्यये ऋकारस्य गुणे रपरत्वे उकारस्य तिङ्निमित्तो गुणः। तातङि तु ऋकारस्य गुणे रपरे तातङो ङित्वात् उकारस्य गुणाऽभावे विदाङ्कुरुतात् इति स्थिते—अत उत्। उप्रत्ययान्तस्येति। 'उतश्च प्रत्ययात्' इत्यतः तदनुवृत्तेरिति भावः। कृञोऽकारस्य उदिति। 'नित्यं करोतेः' इत्यतः तदनुवृत्तेरिति भावः। क्ङितीति। 'गमहन' इत्यतः तदनुवृत्ते-रिति भावः। अकारस्य उत्वे कृते तस्य लघूपधगुणमाशङ्क्य आह—तपरेति। इदं स्थानिवत्सूत्रे भाष्ये स्पष्टम्। विदाङ्कुरुतामिति। विदाङ्कुर्वन्त्वित्यपि ज्ञेयम्। 'न भकु-र्छुराम्' इति निषेधात् 'हलि च' इति दीर्घो न। हेर्लुगिति। विदाङ्कुरु हि इति स्थिते 'अत उत्सार्वधातुके' इत्युत्त्वं परमपि बाधित्वा नित्यत्वात् 'उतश्च प्रत्ययात्' इति हेर्लुगित्यर्थः। तर्हि सार्वधातुकाऽभावात् कथमुत्वमित्यत आह—आभीयत्वेनेति। विदाङ्कुर्विति। विदाङ्कुरुतात्। विदाङ्कुरुतम्। विदाङ्कुरुत। विदाङ्करवाणीति। आटः पि-त्वेन ङित्त्वाभावादुकारस्य गुण इति भावः। विदाङ्करवाव। विदाङ्करवाम। लङ्याह-अवेदिति। हल्ङ्यादिना सिपो लोपे विशेषमाह-दश्च। 'सिपि धातो रुर्वा' इत्यनुवृ-त्तम्। 'द' इति षष्ठ्यन्तेन धातुर्विशेष्यते। तदन्तविधिः। पदस्येत्यधिकृतम्। तदा-ह-धातोर्दान्तस्य पदस्येति। अलोऽन्त्यस्येत्यन्त्यस्य ज्ञेयम्। अवेदिति। सिपो हल्ङ्या-दिलोपे दकारस्य रुत्वविकल्पः। अवित्तम्। अवित्त। अवेदम्। अविद्व। अविद्म। विद्यात्। विद्याताम्। विद्यात्। विद्यास्ताम्। अवेदीत्। अवेदिष्यत्। अस भुवीति। भवनं भूः। सत्तायामित्यर्थः। अस्तीति। सस्य चर्त्वेऽपि सकार एव भवति, नतु त-कारः, अल्पप्राणतया प्रयत्नभेदात्। श्नसोरल्लोपः। अत् इति लुप्तषष्ठीकं पदम्। श्न अस् अनयोर्द्वन्द्वात्षष्ठीद्विवचनम्। शकन्ध्वादित्वात् पररूपम्। श्नेति श्नम्प्रत्यये-कदेशनिर्देशः। 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इत्यनुवर्तते, 'गमहन' इत्यतः क्ङितीति। तदाह—श्नस्येत्यादिना। अस्तेर्भूः। अस्धातोर्भूभावः स्यात् आर्द्धधातुके

घ्वसोरेद्धावभ्यासलोपश्च ६।४।११९॥ घोरस्तेश्चैत्त्वं स्याद्धौ परेऽभ्यासलोपश्च । आभीयत्वेनैत्वस्यासिद्धत्वाद्धेधिः । 'श्नसोः—' ( सू २४६९ ) इत्यल्लोपः । एधि । तातङ्पक्षे एत्वं न । परेण तातङा बाधात् । 'सकृद्गतौ—' ( प ४१ ) इति न्यायात् । स्तात् । स्तम् । स्त । असानि । असाव । असाम । 'अस्तिसिचः—' ( सू २२२५ ) इतीट् । आसीत् । श्नसोरल्लोपस्याभीयत्वेनासिद्धत्वादाट् । आस्ताम् । आसन् । स्यात् । भूयात् । अभूत् । सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादीण्न । २४७२ उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८।३।८७॥ उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे । निष्यात् ।

परे इत्यर्थः । अस् हि इति स्थिते-घ्वसोरेद्धावभ्यासलोपश्च । घु अस् अनयोर्द्वन्द्वः । एत् हौ इति च्छेदः । ननु अस् हि इति स्थिते 'हुझल्भ्यो हेर्धिः' इति धित्वं परत्वात् बाधित्वा 'घ्वसोः' इति सकारस्य एत्वे कृते हुझल्भ्यः परत्वाऽभावात् कथं धिभाव इत्यत आह—आभीयत्वेनेति । तथाच अ ए धीति स्थिते आह-श्नसोरिति । नन्वाशिषि अस् हि इति स्थिते तातङं बाधित्वा परत्वादेत्वं प्राप्नोतीत्यत आह-तातङ्पक्षे एत्वं नेति । कुत इत्यत आह—परेणेति । ननु कृते तातङि तस्य स्थानिवत्त्वेन हित्वात्तस्मिन्परे 'घ्वसोः' इत्येत्वं कुतो नेत्यत आह—सकृद्गताविति । सकृत् एकवारं गतौ प्रवृत्तौ, विप्रतिषेधे विरोधे सति, यद्बाधितं तद्बाधितमेव भवति,नतु पुनः प्रवर्तत इति तदर्थः । लङस्तिपि विशेषमाह—अस्तिसिचः इति । इकारलोपे आदि वृद्धौ 'अस्तिसिचः' इति ईडागम इत्यर्थः । ननु तसादौ ङिति परत्वादाडागमात्प्राक् 'श्नसोः' इत्यल्लोपे सति अजादित्वाभावात् कथमाडित्यत आह—श्नसोरल्लोपस्याभीयत्वेनेति । आस्तामिति । अत्र कृते आडागमे तस्य लोपनिवृत्त्यर्थं 'श्नसोरल्लोपः' इति तपरकरणम् । वस्तुतस्तु आट आभीयत्वेनासिद्धत्वादेव लोपो न भवतीति 'श्नसोरल्लोपः' इत्यत्र तपरकरणं व्य र्थमिति भाष्ये स्पष्टम् । आसन्निति । आसीः । आस्तम् । आस्त । आसम् । आस्व । आस्म । विधिलिङ्याह—स्यादिति । स्याताम् । स्युरित्यादि । आशीर्लिङि आर्धधातुकत्वात् भूभावं मत्वा आह—भूयादिति । लुङि तु सिचि भूभावे 'गातिस्था इति सिचो लुकं मत्वा आह—अभूदिति । तत्र 'अस्तिसिचोऽपृक्ते' इति ईडागममाशङ्क्य आह—सिचोऽस्तेश्चेति । इह भूभावे सति अस्तेरश्रूयमाणत्वात् ईण्नेति भावः । उपसर्गप्रादुर्भ्याम् । उपसर्गः प्रादुस् अनयोर्द्वन्द्वः । इण्कोरित्यधिकृतम् । तत्र इण इत्युपसर्गेण सम्बध्यते, न तु प्रादुसि, ततः परस्य अस्तेः सस्य इणः परत्वाऽसम्भवात् । कोरित्यपि असम्भवान्न सम्बध्यते । अस्तिरिति षष्ठ्यर्थे प्रथमा । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते, मू र्न्य इत्यधिकृतम् । य् अच् अनयोर्द्वन्द्वः । यचौ परौ यस्मादिति विग्रहः । यकारे अकारे च परे इति लभ्यते । तदाह—उपसर्गेणः इति । उपसर्गस्थादिण इत्यर्थः । परस्येति । अस्तेः सस्य विशे-

प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । यच्परः किम् । अभिस्तः । १०६६ मृजूष् शुद्धौ । २४७३ मृजेर्वृद्धिः ७।२।११४॥ मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे । 'क्ङित्यजादौ वेष्यते—' ( वा ५०५७ ) । 'व्रश्च—' ( सू २९४ ) इति षः । मार्ष्टि । मृष्टः । मृजन्ति-मार्जन्ति । ममार्ज । ममार्जतुः—ममृजतुः । ममार्जिथ-ममार्ष्ठ । मार्जिता-मार्ष्टा । मृड्ढि । अमार्ट् । अमार्जम् । अमार्जीत् । अमार्क्षीत् ।

षत्वमिदम् । नात्वस्तेः । तेन प्रादुरासीदित्यत्र न षत्वम् । यकारपरकत्वे उदाहरति—निष्यात् प्रादुःष्यादिति । प्रादुस् इति सान्तमव्ययम् । सस्य षत्वे पूर्वस्य सस्य ष्टुत्वेन षः । षान्तत्वे तु 'प्रादुर्ष्या'मिति रुत्वनिर्देशो नोपपद्यते । अच्परकत्वे उदाहरति—निषन्ति प्रादुष्षन्तीति । मृजूष् शुद्धाविति । ऊदित्वमिड्विकल्पार्थम् । 'षिद्भिदादिभ्योऽङ्' इत्यङर्थं षित्वम् । वस्तुतस्तु भिदादिगणे मृजाशब्दपाठादेव सिद्धेरिह षित्करणमनार्षमित्याहुः । मृजेर्वृद्धिः । 'इको गुणवृद्धी' इति परिभाषया 'इक' इत्युपस्थितम् । मृजेरित्यवयवषष्ठी । तदाह-मृजेरिको वृद्धिः स्यादिति । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति परिभाषामभिप्रेत्य आह—धातुप्रत्यये परे इति । धातोर्विहिते प्रत्यये इत्यर्थः । तेन परिमृड्भ्यामित्यत्र न वृद्धिरिति भावः । गुणापवादोऽयम् । क्ङित्यजादौ वेष्यते इति । 'मृजेर्वृद्धि'रिति शेषः । 'इको गुणवृद्धी' इति सूत्रभाष्ये इदं पठितम् । व्रश्चेति ष इति । मृज् ति इति स्थिते ऋकारस्य वृद्धौ रपरत्वे जकारस्य व्रश्चेति षत्वे तकारस्य ष्टुत्वेन टकारे मार्ष्टीति रूपमित्यर्थः । मृष्ट इति । ङित्वान्न वृद्धिः, नापि गुण इति भावः । मृजन्ति मार्जन्ति इति । 'क्ङित्यजादा'विति वृद्धिविकल्प इति भावः । मार्ष्मि । मृष्वः । मृष्मः । मार्ज्मि । मृज्वः । मृज्मः । ममार्जेति । णलि मृजेर्वृद्धिरिति भावः । अतुसादावजादौ किति वृद्धिविकल्पं मत्वा आह—ममार्जतुः ममृजतुरिति । ममार्जुः । ममृजुः । इत्यपि ज्ञेयम् । ऊदित्वादिड्विकल्पं मृजेर्वृद्धिं च मत्वा आह—ममार्जिथ ममार्ष्ठेति । इडभावे जस्य व्रश्चेति षः । थस्य ष्टुत्वेन ठ इति भावः । ममार्जथुः-ममृजथुः । ममार्ज-ममृज । ममार्ज । ममार्जिव-ममृजिव-ममृज्व । ममार्जिम-ममृजिम-ममृज्म । लुट्याह—मार्जिता मार्ष्टेति । ऊदित्वादिटि, तदभावे च 'मृजेर्वृद्धिः' इति भावः । मार्जिष्यति-मार्क्ष्यति । मार्ष्टु-मृष्टात् । मृष्टाम् । मार्जन्तु-मृजन्तु । मृड्ढीति । हेरपित्त्वेनाक्ङित्त्वान्न वृद्धिः । व्रश्चादिना जस्य षः, हेर्धिः, षस्य जश्त्वेन डः, धस्य ष्टुत्वेन ढः । मृष्टात् । मृष्टम् । मृष्ट । मार्जानि । मार्जाव । मार्जाम । लङ्याह—अमार्ट् इति । तिप इकारलोपे वृद्धौ रपरत्वेन हल्ङ्यादिना तकारलोपे व्रश्चादिना जस्य षः, तस्य जश्त्वचर्त्वे इति भावः । अमृष्टाम् । अमार्जन्-अमृजन् । अमार्ट् । अमृष्टम् । अमृष्ट । अमार्जमिति । अमृज्व । अमृज्म । मृज्यात् । मृज्याताम् । मृज्यास्ताम् । अमार्जीत् अमार्क्षीदिति । ऊदित्त्वादिड्विकल्प इति भावः । इट्पक्षे अमार्जिष्टाम् । अमार्जिषुरित्यादि सुगमम् । इडभावे अमार्ष्टाम् । अमार्क्षुः ।

१०६७ रुदिर् अश्रुविमोचने। २४७४ रुदादिभ्यः सार्वधातुके ७।२।७६॥ रुद्, स्वप्, श्वस्, अन्, जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात्। रोदिति। रुदितः। हौ परत्वादिटि धित्वं न। रुदिहि। २४७५ रुदश्च पञ्चभ्यः ७।३।९८॥ हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात्। २४७६ अड्गार्ग्यगालवयोः ७।३।९९॥ अरोदीत्—अरोदत्। अरुदिताम्। अरुदन्। अरोदीः—अरोदः। अरोदम्। प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्याडुट्। रुद्यात्। अरुदत्। अरोदीत्। १०६८ ञि ष्वप् शये। स्वपिति। स्वपितः। सुष्वाप। सुषुपतुः। सुषुपुः। सुष्वपिथ—सुष्वप्थ। २४७७ सुविनिर्दुर्भ्यः सुपिसूतिसमाः

अमार्क्षीः। अमार्ष्टम्। अमार्ष्ट। अमार्क्षम्। अमार्क्ष्व। अमार्क्ष्म। अमार्जिष्यत्—अमार्क्ष्यत्। रुदिर्धातुरिरित् सेट्। रुदादिभ्यः। इड्वलादेरित्यनुवृत्तिं मत्वा आह—वलादेरिति। रुदित इति। ङित्त्वान्न गुणः। रुदन्ति। रोदिषि। रुदिथः। रुदिथ। रोदिमि। रुदिवः। रुदिमः। रुरोद। रुरुदतुः। रुरोदिथ। रुरुदिव। रुरुदिम। रोदिता। रोदिष्यति। रोदितु-रुदितात्। रुदिताम्। रुदन्तु। रुदि हि इति स्थिते 'हुझल्भ्यः' इति धित्वमाशङ्क्य आह—हौ परत्वादिति। रुदिहीति। हेरपित्त्वेन ङित्त्वान्न लघूपधगुण इति भावः। रुदितात्। रुदितम्। रुदित। रोदानि। रोदाव। रोदाम। रुदश्च पञ्चभ्यः। 'नाभ्यस्तस्य' इत्यतः पिति सार्वधातुके इति 'उतो वृद्धिः' इत्यतो हलीति 'गुणोऽपृक्ते' इत्यतः अपृक्ते इति 'ब्रुव ईट्' इत्यत ईडिति चानुवर्तते। 'रुद' इति पञ्चमी। 'रुदादिभ्य' इति विवक्षितम्। इत्यभिप्रेत्य सूत्रशेषं पूरयति—हलादेरित्यादिना। अड्गार्ग्यगालवयोः। अनयोर्मते रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः सार्वधातुकस्य अपृक्तस्य अडागमः स्यादिति स्पष्टोऽर्थः। अरोदीरिति। अरुदितम्। अरुदित, इत्यपि ज्ञेयम्। अरोदमिति। अरुदिव। अरुदिम। इत्यपि ज्ञेयम्। ननु लिङ्क्ष्वपि यासुटं बाधित्वा परत्वात् 'अड्गार्ग्यगालवयोः' इति 'रुदश्च पञ्चभ्य' इति च अडीटौ स्यातामित्यत आह—प्रकृतिप्रत्ययेति। हलादिपित्सार्वधातुकाऽपृक्ताऽपेक्षत्वाच्चेत्यपि ज्ञेयम्। लुङि 'इरितो वा' इत्यङ्पक्षे आह—अरुददिति। अङभावपक्षे त्वाह—अरोदीदिति। 'अस्तिसिचः' इति ईट्। 'रुदश्च पञ्चभ्य' इति तु नेह प्रवर्तते, सिचा व्यवहितत्वात्। ञिष्वप् शये इति। षोपदेशोऽयम्। आर्धधातुके अनिट्। स्वपितीति। 'रुदादिभ्यः' इति इट। स्वपित इति। स्वपन्ति। स्वपिषि। स्वपिथः। स्वपिथ। स्वपिमि। स्वपिवः। स्वपिमः। सुष्वापेति। द्वित्वे 'लिट्यभ्यासस्य' इति सम्प्रसारणे पूर्वरूपे आदेशसकारत्वात् षत्वमिति भावः। सुषुपतुरिति। 'वचिस्वपि' इति सम्प्रसारणे कृते द्वित्वादीति भावः। सुषुपुरित्यपि ज्ञेयम्। सुष्वपिथ सुष्वप्थेति। भारद्वाजनियमात्थलि वेडिति भावः। सुषुपथुः। सुषुप। सुष्वाप-सुष्वप। सुषुपिव। सुषुपिम। सुविनिर्दुर्भ्यः। कृतसम्प्रसारणस्य स्वप्धातोः सुपीत्यनेन ग्रहणम्। सूतीत्यनेन सूति-

८।३।८८॥ एभ्यः सुप्यादेः सस्य षः स्यात्। 'पूर्वं धातुरुपसर्गेण युज्यते'। किति लिटि परत्वात्सम्प्रसारणे षत्वे च कृते द्वित्वम्। 'पूर्वत्रासिद्धीयमद्विर्वचने' (प १२७) सुषुषुपतुः। सुषुषुपुः। पिति तु द्वित्वेऽभ्यासस्य सम्प्रसारणम्। षत्वस्यासिद्धत्वात्ततः पूर्वं 'हलादिः शेषः' (सू २१७९)। नित्यत्वाच्च। ततः सुपि

---

शब्दः कृदन्तो गृह्यते। समेत्यनेनापि समशब्दस्य ग्रहणम्। षष्ठ्यर्थे प्रथमा। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते। मूर्धन्य इत्यधिकृतम्। तदाह-एभ्यः सुप्यादेरिति। सुषुप्तिः, सुषूतिः, सुषमः इत्युदाहरणानि। अत्र कृतसम्प्रसारणस्य स्वप्धातोर्ग्रहणात् सुस्वप्न इत्यत्र न षत्वमिति भाष्यम्। नन्वेवं सति सुषुषुपतुरित्यत्र सुपूर्वस्य स्वपधातोः कथं षत्वम्। कृतसम्प्रसारणस्य हि स्वपधातोः षत्वम्। तत्र यदि स्वप् अतुस् इति स्थिते पूर्वं द्वित्वे कृते पश्चात् 'वचिस्वपि' इति सम्प्रसारणं तदा हलादिशेषे उत्तरखण्डस्यैव 'वचिस्वपि' इति सम्प्रसारणं, न त्वभ्यासस्य। अतुसः कितः उत्तरखण्डाव्यवहितत्वात्, 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधाच्च। ततश्च सु सुसुप् अतुसित्यत्र पूर्वखण्डस्य कृतसम्प्रसारणत्वाभावात् कथं षत्वम्। उत्तरखण्डस्य च सु इत्युपसर्गादव्यवहितपरत्वाऽभावात्कथमनेन षत्वम्, इण्कवर्गाभ्यां परत्वाऽभावेन 'आदेशप्रत्यययोः' इत्यस्याप्युत्तरखण्डे अप्रवृत्तेः। यदि तु परत्वात्पूर्वं सम्प्रसारणे कृते पश्चात् द्वित्वं तर्हि सुप् इत्यस्य द्वित्वप्रवृत्तेः प्रागेव षत्वमिति वक्तव्यम्। तत्तु न युज्यते। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति परिभाषया सु इत्युपसर्गसम्बन्धस्य द्वित्वात्प्रागप्रवृत्तेः। तथाच कृतसम्प्रसारणस्य अकृतषत्वस्य सुप् इत्यस्य द्वित्वे उत्तरखण्डस्यैव 'आदेशप्रत्यययोः' इति षत्वं स्यात्। न तु पूर्वखण्डस्य 'सात्पदाद्योः' इति निषेधात्। कृते हलादिशेषे सु इति पूर्वखण्डस्य सुप्रत्वाभावेन 'सुविनिर्दुर्भ्यः' इत्यस्याऽप्यप्रवृत्तिः। न च एकदेशविकृतस्यानन्यत्वं शङ्क्यम्, एवमप्यभ्यासस्यानर्थकत्वेन अर्थवद्ग्रहणपरिभाषया षत्वस्य तत्राप्राप्तेः। तस्मादिह सुषुषुपतुरित्यत्र पूर्वखण्डे षत्वं दुरुपपादमित्याशङ्क्य आह—पूर्वं धातुरित्यादिना। लक्ष्यानुरोधादिह 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इत्याश्रीयते। ततश्च द्वित्वात्प्रागेव परत्वात्सम्प्रसारणे सति सुप् इत्यस्य सु इत्युपसर्गपूर्वकत्वमादाय षत्वे च कृते सति पुनः प्रसङ्गविज्ञानात् षुप् इत्यस्य कृतषत्वस्य द्वित्वे सति खण्डद्वयेऽपि षकारश्रवणं निर्बाधमित्यर्थः। तदुक्तं भाष्ये-'षुपिभूतो द्विरुच्यते' इति। ननु कृतषत्वस्य कथं द्वित्वं, द्वित्वे कर्तव्ये षत्वस्याऽसिद्धत्वादित्यत आह—पूर्वत्रासिद्धीयमिति। ननु तर्हि सुषुष्वापेत्यत्रापि पूर्वखण्डे षत्वं श्रूयेतेत्यत आह—पिति त्विति। णिति णलि कित्वाभावात् 'वचिस्वपि' इत्यस्याप्रवृत्तौ कृते द्वित्वे 'लिट्यभ्यासस्य' इति पूर्वखण्डस्य सम्प्रसारणम्। सु सुप् स्वप् अ इति स्थिते 'सुविनिर्दुर्भ्यः' इति षत्वस्याऽसिद्धत्वात् हलादिशेष इत्यर्थः। नित्यत्वाच्चेति। कृते अकृते च षत्वे हलादिशेषस्य प्रा-

रूपाभावान्न षः । सुषुष्वाप । सुस्वप्ता । अस्वपीत्—अस्वपत् । स्वप्यात् । सुप्यात् । सुषुप्यात् । अस्वाप्सीत् । १०६९ श्वस प्राणने । श्वसिति । श्वसिता । अश्वसीत् । अश्वसत् । श्वस्याताम् । श्वस्यास्ताम् । 'ह्म्यन्तक्षण-' ( सू २२९९ ) इति न वृद्धिः । अश्वसीत् । १०७० अन च । अनिति । आन । अनिता । आनीत्—आनत् । २४७८ अनितेः ८।४।१९॥ उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति । १०७१ जक्ष भक्षहसनयोः । जक्षिति । जक्षितः । २४७९ अदभ्यस्तात् ७।१।४॥ झस्य अत्स्यात् । अन्तापवादः । जक्षति । 'सिजभ्यस्त-' ( सू २२२६ ) इति झेर्जुस् । अजक्षुः । अयमन्तस्थादिरित्युज्ज्वलदत्तो बभ्राम । रुदादयः पञ्च गताः ।

१०७२ जागृ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । 'उपविद—' ( सू

---

प्तेरिति भावः । तत इति । हलादिशेषोत्तरं सु इत्यस्यैव स्थितत्या सुप् इति रूपस्याऽभावान्न ष इत्यर्थः । एकदेशविकृतस्यानन्यत्वेऽपि अभ्यासस्याथवत्त्वाभावान्न ष इति द्रष्टव्यम् । स्वप्ता । स्वप्स्यति । स्वपितु—स्वपितात् । स्वपिताम् । स्वपन्तु । स्वपिहि—स्वपितात् । स्वपितम् । स्वपित । स्वपानि । स्वपाव । स्वपाम । लङ्याह—अस्वपीत् अस्वपदिति । 'रुदश्च पञ्चभ्यः' इति ईटि 'अड्गार्ग्यगालवयोः' इत्यटि च रूपे । अन्यानि रुदिवद्रूपाणि । लिङ्याह—सुप्यादिति । 'वचिस्वपि' इति सम्प्रसारणमिति भावः । 'सुविनिर्दुर्भ्यः' इति षत्वं मत्वा आह—सुषुप्यादिति । अस्वाप्सीदिति । अनिट्कत्वान्न सिज्लोप इति भावः । श्वस प्राणने इति । वलाद्यार्धधातुके सेडयम् । सार्वधातुके तु वलादौ 'रुदादिभ्यः' इति इट् । लङ्स्तिपि 'रुदश्च' इति ईटम् 'अड्गार्ग्य' इत्यटं च मत्वा आह—अश्वसीत् अश्वसदिति । विध्याशीर्लिङोः श्वस्यादिति सिद्धवत्कृत्य आह—श्वस्याताम् । श्वस्यास्तामिति । अन चेति । अनधातुरपि प्राणने वर्तते इत्यर्थः । सेडयम् । सार्वधातुकेऽपि वलादौ 'रुदादिभ्यः' इति इट् । लङि ईडटौ मत्वा आह—आनीत् आनदिति । अनितेः । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादसमासेऽपि' इत्यतः उपसर्गादिति । तदाह—उपसर्गस्थादिति । भिन्नपदस्थत्वादप्राप्तौ वचनम् । जक्षधातुः सेट् । वलादौ सार्वधातुकेऽपि 'रुदादिभ्यः' इति सेट । अदभ्यस्तात् । झस्येति । 'झोऽन्त' इत्यतस्तदनुवृत्तेरिति भावः । जक्षतीति । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञेति भावः । लङ्स्तिपि ईडटोः अजक्षीत् अजक्षत् इति सिद्धवत्कृत्य आह—सिजभ्यस्तेति । अदादेशापवादो जुस् । अन्तस्थादिरिति । तालव्याद्यन्तस्थादिरित्यर्थः । बभ्रामेति । "जक्षत्क्रीडन् रममाणः" इत्युपनिषदि चवर्गतृतीयादित्वस्य निर्विवादत्वादिति भावः ।

जागृधातुः ऋकारान्तः सेट् । जागर्तीति । तिपि शपो लुकि ऋकारस्य गुणे रपरत्वम् । जागृत इति । ङित्वान्न गुणः । जाग्रतीति । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा-

२३४१ ) इत्याम्वा । जागराञ्चकार—जजागार । २४८० जाग्रोऽविचिण्णल्ङित्सु ७।३।८५॥ जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च । जजागरतुः । अजागः । अजागृताम् । अभ्यस्तत्वाज्जुस् । २४८१ जुसि च ७।३।८३॥ अजादौ जुसीगन्ताङ्गस्य गुणः स्यात् । अजागरुः । अजादौ किम् । जागृयुः। आशिषि तु जागर्यात् । जागर्यास्ताम् । जागर्यासुः। लुङि अजागरीत् । 'जागृ इस्' इत्यत्र यण्प्राप्तः, तं सार्वधातुकगुणो बाधते, तं सिचि वृद्धिः, तां जागर्तिगुणः, तत्र कृते हलन्तलक्षणा वृद्धिः प्राप्ता, 'नेटि' ( सू २२६८ ) इति

---

याम् 'अदभ्यस्तात्' इति झेरदादेशः । ङित्वाद्गुणनिषेधे ऋकारस्य यणिति भावः । जागर्षि । जागृथः । जागृथ । जागर्मि । जागृवः। जागृमः । लिटि 'कास्यनेकाच्' इति नित्यमामि प्राप्ते आह—उषविदेत्याम् वेति । जागरामिति । आमि ऋकारस्य गुणो रपरत्वं चेति भावः। आमभावे आह—जजागारेति । अतुसादौ किन्त्वाद्गुणनिषेधे प्राप्ते—जाग्रोऽवि । 'जाग्र' इति षष्ठी । 'मिदेर्गुणः' इत्यतः गुण इत्यनुवर्तते । तदाह—जागर्तेर्गुणः स्यादिति । 'अविचिण्णल्ङित्सु'ति च्छेदः । वि चिण् णल् ङित् एषां द्वन्द्वे नञ्समासः । तदाह—विचिण्णल्ङिद्भ्योऽन्यस्मिन्निति । चिण्णलपर्युदासात् वृद्धिविषयेऽप्यस्य प्रवृत्तिः । ङित्पर्युदासात् गुणप्रतिषेधविषयेऽप्यस्य प्रवृत्तिः । तदाह—वृद्धिविषये प्रतिषेधविषये चेति । जजागरतुरिति । अत्र किन्त्वेऽपि गुणः। जजागरुः । जजागरिथ । जजागरथुः । जजागार । जजागर । जजागरिव । जजागरिम । विचिण्णल्ङित्सु तु न गुणः । वि--जागृविः । चिण्—अजागारि । णल्—जजागार । ङित्—जागृतः । वृद्धिविषये यथा—ण्वुलि जागरकः । प्रतिषेधविषये यथा—जजागरतुः । किन्त्वेऽपि गुणः इत्यादृूह्यम् । जागरिता । जागरिष्यति । जागर्तु-जागृतात् । जागृताम् । जाग्रतु । जागृहि-जागृतात् । जागृतम् । जागृत । जागराणि । जागराव । जागराम । लङ्याह—अजागरिति । तिपि इकारलोपे हल्ङ्यादिना तकारलोपे रेफस्य विसर्ग इति भावः । अभ्यस्तत्वाल्लङो झेरदादेशे प्राप्ते आह—अभ्यस्तत्वाज्जुसिति । 'सिजभ्यस्तविदिभ्यश्च' इत्यनेनेति भावः । जक्षित्यादित्वादभ्यस्तत्वम् । अजागृ उस् इति स्थिते 'सार्वधातुकमपित्' इति ङित्वादविचिण्णल्ङित्त्वेति पर्युदासादप्राप्ते गुणे आह—जुसि च । अङ्गस्येत्यधिकृतम् । 'मिदेर्गुणः' इत्यतः गुण इत्यनुवर्तते । 'इको गुणवृद्धी' इति परिभाषया इक इत्युपस्थितेन अङ्गस्य विशेषणात्तदन्तविधिः । 'कसस्याचि' इत्यतोऽनुवृत्तेन अचीत्यनेन जुसीत्यस्य विशेषणात्तदादिविधिः । तदाह—अजादावित्यादिना । अजागरुरिति । अजागः । अजागृतम् । अजागृत । अजागरम् । अजागृव । अजागृम । विधिलिङि यासुटो ङित्वान्न गुणः । जागृयात् । जागृयाताम् । जागृयुरिति । 'जुसि चे'त्यत्र अजादावित्युक्तेर्न गुण इति भावः । आशिषि तु जागर्यादिति । 'किदाशिषि' इति यासुटः कित्त्वात् 'जाग्रोऽविचिण्णल्ङित्सु' इति गुण इति भावः ।

निषिद्धा, ततः 'अतो हलादेः—' ( सू २२८४ ) इति बाधित्वा 'अतो ल्रान्तस्य' (सू २३३०) इति वृद्धिः प्राप्ता, 'ह्मयन्त-'(सू२२९९)इति निषिध्यते। तदाहुः—

'गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव ।' इति ।

१०७३ दरिद्रा दुर्गतौ । दरिद्राति । २४८२ इद्दरिद्रस्य ६।४।११४॥दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके। दरिद्रितः । २४८३श्नाभ्यस्तयोरातः ६।४।११२॥ अनयोरातो लोपः स्यात्क्ङिति सार्वधातुके। दरिद्रति । अनेकाच्त्वादाम । दरिद्राञ्चकार । 'आत औ णलः' ( सू २३७१ ) इत्यत्र ओ इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम्। अत एव ज्ञापकादाम्नेत्येके । ददरिद्रौ । ददरिद्रतुरित्यादि । यत्तु णलि ददरिद्रेति तन्निर्मूलमेव । 'दरिद्रातेरार्धधातुके

जागृधातोर्लुङि सिचि इटि यणादिप्राप्तिक्रमं दर्शयति—जागृ इस् इत्यत्रेति । तत्र कृते इति । 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणे रपरत्वे कृते अजागर् ईदिति स्थिते सतीत्यर्थः। तदाहुरिति । वृद्धा इति शेषः। अजागरिष्टाम् । अजागरिषुः । इत्यादि सुगमम् ।

दरिद्राधातुरादन्तः सेट् । दुर्गतिः धनहीनीभवनम् । दरिद्रातीति । धनहीनीभवतीत्यर्थः । इद्दरिद्रस्य । सौत्रो ह्रस्वः । 'गमहन' इत्यतः क्ङितीत्यनुवर्तते । 'ई हल्यघोः' इत्यतः हलि इति 'अत उत्' इत्यतः सार्वधातुके इति । तदाह–दरिद्रातेरिति। 'श्नाभ्यस्तयोः' इत्यालोपापवादः । 'अलोऽन्त्यस्ये'त्यन्त्यस्य इकारः । दरिद्रित इति । 'सार्वधातुकमपित्' इति तसो ङित्वादाकारस्य इकारः । श्नाभ्यस्तयोरातः । 'गमहन' इत्यतः लोपः क्ङितीत्यनुवर्तते । 'अत उत्' इत्यतः सार्वधातुके इति । तदाह—अनयोरिति । श्नाप्रत्ययस्य अभ्यस्तस्य चेत्यर्थः । दरिद्रतीति । जक्षित्यादित्वादभ्यस्तत्वात् 'अदभ्यस्तात्' इति झस्य अदादेशे आकारलोपः । दरिद्रासि । दरिद्रिथः । दरिद्रिथ । दरिद्रामि । दरिद्रिवः । दरिद्रिमः । लिट्याह—अनेकाच्त्वादामिति । इदञ्च 'कास्प्रत्ययात्' इति सूत्रभाष्ये स्पष्टम् । दरिद्राञ्चकारेति । आमि सवर्णदीर्घः । कैयटमतमाह—आत इति । 'आत औ णलः' इत्यत्र प्रथमातिक्रमे कारणाऽभावात् ओकार एव विधातुमुचितः । वृद्धौ सत्यां तावतैव ययौ इत्यादिसिद्धेः । तस्मादौकारविधानं दरिद्राधातोर्णलि 'दरिद्रातेरार्धधातुके लोपो वक्तव्यः' इत्यालोपे 'ददरिद्रौ' इत्यौकारश्रवणार्थं सम्पद्यते । ओकारविधाने तु आल्लोपे सति वृद्धेरसम्भवात् ददरिद्रो इत्योकार एव श्रूयेतेत्यर्थः । अत एवेति । अस्मादेव दरिद्रातेः औकारश्रवणार्थात् औकारविधानाद्दरिद्रातेर्लिटि आम् नेति विज्ञायते । आमि सति णल एवाऽप्रसक्तेरित्यर्थः । इदञ्च 'कास्प्रत्ययादाम्' इति सूत्रभाष्ये ध्वनितं, कैयटेन स्पष्टीकृतम् । तन्निर्मूलमेवेति । 'कास्प्रत्ययात्' इति 'इजादेश्च' इति सूत्रस्थभाष्यकैयटविरोधादिति भावः । ददरिद्रतुः ।

विवक्षिते आलोपो वाच्यः' ( वा ४१४६ )। 'लुङि वा' ( वा ४१४२ )। 'सनि ण्वुलि ल्युटि च न' (वा ५०५८)। दरिद्रिता। अदरिद्रात्। अदरिद्रिताम्। अदरिद्रुः। दरिद्रियात्। दरिद्र्यात्। अदरिद्रीत्। इटसकौ-अदरिद्रासीत्। १०७४ चकासृ दीप्तौ। झस्य अत्। चकासति। चकासाञ्चकार। 'घि च' (सू २२४९)

ददरिद्रुः। ददरिद्रिथ। ददरिद्रथुः। ददरिद्र। ददरिद्रौ। ददरिद्रिव। ददरिद्रिम। आर्धधातुके विवक्षिते इति। 'आतो लोप इटि च' इत्याल्लोपो दरिद्रातेर्भवन् क्ङिति अक्ङिति च अजादावार्धधातुके भवति। स च आर्धधातुके विवक्षिते ततः प्रागेव भवतीति वक्तव्यमित्यर्थः। तेन दरिद्रातीति दरिद्रः, आल्लोपे कृते पचाद्यच् सिध्यति। आर्धधातुके परे आल्लोपप्रवृत्तौ तु 'श्याद्व्यधा' इत्यादन्तलक्षणो णप्रत्ययः स्यात्। ततश्च कृते णप्रत्यये आल्लोपं बाधित्वा 'आतो युक् चिण्कृतोः' इति युकि 'दरिद्राय' इति स्यात्। आर्द्धधातुके विवक्षिते ततः प्रागेव आल्लोपे तु कृते आदन्तत्वाऽभावात् णप्रत्ययाऽभावे पचाद्यच्प्रत्ययो निर्बाधः। तदिदं भाष्ये स्पष्टम्। लुङि वेति। लुङि आल्लोपो वा वक्तव्य इत्यर्थः। 'अद्यतन्यां वेति वक्तव्यम्' इति वार्तिकार्थसंग्रहोऽयम्। अद्यतन्यामित्यनेन अद्यतनभूतार्थकविहितलुङ्विभक्तिर्विवक्षिता, भाष्ये तस्या एवोदाहरणात्। सनि ण्वुलि ल्युटि च नेति। एतेषु दरिद्रातेराल्लोपो नेति वक्तव्यमित्यर्थः। ण्वुलि यथा—दरिद्रायकः, आतो युक्। ल्युटि यथा—दरिद्राणः, अनादेशे कृते आल्लोपाऽभावात् सवर्णदीर्घः। सनि यथा-दिदरिद्रासति। अनन्तरस्येति न्यायादस्य वार्तिकप्राप्तस्यैव लोपस्याऽयं निषेधः। तेन 'तनिपतिदरिद्राणामुपसङ्ख्यानम्' इति दरिद्रातेः सनः इट्पक्षे 'आतो लोप इटि च' इत्याल्लोपो भवत्येव-दिदरिद्रिषति। तदुक्तं भाष्ये— 'न दरिद्रायके लोपो दरिद्राणे च नेष्यते। दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा'। दरिद्रितेति। तासि इटि उदाहृतवार्तिकेन आल्लोपः। 'आतो लोप इटि च' इत्यस्य सम्भवेऽपि न्याय्यत्वादत्र वार्तिकोपन्यासः। दरिद्रिष्यति। दरिद्रातु-दरिद्रितात्। दरिद्रिताम्। दरिद्रतु। दरिद्रिहि-दरिद्रितात्। दरिद्रितम्। दरिद्रित। दरिद्राणि। दरिद्राव। दरिद्राम। लङ्याह—अदरिद्रादिति। इत्त्वं मत्वा आह—अदरिद्रितामिति। अदरिद्रुरिति। जक्षित्यादित्वेन अभ्यस्तत्वाज्जुसिति भावः। अदरिद्राः। अदरिद्रितम्। अदरिद्रित। अदरिद्राम्। अदरिद्रिव। अदरिद्रिम। दरिद्रियादिति। विधिलिङि सार्वधातुकत्वादित्त्वमिति भावः। आशीर्लिङ्याह—दरिद्र्यादिति। आतो लोप इति भावः। लुङि आतो लोपपक्षे आह—अदरिद्रीदिति। अदरिद्रिष्टामित्यादि। आल्लोपाभावपक्षे त्वाह—इट्सकाविति। अदरिद्रिष्यत्। चकासृ दीप्ताविति। ऋदित्। सेट्। चकास्ति। चकास्तः इति सिद्धवत्कृत्य आह—झस्य अदिति। जक्षित्यादित्वेन अभ्यस्तत्वादिति भावः। चकासतीति। चकास्सि। चकास्थः। चकास्थ। चकास्मि। चकास्वः। चकास्मः। चकासाञ्चकारेति। अनेकाच्त्वादामिति भावः। चकासिता।

इति सलोपः सिच एवेत्येके । चकाद्धि । 'चकाधि' इत्येव भाष्यम् । २४८४ तिप्यनस्तेः ८।२।७३॥ पदान्तस्य सस्य दः स्यात् तिपि न त्वस्तेः । ( ससजुषोरित्यस्यापवादः ) अचकात्—अचकाद् । अचकासुः । २४८५ सिपि धातो रुर्वा ८।२।७४॥ पदान्तस्य धातोः सस्य रुः स्याद्वा । पक्षे दः, अचकाः—अचकात् । १०७५ शासु अनुशिष्टौ । शास्ति । २४८६ शास इदङ्हलोः ६।४।३४॥ शास उपधाया इत्स्यादङि हलादौ क्ङिति च । 'शासिवसि—' (सू २४१०) इति षः । शिष्टः । शासति । शशास । शशासतुः । शास्तु । शिष्टात् । शिष्टाम् । शासतु । २४८७ शा हौ ६।४।३५॥ शास्तेः शादेशः स्याद्धौ परे । तस्याभीयत्वेनासिद्ध-

---

चकासिष्यति । चकास्तु । चकास्ताम् । चकासतु । द्वेर्धिभावे चकास् धि इति स्थिते 'धि च' इति सलोप इति सिद्धान्तः । तत्र मतान्तरमाह—सिच एवेत्येके इति ।'धि च' इति लोपः सिच एवेत्येके मन्यन्ते इत्यर्थः । 'धिसकारे सिचो लोपः चकाद्धीति प्रयोजनम्' इति वार्तिकादिति तदाशयः । अस्मिन्पक्षे सकारस्य जश्त्वेन दकारः । तदाह—चकाद्धीति । 'एके' इत्यस्वरसोद्भावनम् । तद्बीजं तु 'धिसकारे सिचो लोपः' इति वार्तिकं प्रत्याख्याय सकारमात्रस्य 'धि च' इति लोपस्याभ्युपगमः । तदाह—चकाधीत्येव भाष्यमिति । चकास्तात् । चकास्तम् । चकास्त । चकासानि । चकासाव । चकासाम । लङि अ चकास् त् इति स्थिते—तिप्यनस्तेः । न अस्तिः अनस्तिः तस्येति विग्रहः । पदस्येत्यधिकृतम् । 'झलां जशोऽन्ते' इत्यतः अन्ते इत्यनुवर्तते । 'ससजुषोः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'वसुस्रंसुध्वंस्वनडुहां दः' इत्यतः द इति । तदाह—पदान्तस्येत्यादिना । अनस्तेः किम् । 'सलिलं सर्वमा इदम्' । 'आः' इत्यस्धातोर्लङस्तिपि इकारलोपे 'बहुलं छन्दसि' इति 'अस्तिसिचः' इति ईडभावे हल्ङ्यादिलोपे रूपम् । प्रकृते तु चकासेर्लङस्तिपो हल्ङ्यादिलोपे सकारस्य दत्वे 'वाऽवसाने' इति चर्त्वजश्त्वे इत्यभिप्रेत्याह—अचकात् अचकादिति । अचकासुरिति । सिजभ्यस्तेति जुसिति भावः । सिपि धातो रुर्वा । पदस्येत्यधिकृतम् । 'झलां जशोऽन्ते' इत्यतः अन्ते इत्यनुवृत्तम् । 'ससजुषोः' इत्यतः सः इति लुप्तषष्ठीकमनुवर्तते । तदाह—पदान्तस्येति । पक्षे इति । वसुस्रंस्वित्यतः तदनुवृत्तेरिति भावः । सिपि धातुत्वस्य अव्यभिचाराद्धातोरित्युत्तरार्थम् । अचकासीत् । अचकासिष्यत् । शासुधातुरुदित् सेट् । शास इदङ्हलोः । 'अनिदितां हल उपधायाः क्ङिति' इत्यतः उपधायाः क्ङिति इत्यनुवर्तते । तदाह—शास उपधाया इति । शासतीति । जक्षादित्वेन अभ्यस्तत्वाददादेश इति भावः । शास्सि । शिष्ठः । शिष्ठ । शास्मि । शिष्वः । शिष्मः । 'आशास्ते' इत्यत्र तु नेत्वम् अङ्योग्यस्य परस्मैपदिन एव ग्रहणादिति भाष्ये स्पष्टम् । शशासेति । शशासिथ । शासिता । शासिष्यति । शास् हि इति स्थिते आह—शा हौ । 'शा' इति लुप्तप्रथमाकम् । 'शास इदङ्' इत्यतः शास इत्यनुवर्तते । तदाह—शास्तेरिति । इत्वापवादः । ननु शास्तेः शा-

स्वाद्धेर्धिः । शाधि । अशात् । अशिष्टाम् । अशासुः । अशात् । अशाः । शिष्यात् । 'सर्तिशास्ति—' ( सू २३८२ ) इत्यङ् । अशिषत् । अशासिष्यत् ।
१०७६ दीधीङ् दीप्तिदेवनयोः । एतदादयः पञ्च धातवश्छान्दसाः । दीधीते । 'एरनेकाचः—'(सू २७२) इति यण् । दीध्याते । २४८८ यीवर्णयोर्दीधीवेव्योः ७।४।५३॥ एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे । इति लोपं बाधित्वा नित्यत्वाट्टेरेत्वम् । दीध्ये । 'दीधीवेवीटाम्' ( सू २२६० ) इति गुणनिषेधः । दीध्याञ्चक्रे । दीधिता । दीधिष्यते । १०७७ वेवीङ् वेतिना तुल्ये । वी गतीत्यनेन तुल्येऽर्थे वर्तत इत्यर्थः ।

अथ त्रयः परस्मैपदिनः । १०७८ षस १०७९ षस्ति स्वप्ने । सस्ति । सस्तः ।

---

भावे सति झल्परत्वाभावात्कथं हेधिरित्यत आह—तस्याभीयत्वेनेति । यद्यपि 'धि च' इति सलोपे शाधीति सिद्धम् । तथापि सलोपस्याऽसिद्धत्वात् 'शास इत्' इति इत्त्वं स्यात् । तन्निवृत्तये शाविधानमित्याहुः । लङ्याह—अशादिति । 'तिप्यनस्तेः' इति दत्वे चार्त्वविकल्प इति भावः । अशासुरिति । अभ्यस्तत्वाज्जुसिति भावः । अशाः अशादिति । 'सिपि धातोः' इति रुत्वदत्वविकल्प इति भावः । अशिष्टम् । अशिष्ट । अशासम् । अशिष्व । अशिष्म । शिष्यादिति । 'शास इत्' इति इत्त्वे 'शासिवसि' इति ष इति भावः । अशिषदिति । अङि इत्त्वमिति भावः । दीधीङ्धातुरीकारान्तः । ङित्त्वादात्मनेपदी । एतदादयः पञ्चेति । इदं च माधवानुरोधेन । तत्त्वं त्वग्रे वक्ष्यते । जक्षित्यादित्वादभ्यस्तत्वाज्झस्य अदादेशः । दीध्यते । दीधीषे । दीध्याथे । दीधीध्वे । लट इडादेशे आह—यीवर्णयोर्दीधीवेव्योः । यिश्च इवर्णश्चेति द्वन्द्वात्सप्तमी । 'यि' इत्यत्र इकार उच्चारणार्थः । 'तासस्त्योः' इत्यतो लोप इत्यनुवर्तते । 'अलोन्त्यस्य' इत्यन्त्यस्य लोपः । तदाह—एतयोरित्यादि । 'आदीध्य गतः' 'आवेव्य गतः' । अत्र ल्यपि ईकारस्य लोपः । इवर्णे उदाहरणं वक्ष्यते । इति लोपमिति । लट इडादेशे दीधी इ इत्यत्र 'यीवर्णयोः' इति इवर्णपरत्वात्प्राप्तं लोपं परमपि बाधित्वा नित्यत्वाट्टेरेत्वमित्यर्थः । कृते अकृते च लोपे प्रवृत्तेरेत्वं नित्यम् । तस्मिन्कृते योवर्णपरकत्वाऽभावान्न लोप इति भावः । गुणनिषेध इति । दीधी आमिति स्थिते 'सार्वधातुकार्धधातुकयोः' इति प्राप्तस्य निषेध इत्यर्थः । दीधितेति । इटि कृते इवर्णपरकत्वादीकारस्य लोप इति भावः । दीधीताम् । दीध्याताम् । दीध्यताम् । दीधीष्व । दीध्याथाम् । दीधीध्वम् । दीध्यै । दीध्यावहै । दीध्यामहै । अदीधीत । अदीध्याताम् । अदीध्यत । अदीधीथाः । अदीध्याथाम् । अदीधीध्वम् । अदीधि । अदीधीवहि । अदीधीमहि । दीधीत । दीधीयाताम् । दीधिषीष्ट । दीधिषीयास्ताम् । दीधिषारन् । अदीधिष्ट । अदीधिष्यत । वस्तुतस्तु छन्दसि दृष्टानुविधित्वादेषां पञ्चानां लोकानुसारेण रूपवर्णनमनुचितम् । वेवीङ् वेतिना तुल्ये इति । दीधीवद्रूपाणि । इति जक्षित्या-

ससन्ति । ससास । सेसतुः । सस्तु । सधि । 'पूर्वत्रासिद्धम्' ( सू १२ ) इति सलोपस्यासिद्धत्वात् 'अतो हेः' (सू २२०२) इति न लुक् । असत् । असस्ताम् । असः । असत् । सस्यात् । असासीत् । अससीत् । सन्ति । इदित्वान्नुमि कृते 'संस्त् तस' इति स्थिते 'स्कोः—' ( सू ३८० ) इति सलोपे 'झरो झरि सवर्णे' ( सू ७१ ) इति तकारस्य वा लोपः । सन्तः । संस्तन्ति । बहूनां समवाये द्वयोः संयोगसंज्ञा नेत्याश्रित्य 'स्कोः—' ( सू ३८० ) इति लोपाभावात् । संस्ति ।

---

वृथः । षस षस्ति स्वप्ने इति । षोपदेशावेतौ । द्वितीय इदित् । तत्र षसधातोरुदाहरति—सस्तीति । ससन्तीति । अनभ्यस्तत्वादन्तादेश एवेति भावः । एत्वाभ्यासलोपौ मत्वा आह—सेसतुरिति । सेसुः । सेसिथ । सेसथुः । सेस । ससास । ससस । सेसिव । सेसिम । ससिता । ससिष्यति । सस्तु । सस्तात् । सस्ताम् । ससन्तु । सस्—हि इति स्थिते हेर्धिभावे 'धि च' इति सलोपं मत्वा आह—सधीति । तत्र 'धि' इत्यस्य स्थानिवत्त्वेन हित्वात् 'अतो हेः' इति लुकमाशङ्क्य आह—पूर्वत्रेति । सस्तात् । सस्तम् । सस्त । ससानि । ससाव । ससाम । लङ्याह—असदिति । असस् त् इति स्थिते हल्ङ्यादिना तकारलोपे 'तिप्यनस्तेः' इति सस्य दत्वमिति भावः । असस्तामिति । अससन् इत्यपि ज्ञेयम् । लङः सिपि तु असस् स् इति स्थिते 'सिपि धातोः' इति रुर्वा, पक्षे दः, हल्ङ्यादिलोपः । तदाह—असः असदिति । अस्तम् । असस्त । अससम् । असस्व । असस्म । लिङ्याह—सस्यादिति । सस्याताम् । सस्यास्ताम् इत्यादि । लुङ्याह—असासीदिति । 'अतो हलादेः' इति वृद्धिविकल्प इति भावः । अससिष्यत् ।

अथ षस्तिधातोरुदाहरति—सन्तीति । इदित्वान्नुम् । 'नश्च' इत्यनुस्वारे संस् त् ति इति स्थिते, 'स्कोः' इति सलोपे, परसवर्णे, 'झरो झरि' इति प्रथमतकारस्य लोपविकल्पे, एकतं द्वितं वा रूपमिति भावः । संस्तन्तीति । अनभ्यस्तत्वादन्तादेश एवेति भावः । सिपि संस्त् सि इति स्थिते 'स्कोः' इति सलोपे अनुस्वारस्य परसवर्णो नकारः । सवर्णपरत्वाऽभावात् 'झरो झरि' इति तकारलोपो न । सन्त्सि । सन्थः । सन्थ । संस्मि । संस्वः । संस्मः । ससंस्त । ससंस्ततुः । ससंस्तिथ । ससंस्तिव । ससंस्तिम । संस्तिष्यति । सन्तु-सन्तात् । सन्ताम् । संस्तन्तु । संस् त् हि इति स्थिते हेर्धिभावे 'स्कोः' इति सलोपे परसवर्णे सन्त् धि इति स्थिते 'झरो झरि' इति तकारस्य लोपः । सन्धि । लोपाभावे तकारस्य जश्त्वे सन्द्धि-सन्तात् । सन्तम् । सन्त । संस्तानि । संस्ताव । संस्ताम । लङस्तिपि असंस्त् त् इति स्थिते हल्ङ्यादिलोपे संयोगादिलोपे संयोगान्तस्य लोपे असन् । असन्ताम् । असंस्तन् । असन् । असन्तम् । असन्त । असन्तम् । असंस्व । असंस्म । संस्यात् । असंस्तीत् । असंस्तिष्यत् । मतान्तरमाह—बहूनामिति । इत्याश्रित्येति । तथाच प्रकृते लुङस्तिपि संस्त् ति

संस्तः । संस्तन्ति इत्येके । १०८० वश कान्तौ । कान्तिरिच्छा । वष्टि । उष्टः । उशन्ति । वक्षि । उष्ठः । उवाश । ऊशतुः । वशिता । वष्टु । उष्टात् । उष्टाम् । उड्ढि । अवट् । औष्टाम् । औशन् । अवशम् । उश्यातम् । उश्यास्ताम् । अवाशीत् । अवशीत् । १०८१ 'चर्करीतं च' (ग सू १९५) । यङ्लुगन्तमदादौ बोध्यम् । १०८२ ह्नुङ् अपनयने । ह्नुते । जुह्नुवे । ह्नुवीत । ह्नोषीष्ट । अह्नोष्ट ।

इति तिङन्तेऽदादिप्रकरणम् ।

ह्नुति स्थिते झलि परे अनुस्वारसकारतकाराणां त्रयाणां समवायात् स् त् इत्यनयोः संयोगसंज्ञाविरहात् 'स्कोः' इति लोपाऽभावात् संस्तीत्यादूह्यमित्यर्थः । वश कान्ताविति । कान्तिरिच्छा । सेट् । वष्टीति । 'व्रश्च' इति शस्य षत्वे तकारस्य ष्टुत्वेन टः । उष्टः इति । ङिति 'ग्रहिज्या' इति सम्प्रसारणे रूपमिति भावः । उवाशेति । लिटि अकिति 'लिट्यभ्यासस्य' इति सम्प्रसारणमिति भावः । ऊशतुरिति । परत्वाद्ग्रहिज्येति सम्प्रसारणे कृते द्वित्वे हलादिशेषे सवर्णदीर्घं इति भावः। उवशिथ । ऊशथुः। ऊश । उवाश । उवश । ऊशिव । ऊशिम । वशितेति । अनेन सेट्त्वं द्योतितम् । वशिष्यति । उष्टामिति । उशन्त्वित्यपि ज्ञेयम् । उड्ढीति । वश् हि इति स्थिते हिभात्रे अपित्त्वेन ङित्त्वात् ग्रहिज्येति सम्प्रसारणे शस्य षत्वे धस्य ष्टुत्वेन ढकारे षस्य जश्त्वेन ड इति भावः । वशानि । वशाव । वशाम । लङ्याह—अवडिति । हल्ङ्यादिलोपे शस्य षः, षस्य डः, तस्य चर्त्वविकल्प इति भावः । औशन्निति । अवट् । औष्टम् । औष्ट । अवशमिति । पित्त्वान्न सम्प्रसारणमिति भावः । औश्व । औश्म । विध्याशीर्लिङोः उश्यादिति सिद्धवत्कृत्य आह—उश्याताम् उश्यास्तामिति । अवशीत्, अवाशीत् । अवशिष्यत् । तदेवं दीधीङ्, वेवीङ्, षस, षस्ति, वश, एते पञ्च धातवः छान्दसा एवेति माधवादयः। तत्र 'दीधीवेवीटाम्' इति सूत्रे 'दीधीवेव्योश्छन्दोविषयत्वा'दिति भाष्यम् । 'जक्षित्यादयः षट्' इति सूत्रे 'षस्तिवशी छान्दसा'विति भाष्यम्। एतद्भाष्यादेव षस्तिधातोर्नात्र पाठ इति प्रतीयते। अत एव 'षस शास्ति स्वप्ने' इति पाठमभ्युपगम्य श्तिपा निर्देशेन सास एवार्थभेदात् पुनः पाठ इति कैयट आह । अत्र वशधातोरपि छान्दसत्ववचनं प्रायिकम्, 'वष्टि भागुरिरल्लोपम्' 'जयाय सेनान्यमुशन्ति देवाः' इत्यादिप्रयोगदर्शनादित्यास्तां तावत् । चर्करीतं चेति । धातुपाठे गणसूत्रमिदम् । 'चर्करीतम्' इति यङ्लुगन्तस्य संज्ञा पूर्वाचार्यसिद्धा । तदाह—यङ्लुगन्तमदादाविति । तेन यङ्लुगन्ताच्छबेव विकरणः तस्य लुक्; न तु श्यनादि विकरणान्तरम् । 'परस्मैपदिन' इत्युपक्रमाद्यङ्लुगन्तस्य परस्मैपदित्वमेव । ह्नुङ् अपनयने इति । अनिडयम् । ह्नुते इति । ह्नुवाते । ह्नुवते इत्यादि । जुह्नुवे इति । जुह्नुवाते । जुह्नुविरे । क्रादिनियमादिट् । जुह्नुविषे । जुह्नुविवहे । ह्नोता । ह्नोष्यते । ह्नुताम् । ह्नुष्व । ह्नवै । ह्नवावहै । अह्नुत । इति सिद्धवत्कृत्य विधिलिङ्याह—ह्नुवीतेति । आशीर्लिङ्याह—ह्नोषीष्टेति । लुङ्याह—अह्नोष्टेति । इति तिङन्तेऽदादि लुग्विकरणं समाप्तम् ।

# अथ तिङन्ते जुहोत्यादिप्रकरणम् ॥ ३ ॥

१०८३ हु दानादनयोः । 'आदाने च' इत्येके । 'प्रीणनेऽपि' इति भाष्यम् । दानं चेह प्रक्षेपः । स च वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते । इतश्चत्वारः परस्मैपदिनः । २४८९ जुहोत्यादिभ्यः श्लुः २।४।७५॥ शपः श्लुः स्यात् । २४९० श्लौ ६।१।१० ॥ धातोर्द्वे स्तः । जुहोति । जुहुतः । 'अदभ्यस्तात्' ( सू २४७९ ) इत्यत् । 'हुश्नुवोः—' (सू २३८७) इति यण् । जुह्वति । २४९१ भीह्रीभृहुवां श्लुवच्च ३।१।३९॥ एभ्यो लिटयाम्वा स्यात्, आमि श्लाविव कार्यं च । जुहवाञ्चकार–जुहाव । होता । होष्यति । जुहोतु–जुहुतात् । 'हेर्धिः' जुहुधि । आटि परत्वाद्गुणः । जुहवानि । परत्वात् 'जुसि च' ( सू २४८१ ) इति गुणः । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । १०८४ ञि भी भये । बिभेति ।

---

अथ श्लुविकरणा धातवो निरूप्यन्ते । हु दानादनयोरिति । दाने अदने चेत्यर्थः । भाष्यमिति । 'तृतीया च होश्छन्दसि' इति सूत्रस्थमिति शेषः । ननु यदि दानमिह प्रसिद्धं विवक्षितं तर्हि 'ब्राह्मणाय गां ददाती'त्यत्र जुहोतीत्यपि प्रयोगः स्यादित्यत आह—दानं चेह प्रक्षेप इति । नन्वेवमपि कूपे घटं प्रक्षिपति, आहवनीये जलं प्रक्षिपतीत्यत्रापि जुहोतीति प्रयोग स्यादित्यत आह— स चेति । सः प्रक्षेपः विधिबोधिते आधारे आहवनीयादौ पुरोडाशादिहविष इति लभ्यते इत्यन्वयः । कुत इत्यत आह—स्वभावादिति । अनादिसिद्धलोकव्यवहारादित्यर्थः । तथाच विधिबोधिते आधारे विधिबोधितस्य देवतायै त्यज्यमानस्य हविषः प्रक्षेपे हुधातुर्वर्तते इति फलितम् । एतच्च पूर्वमीमांसायां तृतीये 'सर्वप्रदानं हविषस्तदर्थत्वात्' इत्यधिकरणे अध्वरमीमांसाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः । जुहोत्यादिभ्यः श्लुः । शपः इति । 'अदिप्रभृतिभ्यः' इत्यतस्तदनुवृत्तेरिति भावः । हु अ ति इति स्थिते शपः श्लौ कृते हु ति इति स्थिते—श्लौ । शेषं पूरयति—धातोर्द्वे स्त इति । 'एकाचो द्वे' इत्यतः 'लिटि धातोः' इत्यतश्च तदनुवृत्तेरिति भावः । द्वित्वे कृते अभ्यासकार्यमभिप्रेत्य आह—जुहोतीति । यणिति । उवङपवाद इत्यर्थः । भीह्री । भी, ह्री, भृ, हु, द्वन्द्वात्पञ्चम्यर्थे षष्ठी । 'कास्प्रत्ययात्' इत्यतः आम् लिटीत्यनुवर्तते । तदाह–ए(ते)भ्य इति । 'श्लुव'दिति सप्तम्यन्ताद्वतिरित्यभिप्रेत्य आह—आमि श्लाविव कार्यं चेति । जुहवामिति । आमि श्लाविव द्वित्वे गुण इति भावः । जुहावेति । जुहुवतुः । जुहविथ-जुहोथ । जुहुविव । हेर्धिरिति । 'हुझल्भ्यो हेर्धिः' इत्यनेनेति भावः । 'जुहवानी'त्यत्र आटः पित्त्वेन अङित्त्वात् गुणे प्राप्ते तं बाधित्वा 'हुश्नुवोः' इति यणि प्राप्ते आह—आटि परत्वादिति । 'हुश्नुवोः' इत्यपेक्षया गुणः परत्वाद्भवतीत्यर्थः । लङि अजुहोत्, अजुहुताम् इति सिद्धवत्कृत्य 'सिजभ्यस्त' इति जुसि 'हुश्नुवोः' इति यणमाशङ्क्य आह—परत्वाज्जुसि चेति गुण इति । अजुहवुरिति ।

२४९२ भियोऽन्यतरस्याम् ६।४।११५॥ इकारः स्याद्धलादौ क्ङिति सार्वधातुके। बिभितः—बिभीतः। बिभ्यति। बिभयाञ्चकार। बिभाय। भेता। १०८५ ह्री लज्जायाम्। जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयाञ्चकार। जिह्राय। १०८६ पृ पालनपूरणयोः। २४९३ अर्तिपिपर्त्योश्च ७।४।७७॥ अभ्यासस्येकारोऽन्तादेशः स्यात् श्लौ। २४९४ उदोष्ठ्यपूर्वस्य ७।१।१०२॥ अङ्गावयव-

अजुहोः। अजुहुतम्। अजुहुत। अजुहवम्। अजुहुव। अजुहुम। अहौषीदिति। सिचि वृद्धिः। अहौष्टामित्यादि। अहोष्यत्। ञि भी भये इति। अनिट्। ईदन्तः। शपः श्लौ द्वित्वादि मत्वा आह—बिभेतीति। भियोऽन्यतरस्याम्। 'इद्दरिद्रस्य' इत्यतः इदिति 'गमहन' इत्यतः क्ङितीति 'ई हल्यघोः' इत्यतः हलीति 'अत उत्' इत्यतः सार्वधातुके इति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति—इकारः स्यादित्यादिना। बिभ्यतीति। 'अदभ्यस्तात्' इत्यत्। बिभयामिति। 'भीह्रीभृहुवां श्लुवच्च' इति श्लुवत्त्वात् द्वित्वादीति भावः। बिभायेति बिभ्यतुः। बिभयिथ-बिभेथ। बिभ्यिव। बिभ्यिम। भेतेति। भेष्यति। बिभेतु-बिभितात्-बिभीतात्। बिभिताम्-बिभीताम्। बिभ्यतु। बिभिहि-बिभीहि-बिभितात्-बिभीतात्। बिभितम्-बिभीतम्। बिभित-बिभीत। बिभयानि। बिभयाव। बिभयाम। अबिभेत्। अबिभिताम्-अबिभीताम्। अबिभयुः। आबभेः। अबिभितम्-अबिभीतम्। अबिभित-अबिभीत। अबिभयम्। अबिभिव-अबिभीव। अबिभिम-अबिभीम। बिभियात्-बिभीयात् इत्यादि। आशीर्लिङि, भीयात्। भीयास्ताम्। अभैषीत्। अभेष्यत्। ह्री लज्जायामिति। अनिट्। जिह्रियतीति। 'अदभ्यस्तात्' इत्यत्। इयङ्। जिह्रयामिति। 'भीह्रीभृहुवाम्' इत्याम्। श्लुवत्त्वात् द्वित्वादीति भावः। जिह्रायेति जिह्रयिथ-जिह्रेथ। जिह्रियिव। ह्रेता। ह्रेष्यति। जिह्रेतु—जिह्रीतात्। जिह्रीहि। जिह्रयाणि। अजिह्रेत्। जिह्रीयात्। ह्रीयात्। अह्रैषीत्। अह्रेष्यत्। पृधातुः सेट्। लटस्तिपि शपः श्लौ द्वित्वे पृ पृ इति स्थिते—अर्तिपिपर्त्योश्च। 'अत्र लोपः' इत्यस्मादभ्यासस्येति 'भृञामित्' इत्यस्मात् इदिति 'निजां त्रयाणाम्' इत्यतः श्लाविति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति—अभ्यासस्येत्यादिना। तथाच अभ्यासे ऋकारस्य इत्त्वे रपरत्वे हलादिशेषे उत्तरखण्डस्य गुणे रपरत्वे पिपर्तीति वक्ष्यति। तत्र उत्तरखण्डे ऋकारस्य उत्वं शङ्कितुमाह—उदोष्ठ्य। 'ऋत इद्धातोः' इत्यतः ऋत इत्यनुवर्तते। अङ्गस्येत्यधिकृतमिहानुवृत्तमावर्तते। एकमवयवषष्ठ्यन्तम् ओष्ठ्यस्य विशेषणम्। अपरंतु ऋता विशेष्यते। तदन्तविधिः। तदाह—अङ्गावयवौष्ठ्येत्यादिना। अङ्गावयवेति किम्। समीर्णः। 'ॠ गतौ क्र्यादिः। तस्मात्सम्पूर्वात् क्तप्रत्यये 'श्र्युकः क्किति' इति इण्निषेधे 'ऋत इद्धातोः' इति इत्त्वे रपरत्वे 'हलि च' इति दीर्घे 'रदाभ्याम्' इति निष्ठानत्वे तस्य णत्वे समीर्णः इति रूपम्। तत्र मकारात्मकौष्ठ्यपूर्वत्वादित्त्वं बाधित्वा उत्वं स्यात्। 'अङ्गावयवे'त्युक्तौ तु मकारस्य

वोष्ठ्यपूर्वो य ऋत् तदन्तस्याङ्गस्य उत्स्यात् । गुणवृद्धी परत्वादिमं बाधेते । पिप- र्ति । उत्वं, रपरत्वं । 'हलि च' (सू ३५४) इति दीर्घः । पिपूर्तः । पिपुरति । पपार । किति लिटि 'ऋच्छत्यृताम्' (सू २३८३) इति गुणे प्राप्ते । **२४९५ शॄद्- प्रां ह्रस्वो वा ७।४।१२॥** एषां किति लिटि ह्रस्वो वा स्यात् । पक्षे गुणः । पप्र- तुः । पप्रुः । पपरतुः । पपरुः । परिता-परीता । अपिपः । अपिपूर्ताम् । अपिप- रुः । पिपूर्यात् । पूर्यात् । अपारीत् । अपारिष्टाम् । 'ह्रस्वान्तोऽयम्' इति केचित् । पिपर्ति । पिपृतः । पिप्रति । पिपृयात् । आशिषि, प्रियात् । अपार्षीत् । पाणिनी- यमते तु 'तं रोदसी पिपृतम्' इत्यादौ छान्दसत्वं शरणम् । १०८७ डु भृञ् धार-

ओष्ठ्यस्य अङ्गावयवत्वाभावादुत्त्वं न भवति । तथाच प्रकृतेऽपि पॄ तीत्यत्र इदुत्वं स्यादिति शङ्का प्राप्ता, तां परिहरति—गुणवृद्धी इति । इममिति । उत्वविधिमित्यर्थः । पिपर्तीति । उत्वात्परत्वाद्गुण इति भावः । पिपॄ तस् इति स्थिते आह—उत्वमिति । ङित्त्वेन गुणाऽभावात् उदोष्ठ्येत्युत्वमिति भावः । पिपुरतीति । अभ्यस्तत्वाददादेशे ङित्त्वाद्गुणाभावादुत्वमिति भावः । पिपर्षि । पिपूर्थः । पिपूर्थ । पिपर्मि । पिपूर्वः । पिपूर्मः । लिटि णल्याह—पपारेति । उत्वात्परत्वाद्वृद्धिरिति भावः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्य नेत्वम् , तत्र श्लावित्यनुवृत्तेः । प्राप्ते इति । गुणे नित्यं प्राप्ते इत्यर्थः । शॄद् प्राम् । शॄ दॄ पॄ एषां द्वन्द्वः । लिटीति । 'दयतेर्दिगि लिटि' इत्यतः तदनुवृत्तेरिति भावः । यद्यपि पूर्वसूत्रेषु क्वापि कितीति न दृष्टं; तथापि अस्य 'ऋच्छत्यृताम्' इति गुणाऽपवादत्वात् गुणस्य च तस्य किदर्थत्वात्कितीत्युक्तम् । पप्रतुरिति । पपॄ अतुस् इति स्थिते ऋकारस्य ह्रस्वे तस्य यणिति भावः । गुणपक्षे आह—पपरतुरिति । गुण एव तु न विकल्पितः । गुणाऽभावे 'वार्णादाङ्गं बलीयः' इति यणं बाधित्वा 'उदोष्ठ्य' इत्युत्वप्रसङ्गात् । पपरिथ । पप्रथुः-पपरथुः । पप्र-पपर । पपार-पपर । पप्रिव-पपरि- व । 'वॄतो वा' इति दीर्घविकल्पं मत्वा आह—परिता परीतेति । परिष्यति-परीष्यति । पिपर्तु-पिपूर्तात् । पिपूर्ताम् । पिपुरतु । पिपूर्हि-पिपूर्तात् । पिपूर्तम् । पिपूर्त । पिप- राणि । पिपराव । पिपराम । लङ्याह—अपिपरिति । अपि पॄ त् इति स्थिते गुणे रप- रत्वे हल्ङ्यादिना तकारलोपे रेफस्य विसर्गः । अपिपरुरिति । अभ्यस्तत्वात् जुस् । कृते 'जुसि च' इति गुणे रपरत्वम् । अपिपः । अपिपूर्तम् । अपिपूर्त । अपिपरम् । अ- पिपूर्व । अपिपूर्म । केचिदिति । अन्ये आचार्या इत्यर्थः । ह्रस्वान्तत्वपक्षे 'उदोष्ठ्य' इत्युत्वं नेति मत्वा आह—पिपृत इति । ह्रस्वान्तस्य अनिट्त्वाल्लुडादौ पर्तेत्यादि । पिपृहि । अपार्षीदिति । ह्रस्वान्तस्य अनिट्त्वान्न सिज्लोप इति भावः । नन्वाचार्या- न्तरसम्मतं ह्रस्वान्तत्वं कुतोऽस्माभिरादर्तव्यम् इत्यत आह—पाणिनीयेति । पाणिनि- सम्मतदीर्घान्तत्वस्यैवाश्रयणे 'तं रोदसी पिपृतम्' इत्यादौ 'उदोष्ठ्य' इत्युत्वापत्त्या ऋकारस्य ह्रस्वस्य श्रवणाऽनापत्त्या तद्विषये छान्दसत्वमेव शरणमनुसरणीयं स्यादि-

णपोषणयोः । २४९६ भृञामित् ७।४।७६॥ भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । बिभर्ति । बिभृतः । बिभ्रति । बिभृषे । श्नुवद्भावात् द्वित्वेऽपि वे । बिभरामास-बभार । बभर्थ । बभृव । बिभृहि । बिभराणि । अबिभः । अबिभृताम् । अबिभरुः । बिभृयात् । भ्रियात् । भृषीष्ट । अभार्षीत् । अभृत । १०८८ माङ् माने शब्दे च । २४९७ ई हल्यघोः ६।४।११३॥ श्नाभ्यस्तयोरात

स्यर्थः । डु भृञिति । अनिडयं ञित्त्वादुभयपदी । श्लौ सति द्वित्वादौ बिभर्तीत्यादि स्थितम् । भृञामित् । भृञामिति बहुवचनाद्भृञादीनामिति लभ्यते । 'अत्र लोपः' इत्यतः अभ्यासस्येति 'निजां त्रयाणां गुणः श्लौ' इत्यतः त्रयाणां श्लाविति चानुवर्तते । तदाह—भृञ् माङित्यादिना । बिभ्रतीति । अभ्यस्तत्वाददादेशे यण् । बिभर्षि । बिभृथः । बिभृथ । बिभर्मि । बिभृवः । बिभृमः । बिभृते । बिभ्राते । बिभ्रते । बिभृषे । बिभ्राथे । इति सिद्धवत्कृत्य आह—बिभृध्वे इति । बिभ्रे । बिभृवहे । बिभृमहे । श्लुवद्भावादिति । 'भीह्रीभृहुवाम्' इत्यनेन इति भावः । बिभरामासेति । अनुप्रयोगसामर्थ्यादस्तेः भूभावो नेति भावः । बभारेति । श्लाविरयनुवृत्तेर्भृञामिदिति नेत्त्वम् । बभ्रतुः । बभ्रुः इत्यपि ज्ञेयम् । 'कृसृभृवृ' इति लिटि इण्निषेधः । यद्यपि 'अचस्तास्वत्' इति नित्यमिण्निषेधः, ऋदन्तत्वेन भारद्वाजमतेऽपि निषेधात् । तदाह—बभर्थेति । बभ्रथुः । बभ्र । बभार-बभर इति सिद्धवत्कृत्य आह-बभृवेति । क्रादित्वादिण्निषेध इति भावः । बभ्रे । बभ्राते । बभ्रिरे । बभृषे । बभ्राथे । बभृढ्वे । बभ्रे । बभृवहे । बभृमहे । भर्ता । भरिष्यति-भरिष्यते । बिभर्तु-बिभृतात् । बिभृताम् । बिभ्रतु । इति सिद्धवत्कृत्य आह—बिभृहीति । हेरपित्त्वेन ङित्त्वाद्गुणनिषेध इति भावः । बिभृतात् । बिभृतम् । बिभृत । इति सिद्धवत्कृत्य आह—बिभराणीति । आटः पित्त्वेन ङित्त्वाभावान्न गुणनिषेध इति भावः । बिभराव । बिभराम । लङ्याह—अबिभरिति । अबिभृ त् इति स्थिते गुणे रपरत्वे हल्ङ्यादिलोपे रेफस्य विसर्ग इति भावः । अबिभर्तामिति । अभ्यस्तत्वात् झेर्जुस् 'जुसि च' इति गुणः । अबिभः । अबिभृतम् । अबिभृत । अबिभरम् । अबिभृव । अबिभृम । अबिभृत । अबिभ्राताम् । अबिभ्रत । अबिभृथाः । अबिभ्राथाम् । अबिभृध्वम् । अबिभ्रि । अबिभृवहि । अबिभृमहि । आशीर्लिङ्याह—भ्रियादिति । 'रिङ्शयग्लिङ्क्षु' इति रिङ् । आत्मनेपदे आशीर्लिङ्याह-भृषीष्टेति । 'उश्च' इति कित्त्वान्न गुणः । अभार्षीदिति । अनिट्त्वान्न सिज्लोपः । सिचि वृद्धिः । रपरत्वमिति भावः । अभार्ष्टामित्यादि । आत्मनेपदे लुङ्याह-अभृतेति । 'ह्रस्वादङ्गात्' इति सिचो लोपः । अभृषातामित्यादि । माङ् माने इति । अनिट् । ङित्त्वादात्मनेपदी । श्लौ द्वित्वे 'भृञामित्' इति अभ्यासस्य इत्त्वे मि मा ते इति स्थिते—ई हल्यघोः । 'ई' इति लुप्तप्रथमाकम् । 'श्नाभ्यस्तयोरातः' इत्यनुवर्तते 'गमहन' इत्यतः क्ङितीति 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इति चानुवर्तते ।

आसिद्धे न स्थानिवत्' । धत्तः । दधति । धत्थः । धत्थ । दध्वः । दध्मः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित ।

अथ त्रयः स्वरितेतः। १०६३ णिजिर् शौचपोषणयोः। २५०२ **निजां त्रयाणां गुणः श्लौ ७।४।७५॥** णिजिर् विजिर् विष्लृ एषामभ्यासस्य गुणः स्याच्छ्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। नेक्ता। नेक्ष्यति। नेनेक्तु। नेनिग्धि।

तकारथकारयोरिति लभ्यते। चकारात् स्ध्वोरिति समुच्चीयते। सकारे ध्वशब्दे चेति लभ्यते। तदाह—द्विरुक्तस्येत्यादिना। तथाच अभ्यासे दकारस्य धकारः तकारपरकत्वात्। ननु 'श्नाभ्यस्तयो'रित्याल्लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वान्न तकारपरकत्वं, नापि झषन्तत्वमित्यत आह—वचनसामर्थ्यादिति। वस्तुतस्त्विति। भष्भावस्य पूर्वत्रासिद्धीयत्वादेव तस्मिन् कर्तव्ये आल्लोपस्य स्थानिवत्त्वाऽप्रसक्तेर्वचनसामर्थ्याश्रयणक्लेशो वृथेति भावः। धत्तः इति। धस्य चर्त्वेन त इति भावः। दधतीति। 'अदभ्यस्तात्' इत्यदादेशे 'श्नाभ्यस्तयोः' इत्याल्लोपः। धत्थः इति। थकारपरत्वात् भष्। धत्थ। दधामि। दध्वः इति। परनिमित्ताऽभावान्न भष्। दध्मः। धत्ते इति। दधाते। दधते। धत्से इति। सकारपरकत्वाद्भषिति भावः। दधाथे। धद्ध्वे इति। दध् ध्वे इति स्थिते ध्वशब्दपरकत्वाद्भषिति भावः। दधे। दध्वहे। दध्महे। दधौ। दधे। धाता। धास्यति। धास्यते। दधातु-धत्तात्। धत्ताम्। दधतु। धेहीति। 'घ्वसोः' इत्येत्वाभ्यासलोपाविति भावः। धत्तात्। धत्तम्। धत्त। दधानि। दधाव। दधाम। धत्ताम्। दधाताम्। दधताम्। धत्स्व। दधाथाम्। धद्ध्वम्। दधै। दधावहै। दधामहै। अदधात्। अधत्त। दध्यात्। दधीत। धेयात्। धासीष्ट। अधात्। अधितेति। 'स्थाघ्वोरिच्च' इति इत्त्वे 'ह्रस्वादङ्गात्' इति सिचो लोप इति भावः। अधास्यत्। अधास्यत।

णिजिर् धातुः, अनिडयं णोपदेशः। इरित्। इकारस्य प्रत्येकमित्त्वाभावान्न नुम्। इकारस्य स्वरितत्वप्रतिज्ञाबलादात्मनेपदं भवत्येव। तस्मादयमप्युभयपदी। एवं विजिरपि ज्ञेयः। निजां त्रयाणाम्। निजामिति बहुवचनात्तदादीनां ग्रहणम्। 'अत्र लोपः' इत्यतः अभ्यासस्येत्यनुवर्तते। तदाह—णिजिर् इत्यादिना। नेनेक्तीति। श्लौ द्वित्वे हलादिशेषे उत्तरखण्डस्य तिपमाश्रित्य गुणे पूर्वखण्डस्यानेन गुणे चोः कुत्वमिति भावः। अभ्यस्तत्वाददादेशं मत्वा आह—नेनिजतीति। नेनेक्षि। नेनिक्थः। नेनिक्थ। नेनेज्मि। नेनिज्वः। नेनिज्मः। नेनिक्ते। नेनिजाते। नेनिजते। नेनिक्षे। नेनिजाथे। नेनिग्ध्वे। नेनिजे। नेनिज्वहे। नेनिज्महे। निनेज। निनिजतुः। निनिजुः। निनेजिथ। निनिजथुः। निनिज। निनेज। निनिजिव। निनिजिम। निनिजे। निनिजाते। निनिजिरे। निनिजिषे। निनिजाथे। निनिजिध्वे। निनिजे। निनिजिवहे। निनिजिमहे। नेक्ता। नेक्ष्यति। नेनेक्तु। नेनिक्तात्। नेनिक्ताम्। नेनि-

४।११८॥ जहातेरालोपः स्याद्यादौ सार्वधातुके। जह्यात्। 'एर्लिङि' (सू २३७४) हेयात्। अहासीत्। १०९१ डु दाञ् दाने। प्रणिददाति। दत्तः। ददति। दत्ते ददौ। 'घ्वसोः—' (सू २४७१) इत्येत्वाभ्यासलोपौ। देहि। अददात्। अदत्ताम्। अददुः। दद्यात्। देयात्। अदात्। अदाताम्। अदुः। अदित। १०९२ डु धाञ् धारणपोषणयोः। 'दानेऽपि' इत्येके। प्रणिदधाति। २५०१ दधस्तथोश्च ८।२।३८॥ द्विरुक्तस्य झषन्तस्य धाञ्धातोर्बशो भष् स्यात्तथयोः परयोः स्ध्वोश्च परतः। 'वचनसामर्थ्यादालोपो न स्थानिवत्' इति वामनमाधवौ। वस्तुतस्तु पूर्व-

इत्यतः आत इति, 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इति चानुवर्तते। 'यि' इति सप्तम्यन्तं सार्वधातुकविशेषणम्। तदादिविधिः। तदाह—जहातेरित्यादिना। 'जहातेश्च' इत्यस्यापवादः। आशीर्लिङ्याह—एर्लिङीति। अहासीदिति। 'यमरम' इति सगिटौ। अहास्यत्। डु दाञ्-उभयपदी। अनि । प्रणिददातीति। 'नेर्गद' इति णत्वम्। दत्त इति। ददा तस् इति स्थिते 'अघोरिति पर्युदासादीत्वाभावे 'श्नाभ्यस्तयोः' इत्याल्लोपः। ददतीति। अभ्यस्तत्वाददादेशे 'श्नाभ्यस्तयोः' इत्याल्लोप इति भावः। ददासि। दत्थः। दत्थ। ददामि। दद्वः। दद्मः। दत्ते इति। ददाते। ददते। दत्से। ददाथे। दद्ध्वे। ददे। दद्वहे। दद्महे। ददौ इति। ददतुः। ददुः। ददिथ। ददाथ। ददथुः। दद। ददौ। ददिव। ददिम। ददे। ददाते। ददिरे। ददिषे। ददाथे। ददिध्वे। ददे। ददिवहे। ददिमहे। दाता। दास्यति। दास्यते। ददातु-दत्तात्। दत्ताम्। ददतु। इति सिद्धवत्कृत्य देहि इत्यत्र आह—घ्वसोरिति। दत्तात्। दत्तम्। दत्त। ददानि। ददाव। ददाम। दत्ताम्। ददाताम्। ददताम्। दत्स्व। ददाथाम्। दद्ध्वम्। ददै। ददावहै। ददामहै। लङ्याह—अददादिति। अददुरिति। अभ्यस्तत्वात् जुस्। अददाः। अदत्तम्। अदत्त। अददाम्। अदद्व। अदद्म। विधिलिङ्याह—दद्यादिति। 'श्नाभ्यस्तयोः' इत्याल्लोपः। आशीर्लिङि तु 'एर्लिङि' इत्येत्वमभिप्रेत्य आह—देयादिति। दासीष्ट। लुङ्याह—अदादिति। 'गातिस्था' इति सिचो लुगिति भावः। अदाः। अदातम्। अदात। अदाम्। अदाव। अदाम। लुङ्यात्मनेपदे आह—अदितेति। अदा स् त इति स्थिते 'स्थाघ्वोरिच्च' इति दाधातोरन्त्यस्य इकारः। सिचः कित्वं च। कित्त्वान्न गुणः। 'ह्रस्वादङ्गात्' इति सिचो लोप इति भावः। अदिषाताम्। अदिषत। अदिथाः। अदिषाथाम्। अदिढ्वम्। अदिषि। अदिष्वहि। अदिष्महि। अदास्यत्। अदास्यत। डु धाञ्। ञित्वादुभयपदी। अनिट्। प्रणिदधातीति। 'नेर्गद' इति णत्वम्। तसि श्लौ द्वित्वे अभ्यासजश्त्वे 'श्नाभ्यस्तयोः' इत्याल्लोपे दध् तस् इति स्थिते—दधस्तथोश्च। धाधातोः कृतद्वित्वस्य दधा इत्यस्य 'दधः' इति षष्ठ्यन्तम्। 'एकाचो बशः' इत्यतः झषन्तस्य बशो भष् इत्यनुवर्तते। त थ् अनयोर्द्वन्द्वात् सप्तमीद्विवचनम्। तकारादकार उच्चारणार्थः।

असिद्धे न स्थानिवत्' । धत्तः । दधति । धत्थः । धत्थ । दध्वः । दध्मः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित ।

अथ त्रयः स्वरितेतः। १०६३ णिजिर् शौचपोषणयोः। २५०२ निजां त्रयाणां गुणः श्लौ ७।४।७५॥ णिजिर् विजिर् विष्लृ एषामभ्यासस्य गुणः स्याच्छ्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेक्ता । नेक्ष्यति । नेनेक्तु । नेनिग्धि ।

---

तकारथकारयोरिति लभ्यते । चकारात् स्ध्वोरिति समुच्चीयते । सकारे ध्वशब्दे चेति लभ्यते । तदाह—द्विरुक्तस्येत्यादिना । तथाच अभ्यासे दकारस्य धकारः तकारपरकत्वात् । ननु 'श्नाभ्यस्तयो'रित्याल्लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वान्न तकारपरकत्वं, नापि झषन्तत्वमित्यत आह —वचनसामर्थ्यादिति । वस्तुतस्त्विति । भष्भावस्य पूर्वत्रासिद्धीयत्वादेव तस्मिन् कर्तव्ये आल्लोपस्य स्थानिवत्त्वाऽप्रसक्तेर्वचनसामर्थ्याश्रयणक्लेशो वृथेति भावः । धत्तः इति । धस्य चर्त्वेन त इति भावः । दधतीति । 'अदभ्यस्तात्' इत्यदादेशे 'श्नाभ्यस्तयोः' इत्याल्लोपः । धत्थः इति । थकारपरत्वात् भष् । धत्थ । दधामि । दध्वः इति । परनिमित्ताऽभावान्न भष् । दध्मः । धत्ते इति । दधाते । दधते । धत्से इति । सकारपरकत्वाद्भषिति भावः । दधाथे । धद्ध्वे इति । दध् ध्वे इति स्थिते ध्वशब्दपरकत्वाद्भषिति भावः । दधे । दध्वहे । दध्महे । दधौ । दधे । धाता । धास्यति । धास्यते । दधातु-धत्तात् । धत्ताम् । दधतु । धेहीति । 'घ्वसोः' इत्येत्वाभ्यासलोपाविति भावः । धत्तात् । धत्तम् । धत्त । दधानि । दधाव । दधाम । धत्ताम् । दधाताम् । दधताम् । धत्स्व । दधाथाम् । धद्ध्वम् । दधै । दधावहै । दधामहै । अदधात् । अधत्त । दध्यात् । दधीत । धेयात् । धासीष्ट । अधात् । अधितेति । 'स्थाघ्वोरिच्च' इति इत्त्वे 'ह्रस्वादङ्गात्' इति सिचो लोप इति भावः । अधास्यत् । अधास्यत ।

णिजिर् धातुः, अनिडयं णोपदेशः । इरित् । इकारस्य प्रत्येकमित्त्वाभावान्न नुम् । इकारस्य स्वरितत्वप्रतिज्ञाबलादात्मने फले आत्मनेपदं भवत्येव । तस्मादयमप्युभयपदी । एवं विजिरपि ज्ञेयः । निजां त्रयाणाम् । निजामिति बहुवचनात्तदादीनां ग्रहणम् । 'अत्र लोपः' इत्यतः अभ्यासस्येत्यनुवर्तते । तदाह—णिजिर् इत्यादिना । नेनेक्तीति । श्लौ द्वित्वे हलादिशेषे उत्तरखण्डस्य तिपमाश्रित्य गुणे पूर्वखण्डस्यानेन गुणे चोः कुत्वमिति भावः । अभ्यस्तत्वाददादेशं मत्वा आह—नेनिजतीति । नेनेक्षि । नेनिक्थः । नेनिक्थ । नेनेज्मि । नेनिज्वः । नेनिज्मः । नेनिक्ते । नेनिजाते । नेनिजते । नेनिक्षे । नेनिजाथे । नेनिग्ध्वे । नेनिजे । नेनिज्वहे । नेनिज्महे । निनेज । निनिजतुः । निनिजुः । निनेजिथ । निनिजथुः । निनिज । निनेज । निनिजिव । निनिजिम । निनिजे । निनिजाते । निनिजिरे । निनिजिषे । निनिजाथे । निनिजिध्वे । निनिजे । निनिजिवहे । निनिजिमहे । नेक्ता । नेक्ष्यति । नेनेक्तु । नेनिक्तात् । नेनिक्ताम् । नेनि-

२५०३ नाभ्यस्तस्याचि पिति सार्वधातुके ७।३।८७॥ लघूपधगुणो न स्यात् । नेनिजानि । अनेनेक् । अनेनिजाम् । अनेनिजुः । नेनिज्यात् । निज्यात् । अनिजत् । अनैक्षीत् । अनिक्त । १०९४ विजिर् पृथग्भावे । वेवेक्ति । वेविक्ते । विवेजिथ । अत्र 'विज इट्' ( सू २५३६ ) इति ङित्त्वं न, 'ओ विजी' इत्यस्यैव तत्र ग्रहणात् । 'णिजिविजी रुधादावपि । १०९५ विष्लृ व्याप्तौ । वेवेष्टि-वेविष्टे । लृदित्त्वादङ् । अविषत् । तङि क्सः । अजादौ 'क्सस्याचि' ( सू २३३७ ) इत्यल्लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त ।

अथ आगणान्तात्परस्मैपदिनश्छान्दसाश्च । १०९६ घृ क्षरणदीप्त्योः । 'जिघर्म्यग्निं हविषा घृतेन' । 'भृञामित्' (सू २४९६) । 'बहुलं छन्दसि' (सू ३५९८)

जतु । नेनिग्धीति । अपित्त्वेन ङित्त्वान्न गुणः । हेर्धिः । नेनिक्तात् । नेनिक्तम् । नेनिक्त । 'आडुत्तमस्य' इति पित्त्वेन अङित्त्वाल्लघूपधगुणे प्राप्ते-नाभ्यस्तस्याचि । 'मिदेर्गुणः' इत्यतो गुण इति 'पुगन्त' इत्यतो लघूपधस्येति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति-लघूपधगुणो न स्यादिति । नेनिजानीति । नेनिजाव । नेनिजाम । नेनिक्ताम् । नेनिजाताम् । नेनिजताम् । नेनिक्ष्व । नेनिजाथाम् । नेनिग्ध्वम् । नेनिजै । नेनिजावहै । नेनिजामहै । लङि परस्मैपदे आह—अनेनेगिति । अनेनिजुरिति । अभ्यस्तत्वाज्जुसिति भावः । अनेनेक् । अनेनिक्तम् । अनेनिक्त । अनेनिजम् । 'नाभ्यस्तस्य' इति न गुणः । अनेनिज्व । अनेनिज्म । निक्षीष्ट । लुङ्याह—अनिजदिति । इरित्त्वादङिति भावः । अनिक्तेति । 'झलो झलि' इति सिज्लोपः । अनिक्षाताम् । इत्यादि । विजिरपि णिजि-वत् । अत्रेति । थलि इट्पक्षे 'विज इट्' इति विहितं ङित्त्वं नेत्यर्थः । अतो न गुण-निषेध इति भावः । ओ विजी इत्यस्यैवेति । व्याख्यानादिति भावः । रुधादावपीति । ततश्च 'रुधादिभ्यः श्नम्' इति श्नम्विकरणादावपीति भावः । विष्लृ व्याप्तौ इति । लृदित्, उभयपदी, अनिट् । णिजेरिव रूपाणि । वेवेष्टीति । ष्टुत्वेन तकारस्य टः । सिपि 'षढोः' इति षस्य कत्वम् । वेवेक्षि । वेविष्टः । वेविष्ठ । वेविड्ढि । अविषदिति । लृदित्त्वादङिति भावः । तङि क्स इति । 'शल इगुपधात्' इत्यनेनेति भावः । आगणा-न्तादिति । जुहोत्यादिगणसमाप्तिपर्यन्तमित्यर्थः । घृधातुरनिट् । तिपि श्लौ द्वित्वे अभ्यासकार्ये गुणे रपरत्वे । जघर्ति । जघृतः । जघ्रति । जघर्म्यग्नि हविषा घृतेन' इति बह्वृचमन्त्रपाठः । 'जिघर्म्यग्नि मनसा घृतेन' इति तैत्तिरीयपाठः । अत्र इत्वमभ्यास-स्य आह—भृञामिदिति । ननु तत्र त्रयाणामेव ग्रहणमित्यत आह—बहुलमिति । इत्वं छान्दसमिति भावः । जघार । जघ्रतुः । जघ्रुः । जघर्थ । जघ्रथुः । जघ्र । जघार-जघर । जघ्रिव । घरिष्यति । जघर्तु-जघृतात् । जघ्रतु । जघृहि । जघराणि । अजघः । अजघृ-ताम् । अजघरुः । अजघरम् । अजघृव । जघृयात् । घ्रियात् । अघार्षीत् । अघरिष्यत् ।

इतीत्वम् । १०९७ हु प्रसह्यकरणे । 'अयं स्रुवोऽभिजिहर्ति होमान्' । १०९८ ऋ
१०९९ सृ गतौ । 'बहुलं छन्दसि' (सू ३५९८) इत्येव सिद्धे 'अर्तिपिपर्त्योश्च'
(सू २४९३) इतीत्वविधानादयं भाषायामपि । अभ्यासस्यासवर्णे (सू २२९०)
इतीयङ् । इयर्ति । इयृतः । इयृति । आर । आरतुः । 'इडत्यर्ति–' (सू २३८४)
इति नित्यमिट् । आरिथ । अर्ता । अरिष्यति । इयराणि । ऐयः। ऐयृताम्। ऐयरुः ।
इयृयात् । अर्यात् । आरत् । ससर्ति । ११०० भस भर्त्सनदीप्त्योः । बभस्ति ।

हु प्रसह्यकरणे इति । धृधातुवद्रूपाणि । अयं स्रुवो अभिजिहर्ति होमानिति । स्रुवे साध्यमाने याजमानो मन्त्रः । अत्रापि अभ्यासस्य इत्वं छान्दसमिति भावः ।

ऋ सृ गताविति । इमावनिटौ । तत्र ऋधातोः छान्दसत्वेऽपि लोकेऽपि क्वचित् प्रयोगं समर्थयति—बहुलमिति । 'भृञामित्' 'अर्तिपिपर्त्योश्च' 'बहुलं छन्दसि' इति सूत्रस्थितिः । तत्र 'बहुलं छन्दसी' त्येव ऋधातोरित्त्वसिद्धेः 'अर्तिपिपर्त्योश्च' इत्यर्तिग्रहणात् लोकेऽपि ऋधातोः श्लुविकरणस्य प्रयोगो विज्ञायत इत्यर्थः । एतच्चाऽत्रैव सूत्रे भाष्ये स्पष्टम् । अत एव भाष्यात् श्लुविकरणस्यैव ऋधातोः 'अर्तिपिपर्त्योश्च' इत्यत्र ग्रहणम् । पिपर्तिसाहचर्याच्च, श्लाविसत्य अभ्यासग्रहणस्य चानुवृत्तश्चेत्यलम् । अभ्यासस्यासवर्णे इति । शपः श्लौ ऋ ति इति स्थिते द्वित्वे उरदत्त्वं बाधित्वा 'अर्तिपिपर्त्योश्च' इत्यभ्यासऋकारस्य इत्वे रपरत्वे हलादिशेषे उत्तरखण्डस्य ऋकारस्य गुणे रपरत्वे इ अर् ति इति स्थिते 'अभ्यासस्याऽसवर्णे' इति इयङि 'इयर्ति' इति रूपमित्यर्थः । इयृत इति । पूर्ववदेव द्वित्वादि । तसः अपित्त्वेन ङित्त्वाद्गुणनिषेध इति भावः । इयृतीति । पूर्ववदेव द्वित्वादि । अभ्यस्तत्वाददादेशः । ङित्त्वान्न गुणः । उत्तरखण्डस्य ऋकारस्य यण् रेफ इति भावः । इयर्षि । इयृथः । इयर्मि । इयृवः । इयृमः । लिट्याह—आरेति । णलि 'अचस्तास्वत्' इति 'ऋतो भारद्वाजस्य' इति नित्यमिण्निषेधे प्राप्ते आह—इडत्यर्तीति । नित्यमिडिति । आरिथ । आरिव । आरिम । अर्तेति । अनिट्त्वादिति भावः । अरिष्यतीति । 'ऋद्धनोः स्ये' इति इडिति भावः । इयर्तु-इयृतात् । इयृताम् । इयृतु । इयृहि इयृतात् । इयृतम् । इयृत । इयराणीति । आटः पित्त्वेन अङित्त्वान्न गुणनिषेध इति भावः । इयराव । इयराम । लङ्याह—ऐय इति । श्लौ ऋ त् इति स्थिते द्वित्वे अभ्यासस्य इत्त्वे रपरत्वे हलादिशेषे इयङि उत्तरखण्डस्य गुणे रपरत्वे च हल्ङ्यादिलोपे रेफस्य विसर्गे इय इति स्थिते आटि वृद्धौ ऐय इति रूपमिति भावः । न च 'लावस्थायाम'डिति पक्षे आटि वृद्धौ रपरत्वे आर् त् इति स्थिते द्वित्वे हलादिशेषे सवर्णदीर्घे हल्ङ्यादिलोपे रेफस्य विसर्गे आः इति स्यादिति शङ्क्यम्, 'बहुलं छन्दस्यमाङ्योगेऽपि' इति बहुलग्रहणेनात्र लावस्थायामाडित्यस्याऽनाश्रयणादित्याहुः । ऐयरुरिति । ऐयः । ऐयृतम् । ऐयृत । ऐयरम् । ऐयृव । ऐयृम । विधिलिङ्याह—इयृयादिति । यासुटो ङित्त्वाद्गुण-

'घसिभसोर्हलि—' ( ३५५० ) इत्युपधालोपः । 'झलो झलि' ( सू २२८१ ) इति सलोपः । बब्धः । बप्सति । ११०१ कि ज्ञाने । चिकेति । ११०२ तुर त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति । ११०३ धिष शब्दे । दिधेष्टि । दिधिष्टः । ११०४

निषेध इति भावः । इयृयाताम् । इत्यादि । आशीर्लिङ्याह—प्रर्यादिति । 'अकृत्सार्वधातुकयोः' इति दीर्घः प्राप्तः । तं बाधित्वा 'रिङ्शयग्लिङ्क्षु' इति रिङ् प्राप्तः । तं बाधित्वा 'गुणोऽर्तिसंयोगाद्योः' इति गुण इति भावः । लुङ्याह—आरदिति । 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङि 'ऋदृशोऽङि' इति गुण इति भावः । आरिष्यत् । तदेवं ऋधातुं निरूप्य सृधातुं निरूपयति—ससर्तीति । ससृतः । सस्रति । इत्यादि सुगमम् । ससार । ससर्थ । सस्रुव । सर्ता । सरिष्यति । ससर्तु । असस्रः । अससृताम् । अससरुः । सस्रियात् । स्रियात् । असरत् । भस भर्त्सनदीप्त्योः । अयं सेट् । बभस्तीति । श्लौ भस् ति इति स्थिते द्वित्वे अभ्यासजश्त्वमिति भावः । बभस् तस् इति स्थिते आह—घसिभसोरिति । 'घसिभसोर्हलि च' इत्यस्यायमर्थः—छन्दसि अनयोरुपधाया लोपः स्यात् हलादावजादौ च क्ङिति परे इति । तथाच बभस् तस् इत्यत्र उपधालोपे 'झलो झलि' इति सकारलोपे तकारस्य 'झषस्तथोः' इति धत्वे भकारस्य जश्त्वमिति भावः । बप्सतीति । अभ्यस्तत्वाददादेशे बभस् अति इति स्थिते 'घसिभसोः' इत्युपधालोपे भकारस्य चर्त्वमिति भावः । बभस्सि । बब्धः । बब्ध । बभस्मि । बप्स्वः । बप्स्मः । बभास । बप्सतुः । बप्सुः । बभसिथ । बप्सथुः । बप्स । बभास-बभस । बप्सिव । बप्सिम । भसिता । भसिष्यति । बभस्तु-बब्धात् । बब्धाम् । बप्सतु । बब्धि-बब्धात् । बब्धम् । बब्ध । बभसानि । बभसाव । बभसाम । अबभः । अबब्धाम् । अबप्सुः । अबभः । अबब्धम् । अबब्ध । अबप्सम् । अबप्स्व । अबप्स्म । बप्स्यात् । भस्यात् । अभासीत्-अभसीत् । अभसिष्यत् । कि ज्ञाने । चिकेतीति । किधातोस्तिपि श्लौ द्वित्वे अभ्यासचुत्वे उत्तरखण्डस्य गुण इति भावः । चिकितः । चिक्यति । चिकेषि । चिकिथः । चिकिथ । चिकेमि । चिकिवः । चिकिमः । चिकाय । चिक्यतुः । चिक्युः । चिकायथ-चिकेथ । चिक्यिव । केता । केष्यति । चिकेतु—चिकितात् । चिकिताम् । चिक्यतु । चिकिहि । चिकयानि । अचिकेत् । अचिकिताम् । अचिकयुः । अचिकेः । अचिकयम् । अचिकिव । चिकियात् । कीयात् । अकैषीत् । अकेष्यत् । तुर त्वरणे इति । तुतूर्त इति । 'हलि च' इति दीर्घः । तुतोर्षि । तुतूर्थः । तुतूर्थ । तुतोर्मि । तुतूर्वः । तुतोर । तुतुरतुः । तुतोरिथ । तुतुरिव । तोरिता । तोरिष्यति । तुतोर्तु-तुतूर्तात् । तुतूर्ताम् । तुतुरतु । तुतूर्हि । तुतोराणि । अतुतोः । अतुतूर्ताम् । अतुतुरुः । अतुतोः । अतुतुरम् । अतुतूर्व । तुतूर्यात् । तूर्यात् । अतोरीत् । अतोरिष्यत् । धिष शब्दे । सेट् । दिधेष्टीति । श्लौ द्वित्वादौ लघूपधगुणे तकारस्य ष्टुत्वमिति भावः । दिधिषति । दिधेक्षि । दिधिष्ठः । दिधेष्मि । दिधिष्वः । दिधेष । दिधिषतुः । दिधेषिथ । दिधिषिव । धेषिता । धेषिष्यति । दिधेष्टु-दिधिष्टात् । दिधिषतु । दिधि-

धन धान्ये । दधन्ति । दधन्तः । दधनति । ११०५ जन जनने । जजन्ति । २५०४ **जनसनखनां सञ्झलोः ६।४।४२॥** एषामाकारोऽन्तादेशः स्यात्झलादौ सनि झलादौ क्ङिति च । जजातः । जज्ञति । जजंसि । जजान । जजायात् । जजन्यात् । जायात् । जन्यात् । ११०६ गा स्तुतौ । 'देवाञ्जिगाति सुम्नयुः' । जिगीतः । जिगति ।

इति तिङन्ते जुहोत्यादिप्रकरणम् ।

---

ड्ढि । दिधिषाणि । अदिधेट् । अदिधिष्टाम् । अदिधिषुः । अदिधिषम् । अदिधिष्व । दिधिष्यात् । धिष्यात् । अधेषीत् । अधेषिष्यत् । धन धान्ये इति । धान्यार्जने इत्यर्थः । दधन्त इति । 'षमूष सहने' इति धातोः 'चक्से' इतिवदनुनासिकस्य क्वीति न दीर्घः । दधंसि । दधन्थः । दधन्मि । दधन्वः । दधन्मः । दधान । दधनतुः । दधनिथ । दधनिव । धनिता । धनिष्यति । दधन्तु—दधन्तात् । दधन्ताम् । दधनतु । दधंहि । दधनानि । अदधन् । अदधन्ताम् । अदधनुः । अदधन् । अदधन्तम् । अदधन्त । अदधनम् । अदधन्व । अदधन्म । दधन्यात् । धन्यात् । अधानीत्—अधनीत् । अधनिष्यत् । जन जनने इति । उत्पत्तौ अकर्मकः । उत्पादने सकर्मकः । जनसन । 'विड्वनोः' इत्यतः आदित्यनुवर्तते । तदाह—एषामाकारोऽन्तादेशः इति । सन् झल् इत्यनयोः द्वन्द्वात् सप्तमीद्विवचनम् । सनि झलि चेति लभ्यते । 'अनुदात्तोपदेश' इत्यतः झलि क्ङितीत्यनुवर्तते । तत्र झलीत्यनुवृत्तेन सन् विशेष्यते । तदादिविधिः । झलादौ सनीति लभ्यते । क्ङितीत्यनुवृत्तं तु एतत्सूत्रस्थेन झला विशेष्यते । तदादिविधिः । झलादौ क्ङितीति लभ्यते । तथा च झलादौ सनीति, झलादौ क्ङितीति च परनिमित्तद्वयं लब्धम् । तदाह—झलादौ सनि झलादौ क्ङिति चेति । सन्विशेषणं झलादाविति किम्? जिजनिषति । सिसनिषति । चिखनिषति । अथ क्ङितो झल्विशेषणस्य प्रयोजनमाह—जज्ञतीति । जजन् अति इति स्थिते अतेर्ङित्त्वेऽपि झलादित्वाभावादात्वाऽभावे 'गमहन' इत्युपधालोपे नकारस्य श्चुत्वेन ञकार इति भावः । 'जनसनखनां सन्' इत्याश्रित्य योगविभागेन उक्तार्थसिद्धिं चाश्रित्य झल्ग्रहणं त्वत्र सूत्रे प्रत्याख्यातं भाष्ये । जजंसीति । 'नश्च' इत्यनुस्वारः । जजाथः । जजाथ । जजन्मि । जजन्वः । जजन्मः । जजानेति । जज्ञतुः । सेडयम् । जजनिथ । जज्ञथुः । जज्ञिव । जनिता । जनिष्यति । जजन्तु-जजातात् । जजाहि । जजनानि । अजजन् । अजजाताम् । अजजुः । अजजनम् । अजजन्व । विधिलिङि 'ये विभाषा' इति मत्वा आह—जजायात् जजन्यात् इति । अजनीत्—अजानीत् । अजनिष्यत् । गा स्तुतौ । देवान् जिगातीति । 'भृञामित्' इत्यत्र 'बहुलं छन्दसि' इति वचनादभ्यासस्य इत्त्वमिति भावः । जिगीतः इति । 'ई हल्यघोः' इति ईत्वम् । जिगतीति । अभ्यस्तत्वाददादेशे 'श्नाभ्यस्तयोः' इत्याल्लोपः । जिगासि । जिगीथः । जिगीथ । जिगामि । जिगीवः । जगौ । जगतुः । जगिथ-जगाथ । जगिव । गाता । गास्यति । जिगातु-जिगीतात् । जिगी-

# अथ तिङन्ते दिवादिप्रकरणम् ॥ ४ ॥

११०७ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । ष्कन्ताः परस्मैपदिनः । २५०५ दिवादिभ्यः श्यन् ३।१।६९॥ शपोऽपवादः । 'हलि च' ( सू ३५४ ) इति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । ११०८ षिवु तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत् । न्यसेवीत् । ११०९ स्रिवु गतिशोषणयोः । १११० ष्ठिवु निरसने । केचिदिदेमं न पठन्ति । ११११ ष्णुसु अदने । 'आदाने' इत्येके । 'अदर्शने' इत्यपरे । सुष्णोस । १११२ ष्णसु निरसने । स्नस्यति । सस्नास । १११३ क्नसु ह्वरणदीप्त्योः । ह्वरणं कौटिल्यम् । चक्नास । १११४ व्युष दाहे । वुव्योष । १११५ प्लुष च । १११६ नृती गात्रविक्षेपे । नृत्यति । ननर्त । २५०६ सेऽसिचि कृतचृतच्छृदतृदनृतः ७।२।५७॥ एभ्यः परस्य सिजिभन्नस्य सादेरार्धधातुकस्य इड्वा स्यात् । नर्तिष्यति । नर्त्स्यति ।

---

साम् । जिगतु । जिगी हि । जिगानि । अजिगात् । अजिगीताम् । अजिगुः । अजिगाः । अजिगाम् । अजिगीव । जिगीयात् । आशिषि गेयात् । अगासीत् । अगास्यत् । इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां श्लुविकरणं समाप्तम् ।

अथ श्यन्विकरणधातवो निरूप्यन्ते । दिवु क्रीडेति । उदिदयम् । तेन क्त्वायामिड्विकल्पः । निष्ठायां च नेट् । ष्कन्ताः इति । जृष् झृष् वयोहानौ इत्येतत्पर्यन्ता इत्यर्थः । दिवादिभ्यः श्यन् । 'कर्तरि शप्' इत्यतः कर्तरीति 'सार्वधातुके यक्' इत्यतः सार्वधातुके इति चानुवर्तते इत्यभिप्रेत्य आह—शपोऽपवाद इति । शकारनकारावितौ । दिव् य ति इति स्थिते आह—हलि चेति दीर्घ इति । श्यनः अपित्त्वेन ङित्त्वान्न गुण इति भावः । दीव्यतः । दीव्यन्ति इत्यादि सुगमम् । दिदेवेति । दिदिवतुः । दिदेविथ । दिदिविव । सेट्त्वं सूचयति—देवितेति । षिवुधातुरपि सेट्, षोपदेशः, दिवुधातुवत् । परिषीव्यतीति । 'परिनिविभ्यः सेव' इति षत्वमिति भावः । परिषिषेवेति । 'स्थादिष्वेवाभ्यासस्य' इति नियमस्तु न, तत्र 'प्राक्सिताद्' इत्यनुवृत्तेरिति भावः । 'सिवादीनां वाड्व्यवायेऽपि' इति मत्वा आह—न्यषेवीत् न्यसेवीदिति । स्रिवुधातुस्तु रेफवान् । ष्ठिवु निरसने इति । 'सुब्धातुष्ठिवुष्वष्कतीनाम्' इति न सत्वम् । ष्ठीव्यति इत्यादि सुगमम् । आर्द्धधातुकेषु तु शब्विकरणस्थष्ठिवुधातुवद्रूपाणि । ष्णसुधातुश्च षोपदेशः । नृती गात्रेति । 'श्वीदितः' इत्याद्यर्थमीदित्त्वम् । सेडयम् । सेऽसिचि । से असिचि इति च्छेदः । सप्तमी षष्ठ्यर्थे । कृत चृत छृद तृद नृत् एषां समाहारद्वन्द्वात् पञ्चमी । 'उदितो

नृत्येत्। नृत्यात्। अनर्तीत्। ११७ त्रसी उद्वेगे। 'वा भ्राश—' (सू२३२१) इति श्यन्वा। त्रस्यति-त्रसति। त्रेसतुः-तत्रसतुः। ११८ कुथ पूतीभावे। पूतीभावो दौर्गन्ध्यम्। ११९ पुथ हिंसायाम्। ११२० गुध परिवेष्टने। ११२१ क्षिप प्रेरणे। क्षिप्यति। क्षेप्ता। ११२२ पुष्प विकसने। पुष्प्यति। पुपुष्प। ११२३ तिम ११२४ ष्टिम ११२५ ष्टीम आर्द्रीभावे। तिम्यति। स्तिम्यति। स्तीम्यति। ११२६ व्रीड चोदने लज्जायां च। व्रीड्यति। ११२७ इष गतौ। इष्यति। ११२८ षह ११२९ षुह चक्यर्थे। चक्यर्थस्तृप्तिः। सह्यति। सुह्यति। ११३० जॄष् ११३१ झॄष् वयोहानौ। जीर्यति। जजरतुः—जेरतुः। जरिता-जरीता। जीर्येत्। जीर्यात्। 'जॄस्तम्भु' (सू २२९१) इत्यङ् वा। 'ऋदृशोऽङि गुणः' (सू २४०६)। अजरत्—अजारीत्। अजारिष्टाम्। झीर्यति। जझरतुः। अझारीत्। ११३२ षूङ् प्राणिप्रसवे। सूयते। सुषुवे। 'स्वरतिसूति—' (सू २२७९) इति विकल्पं बाधित्वा 'श्र्युकः क्किति' (सू २३८१) इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। सुषुविषे। सुषुविवहे। सोता। सविता। ११३३ दूङ् परितापे। दूयते। ११३४ दीङ् क्षये। दीयते। २५०७ दीङो युडचि क्ङिति ६।४।६३॥ दीङः परस्याजादेः

वा' इत्यतो वेति आर्धधातुकस्येडिति चानुवर्तते। तदाह—पञ्च इत्यादिना। नित्यमिटि प्राप्ते विकल्पार्थमिदं वचनम्। अनर्तीदिति। 'सेऽसिचि' इत्यत्र 'असिचि' इत्युक्तेर्नित्यमिडिति भावः। त्रसी उद्वेगे। 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासविकल्पौ मत्वा आह—त्रेसतुः, तत्रसतुरिति। कुथ पूतीभावे इति। पवित्रीभवने इत्यर्थः। दुर्गन्धकरणे इति वा। 'पूतिगन्धस्तु दुर्गन्धः' इत्यमरः। तिम ष्टिम ष्टीमेति। द्वितीयतृतीयौ षोपदेशौ। द्वितीय इदुपधः। तृतीयस्तु ईदुपधः। षह षुहेति। षोपदेशौ। चक्यर्थस्तृप्तिरिति। यद्यपि 'चक तृप्तौ प्रतिघाते च' इत्युक्तम्। तथापि तृप्तिरेवेह विवक्षिता, व्याख्यानात्। सुहेः 'नपुंसके भावे क्तः' इति क्तप्रत्यये सुहितशब्दः। सुहितस्तृप्तिरिति 'पूरणगुण' इति सूत्रे कैयटः। जॄष झॄष वयोहानाविति। सेटकौ। जीर्यतीति। 'ऋत इद्धातोः' इति इत्वे 'हलि च' इति दीर्घ इति भावः। अतुसादौ 'ऋच्छत्यॄताम्' इति गुणे रपरत्वे 'वा जॄभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपविकल्प इति भावः। जजरिथ। 'वॄतो वा' इति मत्वा आह—जरिता जरीतेति। षूङ् प्राणिप्रसवे इति। प्रसवः उत्पादनम्। षोपदेशोऽयम्। विकल्पमिति। परमपीति शेषः। निषेधे प्राप्ते इति। पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादिति भावः। दूङ् परितापे इति। पीडने, पीडितीभवने वेत्यर्थः। आद्ये सकर्मकः। द्वितीये अकर्मकः। दीङ् क्षये इति। चयो ह्रस्वः, नाशो वा। दीङो युडचि। 'आर्धधातुके' इत्यधिकृतम् अचा विशेष्यते। तदादिविधिः। 'दीङ' इति पञ्चमी। सप्तमी षष्ठ्यर्थे। तदाह—दीङः परस्येत्यादिना। द्विर्वी ए इति

क्ङित आर्धधातुकस्य युट् स्यात्। 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' (वा ४०६२) दिदीये। **२५०८ मीनातिमिनोतिदीङां ल्यपि च ६।१।५०॥** एषामात्वं स्याल्ल्यपि चकारादशित्येज्निमित्ते। दाता। दास्यते। अदास्त। अदास्थाः। ११३५ डीङ् विहायसा गतौ। डीयते। ११३६ धीङ् आधारे। धीयते। दिध्ये। धेता। ११३७ मीङ् हिंसायाम्। हिंसा अत्र प्राणवियोगः। मीयते। ११३८ रीङ् श्रवणे। रीयते। ११३९ लीङ् श्लेषणे। **२५०९ विभाषा लीयतेः ६।१।५१॥** लीयतेरिति यका निर्देशो न तु श्ना। लीलीङोरात्वं वा स्यादेज्विषये ल्यपि च। लेता-लाता। लेष्यते-लास्यते। एज्विषये किम्। लीयते। लिल्ये। ११४० व्रीङ् वृणोत्यर्थे। व्रीयते। विव्रिये। 'स्वादय ओदितः' ( ग सू १६६ )। तत्फलं तु निष्ठानत्वम् ११४१ पीङ् पाने। पीयते। ११४२ माङ् माने। मायते। ममे। ११४३

स्थिते परत्वात् 'एरनेकाचः' इति यणि प्राप्ते नित्यत्वात् युट्। टकार इत्। उकार उच्चारणार्थः। टित्वादाद्यवयवः। दिदीये इति रूपमिति भावः। ननु युटि कृतेऽपि तस्यासिद्धत्वाद्यण् दुर्वारः। तथा च दिद्ये इति स्यात्। इकारो न श्रूयेत यकारद्वयं श्रूयेत इत्यत आह—वुग्युटाविति। मीनातिमिनोति। 'आदेच उपदेशेऽशिति' इत्यत आदित्यनुवर्तते। तदाह—एषामात्वं स्यात् ल्यपीति। चकारात् एचः, अशितीति परनिमित्तं समुच्चीयते। तत्र 'एच' इत्यनन्तरं 'निमित्ते' इति शेषः। एज्निमित्ते अशिति प्रत्यये च परे इति फलितम्। तदाह—चकारादशित्येज्निमित्ते इति। 'इति समुच्चीयत' इति शेषः। लुङ्याह—अदास्तेति। इह आत्वे कृते घुत्वे सत्यपि 'स्थाघ्वोरिच्च' इति न भवति। 'स्थाघ्वोरित्वे दीङः प्रतिषेधः' इति घुसंज्ञासूत्रस्थभाष्यपठितवार्तिकादिति भावः। धीङ् आधारे इति। आधारः आधारणम्। स्थापनमिति यावत्। लीङ् श्लेषणे। इति। लीयते। लिल्ये। लिल्यिषे। लिल्यिढ्वे लिल्यिध्वे। विभाषा लीयतेः। ननु लीयतेरिति श्यना निर्देशात् 'लीङ् श्लेषणे' इति श्नाविकरणस्य ग्रहणं न स्यादित्यत आह—यका निर्देश इति। 'सार्वधातुके यक्' इति विहितयका लीयतेरिति निर्देशः। स च श्यन्श्नान्तसाधारणः, यक उभयत्रापि साधारण्यादिति भावः। 'मीनातिमिनोति' इत्यतः ल्यपीति 'आदेचः' इत्यतः आदिति, एच इति च अनुवर्तते। तदाह—लीलीङोरित्यादिना। स्वादय ओदित इति। धातुपाठपठितं गणसूत्रमिदम्। 'षूङ् प्राणिप्रसवे' इत्यारभ्य व्रीङन्ता ओदित्कार्यभाज इत्यर्थः। निष्ठानत्वमिति। 'ओदितश्च' इत्यनेनेति भावः। प्रीङ् प्रीताविति। प्रीतिस्तुष्टिः। 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः। एवं सत्यकर्मकः। यथा—फलमूलादिना हरिः प्रीयते। हृष्यतीत्यर्थः। यदा तु प्रीतिः तर्पणं 'प्रीञ् तर्पणे' इति क्रैयादिकात् क्तिनि प्रीतिशब्दनिष्पत्तिः, तदा तु सकर्मकः। तदाह—

ईङ् गतौ। ईयते। अयांचक्रे। ११४४ प्रीङ् प्रीतौ। सकर्मकः। प्रीयते। पिप्रिये। अथ चत्वारः परस्मैपदिनः। ११४५ शो तनूकरणे। २५१० ओतः श्यनि ७।३।७१॥ लोपः स्याच्छ्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शाता। शास्यति। 'विभाषा घ्राधेट्—' (सू २३७६) इति सिचो वा लुक्। लुगभावे 'यमरम—' (सू २३७७) इतीट्सकौ। अशात्। अशाताम्। अशुः। अशासीत्। अशासिष्टाम्। ११४६ छो छेदने। छ्यति। ११४७ षो अन्तकर्मणि। स्यति। ससौ। अभिष्यति। अभ्यष्यत्। अभिससौ। ११४८ दो अवखण्डने। द्यति। ददौ। प्रणिदाता। देयात्। अदात्।

अथात्मनेपदिनः पञ्चदश। ११४९ जनी प्रादुर्भावे। २५११ ज्ञाजनोर्जा ७।३।७९॥ अनयोर्जादेशः स्याच्छिति। जायते। जज्ञे। जज्ञाते। जज्ञिरे। जनिता। जनिष्यते। 'दीपजन—' (सू २३२८) इति वा चिण्। २५१२ जनि-

---

सकर्मकः इति। प्रीयते इति। तर्पयतीत्यर्थः। अथ चत्वारः परस्मैपदिन इति। 'दो अवखण्डने' इत्यन्ता इति भावः। शो तनूकरणे। अनि । ओतः श्यनि। 'घोर्लोपो लेटि वा' इत्यतो लोप इत्यनुवर्तते इत्यभिप्रेत्य शेषं पूरयति—लोपः स्यादिति। शशाविति। 'आदेच' इत्यात्त्वे णल औत्वमिति भावः। शशतुरिति। शशिथ-शशाथ। शशिव। शास्यतीति। श्यतु। अश्यत्। श्येत्। शायात्। लुङि सिचि विशेषमाह—विभाषा घ्रेति। सिचो लुक्पक्षे आह—अशादिति। 'आतः' इति जुसिति मत्वा आह—अशुरिति। सिचो लुगभावे सगिटौ मत्वा आह—अशासीदिति। छोधातुरपि शोधातुवत्। षो अन्तकर्मणीति। समापने विनाशने वेत्यर्थः। शोधातुवद्रूपाणि। षोपदेशोऽयम्। स्यतीति। 'ओतः श्यनि' इति लोपः। अभिष्यतीति। 'उपसर्गात्' इति षत्वम्। अभ्यष्यदिति। 'प्राक्सितात्' इति षत्वम्। अभिससाविति। स्थादिष्विति नियमात् न षः। दो अवखण्डने। प्रणिदातेति। 'नेर्गद' इति णत्वम्। देयादिति। आशीर्लिङि 'एर्लिङि' इत्येत्वम्। अदादिति। 'गातिस्था' इति सिचो लुक्।

अथात्मनेपदिन इति। 'वाश्ट शब्दे' इत्यन्ता इत्यर्थः। जनी प्रादुर्भावे इति। 'श्वीदितो निष्ठायाम्' इत्याद्यर्थमीदित्त्वम्। ज्ञाजनोर्जा। शितीति। 'ष्ठिवुक्लमुचमां' इत्यतस्तदनुवृत्तेरिति भावः। जायत इति। ज्ञाधातोस्तु श्नाविकरणत्वात् जानातीत्युदाहरणम्। उभयत्रापि जादेशस्य ह्रस्वान्तत्वे 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति परिभाषया 'अतो दीर्घो यञि' इत्यप्राप्तेर्जादेशस्य दीर्घान्तत्वमाश्रितम्। जज्ञे इति। 'गमहन' इत्युपधालोपे नस्य श्चुत्वेन ञः। जायेत। जनिषीष्ट। लुङि अजन् त इति स्थिते आह—दीपेति। वा चिणिति। 'च्लेः' इति शेषः। अजन् इ त इति स्थिते उपधावृद्धौ प्राप्तायाम्—जनिवध्योश्च। 'अत उपधायाः' इत्यतः उपधाया इति 'मृजे-

**वध्योश्च ७।३।३५॥** अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि । अजनिष्ट । ११५० दीपी दीप्तौ । दीप्यते । दिदीपे । अदीपि । अदीपिष्ट । ११५१ पूरी आप्यायने । पूर्यते । अपूरि । अपूरिष्ट । ११५२ तूरी गतित्वरणहिंसनयोः । तूर्यते । तुतूरे । ११५३ धूरी ११५४ गूरी हिंसागत्योः । धूर्यते । दुधूरे । गूर्यते । जुगूरे । ११५५ घूरी ११५६ जूरी हिंसावयोहान्योः । ११५७ शूरी हिंसास्तम्भनयोः । ११५८ चूरी दाहे । ११५९ तप ऐश्वर्ये वा । अयं धातुरैश्वर्ये वा श्यनं तङं च लभते । अन्यदा तु शब्विकरणः परस्मैपदीत्यर्थः । केचित्तु वाग्रहणं वृतुधातोराद्यवयवमिच्छन्ति । तप्यते । तप्ता । तप्स्यते । 'पत' इति व्यत्यासेन पाठान्तरम् । 'युत द्यामानि युतः पत्यमानः' । ११६० वृतु वरणे । वृत्यते । पक्षान्तरे वावृत्यते । 'ततो वावृत्यमाना सा रामशालां न्यविक्षत' इति भट्टिः । ११६१ क्लिश उपतापे । क्लिश्यते । क्लेशिता । ११६२ काशृ दीप्तौ । काश्यते । ११६३ वाशृ शब्दे । वाश्यते । ववाशे ।

अथ पञ्च स्वरितेतः । ११६४ मृष तितिक्षायाम् । मृष्यति । मृष्यते । ममर्ष । ममृषे । ११६५ शुचिर् पूतीभावे । पूतीभावः क्लेदः । शुच्यति-शुच्यते । शुशो-

---

धृद्धिः' इत्यतो वृद्धिरिति 'नोदात्तोपदेशस्य' इत्यतो नेति 'आतो युक्' इत्यतः चिण्कृतोरिति 'अचो ञ्णिति' इत्यतः ञ्णितीति चानुवर्तते । तदाह—अनयोरिति । दीपीधातुरीदित् । 'दीपजन' इति सिचः चिण्विकल्पं मत्वा आह-अदीपि अदीपिष्टेति । पूरीधातुरपि ईदित् । 'दीपजन' इति चिण्विकल्पं मत्वा आह—अपूरि अपूरिष्टेति । तूरी इत्यादयोऽपि 'चूरी दाहे' इत्यन्ता ईदित एव । तप ऐश्वर्ये वेति । श्यन् आत्मनेपदं ति शेषः । उभयोः प्रकृतत्वादित्यभिप्रेत्य शेषं पूरयति—श्यनं तङं चेति । अन्यदा तिति । ऐश्वर्यादन्यत्रार्थे वृत्तिदशायामित्यर्थः । केचित्त्विति । 'तप ऐश्वर्य' 'वावृतु वरणे' इति धातुपाठे स्थितम् । तत्र 'वावृतु वरणे' इत्येवं वाशब्दं वृतु इत्यस्य आद्यवयवमिच्छन्तीत्यर्थः । एवञ्च 'तप ऐश्वर्ये' इत्येव स्थितम् । अस्मिन्पक्षे तपधातोः नित्यमेव श्यन् तङ् चेति भावः । तप्यते इति । ईष्टे इत्यर्थः । प्रथमपक्षे ऐश्वर्ये तपतीत्यपि भवति । पत इतीति । तपधातोस्तकारपकारयोः क्रमव्यत्यासेन 'पत ऐश्वर्ये वा' इति पाठान्तरमित्यर्थः । एवं व्यत्यासेन पाठे प्रयोगं दर्शयति—युत द्यामानि युतः पत्यमानः इति । प्रवायुमच्छा बृहतीत्यृचः एकदेशोऽयम् । 'पत्यमान' इत्यस्य ईशान इत्यर्थः । अत्र लटः शानच् आत्मनेपदं श्यन् च । पक्षान्तरे इति । 'वावृतु' इति पाठपक्षे इत्यर्थः । वावृत्यते इति । वृणोतीत्यर्थः । अपेक्षते इति यावत् । वावृतुधातोः प्रयोगं दर्शयति—ततो वावृत्यमानेति । अपेक्षमाणेत्यर्थः । न्यविक्षतेति । 'नेर्विशः' इत्यात्मनेपदम् । 'शल इगुपधात्' इति क्सः ।

च शुशुचे । अशुचत्–अशोचीत्–अशोचिष्ट ।११६६ णह बन्धने । नह्यति–नह्यते । ननाह । नेहिथ–ननद्ध । नेहे । नद्धा । नत्स्यति । अनात्सीत् । ११६७ रञ्ज रागे । रज्यति–रज्यते । ११६८ शप आक्रोशे । शप्यति । शप्यते ।

अथैकादशानुदात्तेतः । ११६९ पद गतौ । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट । २५१३ चिण् ते पदः ३।१।६०॥ पदश्च्लेश्चिण्स्यात्तशब्दे परे । प्रण्यपादि । अपत्साताम् । अपत्सत । ११७० खिद दैन्ये । खिद्यते । चिखिदे । खेत्ता । अखित्त । ११७१ विद सत्तायाम् । विद्यते । वेत्ता । ११७२ बुध अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि–अबुद्ध । अभुत्साताम् । ११७३ युध संप्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध । कथं 'युध्यति' इति । युधमिच्छतीति क्यच् । 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' (प ९७) इति वा । ११७४ अनो रुध कामे । अनुरुध्यते । ११७५ अण प्राणने । अण्यते । आणे । अणिता । 'अन' इति दन्त्यान्तोऽयमित्येके । ११७६ मन ज्ञाने । मन्यते । मेने । मन्ता । ११७७ युज समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः । युज्यते । योक्ता ।

अथ पञ्च स्वरितेत इति । 'शप आक्रोशे' इत्यन्ता इत्यर्थः । शुच्यतीति । क्लिन्नं भवतीत्यर्थः । अशुचदिति । इरित्वादङिति भावः । णह बन्धने इति । णोपदेशोऽयम् । अनिट् । ननाहेति । नेहतुः । भारद्वाजनियमात्थलि वेट् इति मत्वा आह—नेहिथ ननद्धेति । इट्पक्षे 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । इडभावे तु 'नहो धः' इति हस्य ध इति भावः । रञ्ज रागे । अनिट् । रज्यतीति । 'अनिदिताम्' इति नलोप इति भावः । ररञ्ज । ररञ्जतुः । ररञ्जिथ–ररङ्क्थ । ररञ्जिव । रङ्क्ता इत्यादि । अथैकादशेति । 'क्लिश उपतापे' इत्यन्ता इत्यर्थः । पद गतौ । अनिट् । चिण् ते पदः । पदश्च्लेरिति । 'च्लेः सिच्' इत्यतः च्लेरित्यनुवर्तते इति भावः । तशब्दे इति । आत्मनेपदप्रथमैकवचने । इत्यर्थः । इदं च भाष्ये स्पष्टम् । प्रण्यपादीति । सिचश्चिणि 'उपधावृद्धौ' 'चिणो लुक्' इति तशब्दस्य लोपः । 'नेर्गद' इति णत्वमिति भावः । विद सत्तायाम् । वेत्तेति । अनिडिति भावः । लिटि क्रादिनियमादिट् । एवं बुधधातुरपि । बोद्धेति । तासि 'झषस्तथोः' इति तकारस्य धकारः । भोत्स्यते इति । 'एकाचः' इति भष् । भुत्सीष्टेति । 'लिङ्सिचौ' इति कित्त्वम् । 'दीपजन' इति चिण्विकल्पं मत्वा आह—अबोधि अबुद्धेति । कथं युध्यतीति । आत्मनेपदित्वादिति भावः । समाधत्ते—युधमिति । युध्शब्दः भावक्विबन्तः । युधमिच्छतीत्यर्थे 'सुप आत्मनः' इति क्यजन्तात् परस्मैपदमित्यर्थः । अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति समाधानं त्वनुचितम्, तस्य भाष्याऽदृष्टत्वेन अप्रामाणिकत्वात् । अत एव 'व्यत्ययो बहुलम्' इति सूत्रभाष्ये 'प्रतीपमन्य ऊर्मिर्युध्यती'त्यत्र व्यत्ययेन परस्मैपदमित्येव समाहितम् । अनो रुध कामे

११७८ सृज विसर्गे । अकर्मकः । 'संसृज्यते सरसिजैररुणांशुभिन्नैः' । ससृजिषे । स्रष्टा । स्रक्ष्यते 'लिङ्सिचौ-' ( सू २३०० ) इति कित्वान्न गुणो नाप्यम् । सृक्षीष्ट । असृष्ट । असृक्षाताम् । ११७९ लिश अल्पीभावे । लिश्यते । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलिक्षाताम् ।

आगणान्तात्परस्मैपदिनः । ११८० राधोऽकर्मकाद्वृद्धावेव । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह—वृद्धाविति । यन्मह्यमपराध्यति ।

इति । अनु इत्युपसर्गात्परः रुधधातुः कामे वर्तत इत्यर्थः । युज समाधौ । अनिट् । अकर्मक इति । चित्तवृत्तेर्धात्वर्थान्तर्भावादिति भावः । अर्थान्तरे तु सकर्मकोऽपि भवति, 'सृजियुज्योः सकर्मकयोः कर्मवद्भाव' इति कर्मवत्सूत्रवार्तिकात् । एतच्च कर्मकर्तृप्रक्रियायां स्पष्टीभविष्यति । सृज विसर्गे इति । अनिट् । विसर्गः सम्बन्धः उपसर्गवशात् । तदाह—अकर्मक इति । संसृज्यते इति । अरुणांशुभिन्नैः अरुणकिरणविकसितैः सरसिजैः कमलैः संसृज्यते सम्बध्नातीत्यर्थः । 'कमलिनी'ति शेषः । कर्तरि लकारोऽयम् , न त्वयं कर्मणि लकारः, अकर्मकत्वात् । अर्थान्तरे तु सकर्मकोऽयमिति कर्मकर्तृप्रक्रियायां वक्ष्यते । लिट्याह—ससृजिषे इति । क्रादिनियमादिडिति भावः । स्रष्टेति । 'सृजिदृशोर्झल्यमकिति' इत्यमागमे ऋकारस्य यणि व्रश्चादिना जस्य षः ष्टुत्वेन तकारस्य ट इति भावः । स्रक्ष्यते इति । पूर्ववदमि, जस्य षत्वे 'षढोः' इति षस्य कत्वे सस्य षत्वमिति भावः । आशीर्लिङि आह—सृक्षीष्टेति । अत्र लघूपधगुणमाशङ्क्य आह—लिङ्सिचाविति । नाप्यमिति । 'सृजिदृशोर्झल्यम्' इत्यमपि नास्तीत्यर्थः । अकित्येव तद्विधानादिति भावः । लुङ्याह—असृष्टेति । 'झलो झलि' इति सिचो लोपः । 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वान्न गुणः नाप्यमिति भावः । लिश अल्पीभावे । लिक्षीष्टेति । 'लिङ्सिचौ' इति कित्वान्न गुणः । अलिक्षतेति । 'शल इगुपधात्' इति क्सः ।

आ गणान्तादिति । दिवादिगणसमाप्तिपर्यन्तमित्यर्थः । राधोऽकर्मकाद्वृद्धावेवेति । श्यन्निति शेषः । राधधातोरकर्मकाद्वृद्धावेवाऽर्थे श्यनिति प्रतीयमानोऽर्थः । एवं सति अकर्मकादिति व्यर्थम् । राधेरर्थान्तरे च श्यन् न स्यात् । दृश्यते हि 'अपराध्यती'त्यादौ द्रोहाद्यर्थेऽपि श्यन् । तत्राह—एवकारो भिन्नक्रम इति । यस्मिन् क्रमे वृद्धाविस्यत ऊर्ध्वं एवकारः पठितः, ततोऽन्यः क्रमो यस्य स भिन्नक्रम इत्यर्थः । 'वृद्धा'वित्यत ऊर्ध्वं पठित एवकारः अन्यत्र निवेशनीय इति यावत् । तदेव दर्शयति—राधोऽकर्मकादेव श्यनिति । एवं चार्थान्तरेऽपि श्यन् सिध्यति । 'शत्रुं हिनस्ती'त्यर्थे शत्रुमपराध्नोतीत्यत्र सकर्मकत्वात् न श्यनिति भावः । तर्हि वृद्धावित्यस्य किं प्रयोजनमित्याशङ्क्य अकर्मकक्रिया एवंविधेति प्रदर्शनार्थं तत्, नतु परिसंख्यानार्थमित्याह । उदाहरणमाह वृद्धावितीति । एतच्च वृद्धिग्रहणमकर्मकक्रियामात्रोपलक्षणमिति भावः ।

द्रुह्यतीत्यर्थः । 'विराध्यन्तं क्षमेत कः' । द्रुह्यन्तमित्यर्थः । राध्यत्योदनः । सिध्यतीत्यर्थः । कृष्णाय राध्यति । दैवं पर्यालोचयतीत्यर्थः । दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । रराधिथ । 'राधो हिंसायाम्' (सू २५३२) इत्येत्वाभ्यासलोपाविह न । हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् । राद्धा । रात्स्यति । अयं स्वादिश्चुरादिश्च । ११८१ व्यध ताडने । 'ग्रहिज्या'-(सू २४१२) इति सम्प्रसारणम् । विध्यति । विव्याध । विविधतुः । विव्यधिथ-विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । ११८२ पुष पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । 'पुषादि-' (सू २३४३) इत्यङ् । अपुषत् । ११८३ शुष शोषणे । अशुषत् । ११८४ तुष प्रीतौ । ११८५ दुष वैकृत्ये । ११८६ श्लिष

---

तथाविधाऽर्थान्तराण्युदाहरति—यन्मह्यमित्यादिना । 'क्रुधद्रुह' इति सम्प्रदानत्वम् कृष्णाय राध्यतीति । 'राधीक्ष्योर्यस्य विप्रश्नः' इति सम्प्रदानत्वम् । दैवमिति । कृष्णस्य किमिदानीं शुभमशुभं वेति पृष्टो दैवज्ञः तस्य शुभाशुभसूचकादित्यादिग्रहस्थितिं ज्योतिश्शास्त्रतः परीक्षते इति यावत् । ननु पर्यालोचने दैवस्य कर्मत्वात्कथमिह अकर्मकतेत्यत आह—दैवस्येति । ननु 'राधोऽकर्मकाद्वृद्धावेव' इत्यत्र वृद्धिग्रहणस्य उपलक्षणतया हिंसार्थकस्यापि राधेर्दैवादिकत्वात् रराधतुः इत्यादौ 'राधो हिंसायाम्' इति वक्ष्यमाणावेत्वाभ्यासलोपौ स्यातामित्यत आह—राध इति । इह नेति । रराधतुः इत्यादौ राधेर्हिंसार्थकत्वे 'राधो हिंसायाम्' इति वक्ष्यमाणावेत्वाभ्यासलोपौ न स्त इत्यर्थः । कुत इत्यत आह—हिंसार्थस्येति । नोन्मिषत्येवैषा शङ्का, राधेरकर्मकस्यैव दैवादिकत्ववचनात् । हिंसार्थकस्य च राधेः सकर्मकतया दैवादिकत्वाभावादुक्तशङ्काया अनुन्मेषादित्यर्थः । ननु राध्नोति, राधयति इति कथमित्यत आह—अयं स्वादिश्चुरादिश्चेति । रराधिथ । क्रादिनियमात् नित्यमिट्, दीर्घाकारवत्त्वेन 'उपदेशेऽत्वतः' इत्यस्याप्रवृत्तेः अजन्तोऽकारवानित्यत्र च ह्रस्वाकारस्यैव विवक्षितत्वात् । राद्धा । अरात्सीत् । व्यध ताडने इति । चतुर्थान्तोऽयम् । अनिट् । विध्यतीति श्यनो ङित्त्वात् 'ग्रहिज्या' इति यकारस्य सम्प्रसारणे पूर्वरूपे विध्यतीति रूपमित्यर्थः । वकारस्य तु न सम्प्रसारणम् 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधात् । विव्याधेति । ङित्वे कृते अभ्यासस्य 'लिट्यभ्यासस्य' इति सम्प्रसारणमिति भावः । विविधतुरिति । परत्वात् 'ग्रहिज्या' इति सम्प्रसारणे कृते ङित्वमिति भावः । भारद्वाजनियमात्थलि वेडित्याह—विव्यधिथ-विव्यद्धेति । 'लिट्यभ्यासस्य' इति सम्प्रसारणम् । अनिट्पक्षे 'झषस्तथोः' इति धः । अव्यात्सीदिति । हलन्तलक्षणा वृद्धिः । पुष पुष्टौ । अनिट् । पुपोषिथेति । अजन्ताऽकारवत्त्वाऽभावात् क्रादिनियमान्नित्यमिट् । अपुषदिति । पुषाद्यङ् । ङित्वान्न गुणः । शुषधातुरनिट् । अशुषदिति । पुषाद्यङिति भावः । एवमग्रेऽपि । तुष् दुष् श्लिष् एते अनिटः । लुङि श्लिषः क्सेः सिजादेशे

आलिङ्गने । श्लिष्यति । श्शिलेष । श्लेष्टा । श्लेक्ष्यति । २५१४ (क) **श्लिषः ३।१।४६॥** अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोऽपवादो न तु चिणः । पुरस्तादपवादन्यायात् । २५१४ (ख) **आलिङ्गने ३।१।४६॥** श्लिषश्च्लेरा-लिङ्गने एव क्सो नान्यत्र । योगविभागसामर्थ्यात् 'शल इगुपधात्—' ( सू २३३६ ) इत्यस्याप्ययं नियमः । अश्लिक्षत्कन्यां देवदत्तः। 'आलिङ्गन एव' इति किम् । समाश्लिषज्जतुकाष्ठम् । ( आङ् ) प्रत्यासत्ताविह श्लिषिः । कर्मण्यना-

प्राप्ते—श्लिषः । 'च्लेरिति 'शल इगुपधात्' इत्यतः अनिटः क्स इति चानुवर्तते । तदाह—अस्मात्परस्येत्यादिना । ननु 'शल इगुपधात्' इत्येव क्से सिद्धे किमर्थमिदमि-त्यत आह-पुषाद्यङोऽपवाद इति। 'शल इगुपधात्' इति क्सं बाधित्वा परत्वात् पुषाद्यङ् स्यात् , तन्निवृत्तये पुनः क्सविधिरित्यर्थः । ननु 'श्लिष' इति क्सः यथा परमपि पु-षाद्यङं बाधते तथा 'चिण्भावकर्मणोः' इति चिणमपि परं बाधेत, एवं सति 'उपा-श्लेषि कन्या देवदत्तेन' इत्यत्र कर्मणि लुङि 'चिण्भावकर्मणोः' इति च्लेश्चिण् न स्या-दित्यत आह—न तु चिण इति । 'श्लिषः' इति क्सविधिः 'चि॒ भावकर्मणोः' इति चिण्विधेर्न बाधक इत्यर्थः । कुत इत्यत आह—पुरस्तादिति । 'शल इगुपधादनिटः क्सः' ,'श्लिषः' 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' चिण् भावकर्मणोः' इति सूत्रक्रम इति भावः । आलिङ्गने । 'श्लिषः' इति पूर्वसूत्रे यदनुवृत्तं तत्सर्वमिहानुवर्तते, श्लिष इति च । तथाच आलिङ्गने विद्यमानात् श्लिषेः परस्य च्लेः क्सः स्यादिति लभ्यते । 'श्लिषः' इति पूर्वसूत्रेणैव सिद्धे नियमार्थमिदम् । तदाह—श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्रेति । नन्वयं नियमः 'अनन्तरस्य' इति न्यायात् 'श्लिष' इति सूत्रप्राप्तस्यैव स्यात्, नतु 'शल इगुपधात्' इत्यस्यापीत्यत आह—शल इगुपधादित्यस्याप्ययं नियम इति । कुत इत्यत आह—योगविभागसामर्थ्यादिति । यदि 'श्लिष' इति प्राप्त एव क्स आलिङ्गन एव इति नियम्येत तर्हि योगविभागो व्यर्थः स्यात् । 'श्लिष आलिङ्गने' इत्येकसूत्रत्वे सत्यपि अनालिङ्गने क्सो नेत्यस्यार्थस्य सिद्धत्वात् । अतः 'शल इगुप-धात्' इति क्सोऽपि श्लिषेरालिङ्गने एव न त्वनालिङ्गनेऽपि इति नियमो विज्ञायत इत्यर्थः। अश्लिक्षत् कन्यां देवदत्त इति । आलिङ्गदित्यर्थः। अत्र पुषाद्यङं बाधित्वा अनेन क्सः। समाश्लिषज्जतु काष्ठमिति । जतु लाक्षा । सा च काष्ठलग्नैवोत्पद्यते इति स्थितिः । जतु च काष्ठं चेति समाहारद्वन्द्वः । 'उपाश्लिषत् जतु काष्ठं च' इत्येव भा-ष्यम् । अत्र श्लिषेरालिङ्गनार्थकत्वाभावान्न क्सः, किंतु पुषाद्यङेवेति भावः । नन्वजा-दित्वाऽभावेन आडागमस्याऽसम्भवात् समाश्लिषदित्ययुक्तमित्यत आह—आङिति । समाश्लिषत् इत्यत्र श्लिषेः प्राक् आङ् उपसर्ग एव, न त्वाडागम इति भ्रमितव्यमि-त्यर्थः । नन्वालिङ्गनं समाश्लेषणं तथाच 'समाश्लिषज्जतु काष्ठम्' इत्यत्रापि श्लिषेरा-लिङ्गनार्थकत्वात् क्सो दुर्वार इत्यत आह—प्रत्यासत्ताविहेति । इह 'समाश्लिषज्जतु

लिङ्गने सिजेव, न तु क्सः । एकवचने चिण् । अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्ठाः । अश्लिड्ढ्वम् । ११८७ शक विभाषितो मर्षणे । विभाषित इत्युभय-

---

काष्ठम्' इत्यत्र श्लिषिः प्रत्यासत्तौ संयोगे वर्तते, नतु बाह्वादिना संवलनात्मकसम्बन्धविशेषरूपे आलिङ्गने इत्यर्थः । नन्वालिङ्गने एव श्लिषश्च्लेः क्सः, न त्वनालिङ्गने इति नियमात् अनालिङ्गने 'शल इगुपधात्' इत्यपि क्सो न भवतीत्युक्तमयुक्तम् । 'समाश्लिषज्जतुकाष्ठ'मित्यत्रानालिङ्गने 'शल इगुपधात्' इति क्सं बाधित्वा परत्वात् पुषाद्यङ एव प्राप्त्या क्सस्याऽप्रसक्तेरित्यत आह-कर्मणीति । अनालिङ्गनवृत्तेः श्लिषधातोः कर्मणि लुङि च्लेस्सिजेव भवति, न तु पुषाद्यङ्, तस्य परस्मैपदविषयत्वात्, कर्मणि लुङश्च 'भावकर्मणोः' इत्यात्मनेपदनियमात् । तस्य च 'शल इगुपधात्' इति प्राप्तः क्सः उक्तेन नियमेन अनालिङ्गनेऽपि वार्यते इति युक्तमित्यर्थः । यदुक्तं 'आलिङ्गने श्लिषश्च्लेः क्सः पुषाद्यङ एवापवादः, नतु चिणः' इति, तस्य प्रयोजनमाह— एकवचने चिणिति । तदेवोदाहृत्य दर्शयति—अश्लेषीति । आलिङ्गिता कन्या देवदत्तेनेत्यर्थः । श्लिषेरालिङ्गनार्थकात् कर्मणि लुङि प्रथमैकवचने तशब्दे परे 'चिण् भावकर्मणोः' इति च्लेश्चिणि कृते 'चिणो लुक्' इति तशब्दस्य लुक् । अत्र 'श्लिष' इति क्सस्य पुषाद्यङ्मात्रापवादत्वाच्चिणपवादत्वाऽभावाच्चिण् निर्बाध इति भावः । 'समाश्लेषि जतुना काष्ठम्' इत्यत्र तु अनालिङ्गनात् च्लेश्चिणो निर्बाधत्वादश्लेषीति निर्बाधमेव । एवं च आलिङ्गने अनालिङ्गनेऽपि श्लिषः कर्मणि लुङि एकवचने तशब्दे परे च्लेश्चिणेवेति स्थितम् । अथाऽनालिङ्गने श्लिषः कर्मणि लुङि 'शल' इति क्सोऽपि नेति यदुक्तं तदुदाहृत्य दर्शयति—अश्लिक्षातामिति । अनालिङ्गने श्लिषः कर्मणि लुङः आतामि च्लेः क्साऽभावात् सिचि 'षढोः' इति षस्य कत्वे सस्य षत्वे रूपमिति भावः । नन्वश्लिक्षातामित्यत्र सत्यपि क्से 'क्सस्याचि' इत्यकारलोपे इदं सिद्धमित्यस्वरसात्कर्मणि लुङि झादावुदाहरति— अश्लिक्षतेत्यादि । अश्लिष् स् झ इति स्थिते झोऽन्तादेशं बाधित्वा 'आत्मनेपदेष्वनतः' इत्यदादेशे षस्य कत्वे सिचः सस्य षत्वे अश्लिक्षतेतीष्यते । च्लेः क्से तु सति अश्लिष् स् झ इति स्थिते 'क्सस्याचि' इत्यकारलोपाऽप्रसक्तेरतः परत्वात् 'आत्मनेपदेष्वनतः' इत्यदादेशो न स्यादिति भावः । अश्लिष्ठा इति । श्लिषेः कर्मणि लुङस्थासि च्लेः सिचि 'झलो झलि' इति सिचो लोपे ष्टुत्वे 'अश्लिष्ठाः' इति रूपमिष्यते । क्से तु 'झलो झलि' इत्यसम्भवादश्लिक्षथाः इति स्यादिति भावः । अश्लिड्ढ्वमिति । श्लिषः कर्मणि लुङो ध्वमि सिचि 'झलो झलि' इति सस्य लोपे षस्य जश्त्वेन डकारे ष्टुत्वेन धस्य ढः । क्से तु सति अश्लिक्षध्वम् इति स्यादिति भावः । शक विभाषित इति । मर्षणे अथ शकधातुर्विकल्पित इत्यर्थः । विकल्पश्च प्रकृतपरस्मैपदविषयक एव न तु दिवादिपाठविषयकः, व्याख्यानात् । तदाह—उभयपदीति । मर्षणमिह सामर्थ्यम् ।

पदीत्यर्थः । शक्यति–शक्यते वा हरिं द्रष्टुं भक्तः । शशाक । शेकिथ–शशक्थ । शेके । शक्ता । शक्ष्यति–शक्ष्यते । अशकत्–अशक्त । सेट्कोऽयमित्येके । तन्मतेनानिट्कारिकासु लृदित्पठितः । शकिता । शकिष्यति । ११८८ ष्विदा गात्रप्रक्षरणे । घर्मस्रुतावित्यर्थः । अयं ञीदिति न्यासकारादयः । नेति हरदत्तादयः । स्विद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । अस्विदत् । ११८९ क्रुध क्रोधे । क्रोद्धा । क्रोत्स्यति । ११९० क्षुध बुभुक्षायाम् । क्षोद्धा । कथं क्षुधित इति । सम्पदादिक्विबन्तात्तारकादित्वादितजिति माधवः । वस्तुतस्तु 'वसतिक्षुधोः—' ( सू ३०४६ ) इतीट् वक्ष्यते । ११९१ शुध शौचे । शुध्यति । शुशोध । शोद्धा । ११९२ षिधु संराद्धौ । ऊदित्पाठः प्रामादिकः । सिध्यति । सेद्धा । सेत्स्यति । असिधत् । ११९३ रध हिंसासंराद्ध्योः । संराद्धिनिष्पत्तिः । रध्यति । 'रधिजभोरचि' ( सू २३०२ ) इति नुम् । ररन्ध । ररन्धतुः । **२५१५ रधादिभ्यश्च ७।२।४५॥** रध्, नश्, तृप्, दृप्, द्रुह्, मुह्, ष्णुह्, ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । ररन्धिथ–ररद्ध । ररन्धिव–रेध्व । **२५१६ नेट्यलिटि रधेः ७।१।६२॥** लिड्वर्जे इटि रधेर्नुम् न स्यात् । रधिता–रद्धा । रधिष्यति–रत्स्यति । अङि तु नुम् ।

---

शक्यति शक्यते वा हरिं द्रष्टुं भक्त इति । समर्थो भवतीत्यर्थः । सेट्कोऽयमित्येके इति । स्वमते त्वनिट्क एवेति भावः । ननु अनिट्कारिकासु लृदितः शकेः पाठात् कथमनिट्कत्वमित्यत आह–तन्मतेनेति । ये सेट्त्वं शकेर्वदन्ति तन्मतमवलम्ब्य अनिट्कारिकासु शकिः लृदित्पठित इत्यर्थः । सम्पदादिक्विबन्तादिति । क्षुध्यत इति क्षुध्, भावे क्विप् । क्षुध् अस्य संजाता क्षुधित इति विग्रहः । वसतिक्षुधोः इति । वसेः क्षुधेश्च क्त्वानिष्ठयोरिडागमः स्यादिति तदर्थः । वक्ष्यते इति । 'कृत्स्वि'ति शेषः । षिधु संराद्धाविति । निष्पत्तावित्यर्थः । प्रामादिकः इति । माधवादिसम्मतत्वादिति भावः । रध हिंसेति। सेट् । चतुर्थान्तोऽयम् । ररन्धतुरिति । एत्वाभ्यासलोपौ बाधित्वा परत्वान्नुमि संयोगात्परत्वेन अकित्त्वान्नलोपो नेति भावः । रधादिभ्यश्च । 'आर्द्धधातुकस्येड्वलादेः' इत्यनुवर्तते । 'स्वरतिसूति' इत्यतो वेति चेत्यभिप्रेत्य शेषं पूरयति—वलाद्यार्द्धधातुकस्य वेडिति । 'आर्द्धधातुकस्य' इति नित्ये प्राप्ते विकल्पोऽयम् । लुटि तासि इटि 'रधिजभोरचि' इति नुमि प्राप्ते—नेट्यलिटि रधेः । 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते । तदाह–लिड्वर्जे इटीति । अङि त्विति । पुषाद्यङि कृते सतीत्यर्थः । अरधदिति । 'मो अहं द्विषतेऽरधम् ।' णश अदर्शने इति । णोपदेशोऽयं सेट् । 'रधादिभ्यश्च' इति वेट् । तत्र इट्पक्षे आह–नेशिथेति । 'थलि च सेटि' इत्येत्वाभ्यासलोपाविति भावः । इडभावपक्षे ननश् थ इति स्थिते । मस्जिनशोर्झलि । नुम् स्यादिति । 'इदितो नुम्' इत्य-

'अनिदिताम्-' ( सू ४१५ ) इति नलोपः । अरधत् । ११९४ णश अदर्शने । नश्यति । ननाश । नेशतुः । नेशिथ । २३१७ मस्जिनशोर्झलि ७।१।६०॥ नुम् स्यात् । ननंष्ठ । नेशिव-नेश्व । नेशिम-नेश्म । नशिता-नंष्टा । नशिष्यति-नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति । २३१८ नशेः षान्तस्य ८।४।३६॥ णत्वं न स्यात् । प्रनंष्टा । अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति-नशिष्यति । ११९५ तृप प्रीणने । प्रीणनं तृप्तिस्तर्पणं च । 'नाग्निस्तृप्यति काष्ठानाम्' । 'पितॄनतार्प्सीत्' इति भट्टिः । इत्युभयत्र दर्शनात् । ततर्पिथ-ततर्प्थ-तत्रप्थ । तर्पिता-तर्प्ता-त्रप्ता । 'स्पृशमृशकृष—' इति सिज्वा । अतर्पीत्-अतार्प्सीत्-अत्राप्सीत्-अतृपत् । ११९६ दृप हर्षमोहनयोः । मोहनं गर्वः । दृप्यतीत्यादि । 'रधादिभ्यस्त्वादिमौ वेट्कावमर्थमनुदात्तता' । ११९७ द्रुह जिघांसायाम् । 'वा द्रुहमुह'-(सू ३२७) इति वा घः । पक्षे ढः । दुद्रोहिथ-दुद्रोग्ध-दुद्रोढ । द्रोहिता-द्रोग्धा-द्रोढा । द्रोहिष्यति-ध्रोक्ष्यति । ढत्वघत्वयोस्तुल्यं रूपम् । अद्रुहत् । ११९८ मुह वैचित्त्ये । वैचित्त्यमविवेकः । मुह्यति । मुमोहिथ-मुमोग्ध-मुमोढ । मोहिता-

---

स्तस्तदनुवृत्तेरिति भावः । ननंष्ठेति । व्रश्चादिषत्वम् । ष्टुत्वम् । प्रणश्यतीति । 'उपसर्गादसमासे' इति णत्वम् । नशेः षान्तस्य । 'रषाभ्याम्' इत्यतो ण इति 'न भाभूपू' इत्यतः नेति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति—णत्वं न स्यादिति॥ षान्तस्येति किम् प्रणश्यति । भूतपूर्वेति । पूर्वं षकारस्य सत इदानीमादेशवशेन षान्तत्वाभावेऽपि णत्वनिषेधप्राप्त्यर्थमन्तग्रहणमित्यर्थः । प्रनङ्क्ष्यतीति । अत्र षस्य कत्वे कृतेऽपि भूतपूर्वगत्या षान्तत्वान्न णत्वमिति भावः । तृप प्रीणने । तृप्तिस्तर्पणं चेति । आद्ये अकर्मकः। द्वितीये सकर्मकः । रधादित्वादिडिति मत्वा आह-ततर्पिथ ततर्प्थेति । तत्रप्थेति च । 'अनुदात्तस्य चर्दुपधस्य' इत्यमिति भावः । ततृपिव-ततृप्व । सिज्वेति । पक्षे पुषादित्वादङिति भावः । रधादित्वादिड्विकल्पः । तत्र सिचि इट्पक्षे आह-अतर्पीदिति । इडभावपक्षे आह—अतार्प्सीदिति । हलन्तलक्षणा वृद्धिरिति भावः । 'अनुदात्तस्य च' इत्यम्पक्षे आह-अत्राप्सीदिति । पुषाद्यङ्पक्षे आह—अतृपदिति । ङित्वान्न गुण इति भावः । दृप हर्षे इति । तृपधातुवत् । ननु रधादित्वादेव वेट्कत्वादनिट्कारिकासु तृप्यतिदृप्यत्योः पाठो व्यर्थ इत्यत आह—रधादिभ्यस्त्वादिमौ वेट्कावमर्थमनुदात्तता इति । द्रुह जिघांसायाम् । अनुदात्तत्वाभावेऽपि रधादित्वादिट् । तत्र इडभावे आह—वा द्रुहमुह इति । ध्रोक्ष्यतीति । 'वा द्रुह' इति घत्वपक्षे दकारस्य भषि घस्य चर्त्वं सस्य षत्वे रूपम् । ढत्वपक्षेऽपि 'षढोः' इति कत्वे एतदेव रूपम् । तदाह—ढत्वघत्वयोस्तुल्यं रूपमिति । अद्रुहदिति । पुषादित्वादङिति भावः । मुहधातुरनुदात्तत्वाऽभावेऽपि रधादित्वात् वेट् । मुमोहिथेति । इट्पक्षे रूपम् । अनिट्पक्षे तु 'वा द्रुहमुह' इति घत्वं मत्वा

मोग्धा-मोढा। मोहिष्यति-मोक्ष्यति। अमुहत्। ११९९ ष्णुह उद्गिरणे। स्नुह्यति। सुष्णोह। सुष्णोहिथ-सुष्णोग्ध-सुष्णोढ। सुष्णुहिव-सुष्णुह्व। स्नोहिता-स्नोग्धा-स्नोढा। स्नोहिष्यति-स्नोक्ष्यति। अस्नुहत्। १२०० ष्णिह प्रीतौ। स्निह्यति। सिष्णेह। वृत्। रधादयः समाप्ताः। पुषादयस्तु आगणान्तादिति सिद्धान्तः। १२०१ शमु उपशमे। २५१९ शमामष्टानां दीर्घः श्यनि ७।३।७४। शमादीनामित्यर्थः। प्रणिशाम्यति। शेमतुः। शेमिथ। शमिता। अशमत्। १२०२ तमु काङ्क्षायाम्। ताम्यति। तमिता। अतमत्। १२०३ दमु उपशमे। उपशम इति ण्यन्तस्य। तेन सकर्मकोऽयम्। न तु शमिवदकर्मकः। अदमत्। १२०४ श्रमु तपसि खेदे च। श्राम्यति। अश्रमत्। १२०५ भ्रमु अनवस्थाने। 'वा भ्राश-'(सू२३२१) इति श्यन्वा। तत्र कृते 'शमामष्टानाम्—' (सू २५१९) इति दीर्घः। भ्राम्यति। लुङ्यङ्—अभ्रमत्। शेषं भ्वादिवत्। १२०६ क्षमू सहने। क्षाम्यति। चक्षमिथ-चक्षन्थ। चक्षमिव-चक्षण्व। चक्षमिम-चक्षण्म। क्षमिता-क्षन्ता। अक्षमीत्। भ्वादिस्तु षित्। 'अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमते क्षमा'। १२०७ क्लमु

---

आह—मुमोग्धेति। ढत्वपक्षे आह—मुमोढेति। मोक्ष्यतीति। घत्वढत्वयोस्तुल्यं रूपम्। ष्णुह ष्णिहेति। षोपदेशौ। तदाह—सुष्णोह। सिष्णेहेति। थलादावनिट्पक्षे 'वा द्रुह' इति घत्वविकल्पः। पक्षे ढः। इति रधादयः। आ गणान्तादिति। दिवादिगणसमाप्तिपर्यन्ताः पुषादयः इत्यर्थः। सिद्धान्त इति। माधवादिभिस्तथाऽभ्युपगमादिति भावः। उपशमे इति। उपशमो नाशः इन्द्रियनिग्रहश्च। शमामष्टानाम्। स्पष्टम्। बहुवचनात् शमादिग्रहणम्। तदाह—शमादीनामिति। 'शमस्तमुर्दमुः श्रमुर्भ्रमुरपि क्षमुः। क्लमुर्मदी चेत्येतेऽष्टौ शमादय इति स्थितिः।' दमु उपशमे इति। ननु शमु दमु उपशमे इत्येव पठितुं युक्तमित्यत आह—उपशम इति ण्यन्तस्येति। शमधातोर्हेतुमण्ण्यन्तात् घञि 'नोदात्तोपदेशस्य' इति वृद्ध्यभाव इत्यर्थः। ततः किमित्यत आह—तेनेति। ततश्च दाम्यतीत्यस्य शमयतीत्यर्थः। शेषं भ्वादिवदिति। आर्धधातुकेषु शप्पक्षे च भ्वादिवदित्यर्थः। क्षमू सहने। ऊदित्त्वात् थलि वमादौ च इड्विकल्पः। तदाह—चक्षमिथेत्यादि। षित्त्वाऽषित्त्वयोः फलभेदं श्लोकार्द्धेन संगृह्णाति—अषितः इति। अषितः क्षाम्यतेः श्यन्विकरणपठितस्य क्षमधातोः क्तिनि क्षान्तिः इति रूपम्। अषित्त्वात् 'षिद्भिदादिभ्यः' इत्यङ् न। क्षमूषस्तु भौवादिकात् षितः आत्मनेपदे शपि क्षमते इति रूपम्, क्तिनं बाधित्वा षित्त्वादङि क्षमेति रूपं चेत्यर्थः। क्लमु ग्लानौ। नन्वस्य शमादिगणात् बहिरेव दिवादिगणे पाठोऽस्तु। नच 'शमामष्टानाम्' इति दीर्घार्थं शमादिगणे अस्य पाठ इति वाच्यम्, 'ष्ठिवुक्लमुचमां शिति' इत्येव शपि परे इव श्यनि परेऽपि दीर्घसिद्धेः। नच 'ष्ठिवुक्लमुचमां शिति' इत्यत्रैव क्लमुग्रहणं त्यज्य-

ग्लानौ । क्लाम्यति-क्लामति । शपीव श्यन्यपि 'ष्ठिवुक्लमु-' (सू २३२०) इत्येव दीर्घे सिद्धे शमादिपाठो घिनुणर्थः । अङ् । अक्लमत् । १२०८ मदी हर्षे । माद्यति । अमदत् । शमादयोऽष्टौ गताः ।

१२०९ असु क्षेपणे । अस्यति । आस । असिता । २५२० अस्यतेस्थुक् ७।४।१७॥ अङि परे । आस्थत् । अस्य पुषादित्वादङि सिद्धे 'अस्यतिवक्ति—' (सू २४३८) इति वचनं तङर्थम् । तङ् तु 'उपसर्गादस्यत्यूह्योः' (वा ६२०) इति वक्ष्यते । पर्यास्थत । १२१० यसु प्रयत्ने । २५२१ यसोऽनुपसर्गात् ३।१।७१॥ २५२२ संयसश्च ३।१।७२॥ श्यन्वा स्यात् । यस्यति-यसति । संयस्यति-संयसति । अनुपसर्गात् किम् । प्रयस्यति । १२११ जसु मोक्षणे । जस्यति । १२१२ तसु उपक्षये । १२१३ दसु च । तस्यति । अतसत् । दस्यति । अदसत् । १२१४ वसु स्तम्भे । वस्यति । ववास । ववसतुः । 'न शसदद-' (सू २२६३) इति निषेधः । वशादिरयमिति मते तु, वेसतुः । वेसुः । १२१५ व्युष विभागे । अयं दाहे पठितः, अर्थभेदेन त्वङर्थं पुनः पठ्यते । अव्युषत् । ओष्ठ्यादिर्दन्त्या-

---

तामिति वाच्यम्, शपि दीर्घार्थं तस्यावश्यकत्वादित्याशङ्क्य परिहरति—शपीव श्यन्यपीत्यादि घिनुणर्थं इत्यन्तम् । 'शमित्यष्टाभ्यो घिनुण्' इति विधानादिति भावः । शमादय इति । 'शमु उपशमे' इत्यारभ्य 'मदी हर्षे' इत्यन्ता अष्टौ शमादयो वृत्ता इत्यर्थः ।

असु क्षेपणे । अस्यतेस्थुक् । शेषं पूरयति—अङि परे इति । 'ऋदृशोऽङि' इत्यतस्तदनुवृत्तेरिति भावः । थुकि ककार इत् उकार उच्चारणार्थः कित्त्वादस्धातोरन्त्यावयवः । ननु पुषादित्वादेवाऽस्यतेश्च्लेरङि सिद्धे 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यत्र अस्यतिग्रहणं व्यर्थमित्याशङ्क्य निराकरोति—अस्य पुषादित्वादिति । तङर्थमिति । 'पर्यास्थत'इत्यत्र आत्मनेपदे अङर्थमस्यतिवक्तीत्यत्र अस्यतिग्रहणमित्यर्थः, पुषाद्यङः परस्मैपदमात्रविषयतया आत्मनेपदे अप्रसक्तेरिति भावः । नन्वस्यतेः केवलपरस्मैपदित्वादात्मनेपदं दुर्लभमित्यत आह—तङ् तु उपसर्गादि'त वक्ष्यते । इति । 'पदव्यवस्थाया'मिति शेषः । यसु प्रयत्ने । यसोऽनुपसर्गात् । संयसश्च । सूत्रद्वयमिदम् । श्यन् वा स्यादिति । शेषपूरणमिदम् । 'दिवादिभ्यः श्यन्' इत्यतः 'वा आश' इत्यतश्च तदनुवृत्तेरिति भावः । अनुपसर्गाद्यसः श्यन् वा स्यादिति प्रथमसूत्रार्थः । सोपसर्गात्तु नित्य एव श्यन्, अनुपसर्गादिति पर्युदासात् । सम्पूर्वात् यसेर्नित्यमेव श्यनः प्राप्तौ द्वितीयसूत्रम् । व्युष विभागे । अयमिति । दिवादिगण एव पुषादिभ्यः प्रागयं धातुः पठित इत्यर्थः । पौनरुक्त्यमाशङ्क्य आह—अर्थभेदेन त्वङर्थं पठ्यते इति । विभागात्मके अर्थविशेषे एव पुषाद्यङर्थमिह पुनः पाठ इत्यर्थः । अव्युषदिति । 'व्युष दाहे' इति पूर्वपठितस्य तु सिजेव । अव्योषीत् । ओष्ठ्यादिरिति । दन्त्योष्ठ्यादिर्दन्त्योष्मान्तोऽय-

न्तोऽयम्–व्युस इति केचित्। अयकारः बुस इत्यन्ये। १२१६ प्लुष दाहे। अप्लुषत्। पूर्वत्र पाठः सिजर्थ इत्याहुः। तद्भ्वादिपाठेन गतार्थमिति सुवचम्। १२१७ बिस प्रेरणे। बिस्यति। अबिसत्। १२१८ कुस संश्लेषणे। अकुसत्। १२१९ बुस उत्सर्गे। १२२० मुस खण्डने। १२२१ मसी परिणामे। परिणामो विकारः। समी इत्येके। १२२२ लुठ विलोडने। १२२३ उच समवाये। उच्यति। उवोच। ऊचतुः। मा भवानुचत्। १२२४ भृशु १२२५ भ्रंशु अधःपतने। बभर्श। अभृशत्। 'अनिदिताम्–' ( सू ४१५ ) इति नलोपः। भ्रश्यति। अभ्रशत्। १२२६ वृश वरणे। वृश्यति। अवृशत्। १२२७ कृश तनूकरणे। कृश्यति। १२२८ ञि तृषा पिपासायाम्। १२२९ हृष तुष्टौ। श्यन्नङौ भौवादिकाद्विशेषः। १२३० रुष १२३१ रिष हिंसायाम्। 'तीषसह–' ( सू २३४० ) इति वेट्। रोषिता–रोष्टा। रेषिता–रेष्टा। १२३२ डिप क्षेपे। १२३३ कुप क्रोधे। १२३४ गुप व्याकुलत्वे। १२३५ युप १२३६ रुप १२३७ लुप विमोहने। युप्यति। रुप्यति। लुप्यति। लोपिता। लुप्यतिः सेट्कः। अनिट्कारिकासु लिपिसाहचर्यात्तौदादिकस्यैव ग्रहणात्। १२३८ लुभ गार्ध्ये। गार्ध्यमाकाङ्क्षा। 'तीषसह–' (सू २३४०) इति वेट्। लोभिता–लोब्धा। लोभिष्यति। लुभ्येत्। लुभ्यात्। अलुभत्। भ्वादेरवृत्करणत्वाल्लोभतीत्यपीत्याहुः। १२३९ क्षुभ सञ्चलने। क्षुभ्यति। १२४० णभ १२४१ तुभ हिंसायाम्। क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते। तेषां द्युतादित्वादङ् सिद्धः। क्र्यादित्वात्पक्षे सिज्भवत्येव। इह पाठस्तु श्यन्नर्थः।

---

मिति केचिन्मन्यन्त इत्यर्थः। अयकार इति। दन्त्योष्ठ्यादिदन्त्योष्मान्तो यो धातुरुक्तः स एवायं यकाररहित इत्यन्ये मन्यन्त इत्यर्थः। 'अयकार'मिति पाठे क्रियाविशेषणम्। प्लुष दाहे। ननु दिवादिगणे परस्मैपदिषु पुषादिभ्यः प्राक् अस्य पाठः क्वचित् दृश्यते। तत्र पौनरुक्त्यशङ्कां परिहरति—पूर्वत्र पाठः सिजर्थ इति। पुषादावेव पाठे सति अङेव श्रूयेत नतु सिच्। पुषादेः प्रागपि पाठे तु तस्य अङभावात् सिच् श्रूयेत। तथाच सिचः कदाचित् श्रवणार्थः पूर्वं पाठ इत्यर्थः। आहुरित्यस्वरसोद्भावनम्। तद्बीजं दर्शयति—तद्भ्वादीति। तत् दिवादिगणे पुषादिभ्यः पूर्वमस्य पठनं भ्वादिपाठेनैव सम्पन्नप्रयोजनकमिति सुष्ठु वक्तुं शक्यमित्यर्थः। एवं च भ्वादिपाठात् शब्विकरणः लुङि सिचः श्रवणं च सिध्यति। पुषादौ पाठात्तु श्यन्विकरणः अङ् च सिध्यति। अतः दिवादिगणे पुषादिभ्यः प्रागस्य पाठो व्यर्थं एवेति भावः। एतदेवाभिप्रेत्य मूले दिवादिगणे पुषादिगणात् प्राक् 'प्लुष दाहे' इति न पठितमिति बोध्यम्। मसी परिणामे इति। ईदित्वं 'श्वीदितः' इत्येतदर्थम्। मस्यति। समी इत्येके इति। सम्यति। भृशु भ्रंशु अधःपतने। द्वितीयधातोराह–अनिदितामिति। युप रुप लुप विमोहने इति। धातुवृत्त्यादिविरो-

१२४२ क्लिदू आर्द्रीभावे। क्लिद्यति। चिक्लेदिथ-चिक्लेत्थ। चिक्लिदिव-चिक्लिद्व। चिक्लिदिम-चिक्लिद्म। क्लेदिता-क्लेत्ता। १२४३ ञि मिदा स्नेहने। 'मिदेर्गुणः' ( सू २३४६ ) मेद्यति। अमिदत्। द्युतादिपाठादेव अमिदत्, अमेदिष्टेति सिद्धे इह पाठः अमेदीदिति मा भूदिति। द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः। १२४४ ञि क्ष्विदा स्नेहनमोचनयोः। १२४५ ऋधु वृद्धौ। आनर्धं। आर्धत्। १२४६ गृधु अभिकाङ्क्षायाम्। अगृधत्। वृत्। पुषादयो दिवादयश्च वृत्ताः। केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु भ्वादिवदाकृतिगणः। तेन क्षीयते मृग्यतीत्यादिसिद्धिरित्याहुः। इति तिङन्ते दिवादिप्रकरणम्।

## अथ तिङन्ते स्वादिप्रकरणम् ॥ ५ ॥

१२४७ षुञ् अभिषवे। अभिषवः स्नपनं पीडनं स्नानं सुरासन्धानं च। तत्र स्नाने अकर्मकः। २५२३ स्वादिभ्यः श्नुः ३।१।७३॥ सुनोति। सुनुतः।

---

धादुरित्पाठो लेखकप्रमादादायातः। इह पाठस्त्विति। क्षुभिनभितुभीनाम् इह दिवागणे पाठस्य श्यनेव प्रयोजनमित्यर्थः। वस्तुतस्तु पुषादेः प्रागेव एषां त्रयाणां पाठो युक्त इति भावः। ञि मिदा स्नेहने। अमिददिति। ननु भ्वाद्यन्तर्गणे द्युतादौ 'ञि मिदा स्नेहने' इत्यात्मनेपदिषु पठितः। लुङि तु 'द्युद्भ्यो लुङि' इत्यत्र परस्मैपदविकल्प उक्तः। द्युताद्यङ् तु परस्मैपद एव न तु तङि। एवं च द्युतादिपाठादेव परस्मैपदपक्षे अङि अमिददिति, तङि तु अङभावे अमेदिष्टेति सिद्धम्। तथा च पुषादावस्य पाठो व्यर्थः। तद्बहिर्दिवादौ पाठादेव श्यन्सिद्धेरित्याशङ्क्यते—द्युतादिपाठादेवेत्यादिना, सिद्धे इत्यन्तेन। तामिमां शङ्कां परिहरति—इह पाठः अमेदीदिति मा भूदितीति। पुषादावस्य पाठः अमेदीदिति व्यावृत्त्यर्थः इत्यर्थः। पुषादिभ्यः प्रागेव दिवादावस्य पाठे तु तस्माल्लुङि अङसम्भवादमेदीदिति स्यादिति भावः। नन्वेवं सति भ्वाद्यन्तर्गणे द्युतादावस्य पाठो व्यर्थः। द्युतादिभ्यो बहिरेवात्मनेपदिषु पठ्यताम्। एवं च अमेदिष्टेति सिद्धम्। इह पुषादौ पाठात्तु अमिददिति सिद्धमित्याशङ्क्येष्टापत्त्या परिहरति—द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचित इति। सूचितः इति पाठे तु सुतरामुचित इति व्याख्येयम्। ञि क्ष्विदेत्यादि। वक्तव्यम्। इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां श्यन्विकरणं समाप्तम्।

अथ श्नुविकरणा धातवो निरूप्यन्ते। षुञ्धातुः षोपदेशः। अनिट्। इत आरभ्य ञित्वादुभयपदिनः। सुरासन्धानमिति। सुरोत्पादनमित्यर्थः। स्वादिभ्यः श्नुः। कर्त्रर्थे सार्वधातुके स्वादिभ्यः श्नुः स्यादित्यर्थः। शपोऽपवादः। सुनोतीति। लटस्तिपि श्नुः, शकार इत् शित्त्वेन सार्वधातुकत्वात् 'सार्वधातुकमपित्' इति ङित्त्वात्तस्मिन् परे धातोर्न गुणः। श्नोस्तु तिपमाश्रित्य गुण इति भावः। सुनुत इति। तसो

'हुश्नुवोः—' ( सू २३८७ ) इति यण् । सुन्वन्ति । सुन्वः-सुनुवः । सुन्वहे-सुनुवहे । सुषाव । सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् । 'स्तुसुधूञ्भ्यः—' ( सू २३८५ ) इतीट्-असावीत् । असोष्ट । अभिषुणोति । अभ्यषुणोत् । अभिसुषाव । २५२४ सुनोतेः स्यसनोः । ८।३।११७॥ स्ये सनि च परे सुञः षो न स्यात् । विसोष्यति । १२४८ षिञ्

ङित्त्वात् श्नोर्न गुण इति भावः । सुनु-अन्ति । इति स्थिते 'अचि श्नुधातु' इति उवङमाशङ्क्य आह—हुश्नुवोरिति । सुनोषि । सुनुथः । सुनुथ । सुनोमि । वसि मसि च 'लोपश्चास्यान्यतरस्यां म्वोः' इत्युकारलोपविकल्पं मत्वा आह—सुन्वः सनुवः इति । सुन्मः । सुनुमः । इत्यपि ज्ञेयम् । अथ लटस्तङि सुनुत । सुन्वाते । सुन्वते । सुनुषे । सुन्वाथे । सुनुध्वे । सुन्वे । इति सिद्धवत्कृत्य आह—सुन्वहे सुनुवहे इति । 'लोपश्चास्य' इत्युकारलोपविकल्प इति भावः । सुन्महे । सुनुमहे इत्यपि ज्ञेयम् । सुषावेति । सुषुवतुः । सुषुवुः । सुषविथ-सुषोथ । सुषुवथुः । सुषुव । सुषाव-सुषव । सुषुविव । सुषुविम । अथ लिटस्तङ्याह—सुषुवे इति । सुषुवाते । सुषुविरे । सुषुविषे । सुषुवाथे । सुषुविध्वे । सुषुवे । सुषुविवहे । सुषुविमहे । सोतेति । अनिट्त्वसूचनमिदम् । सोष्यति । सोष्यते । सुनोतु-सुनुतात् । सुनुताम् । सुन्वन्तु । इति सिद्धवत्कृत्य आह-सुनु इति । 'उतश्च प्रत्ययात्' इति हेर्लुक् । सुनुतात् । सुनुतम् । सुनुत । सुनवानीति । 'हुश्नुवोः' इति यणं बाधित्वा परत्वाद्गुणः, आटः पित्त्वेन अङित्त्वादिति भावः । सुनवाव । सुनवाम । लोटस्तङि सुनुताम् । सुन्वाताम् । सुन्वताम् । सुनुष्व । सुन्वाथाम् । सुनुध्वम् । इति सिद्धवत्कृत्य आह—सुनवै इति । हुश्नुवोः' इति यणं बाधित्वा परत्वात् गुणः, आटः पित्त्वेन ङित्त्वाऽभावादिति भावः । सुनवावहै । सुनवामहै । असुनोत् । असुनुताम् । असुन्वन् । असुनोः । असुनवम् । असुनुव-असुन्व । असुनुत । असुन्वाताम् । असुन्वत । इत्याद्यूह्यम् । विधिलिङ्याह—सुनुयादिति । यासुटो ङित्त्वात् श्नोर्न गुण इति भावः । सूयादिति । आशीर्लिङि 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः । सोषीष्ट । लुङि परस्मैपदे सिचः इण्निषेधे प्राप्ते आह—स्तुसुधूञ्भ्यः इति इडिति । असाविष्टामित्यादि । लुङस्तङ्याह-असोष्टेति । असोषातामित्यादि । असोष्यत् । असोष्यत । 'उपसर्गात् सुनोति' इति षत्वं मत्वा आह—अभिषुणोतीति । षात्परत्वाण्णत्वम् । अभ्यषुणोदिति । 'प्राक् सितादड्व्यवायेऽपि' इति षत्वम् । अभिसुषावेति । 'स्थादिष्वभ्यासेन' इति नियमादभ्यासस्य न षः । 'आदेशप्रत्यययोः' इत्युत्तरखण्डस्य षः । सुनोतेः स्यसनोः । 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम् । 'न रपर' इत्यतो नेत्यनुवर्तते । तदाह—षो न स्यादिति । स्ये उदाहरति—विसोष्यतीति । अत्र 'उपसर्गात् सुनोति' इति प्राप्तः षो न भवति । सनि तु अभिसुसूरित्युदाहरणम् । सुञः सनि द्वित्वे 'अभिसुसुस' इति सन्नन्तात् क्विपि अतो लोपे 'अभिसुसुस्' इत्यस्मात् साहंल्ङ्यादिलोपे सस्य रुत्वे 'र्वोरुपधायाः' इति दीर्घे रेफस्य विसर्गः । 'सुसू-

बन्धने । षिनोति । विसिनोति । सिषाय । सिष्ये । सेता । १२४९ शिञ् निशाने । तालव्यादिः । शेता । १२५० डु मिञ् प्रक्षेपणे । 'मीनातिमिनोति—' ( सू २५०८ ) इत्यात्वम् । ममौ । ममिथ–ममाथ । मिम्ये । माता । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । १२५१ चिञ् चयने । प्रणिचिनोति । २५२५ विभाषा चेः ७।३।५८॥ अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च । प्रणिचिकाय–चिचाय । चिक्ये–चिच्ये । अचैषीत् । अचेष्ट । १२५२ स्तृञ् आच्छादने । स्तृणोति । स्तृणुते । 'गुणोऽर्ति—' ( सू २३८० )

---

षति' इति तु नोदाहरणम्, 'स्तौतिण्योरेव षण्यभ्यासात्' इति नियमादेव षत्वाऽभावसिद्धेरित्यलम् । षिञ् बन्धने इति । षोपदेशः अनिट् च । धुञ इव रूपाणि । विसिनोतीति । 'सात्पदाद्योः' इति षत्वनिषेधः । 'उपसर्गात्सुनोति' इति तु न षः सुनोत्यादिष्वनन्तर्भावादिति भावः । सिषायेति । णलि वृद्धौ आयादेशः । अतुसादौ 'एरनेकाचः' इति यण् । सिष्यतुरित्यादि । लिटस्तङ्याह—सिष्ये इति । सिषि ए इति स्थिते 'एरनेकाचः' इति यणिति भावः । सिष्याते । सिष्यिरे इत्यादि । असैषीत् । शिञ् निशाने इति । षिञ्वत् । डु मिञ् प्रक्षेपणे इति । मिनोति । उपदेशे एजन्तत्वाभावादात्वे अप्राप्ते आह—मीनातिमिनोतीत्यात्वमिति । 'एज्विषये अशिती'ति शेषः । ममाविति । आत्वे कृते णलः औत्वमिति भावः । अतुसादावेज्विषयत्वाभावान्नात्वम् । 'एरनेकाचः' इति यण् । मिम्यतुः । मिम्युः । भारद्वाजनियमात्थलि वेडिति मत्वा आह—ममिथ ममाथेति । थलः पित्त्वेन अकित्त्वादेज्विषयत्वम् । इट्पक्षे 'आतो लोपः' इति भावः । मिम्यथुः । मिम्य । ममौ । मिम्यिव । मिम्यिम । लिटस्तङ्याह—मिम्ये इति । एशः कित्त्वादेज्विषयत्वाभावाच्च नात्वमिति भावः । मिम्याते । मिम्यिरे । मिम्यिषे । मिम्याथे । मिम्यिध्वे । मिम्ये । मिम्यिवहे । मिम्यिमहे । मातेति । एज्विषयत्वादशित्त्वाच्च आत्वमिति भावः । मास्यति । मास्यते । सार्वधातुकेषु धुञ्वत् । मीयादिति । आशीर्लिङि परस्मैपदे यासुटः कित्त्वादेज्विषयत्वाभावादात्वाभावे 'अकृत्सार्व' इति दीर्घ इति भावः । आशीर्लिङि तङि आह—मासीष्टेति । एज्विषयत्वादात्वमिति भावः । लुङि परस्मैपदे सिचि आत्वे 'यमरम' इति सगिटौ मत्वा आह—अमासीदिति । सकि सिच इटि सिज्लोपः । अमास्तेति । लुङि तङि सिचि आत्वमिति भावः । अमासाताम् । अमासत इत्यादि । चिञ् चयने इति । चयनं रचना । अनिट् । सार्वधातुके धुञ्वद्रूपाणि । प्रणिचिनोतीति । 'नेर्गद' इति णत्वमिति भावः । विभाषा चेः । 'चजोः कुघिण्ण्यतोः' इत्यतः कुग्रहणमनुवर्तते । 'अभ्यासाच्च' इत्यतः अभ्यासादिति 'सन्लिटोर्जेः' इत्यतः सन्लिटोरिति च । तदाह—अभ्यासादित्यादिना । स्तृञ् आच्छादने इति । अनिट् । लिटि तस्तार । अतुसादौ 'ऋतश्च संयोगादेर्गुणः' इति गुणः । वृद्धिविषयेऽपि परत्वादस्य प्रवृत्तिः ।

इति गुणः । स्तर्यात् । २५२६ ऋतश्च संयोगादेः ७।२।४३॥ ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड् वा स्यात्तङि । स्तरिषीष्ट-स्तृषीष्ट । अस्तरिष्ट-अस्तृत । १२५३ कृञ् हिंसायाम् । कृणोति । कृणुते । चकार । चकर्थ । चक्रे । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत । १२५४ वृञ् वरणे । २५२७ बभूथाततन्थजगृम्भववर्थेति निगमे ७।२।६४॥ एषां वेदे इडभावो निपात्यते । तेन भाषायां थलीट । ववरिथ । ववृव । ववृवहे । वरीता—वरिता । २५२८ लिङ्सिचोरात्मनेपदेषु ७।२।४२॥ वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि । २५२९ न लिङि ७।२।३९॥ वॄतो लिङ इटो दीर्घो न स्यात् । वरिषीष्ट-वृषीष्ट । अवारीत् । अवरिष्ट—अवरीष्ट—अवृत । १२५५ धुञ् कम्पने । धुनोति । धुनुते ।

तस्तरतुः । ऋदन्तत्वात्थल्यपि नित्यं नेट् । तस्तर्थ । तस्तरिव । तस्तरे । तस्तराते । तस्तरिरे । तस्तरिषे । तस्तरिवहे । स्तर्ता । 'ऋद्धनोः स्ये' स्तरिष्यति । आशीर्लिङि परस्मैपदे यासुटः किस्वाद्गुणनिषेधे प्राप्ते आह—गुणोऽर्तीति गुण इति । तङि आशीर्लिङि स्तृ-षीष्ट इति स्थिते—ऋतश्च संयोगादेः । 'लिङ्सिचोरात्मनेपदेषु' इत्यनुवर्तते । 'इट् सनि वा' इत्यतः इड्वेति । तदाह—ऋदन्तादित्यादिना । लुङि परस्मैपदे अस्तार्षीत् । लुङस्तङि त्वाह—अस्तरिष्ट अस्तृतेति । 'ऋतश्च संयोगादेः' इति इट्पक्षे गुणः । इडभावपक्षे तु 'ह्रस्वादङ्गात्' इति सिचो लोपः । कृञ् हिंसायाम् । चकर्थेति । 'कृसृभृवृ' इति थल्यपि नित्यमिण्निषेधः । चकृव । क्रियादिति । आशीर्लिङि 'रिङ् शयग्लिङ्क्षु' रिति रिङ् । कृषीष्टेति । 'उश्च' इति किस्वाद्य गुणः । अकार्षीदिति । सिचि वृद्धिः । रपरत्वम् । अकृतेति । 'ह्रस्वादङ्गात्' इति सिचो लोपः । वृञ् वरणे । सेट् । ववार । ववृः । बभूथाततन्थ । निगमो वेदः । तदाह—एषां वेदे इति । ननु 'कृसृभृवृ' इति निषेधादेव थलि ववर्थेति सिद्धे किमर्थं ववर्थग्रहणमित्यत आह—तेन भाषायां थलीडिति । निगमे एव वृणोतेस्थलि इण्निषेध इति नियमलाभादिति भावः । ववे । वव्राते । ववृषे । 'वॄतो वा' इति मत्वा आह—वरिता वरीतेति । लिङ्सिचोः । 'इट् सनि वा' इत्यतः इड्वा इत्यनुवर्तते । 'वॄतो वा' इत्यतो 'वॄत' इति तदाह—वृङ्वृञ्भ्यामित्यादिना । न लिङि । 'वॄतो वा' इत्यतो 'वॄत' इत्यनुवर्तते । लिङीति षष्ठ्यर्थे सप्तमी । 'आर्धधातुकस्येट्' इत्यतः इडित्यनुवृत्त षष्ठ्या विपरिणम्यते । 'ग्रहोऽलिटि' इत्यतो दीर्घ इत्यनुवर्तते । तदाह—वॄत इति । वृङ्वृञ्भ्यामॄकारान्ताच्चेत्यर्थः । वरिषीष्टेति । इट्पक्षे 'वॄतो वा' इति प्राप्तो दीर्घो न भवति । वृषीष्टेति । इडभावपक्षे 'उश्च' इति किस्वाद्य गुणः । अवारीदिति । लुङि परस्मैपदे सिचि वृद्धिः । अवारिष्टाम् । अवारिषुः । 'सिचि च परस्मैपदेषु' इति निषेधादिह 'वॄतो वा' इति न दीर्घः । लुङस्तङि सिचि 'लिङ्सिचोः' इति इट्पक्षे 'वॄतो वा' इति दीर्घविकल्पं मत्वा आह—अवरिष्ट अवरीष्टेति । अवृतेति । इडभावपक्षे 'ह्रस्वादङ्गात्' इति सिचो

अधौषीत्। अधोष्यत्। दीर्घान्तोऽप्ययम्। धूनोति। धूनुते। 'स्वरतिसूति—' (सू २२७९) इति वेट्। दुधविथ—दुधोथ। किति लिटि तु 'श्र्युकः—' (सू २३८१) इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट्। दुधुविव। 'स्तुसुधूञ्भ्यः—' (सू २३८५) इति नित्यमिट्। अधावीत्। अधविष्ट—अधोष्ट।

अथ परस्मैपदिनः। १२५६ टु दु उपतापे। दुनोति। १२५७ हि गतौ वृद्धौ च। २५३० हिनुमीना ८।४।१५॥ उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात्। प्रहिणोति। २५३१ हेरचङि ७।४।५६॥ अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि। जिघाय। १२५८ पृ प्रीतौ। पृणोति। पर्ता। १२५९ स्पृ प्रीतिपालनयोः। 'प्रीतिचलनयोः' इत्यन्ये। 'चलनं जीवनम्' इति स्वामी। स्पृणोति। पस्पार। स्मृ इत्येके। स्मृणोति। पृणोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः। १२६० आप्लृ व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नुवः। आप्ता। आप्नुहि। लृदित्वादङ्। आपत्। १२६१ शक्लृ शक्तौ। अशकत्। १२६२ राध १२६३ साध संसिद्धौ। राध्नोति। २५३२ राधो हिंसायाम् ६।४।१२३॥ एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च। अपरेधतुः। रेधुः।

---

लोपः। धुञ् कम्पन इति। ह्रस्वान्तोऽयमनिट्। धुञ इव रूपाणि। दीर्घान्तोऽप्ययमित्यादि। स्पष्टम्।

अथ परस्मैपदिन इति। 'राध साध संसिद्धा'वित्येतत्पर्यन्ता इत्यर्थः। 'टुदु उपतापे' इत्यारभ्य 'स्मृ इत्येके' इत्येतत्पर्यन्ता धातवो ह्रस्वान्ताः। हि गताविति। 'प्रहिणोती'त्यत्र भिन्नपदत्वात् णत्वेऽप्राप्ते आह—हिनुमीना। हिनु मीना अनयोर्द्वन्द्वात्षष्ठीद्विवचनस्य आर्षो लुक्। 'रषाभ्यां नो णः' इत्यनुवर्तते। 'उपसर्गादसमासेऽपि' इत्यत उपसर्गादिति च। तदाह—उपसर्गस्थादिति। हेरचङि। 'चजोः' इति सूत्रात् कुग्रहणमनुवर्तते। 'अभ्यासाच्च' इत्यतः अभ्यासादिति। 'हो हन्तेः' इत्यतः ह इति षष्ठ्यन्तमनुवर्तते। तदाह—अभ्यासात्परस्येति। जिघायेति। जिघ्यतुः। जिघयिथ—जिघेथ। जिघ्यिव। आप्लृ व्याप्तौ। अनिट्। आप्नुवन्तीति। संयोगपूर्वकत्वात् 'हुश्नुवोः' इति न यण्। आप्नुव इति। संयोगपूर्वकत्वात् 'लोपश्चास्य' इति नोकारलोपविकल्पः। आप्नुहीति। संयोगपूर्वकत्वादेव 'उतश्च प्रत्ययात्' इति हेर्न लुक्। शक्लृ शक्ताविति। शक्नोति। शशाक। शेकतुः। शशकथ-शेकिथ। शेकिव। शक्ता। शक्ष्यति। अशकदिति। लृदित्वादङ्। राध साध संसिद्धौ। अनिटौ। दीर्घाकारवत्त्वात् 'अत एकहल्' इत्यप्राप्तावाह—राधो हिंसायाम्। 'घ्वसोः' इत्यतः एदिति अभ्यासलोप इति च अनुवर्तते। 'गमहन' इत्यतः क्तीति, 'अत एकहल्मध्ये' इत्यतः लिटीति 'थलि च सेटि' इति सूत्रं चानुवर्तते। तदाह—एत्वेत्यादिना। अपरेधतुरिति।

रेधिथ । राद्धा । साध्नोति । साद्धा । असात्सीत् असाद्धाम् ।

अथ द्वावनुदात्तेतौ । १२६४ अशू व्याप्तौ संघाते च । अश्नुते । २५३३ अश्नोतेश्च ७।४।७२॥ दीर्घादभ्यासादवर्णात्परस्य नुट् स्यात् । आनशे ।।अशिता-अष्टा । अशिष्यते—अक्ष्यते । अश्नुवीत । अक्षीष्ट-अशिषीष्ट । आशिष्ट—आष्ट । आक्षाताम् । १२६५ ष्टिघ आस्कन्दने । स्तिघ्नुते । तिष्टिघे । स्तेघिता ।

अथ आ गणान्तात्परस्मैपदिनः । १२६६ तिक १२६७ तिग गतौ च । चादास्कन्दने । तिक्नोति । तिग्नोति । १२६८ षघ हिंसायाम् । सघ्नोति । १२६९ ञि धृषा प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता । १२७० दम्भु दम्भने । दम्भनं दम्भः । दभ्नोति । ददम्भ । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा' इति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम् । 'अनिदिताम्—' ( सू ४१५ ) इति नलोपः । तस्याभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ 'दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ' ( वा ४१५३ ) । देभतुः । ददम्भतुः । इदं कित्वं पिद्विषयकमिति सुधाकरादयः । तन्मते तिप्सिप्मिप्सु देभ, देभिथ, देभ इति रूपान्तरं बोध्यम् । अपिद्विषयकमिति न्यासकारादिमते तु ददम्भ, ददम्भिथ, ददम्भेत्येव । दभ्यात् । १२७१ ऋधु वृद्धौ । तृप प्रीणने इत्येके । क्षुभ्नादित्वाणत्वं न । तृप्नोति । 'छन्दसि' ( गण १६७ ) । आगणान्तादधिकारोऽयम् ।

---

उपसर्गवशादिह हिंसायां वृत्तिः । अन्यत्र रराधतुः । थलयपि क्रादिनियमान्नित्यमिट् । 'उपदेशेऽत्वतः' इत्यत्र तपरकरणादिह नेण्निषेधः । तदाह—रेधिथेति । राद्धेति । 'झषस्तथोः' इति धः ।

अशू व्याप्ताविति । ऊदित्वाद्वेट् । अश्नुते इति । अश्नुवाते । अश्नुवते । संयोगपूर्वकत्वात् 'हुश्नुवोः' इति न यण् । अश्नोतेश्च । 'अत्र लोपः' इत्यतः अभ्यासस्येत्यनुवर्तते, 'तस्मान्नुट्' इति च । तच्छब्देन 'अत आदेः' इति कृतदीर्घः अकारः परामृश्यते । तदाह—दीर्घादिति । आनशे इति । आनशिषे—आनक्षे । आनशिवहे-आनश्वहे । अष्टेति । व्रश्चादिना शस्य षत्वे ष्टुत्वम् । विधिलिङ्याह—अश्नुवीतेति । आशीर्लिङि ऊदित्वादिड्विकल्पं मत्वा आह—अक्षीष्ट-अशिषीष्टेति । लुङि सिच इट्पक्षे आह—आशिष्टेति । अनि पक्षे 'झलो झलि' इति सिचो लोपं मत्वा आह—आष्टेति । ष्टिघधातुः षोपदेशः । सेट् ।

आ गणान्तादिति । स्वादिगणसमाप्तिपर्यन्तमित्यर्थः । इत्युक्तमिति । भ्वादाविति भावः । कित्वपक्षे आह—अनिदितामिति नलोप इति । नन्वनिदितामिति नलोपे सति 'अत एकहल्मध्ये' इत्येत्वसिद्धेः 'दम्भेश्च' इति व्यर्थमित्यत आह—तस्याभीयत्वादिति । नलोपस्येत्यर्थः । दभ्यादिति । आशीर्लिङि 'अनिदिताम्' इति नलोपः ।

१२७२ अह व्याप्तौ । अह्नोति । १२७३ दघ घातने पालने च । दघ्नोति । १२७४ चमु भक्षणे । चम्नोति । १२७५ रि १२७६ क्षि १२७७ चिरि १२७८ जिरि १२७९ दाश १२८० दृ हिंसायाम् । रिणोति । क्षिणोति । अयं भाषायामपीत्येके । 'न तद्यशः शस्त्रभृतां क्षिणोति' । ऋक्षीत्येक एवाजादिरित्यन्ये । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । वृत् । इति तिङन्ते स्वादिप्रकरणम् ।

## अथ तिङन्ते तुदादिप्रकरणम् ॥ ६ ॥

१२८१ तुद व्यथने । इतः षट् स्वरितेतः । २५३४ **तुदादिभ्यः शः ३।१।७७॥** तुदति । तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् । अतुत्त । १२८२ णुद प्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता । १२८३ दिश अतिसर्जने । अतिसर्जनं दानम् । देष्टा । दिक्षीष्ट । अदिक्षत् । अदिक्षत । १२८४ भ्रस्ज पाके । 'ग्रहिज्या—' ( सू २४१२ ) इति संप्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति—भृज्जते । २५३५ **भ्रस्जो रोपधयो रमन्यतरस्याम् ६।४।४७॥** भ्रस्जो रेफस्योपधायाश्च स्थाने रमागमो वा

छन्दसीति । **गणसूत्रमिदम् । तद्व्याचष्टे**—आगणान्तादिति । रि क्षि इति । **रि क्षि चिरि जिरि दाश दृ इति षट् धातवः । आद्यद्वितीयावेकाचौ । तदाह**—रिणोति । क्षिणोतीति । अयं भाषायामपीति । **क्षिधातुरित्यर्थः । तत्र प्रयोगं दर्शयति—**न तद्यश इति । वृदिति । **स्वादयो वृत्ता इत्यर्थः** । इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां श्नुविकरणं समाप्तम् ।

**अथ शविकरणा धातवो निरूप्यन्ते** । इतः षडिति । **'ऋषी गतौ' इत्यतः प्रागित्यर्थः** । तुदादिभ्यः शः । **कर्त्रर्थे सार्वधातुके परे तुदादिभ्यः शः स्यात् स्वार्थ इत्यर्थः । शबपवादः** । तुदतीति । **लघूपधगुणं बाधित्वा नित्यत्वात् शे कृते तस्य अपित्वात् 'सार्वधातुकमपित्' इति ङित्वान्न गुण इति भावः** । अजन्ताऽकारवत्त्वाऽभावात् **क्रादिनियमाल्लिटि थल्यपि नित्यमिट्** । **तदाह**—तुतोदिथेति । तोत्तेति । **अनिडिति भावः** । अतौत्सीदिति । **हलन्तलक्षणा वृद्धिः । णुदधातुर्णोपदेशः । अनिट् । दिशधातुरप्यनिट् ।** देष्टेति । **अश्चेति षत्वे ष्टुत्वम् । स्ये तु 'षढोः' इति षस्य कत्वं च—देक्ष्यति** । दिक्षीष्टेति । **'लिङ्सिचौ' इति कित्वान्न गुणः । 'शल इगुपधात्' इति क्सं मत्वा आह—**अदिक्षत् । अदिक्षतेति । भ्रस्ज पाके । **अनिट् । भ्र ज् अ ति इति स्थिते आह—**ग्रहिज्येति । **ङित्वाद्रेफस्य सम्प्रसारणमृकारः पूर्वरूपं चेति भावः । भृस्ज् अ ति इति स्थिते आह—**सस्येत्यादि । **णलि भ्रस्** अ **इति स्थिते—**भ्रस्जो रोपधयोः । **'भ्रस्ज' इत्यवयवषष्ठी । 'रोपधयो'रिति स्थानषष्ठी । रश्च उपधा च तयोरिति विग्रहः । रेफादकार उच्चा-**

स्यादार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ-बभर्ष्ठ । बभर्ज । रमभावे—बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । 'स्कोः-' ( सू ३८० ) इति सलोपः । 'व्रश्च—' ( सू २९४ ) इति षः । बभ्रष्ठ । बभ्रज्ज । भ्रष्टा-भर्ष्टा । भ्रक्ष्यति-भर्क्ष्यति । 'क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन' ( वा ४०७८ ) भृज्ज्यात् । भृज्ज्यास्ताम् । भर्क्षीष्ट । भ्रक्षीष्ट । अभार्क्षीत्-अभ्राक्षीत् । अभर्ष्ट-अभ्रष्ट । १२८५ क्षिप प्रेरणे ।

---

रणार्थः । रेफस्य उपधायाश्च स्थाने इति लभ्यते । 'आर्द्धधातुके' इत्यधिकृतम् । तदाह—भ्रस्जो रेफस्येत्यादिना । रमि मकार इत् अकार उच्चारणार्थः । तदाह—मित्त्वादन्त्यादचः पर इति । तथा च रेफाऽकारादुपरि सकारात् प्राक् रेफ आगम इति फलितम् । भ्र र् स् ज् अ इति स्थितम् । ननु रम आगमत्वे 'रोपधयो' रिति कथं स्थानषष्ठीनिर्देश इत्यत आह—स्थानेति । स्थानं प्रसङ्गः । रेफस्य उपधायाश्च उच्चारणप्रसङ्गे सति अकारादुपरि रेफः प्रयोज्यः । भकारादुपरि रेफः जकारात्प्राक्सकारश्च न प्रयोज्याविति लभ्यम् । तथाच तयोर्निवृत्तिः फलितेति भावः । एवञ्च भर्ज् अ इति स्थिते द्वित्वादौ रूपमाह—बभर्जेति । अतुसादावपि संयोगात्परत्वात्कित्त्वाभावात् 'ग्रहिज्या' इति सम्प्रसारणं न भवति । भारद्वाजनियमात्थलि वेडिति मत्वा आह—बभर्जिथ बभर्ष्ठेति । इडभावपक्षे बभर्ज् थ इति स्थिते 'व्रश्च' इति जस्य षः । ष्टुत्वेन थस्य ठ इति भावः । बभर्जिव । लिटस्तङ्याह—बभर्जे इति । बभर्जाते इत्यादि सुगमम् । रमभावे आह—बभ्रज्जेति । णलि भ्रस्ज् अ इति स्थिते द्वित्वे हलादिशेषे अभ्यासजश्त्वे बभ्रस्ज् अ इति स्थिते सस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकार इति भावः । 'लिट्यभ्यासस्य' इति सम्प्रसारणस्य न प्रसक्तिः, अभ्यासे हलादिशेषेण रेफाऽभावात् । बभ्रज्जतुरिति । संयोगात्परत्वादकित्त्वात् 'ग्रहिज्या' इति न सम्प्रसारणमिति भावः । बभ्रज्जिथेति । भारद्वाजनियमाद् पक्षे रमभावपक्षे रूपम् । तत्र इडभावपक्षे बभ्रस्ज् थ इति स्थिते आह—स्कोरिति । व्रश्चेति ष इति । 'जस्ये'ति शेषः । रमभावपक्षे लिटस्तङ्याह—बभ्रज्जेति । बभ्रज्जाते । बभ्रज्जिषे । इत्यादि सुगमम् । भ्रष्टेति । रमभावपक्षे रूपम् । भर्ष्टेति । रमागमे भर्ज् ता इति स्थिते जस्य 'व्रश्च' इति षः, ष्टुत्वेन तकारस्य ट इति भावः । एवम्—भ्रक्ष्यति भर्क्ष्यतीति । 'षढोः' इति कत्वे सस्य षत्वमिति विशेषः । भृज्जतु । अभृज्जत् । भृज्जेत् । ननु आशीर्लिङि भ्रस्ज् यात् इति स्थिते यासुटः कित्त्वात् 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे सकारस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकारे भृज्ज्यात् इति रूपं वक्ष्यति । तदयुक्तम्—सम्प्रसारणं बाधित्वा परत्वात् रमागमे कृते भर्ज्यात् इति प्रसङ्गादित्यत आह—क्ङिति रमागममिति । आशीर्लिङस्तङि सीयुटि रमागमपक्षे आह—भर्क्षीष्टेति । रमभावे तु अकित्त्वात्सम्प्रसारणाभावादाह—भ्रक्षीष्टेति । लुङि परस्मैपदे रमागमविकल्पं मत्वा आह-अभार्क्षीत् अभ्रा-

क्षिपति । क्षिपते । क्षेप्ता । अक्षैप्सीत् । अक्षिप्त । १२८६ कृष विलेखने । कृषति । कृषते । कष्टा-क्रष्टा । कृष्यात् । कृक्षीष्ट । 'स्पृशमृशकृष-' (वा १८२३) इति सिज्वा । पक्षे क्सः । सिचि अम्वा । अक्राक्षीत्-अकार्क्षीत्-अकृक्षत् । तङि 'लिङ्सिचौ—' (२३००) इति कित्वादम्न । अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षत । अकृक्षाताम् । अकृक्षन्त । १२८७ ऋषी गतौ । परस्मैपदी । ऋषति । आनर्ष । १२८८ जुषी प्रीतिसेवनयोः । आत्मनेपदिनश्चत्वारः । जुषते । १२८९ ओ विजी भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते । २५३६ विज इट् १।२। २॥ विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते । १२९० ओ लजी १२९१ ओ लस्जी व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे ।

अथ परस्मैपदिनः । १२९२ ओ व्रश्चू छेदने । 'ग्रहिज्या—' (सू २४१२)

क्षीदिति । आत्मनेपदे सिचि इमागमविकल्पं मत्वा आह—अस्रष्ट-अस्रष्टेति । 'झलो झलि' इति सिज्लोपः । क्षिप प्रेरणे इति । अनिट् । अजन्ताऽकारवत्त्वाऽभावात् क्रादिनियमात्थलि नित्यमिट् । चिक्षेपिथ । एवं कृषधातुरपि । चकर्षिथ । लुटि तासि 'अनुदात्तस्य चर्दुपधस्य' इत्यमागमविकल्पः । अमागमाऽभावे गुणे रपरत्वम् । तदाह—क्रष्टा कर्ष्टेति । आशीर्लिङि परस्मैपदे आह—कृष्यादिति । किस्वात् झलादित्वाभावाच्च अमागमो गुणश्च नेति भावः । आशीर्लिङस्तङ्याह—कृक्षीष्टेति । 'लिङ्सिचौ' इति कित्वादमागमो गुणश्च नेति भावः । लुङि परस्मैपदे आह—स्पृशमृशेति सिज्वेति । पक्षे क्स इति । सिजभावपक्षे 'शलः' इति क्स इत्यर्थः । सिचि अम्वेति । सिच्पक्षे 'अनुदात्तस्य च' इत्यमागमविकल्प इत्यर्थः । क्से तु कित्वादमागमो नेति भावः । अक्राक्षीदिति । सिचि अमागमे रूपम् । अकार्क्षीदिति । सिचि अमभावपक्षे हलन्तलक्षणा वृद्धिरिति भावः । क्सादेशपक्षे आह—अकृक्षदिति । कित्वादमागमो गुणश्च नेति भावः । तङीति । तङि सिच्पक्षे अकृष् स् त इति स्थिते 'लिङ्सिचौ' इति कित्वादम् नेत्यर्थः । गुणोऽपि नेति ज्ञेयम् । अकृष्टेति । 'झलो झलि' इति सिज्लोप इति भावः । अकृक्षतेति । सिच् पक्षे अनतः परत्वाददादेश इति भावः । क्सादेशपक्षे आह—अकृक्षतेति । कित्वादम् नेति भावः । अकृक्षन्तेति । क्सादेशपक्षे अ कृष झ इति स्थिते अच्परकत्वाऽभावात् 'क्सस्याचि' इत्यकारलोपाभावादतः परत्वाददादेशाऽभावे अन्तादेश इति भावः । ऋषी गताविति । सेट् । आनर्षथ । आनर्षिव । अर्षिता । आर्षीत् । ओ विजी भयेति । सेट् । उद्विजितेत्यादौ लघूपधगुणे प्राप्ते—विज इ । 'गाङ्कुटादिभ्यः' इत्यतः ङिदित्यनुवर्तते । तदाह—विजेः पर इत्यादि । उद्विजिता । उद्विजिषीष्ट । उदविजिष्ट ।

व्रश्चूधातुरूदित्वाद्वेट । ग्रहिज्येति । वटि व्रश्च् अ ति इति स्थिते शस्याऽपित्त्वेन ङित्वात् 'ग्रहिज्या' इति रेफस्य सम्प्रसारणमृकारः, पूर्वरूपं चेति भावः । तदाह—

वृश्चति । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ-वव्रष्ठ । 'लिट्यभ्यासस्य—' ( २४०८ ) इति सम्प्रसारणम् रेफस्य ऋकारः । 'उरत्' ( सू २२४४ ) तस्य च 'अचः परस्मिन्—' ( सू ५० ) इति स्थानिवद्भावात् 'न सम्प्रसारणे—' ( सू ३६३ ) इति वस्योत्वं न । व्रश्चिता-व्रष्टा । व्रश्चिष्यति-व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्-अव्राक्षीत् । १२९३ व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत्-अव्यचीत् । 'व्यचेः कुटादित्वमनसि'

---

वृश्चतीति । वृश्चतः वृश्चन्तीत्यादि । वव्रश्चेति । णलि रूपमिदम् । थलि च प्रक्रिया अनुपदं वक्ष्यते । अतुसादौ संयोगात्परत्वेन कित्त्वाऽभावात् 'ग्रहिज्या' इति न सम्प्रसारणम् । तदाह—वव्रश्चतुरिति । ऊदित्त्वात्थलादौ वेट् । तदाह—वव्रश्चिथ वव्रष्ठेति । धातुपाठे 'ओव्रश्चू' इत्यत्र व्रस् च् इति स्थिते सस्य श्चुत्वेन शकारनिर्देशः । तथाच वव्रश् च् थ इति स्थिते श्चुत्वस्याऽसिद्धत्वात् 'स्कोः' इति सकारलोपे, चस्य 'व्रश्च' इति षत्वे, ष्टुत्वेन थस्य ठत्वे, वव्रष्ठेति रूपम् । वव्रश्चिव । ननु णलि थलि च अकिति द्वित्वे कृते 'लिट्यभ्यासस्य' इत्यभ्यासावयवयोर्वकाररेफयोर्द्वयोरपि सम्प्रसारणं स्यात् । न च 'न सम्प्रसारणे सम्प्रसारणम्' इति वकारस्य सम्प्रसारणनिषेधः शङ्क्यः, पूर्वं वकारस्य सम्प्रसारणसम्भवादित्यत आह—लिट्यभ्यासेति । 'न सम्प्रसारणे' इति निषेधादेव ज्ञापकात् प्रथमं रेफस्य ऋकारः सम्प्रसारणमित्यर्थः । तस्य सम्प्रसारणसम्पन्नस्य ऋकारस्य अकारविधिं स्मारयति—उरदिति । ननु ऋकारस्य अकारे कृते वकारस्य सम्प्रसारणं स्यात् । सम्प्रसारणपरकत्व विरहेण 'न सम्प्रसारणे' इति निषेधाऽप्रवृत्तेरित्यत आह—तस्य चेति । अकारस्येत्यर्थः । न च उरदत्वस्य परनिमित्तकत्वाश्रयणात् कथं स्थानिवत्त्वमिति वाच्यम् । आपादपरिसमाप्तेरङ्गाधिकार' इत्यभ्युपगम्य अङ्गाक्षिप्तप्रत्ययनिमित्तकत्वाभ्युपगमात् । 'लक्ष्ये-लक्षणस्य सकृदेव प्रवृत्तिः' इति न्यायस्तु 'न सम्प्रसारणे' इति निषेधादेव न स्थानिभेदे प्रवर्तत इति ज्ञायते । अत एव सुद्ध्युपास्य इत्यादौ धकारस्य द्वित्वे कृते पूर्वधकारस्य जश्त्वेन दकारे तस्य द्वित्वमित्यास्तां तावत् । आशीर्लिङ्याह—वृश्च्यादिति । कित्त्वात् सम्प्रसारणमिति भावः । अव्रश्चीदिति । ऊदित्त्वादिट्पक्षे 'नेटि' इति हलन्तलक्षणवृद्धिनिषेधः । इडभावे हलन्तलक्षणवृद्धिं मत्वा आह—अव्राक्षीदिति । अव्राश् च् सीत् इति स्थिते हलन्तलक्षणा वृद्धिः । श्चुत्वस्यासिद्धत्वात् 'स्कोः' इति सलोपः । 'व्रश्च' इति चस्य षः, तस्य 'षढोः' इति कः, सस्य ष इति भावः । 'नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चेत् षाट्टवर्गस्तवर्गजः ।' इत्याहुः । व्यजव्याजीकरणे । सेट । शे 'ग्रहिज्या' इति सम्प्रसारणं मत्वा आह—विचतीति । विव्याचेति । 'लिट्यभ्यासस्य' इत्यभ्यासयकारस्य सम्प्रसारणम् । 'न सम्प्रसारणे' इति न वकारस्य । विविचतुरिति । कित्त्वात् 'ग्रहिज्या' इति सम्प्रसारणे कृते द्वित्वादीति भावः । विव्यचिथ । विविचिव । विच्यादिति । आशीर्लिङि कित्त्वाद्यकारस्य सम्प्रसा-

(वा १४५६) इति तु नेह प्रवर्तते । 'अनसि' इति पर्युदासेन कृन्मात्रविषयत्वात् । १२९४ उछि उञ्छे । उञ्छति । १२९५ उछी विवासे । उच्छति । १२९६ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । 'ऋच्छत्यृताम्' (सू २३८३) इति गुणः । द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता । १२९७ मिच्छ उत्क्लेशे । उत्क्लेशः पीडा । मिमिच्छ । अमिच्छीत् । १२९८ जर्ज १२९९ चर्च १३०० झर्झ परिभाषणभर्त्सनयोः । १३०१ त्वच संवरणे । तत्वाच । १३०२ ऋच स्तुतौ । आनर्च । १३०३ उब्ज आर्जवे । १३०४ उज्झ उत्सर्गे । १३०५ लुभ विमोहने । विमोहनमाकुलीकरणम् । लुभति । लोभिता—लोब्धा । लोभिष्यति । १३०६ रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । रिफति । रिरेफ । रिह इत्येके । 'शिशुं न विप्रा मतिभी रिहन्ति' । १३०७ तृप १३०८ तृम्फ तृप्तौ । आद्यः प्रथमान्तः द्वितीयो द्वितीयान्तः । द्वावपि द्वितीयान्तावित्यन्ये । तृपति । ततर्प । तर्पिता । 'स्पृशमृशकृष' इति सिज्विकल्पः पौषादिकस्यैव, अकपवादत्वात् । तेनात्र नित्यं सिच् । अतर्पीत् । तृम्फति । शस्य ङित्वात् 'अनिदिताम्' (सू ४१५) इति नलोपे 'शे तृम्फादीनां नुम् वाच्यः' (वा ४३२३) आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । तृम्फन्ति । ततृम्फ । तृफ्यात् । १३०९ तुप १३१० तुम्प १३११ तुफ १३१२ तुम्फ हिंसायाम् । तुपति । तुम्पति । तुफति । तुम्फति । १३१३ दृप १३१४ दृम्फ उत्क्लेशे । प्रथमः प्रथमान्तः । द्वितीयो

---

रणम् । 'अतो हलादेः' इति वृद्धिविकल्पं मत्वा आह—अव्याचीत् अव्यचीदिति । ननु 'व्यचेः कुटादित्वमनसि' इति व्यचेः कुटादित्ववचनात् व्यचिता, व्यचिष्यति, इत्यत्रावपि 'गाङ्कुटादिभ्यः' इति ङित्वात् सम्प्रसारणं स्यादित्यत आह—व्यचेरिति ॥ कृन्मात्रेति । अवधारणे मात्रशब्दः । 'उछि उञ्छे' 'उछी विवासे' इति भ्वादौ पठितौ । इह तयोः पाठस्तु शविकरणार्थः । तेन उञ्छती उञ्छन्ती, उच्छती उच्छन्ती इत्यत्र 'आच्छीनद्योः' इति नुम्विकल्पः सिध्यति । भ्वादौ पाठस्तु विस्वरार्थं इत्यन्यत्र विस्तरः । ऋच्छ गतीति । 'छे च' इति तुकि तस्य श्चुत्वेन चकारनिर्देशः । ऋच्छति । णलि लघूपधत्वाभावाद्गुणे अप्राप्ते आह—ऋच्छत्यृतामिति । द्वित्वे उरदत्वे हलादिशेषे 'अत आदेः' इति दीर्घे आ अर्च्छ इति स्थिते बहुहल्त्वात् द्विहल्त्वाऽभावान्नुटि अप्राप्ते आह—द्विहल्ग्रहणस्येति । आनर्च्छेति । 'ऋजादेः' इत्यत्र ऋच्छः इति पर्युदासाद्वाम् न । ऋच्छितेति । 'ऋच्छत्यृताम्' इत्यत्र लिटीत्यनुवृत्तेर्न गुण इति भावः । लुभधातुः सेट् । 'तीषसह' इति वेडिति मत्वा आह— भिता लोब्धेति । शिशुं नेति । 'न' शब्द इवार्थे । विप्राः शिशुमिव मतिभिः रिहन्ति- हिंसन्ति इत्यर्थः । तृपधातुः श्यन्विकरण एवानिट् ।

द्वितीयान्तः। प्रथमो द्वितीयान्त इत्येके। दृपति। दृफति। दृम्फति। १३१५ ऋफ १३१६ ऋम्फ हिंसायाम्। ऋफति। आनर्फ। ऋम्फति। ऋम्फाञ्चकार। १३१७ गुफ १३१८ गुम्फ ग्रन्थे। गुफति। जुगोफ। गुम्फति। जुगुम्फ। १३१९ उभ १३२० उम्भ पूरणे। उभति। उवोभ। उम्भति। उम्भाञ्चकार। १३२१ शुभ १३२२ शुम्भ शोभार्थे। शुभति। शुम्भति। १३२३ दृभी ग्रन्थे। दृभति। १३२४ चृती हिंसाश्रन्थनयोः। चर्तिता। 'सेऽसिचि' (सू २५०६) इति वेट्। चर्तिष्यति—चर्त्स्यति। अचर्तीत्। १३२५ विध विधाने। विधति। वेधिता। १३२६ जुड गतौ। तवर्गपञ्चमान्त इत्येके। जुडति। 'मरुतो जुनन्ति'। १३२७ मृड सुखने। मृडति। मर्डिता। १३२८ पृड च। पृडति। १३२९ पृण प्रीणने। पृणति। पपर्ण। १३३० वृण च। वृणति। १३३१ मृण हिंसायाम्। १३३२ तुण कौटिल्ये। तुतोण। १३३३ पुण कर्मणि शुभे। पुणति। १३३४ मुण प्रतिज्ञाने। १३३५ कुण शब्दोपकरणयोः। १३३६ शुन गतौ। १३३७ द्रुण हिंसागतिकौटिल्येषु। १३३८ घुण १३३९ घूर्ण भ्रमणे। १३४० षुर ऐश्वर्यदीप्त्योः। सुरति। सुषोर। आशिषि सूर्यात्। १३४१ कुर शब्दे। कुरति। कूर्यात्। अत्र 'न भकुर्छुराम्' (सू १६२९) इति निषेधो न। करोतेरेव तत्र ग्रहणादित्याहुः। १३४२ खुर छेदने। १३४३ मुर संवेष्टने। १३४४ क्षुर विलेखने। १३४५ घुर भीमार्थशब्दयोः। १३४६ पुर अग्रगमने। १३४७ वृहू उद्यमने। दन्त्योष्ठ्यादिः। पवर्गादिरित्यन्ये।

१३४८ तृहू १३४९ स्तृहू १३५० तृंहू हिंसार्थाः। तृहति। ततर्ह। स्तृहति। तस्तर्ह। तर्हिता—तर्ढा। स्तर्हिता स्तर्ढा। अतृंहीत्—अताङ्क्षीत्। अताण्ढाम्।

---

अल्पवादत्वादिति। अपवादस्य उत्सर्गसमानदेशत्वादिति भावः। चृती हिंसाश्रन्थनयोरिति। श्रन्थनं विस्रंसनम्। चृततीत्यादि सुगमम्। "अथास्य योक्त्र विचृतेत्" इत्याश्वलायनः। विस्रंसयेदित्यर्थः, उपसर्गवशात्। 'यजमानो मेखलां विचृतते' इत्यापस्तम्बसूत्रे तु तङ् आर्षः। षुधातुः षोपदेशः। कुर शब्दे। करोतेरेवेति। व्याख्यानमेवात्र शरणम्। वृहूधातुः ऋदुपधः। ऊदित्त्वाद्वेट्कः। पवर्गादिरिति। पवर्गतृतीयादिरित्यर्थः।

तृहू स्तृहू तृंहू इति। त्रयोऽपि ऋकारवन्तः। तृतीयोऽनुस्वारवान्। ऊदित्त्वाद्वेट्। तर्ढेति। तृहेस्तासि ढत्वधत्वष्टुत्वढलोपाः। एवं स्तर्ढा। तृण्ढा। अतर्हीत्। अतार्क्षीत्। अस्तर्हीत्। अस्तार्क्षीत्, इति सिद्धवत्कृत्य आह—अतृंहीत्-अताङ्क्षीदिति। तृंहेरिडभावपक्षे हलन्तलक्षणवृद्धौ रपरत्वम्। हस्य ढः, ढस्य कः, षत्वम्। अनुस्वारस्य परसवर्णो ङकार इति भावः। अताण्ढामिति। तृंहेस्तसस्तामि सिच इडभावपक्षे लोपे हल-

१३५१ इषु इच्छायाम् । 'इषुगमि—' ( सू २४०० ) इति छः । इच्छति । एषिता-एष्टा । एषिष्यति । इष्यात् । ऐषीत् । १३५२ मिष स्पर्धायाम् । मिषति । मेषिता । १३५३ किल श्वैत्यक्रीडनयोः । १३५४ तिल स्नेहने । १३५५ चिल वसने । १३५६ चल विलसने । १३५७ इल स्वप्नक्षेपणयोः । १३५८ विल संवरणे । दन्त्योष्ठ्यादिः । १३५९ बिल भेदने । ओष्ठ्यादिः । १३६० णिल गहने । १३६१ हिल भावकरणे । १३६२ शिल १३६३ षिल उञ्छे । १३६४ मिल श्लेषणे । १३६५ लिख अक्षरविन्यासे । लिलेख । १३६६ कुट कौटिल्ये । 'गाङ्कुटादिभ्यः—' ( २४६१ ) इति ङित्वम् । चुकुटिथ । अणित इति किम् । चुकोट । कुटिता । १३६७ पुट संश्लेषणे । १३६८ कुच सङ्कोचने । १३६९ गुज शब्दे । १३७० गुड रक्षायाम् । १३७१ डिप क्षेपे । १३७२ छुर छेदने । 'न भकुर्छुराम्' ( सू १६२९ ) इति न दीर्घः । छुर्यात् । १३७३ स्फुट विकसने । स्फुटति । पुस्फोट । १३७४ मुट आक्षेपमर्दनयोः । १३७५ त्रुटि छेदने । 'वा भ्राश—' ( सू २३२१ ) इति श्यन्वा । त्रुट्यति-त्रुटति । तुत्रोट । त्रुटिता । १३७६ तुट कलहकर्मणि । तुटति । तुतोट । तुटिता । १३७७ चुट १३७८ छुट छेदने । १३७९ जुड बन्धने । १३८० कड मदे । १३८१ लुट संश्लेषणे । १३८२ कृड घनत्वे । घनत्वं सान्द्रता । चकर्ड । कृडिता । १३८३ कुड बाल्ये । १३८४ पुड उत्सर्गे । १३८५ घुट प्रतिघाते । १३८६ तुड तोडने । तोडनं भेदः । १३८७ थुड १३८८ स्थुड संवरणे । थुडति । तुथोड । तुस्थोड । खुड छुड इत्येके । १३८९ स्फुर १३९० स्फुल सञ्चलने । स्फुर स्फुरणे, स्फुल सञ्चलने इत्येके । **२५३७ स्फुरतिस्फुलत्योर्निर्निविभ्यः ८।३।७६॥** षत्वं वा स्यात् । निष्फुरति-निःस्फुरति । स्फर इत्यकारोपधं केचित्पठन्ति । पस्फार । १३९१ स्फुड १३९२ चुड १३९३ व्रुड संवरणे । १३९४ क्रुड १३९५ भृड निमज्जने इत्येके । १३९६ गुरी उद्यमने । अनुदात्तेत् । गुरते । जुगुरे । गुरिता । १३९७ णू स्तवने । दीर्घान्तः । 'परिणूतगुणोदयः' । इतश्चत्वारः परस्मैपदिनः । नुवति । अनुवीत् । १३९८ धू विधूनने । धुवति । १३९९ गु पुरीषोत्सर्गे । जुगुविथ-जुगुथ । गुता । गुष्यति । अगुषीत् । 'ह्रस्वादङ्गात्' ( सू २३६९ ) ।

---

त्तलक्षणवृद्धौ ढत्वधत्वष्टुत्वढलोपा इति भावः । एवं तृंहः अतार्डाम्, स्तृहः-अस्ताण्ढाम् । स्फुर स्फुरणे । स्फुरतिस्फुलत्योः । 'मूर्धन्य' इत्यधिकृतम् । 'सिवादीनां वा' इत्यतो वेत्यनुवर्तते । तदाह—षत्वं वा स्यादिति । णू स्तवने इति । णोपदेशः । परिणूतेति ।

अगुताम् । अगुषुः । १४०० ध्रु गतिस्थैर्ययोः । ध्रुव इति पाठान्तरम् । आद्यस्य ध्रुवतीत्यादि गुवतिवत् । द्वितीयस्तु सेट् । दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रुव्यात् । अध्रुवीत् । अध्रुविष्टाम् । १४०१ कु शब्दे । दीर्घान्तः इति कैयटादयः । कुविता । अकुविष्ट । ह्रस्वान्त इति न्यासकारः । कुता । अकुत । वृत् । कुटादयो वृत्ताः ।

१४०२ पृङ् व्यायामे । प्रायेण व्याङ्पूर्वः । रिङ् । इयङ् । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । १४०३ मृङ् प्राणत्यागे । २५३८ म्रियतेर्लुङ्लिङोश्च १।३।६१॥ लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् स्यान्नान्यत्र । ङित्वं स्वरार्थम् । म्रियते । ममार । ममर्थ । मम्रिव । मर्तासि । मरिष्यति । मृषीष्ट । अमृत ।

अथ परस्मैपदिनः सप्त । १४०४ । रि १४०५ पि गतौ । लघूपधगुणादन्तरङ्गत्वादियङ् । रियति । पियति । रेता । पेता । १४०६ धि धारणे । १४०७ क्षि निवासगत्योः । १४०८ षू प्रेरणे । सुवति । सविता । १४०९ कॄ विक्षेपे । किरति । किरतः । चकार । चकरतुः । करिता— करीता । कीर्यात् । अकारीत् । २५३९ किरतौ लवने ६।१।१४०॥ उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे । उप

'अयुकः क्ङिति' इति नेट् । कुङ् शब्दे । दीर्घान्त इति । ततश्चायं सेट् ।

पृङ् व्यायामे इति । ह्रस्वान्तोऽयमनिट् । 'ऋद्धनोः स्ये' इति इटं मत्वा आह— व्यापरिष्यते इति । मृङ्धातुरनिट् । म्रियते । 'अनुदात्तङितः' इत्यतः आत्मनेपदमित्यनुवर्तते । चकारेण 'शदेः शितः' इत्यतः शित इत्यनुकृष्यते । प्रकृतिभूतादित्यध्याहार्यम् । तदाह—लुङ्लिङोरिति । तङ् स्यादिति । आत्मनेपदं स्यादित्यर्थः, 'म्रियमाणः' इत्यत्र आनस्यापि इष्टत्वात् । ननु ङित्वादेव सिद्धे किमर्थमिदमित्याशङ्क्य नियमार्थमित्याह—नान्यत्रेति । तर्हि ङित्वं व्यर्थमित्यत आह—ङित्वं स्वरार्थमिति । 'तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तम्' इत्येतदर्थमित्यर्थः । म्रियते इति । शे कृते रिङियङाविति भावः । ऋदन्तत्वात् भारद्वाजमतेऽपि नेडित्याह—ममर्थेति । मम्रिवेति । क्रादिनियमादिट् । मर्ता । 'ऋद्धनोः स्ये' इति इटं मत्वा आह—मरिष्यतीति । रि पि गताविति । इगुविमावनिटौ । ननु शे कृते तिपमाश्रित्य इकारस्य परत्वाल्लघूपधगुणः स्यादित्यत आह—अन्तरङ्गत्वादियङिति ।

कॄ विक्षेपे इति । दीर्घान्तोऽयं, सेट् । किरतीति । 'ऋत इद्धातोः' इति इत्वं रपरत्वम् । चकरतुरिति । क्ङित्वेऽपि 'ऋच्छत्यृताम्' इति गुण इति भावः । 'वृतो वा' इति मत्वा आह—करिता करीतेति । किरतौ लवने । उपादिति । 'उपात् प्रतियत्ने' इत्यतस्तदनुवृत्तेरिति भावः । सुडागम इति । 'सुट् कात्पूर्वः' इत्यतस्तदनुवृत्तेरिति भावः । 'अ०

ष्किरति । 'अड्भ्यासव्यवायेऽपि सुट् कात्पूर्व' इति वक्तव्यम्' ( वा ३६६६ ) । उपाष्किरत् । उपचस्कार । २५४० हिंसायां प्रतेश्च ६।१।१४१॥ उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति । प्रतिस्किरति । १४१० गॄ निगरणे । २५४१ अचि विभाषा ८।२।२१॥ गिरतेः रेफस्य लत्वं वा स्यादजादौ । गिरति-गिलति । जगार-जगाल । जगरिथ-जगलिथ । गरिता-गलिता । १४११ दृङ् आदरे । आद्रियते । आद्रियेते । आदद्रे । आदद्रिषे । आदर्ता । आदरिष्यते । आदृषीष्ट । आदृत । आदृषाताम् १४१२ धृङ् अवस्थाने । ध्रियते ।

अथ परस्मैपदिनः षोडश । १४१३ प्रच्छ ज्ञीप्सायाम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छिथ-पप्रष्ठ । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । वृत् । किरादयो वृत्ताः । १४१४ सृज विसर्गे । 'विभाषा सृजिदृशोः' ( सू २४०४ ) । ससर्जिथ-सस्रष्ठ । स्रष्टा । स्रक्ष्यति । 'सृजिदृशोर्झल्यमकिति' ( सू २४०५ ) इत्यमागमः ।

---

ड्भ्यासव्यवायेऽपि' इति वार्तिकम् । 'सुट् कात्पूर्वः' इत्यनुवृत्तिलभ्यम् । हिंसायां प्रतेश्च । चकारादुपादिति समुच्चीयते । तदाह—उपादिति । गॄ निगरणे इति । निगरणं भक्षणम् । से । अचि विभाषा । 'ग्रो यङि' इत्यतः ग्र इत्यनुवर्तते । 'कृपो रो लः' इत्यतः रो लः इति । तदाह—गिरतेरिति । अजादाविति । 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति परिभाषालब्धस्य प्रत्ययस्य अचा विशेषणात्तदादिविधिः । तेन गिराविन्यादौ नेति 'मृजेर्वृद्धिः' इति सूत्रभाष्ये स्पष्टम् । दृङ् आदरे इति । इत्वान्तोऽयम् । अनिट् । आद्रियत इति । रिङ् इयङ् । 'ऋद्धनोः स्ये' इति इटं मत्वा आह—आदरिष्यते इति । आदृषीष्टेति । 'उश्च' इति कित्त्वान्न गुणः । आदृतेति । 'ह्रस्वादङ्गात्' इति सलोपः ।

प्रच्छ ज्ञीप्सायामिति । ज्ञातुमिच्छा ज्ञीप्सा । अनिडयम् । पृच्छतीति । शस्य ङित्वात् 'ग्रहिज्या' इति रेफस्य सम्प्रसारणम् ऋकारः पूर्वरूप चेति भावः । पप्रच्छतुरिति । संयोगात् परत्वेन कित्त्वाभावान्न सम्प्रसारणमिति भावः । भारद्वाजनियमात्थलि वेडिति मत्वा आह—पप्रच्छिथ पप्रष्ठेति । इडभावपक्षे व्रश्चादिना छस्य षः, थस्य ष्टुत्वेन ठ इति भावः । पप्रच्छिव । प्रष्टेति । छस्य व्रश्चेति षः, तकारस्य ष्टुत्वेन टः । नच षत्वस्यासिद्धत्वात् पूर्वं तुकि ततः छस्य षत्वे, ष्टुत्वयोः प्रट्ष्टेति स्यादिति वाच्यम्, व्रश्चेति सूत्रे सतुक्कस्य छस्य ग्रहणात् । किरादयो वृत्ता इति । नचैवं सति 'किरश्च पञ्चभ्यः' इत्यत्र पञ्चग्रहणं व्यर्थं किरादीनां पञ्चत्वादिति वाच्यम्, तस्य 'रुदादिभ्यः सार्वधातुके' इत्युत्तरार्थत्वात् । सृज विसर्गे । अनिट् । सृजति । ससर्ज । ससृजतुः । अजन्ताऽकारवत्त्वाभावेऽपि 'विभाषा सृजिदृशोः' इति थलि वेट् इति मत्वा आह—ससर्जिथ सस्रष्ठेति । इडभावे 'व्रश्च' इति जस्य षः, थस्य ष्टुत्वेन ठः,

सृजेत् । सृज्यात् । असाक्षीत् । । १४१५ टु मस्जो शुद्धौ । मज्जति । ममज्ज । 'मस्जिनशोर्झलि' ( सू २५१७ ) इति नुम् । 'मस्जेरन्त्यात्पूर्वो नुम् वाच्यः' ( वा ३२१ ) संयोगादिलोपः । ममङ्क्थ-ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः । १४१६ रुजो भङ्गे । रोक्ता । रोक्ष्यति । अरौक्षीत् । अरौक्ताम् । १४१७ भुजो कौटिल्ये । रुजिवत् । १४१८ छुप स्पर्शे । छोप्ता । अच्छौप्सीत् । १४१९ रुश १४२० रिश हिंसायाम् । तालव्यान्तौ । रोष्टा । रोक्ष्यति । रेष्टा । रेक्ष्यति । १४२१ लिश गतौ । अलिक्षत् । १४२२ स्पृश संस्पर्शने । स्प्रष्टा-स्पर्ष्टा । स्प्रक्ष्यति-स्पर्क्ष्यति । अस्प्राक्षीत्-अस्पार्क्षीत्-अस्पृक्षत् । १४२३ विच्छ गतौ । 'गुपूधूप-' ( सू २३०३ ) इत्यायः । आर्धधातुके वा । विच्छायति । विच्छायाञ्चकार । विविच्छ । १४२४ विश प्रवेशने । विशति । वेष्टा । १४२५ मृश आमर्शने । आमर्शनं स्पर्शः । अम्राक्षीत्-अमार्क्षीत्-अमृक्षत् । १४२६ णुद प्रेरणे । कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनः पाठः । १४२७ षद्लृ विशरणगत्यवसादनेषु । सीदति इत्यादि भौवादिकवत् । इह पाठो नुम्विकल्पार्थः । सीदती-सीदन्ती । ज्वलादौ पाठस्तु णार्थः । सादः । स्वरार्थश्च ।

---

पित्त्वेन अकित्त्वात् 'सृजिदृशोः' इत्यमागम इति भावः । ससृजिव । टु मस्जो शुद्धौ । मज्जतीति । सस्य श्चुत्वेन शः, तस्य जश्त्वेन ज इति भावः । ममङ्क्थेति । मस्जेर्द्वित्वे हलादिशेषे ममस्ज् थ इति स्थिते 'स्कोः' इति सकारलोपे ममज् थ इति स्थिते जस्य कुत्वेन गकारे, 'मस्जिनशोः' इति नुमि, तस्यानुस्वारे, तस्य परसवर्णो ङकारः, गस्य चर्त्वेन कः इति बोध्यम् । यद्यपि अकारात् परत्र नुमि सत्यपि इदं सिध्यति, तथापि 'अन्त्यात् पूर्वो नुमि'त्यस्य 'मग्न' इत्यादौ नलोपः फलम् । अन्यथा उपधात्वाऽभावात्तस्य लोपो न स्यादिति भावः । एवं—मङ्क्तेति । मङ्क्ष्यति इत्यत्र तु सस्य षत्वं विशेषः, 'रुजो भङ्गे' इत्यारभ्य 'विच्छ गतौ' इत्यतः प्रागनिटः । 'अनुदात्तस्य चर्दुपधस्य' इत्यम्विकल्पं मत्वा आह—स्प्रष्टा, स्पर्ष्टेति ।

णुद प्रेरणे । णोपदेशोऽयम् । 'विश प्रवेशने' इत्यारभ्य 'शद्लृ शातने' इत्यन्ता अनिटः । तत्र ऋदुपधस्य थलि वेट् । अन्यस्य तु नित्यमेवेट् । मृशेः 'अनुदात्तस्य च' इत्यम्विकल्पः । तदाह—अम्राक्षीत्-अमार्क्षीदिति । 'स्पृशमृश' इति सिज्वेति भावः । सिजभावे 'शल इगुपधात्' इति क्स मत्वा आह—अमृक्षदिति । णुद्धातुर्णोपदेशः । ननु तनादिगण एवाऽस्मिन् स्वरितेत्सु पठितस्य किमर्थमिह पाठ इत्यत आह—कर्त्रभिप्रायेऽपीति । षद्लृधातोर्भ्वादौ पठितादेव सीदति इत्यादिसिद्धेः इह पाठो व्यर्थं इत्यत आह—इह पाठ इति । सीदन्ती इति शविकरणात् शत्रन्तात् ङीपि 'आच्छीनद्योः' इति नुम्विकल्पार्थं इह पाठ इत्यर्थः । भ्वादावेव पाठे तु 'शप्श्यनोर्नित्यम्'

शबनुदात्तः । शस्तूदात्तः । १४२८ शद्लृ शातने । स्वरार्थं एव पुनः पाठः । शता तु नास्ति । 'शदेः शितः' (सू २३६२ ) इत्यात्मनेपदोक्तेः ।

अथ षट् स्वरितेतः । १४२९ मिल सङ्गमे । मिल संश्लेषणे इति पठितस्य पुनः पाठः कर्त्रभिप्राये तङर्थः । मिलति । मिलते । मिमेल । मिमिले । १४३० मुच्लृ मोक्षणे । २५४२ शे मुचादीनाम् ७।१।५९॥ नुम् स्यात् । मुञ्चति । मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् । १४३१ लुप्लृ छेदने । लुम्पति । लुम्पते । अलुपत् । अलुप्त । १४३२ विद्लृ लाभे । विन्दति । विन्दते । विवेद । विविदे । व्याघ्रभूत्यादिमते सेट्कोऽयम् । वदिता । भाष्यादिमतेऽनिट्कः । वेत्ता । परिवेत्ता । परिवर्जने । ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः । तृन्तृचौ । १४३३ लिप उपदेहे । उपदेहो वृद्धिः । लिम्पति । लिम्पते । लेप्ता । 'लिपिसिचि—' ( सू २४१८ ) इत्यङ् । तङि तु वा । अलिपत् । अलिपत-अलिप्त । १४३४ षिच क्षरणे । सिञ्चति । सिञ्चते । असिचत् । असिचत-असिक्त । अभिषिञ्चति । अभ्यषिञ्चत् । अभिषिषेच ।

अथ त्रयः परस्मैपदिनः । १४३५ कृती छेदने । कृन्तति । चकर्त । कर्तिता ।

---

इति नित्यो नुम् स्यादिति भावः । तर्हि भ्वाद्यन्तर्गणे ज्वलादावस्य पाठो व्यर्थ इत्यत आह—ज्वलादाविति । 'ज्वलितिकसन्तेभ्यः' इति कर्तरि णप्रत्ययार्थं इति भावः । तदुदाहृत्य दर्शयति—साद इति । उभयत्र पाठस्य फलान्तरमाह—स्वरार्थश्चेति । तदेव विशदयति—शबनुदात्त इति । 'अनुदात्तौ सुप्पितौ' इति पित्स्वरेणेति भावः । शस्तूदात्त इति । 'प्रत्ययः' 'आद्युदात्तश्च' इत्यनेनेति भावः । ननु 'शद्लृ शातने' इत्यस्य भ्वादौ पाठादेव सिद्धे इह पाठो व्यर्थ इत्यत आह—स्वरार्थ एवेति । प्रागुक्तपित्त्वाऽपित्त्वकृतस्वरभेदार्थं एवेत्यर्थः । ननु शत्रन्तात् ङीपि तुदादित्वात् नुम्विकल्पार्थोऽपि कुतो न स्यादित्यत आह—शता तु नास्तीति । शदेर्लटः शानजेव, नतु शत्रादेश इत्यर्थः । कुत इत्यत आह—शदेः शित इतीति । मिल सङ्गमे । पठितस्येति । अस्मिन्नेव तुदादिगणे परस्मैपदिषु पठितस्येत्यर्थः । तङर्थ इति । पूर्वत्र पाठस्तु कर्त्रभिप्रायेऽपि परस्मैपदार्थ इत्यर्थः मुच्लृ मोक्षणे । शे मुचादीनाम् । नुम् स्यादिति । शेषपूरणमिदम् । 'इदितो नुम्' इत्यतस्तदनुवृत्तेरिति भावः । मुक्षीष्टेति । 'लिङ्सिचौ' इति कित्त्वान्न गुण इति भावः । अमुचदिति लृदित्त्वादङिति भावः । लुङि तङि आह—अमुक्तेति । 'झलो झलि' इति सिज्लोपः इति भावः । लिप उपदेहे । तङि तु वेति । 'आत्मनेपदेष्वन्यतरस्याम्' इत्यनेनेति शेषः । षिच क्षरणे । अभिषिञ्चतीति । 'उपसर्गात्सुनोति' इति षः । अभ्यषिञ्चदिति । 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् । अभिषिषेचेति । 'स्थादिष्वभ्यासेन' इति षः ।

कर्तिष्यति-कर्त्स्यति । अकर्तीत् । १४३६ खिद परिघाते । खिन्दति चिखेद । खेत्ता । अयं दैन्ये दिवादौ रुधादौ च । १४३७ पिशि अवयवे । पिशति । पेशिता । अयं दीपनायामपि । 'त्वष्टा रूपाणि पिंशतु' वृत् । मुचादयस्तुदादयश्च वृत्ताः ।

इति तिङन्ते तुदादिप्रकरणम् ।

## अथ तिङन्ते रुधादिप्रकरणम् ॥ ७ ॥

१४३८ रुधिर् आवरणे । नव स्वरितेतः इरितश्च । २५४३ रुधादिभ्यः श्नम् ३।१।७८॥ शपोऽपवादः । मित्वादन्त्यादचः परः । नित्यत्वाद्गुणं बाधते । रुणद्धि । 'श्नसोरल्लोपः' ( सू २४६६ ) । णत्वस्यासिद्धत्वादनुस्वारः । परसवर्णः । तस्यासिद्धत्वाण्णत्वं न । 'न पदान्त' ( सू ५१ ) इति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत् । रुन्द्धः । रुन्धन्ति । रुन्द्धे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु-रुन्द्धात् । रुन्द्धि । रुणधानि । रुणधै । अरुणत् । अरुन्द्धाम् ।

---

कृती छेदने इति । ईदित्वं 'श्वीदित' इत्येतदर्थम् । 'सेऽसिचि' इति वेडिति मत्वा आह—कर्तिष्यति कर्त्स्यतीति । पिशि अवयवे इति । अवयवक्रियायामित्यर्थः । रूपाणि पिंशत्विति । प्रकाशयत्वित्यर्थः । इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां शविकरणं समाप्तम् ।

अथ श्नम्विकरणा धातवो निरूप्यन्ते । रुधादिभ्यः श्नम् । कर्त्रर्थे सार्वधातुके परे रुधादिभ्यः श्नम्प्रत्ययः स्यात् स्वार्थे इत्यर्थः । तदाह—शपोऽपवाद इति । श्नमि शमावितौ । मित्त्वस्य फलमाह—मित्वादन्त्यादचः पर इति । प्रत्ययत्वात् शकारस्येत्संज्ञा । शकारनिर्देशस्तु 'श्नसोरल्लोपः' 'श्नान्नलोपः' इत्यत्र विशेषणार्थः । ननु सार्वधातुकसंज्ञार्थः, फलाऽभावात् । न च 'सार्वधातुकमपित्' इति ङित्त्वे गुणनिषेधः फलमिति शङ्क्यम्, श्नमः पूर्वस्य इगन्तस्य अङ्गत्वाऽभावादेव गुणाऽप्रसक्तेः । ननु श्नमः प्राक् परत्वाल्लघूपधगुणे कृते पश्चात् श्नमि रोणद्धि इति स्यादित्यत आह—नित्यत्वाद्गुणं बाधते इति । कृते अकृते च गुणे प्रवृत्तेः श्नम् नित्यः । तस्मिन् सति लघूपधत्वाभावान्न गुण इति भावः । रुणद्धीति । रुनध् ति इति स्थिते 'झषस्तथोः' इति धत्वे णत्वमिति भावः । रुनध् तस् इति स्थिते प्रक्रियां दर्शयति—श्नसोरल्लोप इति । ङित्ति सार्वधातुके तद्विधेरिति भावः । रुनध तस् इति स्थिते नस्य णत्वमाशङ्क्य आह—णत्वस्यासिद्धत्वादिति । ननु कृते परसवर्णे तस्य नस्य णत्वमस्त्वित्यत आह—तस्यासिद्धत्वादिति। परसवर्णसम्पन्नस्येत्यर्थः । नन्विह अल्लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वात् कथमनुस्वारपरसवर्णाविस्यत आह—न पदान्तेति । रुन्द्ध इति । 'झषस्तथोः' इति धः । रुन्धन्तीति । रुणत्सि । रुन्द्धः । रुन्द्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्द्धे इति । रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्द्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध ।

अरुणत्-अरुणः । अरुणधम । अरुधत्—अरौत्सीत् । अरुद्ध । १४३९ भिदिर् विदारणे । भिनत्ति । भिन्ते । भेत्ता । भेत्स्यति । अभिनत्—अभिनः । अभिनदम् । अभिन्त । अभिदत्—अभैत्सीत् । अभित्त । १४४० छिदिर् द्वैधीकरणे । अच्छिदत्-अच्छैत्सीत् । अच्छित्त । १४४१ रिचिर् विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । अरिणक् । अरिचत्—अरैक्षीत् । अरिक्त । १४४२ विचिर् पृथग्भावे । विनक्ति । विङ्क्ते । १४४३ क्षुदिर् सम्पेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत्—अक्षौत्सीत् । अक्षुत्त । १४४४ युजिर् योगे । योक्ता । १४४५ उछृदिर् दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द । 'सेऽसिचि—' ( सू २५०६ ) इति वेट् । चच्छृदिषे—चच्छृत्से । छर्दिता । छर्दिष्यति—छर्त्स्यति । अच्छृदत्-अच्छर्दीत् । अच्छर्दिष्ट । १४४६ उतृदिर् हिंसानादरयोः । तृणत्तीत्यादि । १४४७ कृती वेष्टने । परस्मैपदी । कृणत्ति । आर्धधातुके तौदादिकवत् । १४४८ ञि इन्धी दीप्तौ । अथ आत्मनेपदिनः । २५४३ श्नान्नलोपः ६।४।२३॥ श्नमः परस्य नस्य लोपः स्यात् । 'श्नसोरल्लोपः' ( सू २४६६ ) इन्द्धे । इन्धाते ।

---

रुरोधिथ । अरुणदिति । लङि हल्ङ्यादिना तिपो लोपः । धस्य चर्त्वविकल्पः । सिपि तु हल्ङ्यादिना लुप्ते 'दश्च' इति रुत्वविकल्पं मत्वा आह—अरुणत् अरुणः इति । रुन्ध्यात् । रुन्धीत । रुत्सीष्ट । इरित्वादङ्विकल्पं मत्वा आह—अरुधत् अरौत्सीदिति । अङभावे सिचि हलन्तलक्षणा वृद्धिः । लुङस्तङ्याह—परुद्धेति । 'झलो झलि' इति सिज्लोपः । भिनत्तीति । भिन्त्तः । भिन्दन्ति । भिनत्सि । भिन्त्थः । भिन्त्थ । भिनद्मि । भिन्द्वः । भिन्द्मः । भिन्ते इति । भिन्दाते । भिन्दते । भिन्त्से । भिन्दाथे । भिन्द्ध्वे । भिन्दे । भिन्द्वहे । बिभेद । बिभेदिथ । बिभिदिव । बिभिदे । बिभिदिषे । अभिनत् । अभिनः इति । 'दश्च' इति रुर्वेति भावः । अभिन्तेति । लङि तङि रूपम् । लुङः परस्मैपदे आह—अभिदत् अभैत्सीदिति । इरित्वादङ् वेति भावः । लुङि तङ्याह-अभित्तेति । 'झलो झलि' इति सिज्लोपः । अभित्सातामित्यादि । उछृदिरिति । उकार इत् । 'उदितो वा' इति क्त्वायामिड्विकल्पार्थः । ञि इन्धी दीप्तौ । ईदित्वं 'श्वीदितः' इत्येतदर्थम् । श्नमि कृते इ न न् ध् ते इति स्थिते—श्नान्न लोपः । श्नम्प्रत्ययैकदेशस्य श्न इत्यस्य श्नादिति पञ्चमी । नेति लुप्तषष्ठीकम् । तदाह-श्नमः परस्य नस्येति । नकारस्येत्यर्थः । अकार उच्चारणार्थः । तथाच इ न ध् ते इति स्थिते आह-श्नसोरल्लोपः इति । तथाच इन्ध् ते इति स्थिते 'झषस्तथोः' इति तकारस्य धत्वे पूर्वधस्य जश्त्वे परिनिष्ठितमाह—इन्द्धे इति । यद्यपि 'अनिदिताम्' इत्येवात्र नलोपः सिध्यति । तथापि अनक्ति इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तमिति बोध्यम् । इन्धे । इन्द्ध्वे ।

इन्धिता । इनधै । ऐन्द्ध । ऐन्द्धाः । १४४६ खिद दैन्ये । खिन्ते । खेत्ता । १४५० विद विचारणे । विन्ते । वेत्ता ।

अथ परस्मैपदिनः । १४५१ शिष्लृ विशेषणे । शिनष्टि । शिंष्टः । शिंषन्ति । शिशेशिथ । शेष्टा । शेक्ष्यति । हेर्धिः । जश्त्वम् । ष्टुत्वम् । 'झरो झरि—' ( सू ७१ ) इति वा डलोपः । अनुस्वारपरसवर्णौ । शिण्ढि-शिण्ड्ढि । शिनषाणि । अशिनट् । लृदित्वादङ् । अशिषत् । १४५२ पिष्लृ सञ्चूर्णने । शिपिवत् । पिनष्टि । १४५३ भञ्जो आमर्दने । भनक्ति । बभञ्जिथ—बभङ्क्थ । भङ्क्ता । १४५४ भुज पालनाभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् । १४५५

---

इन्द्धाम् । इन्ध्व । इन्द्ध्वम् । इनधै इति । श्नमि उत्तमस्य इटः एत्वे आटि वृद्धौ इ न् न् ध् ऐ इति स्थिते श्नान्नलोपे आटः पित्त्वेन ङित्त्वाभावात् 'श्नसोरल्लोपः' इत्यभावे रूपमिति भावः । अत्र नलोपार्थमपि श्नान्न लोप इत्यावश्यकम्, आटः पित्त्वेन ङित्त्वाऽभावात् 'अनिदिताम्' इत्यस्याप्रवृत्तेः । इनधावहै । लङ्याह—ऐन्द्धेति । ऐन्द्धाः इति । 'झषस्तथोः' इति थस्य धः । इन्धीत । लुङि ऐन्धिष्ट । शिष्लृ विशेषणे । अनिट् । शिशेषिथेति । अजन्ताऽकारवत्त्वाऽभावात् क्रादिनियमान्नित्यमिट् । शिन् -हि इति स्थिते श्नाल्लोपे शिन्ष्-हि इति स्थिते आह—हेर्धिरिति । शिन् ष् धि इति स्थिते आह—जश्त्वमिति । 'झलां जश् झशि' इति षस्य ड इति भावः । ष्टुत्वमिति । धस्य ढ इति भावः । यद्यपि जश्त्वस्याऽसिद्धत्वात्ततः प्रागेव ष्टुत्वस्य उपन्यासो युक्तः । तथापि जश्त्व ष्टुत्वमिति प्रक्रियाप्रदर्शनमात्रपरं, क्रमस्तु न विवक्षितः । झर इति । जश्त्वसम्पन्नस्य डस्य लोपविकल्प इत्यर्थः । अनुस्वारपरसवर्णाविति । नकारस्य 'नश्च' इत्यनुस्वारे सति तस्य परसवर्णो णकार इत्यर्थः । 'न पदान्त' इति निषेधान्नाल्लोपः स्थानिवत् । डस्य लोपपक्षे उदाहरति—शिण्ढीति । डस्य लोपाऽभावे उदाहरति—शिण्ड्ढीति । वस्तुतस्तु सानुस्वार एव पाठ उचितः, 'दीर्घादाचार्याणाम्' इत्युत्तरम् 'अनुस्वारस्य ययि परसवर्णः' 'वा पदान्तस्य' 'तोर्लि' 'उदः स्थास्तम्भोः पूर्वस्य' 'झयो होऽन्यतरस्याम्' शश्छोऽटि' इति षट्सूत्रपाठोत्तरं 'झलां जश् झशि' 'अभ्यासे चर्च' 'खरि च' 'वावसाने' 'अणोऽप्रगृह्यस्यानुनासिकः' इति पञ्चसूत्रपाठ इति भाष्यसम्मताष्टाध्यायीपाठे परसवर्णदृष्ट्या 'झलां जश् झशि' इत्यस्य 'झरो झरि' इत्यस्य चासिद्धत्वेन यय्परत्वाभावे परसवर्णाप्राप्तेरिति शब्देन्दुशेखरे स्थितम् । शिष्टाद् । शिंष्टम् । शिंष्ट । शिनषाणीति । आटः पित्त्वेन ङित्वाभावात् 'श्नसोः' इत्यल्लोपो नेति भावः । अशिनडिति । लङस्तिपो हल्ङ्यादिलोपे षस्य जश्त्वमिति भावः । अशिंष्टाम् । अशिंषन् । अशिनट् । अशिंष्टम् । अशिंष्ट । अशिनषम् । अशिंष्व । अशिंष्म । भञ्जो आमर्दने । भनक्तीति । श्नमि भ न न् ज् ति इति स्थिते 'श्नान्न लोपः' इति नलोप इति भावः । भङ्क्तः भञ्जन्तीत्याद्यूह्यम् । भारद्वाजनियमात्थलि वेडिति मत्वा आह—बभञ्जिथ—बभङ्क्थेति । भङ्क्तेति । अनिडिति भावः । भुज पालनेति । 'भुजोऽनवने' इति

१४५६ तृह हिंसि हिंसायाम् । २५४५ तृणह इम् ७।३।९२॥ तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिंसिता १४५७ उन्दी क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः-औनत् । औनदम् । १४५८ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आन-

तङ् वर्जयते भुङ्क्ते । भुञ्जाते इत्यादि । तृह हिसि हिंसायाम् । आद्यः ऋदुपधः । सेट् । श्नमि कृते यात्वे तृणह् ति इति स्थिते—तृणह इम् । 'तृणह' इति षष्ठी । कृतश्नमः तृहधातोर्निर्देशः । 'नाभ्यस्तस्य' इत्यतः पितीति 'उतो वृद्धिः' इत्यतः हलीति चानुवर्तते । फलितमाह—तृहः श्नमि कृते इति । मित्त्वादन्त्यादचः परः । 'श्नमि कृते' इत्यनुक्तौ तु येन नाप्राप्तिन्यायेन इमागमेन श्नम् बाध्येत, 'सत्यपि सम्भवे बाधनं भवति' इति न्यायात् । अन्यथा 'ब्राह्मणेभ्यो दधि दीयताम् । तक्रं कौण्डिन्याय' इत्यत्र तक्रेण दधि न बाध्येत । शमा शप् च न बाध्येत, देशभेदेन उभयसम्भवादिति भावः । तृणेढीति । तृणह् ति इति स्थिते इमागमे आद्गुणे तृणेह् ति इति स्थिते ढत्वधत्वष्टुत्वढलोपा इति भावः । तृण्ढ इति । तसि श्नमि कृते, तृणह् तस् इति स्थिते तसः अपित्त्वादिमागमाभावे 'श्नसोः' इत्यल्लोपे ढत्वधत्वष्टुत्वढलोपा इति भावः । तृंहन्ति । तृणेक्षि । तृण्ढः । तृण्ढ । तृणेह्मि । तृंह्वः । तृंह्मः । ततर्हेति । ततृहतुः । ततर्हिथ । ततृहिव । तर्हितेति । सेडिति भावः । तर्हिष्यति । तृणेढु-तृण्ढात् । तृण्ढाम् । तृंहन्तु । तृण्ढि-तृण्ढ्ढ-तृण्ढात् । तृण्ढम् । तृण्ढ । तृणहानि । तृणहाव । तृणहाम । अतृणेडिति । हल्ङ्यादिलोपे इम् हल्ङ्यादिलोपः ढत्वजश्त्वे इति भावः । अतृण्ढाम् । अतृंहन् । अतृणेट् । अतृण्ढम् । अतृण्ढ । अतृणहम् । अतृंह्व । अतृंह्म । तृंह्यात् । तृह्यात् । अतर्हीत् । अतर्हिष्यत् । हिंसिधातोरुदाहरति—हिनस्तीति । इह श्नमि इदित्त्वान्नुमि च कृते 'श्नान्नलोपः' इति नुमो लोप इति भावः । हिंस्तः । हिंसन्ति । हिनस्सि । हिंस्थः । हिंस्थ । हिनस्मि । हिंस्वः । हिंस्मः । जिहिंसेति । किति इदित्त्वान्नलोपो न । जिहिंसतुः । जिहिंसिथ । हिंसितेति । सेडिति भावः । हिंसिष्यति । हिनस्तु । हिंस्ताम् । हौ श्नमि नुमि कृते 'श्नान्नलोपः' इति नुमो लोपे हेरपित्त्वेन ङित्त्वात् 'श्नसोः' इत्यल्लोपे 'धि च' इति सलोपे, हिन्धि इति रूपम् । हिंस्तात् । हिनसानि । अहिनत् । अहिंस्ताम् । अहिंसन् । सिपि रुर्वा— अहिनः । अहिनत् । अहिंस्तम् । अहिनसम् । अहिंस्व । हिंस्यात् । हिंस्याताम् । आशीर्लिङि श्नमभावान्नुमेव । इदित्त्वान्नलोपो न । हिंस्यादित्येव । हिंस्यास्ताम् । अहिंसीत् । अहिंसिष्यत् । उन्दी क्लेदने । उन्दन्तीति । उनत्सि । उन्त्थः । उनद्मि । उन्द्वः । उन्दामिति । इजादेश्चेत्याम् । उन्दिता । उन्दिष्यति । उनत्तु—उन्तात् । उन्द्धि । उनदानि । लङ्याह—औनदिति । औन्ताम् । औन्दन् । औनः । औनत् । औनदम् ।

श्चिथ-आनङ्क्थ । अङ्क्ता-अञ्जिता । अङ्ग्धि । अनजानि । आनक् । २५४६ अञ्जेः सिचि ७।२।७१॥ अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । १४५९ तञ्चू सङ्कोचने । तनक्ति । तङ्क्ता-तञ्चिता । १४६० ओविजी भयचलनयोः । विनक्ति । विङ्क्तः । 'विज इट्' (सू २५३६) इति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । १४६१ वृजी वर्जने । वृणक्ति । वर्जिता । १४६२ पृची सम्पर्के । पृणक्ति । पपर्च । इति तिङन्ते रुधादिप्रकरणम् ।

## अथ तिङन्ते तनादिप्रकरणम् ॥ ८ ॥

अथ सप्त स्वरितेतः । १४६३ तनु विस्तारे । 'तनादिकृञ्भ्य उः' (सू २४६६) तनोति । तन्वः-तनुवः । तनुते । ततान । तेने । तनु । अतनीत्-अतानीत् ।

---

औन्द्व । उन्द्यात् । उद्यात् । अञ्जूधातुः नोपधः कृतपरसवर्णनिर्देशः । ऊदित्वा-दिट् । अनक्तीति । श्नमि कृते परसवर्णस्याऽसिद्धत्वात् 'श्नान्नलोपः' इति नकारलोपे जस्य कुत्वेन गः, गस्य चर्त्वेन क इति भावः । अङ्क इति । नलोपे अल्लोपे जस्य कुत्वेन गः गस्य चर्त्वेन कः । श्नमो नस्य परसवर्णो ङ इति भावः । अङ्क्तीति । नलो-पाऽल्लोपौ । श्नमो नस्य परसवर्णो ञ इति भावः । अनञ्जि । अङ्क्थः । अनज्मि । अञ्ज्वः । अङ्ग्धीति । हौ श्नमि धिभावे नलोपाल्लोपौ । जस्य कुत्वेन गकारः नस्य परसवर्णो ङकार इति भावः । अनजानीति । श्नान्नलोपः । आटः पित्त्वादल्लोपो न । लङ्याह—आनगिति । आङ्क्ताम् । आञ्जन् । अञ्ज्यात् । अज्यात् । अञ्जेः सिचि । 'इडत्यर्ति' इत्यत इडित्यनुवर्तते । ऊदित्वादेव सिद्धे नित्यार्थमिदम् ॥ तदाह—अञ्जे-रित्यादिना । तञ्चू सङ्कोचने । नोपधः कृतपरसवर्णनिर्देशः । अञ्जूवद्रूपाणि यथायो-ग्यमूह्यानि । ओ विजीति । ओकार इत् । अनिट्सु इरितो ग्रहणादयं सेट् ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां श्नम्विकरणं समाप्तम् ।

अथ उविकरणधातवो निरूप्यन्ते । तनुधातुरुदित् । 'उदितो वा' इति प्रयोजनम् । तनादिकृञ्भ्य उः । कर्त्रर्थे सार्वधातुके तनादिभ्यः कृञश्च उप्रत्ययः स्यात् स्वार्थे इत्यर्थः । शपोऽपवादः । तनोतीति । उप्रत्ययस्य तिपमाश्रित्य गुणः । तसादौ तु ङि-त्त्वान्न गुणः । तनुतः । झोऽन्तादेशे कृते 'इको यणचि' इति यण् । तन्वन्ति । तनो-षि । तनुथः । तनुथ । तनोमि । 'लोपश्चास्यान्यतरस्याम्' इत्युकारलोपविकल्पमभि-प्रेत्याह—तन्वः-तनुव इति । तङ्याह—तनुते इति । तन्वाते । तन्वते । तनुषे । त-न्वाथे । तनुध्वे । तन्वे । तनुवहे—तन्वहे । तनुमहे-तन्महे । ततानेति । तेनतुः । तेनि-थ । तेन । तेनिव । तङ्याह—तेने इति । तेनाते । तेनिरे । तेनिषे । तेनाथे । तेनिध्वे । तेने । तेनिवहे । तेनिमहे । तनिता । तनिष्यति-तनिष्यते । तनोतु-तनुतात् । तनु-

**२५४७ तनादिभ्यस्तथासोः २।४।७९॥** तनादेः सिचो वा लुक्स्यात्तथासोः । थासा साहचर्यादेकवचनतशब्दो गृह्यते । तेनेह न । यूयमतनिढ्व—अतानिढ्व । 'अनुदात्तोपदेश—' ( सू २४२८ ) इत्यनुनासिकलोपः । तङि अतत—अतनिष्ट । अतथाः—अतनिष्ठाः । १४६४ षणु दाने । सनोति । सनुते । 'ये विभाषा' ( सू २३१९ ) । सायात्—सन्यात् । 'जनसन—' ( सू २५०४ ) इत्यात्वम् । असात—असनिष्ट । असाथाः—असनिष्ठाः । १४६५ क्षणु हिंसायाम् । क्षणोति । क्षणुते । 'ह्म्यन्त—' (सू २२९९) इति न वृद्धिः । अक्षणीत् । अक्षत—अक्षणिष्ट । अक्षथाः—अक्षणिष्ठाः । १४६६ क्षिणु च । उप्रत्ययनिमित्तो लघूपधगुणः 'संज्ञापूर्वको विधिरनित्यः' ( प ९४ ) इति न भवतीत्यात्रेयादयः । भवत्येवेत्यन्ये । क्षिणोति—क्षेणोति । क्षेणितासि । क्षेणितासे । अक्षेणीत् । अक्षित—अक्षेणिष्ट । १४६७ ऋणु गतौ । ऋणोति—अर्णोति अर्णुतः अर्ण्वन्ति । आनर्ण । आनृणे । अर्णितासि ।

---

ताम् । तन्वन्तु । 'उतश्च प्रत्ययात्' इति हेर्लुकं मत्वा आह—तन्विति । तनुतात् । तनुतम् । तनुत । तनवानि । तनवाव । तनवाम । अतनोत् । अतनुताम् । अतन्वन् । अतनोः । अतनवम् । अतन्व—अतनुव । तनुयात् । तन्वीत । तनिषीष्ट । 'अतो हलादेः' इति वृद्धिविकल्पं मत्वा आह—अतनीत्—अतानीदिति । अतनिष्टाम् । अतनिषुः । अतनीः । अतनिष्टम् । अतनिष्ट । अतनिषम् । अतनिष्व । अतनिष्म । वृद्धिपक्षे अतानिष्टामित्यादि । अतनिष्यत् । लुङः तङि प्रथमैकवचने मध्यमपुरुषैकवचने च विशेषमाह—तनादिभ्यस्तथासोः । 'गतिस्था' इत्यतः सिच इति 'ण्यक्षत्रियार्ष' इत्यतो लुगिति 'विभाषा घ्राधेट्' इत्यतो विभाषेति चानुवर्तते । तदाह—तनादेरित्यादिना । एकवचनतशब्दो गृह्यत इति । ननु लुङादेशपरस्मैपदमध्यमपुरुषबहुवचनतादेशोऽपीत्यर्थः । यूयमिति । लुङि मध्यमपुरुषबहुवचने सिचि वृद्धिविकल्पे सति, अतनिष्ट—अतानिष्टेत्यत्र सिचो नायं लुग्विकल्प इत्यर्थः । तदेवं प्रत्युदाहरणमुक्त्वा सूत्रस्योदाहरणं वक्ष्यन् प्रक्रियां दर्शयति—अनुदात्तोपदेशेत्यनुनासिकलोपः, तङीति । तङि प्रथमैकवचने, तशब्दे मध्यमपुरुषैकवचने थासि च सिचो लुकि 'अनुदात्तोपदेश' इति नकारस्य लोप इत्यर्थः । तदाह—अतत—अतनिष्टेति । अतथाः अतनिष्ठाः इति च । अतनिषाथामित्यादि सुगमम् । षणु दाने । षोपदेशोऽयम् । तनुवद्रूपाणि । असातेति । सिचो लुक्पक्षे रूपम् । असनिष्टेति । इट् । झलादिपरकत्वाऽभावादात्त्वं नेति भावः । क्षणुधातुरदुपधः । "वज्रेऽध्वर्युः क्षण्वीत" इति तैत्तिरीये । क्षिणु चेति । इदुपधः । अयमपि हिंसायामित्यर्थः । "वज्रेऽध्वर्युः क्षिण्वीत" इति शाखान्तरं शाबरभाष्ये उदाहृतम् । ननु क्षिणोतीत्यत्र उप्रत्ययमाश्रित्य इकारस्य लघूपधगुणः कस्मान्नेत्यत आह—उप्रत्ययनिमित्त इति । ऋणु गतौ । अत्रापि क्षिणुवत् मतभेदाल्लघूपधगुणतदभावौ । तदाह—ऋणोति—अर्णोतीति । एवमग्रेऽपि । अर्ण्वन्तीति । 'इको यणचि' इति यणिति भावः ।

आर्णीत् । आर्त—आर्णिष्ट । आर्थाः—आर्णिष्ठाः । १४६८ तृणु अदने । तृणोति—तर्णोति । तृणुते—तर्णुते । १४६९ घृणु दीप्तौ । जघर्ण । जघृणे ।

अथ द्वावनुदात्तेतौ । १४७० वनु याचने । वनुते । ववने । चान्द्रमते परस्मैपदी । वनोति । ववान । १४७१ मनु अवबोधने । मनुते । मेने । १४७२ डु कृ करणे । करोति । 'अत उत्सार्वधातुके' ( सू २४६७ ) । कुरुतः । यण् । 'न भकुर्छुराम्' ( सू १६२९ ) इति न दीर्घः । कुर्वन्ति । **२५४८ नित्यं करोतेः ६।४।१०८॥** करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद्वमयोः परयोः । कुर्वः । कुर्मः । चकर्थ । चकृव । कर्ता । करिष्यति । **२५४९ ये च ६।४।१०९॥** कृञ उलोपः स्याद्यादौ प्रत्यये परे । कुर्यात् । आशिषि क्रियात् । कृषीष्ट । अकार्षीत् । 'तनादिभ्यः—' ( सू २५४७ ) इति लुकोऽभावे 'ह्रस्वादङ्गात्' ( सू २३६९ ) इति सिचो लोपः । अकृत । अकृथाः । **२५५० सम्परिभ्यां करोतौ भूषणे ६।१।१३७॥ २५५१ समवाये च ६।१।१३८॥** सम्परिपूर्वस्य करोतेः सुट् स्याद्भूषणे सङ्घाते चार्थे । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । सम्पूर्वस्य क्वचिदभूषणेऽपि सुट् । 'संस्कृतं भक्षाः' ( सू १२१७ ) इति ज्ञापकात् ।

---

डु कृञ् करणे । करोतीति । उप्रत्ययमाश्रित्य ऋकारस्य गुणः । रपरत्वम् । उकारस्य तु तिपमाश्रित्य गुणः । कुरुत इति । तसो ङित्त्वादुकारस्य न गुणः । कुरु अन्ति इति स्थिते आह—यणिति । 'इको यणचि' इत्यनेनेति शेषः । उकारस्य यणि कुर्व् अन्ति इति स्थिते 'हलि च' इति दीर्घमाशङ्क्य आह—नभेति । वसि मसि च 'लोपश्चास्यान्यतरस्याम्' इत्युकारलोपविकल्पे प्राप्ते—नित्यं करोतेः । 'उतश्च प्रत्ययात्' इत्यनुवर्तते 'लोपश्चास्यान्यतरस्याम्' इत्यतः लोपः म्वोरिति च । तदाह—करोतेरिति । चकर्थेति । 'कृसृभृवृ' इति नेडिति भावः । अजन्तत्वेऽपि ऋदन्तत्वात् भारद्वाजमतेऽपि नेट् । करिष्यतीति । करोतु-कुरुतात् । कुरु । करवाणि । कुरुताम् । कुर्वाताम् । करवै । करवावहै । करवामहै । अकरोत् । अकुरुताम् । अकुरुत । अकुर्वाताम् । विधिलिङि कुरुयात् इति स्थिते—ये च । 'लोपश्चास्यान्यतरस्याम्' इत्यतो लोप इति अस्येति चानुवर्तते । अस्येत्यनेन पूर्वसूत्रे उत इत्युपात्तः उत्परामृश्यते । 'नित्यं करोतेः' इत्यतः करोतेरित्यनुवर्तते । अङ्गाक्षिप्तः प्रत्ययो यकारेण विशेष्यते।तदादिविधिः तदाह-कृञ उलोप इति । आशिषि क्रियादिति । 'रिङ् शयग्लिङ्क्षु' इति रिङिति भावः । कृषीष्टेति । 'उश्च' इति कित्त्वान्न गुण इति भावः । अकार्षीदिति । सिचि वृद्धौ रपरत्वमिति भावः । ननु लुङस्तादेश अकृ स् त इति स्थिते 'तनादिभ्यस्तथासोः' इति सिचो लुकि अकृतेतीष्टं सिध्यति सिचो लुगभावे तु सकारः श्रूयेतेत्यत आह—तनादिभ्य इत्यादि । सम्परिभ्याम् । समवाये च । करोतेः सुट् स्यादिति । 'सुट् कात्पूर्वः' इत्यतः 'नित्यं करोतेः'

'परिनिविभ्यः–' ( सू २२७५ ) इति षः । परिष्करोति । 'सिवादीनां वा–' ( सू २३५६ ) । पर्यष्कार्षीत्–पर्यस्कार्षीत् । २५५२ उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ६।१।१३९॥ उपात्कृञः सुट् स्यादेष्वर्थेषु । चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः । वाक्यस्याध्याहारः आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । अलङ्कृतेत्यर्थः । उपस्कृताः ब्राह्मणाः । समुदिता इत्यर्थः । एधोदकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृतं ब्रूते वाक्याध्याहारेण ब्रूते इत्यर्थः । २५५३ सुट्कात्पूर्वः ६।१।१३५॥ 'अडभ्यासव्यवायेऽपि' इत्युक्तम् । सञ्चस्कार । 'कात्पूर्वः' इत्यादि भाष्ये प्रत्याख्यातम् । तथा हि 'पूर्वं धातुरुपसर्गेण युज्यते' । अन्तरङ्गत्वात्सुट् । ततो द्वित्वम् । एवं च "ऋतश्च संयोगादेर्गुणः" ( सू २३७९ ) संचस्करतुः ।

इत्यतश्च तदनुवृत्तेरिति भावः । प्रागुक्तयोरिति । भूषणसमवाययोरित्यर्थः । ननु 'सम्परिभ्याम्' इति सुट् पदद्वयापेक्षत्वात् बहिरङ्गः । 'लिटि धातोः' इति द्वित्वं तु प्रकृतिप्रत्ययमात्रापेक्षत्वादन्तरङ्गम् । ततश्च सञ्चस्कार इत्यत्र परमपि सुटं बाधित्वा द्वित्वे कृते अभ्यासात्प्रागेव सुटि प्राप्ते—सुट् कात्पूर्वः । षष्ठस्याद्यपादे इदं सूत्रम् । 'सम्परिभ्यां करोतौ भूषणे' 'समवाये च' 'उपात्प्रतियत्न' इत्यारभ्य 'अनुदात्तं पदमेकवर्जम्' इत्यतः प्रागिदमधिकृतं वेदितव्यमित्यर्थः । एवञ्च कात्पूर्वं इत्युक्तेरभ्यासात् प्राक् न सुडिति भावः । नन्वभ्यासेन व्यवधानात्कथमिह उत्तरखण्डस्य सुट् । संस्करोतीत्यादौ अव्यवहिते सुड्विधेश्चरितार्थत्वात् । किञ्च समस्करोत् इत्यत्र अटा व्यवधानात् कथं सुट् । नह्यडागमः कृञ्भक्तः अङ्गभक्तत्वात् । विकरणान्तस्यैवाङ्गत्वादित्यत आह—अडभ्यासव्यवायेऽपीत्युक्तमिति । वार्तिकमिति शेषः । अटा अभ्यासेन च व्यवधानेऽपि सम्पर्यादिभ्यः परस्मात् कात्पूर्वः सुडित्यर्थः । इत्यादीति । सुट् इत्येवाधिकृतमस्तु 'कात्पूर्वः' इति 'अडभ्यासव्यवायेऽपि' इति च मास्त्वित्येवं भाष्ये प्रत्याख्यातमित्यर्थः । तदेवोपपादयितुं प्रतिजानीते—तथा हीति । पूर्वं धातुरुपसर्गेण युज्यते इति । 'पश्चात्साधनेने'ति शेषः । ततश्च पूर्वोपनिपतितधातूपसर्गसम्बन्धनिमित्तकं कार्यं पश्चादनुपतितधातुप्रत्ययसम्बन्धनिमित्तकात्कार्यादन्तरङ्गम् , प्रथमोपस्थितत्वात् । तदुक्तं भाष्ये—'पूर्वं धातुरुपसर्गेणेति कृत्वा धातूपसर्गयोः कार्यमन्तरङ्गम्' इति । तदाह—अन्तरङ्गत्वात्सुट् । ततो द्वित्वमिति । तथा सुटि कृते 'स्कृ' इत्यस्य द्वित्वे उरदत्वे रपरत्वे 'शर्पूर्वाः खयः' इति रेफसकारयोर्निवृत्तौ अभ्यासचुत्वे सञ्चस्कारेति रूपसिद्धः 'कात्पूर्वः' इति 'अडभ्यासव्यवायेऽपि' इति च न कर्तव्यमिति भावः । एवं समस्करोदित्यत्रापि विकरणान्ताङ्गभक्ताडागमापेक्षया अन्तरङ्गत्वात् प्रथमं सुड् भविष्यतीति कृत्वा 'अड्व्यवायेऽपी'त्यंशो न कर्तव्य इत्यूह्यम् । 'पूर्वं धातुरुपसर्गेणे'त्याश्रयणे फलान्तरमप्याह—एवं चेति । उक्तरीत्या अन्तरङ्गत्वात् सुटि कृते संस्कृ इत्यस्माल्लिटः

'कुसृभृवृ—' (सू २२९३) इति सूत्रे 'ऋतो भारद्वाजस्य' (सू २२९६) इति सूत्रे च 'कृञोऽसुट इति वक्तव्यम्' ( वा ४४०१ ) । तेन ससुट्कात्परस्येट् । सञ्चस्करिथ । सञ्चस्करिव । 'गुणोऽर्ति—' ( सू २३८० ) इति सूत्रे 'नित्यं छन्दसि' ( सू ३५८७ ) इति सूत्रात् नित्यम् इत्यनुवर्तते । नित्यं यः संयोगादिस्तस्येत्यर्थात् सुटि गुणो न । संस्क्रियात् । 'ऋतश्च संयोगादेः' ( सू २५२६ ) इति लिङ्सिचोर्नेट् । 'एकाच उपदेशे—' ( सू २२४६ ) इति सूत्रात् उपदेशे इत्यनुवर्त्य उपदेशे यः संयोगादिः इति व्याख्यानात् । संस्कृषीष्ट । समस्कृत । समस्कृषाताम् ।

इति तिङन्ते तनादिप्रकरणम् ।

## अथ तिङन्ते क्र्यादिप्रकरणम् ॥ ९ ॥

१४७३ डु क्रीञ् द्रव्यविनिमये । २५५४ क्र्यादिभ्यः श्ना ३।१।८१॥ क्रीणाति । 'ई हल्यघोः' ( सू २४९७ ) क्रीणीतः । ईत्वात्पूर्वं ङेरन्तादेशः । परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । एवं झस्य अद्भावः । ततः 'श्नाभ्यस्तयोः—' ( सू २४८३ ) इत्याल्लोपः । क्रीणन्ति । क्रीणीते । क्रीणाते । क्रीणते । चिक्राय । चिक्रियतुः । चिक्रयिथ—चिक्रेथ । चिक्रियिव । चिक्रियिषे । क्रेता । क्रेष्यति । क्रीयात् ।

---

असुसि 'ऋतश्च संयोगादेर्गुणः' इति गुणे सञ्चस्करतुरिति सिध्यति । पूर्वं धातुः साधनेन युज्यते' इत्याश्रयणे तु चक्रतुरिति परिनिष्ठितस्य समित्युपसर्गयोगात्संयोगादित्वाभावाद्गुणस्यासिद्धिरिति भावः । ननु सञ्चस्करिव, सञ्चस्करिथ इत्यत्र च 'कृसृभृवृ' इति 'ऋतो भारद्वाजस्य' इति च इण्निषेधः स्यादित्यत आह—कुसृभृवृ सूत्रे इत्यादि । नन्वाशीर्लिङि संस्क्रियादित्यत्र 'गुणोऽर्तिसंयोगाद्योः' इति गुणः कुतो नेत्यत आह—गुणोऽर्तीत्यादि । ननु तङि संस्कृषीष्ट इति लिङि, समस्कृत समस्कृषाताम् इति लुङि च 'ऋतश्च संयोगादेः' इति इट् कुतो नेत्यत आह—ऋतश्चेत्यादि । इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां उविकरणनिरूपणं समाप्तम् ।

अथ श्नाविकरणधातवो निरूप्यन्ते । डु क्रीञिति । क्र्यादिभ्यः श्ना । कर्त्रर्थे सार्वधातुके परे क्र्यादिभ्यः श्नाप्रत्ययः स्यात् स्वार्थे इत्यर्थः । शपोऽपवादः । क्रीणातीति । श्नाप्रत्ययस्य अपित्सार्वधातुकत्वेन ङित्त्वादीकारस्य न गुण इति भावः । ई हल्यघोरिति । हलादौ ङिति सार्वधातुके ईत्वमिति भावः । क्री णा झि इति स्थिते 'ई हल्यघोः' इति ईत्वमाशङ्क्य आह—ईत्वात्पूर्वमिति । नित्यत्वादिति । अकृते कृते च ईत्वे अन्तादेशस्य प्रवृत्तेरिति भावः । एवं झस्येति । क्री णा झ इति स्थिते 'आत्मनेपदेष्वनतः' इत्यदादेशोऽपि ईत्वात्पूर्वमित्यर्थः । तत इति । अन्तादेशाददादेशाच्च पश्चादि-

क्रेषीष्ट। अक्रैषीत्। अक्रेष्ट। १४७४ प्रीञ् तर्पणे कान्तौ च। कान्तिः कामना। प्रीणाति। प्रीणीते। १४७५ श्रीञ् पाके। १४७६ मीञ् हिंसायाम्। 'हिनुमीना' (सू २५३०)। प्रमीणाति। प्रमीणीतः। 'मीनातिमिनोति—' (सू २५०८) इत्यात्वविषये आत्वम्। ममौ। मिम्यतुः। ममिथ-ममाथ। मिम्ये। माता। मास्यति। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त। १४७७ षिञ् बन्धने। सिनाति। सिनीते। सिषाय। सिष्ये। सेता। १४७७ स्कुञ् आप्रवणे। २५५५ स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ३।१।८२॥ चात् श्ना। स्कुनोति। स्कुनुते। स्कुनाति। स्कुनीते। चुस्काव। चुस्कुवे। स्कोता। अस्कौषीत्। अस्कोष्ट। स्तन्भ्वादयश्चत्वारः सौत्राः। सर्वे रोधनार्था इत्येके। माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ, द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थ इत्याह। सर्वे परस्मैपदिनः। नलोपः। विष्टभ्नोति—विष्टभ्नाति। अवष्टभ्नोति—अवष्टभ्नाति। अवतष्टम्भ। 'जृस्तन्भु—' (सू २२९१) इत्यङ् वा। व्यष्टभत्। व्यष्टम्भीत्। स्तुभ्नोति। स्तुभ्नाति। २५५६ वेः स्कभ्नातेर्नित्यम् ८।३।७७॥ वेः परस्य स्कभ्नातेः सस्य षः स्यात्। विष्कभ्नोति—विष्कभ्नाति। स्कुभ्नोति-स्कुभ्नाति। २५५७ हलः श्नः शानज्झौ ३।१।८३॥ हलः परस्य श्नः शानजादेशः स्याद्धौ परे। स्तभान। स्तुभान। स्कभान। स्कुभान। पक्षे स्तुभ्नुहि इत्यादि। १४७९ युञ् बन्धने। युनाति। युनीते। योता। १४८० क्नूञ् शब्दे। क्नूनाति। क्नूनीते। क्नविता। १४८१ द्रूञ् हिंसायाम्। द्रूणाति। द्रूणीते। १४८२ पूञ् पवने। २५५८ प्वादीनां ह्रस्वः ७।३।८०॥ शिति परे। पुनाति। पुनीते। पविता। १४८३ लूञ् छेदने। लुनाति। लुनीते। १४८४ स्तॄञ् आच्छादने। स्तृणाति। स्तृणीते। तस्तार। तस्तरतुः। स्तरिता—स्तरीता। स्तृणीयात्। स्तृणीत।

---

त्यर्थः। अजादौ क्ङिति सार्वधातुके श्नाप्रत्ययस्य आल्लोपः। भारद्वाजनियमात्थलि वेडिति मत्वा आह—चिक्रयिथ चिक्रेथेति। चिक्रियिवेति। क्रादिनियमादिडिति भावः। क्रीणातु। क्रीणीहि। अक्रीणात्। अक्रीणीत। क्रीणीयात्। क्रीणीत। सौत्रा इति। नोपधा इत्यपि ज्ञेयम्। नलोप इति। 'अनिदिताम्' इत्यनेनेति भावः। विष्टभ्नोतीति। 'स्तन्भेः' इति षत्वम्। अवष्टभ्नोतीति। 'अवाच्चालम्बनाविदूर्ययोः' इति षत्वम्। अवतष्टम्भेति। 'स्थादिष्वभ्यासेन' इति षत्वम्। व्यष्टभदिति। 'प्राक्सितात्' इति षत्वम्। स्तभानेति। श्नाप्रत्ययस्य शानजादेशे कृते 'अतो हेः' इति लुक्। प्वादीनां ह्रस्वः। 'ष्ठिवुक्लमुचमाम्' इत्यतः शितीत्यनुवर्तत इत्यभिप्रेत्य शेषं पूरयति—शिति परे इति। पवितेति। ऊकारान्तत्वात् सेडिति भावः। स्तॄञ् आच्छादने। सेट्। तस्तरतुरिति। किल्वेऽपि 'ऋच्छत्यृताम्' इति गुणः। स्तरिता—स्तरीतेति। 'वृतो वा' इति

आशिषि-स्तीर्यात् । 'लिङ्सिचोः—' ( सू २५२८ ) इति वेट् । 'न लिङि' ( सू २५२९ ) । स्तरिषीष्ट । 'उश्च' ( सू २३६८ ) इति कित्त्वम् । स्तीर्षीष्ट । 'सिचि च परस्मैपदेषु' ( सू २३९२ ) इति न दीर्घः । अस्तारीत् । अस्तारिष्टाम् । अस्तरीष्ट–अस्तरिष्ट–अस्तीर्ष्ट । १४८५ कॄञ् हिंसायाम् । कृणाति । कृणीते । चकार । चकरे । १४८६ वॄञ् वरणे । वृणाति । वृणीते । ववार । ववरे । वरिता–वरीता । आशिषि 'उदोष्ठ्यपूर्वस्य' (सू २४९४) । वूर्यात् । वरिषीष्ट–वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट–अवरीष्ट–अवूर्ष्ट । १४८७ धूञ् कम्पने । धुनाति । धुनीते । दुधविथ–दुधोथ । दुधुविव । धविता–धोता । 'स्वरतिसूतिसूयतिधूञूदितो वा' 'स्तुसुधूञ्भ्यः—' ( सू २३८५ ) इतीट् । अधावीत् । अधविष्ट–अधोष्ट ।

अथ बध्नात्यन्ताः परस्मैपदिनः । १४८८ शॄ हिंसायाम् । 'शॄदॄप्रां ह्रस्वो वा' ( सू २४९५ ) इति ह्रस्वपक्षे यण् । अन्यदा 'ऋच्छत्यॄताम्' ( सू २३८३ ) इति गुणः । शश्रतुः—शशरतुः । 'श्र्युकः क्किति' ( सू २३८१ ) इति निषेधस्य क्रादिनियमेन बाधः । शशरिव–शश्रिव । शरिता–शरीता । शृणीहि । शीर्यात् । अशारिष्टाम् । १४८९ पॄ पालनपूरणयोः । पप्रतुः—पपरतुः । आशिषि पूर्यात् ।

---

दीर्घविकल्पः । आशिषि स्तीर्यादिति । 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'हलि च' इति दीर्घः । स्तृषीष्ट इति स्थिते आह—लिङ्सिचोरिति वेडिति । 'वॄतो वा' इति दीर्घविकल्पनिषेधसूत्रं स्मारयति—न लिङीति । वॄत इटो दीर्घो नेत्यर्थः । इडभावपक्षे स्तृषीष्ट इत्यत्र गुणमाशङ्क्य आह—उश्चेति कित्त्वमिति । लुङि परस्मैपदे सिचि अस्तारिष्टाम् इत्यत्र 'वॄतो वा' इति इटो दीर्घविकल्पे प्राप्ते आह—सिचि चेति । अस्तरीष्ट-अस्तरिष्टेति । 'वॄतो वा' इति दीर्घः । अस्तीर्ष्टेति । 'लिङ्सिचोः' इति इडभावपक्षे ऋत इत्वे 'हलि च' इति दीर्घ इति भावः । कॄञ् हिंसायाम् । चकरे इति । 'ऋच्छत्यॄताम्' इति गुणः । वॄञ् वरणे इति । आशिषीति । वॄयात् इति स्थिते 'उदोष्ठ्यपूर्वस्य' इति ऋकारस्य उत्वमित्यर्थः, तत्र दन्त्योष्ठ्यपूर्वस्यापि ग्रहणादिति भावः । ऋत उत्वे रपरत्वे 'हलि च' इति दीर्घ इति बोध्यम् । वरिषीष्ट वूर्षीष्टेति । 'लिङ्सिचोः' इति वेट् । इडभावे 'उश्च' इति कित्वाद्गुणाऽभावे उत्वे रपरत्वे 'हलि च' इति दीर्घ इति भावः । अवारिष्टामिति 'सिचि च' इति इटो न दीर्घ इति भावः । अवरिष्ट-अवरीष्टेति । 'वॄतो वा' इति सिच इटो दीर्घविकल्प इति भावः । दुधविथ-दुधोथेति । 'स्वरतिसूतिसूयतिधूञूदितः' इति वेडिति भावः ।

शॄ हिंसायाम् । सेट् । णलि शशार । शॄ अतुस् इत्यत्र किक्त्वेऽपि 'ऋच्छत्यॄताम्' इति नित्ये गुणे प्राप्ते आह—शॄदॄप्रामिति । गुणाऽपवादे पाक्षिके ह्रस्वे कृते ऋकारस्य

१४९० वृ वरणे । भरणे इत्येके । १४९१ भृ भर्त्सने । भरणेऽप्येके । १४९२ मृ हिंसायाम् । मृणाति । ममार । १४९३ दृ विदारणे । ददरतुः-दद्रतुः । दद्रुः । १४९४ जृ वयोहानौ । झ इत्येके । धृ इत्यन्ये । १४९५ नृ नये । १४९६ कृ हिंसायाम् । १४९७ ऋ गतौ । ऋणाति । अराञ्चकार । अरिता—अरीता । आर्णात् । आर्णीताम् । ईर्यात् । आरीत् । आरिष्टाम् । १४९८ गृ शब्दे । १४९९ ज्या वयोहानौ । 'ग्रहिज्या—' ( सू २४१२ ) । २५५६ हलः ६।४।२॥ अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्ताङ्गस्य दीर्घः स्यात् । इति दीर्घे कृते । 'प्वादीनां ह्रस्वः' ( सू २५५८ ) । जिनाति । जिज्यौ । जिज्यतुः । १५०० री गतिरेषणयोः । रेषणं वृकशब्दः । १५०१ ली श्लेषणे । 'विभाषा लीयतेः' ( सू २५०९ ) इत्येज्विषये आत्वं वा । ललौ—लिलाय । लाता—लेता । १५०२ व्ली वरणे । व्लिनाति । १५०३ प्ली गतौ । वृत् । ल्वादयो वृत्ताः । प्वादयोऽपीत्येके । १५०४ व्री वरणे । १५०५ भ्री भये । भरणे इत्येके । १५०६ क्षीष् हिंसायाम् । एषां त्रयाणां ह्रस्वः । शेषाश्चिन्मते तु न । १५०७ ज्ञा अवबोधने । 'ज्ञाजनोर्जा' ( सू २५११ ) जानाति । 'दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः । १५०८ बन्ध बन्धने । बध्नाति । बबन्धिथ-बबन्द्ध । बन्द्धा । बन्द्धारौ । भन्त्स्यति ।

यणि रेफ इत्यर्थः । शशरिथ । पृणातुरपि शृणातुवत् । आशिषि पूर्यादिति । 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वमिति भावः । दृ विदारणे । 'शृदृप्राम्' इति ह्रस्वविकल्पं मत्वा आह—ददरतुः-दद्रतुरिति । ऋ गतौ । अराञ्चकारेति । व्यपदेशिवत्त्वेन गुरुमत्त्वादाम् । लङयाह—आर्णादिति । ज्या वयोहानौ । अनिट् । ज्या ना ति इति स्थिते 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे च जिनातीति स्थिते—हलः । दिग्योगे पञ्चम्येषा । हलः परस्येति लभ्यते । 'सम्प्रसारणस्य' इति सूत्रमनुवर्तते । अङ्गस्येत्यधिकृतमिहानुवृत्तमावर्तते । एकमवयवषष्ठ्यन्तं हल इत्यत्रान्वेति अङ्गावयवाद्धल इति लभ्यते । द्वितीयं तु स्थानषष्ठ्यन्तं सम्प्रसारणेन विशेष्यते । तदन्तविधिः । 'ढ्लोपे' इत्यतो दीर्घ इत्यनुवर्तते । तदाह—अङ्गावयवादित्यादिना । उदाहरणं तु-वीतः, शूनः, जीनः । हल इति किम ? उतः उतवान् । अङ्गावयवात् किम् ? निरुतम् । तदन्ताङ्गस्येति किम् ? विध्यति । एषामिति । व्रीभ्रीक्षीषामित्यर्थः । ल्वादय एव वृत्ताः, न तु प्वादय इति मते इति भावः । ज्ञा अवबोधने । शिति जादेशं स्मारयति—ज्ञाजनोर्जेति । दीर्घनिर्देशेति । प्वादित्वेऽपि आकारोच्चारणसामर्थ्यान्न ह्रस्व इति भावः । बन्ध बन्धने । अनिट् । नोपधः । बध्नातीति । 'अनिदिताम्' इति नलोप इति भावः । भारद्वाजनियमात्थलि वेडिति मत्वा आह—बबन्धिथ-बबन्द्धेति । अकित्वान्नलोपो न । अनिट्पक्षे तु 'झषस्तथोः' इति धत्वम् । धः । बन्द्धेति । तासि 'झषस्तथोः' इति तकारस्य धः । भन्त्स्यतीति । 'एकाचः' इति

बधान। अभान्त्सीत्। 'पूर्वत्रासिद्धम्' ( सू १२ ) इति भष्भावात्पूर्वं 'झलो झलि' ( सू २२८१ ) इति सिज्लोपः। प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न। प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात्। अबान्द्धाम्। अभान्त्सुः। १५०९ वृ सम्भक्तौ। वृणाति। वव्रे। ववृषे। ववृढ्वे। वरिता—वरीता। अवरिष्ट—अवरीष्ट—अवृत। १५१० श्रन्थ विमोचनप्रतिहर्षयोः। इतः परस्मैपदिनः। श्रथ्नाति। 'श्रन्थिग्रन्थि—' इत्यादिना कित्त्वपक्षे एत्वाभ्यासलोपावप्यत्र वक्तव्यौ इति हरदत्तादयः। श्रेथतुः। श्रेथुः। इदं कित्त्वं पितामपीति सुधाकरमते, श्रेथिथ। अस्मिन्नपि पक्षे णलि शश्राथ। उत्तमे तु, शश्राथ–शश्रथेति माधवः। तत्र मूलं मृग्यम्। १५११ मन्थ विलोडने। १५१२ श्रन्थ १५१३ ग्रन्थ सन्दर्भे। अर्थभेदाच्छ्रन्थेः पुनः पाठः। रूपं तूक्तम्। १५१४ कुन्थ संश्लेषणे। संक्लेशे इत्येके। कुथ्नाति। चुकुन्थ। कुथ इति दुर्गः। चुकोथ। १५१५ मृद क्षोदे। मृद्नाति। ममर्द। १५१६ मृड च। अयं सुखेऽपि। ष्टुत्वम्। मृड्णाति। १५१७ गुध रोषे। गुध्नाति। १५१८ कुष निष्कर्षे। कुष्णाति। कोषिता। २५६० निरः कुषः ७।२।४६॥ निरः परात्कुषो वलादेरार्धधातुकस्य इड्वा स्यात्। निष्कोषिता—निष्कोष्टा। निरकोषीत्–निरकुक्षत्। १५१९ क्षुभ सञ्चलने। 'क्षुभ्नादिषु च' ( सू ७९२ )। क्षुभ्नाति। क्षुभ्नीतः। क्षोभिता। क्षुभाण। १५२० णभ १५२१ तुभ हिंसायाम्। नभ्नाति। तुभ्नाति। नभते। तोभते इति शपि। नभ्यति। तुभ्यति इति श्यनि। १५२२ क्लिशू विबाधने। 'श्नात्' ( सू ११२ ) इति श्नुत्वनिषेधः। क्लिश्नाति। क्लेशिता–क्लेष्टा। अक्लेशीत्–अक्लिक्षत्। १५२३ अश भोजने।

---

बस्य भष्। भस्य चर्त्वेन तः। बधानेति। 'हलः श्नः शानज्झौ' इति शानच्। अभान्त्सीदिति। हलन्तलक्षणा वृद्धिः। भष्भावः। अबान्द्धामित्यत्र सकारपरकत्वात् भष्भावमाशङ्क्य आह–पूर्वत्रेत्यादि। ननु कृते सिज्लोपे प्रत्ययलक्षणमाश्रित्य सकारपरकत्वात् भष् दुर्वार इत्यत आह—प्रत्ययलक्षणेनेति। अबान्द्धामिति। 'झषस्तथोः' इति तस्य धः। श्रन्थ विमोचने। श्रन्थिग्रन्थीत्यादिनेति। 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा' इति व्याकरणान्तरेणेत्यर्थः। अस्मिन्नपि पक्षे इति। पितामपीदं कित्त्वमिति सुधाकरमतेऽपि प्रथमपुरुषणलि शश्राथ। उत्तमपुरुषे णलि तु शश्राथ शश्रथ इति माधवः आहेत्यर्थः। तत्र मूलमिति। 'कित्त्वपक्षे एत्वाभ्यासलोपा'वित्यारभ्य माधव इत्यन्तसन्दर्भे मूलं नास्तीत्यर्थः। संयुक्तहलमध्यस्थत्वादेर्वविधवार्तिकाऽदर्शनाच्चेति भावः। कुष निष्कर्षे। निरःकुषः। 'आर्द्धधातुकस्येड्वलादेः' इत्यनुवर्तते। 'स्वरतिसूति' इत्यतो वेति च। तदाह—निरःपरादिति। निरकुक्षदिति। इडभावपक्षे 'शल' इति क्स इति भा-

अश्नाति। आश। १५२४ उ ध्रस उञ्छे। उकार इत्। ध्रस्नाति। उकारो धात्ववयव इत्येके। उध्रसाञ्चकार। १५२५ इष आभीक्ष्ण्ये। पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम्। इष्णाति। 'तीषसह-' (सू २३४०) इत्यत्र सहिना साहचर्याददकारविकरणस्य तौदादिकस्यैव इषेर्ग्रहणं न तु इष्यतीष्णात्योरित्याहुः। एषिता। वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः। तथा च वार्तिकम्-'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' (वा ४४३५) इति। १५२६ विष विप्रयोगे। विष्णाति। वेष्टा। १५२७ प्रुष १५२८ प्लुष स्नेहनसेवनपूरणेषु। प्रुष्णाति। प्लुष्णाति। १५२९ पुष पुष्टौ। पोषिता। १५३० मुष स्तेये। मोषिता। १५३१ खच भूतप्रादुर्भावे। भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः। खच्नाति। वान्तोयमित्येके। २५६१ च्छ्वोः शूडनुनासिके च ६।४।१९॥ सतुक्कस्य छस्य वस्य च क्रमात् श् ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। खौनाति। चखाव। खविता। शानचः परत्वादूठि कृते हलन्तत्वाभावान्न शानच्। १५३२ हेठ च। ष्टुत्वम्। हेठ्णाति। १५३३ ग्रह उपादाने। स्वरितेत्। 'ग्रहिज्या-' (सू २४१२)। गृ-

---

**णः।** अश भोजने। आशेति। **द्विहल्त्वाऽभावान्न नुडिति भावः।** इष आभीक्ष्ण्ये। **तासि 'तीषसह' इति इड्विकल्पमाशङ्क्य आह—**तीष सहेत्यत्रेति। **सहेति शपा निर्देशबलेन भौवादिक एव सहधातुरत्र निर्दिष्टः। तत्साहचर्यात् तौदादिकस्यैव इषेर्ग्रहणम्, अकारविकरणत्वसामान्यादिति भावः।** इषेस्तकारे श्यन्प्रत्ययादिति। **श्यन् प्रत्ययो यस्मादिति बहुव्रीहिः। श्यन्विकरणपठितादिषेस्तकारे परे 'तीषसह' इति विधिर्नेत्यर्थः। इष्णातेस्तकारे इड्विकल्पः फलित इति भावः।** प्रुष प्लुषेति। **आद्यो दीर्घोपधः।** पुष पुष्टौ। पोषितेति। **अनिट्सु श्यन्विकरणस्यैव पुषेर्ग्रहणादयं सेडिति भावः। 'पुषादिद्युताद्ी'त्यत्र श्यन्विकरणपुषादेरेव ग्रहणादङ् न।** खच भूतप्रादुर्भावे। अतिक्रान्तोत्पत्तिरिति। **दशममासादौ उत्पत्तियोग्यस्य एकादशादिमासादिपूत्पत्तिरित्यर्थः।** खच्नातीति। **नस्य श्चुत्वेन ञ इति भावः।** वान्तोऽयमिति। **'खव भूतप्रादुर्भावे' इत्येवं दन्त्योष्ठ्यान्तमेके पठन्तीत्यर्थः।** च्छ्वोः शूडनुनासिके च। **च्छ् व् अनयोर्द्वन्द्वात् षष्ठीद्विवचनम्। छकारात्प्राक् तुकः श्चुत्वेन चकारस्य निर्देशः। 'शूठ्' इति च्छेदः। श् ऊठ् अनयोः समाहारद्वन्द्वात् प्रथमा। चकारेण क्विझलोः क्ङितीत्यनुवर्तते।** तदाह—सतुक्कस्य इत्यादि। **यथा विश्नः प्रश्नः, विच्छधातोः प्रच्छधातोश्च औणादिके नङ्प्रत्यये अन्तरङ्गत्वात् 'छे च' इति तुकि कृते सति सतुक्कस्य छस्य शकार आदेशः। वकारस्य ऊठमुदाहरति-** खौनातीति। **ख् ना ति इति स्थिते वकारस्य ऊठ्, ठकार इत् 'एत्येधत्यूठ्सु' इति वृद्धिरिति भावः। खौनीतः। खौनन्तीत्यादि। खव् ना हि इति स्थिते 'हलः श्नश्शानज्झौ' इति शानजादेशमाशङ्क्य आह—**शानचः परत्वादिति। हेठ चेति। **हेठधातुरपि**

ह्णाति गृह्णीते। २५६२ ग्रहोऽलिटि दीर्घः ७।२।३७॥ एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्न तु लिटि। ग्रहीता। लिटि तु जग्रहिथ। गृह्यात्। ग्रहीषीष्ट। 'ह्म्यन्त' ( सू २२९९ ) इति न वृद्धिः। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम्। अग्रहीषत। इति तिङन्ते क्र्यादिप्रकरणम्।

## अथ तिङन्ते चुरादिप्रकरणम् ॥ १० ॥

१५३४ चुर स्तेये। २५६३ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३।१।२५॥ एभ्यो णिच् स्यात्। चू-

---

भूतप्रादुर्भावे वर्तते इत्यर्थः। ग्रह उपादाने इति। अदुपधः। स्वरितेत्वादुभयपदी। किति ङिति च सम्प्रसारणं स्मारयति—ग्रहिज्येति। गृह्णाति गृह्णीते इति। श्नाप्रत्ययस्य ङित्वाद्रेफस्य सम्प्रसारणे पूर्वरूपमिति भावः। णलि द्वित्वे कृते 'लिट्यभ्यासस्य' इति सम्प्रसारणे उरदत्वे रपरत्वे हलादिशेषे अभ्यासचुत्वे उपधावृद्धिः। जग्राह। अतुसादौ किङति परत्वात् 'ग्रहिज्या' इति सम्प्रसारणे कृते द्वित्वादि। जगृहतुः। जगृहुः। जग्रहिथ। जगृहथुः। जगृह। जग्राह—जग्रह। जगृहिव। जगृहिम। जगृहे। जगृहाते। जगृहिरे। जगृहिषे। जगृहाथे। जगृहिढ्वे—जगृहिध्वे। जगृहे। जगृहिवहे। जगृहिमहे। ग्रहोऽलिटि दीर्घः। 'ग्रह' इति दिग्योगे पञ्चमी। 'आर्द्धधातुकस्येट्' इत्यतः इडित्यनुवृत्तं षष्ठ्यन्तं विपरिणम्यते। 'एकाच उपदेशेऽनुदात्तात्' इत्यत एकाच इति च। तदाह—एकाच इत्यादि। एकाचः किम्? यङ्लुकि माभूत्। जाग्रहिता। विहितस्येति किम्? ग्राहितम्। णिलोपे कृते ग्रहधातोः परत्वेऽपि विहितत्वाभावादिटो न दीर्घः। न च णिलोपस्य स्थानिवत्त्वात न ग्रहधातोः पर इडिति वाच्यम्। दीर्घविधौ स्थानिवत्त्वनिषेधात्। अलिटि इत्यस्य फलमाह—लिटि तु जग्रहिथेति। गृह्यादिति। आशीर्लिङि यासुटः कित्त्वात्सम्प्रसारणमिति भावः। लिङस्तङ्याह—ग्रहीषीष्टेति। 'ग्रहोऽलिटी'ति दीर्घः। 'न लिङि' इति इटो दीर्घनिषेधस्तु न, तत्र 'वृत' इत्यनुवृत्तेः। अग्रहीष्टामिति। 'ग्रहोऽलिटि' इति दीर्घः। अग्रहीषुः। अग्रहीरित्यादि। लुङस्तङ्याह—अग्रहीष्टेति। 'ग्रहोऽलिटि' इति दीर्घः। अग्रहीषतेति। अग्रहीष्ठाः इत्यादि सुगमम्। इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां श्नाविकरणनिरूपणं समाप्तम्।

अथ स्वार्थिकणिजन्ताः चुरादिधातवो निरूप्यन्ते। चुर स्तेये इति। रेफादकार उच्चारणार्थः, न त्वित्संज्ञकः, प्रयोजनाऽभावात, 'णिचश्च' इति पदव्यवस्थाया वक्ष्यमाणत्वाच्च। एवमग्रेऽपि। सत्याप। सत्याप, पाश, रूप, वीणा, तूल, श्लोक, सेना, लोमन्, त्वच्, वर्मन्, वर्ण, चूर्ण, चुरादि एषां द्वन्द्वात्पञ्चमी। तदाह—एभ्यो णिच् स्यादिति।

णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे-' ( ग सू २०३ ) इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । 'पुगन्त-' ( सू २१८९ ) इति गुणः । 'सनाद्यन्ताः-' ( सू २३०४ ) इति धातुत्वम् । तिप्शबादि गुणायादेशौ । चोरयति ।

२५६४ णिचश्च १।३।७४॥ णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयति-चोरयते । चोरयामास । चोरयिता । चोर्यात् । चोरयिषीष्ट । 'णिश्रि-' ( सू २३११ ) इति चङ् । 'णौ चङि-' ( सू २३१४ ) इति ह्रस्वः । द्वित्वम् । 'हलादिः शेषः' ( सू २१७९ ) । 'दीर्घो लघोः' ( सू २३१८ ) इत्यभ्यासदीर्घः । अचूचुरत्-अचूचुरत । १५३५ चिति स्मृत्याम् । चिन्तयति । अचिचिन्तत् । चिन्त इति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन चिन्त्यात् , चिन्त्य-

---

कमित्यर्थे इत्याकाङ्क्षायामाह-चूर्णान्तेभ्य इति । सत्यादिभ्यः चूर्णान्तेभ्यो द्वादशभ्यः करोत्याचष्टे इत्याद्यर्थे 'प्रातिपदिकाद्धात्वर्थे बहुलम्' इति वक्ष्यमाणेन सिद्धमेवार्थनिर्देशनमित्यर्थः । ननु तेनैव सिद्धत्वादिह चूर्णान्तानुक्रमणं व्यर्थमित्यत आह-तेषामिह ग्रहणं प्रपञ्चार्थमिति । नच तेभ्यः स्वार्थे एव णिज्विधिरस्त्विति वाच्यम् , 'सत्यस्य तु कृगापुक् निपात्यते । सत्यं करोति 'सत्यापयति' इत्यादि भाष्यविरोधादिति भावः । नामधातुप्रकरणे सत्यादिचूर्णान्तानामुदाहरणानि मूल एव स्फुटीभविष्यन्ति । चुरादिभ्यस्तु स्वार्थे इति । अर्थान्तरस्याऽनिर्देशादिति भावः । अत्र 'धातोरेकाचः' इत्यतो धातोरित्यनुवर्तते । चुरादिभ्यो धातुभ्यो णिजिति फलितम् । ततश्च णिच आर्धधातुकत्वं सिध्यति । अन्यथा धातोरिति विहितत्वाभावादार्धधातुकत्वं न स्यादिति बोध्यम् । तदाह-पुगन्तेति गुण इति । णिचि कृते चुर इ इति स्थिते णिच आर्धधातुकत्वात्तस्मिन् चकारादुकारस्य 'पुगन्तलघूपधस्य' इति गुण इत्यर्थः । णिचश्च । 'अनुदात्तङितः' इत्यत आत्मनेपदमिति 'स्वरितञितः' इत्यतः कर्त्रभिप्राये क्रियाफले इति चानुवर्तते । प्रत्ययग्रहणपरिभाषया णिजन्तादिति लभ्यते । तदाह-णिजन्तादित्यादिना । चोरयतीति । चोरयिष्यति । चोरयिष्यते । चोरयतु । चोरयताम् । अचोरयत् । अचोरयत । चोरयेत् । चोरयेत । आशीर्लिङि परस्मैपदे आह-चोर्यादिति । 'णेरनिटि' इति णिलोप इति भावः । आशीर्लिङि आत्मनेपदे आह-चोरयिषीष्टेति । लुङ्याह-णिश्रीत्यादि । दीर्घो लघोरिति । 'सन्वल्लघुनि' इति सन्वद्भावविषयत्वादिति भावः । चिति स्मृत्याम् । चिन्तयतीति । इदित्त्वान्नुमि णिजन्तात्तिङ उत्पत्तिरिति भावः । ननु इदित्करणं मास्तु प्रक्रियालाघवात् 'चिन्त स्मृत्याम्' इत्येवोच्यताम् । नच नलोपनिवृत्त्यर्थमिदित्त्वमिति वाच्यम् । चिन्तयति, चिन्तयांचकार इत्यादौ णिचः क्ङित्त्वाऽभावादेव नलोपस्याऽप्रसक्तेः । नच णिजभावे आशीर्लिङि चिन्त्यादिति कर्मलकारे यकि चिन्त्यते इत्यत्र च नलोपनिवृत्त्यर्थमिदित्त्वमिति शङ्क्यम् । चुरादिणिचो नित्यत्वेन णिचं विना केवलात् चिन्त्यात् , चिन्त्यते इति प्रयोगस्य शशशृ-

त इत्यादौ नलोपो न । चिन्तति । चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्षमित्येके । 'अत एकहल्-' ( सू २२६० ) इत्यत्र वृत्तिकृता, जगाण । जगणतुः इत्युदाहृतत्वात् । विशेषापेक्षमित्यपरे । अत एव 'आ धृषाद्वा' ( ग सू २०२ ) इत्यस्य न वैयर्थ्यम् । १५३६ यत्रि संकोचे । यन्त्रयति । यन्त्र इति पठितुं शक्यम् । यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम् । एवं कुद्रितन्त्रिमत्रिषु । १५३७ स्फुडि परिहासे । स्फुण्डयति । इदित्करणात्स्फुण्डति । स्फुटि इति पाठान्तरम् । स्फुण्टयति । १५३८ लक्ष दर्शनाङ्कनयोः । १५३९ कुद्रि अनृतभाषणे । कुन्द्रयति । १५४० लड उपसेवायाम् । लाडयति । १५४१ मिदि स्नेहने । मिन्दयति-मिन्दति । १५४२ ओ लडि उत्क्षेपणे । ओलण्डयति-ओलण्डति । ओकार इदित्येके । लण्डयति-लण्डति । उकारादिरयमित्यन्ये । उलण्डयति । १५४३ जल अपवारणे । जल इत्येके । १५४४ पीड अवगाहने । पीडयति । २५६५ भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ७।४।३॥ एषामुपधाया ह्रस्वो

---

ज्ञायमानत्वादित्यत आह-चिन्तेत्यादि । तेनेति । पाक्षिकत्वेनेत्यर्थः । तथाच कदाचित् चिन्त्यात्, चिन्त्यते इति प्रयोगस्य सत्त्वात् तत्र नलोपनिवृत्त्यर्थमिदित्करणमिति भावः । ननु तथापि यत्र नलोपप्रसक्तिस्तत्रैव चिन्त्यात्, चिन्त्यते इत्यत्र णिज्विकल्पः स्यात् नतु चिन्ततीत्यादौ, शपा व्यवधानेन तत्र नलोपस्याप्रसक्तेरित्याशङ्क्य ज्ञापकमिदं चिन्तधातुसामान्यापेक्षमित्यभिप्रेत्योदाहरति-चिन्तति । चिन्तेदिति । ज्ञापकमिदं चुरादित्वसामान्यापेक्षमिति मतान्तरमाह-एतच्चेति । ज्ञापकस्य चुरादित्वसामान्यापेक्षत्वे वृद्धसम्मतिमाह-अत एकेति । ज्ञापकस्य चितिधातुमात्रविषयकत्वे गणधातोः चौरादिकस्य जगणतुरित्युदाहरणानुपपत्तिः स्पष्टैवेति भावः । विशेषापेक्षमिति । चितिधातुमात्रविषयमित्यर्थः । इदमेव मतं युक्तमित्याह-अत एवेति । सर्वस्यापि चुरादेर्णिज्विकल्पे सति 'आ धृषाद्वा' इति कतिपयचुराद्यन्तर्गणपठितानां णिज्विकल्पविधिवैयर्थ्यमिति भावः । यत्रि सङ्कोचे । यन्त्रयतीति । अकारस्य उपधात्वाऽभावान्न वृद्धिः । अययन्त्रदिति । अकारस्य गुरुत्वाल्लघुत्वाल्लघुपरकत्वाऽभावात् सन्वद्भावाऽभावात् ह्रस्वदीर्घौ न । एवमग्रेऽपि संयोगान्तधातूनां ज्ञेयम् । पठितुं शक्यमिति । नलोपाऽभावस्तु इदित्त्वस्य न फलम्, नकारस्य उपधात्वाऽभावादेव नलोपस्याप्रसक्तेरिति भावः । तच्चिन्त्यमिति । यन्त्रयात् इत्यणिजन्ते सत्यपि नकारस्य अनुपधात्वादेव लोपाऽप्रसक्त्या इदित्त्वस्य प्रयोजनाऽभावादिति भावः । एवं 'कुद्रि अनृतभाषणे' 'तत्रि कुटुम्बधारणे' 'मत्रि गुप्तभाषणे' इति चुरादौ पठिष्यमाणेष्वपि इदित्वं त्यक्तुं शक्यमित्यर्थः । लड उपसेवायाम् । लाडयतीति । णिचि अत उपधावृद्धिः । एवमग्रेऽपि ज्ञेयम् । अलीलडत् । पीड अवगाहने । भ्राजभास । 'णौ चङ्युपधाया ह्रस्वः' इत्यनुव-

वा स्याच्चङ्परे णौ। अपीपिडत्-अपिपीडत्। १५४५ नट अवस्पन्दने। अवस्पन्दनं नाट्यम्। १५४६ श्रथ प्रयत्ने। प्रस्थाने इत्येके। १५४७ बध संयमने। बाधयति। बन्ध इति चान्द्रः। १५४८ पॄ पूरणे। पारयति। दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम्। तद्धि सेट्कत्वाय। एवंच पृणातिपिपर्तिभ्यां, परिता, परीता इत्यादिसिद्धावपि, परति-परतः इत्यादिसिद्धिः फलम्। १५४९ ऊर्ज बलप्राणनयोः। १५५० पक्ष परिग्रहे। १५५१ वर्ण १५५२ चूर्ण प्रेरणे। वर्ण वर्णने इत्येके। १५५३ प्रथ प्रख्याने। प्राथयति। 'नान्ये मितोऽहेतौ' इति वक्ष्यमाण-

संते। तदाह—पक्षामिति। नित्ये उपधाह्रस्वे प्राप्ते विकल्पोऽयम्। ह्रस्वपक्षे लघुपरकत्वात्सन्वत्त्वादभ्यासदीर्घ इत्यभिप्रेत्य आह—अपीपिडदिति। अत्र उत्तरखण्डे ह्रस्वः, पूर्वखण्डे तु दीर्घः। ह्रस्वाभावपक्षे तु लघुपरकत्वाऽभावात् सन्वत्त्वविरहान्नाऽभ्यासदीर्घ इति मत्वा आह—अपिपीडदिति। अत्र उत्तरखण्डे दीर्घः पूर्वखण्डे ह्रस्वः। नट अवस्पन्दने इति। अवस्पन्दनं नाट्यम्। नाटयति। अनीनटत्। श्रथ प्रयत्ने। श्राथयति। अशिश्रथत्। सन्वत्त्वविधौ अनेकहल्व्यवधानेऽपि लघुपरत्वं न विरुध्यते, 'अत्स्मृदॄत्वर' इति इत्वापवादस्य अत्वस्य विधानाल्लिङ्गात्। अन्यथा 'अपप्रथ'दित्यादौ अनेकहल्व्यवधानात् लघुपरत्वाऽभावादेव इत्वाऽप्रसक्त्या किं तेन। पॄ पूरणे। ननु ह्रस्वान्त एवायं धातुर्निर्दिश्यताम्। तावतैव पारयतीत्यादिसिद्धेः। न च णिजभावपक्षे परिता परिष्यतीत्यत्र इडर्थं दीर्घोच्चारणम्, ऋदन्तत्वे अनिट्कत्वप्रसङ्गादिति वाच्यम्, चुरादिणिचो नित्यत्वेन ततो णिजभावस्य शशशृङ्गायमाणत्वादित्यत आह—दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गमिति। 'पॄधातो'रिति शेषः। णिचः पाक्षिकत्वे तु परितेत्यादौ परतेत्यादिवारणाय दीर्घोच्चारणमर्थवदिति भावः। ननु ह्रस्वान्तत्वेऽपि परितेत्यादौ इट् कुतो न स्यादित्यत आह—तद्धि सेट्कत्वायेति। हि यतः तत् दीर्घोच्चारणं परितेत्यादौ सेट्कत्वार्थम् ऋदन्तत्वे तु इण्न स्यात्, 'ऊदॄदन्तैः' इत्यनि कारिकासु ऋदन्तस्य पर्युदासेन ऋदन्तस्याऽनिट्कत्वावगमादिति भावः। ननु पॄधातोः णिचः पाक्षिकत्वज्ञापकस्य किं फलम्। श्नाविकरणश्नुविकरणपठिताभ्यामेव पॄधातुभ्यां परितेत्यादिसिद्धेरित्यत आह—एवं चेति। उक्तरीत्या पॄधातोः णिचः पाक्षिकत्वे ज्ञापिते सतीत्यर्थः। पारयति। परतीति। 'उदोष्ठ्यपूर्वस्य' इत्युत्वं तु न भवति, पराभ्यां गुणवृद्धिभ्यां बाधादिति भावः। ऊर्ज बलेति। 'सन्वल्लघुनि' इति सूत्रं द्वेधा व्याख्यातं प्राक्। तत्र चङि 'न न्द्राः' इति निषेधात्, 'जि' इति णिजन्तस्य द्वित्वे उत्तरखण्डे चङ्परे णौ लघोरभावात् प्रथमव्याख्याने अभ्यासस्य तथाविधलघुपरकत्वविरहात् सन्वत्त्वविरहान्नाऽभ्यासदीर्घः, औजिजत्। द्वितीयव्याख्याने तु चङ्परे णौ यदङ्गं ऊर्ज इत्येतत् तदीयस्याभ्यासस्य चङमादाय वा णिचं लुसमादाय वा लघुपरकत्वादभ्यासस्य दीर्घः, और्जीजत्। एवमेव एवञ्जातीयकेषु द्रष्टव्यम्। प्र

त्वान्नास्य मित्वम् । २५६६ **अत्स्मृदॄत्वरप्रथम्रदस्तॄस्पशाम्** ७।४।९५॥ एषामभ्यासस्याकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्वापवादः । अपप्रथत् । १५५४ पृथ प्रक्षेपे । पर्थयति । २५६७ **उर्ऋत्** ७।४।७॥ उपधाया ऋवर्णस्य स्थाने ऋत्स्याद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत्-अपपर्थत् । पथ इत्येके । पाथयति । १५५५ षम्ब सम्बन्धने । सम्बयति । असम्बत् । १५५६ शम्ब च । अशशम्बत् । साम्ब इत्येके । १५५७ भक्ष अदने १५५८ कुट्ट छेदनभर्त्सनयोः । पूरणे इत्येके । कुट्टयति । १५५९ पुट्ट १५६० चुट्ट अल्पीभावे । १५६१ अट्ट १५६२ षुट्ट अनादरे । अट्टयति । अयं दोपधः । ष्टुत्वस्यासिद्धत्वात् 'नन्द्राः—' ( सू २४४६ ) इति निषेधः । आट्टिटत् । १५६३ लुण्ठ स्तेये । लुण्ठयति । लुण्ठति इति 'लुठि स्तेये' इति भौवादिकस्य । १५६४ शठ १५६५ श्वठ असंस्कारगत्योः ।

---

प्रख्याने । प्रथयतीति । णिचि उपधावृद्धिरिति भावः । नन्वस्य घटादिकत्वेन मित्वाद्ध्रस्वः स्यादित्यत आह—नान्ये इति । ज्ञपादिपञ्चकव्यतिरिक्तचुरादिषु मित्त्वनिषेधादिति भावः । घटादिकस्य तु मित्वाद्धेतुमण्णिचि 'प्रथयती'त्येव भवति । न च चौरादिकस्यैव मित्त्वार्थं घटादावनुवादः किं न स्यादिति वाच्यम् , नान्ये मितोऽहेतौ' इति निषेधादित्यलम् । अत्स्मृ । अभ्यासस्येति । 'अत्रलोपोऽभ्यासस्य' इत्यतस्तदनुवृत्तेरिति भावः । चङ्परे णाविति । 'सन्वल्लघुनि' इत्यतः चङ्परे इत्यनुवर्तते । चङ्परो यस्मादिति बहुव्रीहिः अन्यपदार्थस्त्वर्थाण्णिरेवेति भावः । इत्वेति । 'सन्यतः' इति इत्त्वस्यापवाद इत्यर्थः । अपप्रथदिति । अत्र अत्त्वविधानादेव सन्वत्त्वविधौ अनेकहल्व्यवधानेऽपि लघुपरकत्वमिति विज्ञायते । अन्यथा येन नाव्यवधानन्यायात् एकहल्व्यवधानस्यैवाश्रयात् अत्र सन्वत्त्वविरहादेव इत्वाऽप्रवृत्त्या किं तेन । संयोगे परे गुरुत्वान्नाभ्यासदीर्घः । पृथ प्रक्षेपे । ऋदुपधः । पर्थयतीति । णिचि लघूपधगुणः । रपरत्वम् । उर्ऋत् । 'ऋ' इत्यस्य 'उ'रितिषष्ठ्यन्तं रूपम् । 'णौ चङ्युपधायाः' इत्यनुवर्तते । 'जिघ्रतेर्वा' इत्यतो वेति । तदाह—उपधाया इति । ननु ऋकारस्य ऋकारविधिर्व्यर्थं इत्यत आह—इररारामपवाद इति । 'कृत संशब्दने' । 'अचीकृतत्' इत्यादौ 'उपधायाश्च' इति इत्वे रपरत्वे इर् प्राप्तः, 'अमीमृज'दित्यत्र तु 'मृजेर्वृद्धिः' इत्यार् प्राप्तः । प्रकृतपृथधातौ तु चङि णिलोपे प्रत्ययलक्षणेन णिचमाश्रित्य लघूपधगुणे रपरत्वे अर् प्राप्तः, तेषामपवाद इत्यर्थः । अपीपृथदिति । णिचमाश्रित्य प्राप्तं गुणं बाधित्वा ऋकारे, द्वित्वे, उरदत्वे, हलादिशेषे, सन्वत्त्वादित्वे, दीर्घे, रूपमिति भावः । अपपर्थदिति । ऋत्वाऽभावपक्षे 'द्विर्वचनेऽची'ति निषेधात् गुणात्प्राक् द्वित्वे उरदत्वे हलादिशेषे ऋकारस्य णिचमाश्रित्य गुणे रपरत्वे अपपर्थदित्यत्र लघुपरकत्वाऽभावेन सन्वत्त्वविरहादित्वदीर्घौ नेति भावः । अट्ट षुट्ट अनादरे । अयं दोपध इति । अड्डधातुरित्यर्थः । दकारस्य ष्टुत्वचर्त्वाभ्यां निर्देश इति भावः । दोप-

श्वठि इत्येके । १५६६ तुजि १५६७ पिजि हिंसाबलादाननिकेतनेषु । तुञ्जयति । पिञ्जयति । इदित्करणात् तुञ्जति । पिञ्जति । तुज पिज इति केचित् । लजि लुजि इत्येके । १५६८ पिस गतौ । पेसयति । पेसति इति तु शपि गतम् । १५६९ षान्त्व सामप्रयोगे । १५७० श्वल्क १५७१ वल्क परिभाषणे । १५७२ ष्णिह स्नेहने । स्फिट इत्येके । १५७३ स्मिट अनादरे । अषोपदेशत्वान्न षः । असिस्मिटत् । ष्मिङ् अनादरे इत्येके । ङित्त्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ् । स्माययते । १५७४ श्लिष श्लेषणे । १५७५ पथि गतौ । पन्थयति-पन्थति । १५७६ पिच्छ कुट्टने । १५७७ छदि संवरणे । छन्दयति-छन्दति । १५७८ श्रण दाने । प्रायेणायं विपूर्वः । विश्राणयति । १५७९ तड आघाते । ताडयति । १५८० खड १५८१ खडि १५८२ कडि भेदने । खाडयति । खण्डयति । कण्डयति । १५८३ कुडि रक्षणे । १५८४ गुडि वेष्टने । रक्षणे इत्येके । कुठि इत्यन्ये । अवकुण्ठयति-अवकुण्ठति । गुठि इत्यपरे । १५८५ खुडि खण्डने । १५८६ वटि विभाजने । वडि इत्येके । १५८७ मडि भूषायां हर्षे च । १५८८ भडि कल्याणे । १५८९ छर्द वमने । १५९० पुस्त १५९१ बुस्त आदरानादरयोः । १५९२ चुद संचोदने । १५९३ नक्क १५९४ धक्क नाशने । णोपदेशलक्षणे पर्युदस्तोऽयम् । प्रनक्कयति । १५९५ चक्क १५९६ चुक्क व्यथने । १५९७ क्षल शौचकर्मणि । १५९८ तल प्रतिष्ठायाम् । १५९९ तुल उन्माने । तोलयति । अतूतुलत् । कथं तुलयति तुलना इत्यादि । 'अतुलोपमाभ्यां' ( सू ६३० ) इति निपातनादा-

---

घत्वस्य प्रयोजनमाह—ष्टुत्वस्येति । तथा च दकारं विहाय टि इत्यस्य द्वित्वे आट्टिटत् इति स्थिते दस्य ष्टुत्वे चर्त्वे च 'आट्टिटत्' इति रूपमिष्टं सिध्यति । स्वाभाविकटोपधत्वे तु 'न न्द्राः' इति निषेधाऽभावात् टकारद्वयसहितस्य ण्यन्तस्य द्वित्वे हलादिशेषेणाऽभ्यासे प्रथमटकारस्य अनिवृत्तौ आटिट्टदिति अनिष्टं रूपं स्यादिति भावः । ष्मिङ् अनादरे । ननु 'णिचश्चे'त्यात्मनेपदसिद्धेः किमर्थं ङित्करणमित्यत आह- णिजन्ताद्ङिति । तङेवेत्यर्थः । अकर्त्रभिप्रायेऽपि फले णिजन्तादात्मनेपदार्थं ङित्करणमिति यावत् । ननु कृतेऽपि ङित्करणे णिजन्तस्य ङित्त्वाभावात् कथमुक्तप्रयोजनलाभ इत्यत आह—ङित्त्वस्य अवयवे चरितार्थत्वादिति । ण्यन्तावयवे ष्मिङ्धातौ ङित्त्व व्यर्थम्, तस्य णिचं विना प्रयोगाऽभावात् । ततश्चाऽवयवे श्रुतं ङित्त्वं ण्यन्तादेव कार्यं साधयतीत्यर्थः । स्माययते इति । णिचि वृद्धौ आयादेशे स्मायि इति ण्यन्ताल्लटस्तिपि शपि गुणाऽयादेशाविति भावः । असिष्मयत । तुल उन्माने । कथमिति । लघूपधगुणप्रसङ्गादिति भावः । तुलनेति । 'ण्यासश्रन्थो युच्' इति भावः । स-

दन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच्। १६०० दुल उत्क्षेपे। १६०१ पुल महत्त्वे। १६०२ चुल समुच्छ्राये। १६०३ मूल रोहणे। १६०४ कल १६०५ बिल क्षेपे। १६०६ बिल भेदने। १६०७ तिल स्नेहने। १६०८ चल भृतौ। १६०९ पाल रक्षणे। १६१० लूष हिंसायाम्। १६११ शुल्क माने। १६१२ शूर्प च। १६१३ चुट छेदने। १६१४ मुट संचूर्णने। १६१५ पडि १६१६ पसि नाशने। पण्डयति–पण्डति। पंसयति–पंसति। १६१७ व्रज १६१८ मार्ग संस्कारगत्योः। १६१९ शुल्क अतिस्पर्शने। १६२० चपि गत्याम्। चम्पयति–चम्पति। १६२१ क्षपि क्षान्त्याम्। क्षम्पयति–क्षम्पति। १६२२ छजि कृच्छ्रजीवने। १६२३ श्वर्त गत्याम्। १६२४ श्वभ्र च। १६२५ ज्ञप मिच्च। अयं ज्ञाने ज्ञापने च वर्तते। २५६८ मितां ह्रस्वः ६।४।९२॥ मितामुपधाया ह्रस्वः स्याण्णौ परे। ज्ञपयति। १६२६ यम च परिवेषणे। चान्मित्। परिवेषणमिह वेष्टनम्। न तु भोजना, नापि वेष्टना। यमयति चन्द्रम्। परिवे-

माचष्टे—मतुलोपमाभ्यामिति। आदन्तस्येति। तुलधातोर्ण्यन्तात्पचाद्यचि निपातनात् गुणाभावे स्त्रीत्वे तुलाशब्दः आदन्तः। ततः 'तत्करोति तदाचष्टे' इति णिचि इष्ठवत्त्वात् टिलोपे तुलि इति ण्यन्तात्लटित्तिपि युचि च 'तुलयती'ति 'तुलने'ति च रूपम्। आकारलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वान्न गुण इति भावः। व्रज मार्गेति। व्राजयति। मार्गयति। यद्वा मार्गति न धात्वन्तरम्। व्रजधातुर्मार्गसंस्कारे गतौ चेत्यर्थः। ज्ञप मिच्चेति। ज्ञपधातुर्णिचं लभते, मित्संज्ञश्चेत्यर्थः। मित्त्वकार्यभागिति वा। धातुपाठे अर्थनिर्देशाऽभावादाह—अयमिति। 'प्रच्छ ज्ञीप्सायाम्'इत्यत्र ज्ञाने 'इकाच कुरूस्थाशपां ज्ञीप्स्यमानः' इत्यत्र ज्ञापने च प्रयोगदर्शनादिति भावः। मितां ह्रस्वः। 'ऊदुपधाया गोहः' इत्यतः उपधाया इति 'दोषो णौ' इत्यतः णाविति चानुवर्तते। तदाह—मितामुपधाया इत्यादिना। ज्ञपयतीति। णिचि उपधावृद्धौ ह्रस्व इति भावः। यम च परिवेषणे। चान्मिदिति। इति अनुकृष्यते इति शेषः। यमधातुः परिवेषणे णिचं लभते, मित्कार्यभाक् चेत्यर्थः। मित्संज्ञक इति वा। परिवेषणमिह वेष्टनमिति। 'परिवेषस्तु परिधिः' इति कोशादिति भावः। न तु भोजनमिति। भुजेर्हेतुमण्ण्यन्तात् स्त्रियामित्यधिकारे 'ण्यासश्रन्थो युच्' क्लीबत्वं लोकात्। 'भोजने'त्येव क्वचित्पाठः। भोक्तुः पात्रे भोज्यद्रव्योपकल्पनमिह न परिवेषणमित्यर्थः। भोजनायां यमेर्हेतुमण्ण्यन्तस्य अमन्तत्वादेव मित्त्वसिद्धेरिति भावः। परिवेष्टन इत्यर्थ इति। अनेन इह परिविषेरण्यन्ताल्ल्युटि परिवेषणशब्द इति सूचितम्। न च वेष्टनेऽप्यर्थे यमेरमन्तत्वादेव सिद्धे मित्त्वविधिर्व्यर्थ इति वाच्यम्। 'न कम्यमिचमाम्' इति मित्त्वप्रतिषेधप्रकरणस्थे 'यमोऽपरिवेषणे' इति घटाद्यन्तर्गणसूत्रे अपरिवेषणे

ष्टत इत्यर्थः । १६२७ चह परिकल्कने । चहयति । अचीचहत् । कथादौ व-क्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचचहत् । चप इत्ये-के । चपयति । १६२८ रह त्यागे इत्येके । अरीरहत् । कथादेस्तु अररहत् । १५२९ बल प्राणने । बलयति । १६३० चिञ् चयने । २५६९ चिस्फुरो-र्णौ ६।१।५४ ॥ आत्वं वा स्यात् । २५७० अर्तिह्रीव्लीरीक्नूयीक्ष्मा-य्यातां पुग्णौ ७।३।३६॥ एषां पुक् स्याण्णौ । चपयति—चययति । ञि-त्करणसामर्थ्यादस्य णिज्विकल्पः । चयते । प्रणिचपयति-प्रणिचययति । 'नान्ये मितोऽ-

इति पर्युदासेन भोजनतोऽन्यत्र वेष्टनेऽर्थे मित्त्वनिषेधस्य प्राप्तौ मित्त्वप्रापणार्थत्वात् 'यमोऽपरिवेषणे' इत्यत्र परिवेषणशब्देन भोजनाया एव विवक्षितत्वेन वेष्टने यमेर्मि-त्वनिषेधस्य प्रसङ्गात् । अत एव 'यमिर्भोजनातोऽन्यत्र न मित्' इति व्याख्यातं मूल-कृता । भोजनायां तु 'यमोऽपरिवेषणे' इति मित्त्वनिषेधविधौ भोजनायाः पर्युदासा-देव तत्र मित्त्वनिषेधाऽभावादमन्तत्वादेव मित्त्वप्राप्तेरिह चुरादौ परिवेषणशब्देन वेष्टनमेव विवक्षितं नतु भोजनेत्यास्तां तावत् । चह परिकल्पने इति । इत आरभ्य 'चिञ् चयने' इत्येतत्पर्यन्तं चेत्यनुवर्तते । अतस्तेषां मित्त्वात् णिचि ह्रस्वः । तदाह— चहयतीति । नन्वनेनैव सिद्धे अग्रे चुराद्यन्तर्गणे कथादावस्य पाठो व्यर्थं इत्यत आह— कथादाविति । 'कथादयः अदन्ता' इति वक्ष्यते । तस्माण्णिचि अल्लोपे चहयती-त्यादौ अल्लोपस्य स्थानिवत्त्वादुपधावृद्ध्यभावे मित्त्वाद्ध्रस्वे च न विशेषः । तथापि अ-दन्तात् चङि णौ अल्लोपे सति अग्लोपितया सन्वत्त्वदीर्घयोरभावे 'अचचहत्' इति रूपमस्ति फलमित्यर्थः । चप इत्येके इति । 'चह परिकल्पने' इत्यस्य स्थाने 'चप' इ-त्येके पठन्तीत्यर्थः । 'रह त्यागे' इत्येके इत्यपि तथैव व्याख्येयम् । एवञ्च ज्ञपादिषु पञ्चसु चहधातुः चपधातुः रहधातुर्वा अन्यतमस्तृतीयः, बलधातुश्चतुर्थः, चिञ्धातुः पञ्चमः, इति कृत्वा ज्ञपादिपञ्चानां मतत्रयेऽपि पञ्चत्वात् ज्ञपादिपञ्चकत्वस्य न विरो-धः । 'रह त्यागे' इत्यस्यापि कथादिपाठफलमाह—कथादेस्तु अररहदिति । अदन्तत्वेन अग्लोपित्वान्न दीर्घसन्वत्त्वे इति भावः । बल प्राणने । च इत्यनुवृत्त्या मित्त्वस्यानु-कर्षणाद्ध्रस्वं मत्वा आह—बलयतीति । चिस्फुरोर्णौ । 'आदेच उपदेशे' इत्यतः आदिति 'विभाषा लीयतेः' इत्यतः विभाषेति चानुवर्तते इति मत्वा शेषं पूरयति—आत्वं वा स्यादिति । चिञो णिचि आत्वे चा इ इति स्थिते—अर्तिह्री । अर्ति ह्री व्ली री क्नूयी क्ष्मायी आत् एषां द्वन्द्वात् षष्ठी । 'पुक् णौ' इति छेदः । तदाह—एषां पुक् स्याण्णौ इति । पुकि ककार इत्, उकार उच्चारणार्थः कित्त्वादन्तावयवः । चाप् इ इति स्थिते चेत्यनुवृत्त्यं मित्त्वस्यानुकर्षणेन मित्त्वाद्ध्रस्वे चपि इत्यस्माल्लिवादौ परिनिष्ठितमा-ह—चपयतीति । आत्वाऽभावपक्षे त्वाह—चययतीति । चेर्णिचि वृद्धौ आयादेशे मि-त्त्वादुपधाह्रस्व इति भावः । ननु चिञ्धातोरिह ञित्करणं व्यर्थम्, ण्यन्तात् 'णिच-

हेतौ' ( ग सू १९८ ) अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न । १६३१ घट्ट चलने । १६३२ मुस्त सङ्घाते । १६३३ खट्ट संवरणे । १६३४ षट्ट १६३५ स्फिट्ट १६३६ चुबि हिंसायाम् । १६३७ पुल संघाते । पूण इत्येके । पुण इत्यन्ये । १६३८ पुंस अभिवर्धने । १६३९ टकि बन्धने । टङ्कयति-टङ्कति । १६४० धूस कान्तिकरणे । धूसयति । दन्त्यान्तः । मूर्धन्यान्त इत्येके । तालव्यान्तः इत्यपरे । १६४१ कीट वर्णे । १६४२ चूर्ण संकोचने । १६४३ पूज पूजायाम् । १६४४ अर्क स्तवने । तपने इत्येके । १६४५ शुठ आलस्ये । १६४६ शुठि शोषणे । शुण्ठयति-शुण्ठति । १६४७ जुड प्रेरणे । १६४८ गज १६४९ मार्ज शब्दार्थौ । गाजयति । मार्जयति । १६५० मर्च च । मर्चयति । १६५१ घृ प्रस्रवणे । स्रावणे इत्येके । १६५२ पचि विस्तारवचने । पञ्चयति । पञ्चते इति व्यक्तार्थस्य शपि गतम् । १६५३ तिज निशाने । तेजयति । १६५४ कृत संशब्दने । २५६१ उपधायाश्च ७।१।१०१॥ धातोरुपधाभूतस्य ऋृत इत्स्यात् । रपरत्वम् । 'उपधायां च' (सू २२६५ ) इति दीर्घः । कीर्तयति । 'उर्ऋत्' ( सू २५६७ ) अचीकृतत्-अचिकीर्तत् । १६५५ वर्ध

---

श्च' इत्येव उभयपदसिद्धेः । चौरादिकस्यास्य नित्यं ण्यन्तत्वेन चयति चयते इति केवलस्याण्यन्तस्य शशश्रृङ्गायमाणत्वादित्यत आह—मित्करणसामर्थ्यादिति । एवञ्च णिजभावपक्षे उभयपदार्थमिह मित्करणमर्थवदिति भावः । 'शेषे विभाषाऽकखादौ' इति णत्वविकल्पं मत्वा आह—प्रणिचयति प्रनिचयति इति । 'नान्ये मितोऽहेतौ' इति चुरादिगणसूत्रम् । अहेताविति च्छेदः । 'हेतुमति च' इति सूत्रेण विहितो णिच् हेतुशब्देन विवक्षितः । स न भवतीत्यहेतुः स्वार्थणिच । तस्मिन्परे इति लभ्यते । किमपेक्षया अन्ये इत्याकाङ्क्षायां इतः प्राक् पठितज्ञपादिचिञन्तेभ्य इति लभ्यते तदाह—अहेतौ स्वार्थे णिचीत्यादिना । अहेताविस्यस्य व्याख्यानं स्वार्थे णिचीति । तेनेति । ज्ञपादिचिञन्तव्यतिरिक्तचुरादीनां मित्त्वनिषेधेनेत्यर्थः । शमादीनामिति । 'शम आलोचने' 'अम रोगे' इत्यादीनामग्रे चुरादौ पठिष्यमाणानामित्यर्थः । अमन्तत्वेति । 'जनीजॄक्नसुरञ्जोऽमन्ताश्च' इत्यमन्तत्वनिर्मित्तकमित्यर्थः । कृत संशब्दने । उपधायाश्च । 'ऋत इद्धातोः' इत्यनुवर्तते । तदाह—धातोरित्यादिना । चङि 'उर्ऋत्' इत्युपधाया ऋत्त्वपक्षे आह—अचीकृतदिति । उपधाया ऋत्वे कृत इत्यस्य द्वित्वे उरदत्वे लघुपरतया सन्वत्त्वादित्वे 'दीर्घो लघोः' इति दीर्घ इति भावः । ऋत्वाभावपक्षे आह—अचिकीर्तदिति । ऋत इत्त्वे रपरत्वे 'उपधायां च' इति दीर्घे कीर्त् इत्यस्य द्वित्वे हलादिशेषे अभ्यासहस्वे इत्वमिति भावः । लघुपरकत्वाभावेन सन्वद्भावविषयत्वाऽभावान्नाभ्यासदीर्घः ।

छेदनपूरणयोः । १६५६ कुवि आच्छादने । कुम्बयति । कुभि इत्येके । १६५७ क्षुबि १६५८ तुबि अदर्शने । अर्दने इत्येके । १६५९ पह्न व्यक्तायां वाचि । क्रप इत्येके । १६६० चुटि छेदने । १६६१ इल प्रेरणे । एलयति । ऐलिलत् । १६६२ म्रक्ष म्लेच्छने । १६६३ म्लेच्छ अव्यक्तायां वाचि । १६६४ ब्रूस १६६५ बर्ह हिंसायाम् । केचिदिह गर्ज गर्द शब्दे, गर्ध अभिकाङ्क्षायाम्, इति पठन्ति । १६६६ गुर्द पूर्व निकेतने । १६६७ जसि रक्षणे । मोक्षणे इति केचित् । जंसयति–जंसति । १६६८ ईड स्तुतौ । १६६९ जसु हिंसायाम् । १६७० पिडि सङ्घाते । १६७१ रुष रोषे । रुट इत्येके । १६७२ डिप क्षेपे । १६७३ ष्टुप समुच्छ्राये ।

आ कुस्मादात्मनेपदिनः । 'कुस्मनाम्नो वा' इति वक्ष्यते । तमभिव्याप्येत्यर्थः । अकर्तृगामिफलार्थमिदम् । १६७४ चित सञ्चेतने । चेतयते । अचीचितत । १६७५ दशि दंशने । दंशयते । अददंशत । इदित्त्वाण्णिजभावे दंशति । आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः । नलोपे सञ्जिसाहचर्याद् भ्वादेरेव ग्रहणम् । १६७६ दसि दर्शनदंशनयोः । दंसयते- दसति । दस इत्यप्येके । १६७७ डप १६७८ डिप सङ्घाते । १६७९ तत्रि कुटुम्बधारणे । तन्त्रयते । चान्द्रास्तु धातुद्वयमिति मत्वा कुटुम्बयते इत्युदाहरन्ति । १६८० मत्रि गुप्तपरिभाषणे । १६८१ स्पश ग्रहणसंश्लेषणयोः । १६८२ तर्ज १६८३ भर्त्स तर्जने । १६८४ बस्त १६८५ गन्ध अर्दने । बस्तयते गन्धयते । १६८६ विष्क हिंसायाम् । हिष्क इत्येके । १६८७ निष्क परिमाणे । १६८८ लल ईप्सायाम् । १६८९ कूण सङ्कोचे, १६९० तूण पूरणे । १६९१ भ्रूण आशाविशंकयोः । १६९२ शठ श्लाघायाम् । १६९३ यक्ष पूजायाम् । १६९४ स्यम वितर्के । १६९५ गूर उद्यमने । १६९६ शम १६९७ लक्ष आलोचने । 'नान्ये मितः–' इति मित्त्वनिषेधः । शामयते । १६९८ कुत्स अवक्षेपणे । १६९९ त्रुट छेदने । कुट इत्येके । १७०० गल स्रवणे । १७०१ भल आभण्डने । १७०२ कूट आप्रदाने । अवसादने इत्येके ।

---

'आकुस्मा'दित्यत्र आङभिविधाविति मत्वा आह—तमभिव्याप्येति । ननु 'णिचश्च' इति सिद्धे आत्मनेपदविधानं व्यर्थमित्यत आह—अकर्तृगामिति । ननु 'दशि दंशने' णिजभावे दंशति इति कथम् । आकुस्मीयत्वेन णिजभावेऽपि तङो, दुर्वारत्वादित्यत आह—आकुस्मीयमिति । 'दंशसञ्जस्वञ्जां शपि' इति नलोपमाशङ्क्य आह—नलोपे सञ्जीति । स्पश ग्रहणेति । अपस्पशत । 'अत्स्मृदृत्वर' इति अभ्यासस्य अत्वं इत्यादः । गूर उद्यमने । अयं दीर्घोपधः । गूरयते । तुदादौ तु 'गुरी उद्यमने' इति ह्रस्वोपधः । दिवादौ तु 'घूरी गूरी हिंसागत्योः' इति दीर्घोपध एवेति केचित् ।

१७०३ कुट्ट प्रतापने । १७०४ वञ्चु प्रलम्भने । १७०५ वृष शक्तिबन्धने । शक्तिबन्धन प्रजननसामर्थ्यं, शक्तिबन्धश्च । वर्षयते । १७०६ मद तृप्तियोगे । मादयते । १७०७ दिवु परिकूजने । १७०८ गृ विज्ञाने । गारयते । १७०९ विद चेतनाख्याननिवासेषु । वेदयते ।

सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।

विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥

१७१० मान स्तम्भे । मानयते । १७११ यु जुगुप्सायाम् । यावयते । १७१२ कुस्म नाम्नो वा ( ग सू १९६ ) । कुस्म इति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अचुकुस्मत । अथवा कुस्म इति प्रातिपदिकम् । ततो धात्वर्थे णिच् । इत्याकुस्मीयाः ।

१७१३ चर्च अध्ययने । १७१४ बुक्क भषणे । १७१५ शब्द उपसर्गादाविष्कारे च । चाद्भाषणे । प्रतिशब्दति । प्रतिश्रुतमाविष्करोतीत्यर्थः । अनुपसर्गाच्च । आविष्कारे इत्येव । शब्दयति । १७१६ कण निमीलने काणयति । 'णौ चङ्युपधाया ह्रस्वः' ( सू २३१४ ) 'काण्यादीनां वा' ( वा ४६१३ ) इति विक-

ह्रस्वोपध इत्यन्ये । विद्धातोरर्थभेदे विकरणभेदं संगृह्णाति—सत्तायां विद्यते इत्यादिश्लोकेन । कुस्म नाम्नो वा । गणसूत्रम् । कुस्मेति पृथक्पदं अविभक्तिकम् । तदाह—कुस्म इति धातुरिति । 'कुत्सितस्मयने वर्तते इति शेषपूरणं व्याख्यानादिति भावः । कुस्मयते इति । आकुस्मीयत्वादकर्तृगेऽपि फले आत्मनेपदम् । 'आकुस्मादात्मनेपदिन' इत्यत्र आङ्भिविधावित्याश्रयणादिति भावः । अचुकुस्मतेति । उकारस्य गुरुतया अभ्यासस्य लघुपरकत्वाऽभावान्न सन्वत्त्वमिति भावः । 'नाम्नो वे'त्यंशं व्याचष्टे—अथवेति । नाम प्रातिपदिकं, तस्माद्वा णिज्भवतीत्यर्थः । तच्च प्रातिपदिकं कुस्मशब्दात्मकमेव गृह्यते, प्रत्यासत्त्या । तथा च कुस्मेति धातोः कुस्मेति प्रातिपदिकाद्वा णिजिति फलितम् । तत्र धातोः णिचः स्वार्थिकत्वमभिप्रेत्य प्रातिपदिकात् णिचि विशेषमाह—तत इति । तस्मात् प्रातिपदिकादित्यर्थः । धात्वर्थे इति । करोतीत्यर्थे आचष्टे इत्यर्थे वेत्यर्थः । न च 'तत्करोति तदाचष्टे' इत्येव प्रातिपदिकात् णिच् सिद्ध इति वाच्यम्, 'आकुस्मादात्मनेपदिनः' इत्यात्मनेपदनियमार्थत्वात् । इत्याकुस्मीयाः ।

शब्द उपसर्गादिति । उपसर्गात्परः शब्दधातुः आविष्कारे वर्तते इत्यर्थः । अनुपसर्गाच्चेति । अनुपसर्गात्परोऽपि शब्दधातुः णिचं लभते इत्यर्थः । 'आविष्कारे' इत्यस्यै, वानुवृत्त्यर्थं पृथगुक्तिः । 'शब्द आविष्कारे च'इत्येतावत्येवोक्ते अनुपसर्गाद्भाषणेऽपि स्यात् । तदाह—आविष्कारे इत्येवेति । काण्यादीनामिति । इदं वार्तिकं 'भ्राजभासभाष' इति सूत्रे भाष्ये पठितम् । 'काणि राणि श्राणि भाणि हेठि लोपयः षट् काण्यादयः'

ल्प्यते। अचीकणत्–अचकाणत्। १७१७ जभि नाशने। जम्भयति–जम्भति। १७१८ षूद क्षरणे। सूदयति। असूषुदत्। १७१९ जसु ताडने। जासयति–जसति। १७२० पश बन्धने। पाशयति। १७२१ अम रोगे। आमयति। 'नान्ये मित–' इति निषेधः। अम गत्यादौ शपि गतः। तस्माद्धेतुमण्णौ 'न क-म्यमिचमाम्' इति निषेधः। आमयति। १७२२ चट १७२३ स्फुट भेदने। विकासे शशपोः स्फुटति–स्फोटते इत्युक्तम्। १७२४ घट सङ्घाते। घाटयति। 'हन्त्य-र्थाश्च' (ग सू २००)। नवगणामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्ते इत्यर्थः। १७२५ दिवु मर्दने। उदित्वाद्देवतीत्यपि। १७२६ अर्ज प्रतियत्ने। अयमर्थान्तरेऽपि। द्रव्यमर्जयति। १७२७ घुषिर् विशब्दने। घोषयति। 'घुषि-रविशब्दने' (सू ३०६३) इति सूत्रे 'अविशब्दने' इति निषेधाल्लिङ्गादनित्योऽ-स्य णिच्। घोषति। इरित्वादङ् वा। अघुषत्–अघोषीत्। गयन्तस्य तु अजूघु-

इति भाष्यम्। अचीकणदिति। ह्रस्वत्वपक्षे लघुपरत्वादभ्यासस्य सन्वत्त्वमिति भावः। शशपोरिति। शविकरणे, शब्विकरणे चेत्यर्थः। हन्त्यर्थाश्चेति। गणसूत्रमिदम्। हन हिंसागत्योरिति हननातोर्हिंसा गमनं चार्थः। एतदर्थकाः ये धातवः भ्वादिषु नवसु गणेषु पठिताः ते सर्वेऽपि चुरादौ पठिताः प्रत्येतव्या इत्यर्थः। ततश्च तेभ्यः स्वार्थे णिजपि पक्षे भवतीति फलितम्। तदाह—नवगणामित्यादि। दिवु मर्दने। उदित्वा-दिति। क्त्वायामिड्विकल्पार्थम्। 'उदितो वा' इति क्त्वायामिड्विकल्पार्थम्। द्यूत्वा-देवित्वा। इडभावे ऊठ्। इटि तु 'न क्त्वा सेट्' इति कित्त्वनिषेधात् गुण इति स्थितिः। अस्य नित्यण्यन्तत्वे सति णिचा व्यवहितत्वे क्त्वायामिड्विकल्पस्य अप्रसक्तेरुदित्करणं व्यर्थं सत् ज्ञापयति अस्य दिवुधातोः णिज्विकल्पः इतीति भावः। घुषिर् विशब्दने। विशब्दनं शब्देन स्वाभिप्रायाविष्करणं प्रतिज्ञानं च। भ्वादौ त्वयं धातुरविशब्दना-र्थकः पठितः। घोषयतीति। शब्देन स्वाभिप्रायमाविष्करोतीत्यर्थः, प्रतिजानाति इति वा। लिङ्गादिति। इण्निषेधप्रकरणे घुषिर् अविशब्दने' इति सूत्रम्। अविशब्दनार्थ-कात् घुषधातोः निष्ठायामिण्न स्यादित्यर्थः। यथा घुष्टा रज्जुः'। प्रसारितेत्यर्थः। अविशब्दने इति किम्? अवघुषितं वाक्यम्। प्रतिज्ञातमित्यर्थः। अत्र विशब्दनार्थ-कत्वादिण्निषेध इति स्थितिः। तत्र विशब्दनार्थकस्य घुषधातोः चौरादिकत्वेन ण्य-न्तत्वनियमाण्णिचा व्यवधानात् परा निष्ठा नास्त्येवेति इण्निषेधे विशब्दनपर्यु-दासो व्यर्थः सन् चौरादिकस्याऽस्य विशब्दनार्थकस्य घुषेः णिचो विकल्पं गमयति। एवं च 'अवघुषितं वाक्य' मित्यत्र चौरादिकघुषेर्विशब्दनार्थकस्य निष्ठायाम् इण्निषेधो नेति भाष्ये स्पष्टम्। इरित्वादङ् वेति। 'णिजभावपक्षे' इति शेषः। ननु इरित्त्वादेव णिज्विकल्पे सिद्धे 'घुषिरविशब्दने' इति इण्निषेधसूत्रे 'अविशब्दने' इति पर्युदासस्य णिज्विकल्पज्ञापकत्वाश्रयणक्लेशो भाष्ये व्यर्थ इति चेत्, न—अत एव भाष्यादिरि-

यत् । १७२८ आङः क्रन्द सातत्ये । भौवादिकः क्रन्दधातुराह्वानाद्यर्थ उक्तः । स एवाङ्पूर्वो णिचं लभते सातत्ये । आक्रन्दयति । अन्ये तु 'आङ्पूर्वो घुषिः क्रन्दसातत्ये' इत्याहुः । आघोषयति । १७२९ लस शिल्पयोगे । १७३० तसि १७३१ भूष अलङ्करणे । अवतंसयति–अवतंसति । भूषयति । १७३२ अर्ह पूजायाम् । १७३३ ज्ञा नियोगे । आज्ञापयति । १७३४ भज विश्राणने । १७३५ शृधु प्रसहने । अशशर्धत्–अशीशृधत् । १७३६ यत निकारोपस्कारयोः । १७३७ रक १७३८ लग आस्वादने । रघ इत्येके । रग इत्यन्ये १७३९ अञ्चु विशेषणे । अञ्चयति । उदित्वमिड्विकल्पार्थम् । अत एव विभाषितो णिच् । अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् । १७४० लिगि चित्रीकरणे । लिङ्गयति–लिङ्गति । १७४१ मुद संसर्गे । मोदयति सक्तून्घृतेन । १७४२ त्रस धारणे । ग्रहणे इत्येके । वारणे इत्यन्ये । १७४३ उध्रस उञ्छे । ऊकारो धात्ववयव इत्येके । नेत्यन्ये । ध्रासयति । उध्रासयति । १७४४ मुच प्रमोचने मोदने च । १७४५ वस स्नेहच्छेदापहरणेषु । १७४६ चर संशये । १७४७ च्यु सहने । हसने च इत्येके । च्यावयति । च्युस इत्येके । च्योसयति । १७४८ भुवोऽवकल्कने । अवकल्कनं मिश्रीकरणमित्येके । चिन्तनमित्यन्ये । भावयति । १७४९ कृपेश्च कल्पयति ।

'आ स्वदः सकर्मकात्' ( ग सू २०१ ) । स्वदिमभिव्याप्य सम्भवत्कर्मस्य

त्वाऽभावविज्ञानात् । एवच 'घुषिर् विशब्दने' इत्यत्र घुषिरित्यस्य इका निर्देशमाश्रित्य प्रथमान्तत्वमेवाश्रयणीयम् । 'इरित्त्वादङ्वे'ति मूलं तु भाष्यविरोधादुपेक्ष्यमेवेत्यास्तां तावत् । आङः क्रन्द सातत्ये इति । आङः परः क्रन्दधातुः आह्वानसातत्येऽर्थे णिचं लभते इत्यर्थः । यद्वा 'आङ' इत्यनन्तरं घुषिरित्यनुवर्तते । 'क्रन्दसातत्ये' इत्यर्थनिर्देशः । तदाह—अन्ये त्विति । लस शिल्पयोग इति । कौशले इत्यर्थः । तसि भूषेति । अत्र तसिः प्रायेण अवपूर्वः । तदाह—अवतंसयतीति । ज्ञा नियोग इति । आङ्पूर्वः । तदाह—आज्ञापयतीति । आदन्तत्वात् पुक् । अजिज्ञपत् । यत निकारेति । तालव्यादिरन्तःस्थादिः । यतो वा प्रैषो वा निकारः । यातयति । अयीयतत् । अञ्चु विशेषणे इति । व्यावर्तने इत्यर्थः । उदित्त्वादिति । 'उदितो वा' इत्यण्यन्तात् क्त्वायामिड्विकल्पार्थमित्यर्थः । ण्यन्तात्तु णिचा व्यवधानान्न इड्विकल्पस्य न प्रसक्तिरिति भावः । ननुवस्य नित्यण्यन्तत्वादण्यन्तत्वम् असिद्धमित्यत आह—अत एवेति । च्यु सहने इति । च्यावयति । अचुच्यवत् । भुवोऽवकल्कने इति । अवकल्कनवृत्तेर्भूधातोर्णिच् स्यादित्यर्थः । कृपेश्चेति । अवकल्कनवृत्तेः कृपः णिच् स्यादित्यर्थः । कल्पयतीति । 'कृपो रोलः' इति लत्वम् ।

आस्वदः सकर्मकादिति । आधर्षविधौ । तदाह—स्वदिमभिव्याप्येति । तत्र 'स्वद

एव णिच् । १७५० प्रस प्रहणे । प्रासयति फलम् । १७५१ पुष बारणे । पोष-यत्याभरणम् । १७५२ दल विदारणे । दालयति । १७५३ पट १७५४ पुट १७५५ लुट १७५६ तुजि १७५७ मिजि १७५८ पिजि १७५९ लुजि १७६० भजि १७६१ लघि १७६२ त्रिसि १७६३ पिसि १७६४ कुसि १७६५ दशि १७६६ कुशि १७६७ घट १७६८ घटि १७६९ बृहि १७७० बर्ह १७७१ बल्ह १७७२ गुप १७७३ धूप १७७४ विच्छ १७७५ चीव १७७६ पुथ १७७७ लोकृ १७७८ लोचृ १७७९ णद १७८० कुप १७८१ तर्क १७८२ वृतु १७८३ वृधु भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति । २५७२ नाग्लोपिशास्वृदिताम् ७।४।२॥ णिच्यग्लोपिनः शास्तेः ऋदितां चोपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्धयति । उदित्वात्, वर्तति । वर्धति । १७८४ रुट १७८५ लजि १७८६ अजि १७८७ दसि १७८८ भृशि १७८९ रुशि १७९० शीक १७९१ रुसि १७९२ नट १७९३ पुटि १७९४ जि १७९५ चि १७९६ रवि १७९७ लघि १७९८ अहि १७९९ रहि १८०० महि च । १८०१ लडि १८०२ तड १८०३ नल च । १८०४ पूरी आप्यायने । ईदित्वं निष्ठायामिण्निषेधाय । अत एव णि-ज्वा । पूरयति—पूरति । १८०५ रुज हिंसायाम् । १८०६ ष्वद आस्वादने । स्वाद इत्येके । असिस्वदत् । दीर्घस्य त्वषोपदेशत्वात् असिस्वदत् ।

आस्वादने' इत्यस्य अकर्मकत्वादाह—सम्भवत्कर्मस्य इति । इत आरभ्य आस्वदीयाः सकर्मकाः । स्वदिस्त्वकर्मकः । पट पुटेति । एकत्रिंशत् धातवः । आद्यास्त्रयष्टान्ताः । आद्यद्वितीयौ पवर्गप्रथमादी । चतुर्थाद्या एकादश इदितः । त्रिसिपिसी इदुपधौ । अदुपधावित्येके । षोडशसप्तदशाविदितौ । अलुलोकत्, अलुलोचत् इत्यत्र उपधाह्रस्वे प्राप्ते—नाग्लोपि । 'णौ चङ्युपधायाः' इत्यनुवर्तते । णावित्यावर्तते । एकमग्लोपिन इत्यत्रान्वेति । द्वितीयं तु निषेधे परनिमित्तम् । तदाह—णिच्यग्लोपिन इत्यादि । अलुलोकदिति । ऋदित्वाऽन्ग्लोपीति निषेधेन उपधाह्रस्वाभावे सति लघुपरकत्वाभावान्नाभ्यासदीर्घ इति भावः । उदित्वादिति । 'वृतु वृधु' इत्युदित्त्वं 'उदितो वा' इत्यण्यन्तात् क्त्वायामिड्विकल्पार्थम् । ण्यन्तात्तु णिचा व्यवधानात् नेड्विक-ल्पप्रसक्तिः । अतो णिज्विकल्पो विज्ञायते इति भावः । पूरी आप्यायने । इण्निषेधा-येति । अण्यन्तात् क्त्वायामिण्निषेधार्थमीदित्त्वम् । ण्यन्तात्तु णिचा व्यवधानाद-प्रसक्तेः । अतो णिज्विकल्पो विज्ञायते इत्यर्थः । स्वद्धातुः षोपदेशः । तदाह—असिष्वददिति । आदेशसकारत्वात्षः । अभ्यासेऽकारस्य संयोगपरकत्वेन गुरुत्वा-

'आ धृषाद्वा' (ग सू २०२)। इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य। १८०७ युज १८०८ पृच संयमने। योजयति-योजति। अयौजीत्। पर्चयति-पर्चति। पर्चिता। अपर्चीत्। १८०९ अर्च पूजायाम्। १८१० षह मर्षणे। साहयति। 'स एवायं नागः सहति कलभेभ्यः परिभवम्'। १८११ ईर क्षेपे। १८१२ ली द्रवीकरणे। लाययति-लयति। लेता। १८१३ वृजी वर्जने। वर्जयति-वर्जति। १८१४ वृञ् आवरणे। वारयति-वरति-वरते। वरिता-वरीता। १८१५ ज वयोहानौ। जारयति-जरति। जरिता-जरीता। १८१६ ज्रि च। ज्राययति-ज्रयति। ज्रेता। १८१७ रिच वियोजनसम्पर्चनयोः। रेचयति-रेचति। रेक्ता। १८१८ शिष असर्वोपयोगे। शेषयति-शेषति। शेष्टा। अशिक्षत्। अयं विपूर्वोऽतिशये। १८१९ तप दाहे। तापयति-तपति। तप्ता। १८२० तृप तृप्तौ। 'संदीपने' इत्येके। तर्पयति-तर्पति। तर्पिता। १८२१ छृदी संदीपने। छर्दयति-छर्दति। छर्दिता। छर्दिष्यति। 'सेऽसिचि—' (सू २५०६) इति विकल्पो न। साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात्। चृप छृप दृप सन्दीपने इत्येके। चर्पयति। छर्पयति। १८२२ दभी भये। दर्भयति-दर्भति। दर्भिता।

---

आऽभ्यासदीर्घः। दीर्घस्य श्विति। दीर्घमध्यस्य श्वित्यर्थः। अषोपदेशत्वादिति। ह्रस्वमध्यस्यैव स्वदेः षोपदेशेषु परिगणनादिति भावः। इत्यास्वदीयाः।

आधृषाद्वेति। गणसूत्रम्। विभाषितणिच इति। विकल्पितणिच्काः। प्रत्येतव्या इत्यर्थः। आङभिव्याप्ताविति मत्वा आह—धृषधातुमभिव्याप्येति। णिजभावपक्षे आह—अयौजीदिति। अर्च पूजायामिति। अयमनुदात्तेदिति शाकटायनः। अर्चयते। अर्चते। अस्य भ्वादौ पाठः अनार्षः। अनेनैव सिद्धः। नच परस्मैपदार्थं भ्वादावचः पाठ इति वाच्यम्, भ्वादौ तस्याप्यात्मनेपदायततायाः शाकटायनसम्मतत्वेन माधवोक्तेः। एवमन्यत्यानामाघृषीयाणां भ्वादौ परस्मैपदिषु पाठः प्रामादिक एवेत्याहुः। ली द्रवीकरणे लाययतीति। लीलोरिति नुक् तु न, लासाहचर्यात् हेतुमण्णावेवास्य प्रवृत्तेः। लेतेति। 'विभाषा लीयतेः' इत्यात्वं तु न, तत्र श्नाश्यन्विकरणयोरेव यका निर्देश इति भाष्यात्। वृञ् आवरणे। वरिता-वरीतेति। 'वृतो वा' इति दीर्घः। आशीर्लिङि-व्रियात्। आत्मनेपदे तु 'लिङ्सिचोः' इति वेट्। वृषीष्ट-वरिषीष्ट। इडभावपक्षे 'उश्चे'ति कित्त्वान्न गुणः। 'न लिङि' इति इटो न दीर्घः। अवृत। ज्रि चेति। इत्यात्मोऽयम्। रिच वियोजने इति। अनिडयम्। ततश्च णिजभावपक्षे नेट्। तदाह—रेक्तेति। शिष असर्वेति। अयमप्यनिट् तदाह—शेष्टेति। अशिक्षदिति। 'शल इगुपधा'दिति क्सः। अयं विपूर्वोऽतिशये इति। वर्तते इति शेषः। अयमस्माद्विशिष्ट इत्यत्र अधिक इति गम्यते। तृप तृप्ताविति। अनिट्सु श्यना निर्देशादयं से(ट्)। तदाह—तर्पि-

१८२३ दृभ संदर्भे । अयं तुदादावीदित् । १८२४ श्रथ मोक्षणे । हिंसायां इत्येके । १८२५ मी गतौ । माययति-मयति । मेता । १८२६ ग्रन्थ बन्धने । ग्रन्थयति । ग्रन्थति । १८२७ शीक आमर्षणे । १८२८ चीक च । १८२९ अर्द हिंसायाम् । स्वरितेत् । अर्दयति-अर्दति-अर्दते । १८३० हिसि हिंसायाम् । हिंसयति-हिंसति । हिनस्ति इति श्नमि गतम् । १८३१ अर्ह पूजायाम् । १८३२ आङः षद पद्यर्थे । आसादयति-आसीदति । 'पाघ्रा—' ( सू २३६० ) इति सीदादेशः । आसत्ता । आसात्सीत् । १८३३ शुन्ध शौचकर्मणि । शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् । १८३४ छद अपवारणे । स्वरितेत् । १८३५ जुष परितर्कणे । परितर्कणमूहो हिंसा वा । परितर्पणे इत्यन्ये । परितर्पणं परितृप्तिक्रिया । जोषयति-जोषति । प्रीतिसेवनयोर्जुषत इति तुदादौ । १८३६ धूञ् कम्पने । णावित्यधिकृत्य 'धूञ्प्रीञोर्नुग्वक्तव्यः' ( वा ४५१६ ) । धूनयति-धवति । धवते । केचित्तु 'धूञ्प्रीणोः—' इति पठित्वा प्रीणातिसाहचर्याद्धुनातेरेव नुकमाहुः । धावयति । अयं स्वादौ क्र्यादौ तुदादौ च, स्वादौ ह्रस्वश्च । तथा च कविरहस्ये—

'धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।
वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च ॥'

१८३७ प्रीञ् तर्पणे । प्रीणयति । 'धूञ्प्रीणोः—' इति हरदत्तोक्तपाठे तु प्राययति-प्रयति प्रयते । १८३८ श्रन्थ १८३९ ग्रन्थ सन्दर्भे । १८४० आप्लृ लम्भने । आपयति-आपति । आप्ता । आपत् । स्वरितेदयमित्येके । आपते । १८४१ तनु श्रद्धोपकरणयोः । उपसर्गाच्च दैर्घ्ये । तानयति । वितानयति तनति वितनति । चन श्रद्धोपहननयोः इत्येके । चानयति । चनति । १८४२ वद सन्देशवचने । वादयति । स्वरितेत् । वदति-वदते । अनुदात्तेदित्येके । ववदतुः । ववदिथ । ववदे । वद्यात् । १८४३ वच परिभाषणे । वाचयति-वचति । वक्ता । अवाचीत् । १८४४ मान पूजायाम् । मानयति—मानति । मानिता । विचारणे तु भौवादिको नित्यसन्नन्तः । स्तम्भे तु मानयते । ( इत्याकुस्मीयः ) । मन्यते इति दिवादौ ।

तेति । छृदी सन्दीपने इति । ईदित्त्वं निष्ठायामिण्निषेधार्थम् । धुवति स्फुटितेति । शविकरणस्य रूपम् । शस्य ङित्त्वाद्गुणाभावे उवङ् । प्रीञ् तर्पणे । प्रीणयतीति । 'धूञ्प्रीञोः' इति वार्तिकान्नुगिति भावः । हरदत्तेति । अनेन भाष्याऽसम्मतत्वं सूचितम् । उपसर्गाच्चेति । दैर्घ्ये तु उपसर्गादनुपसर्गाच्च परस्तनुधातुराधृषीयो वेदितव्य इत्यर्थः । श्रद्धोपकरणयोस्त्वनुपसर्गादेवेति भावः । वच परिभाषणे । अवाचीदिति । 'अस्यतिवक्ती'ति

मनुते इति तनादौ च। १८४५ भू प्राप्तावात्मनेपदी। भावयते–भवते। णिच्संनियोगेनैवात्मनेपदमित्येके। भवति। १८४६ गर्ह विनिन्दने। १८४७ मार्ग अन्वेषणे। १८४८ कठि शोके। उत्पूर्वोऽयमुत्कण्ठायाम्। कण्ठते इत्यात्मनेपदी गतः। १८४९ मृजू शौचालङ्कारयोः। मार्जयति–मार्जति। मार्जिता–मार्ष्टा। १८५० मृष तितिक्षायाम्। स्वरितेत्। मर्षयति–मर्षति। मर्षते। मृष्यति–मृष्यते। इति दिवादौ। सेचने शपि मर्षति। १८५१ धृष प्रसहने। धर्षयति–धर्षति। इत्याधृषीयाः।

अथादन्ताः। १८५२ कथ वाक्यप्रबन्धे। अल्लोपस्य स्थानिवद्भावान्न वृद्धिः। कथयति। अग्लोपित्वान्न दीर्घसन्वद्भावौ। अचकथत्। १८५३ वर ईप्सायाम्। वरयति। वारयतीति गतम्। १८५४ गण संख्याने। गणयति २५७३ ई च गणः ७।४।९७॥ गणेरभ्यासस्य ईत्स्याच्चङ्परे णौ चादत्। अजगणत्—अजीगणत्। १८५५ शठ १८५६ श्वठ सम्यगवभाषणे। १८५७ पठ १८५८ वठ ग्रन्थे। १८५९ रह त्यागे। अररहत्। १८६० स्तन १८६१ गदी देवशब्दे।

---

लुका निर्देशादङ् नेति भावः। 'वचिस्वपी'ति सम्प्रसारणम्–उच्यात् इत्याधृषीयाः।

अथादन्ता इति। वक्ष्यन्ते इति शेषः। अन्ते अकारो नेत्संज्ञकः, नाप्युच्चारणार्थ इति भावः। तत्र कथधातोर्णिचि अतो लोपे 'कथि' इत्यस्मात् तिपि शपि गुणे अयादेशे कथयतीति रूपं वक्ष्यति। तत्र णिचमाश्रित्य उपधावृद्धिमाशङ्क्याह—अल्लोपस्य स्थानिवद्भावादिति। अचः परस्मिन्नित्यनेनेति भावः। अत्रेदमवधेयम्। स्थानिनि सति शास्त्रीयं यत्कार्यं तदेव 'स्थानिवदादेशोऽनल्विधा'वित्यत्रातिदिश्यते। यत्तु स्थानिनि सति निमित्तव्याघातान्न भवति तस्याऽभावस्य अशास्त्रीयत्वान्नाऽतिदेशः। अन्यथा 'नायक' इत्यत्र ईकारस्थानिकस्य ऐकारस्य आयादेशानापत्तेः। ईकारे स्थानिनि सति आयभावस्य इष्टत्वेन तस्याप्यैकारे अतिदेशप्रसङ्गात्। 'अचः परस्मिन्' इत्यत्र तु स्थानिनि सति यत् शास्त्रीयं कार्यं प्रसज्यते तस्य, तदभावस्य चाशास्त्रीयस्याप्यतिदेश इति भाष्ये स्पष्टम्। अतोऽत्र थकारादकारे सति प्रसक्तस्य उपधावृद्ध्यभावस्य अशास्त्रीयत्वेऽप्यतिदेश इति सिद्धम्। लुङि चङि 'अचकथत्' इत्यत्र सन्वत्त्वमाशङ्क्याह—अग्लोपित्वादिति। सन्वत्त्वविषये जायमानोऽभ्यासदीर्घः सन्वत्त्वं नापेक्षत इति पृथगुक्तिः। एवं वरादौ सर्वत्र ज्ञेयम्।

गण संख्याने। चङि अल्लोपस्य स्थानिवत्वात् दीर्घसन्वद्भावयोरभावे 'अजगण'दित्येव प्राप्ते आह—ई च गणः। 'सन्वल्लघुनि' इत्यतः चङ्परे इति, 'अत्र लोप' इत्यतः। अभ्यासस्येति चानुवर्तते। तदाह—गणेरभ्यासस्येति। 'अत्स्मृदृत्वर' इति पूर्वसूत्रादत्ग्रहणं चकारादनुकृष्यते। तदाह—चाददिति। स्तनगदी देवशब्दे इति। प •

स्तनयति। गदयति। अजगदत्। १८६२ पत गतौ वा। वा णिजन्तः। वा अदन्त इत्येके। आद्ये पतयति–पतति। पताञ्चकार। अपतीत्। द्वितीये पातयति। अपीपतत्। १८६३ पष अनुपसर्गात्। गतावित्येव। पषयति। १८६४ स्वर आक्षेपे। स्वरयति। १८६५ रच प्रतियत्ने। रचयति। १८६६ कल गतौ सङ्ख्याने च। १८६७ चह परिकल्कने। परिकल्कनं दम्भः शाठ्यं च। १८६८ मह पूजायाम्। महयति। महति इति शपि गतम्। १८६९ सार १८७० कृप १८७१ श्रथ दौर्बल्ये। सारयति। कृपयति। श्रथयति। १८७२ स्पृह ईप्सायाम्। १८७३ भाम क्रोधे। अबभामत्। १८७४ सूच पैशुन्ये। सूचयति। अषोपदेशत्वान्न षः। असूसुचत् १८७५ खेट भक्षणे। तृतीयान्त इत्येके। खोट इत्यन्ये। १८७६ क्षोट क्षेपे। १८७७ गोम उपलेपने। अजुगोमत् १८७८ कुमार क्रीडायाम्। अचुकुमारत्। १८७९ शील उपधारणे। उपधारणमभ्यासः। १८८० साम सान्त्वप्रयोगे। अससामत्। साम सान्त्वने इत्यतीतस्य तु असीषमत्। १८८१ वेल कालोपदेशे। वेलयति। काल इति पृथग्धातुरित्येके। कालयति। १८८२ पल्यूल लवनपवनयोः १८८३ वात सुखसेवनयोः। गतिसुखसेवनेषु इत्येके। वातयति। अववातत्। १८८४ गवेष मार्गणे। अजगवेषत्। १८८५ वास उप-

---

न्यगर्जने इत्यर्थः। स्तनश्च गदिश्चेति द्वन्द्वः। गदीति इका निर्देशः। गदेरकारान्तात् इकि अल्लोपे गदीति निर्देशः। एवञ्च प्राकरणिकमदन्तत्वं न व्याहन्यते। पत गतौ वेति। गतावर्थे पतधातुः णिचं वा लभत इत्यर्थः। तदाह—वा णिजन्त इति। आधृषीयत्वाऽभावात् विकल्पविधिः। यद्वा वाशब्दस्य अदन्तत्व एवाऽन्वयः। णिच् तु नित्य एव। तदाह—वा अदन्त इत्येके इति। प्रथमपक्षे तु अदन्तत्वमेव तदाह—आद्ये पतयतीति। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। पताञ्चकारेति। णिजभावेऽप्यदन्तत्वात् 'कास्यनेकाच्' इत्यामिति भावः। चङि-अपपतत्। अल्लोपित्वान्न दीर्घसन्वत्त्वे। द्वितीये पातयतीति। तकारादकारस्य उच्चारणार्थत्वादुपधावृद्धिरिति भावः। अपीपतदिति। अल्लोपित्वाऽभावाद्दीर्घसन्वत्त्वे इति भावः। कृपयतीति। अदन्तस्य स्वस्य धात्वन्तरत्वात् 'कृपो रो लः' इति न भवति। स्पृह ईप्सायाम्। आप्तुमिच्छा ईप्सा। अबभामदिति। चङि अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः। सूच पैशुन्ये। अषोपदेशत्वादिति। अनेकाच्त्वादिति भावः। खेट भक्षणे। तृतीयान्त इति। टवर्गतृतीयान्त इत्यर्थः। साम सान्त्वप्रयोगे। सान्त्वप्रयोगः अकटुभाषणम्। अससामदिति। अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः। ननु 'साम सान्त्वने' इति कथादेः प्राक् चुरादौ पाठो व्यर्थः अनेनैव सिद्धेरित्यत आह—साम सान्त्वने इत्यतीतस्य तु असीषमदिति। पूर्वपठिते सामधातौ मकारादकारस्य उच्चारणार्थतया उपधाह्रस्वः, दीर्घसन्वत्त्वे चे-

सेवायाम् । १८८६ निवास आच्छादने । १८८७ भाज पृथक्कर्मणि । १८८८ सभाज प्रीतिदर्शनयोः। प्रीतिसेवनयोः इत्यन्ये । सभाजयति । १८८९ ऊन परिहाणे । ऊनयति । 'ओः पुयण्ज—' ( सू २५७७ ) इति सूत्रे पयोः इति वक्तव्ये वर्गप्रत्याहारजकारग्रहो लिङ्गं 'णिचि अच आदेशो न स्याद्द्वित्वे कार्ये

त्यर्थः । यद्यपि 'साम सान्त्वप्रयोगे' इत्येव प्राक् चुरादौ पठितम् । तथापि सान्त्वनस्य सामप्रयोगादनन्यत्वात्तयोर्क्तिरिति भावः । गवेष मार्गणे । मार्गणम् अन्वेषणम् । चङि अल्लोपस्य स्थानिवत्वान्नोपधाह्रस्वः । तदाह—अजगवेषदिति । निवास आच्छादने । अनिनिवासत् । ऊन परिहाणे । परिहाणं न्यूनीभावः । ऊनयतीति । णावतो लोप इति भावः । ननु लुङि चङि ऊन इ अ त् इति स्थिते णिलोपे 'चङि' इत्यजादेर्द्वितीयस्य नशब्दस्य द्वित्वं अतो लोपे अल्लोपित्वेन सन्वत्वाभावादभ्यासे ह्रस्वदीर्घयोरभावे आटो वृद्धौ औननदिति रूपं वक्ष्यति । तदनुपपन्नम्, द्वित्वात्प्रागेव परत्वादतो लोपे कृते निशब्दस्य द्वित्वे औनिनदित्येवमभ्यासे इकारश्रवणप्रसङ्गात् । नच द्वित्वे कार्ये अतो लोपस्य 'द्विर्वचनेऽचीति' निषेधः शङ्क्यः, अल्लोपनिमित्तस्य णिचो द्वित्वनिमित्तत्वाऽभावात् इत्यत आह—ओः पुयण्जीत्यादि । 'ओः पुयण्ज्यपरे' इति सूत्रे 'ओः पयोरपरयो'रित्येव वक्तव्ये 'पु' इति पवर्गस्य 'यणिति' प्रत्याहारस्य जकारस्य च ग्रहणं लिङ्गमित्यन्वयः । कुत्र लिङ्गमित्यत आह—णिचीत्यादि । द्वित्वे कार्ये णिजिनमित्तकः अच आदेशो न स्यादित्यत्र लिङ्गमिति पूर्वेणान्वयः । तथाहि 'ओः पुयण्ज्यपरे' इति सूत्रम् । 'सनि परे यदङ्गं तदवयवाऽभ्यासोवर्णस्य इकारः स्यात् अवर्णपरकेषु पवर्गयणजकारेषु परत इति तदर्थः । 'पूङ्'-पिपावयिषति, 'भू'-बिभावयिषति, 'यु'-यियावयिषति, 'रु'-रिरावयिषति, 'लूञ्'-लिलावयिषति, 'जु'-जिजावयिषति इत्युदाहरणानि । अत्र द्वित्वे प्रत्ययनिमित्ते णिचि 'द्विर्वचनेऽचि' इति निषेधाऽप्रवृत्त्या द्वित्वात् प्रागेव परत्वाद्वृद्ध्यावादेशयोः कृतयोः अभ्यासेऽवाकारस्य ह्रस्वे सति 'सन्यतः' इत्येव इत्वसिद्धेः पवर्गयणप्रत्याहारजकारग्रहणं व्यर्थम् । पकारयकारग्रहणं तु न व्यर्थम् । पिपावयिषति यियावयिषतीत्यत्र उक्तरीत्या 'सन्यतः' इति इत्वसिद्धावपि पिपविषते यियविषतीत्यत्र पूङ्धातोर्युधातोश्च अण्यन्तात् सनि अभ्यासे इत्त्वार्थं तद्ग्रहावश्यकत्वात् । तत्र हि 'इको झल्' इति कित्त्वात् 'श्र्युकः किति' इति प्राप्तमिण्निषेधं बाधित्वा 'स्मिपूङ्रञ्ज्वशां सनि' इति सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इति च सूत्राभ्यामिटि कृते इडादेः सनो द्वित्वानिमित्तत्वेन इटोऽपि द्वित्वनिमित्ततया 'द्विर्वचनेऽचि' इति गुणावादेशयोर्निषेधे सति 'पू' 'यु' इत्यनयोर्द्वित्वे अभ्यासे अकाराभावेन'सन्यतः' इत्यस्याऽप्रवृत्त्या तत्र इत्वार्थं 'पयो'रित्यावश्यकम् । वर्गप्रत्याहारजकारग्रहणं तु 'द्वित्वे कार्ये णावच आदेशो नेत्यनाश्रयणे व्यर्थमेव । तदाश्रयणे तु बिभावयिषतीत्यादिषु णिचि लुप्ते सति 'चङि' इति द्वित्वे कार्ये प्रत्ययलक्ष-

इति । 'यत्र द्वित्वकार्यमभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः ।' ज्ञापकस्य सजातीयापेक्षत्वात् । तेन अचिकीर्तत् इति सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वम् । तत उत्तरखण्डेऽल्लोपः । औननत् । मा भवानूननत् । १८६० ध्वन शब्दे । अदध्वनत् । १८६१ कूट परितापे । परि-

णमाश्रित्य णिचि गुणावादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्वे अभ्यासे अका-राऽभावेन 'सन्यतः' इत्यस्याऽप्रवृत्त्या वर्गप्रत्याहारजकारग्रहणमर्थवत् । अतः द्वित्वे कार्ये णावच आदेशो नेति विज्ञायते इत्यर्थः । ननु 'कॄत संशब्दने' अस्मात् णौ 'उप-धायाश्च' इति ऋत इत्वे रपरत्वे किर्त इत्यस्मात् लुङि चङि णिलोपे द्वित्वे हलादि-शेषे कस्य चुत्वे उत्तरखण्डे इकारस्य 'उपधायां च' इति दीर्घे अचिकीर्तदिति रूपमि-ष्यते । तन्न युज्यते, द्वित्वे कर्तव्ये णावच आदेशस्य निषिद्धतया इत्वात्प्रागेव कॄत् इत्यस्य द्वित्वे, उरदत्त्वे, रपरत्वे, हलादिशेषे, कस्य चुत्वे, उत्तरखण्डे, ऋत इत्वे, रप-रत्वे, उपधादीर्घे अचकीर्तदित्यापत्तेरित्यत आह—यत्र द्वित्वकार्यमित्यादि । यत्र धातो चङि द्विर्वचने कृते अभ्यासोत्तरखण्डस्य आद्योऽच् अवर्णो लभ्यते तत्रैव द्वित्वे कार्ये णावच आदेशो नेत्ययं निषेध इत्यन्वयः । यद्यपि धातोरवयवस्य एकाचो द्वित्वे कृते अभ्यासोत्तरखण्डे द्वितीयस्याऽचोऽभावादाद्योऽजिति व्यर्थमेव । तथापि स्पष्टार्थं तदि-त्याहुः । नन्वभ्यासोत्तरखण्डस्याद्योऽजवर्णो लभ्यते इत्यत्र किमवर्णः द्वित्वप्रवृत्तिवे-लायां विवक्षितः उत परिनिष्ठिते रूपे विवक्षितः? नाद्यः, क्षुधातोर्ण्यन्तात् सनि चुक्षा-वयिषतीत्यत्र 'क्षु' इत्यस्य द्वित्वे कृते अभ्यासोत्तरखण्डे प्रक्रियादशायामवर्णाऽभावेन वृद्ध्यावादेशयोर्निषेधाऽप्रवृत्त्या द्वित्वात् प्रागेव परत्वाद्वृद्ध्यावादेशयोः क्षाव् इत्य-स्य द्वित्वे चिक्षावयिषतीत्यापत्तेः । न द्वितीयः, ऊन इ अ त् इति स्थिते सति 'न' इत्यस्य द्वित्वे अभ्यासोत्तरखण्डे अल्लोपे सत्यवर्णाऽभावेन णौ अल्लोपस्य निषेधा-प्रवृत्त्या द्वित्वात् प्रागेव परत्वात्तो लोपे सति 'नि' इत्यस्य द्वित्वे औनिनदित्याप-त्तेरित्यत आह—प्रक्रियायां परिनिष्ठिते रूपे वेति । न त्वमुकत्रैवेत्याग्रह इति भावः । सजातीये पुनर्जाम् अभ्यासोत्तरखण्डे अवर्णपरत्वनियमादिति भावः । सिद्धमिति । प्रक्रियायां परिनिष्ठिते वा उत्तरखण्डे अवर्णाऽभावादत इत्वस्य न निषेध इति भावः । एवं च 'चुक्षावयिषति' इत्यत्र 'क्षु' इत्यस्य द्वित्वे प्रक्रियादशायामभ्यासोत्तरखण्डे अवर्णाभावेऽपि परिनिष्ठिते रूपे तत्सत्त्वात् णौ गुणावादेशयोर्भवत्येव द्वित्वे कार्ये निषेधः । औननदित्यत्रापि णौ भवत्येवाऽल्लोपस्य निषेध इत्याह—प्रकृते त्विति । औननदि-त्यत्रेत्यर्थः । नशब्दस्येति । अल्लोपात्प्रागेव नशब्दस्य द्वित्वाश्रयणे प्रक्रियादशायामु-त्तरखण्डे अवर्णलाभादल्लोपस्य निषेधे सति नशब्दस्यैव द्वित्वं न तु निशब्दस्येति भावः । तत इति । नशब्दस्य द्वित्वाऽनन्तरमुत्तरखण्डे अल्लोप इति भावः । अत्र नश-ब्दद्वित्वार्थमेव ऊनधातोरदन्तत्वं स्थितम् । फलान्तरं सूचयन्नाह—मा भवान् ऊनन-

दाहे इत्यन्ये । १८९२ केत १८९३ ग्राम १८९४ कुण १८९५ गुण चामन्त्रणे । चात्कूटोऽपि । कूटयति । संकेतयति । ग्रामयति । कुणयति । गुणयति । पाठान्तरम्–केत श्रावणे निमन्त्रणे च । केतयति । निकेतयति । कुण गुण चामन्त्रणे । चकारात्केतेति । १८९६ कूण सङ्कोचने इति । १८९७ स्तेन चौर्ये । अतिस्तेनत् ।

आ गर्वादात्मनेपदिनः । १८९८ पद गतौ । पदयते । अपपदत । १८९९ गृह ग्रहणे । गृहयते । १९०० मृग अन्वेषणे । मृगयते । मृग्यति इति कण्ड्वादिः । १९०१ कुह विस्मापने । १९०२ शूर १९०३ वीर विक्रान्तौ । १९०३ स्थूल परिबृंहणे । स्थूलयते । अतुस्थूलत । १९०५ अर्थ उपयाच्ञायाम् । अर्थयते । आर्तथत । १९०६ सत्र सन्तानक्रियायाम् । अससत्रत । अनेकाच्त्वान्न षोपदेशः । सिसत्रयिषते । १९०७ गर्व माने । गर्वयते । अदन्तत्वसामर्थ्याण्णिज्विकल्पः । धातोरन्त उदात्तः, लिटि आम् च फलम् । एवमग्रेऽपि । इत्यागर्वीयाः ।

१९०८ सूत्र वेष्टने । सूत्रयति । असुसूत्रत् । १९०९ मूत्र प्रस्रवणे । मूत्रयति-

---

देति । अल्लोपित्वान्नोपधाह्रस्व इति भावः । पाठान्तरमिति । 'केत श्रावणे' इत्यादि ज्ञेयमित्यर्थः । चकारात्केतेति । समुच्चीयते इति शेषः । संकोचने इतीति । इतिशब्दः पाठान्तरसमाप्तौ । स्तेनचौर्ये । अनेकाच्त्वान्न षोपदेशोऽयमिति मत्वा आह—अतिस्तेनदिति । गृह ग्रहणे ऋदुपधोऽयम् । गृहयति इति । अल्लोपस्य स्थानिवत्त्वान्न गुण इति भावः । लुङि अजगृहत । अल्लोपित्वान्न सन्वत्त्वम् । मृग अन्वेषणे । मृगयते इति । इहाप्यल्लोपस्य स्थानिवत्त्वान्न गुणः । 'मार्ग अन्वेषणे' इत्याद्यघोषस्य तु मार्गयति मार्गति इति च गतम् । अर्थ उपयाच्ञायाम् । अर्थयते इति । अर्थ इ इति स्थिते अतो लोपः । न तु 'अचो ञ्णिति' इति वृद्धिः, वृद्धेर्लोपो बलीयानिति न्यायात् । 'अर्थवेदयो'रित्यापुक्तु न, तत्र प्रातिपदिकस्य ग्रहणात् । गर्व माने । अभिमाने इत्यर्थः । ननु कथादावस्य पाठो व्यर्थः, अदन्तत्वे फलाभावात् । नच सन्वत्त्वनिवृत्तो अल्लोपित्वाय अदन्तत्वमिति शङ्क्यम्, लघुपरकत्वाभावादेव तदप्रसक्तेः । नाऽप्यल्लोपस्य स्थानिवद्भावात् उपधावृद्धिनिवृत्त्यर्थमदन्तत्वमिति शङ्क्यम् । गकारादकारस्यानुपधात्वादेव तदप्रसक्तेरित्यत आह–अदन्तत्वसामर्थ्याण्णिज्विकल्प इति । ननु गर्वते इत्यत्र णिजभावेऽप्यदन्तत्वं निष्फलमिति कथं तस्य विकल्पज्ञापकतेत्यत आह—धातोरन्त उदात्त इति । तेन 'गर्वते' इत्यत्र वकारादकार उदात्तः फलति । अदन्तत्वाभावे तु गकारादकार उदात्तः स्यादिति भावः । लिट्याम् चेति । 'गर्वाञ्चक्रे' इत्यत्र 'कास्प्रत्ययादाम्' इत्याम्प्रत्ययोऽप्यदन्तत्वस्य फलमित्यर्थः । अन्यथा अनेकाच्त्वाभावादाम् न स्यादिति भावः । एवमग्रेऽपीति । 'मूत्र प्रस्रवणे' इत्यादावित्यर्थः । इत्यागर्वीयाः । सूत्र वेष्टने । अनेकाच्त्वादषोपदेशत्वादर्थमस्य अदन्तत्वमिति न वाच्योऽस्य णिजिकल्प-

मूत्रति । १९१० रूक्ष पारुष्ये । १९११ पार १९१२ तीर कर्मसमाप्तौ । अपपारत् । अतितीरत् । १९१३ पुट संसर्गे । पुटयति । १९१४ धेक दर्शने इत्येके । अदिधेकत् । १९१५ कत्र शैथिल्ये । कत्रयति-कत्रति । कर्त इत्यप्येके । कर्तयति-कर्तति । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' ( ग सू २०३ ) । प्रातिपदिकाद्धात्वर्थे णिच्स्यात् , इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । पटुमाचष्टे पटयति । परत्वाद्वृद्धौ सत्यां टिलोपः । अपीपटत् । 'णौ चङि-' ( सू २३१४ ) इत्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीयान्' इति स्थितम् । अपपटत् । 'तत्करोति तदाचष्टे' ( ग सू

---

र्थः । कत्र शैथिल्ये । कत इत्यपीति । अदन्तत्वसामर्थ्याद्स्य णिज्विकल्प इति मत्वा आह—कर्तयति कर्ततीति । प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । चुरादिगणसूत्रमिदम् । 'इष्ठ'वदिति सप्तम्यन्ताद्वतिः । तेन भुवमाचष्टे भावयतीत्यत्र 'इष्ठस्य यिट् च' इति यिडागमो न भवति । तदाह-इष्ठे यथेति । अत्र 'धात्वर्थे' इत्यनेन करणम् । आख्यानं दर्शनं वचनं श्रवणमित्यादि गृह्यते । पुंवद्भावेति । अतिशयेन पट्वी पटिष्ठेत्यत्र, भस्याढे' इति पुंवत्त्वम् । 'द्रढिष्ठ' इत्यत्र 'र ऋतो हलादेर्लघोः' इति रभावः । अतिशयेन साधुः साधिष्ठः इत्यत्र टिलोपः । अतिशयेन स्रग्वी स्रजिष्ठः इत्यत्र 'विन्मतोर्लुक्' इति विनो लुक् । अतिशयेन गोमान् गविष्ठः इत्यत्र मतुपो लुक् । अतिशयेन स्थूलः स्थविष्ठः इत्यादौ 'स्थूलदूरयुव' इत्यादिना यणादिलोपः पूर्वस्य च गुणः । अतिशयेन प्रियः प्रेष्ठः इत्यादौ 'प्रियस्थिरे'त्यादिना प्रस्थाद्यादेशः । अतिशयेन स्रग्वी स्रजिष्ठः इत्यत्र भत्वाज्ज कुत्वम् । एते इष्ठे इव णावपि परतः स्युरित्यर्थः । पटयतीति । पटुमाचष्टे इत्यादर्थे णिच् । इष्ठवत्त्वात् टेरिति टिलोप इति भावः । ननु उकारस्य टेर्लोपे सति अग्लोपित्वात् सन्वत्त्वं न स्यादित्यत आह—परत्वाद्वृद्धौ सत्यां टिलोप इति । 'अचो ञ्णिति' इति उकारस्य वृद्धौ कृतायां औकारस्य टेर्लोपः । अकृतायां तु वृद्धौ उकारस्य टेर्लोपः । ततश्च 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः' इति न्यायेन टिलोपोऽनित्यः, वृद्धिस्तु टिलोपे कृते सति नैव भवतीति साऽप्यनित्या । एवंच वृद्धिटिलोपयोरुभयोर्मध्ये परत्वात् उकारस्य वृद्धिः औकारः । तस्याऽवादेशात्प्रागेव परत्वात् वार्णादाङ्गस्य बलीयस्त्वाच्च औकारस्य टेर्लोप इत्यर्थः । एवंच अनग्लोपित्वात् सन्वत्त्वमिति मत्वा आह—अपीपटदिति । एतच्च 'मुण्डमिश्र' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । स्थितमिति । तथाच वृद्धेः प्रागुकारस्य लोपे अग्लोपित्वान्न सन्वत्त्वमित्यर्थः । भाष्ये उभयथा दर्शनाद्रूपद्वयमपि साध्विति बोध्यम् । शब्देन्दुशेखरे तु 'वृद्धेः लोपो बलीयान्' 'णौ चङि' इति सूत्रभाष्यमेव प्रमाणम् , 'मुण्डमिश्र' इति सूत्रभाष्यं त्वेकदेश्युक्तिरिति प्रपञ्चितम् । अत्र पुंवद्भावादिकमुदाह्रियते । एनीमाचष्टे एतयति । पुंवद्भावात् ङीब्नकारयोर्निवृत्तिः । दृढमाचष्टे द्रढयति । 'र ऋत' इति रभावः । स्रग्विणमाचष्टे

२०४)। पूर्वस्यैव प्रपञ्चः। करोत्याचष्टे इति धात्वर्थमात्रं णिजर्थः। तदर्थ-स्त्वविवक्षितः। 'तेनातिक्रामति' (ग सू २०५)। अश्वेनातिक्रामति। अश्वयति। हस्तिनातिक्रामति हस्तयति। 'धातुरूपं च' (ग सू २०६) णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते। चशब्दोऽनुक्तसमुच्चयार्थः। तथा च वार्तिकम्-'आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' (वा १७६६) इति। कंसवधमाचष्टे कंसं घातयति। ४६ कंस-हन्-इ इति स्थिते। २५७४ हनस्तोऽ-

---

स्रजयति। 'विन्मतो'रिति विनो लुक्। गोमन्तमाचष्टे गवयति। मतुपो लुक्। अकृद्वृत्त-परिभाषया न वृद्धिः। स्थूलमाचष्टे स्थवयति इत्यादिषु यणादिलोपः। प्रियमाचष्टे प्रापयति' स्थिरमाचष्टे स्थापयति इत्यादिषु प्रस्थस्फाद्यादेशाः। अत्र वृद्धिर्भवत्येव, 'द्वयो'रिति निर्देशेन अकृद्वृत्तपरिभाषाया अनित्यत्वाश्रयणात्। स्रग्विणमाचष्टे स्रजयति। सुबन्तात् विहितस्य विनो लुकि अन्तर्वर्तिविभक्त्या पदत्वात् प्राप्तं कुत्वं भत्वान्न भवति। तत्करोति तदाचष्टे। इदमपि चुरादिगणसूत्रम्। प्रातिपदिकादित्यनुवर्तते। तत्करोति, तदाचष्टे इति चार्थे प्रातिपदिकाण्णिच् स्यादित्यर्थः। आचारक्विब्वत् प्रातिपदिकादेवेदम्। ननु 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे किमर्थमिदमित्यत आह—पूर्वस्यैव प्रपञ्च इति। ननु करोति आचष्टे इति वर्तमाननिर्देशादकरोदित्याद्यर्थेषु न स्यादित्यत आह—करोत्याचष्टे इत्यादि। लडर्थ इति। उपलक्षणम्। तेन भूते भविष्यति द्वित्वे बहुत्वे च प्रत्ययो भवत्येव। तेनातिक्रामति। इदमपि गणसूत्रम्। 'प्रातिपदिकाद्धात्वर्थे' इत्यस्यैव प्रपञ्चः। वाचा अतिक्रामति वाचयति इत्यत्र कुत्वं तु न शङ्क्यम्, असुबन्तादेव प्रातिपदिकात् प्रत्ययोत्पत्तेः। धातुरूपं चेति। इदमपि गणसूत्रम्। णिच्प्रकृतिरिति, प्रतिपद्यते इति चाध्याहृत्य व्याचष्टे—णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते इति। ननु प्रातिपदिकाद् धात्वर्थे णिच् भवति, णिच्प्रकृतिर्धातुरूपं च प्रतिपद्यते इति प्रतीयमानार्थाश्रयणे भुक्तमाचष्टे भुक्तयतीति न स्यात्। भुक्तशब्दस्य भुजधातुरादेशः स्यादित्यत आह—चशब्दोऽनुक्तसमुच्चयार्थ इति। किमनुक्तं समुच्चीयते इत्यत आह—तथाच वार्तिकमिति। व्याख्यानात् कृत इति। 'हेतुमति च' इति सूत्रे इदं वार्तिकं स्थितम्। आख्यानं वृत्तकथाप्रबन्धः। तद्वाचिनः कृदन्तात् कंसवधादिशब्दात् तदाचष्ट इत्यर्थे णिचि कृते णिच्प्रकृत्यवयवभूतस्य कृतः लुक्, तस्यैव कृतः या प्रकृतिः हनादिधातुरूपा, तस्याः प्रत्यापत्तिः, आदेशादिविकारपरित्यागेन स्वरूपेणावस्थानं भवतीत्यर्थः। 'प्रकृतिवच्च कारकम्' इत्यंशस्तु मूल एव व्याख्यास्यते। कंसवधमाचष्टे कंसं घातयतीत्युदाहरणम्। 'हननं वधः'। 'हनश्च वधः' इति भावे हनधातोः अप्प्रत्ययः प्रकृतेः वधादेशश्च। कंसस्य वधः कंसवधः, तदन्याख्यानपरवाक्यसन्दर्भो विवक्षितः। तमाचष्टे इत्यर्थे णिच्। अप्प्रत्ययस्य कृतो लुक् प्रकृतिभूतस्य हनधातोर्वधादेशस्य च निवृत्तिः। तथाच फलितं दर्शयति—४६ कंस हन् इ इति स्थिते इति। हनस्तोऽचिण्णलोः।

चिण्णलोः ७।३।३२॥ हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति । नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता । ततश्चाड्द्वित्वयोर्दोषः । किंच कुत्वतत्वे न स्याताम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । सत्यम् । प्रकृतिवच्च इति चकारो भिन्नक्रमः-कारकं च । चात्कार्यम् । हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ

---

'हन' इति षष्ठी । 'त' इत्यत्र अकार उच्चारणार्थः । तदाह—हन्तेस्तकार इति । 'अन्तादेश' इत्यलोऽन्त्यपरिभाषया सिद्धम् । ञिति णिति चेति । 'अचो ञ्णिति' इत्यतस्तदनुवृत्तेरिति भावः । तथाच हनो नकारस्य तत्वे 'हो हन्तेः' इति कुत्वेन हस्य घकारे 'घातीति ण्यन्तं फलितम् । ततो लटि 'घातयति' इति रूपं स्थितम् । कृतो लुकि समासनिवृत्तौ सुब्लुकोऽपि निवृत्तौ कंसमिति च स्थितम् । 'आख्यानात् कृतः' इति वार्तिकस्थं 'प्रकृतिवच्च कारक'मित्यंशं शङ्कोत्तरत्वेन योजयिष्यन् शङ्कामवतारयति—नन्विति । कंसविशिष्टस्येति । कंसवधशब्दस्येत्यर्थः । तस्मादेव णिचो विधानादिति भावः । ननु कंसवधशब्दस्य अङ्गत्वे का हानिरित्यत आह—ततश्चेति । कंसवधशब्दस्याङ्गत्वात् अड्द्वित्वयोर्विषये दोषः स्यात् । कंसशब्दात्पूर्वमडागमः स्यात् । कंस् इत्यस्य द्विर्वचनं स्यात् इष्यते तु कंसमजीघतत् इत्येवं हनधातोरेवोभयमित्यर्थः । किं चेति । कंसं घातयतीति कुत्वतत्वे न स्यातामित्यर्थः । कुत इत्यत आह—धातोरिति । धातोर्हन् इत्यादितत्तत्स्वरूपेण ग्रहणे सति तत्प्रत्यये धातोर्विहितप्रत्यये कार्यविज्ञानमिति परिभाषयेत्यर्थः । तेन वार्त्रघ्नमित्यत्र 'हनस्तोऽचिण्णलोः' इति तत्वं न भवतीति 'हनस्तोऽचिण्णलोः' इति सूत्रे भाष्ये स्पष्टम् । तथाच प्रकृते कंसं घातयतीत्यत्र 'हो हन्तेः' इति कुत्वं 'हनस्तोऽचिण्णलोः' इति तत्वं च न स्याताम् । अत्र णिचः प्रातिपदिकाद्विहितत्वेन धातोर्विहितत्वाऽभावादित्यर्थः । अत्र प्रत्ययलक्षणेन कृदन्ततया कृत्प्रकृत्यर्थस्य कर्मत्वेन कंसस्येति षष्ठी । स्यादित्यप्याक्षेपोऽपि बोध्यः, तत्परिहारस्यापि वक्ष्यमाणत्वात् । तामिमां शङ्कामर्धाङ्गीकारेण परिहरति—सत्यमिति । कंसवधशब्दस्यैवाङ्गत्वमित्याद्यङ्गीक्रियते दोषापादनं तु नाङ्गीक्रियत इत्यर्थः । प्रकृतिवच्चेतीति । 'आख्यानात् कृतः' इति वार्तिके प्रकृतिवच्चेति चकारः भिन्नक्रमः । 'प्रकृतिव'दित्यनन्तरपठितः चकारः कारकमित्यस्मादूर्ध्वं निवेशनीय इति भावः । तदेवाभिनीय दर्शयति—कारकं चेति । चकारोऽयमनुक्तसंग्रहार्थं इत्याह—चात्कार्यमिति । 'समुच्चीयते' इति शेषः । तथाच कारकं कार्यं च प्रकृतिवदिति फलितम् । अत्र प्रकृतिशब्देन हेतुमण्णिचः प्रकृतिर्विवक्षिता, व्याख्यानात् । प्रकृताविव प्रकृतिवत् । सप्तम्यन्ताद्वतिः । तदाह—प्रकृतेर्हन्यादेर्हेतुमण्णाविति । 'प्रयुज्यमाने सतीति शेषः । 'कारक'मित्यस्य विवरणं द्वितीयान्तमिति । द्वितीयातृतीयादिकारकविभक्त्यन्तमित्यर्थः । हन्ति कंसं कृष्णः, तं प्रेरयतीत्यर्थे कंसं घातयति, कंसमजीघतदित्यादौ हेतुमण्ण्यन्ते प्रयुज्यमाने यत् द्वितीयादिकारकविभक्त्यन्तं यच्च कार्यं कुत्वतत्वाड्द्वि-

यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशं च कार्यं कुत्वतत्त्वादि तदिहापीत्यर्थः । कंसमजीघतत् । 'कर्तृकरणाद्धात्वर्थे' ( ग सू २०७ ) कर्तुर्व्यापारार्थं यत्करणं न तु चक्षुरादिमात्रमित्यर्थः । असिना हन्ति असयति । १९१६ वष्क दर्शने । १९१७ चित्र चित्रीकरणे । आलेख्यकरणे इत्यर्थः । कदाचिद्दर्शने । चित्र इत्ययमद्भुतदर्शने णिचं लभते । चित्रयति । १९१८ अंस समाघाते । १९१९ वट विभाजने । १९२० लज प्रकाशने । वटि लजि इत्येके । वण्टयति । लञ्जयति । अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये । वण्टापयति । लञ्जापयति । शाकटायनस्तु कथादीनां सर्वेषां पुकमाह । तन्मते कथापयति गणापयति इत्यादि । १९२१ मिश्र सम्पर्के । १९२२ संग्राम युद्धे । अयमनुदात्तेत् । अकारप्रश्लेषात् । असंसङ्ग्रामत । १९२३ स्तोम श्लाघायाम् ।

त्वादि तत्सर्वं 'आख्यानात् कृत' इत्यस्योदाहरणे कंसवधमाचष्टे कंसं घातयति, कंसवधमाचष्ट कंसमजीघतदित्यादावपि भवतीति फलितम् । तत्र कारकमित्यनेन कंसात् षष्ठी निरस्ता, उदाहृतहेतुमण्ण्यन्तस्थले कृद्योगाऽभावेन कर्मणि द्वितीयाया एव सत्त्वात् । 'कार्यं'मित्यनेन तु कुत्वतत्त्वे कंसस्य अड्द्वित्वनिरासश्चेति बोध्यम् । आख्यानशब्दश्च कथञ्चिद्वृत्तानुवादपरः, न तु भारतादिप्रसिद्धकंसवधादिकथापरः । तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिध्यति । 'द्वितीयान्त'मित्यत्र द्वितीयाग्रहणमुपलक्षणम् । तेन पुष्ययोगमाचष्टे पुष्येण योजयतीति सिध्यतीति भाष्ये स्पष्टम् । कर्तृकरणाद्धात्वर्थे । इदमपि गणसूत्रम् । 'प्रातिपदिकाद्धात्वर्थे' इत्यस्यैव प्रपञ्चः । कर्तुः करणं कर्तृकरणं, न तु कर्ता च करणं च इति द्वन्द्वः व्याख्यानात् । तदाह—कर्तुर्व्यापारार्थमिति । अभिमतफलोत्पादनार्थमित्यर्थः । साधकतममिति यावत् । नन्वेवं सति 'करणाद्धात्वर्थे' इत्येव सिद्धे कर्तृग्रहणं व्यर्थमित्यत आह—न तु चक्षुरादिमात्रमिति । कर्तृग्रहणं विहाय करणादित्येवोक्तौ चक्षुरादीन्द्रियमेव सुप्रसिद्धत्वात् करणादिति शब्देन गम्येत । अतः कर्तृग्रहणमित्याहुः । वस्तुतस्तु 'साधकतमं करणम्' इति शास्त्रप्रसिद्धकरणस्य ग्रहणौचित्यात् कर्तृग्रहणं स्पष्टार्थमेव । केचित्तु कर्तृकरणादिति द्वन्द्वमाश्रित्य 'देवदत्तेन वाचयति देवदत्तयती'ति कर्तुरुदाजह्रुः कदाचिद्दर्शने इति । चित्रेत्यनुवर्तते । तदाह—चित्र इत्ययमिति । कदाचिद्दर्शने इत्यस्य विवरणम्—अद्भुतदर्शने इति । चित्र चित्रीकरणकदाचिद्दर्शनयोरित्येव सुवचम् । वटि लजि इत्येके इति । ननु कथादावनयोः पाठो व्यर्थः । इदितोरनयोः टकारजकारान्तयोरदन्तत्वस्याऽप्रसक्तेः फलाभावाच्चेत्यत आह—अदन्तेष्विति । अदन्तेषु पाठबलात् वण्ट लञ्जेति कदाचिददन्तत्वमप्यनयोर्विज्ञाते । अदन्तत्वस्य च फलाभावादतो लोपं बाधित्वा 'अतो वृद्धि' इति वृद्धौ 'अर्तिह्री' इति पुगित्यर्थः । फलितमाह—वण्टापयतीति । शाकटा-

अवस्तोमत्। १९२४ छिद्र कर्णभेदने। करणभेदने इत्यन्ये। कर्ण इति धात्वन्तरमित्यन्ये। १९२५ अन्ध दृष्ट्युपघाते। उपसंहारे इत्यन्ये। आन्दधत्। १९२६ दण्ड दण्डनिपातने। १९२७ अङ्क पदे लक्षणे च। आञ्चकत्। १९२८ अङ्ग च। आञ्जगत्। १९२९ सुख १९३० दुःख तत्क्रियायाम्। १९३१ रस आस्वादनस्नेहनयोः। १९३२ व्यय वित्तसमुत्सर्गे। अवव्ययत्। १९३३ रूप रूपक्रियायाम्। रूपस्य दर्शनं करणं वा रूपक्रिया। १९३४ छेद द्वैधीकरणे। अचिच्छेदत्। १९३५ छद अपवारणे इत्येके। छदयति। १९३६ लाभ प्रेरणे। १९३७ व्रण गात्रविचूर्णने। १९३८ वर्ण वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणम्। सुवर्णं वर्णयति। कथां वर्णयति। विस्तृणातीत्यर्थः। हरिं वर्णयति। स्तौतीत्यर्थः। 'बहुलमेतन्निदर्शनम्' (ग सू २०८) अदन्तधातुनिदर्शनमित्यर्थः। बाहुलकादन्येऽपि बोध्याः। तद्यथा-१९३९ पर्ण हरितभावे। अपपर्णत्। १९४० विष्क दर्शने। १९४१ क्षिप प्रेरणे। १९४२ वस निवासे। १९४३ तुत्थ आवरणे। एवमान्दोलयति। प्रेङ्खोलयति। विडम्बयति। अवधीरयति इत्यादि। अन्ये तु दशगणीपाठो बहुलम् इत्याहुः। तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः। अपरे

---

यनस्त्विति। अचिविशेषोऽयम्। संग्राम युद्धे। गणसूत्रमिदम्। युद्धवाचि संग्रामेति प्रातिपदिकं करोत्यर्थे णिचं लभते इत्यर्थः। ननु 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे किमर्थमिदमित्यत आह—अनुदात्तेदिति। एतदात्मनेपदार्थमिति भावः। ननु संग्रामशब्दस्य प्रातिपदिकस्य अकारान्तत्वात् कथमनुदात्तेत्त्वमित्यत आह—अकारप्रश्लेषादिति। संग्रामशब्दादनुदात्तानुनासिकं पररूपेण प्रश्लिष्य निर्देशादिति भावः। असंसंग्रामतेति। णिचि चङि संग्रामशब्दस्य ण्यन्तस्य अङ्गत्वात् ततः प्रागडिति भावः। एतच्च भृशादिसूत्रे कैयटे स्पष्टम्। अग्लोपित्वान्नोपधाह्रस्वः। सुख दुःख तत्क्रियायाम्। सुखानुकूले दुःखानुकूले च व्यापारे इत्यर्थः। सुख दुःखेति प्रातिपदिकाभ्यां तत्करोतीत्यर्थे णिच् स्यादिति यावत्। 'प्रातिपदिकाद्धात्वर्थे' इत्येव आभ्यां णिजित्याहुः। बहुलमेतन्निदर्शनम्। गणसूत्रमिदम्। एतेषां कथादीनाम् अदन्तानां निदर्शनं पाठ इत्यर्थः। तदाह—अदन्तेति। बहुलग्रहणस्य फलमाह—बाहुलकादिति। अपपर्णदिति। अग्लोपित्वान्न सन्वत्त्वमिति भावः। क्षिप प्रेरणे। क्षिपयति। अग्लोपस्य स्थानिवत्त्वान्न गुणः। एवमग्रेऽपि। वस निवासे। वसयति। अदन्तत्वान्नोपधावृद्धिः। आन्दोलयतीत्यादौ अदन्तत्वेन अग्लोपित्वान्नोपधाह्रस्वः। तदेवं 'बहुलमेतन्निदर्शनम्' इत्यस्य कथाद्यदन्तविषयत्वमुक्त्वा मतान्तरमाह—अन्ये त्विति। भ्वादिः, अदादिः, जुहोत्यादिः, दिवादिः, स्वादिः, तुदादिः, रुधादिः, तनादिः, क्र्यादिः, चुरादिरिति दशगणी, तद्बहिर्भूता अपि सौत्राः जुप्रभृतयः, लौकिकाः प्रेङ्खोलादयः, वैदिकाः 'तन्वानि रात्रिभिरसुभ्नन्' इत्यादौ सुभ्रादयश्च संगृहीता भवन्ती-

# रूपलेखन-पङ्क्तिलेखनप्रकारः

**"हलादिः शेषः" इत्यस्य तथा व्याख्यानं कुरुत, येन 'आट, आटतुः' इत्यत्र दोषो न भवेत्।** "हलादिः शेषः" अभ्यासस्यादिर्हल् शिष्यते, अन्ये हलो लुप्यन्ते इति सूत्रार्थे 'पपाच' इत्यादौ अभ्यासस्यादिर्हल् वर्तते, तत्र अन्यहलो लोपो भवति। ननु 'आट, आटतुः' इत्यादौ तु अभ्यासस्याद्यचरो हल् नास्ति तत्र कथं हल्लोपः स्यादिति चेदुच्यते—"ह्रस्वोऽहलादिः शेषः" इति संहितापाठं, अभ्यासस्य ह्रस्वो भवतु। ततोऽभ्यासोऽहल् भवतु—हलर्हितो भवतु, ततोऽभ्यासस्यादिः शिष्येत्, अभ्यासस्याद्यचरो वर्तता नाम इति वाक्यार्थत्रयेण। आदिधातुष्वपि अभ्यासोऽहल् भवतु इति वाक्यार्थेन न काप्यनुपपत्तिरिति दिक्।

**'येन नाव्यवधानम्' इत्यस्याभिप्रायो दर्शनीयः।** ननु "पुगन्तलघूपधस्य च" इत्यत्र "सार्वधातुकार्धधातुकयोः" इत्यस्याङ्गविशेषणत्वे सार्वधातुकार्द्धधातुकाऽव्यवहितस्याङ्गस्येको गुणो भवतीत्यर्थकरणे भिनत्तीत्यत्रापि गुणापत्तिः, तयोरिको विशेषणत्वे तु 'भेत्ता' इत्यत्रापि गुणो न स्यात्तकाररूपस्यैकवर्णस्य व्यवधानेन सार्वधातुकाऽव्यवहितत्वाऽभावादित्याशङ्क्य समाधत्ते—'येन नाव्यवधानं तेन व्यवहितेऽपि भवति' इति। यद्वर्णकर्तृकव्यवधानशून्यत्वं न सम्भवति तद्वर्णव्यवधानेऽपि भवतीति तदर्थः। तथाच सूत्रसार्थक्यायैकवर्णव्यवधाने प्रवृत्तावप्यनेकवर्णव्यवधानेऽप्रवृत्त्या 'भेत्ता' इत्यत्र गुणो जातः, 'भिनत्ती'त्यादौ तदभावश्च। "दीधीवेवीटाम्" इत्यत्रत्येड्ग्रहणस्यैवात्र ज्ञापकत्वम्। एवञ्च अस्मिन्निषेधसूत्रे गुणाऽभावार्थमेवेटो ग्रहणम्, उक्तरीत्या गुणाऽभावोपपादनेन व्यर्थमेवेटो ग्रहणं; ज्ञापिते तूक्तार्थे सर्वं समञ्जसम्।

**भवतात् इत्यत्रापवादभूतस्यापि "ङिच्च" इत्यस्य कथमुत्सर्गेण बाधो दर्शितः? तस्सङ्गतार्थतां प्रदर्शयत।** 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परापेक्षयाऽपवादस्य प्रबलत्वात् भवतादित्यादिषु "ङिच्च" इत्यन्तादेशत्वमेव युक्तमिति चेद्, सत्यम्। तथापि अन्तादेशत्वादन्यार्थशून्येषु आनङादिषु चरितार्थो "ङिच्च" इति विधिः, द्विष्टादित्यादौ लघूपधादिगुणनिषेधेन, स्तुतात् युतादित्यादौ "उतो वृद्धिर्लुकि हलि" इति विहिताया वृद्धेर्निषेधेन उष्टादित्यत्र सम्प्रसारणेन च सम्भवत्प्रयोजने तातङो ङकारे मन्दं मन्दं प्रवृत्तः सन् परेणोत्सर्गसूत्रेण बाध्यते। ननु तातङ्विषये "ङिच्च" इति विधिर्मन्दं प्रवर्तताम्, तथापि पूर्वोक्तपरिभाषया परस्यापि सर्वादेशविधेरपवादभूतेन "ङिच्च" इत्यनेन बाध एवोचितः। सत्यम्। तथापि इहोत्सर्गापवादयोर्द्वयोरपि समबलत्वम्। अपवादशास्त्रस्य हि परनित्यान्तरङ्गापेक्षया प्राबल्ये निरवकाशत्वमेव बीजम्। तेन "ङिच्च" इति विधिः आनङादिङित्त्वमन्तादेशत्वैकप्रयोजनकं प्रयोजनान्तरविरहेण निरवकाशत्वात् झटिति परिगृह्णन् कृतार्थतामनुभवन् तातङो ङित्वं प्रयोजनान्तरसत्त्वेन सावकाशत्वादुपेक्षते।

बाधुटो ङित्करणेन 'भूयात्' इत्यत्र गुणाभावरूपस्य फलस्य सत्त्वेऽपि कथं "ङिच्चोक्तेः" इत्यादिग्रन्थेन प्रतिपादितो दीक्षिताभिप्रायः सङ्गच्छते। कथं वा ङिदुक्ति

# रूपलेखन-पङ्क्तिलेखनप्रकारः

**"हलादिः शेषः" इत्यस्य तथा व्याख्यानं कुरुत, येन 'आट, आटतुः' इत्यत्र दोषो न भवेत्।** "हलादिः शेषः" अभ्यासस्यादिर्हल् शिष्यते, अन्ये हलो लुप्यन्ते इति सूत्रार्थः 'पपाच' इत्यादौ अभ्यासस्यादिर्हल् वर्तते, तत्र अन्यहलो लोपो भवति। ननु 'आट, आटतुः' इत्यादौ तु अभ्यासस्याद्यक्षरो हल् नास्ति तत्र कथं हल्लोपः स्यादिति चेदुच्यते—"ह्रस्वोऽ-हलादिः शेषः" इति संहितापाठः, अभ्यासस्य ह्रस्वो भवतु। ततोऽभ्यासोऽहल् भवतु—हल्लोपो भवतु, ततोऽभ्यासस्यादिः शिष्येत्, अभ्यासस्याद्यक्षरो वर्तते नान इति वाक्यार्थत्रयेण। आदिधातुष्वपि अभ्यासोऽहल् भवतु इति वाक्यार्थेन न काप्यनुपपत्तिरिति दिक्।

**'येन नाव्यवधानम्' इत्यस्याभिप्रायो दर्शनीयः।** ननु "पुगन्तलघूपधस्य च" इत्यत्र "सार्वधातुकार्धधातुकयोः" इत्यस्याङ्गविशेषणत्वे सार्वधातुकार्धधातुकाऽव्यवहितस्याङ्गस्येको गुणो भवतीत्यर्थकरणे भिनत्तीत्यत्रापि गुणापत्तिः, तयोरिको विशेषणत्वे तु 'भेत्ता' इत्यत्रापि गुणो न स्यात्तकाररूपस्यैकवर्णस्य व्यवधानेन सार्वधातुकाऽव्यवहितत्वाऽभावादित्याशङ्कां च समाधत्ते—'येन नाव्यवधानं तेन व्यवहितेऽपि भवति' इति। यद्वर्णकर्तृकव्यवधानशून्यत्वं न सम्भवति तद्वर्णव्यवधानेऽपि भवतीति तदर्थः। तथाच सूत्रमार्थस्यास्यैकवर्णव्यवधाने प्रवृत्ताव-प्यनेकवर्णव्यवधानेऽप्रवृत्त्या 'भेत्ता' इत्यत्र गुणो जातः, 'भिनत्ती'त्यादौ तदभावश्च। "दीधी-वेवीटाम्" इत्यत्रत्येङ्ग्रहणस्यैवात्र ज्ञापकत्वम्। एवञ्च अभिमान्त्रेषेधसूत्रे गुणाऽभावार्थमेवेटो ग्रहणम्, उक्तरीत्या गुणाऽभावोपपादनेन व्यर्थमेवेटो ग्रहणं ज्ञापने तूक्तार्थं सर्वं समञ्जसम्।

**भवतात् इत्यत्रापवादभूतस्यापि "ङिच्च" इत्यस्य कथमुत्सर्गेण बाधो दर्शितः? तत्सङ्गतार्थतां प्रदर्शयत।** 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परापेक्षयाऽपवा-दस्य प्रबलत्वात् भवतादित्यादिषु "ङिच्च" इत्यन्तादेशत्वमेव युक्तमिति चेद्, सत्यम्। तथापि अन्तादेशत्वादन्यार्थशून्येषु आनङादिषु चरितार्थो "ङिच्च" इति विधिः, जिघ्रतादित्यादौ लघू-पधादिगुणनिषेधेन, स्तुतात् युतादित्यादौ "उतो वृद्धिर्लुकि हलि" इति प्राप्तायाः वृद्धेर्निषेधेन उष्टादित्यत्र सम्प्रसारणेन च सम्भवत्प्रयोजने तातङो ङकारे सति प्रवृत्तः सन् परेणानेन सूत्रेण बाध्यते। ननु तातङ्विषये "ङिच्च" इति विधिरेव प्रवर्तताम्, तथापि पूर्वोक्तपरि-भाषया परस्यापि सर्वादेशविधेरपवादभूतेन "ङिच्च" इत्यनेन बाध उचितः। सत्यम्। तथापि इहोत्सर्गापवादयोर्द्वयोरपि समबलत्वम्। अपवादशास्त्रस्य हि परनित्यान्तरङ्गापेक्षया प्राबल्ये निरवकाशत्वमेव बीजम्। तेन "ङिच्च" इति विधिः आनङादिष्वन्तादेशत्वैकप्र-योजनकं प्रयोजनान्तरविरहेण निरवकाशत्वात् झटिति परिगृह्णन् कृतार्थतामनुभवन् तातङो ङित्त्वं प्रयोजनान्तरसत्त्वेन सावकाशत्वादुपेक्षते।

**यासुटो ङित्करणेन 'भूयात्' इत्यत्र गुणाभावरूपस्य फलस्य सत्त्वेऽपि कथं "ङित्वो-क्तेः" इत्यादिग्रन्थेन प्रतिपादितो दीक्षिताभिप्रायः सङ्गच्छते। कथं वा ङित्वोक्ति**

**परित्यज्य शानचः शित्त्वमाश्रितमित्युदाहरणपुरस्सरं लेखसौष्ठवेन व्याख्येयम्।** भूयादित्यत्र यासुटो ङित्वस्य गुणाभावरूपं न फलं, गुणाभावस्य लिङो ङित्त्वेनैव सिद्धत्वात्। 'यदागमा' इति न्यायेन यासुडागमो लिङादेशपरस्मैपदावयवः। अवयवे कृतं ङित्त्वमानर्थक्यात्तदङ्गन्यायेन समुदाये आगमविशिष्टतिबादौ विश्राम्यति, ततश्च स्थानिवत्त्वेनैव ङित्त्वसिद्धेर्यासुटो ङित्त्वविधिर्व्यर्थः। न च स्थानिभूतलिङो लकारस्याल्त्वेन गुणनिषेधविधावाश्रयणादनल्विधाविति निषेधः शङ्क्यः। "घुमास्थागापाजहातिसां हलि" इति "क्ङिति" विहितस्य ईत्त्वस्य "न ल्यपि" इति निषेधेनानुबन्धकार्येऽनल्विधाविति निषेधाभावज्ञापनाद्दतो दीक्षिताभिप्रायः सङ्गत एव। ननु क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेध इत्यत्र यासुटो ङित्त्ववचनं ज्ञापकं भवितुं नार्हति। अनुबन्धकार्ये सर्वत्रानल्विधाविति निषेधाभावे सत्यपि यासुटो ङित्त्वस्य तिप्सिप्मिबागमयासुटो ङित्त्वार्थमावश्यकत्वात्। नहि लिङादेशत्वेऽपि तिप्सिप्मिपां ङित्त्वं स्थानिवत्त्वलभ्यम्। "हलः श्नः शानज्झौ" इति सूत्रभाष्ये "ङिच्च पिन्न पिच्च ङिन्न" इति प्रपञ्चितत्वात्। अत एव स्यादित्यादौ विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात् "उतो वृद्धिर्लुकि हलि" इति न प्रवर्तते इत्यपरितोषात् ङित्त्वोक्तिं परित्यज्य शानचः शित्त्वमाश्रितम्।

**यासुटो ङित्करणस्य प्रयोजनं निरूपय।** "न ल्यपि" इति सूत्रेणाऽनुबन्धकार्ये कर्तव्ये "अनल्विधौ" इति निषेधो न प्रवर्तते इति ज्ञापितेन स्थानिवद्भावात् लिङ्वृत्तिङित्त्वधर्मस्यानयनेन ङित्त्वप्रयुक्ते कार्ये सिद्धे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति सूत्रे ङिद्ग्रहणं व्यर्थमेव। तदेव व्यर्थं सत् 'क्वचिदनुबन्धकार्येऽपि "अनल्विधौ" इति निषेधः प्रवर्तते' इति ज्ञापयति। तेन 'वक्ष्यमाणा' इत्यत्र ङीपोऽभावः सिद्ध इति फलम्। न च भाष्ये "पिच्च ङिन्न ङिच्च पिन्न" इति व्याख्यानादौपदेशिकत्वेन तिबादिवृत्तिपित्त्वेन आरोपितो लिङ्वृत्तिङित्त्वधर्मो बाध्यते इति "यासुट्" इति सूत्रे ङिद्ग्रहणं सफलमिति वाच्यम्? "हलः श्नः शानज्झौ" इत्यत्र पूर्ववत्स्थानिवत्त्वेन शित्त्वधर्मस्य आनयनेन सिद्धौ व्यर्थीभूतेन शानज्झटकशकारेण पूर्वार्थस्य ज्ञापितत्वात्।

**"अतो येयः" इत्यत्र 'सार्वधातुके' इत्यनुवृत्तेः फलं लिख।** "अतो येयः" इत्यत्र सार्वधातुकपदाननुवृत्तौ मध्ये पठिता अपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्" इति न्यायात् "अतो येयः" इति शास्त्रम् "अतो लोप" इत्यस्यैव बाधकं भवेत्, न तु "अतो दीर्घो यञि" इति सूत्रस्य। एवञ्च 'चिकीर्ष्याद्' इत्यत्र इयादेशापत्तिः, भवेदित्यत्र च परत्वाद् "अतो दीर्घो यञि" इति सूत्रेण दीर्घापत्तिरिति दोषद्वयपरिहारार्थं सार्वधातुकपदानुवृत्तिः कार्येति दिक्।

**'भवेयुः' इत्यत्र "उस्यपदान्तात्" इत्यस्य प्राप्तिः कथं वारिता।** 'भवया—उस्' इति जाते अत्र परत्वान्नित्यत्वाच्च "उस्यपदान्तात्" इति सूत्रं बाधित्वा "अतो येयः" इति इयादेशे 'भवेयुः' इति प्राञ्चः। वस्तुतस्तु सार्वधातुकसंज्ञानिरपेक्षस्य "उस्यपदान्तात्" इति सूत्रस्यान्तरङ्गत्वेन पररूपमेव न्याय्यं स्यादिति "अतो येयः" इति सूत्रस्य सार्वधातुकावयवस्य यास् इत्यस्येयादेशः स्यादिति व्याख्या कार्या। तेन च सलोपस्यापवाद इय् स्यात्। न च 'अतो यास् इय्' इत्यत्र सस्य इये कृते लोपे च सति यलोपस्यासिद्धत्वात् गुणो न भवतीति वाच्यम्। लोपस्यासिद्धत्वादिति दिक्।

**'प्रत्यये किम्? वव्रश्च, इमां फक्किकां यथार्थं प्रतिपादय।** ओव्रश्चू छेदने, लिटि णल् द्वित्वं "लिट्यभ्यासस्य" इति अभ्यासरेफस्य सम्प्रसारणम् ऋकारः। उरत्। रपरत्वम्। हलादिः शेषः। 'वव्रश्च' इति रूपम्। "उरत्" इत्यत्र अङ्गस्याधिकारो वर्तते। ततश्चाङ्गावयवाभ्यासकारस्याऽत्स्यात्प्रत्यये परे इति सूत्रार्थो भवति। एवञ्चात्त्वादेशः परिनिमित्तो भवतीति वकारस्य सम्प्रसारणे कर्तव्ये "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण ऋकारवृत्तिसम्प्रसारणत्वमकारे आनीय "न सम्प्रसारणे सम्प्रसारणम्" इति सूत्रेण वकारस्य सम्प्रसारणं न भवति। यदि अङ्गेन प्रत्ययस्याक्षेपो न स्यात्तदा "अचः परस्मिन्" इति सूत्राप्रवृत्त्या वकारस्य सम्प्रसारणं स्यादेव।

**आमो मकारस्येत्वाभावं निरूप्य "कृञ्ग्रहणसामर्थ्यादन्यस्याप्रयोगे प्रमाणं दर्शय।** ननु "इजादेश्च गुरुमतोऽनृच्छः" इत्येतत्सूत्रविहिताऽऽम्घटकमकारस्य हलन्त्वेन इत्संज्ञा स्यादिति चेद्? न। आस्धातोः कास्धातोश्च "दयायासश्च" "कास्प्रत्ययादाममन्त्रे लिटि" इति आम्विधानसामर्थ्यात्। यद्यत्र मकारस्येत्संज्ञा स्यात्तदा आस्धातोः कास्धातोश्चाऽऽम्विधानं व्यर्थं स्यात्तत्रापीत्संज्ञाया दुर्वारत्वादिति तत्सामर्थ्यादित्संज्ञाऽभावकल्पनेन न प्रकृते काप्यापत्तिः। न च मित्त्वादन्त्यादचः परत्वसामर्थ्यादसंजातविरोधिन्यायेन सवर्णदीर्घस्यैव बाधोऽस्त्विति वाच्यम्। सवर्णदीर्घबाधापेक्षया इत्संज्ञाबाधस्यैव समुचितत्वात्। ननु "कृञ्चानुप्रयुज्यते" इत्यतः कृञोऽनुवृत्त्यैव सिद्धे "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इत्यत्रत्यकृञ्ग्रहणं फलाभावद्व्यर्थं सञ्ज्ञापयति—भवत्यन्यस्याऽप्यनुप्रयोगः। तेन "कृभ्वस्तियोगे सम्पद्यमाने कर्तरि च्विः" इत्यत्र कृशब्दमादाय "कृञो द्वितीया" इत्येतद्घटकञकारेण कृञ्प्रत्याहाराश्रयणेन कृभ्वस्तीनामनुप्रयोगलाभः। तेषां कृभ्वस्तीनां क्रियासामान्यवाचकत्वेनाऽम्प्रकृतीनां क्रियाविशेषवाचित्वेन तदर्थयोरभेदान्वयः सामान्यविशेषयोर्घटो नीलघट इत्यादौ विधेयांशेऽधिकावगाहिशाब्दबोधस्य नवीनैरभ्युपगमात्। नचोक्तरीत्या कृभ्वस्तिलाभे सम्पदोऽपि प्रत्याहारान्तर्गतत्वेन लाभात्कुतो न प्रयोग इति वाच्यम्। तस्य तथात्वेऽपि अनन्वितार्थत्वेन अप्रयोगात्। तथा च-एधाञ्चक्रे इत्यादित एककर्तृकभूतानद्यतनपरोक्षकालिकवृद्ध्यभिन्नक्रियेति शाब्दबोधः।

**'इन्दाञ्चकार' इत्यत्रापि कुतो न तङिति साधु वदत।** नन्विन्दाञ्चकारेत्यादौ परगामिनि क्रियाफले "आम्प्रत्ययवत्" इति सूत्रेण मास्त्वात्मनेपदम् 'इदि परमैश्वर्ये' इति धातोः परस्मैपदित्वेनात्मनेपदाभावात्। आत्मगामिनि तु क्रियाफले "स्वरितञितः" इत्यात्मनेपदं दुर्वारम्। अस्य सूत्रस्य एधाञ्चक्र इत्यादौ परगामिनि क्रियाफले आत्मनेपदस्याप्राप्तस्य विधान एव समर्थतया तत्रात्मनेपदस्य निवारणे सामर्थ्याभावात् इति प्रष्टुराशयः। उत्तरयितुस्त्वयमाशयः—अस्मिन् सूत्रे "पूर्ववत्सनः" इति पूर्वसूत्रात्पूर्ववदित्यनुवर्त्य "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इत्येकं वाक्यं, "पूर्ववत्कृञोऽनुप्रयोगस्य" इति द्वितीयं वाक्यम्। तत्र पूर्ववदिति तृतीयान्ताद्वतिः। पूर्वेण पूर्वप्रयुक्तेन एधादिधातुना तुल्यमित्यर्थः। तत्र वाक्यद्वयस्य समानार्थकत्वे वैयर्थ्याद् द्वितीयं वाक्यं नियमार्थं सम्पद्यते पूर्ववदेवात्मनेपदं नतु तद्विपरीतमिति। एवञ्च पूर्ववाक्येन एधाञ्चक्रे इत्यादौ कृञः परगामिन्यपि क्रियाफले आत्मनेपदविधिः, द्वितीयवाक्येन तु इन्दाञ्चकारेत्यादौ कर्तृगामिनि क्रियाफले "स्वरितञितः" इत्यात्मनेपदस्य निवृत्तिः क्रियते।

**"एकाच उपदेशेऽनुदात्तात्" इति सूत्रे एकाज्ग्रहणस्य प्रयोजनमुपपादय।** ननु ऊदृदन्तैरित्यादिना परिगणितानामनुदात्तोपदेशधातूनामेकाच्त्वाव्यभिचारादेकाज्ग्रहणं मास्तु। 'उपदेशेऽनुदात्तात्' इत्येवास्तु। एतावतैव कर्त्तृ चकृषे इत्यादाविडनिषेधसिद्धेरिति प्रष्टुराशयः। उत्तरदित्सोस्त्वयमाशयः। यङ्लुकि चर्करितेत्यादौ इण्निषेधव्यावृत्तये एकाज्ग्रहणम्। न च कृतेऽप्येकाज्ग्रहणे कथं यङ्लुग्व्यावृत्तिः। कृते द्वित्वेऽनेकाच्त्वेऽपि धातूपदेशे एकाच्त्वादिति वाच्यम्। "श्तिपाशपाऽनुबन्धेन" इत्यादिकारिकया तन्निषेधात्। एवञ्च व्यर्थीभूतेनानेनैकाज्ग्रहणेनैव ज्ञाप्यते। न च श्तिपाशपाद्यंशे कथमिदं ज्ञापकमिति शङ्क्यम्। एकदेशानुमतिद्वारा सर्वत्र ज्ञापनस्य "उपपदमतिङ्" इत्यादौ दृष्टत्वात्।

**'आदेशश्चेह वैरूप्यसम्पादक एव गृह्यते, शसिददोः प्रतिषेधवचनाज्ज्ञापकात्' इयं फक्किका व्याख्येया।** "अत एकहल्मध्येऽनादेशादेर्लिटि" इति सूत्रेऽनादेशादेरिति पदं आदेश आदौ यस्य स आदेशादिः न आदेशादिरनादेशादिस्तस्येति समासे जाते आदेशपदेन यो हि वैरूप्यस्य रूपान्तरस्य सम्पादकः—कारकः, स एव ग्राह्यः। यथा—'जगाद' इत्यत्र गकारस्य जकारादेशो भवति। तत्र गकारस्यान्यद्रूपं जायते। तथा च ददधात्वादौ दकारस्य दकाररूपादेशे जातेऽपि एत्वाभ्यासलोपौ भवत एव। प्रमाणञ्चात्र "न शसददवादिगुणानाम्" इति सूत्रे एत्वप्रतिषेधार्थं शसिददोः पाठः। अन्यथा आदेशपदेन यदि सामान्यादेशस्य ग्रहणं स्यात्तदा शसिददोरपि "अभ्यासे चर्च" इति सूत्रेण शकारस्य शकाररूपादेशो दकारस्य च दकाररूपादेशो भवत्येवेति तत्रैत्वविधायकसूत्राप्रवृत्तौ निषेधकशास्त्रे तयोः पाठो निष्फल एव।

**षोपदेशकारिका व्याख्यायताम्।** षोपदेशान् संगृह्णाति—"सेक्–सृप्–सृ–स्तृ–सृज्–स्तृ–स्त्याऽन्ये दन्त्याजन्तसादयः। एकाचः षोपदेशाः ष्वष्क्–स्विद्–स्वद–स्वञ्ज–स्वप्–स्मिङः॥" इति। सेगिति–दन्त्याजन्तसादयः एकाचः षोपदेशाः स्युरित्यन्वयः। दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः, तथाविधः सः–सकारः आदिर्येषां ते दन्त्याजन्तसादयः। दन्त्यपरकोऽच्परकश्च यः सकारस्तदादय एकाचो धातव इदानीं कृतसत्वास्सकारादित्वेन परिदृश्यमाना अपि षकारादित्वेनोपदिष्टा इति प्रत्येतव्या इत्यर्थः। नन्वेवं सेकृप्रभृतीनामपि षोपदेशत्वं स्यात्, आद्यानां चतुर्णामच्परकसादित्वादन्त्यानाञ्च त्रयाणां दन्त्यपरकसादित्वादतः सेकृप्रभृतीन्वारयति। नन्वेवमपि ष्वष्कादीनामसङ्ग्रहः स्यात्, एषु सकारस्य दन्त्याच्परकत्वाभावात्, अतस्तान्संगृह्णाति–ष्वष्केत्यादिना। अत्र दन्त्यपदेन केवलदन्त्यो गृह्यते, न तु दन्त्योष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात्।

**"तस्मान्नुड् द्विहलः" इति सूत्रे ऋकारैकदेशस्य रेफस्य हल्त्वेन ग्रहणे द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वे च प्रमाणं प्रदर्शयत।** "तस्मान्नुड् द्विहलः" इति सूत्रे ऋकारैकदेशस्य रेफस्य हल्त्वेन ग्रहणे इदं प्रमाणम्–'एओङ्' 'ऐऔच्' इति हि सूत्रभाष्ये "नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम्' इति प्रतिपाद्य 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इति समर्थितम्। इदमेव च तत्र मानम्। द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वे च द्विग्रहणमेव प्रमाणम्।

अन्यथा हल इत्येव विदध्यात्। आत आटेत्यादौ एकहल्धातुषु तु न दोषः "अश्नोतेश्च" इति नियमात् तस्मादुक्तार्थे प्रमाणं प्रदर्शितम्।

**'उवोख' इत्यत्रामोऽभावं निरूप्य 'ऊखतुः' इति रूपं शङ्कानिरासपूर्वकं साधय।** उखधातोः "परोक्षे लिट्" इति लिटि, तिपि, णलि, द्वित्वे, अभ्यासकार्ये कृते 'उ उख् अ' इति भूते "पुगन्तलघूपधस्य च" इति गुणे "अभ्यामस्यासवर्णे" इत्युवङि 'उवोख' इति जायते॥ न च अत्र इजादिगुरुमत्वात् आम् स्यादिति वाच्यम्। सन्निपातपरिभाषाविरोधात्। तथाहि—आर्धधातुकाव्यवहिताङ्गावयव इक् इत्याकारकसम्बन्धेन जायमानो गुणादेशो गुरुमत्वेन इगाध-धातुकयोर्मध्ये पतिष्यतः आमप्रत्ययस्य निमित्तं न स्यात्। उखधातोः "परोक्षे लिट्" इति लिटि, लिटस्तसि, "परस्मैपदानां णलतुसुस्थल०" इत्यादिना अतुसि द्वित्वे अभ्यासकार्ये उ उख् इति स्थितेऽङ्गाधिकारत्वात् "वार्णादाङ्गं बलीयः" इति परिभाषया 'पर्जन्यवल्लक्षणप्रवृत्ति-र्भवति' इति युक्त्या पूर्वं ह्रस्वो भवति ततो दीर्घः। दीर्घं च कृते "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इति न्यायात् पूर्वान्तवद्भावेनैकादेशे प्राप्तो ह्रस्वो न भवति। परत्वाच्चेत्यस्यायमाश-यः—"अकः सवर्णे दीर्घः" इति सूत्रस्य परत्वान्नाम परकालेन प्रवृत्तत्वात्। तथा च "हलादिः शेषः" इति सूत्रात्पूर्वं ह्रस्वस्ततः खलोपस्ततो दीर्घः। एवञ्चैकस्मिन् काले ह्रस्वदीर्घयोः प्रवृत्त्यभावेन "वार्णादाङ्गम्" इति परिभाषाया विषय एव नास्तीति दीर्घे कृते 'लक्ष्ये लक्षणम्' इति न्यायाद्ध्रस्वाभावः।

**'विव्यतुः' इति शङ्कानिरासपूर्वकं साधय।** अजधातोः "परोक्षे लिट्" इति लिटि, "लिट् च" इति आर्धधातुकसंज्ञायाम् "अजेर्व्यघञपोः" इति वीभावे सति लिटोऽतुसि "लिटि धातोरनभ्यासस्य" इति द्वित्वे अभ्याससंज्ञायाम् अभ्यासकार्ये च कृते "असंयोगाल्लिट् कित्" इति लिटः कित्वाद्गुणाभावे इयङपवादे "एरनेकाच" इति यणि 'विव्यतुः' इति रूपम्। नन्वत्र द्वितीयवकारस्य यकारात्मकहल्परकत्वात् "उपधायाञ्च" इति इकारस्य दीर्घः स्यादिति चेद्? न। ईकारस्थानिकस्य यकारस्य "अचः परस्मिन्" इति स्थानिवत्त्वेन हल्परत्वाभा-वात्। न च "न पदान्त" इति स्थानिवद्भावस्य निषेधः स्यादिति शङ्क्यम्, "स्वरदीर्घयलो-पेषु लोपाजादेश एव न स्थानिवत्" इत्युक्तेः।

**क्रादीनां चतुर्णां ग्रहणस्य नियमार्थत्वमुपपाद्य नियमाकारः स्पष्टमुपपादनीयः।** ननु "कृसृभृ" एषां त्रयाणामनुदात्तत्वात् "एकाच उपदेशेऽनुदात्तात्" इत्यनेन वृञ उदात्त-त्वात् "श्र्युकः किति" इत्यनेन थलोऽकित्वात् "श्र्युकः किति" इत्यस्याप्रवृत्त्या 'ववर्थ' इति वेदे निर्देशाच्च सर्वत्रैवेण्निषेधे सिद्धे चतुर्णां ग्रहणं व्यर्थं सत् "एकाच उपदेशेऽनुदात्तात्" इति प्रकृत्याश्रयेण "श्र्युकः किति" इति प्रत्ययाश्रयेण च लिटीण्निषेधश्चेत्तर्हि क्रादिभ्यश्चतुर्भ्य एवेति नियमयति। वृञस्तु वेदे एवेति च। तेनान्येषां धातूनां लिटीट्, लोके 'ववरिथ' इति च फलद्वयं सिद्ध्यति। स्वादीनां चतुर्णां ग्रहणं तु विधिसम्भावनया भारद्वाजमतेन ऋदन्तातिरिक्तस्वादीनां थलीडागमः प्राप्नोति तन्निषेधार्थम्। वमादिषु क्रादिनियमेन प्राप्तस्येटो निषेधार्थञ्चेति विध्यर्थमेव। तथाहि—क्रादिनियमात् क्राद्यन्येषां धातूनां लिटीट्प्राप्तौ भजन्ता-

नाम् "अचस्तास्वत्थल्यनिटो नित्यम्" इत्यनेन थलीण्निषेधे सिद्धे "ऋतो भारद्वाजस्य" इति सूत्रं व्यर्थं सत् अजन्तानामकारवताञ्च थलीण्निषेधश्चेत्तर्हि ऋदन्तानामेवेति सामान्यापेक्षया नियामकम्। तेन थलि ऋदन्तादन्येषां धातूनां भारद्वाजमतेनेट्, अन्येषामाचार्याणां मते इडभावे च पेचिथ पपक्थ विवयिथ विवेथेत्यादिस्थलेषु द्वे द्वे रूपे सिध्यतः। ननु भारद्वाजनियमेन स्वादीनामपि थलीट् स्यादिति वाच्यम्। 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति परिभाषया "अचस्तास्वत्थल्यनिटो नित्यम्" "उपदेशेऽत्वतः" इति सूत्रद्वयेन प्राप्तस्यैवेण्निषेधस्य भारद्वाजनियमस्य निवर्तकत्वात्। क्रादिनियमेन स्वादिग्रहणम् "अचस्तास्वत्" इति "उपदेशेऽत्वतः" इति सूत्रद्वयञ्चेण्निषेधार्थं वर्तते। तथाच-यथा भारद्वाजनियमेन ऋदन्तातिरिक्तधातुषु सूत्रद्वयं न प्रवर्तते, तथैव स्वादिग्रहणमपि न प्रवर्ततामिति न शङ्क्यम्। "अनन्तरस्य" इति न्यायादित्यलम्।

**'संज्ञायाः कार्यकालत्वात्' इति कारिका व्याख्येया।** शास्त्रेऽस्मिन् 'कार्यकालं संज्ञापरिभाषम्' 'यथोद्देशं संज्ञापरिभाषम्' इति पक्षद्वयमप्यस्ति। तत्र कार्यकालपक्षपातिमाधवमतं तावद्व्याचष्टे—संज्ञाया इत्यादिना। "सन्वल्लघुनि" "दीर्घो लघोः" इति सूत्रद्वये अङ्गस्येति अभ्यासस्येति चानुवर्तते। तेनाङ्गस्य ये द्वे तयोः पूर्वोऽभ्याससंज्ञकस्तस्येति फलितम्। द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याह्रियते। तद्योगादङ्गस्येति कर्मणि षष्ठी। तेन यत्र कृत्स्नमङ्गं द्विरुच्यते न तु तदेकदेशमात्रं तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्त इति। एवञ्चाङ्गस्य एकाच्कत्वे सत्येव तयोः प्रवृत्तिः, नत्वनेकाच्केषु चकास्त्यर्थापयत्यूर्णोत्यादिषु। अत्र ण्यन्तेभ्य एभ्यश्चङि कृत्स्नमङ्गं न द्विरुच्यते, अपि तु हलादेः प्रथमावयवोऽजादेस्तु द्वितीयावयवो द्विरुच्यते। एवञ्चैतेषाम् अचचकासत्; आर्तथपत्। और्णुनवत् इत्येवं रूपाणि भवन्ति। नन्वेवं ह्रस्वहलादिःशेषश्चुत्वादीन्यपि अनेकाच्सु न स्युः। नचेष्टापत्तिः। दिदरिद्रासति, जिगणयिषतीत्यादि लक्ष्यस्य सर्वसम्मतत्वात्। तन्निर्वाहार्थं यथोद्देशपक्षाश्रयत्वाद् आह—वस्तुत इति। अङ्गस्येत्यस्यावयवषष्ठीत्वादङ्गावयवाभ्यासस्येति लभ्यते। ततश्च ऊर्णुञ् ण्यन्ते चङि नु इत्येकदेशस्यापि द्वित्वे और्णूनवदित्यत्र "दीर्घो लघोः" इत्यभ्यासदीर्घो भवति। अर्थमाचष्टे इत्यर्थे णिच्यापुगागमोऽर्थापिधातोश्चङि णिलोपे उपधाह्रस्वे थप् इत्यस्य द्वित्वेऽपि दीर्घस्य 'सन्वत्' इतीत्वस्य च प्रवृत्तौ आर्तिथपदित्येवरूपं भवतीति जानीम इति तृतीयश्लोकार्थः।

अङ्गस्यावयव इति पक्षेऽपि चकास्तौ विशेषमाह—चकास्ताविति। उभयमिदमित्यस्य दीर्घः सन्वच्चेत्येतद् द्वयमित्यर्थः। न स्यात्स्याच्च व्यवस्थया—व्यवस्थया पक्षभेदेनेत्यर्थः। चङ्परे णौ यल्लघ्विति व्याख्याने न स्यात्। चङ्परे णौ यदङ्गमिति व्याख्याने तु स्यात्। एवञ्च अचचकासत्, अचीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः। नन्वस्मिन् व्याख्यानभेदे किं प्रमाणमित्यत आह—इति व्याख्याविकल्पस्येति। ननु णौ इत्यस्यावृत्तिमभ्युपगम्याऽग्लोपेऽपि तदन्वयः किमर्थं इत्यत आह—णेरग्लोपेऽपीति। अगितामपीति—कमु कान्तावित्यादीनामपीत्यर्थः। सिद्धये—दीर्घसन्वद्भावसिद्ध्यर्थमित्यर्थः। अन्यथा कमुप्रभृतीनामुकाराद्यनुबन्धलोपमादायाग्लोपित्वाद्दीर्घसन्वद्भावौ न स्यातामित्यलम्।

**'कथं उदयति' इति शङ्कासमाधानपूर्वकं लिख।** ननु अयधातुरात्मनेपदे पठित इति शानच्प्रत्ययस्यैव युक्तत्वेनोदयतीति शतृप्रत्ययान्तप्रयोगः कथमिति चेद्? न। कटीत्यत्र प्रश्लिष्टस्य ईधातोः प्रयोगस्य सत्वात्। अथवा चक्षिङ्धातौ इकाररूपानुदात्तस्वरेणैवात्मनेपदे सिद्धे ङकारोपादानं व्यर्थं सद् "अनुदात्तेत्वनिमित्तकमात्मनेपदमनित्यं भवति" इति बोधयति। तेन अयधातोरनुदात्तत्वेऽपि उक्तवचनेन शतृप्रत्ययस्य सिद्धिरिति स्वांशे चारितार्थ्यम्। अन्यत्र फलन्तु 'स्फायन्' इत्यत्र अनुदात्तेत्वलक्षणात्मनेपदस्याभाव इति दिक्।

**चिण्प्रत्ययान्तक्रियायां सर्वत्र तृतीयान्तस्य कर्तुरन्वयो दृश्यते, एवं सति 'अप्यायि तरुहस्तोऽसौ' इत्यत्र असौ इत्यस्य अप्यायि इत्यत्र अन्वयः कथं सङ्गच्छते इति प्रतिपादय।** अत्र चिण्प्रत्ययो भावकर्मणोर्विधीयते तत्रैव कर्ता तृतीयान्तो भवति, प्रत्ययेन भावकर्मणोरुक्तत्वात्कर्तुश्चानुक्तत्वात् अनुक्ते कर्तरि तृतीयाविधानात्। 'अप्यायि तरुहस्तोऽसौ' इत्यत्र तु "दीपजन" इत्यादिना कर्तर्येव चिण्विधानेन कर्तुरभिहितत्वात्प्रथमैव युक्ता। अतोऽसाविति पदस्य नासङ्गतिः।

**'घस्लृ–अदने' अस्य प्रयोगः कस्मिन् लकारे भवति कस्मिन् लकारे नेति सप्रमाणं लिख।** घस्लृ–अदने अस्यं न सर्वत्र प्रयोगः। यद्ययं सार्वत्रिकः स्यात् तदा लिट्यपि प्रयुज्येत। ततश्च 'अद भक्षणे' इति धातोः "लिट्यन्यतरस्याम्" इति घस्लृभावविधिर्व्यर्थः स्यात्। ननु असार्वत्रिकत्वे सति क्व प्रयोगः क्व नेति चेद्? यत्र घस्लृधातोः प्रयोगे ज्ञापक प्रत्यक्षवचनं वास्ति तत्रैवास्य प्रयोगः। यथा—भ्वादिगणे अत्रैव क्रमे अस्य पाठः शपि परस्मैपदे प्रयोगे लिङ्गमित्यर्थः। न च धातुसंज्ञार्थः पाठः इति शङ्क्यम्, द्युत दीप्तावित्यतः प्राक् पाठेनैव सिद्धे अत्र क्रमे तत्पाठवैयर्थ्यात्। लृकारोपादानम् अङि प्रयोगं बोधयति। अनिट्कारिकासु पाठो वलाद्यार्धधातुके प्रयोगं बोधयति। "सृघस्यदः क्मरच्" इति सूत्रं क्मरच्प्रत्ययविषये प्रयोगो भवतीति बोधयति। एवञ्च—लिङ्गवचनाभावादाशिष्यस्याप्रयोगः।

**स्यन्दूप्रस्रवणे धातोर्लृटि प्रथमपुरुषैकवचने शङ्कानिरासपूर्वकं रूपं प्रसाधय।** ननु लृटि स्ये सति "वृद्भ्यः स्यसनोः" इति परस्मैपदपक्षे परत्वादूदिल्लक्षणमिड्विकल्पं बाधित्वा "न वृद्भ्यश्चतुर्भ्यः" इति इण्निषेधे स्यन्त्स्यतीत्येव रूपमिष्यते, न तु स्यन्दिष्यति इति। तदयुक्तम्, अन्तरङ्गतया ऊदिल्लक्षणस्यैव इड्विकल्पस्य उचितत्वात् सकारादिविशेषापेक्षतया तङानाभावनिमित्तापेक्षतया च "न वृद्भ्यश्चतुर्भ्यः" इति निषेधस्य बहिरङ्गत्वादिति चेद्, न। "वृद्भ्यः स्यसनोः" इति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा "न वृद्भ्यश्चतुर्भ्यः" इति निषेधः, चतुर्ग्रहणसामर्थ्यात्। यदि अत्र ऊदिल्लक्षण इड्विकल्प एव स्यात्, न तु "न वृद्भ्यश्चतुर्भ्यः" इति निषेधः, तर्हि चतुर्भ्यः इति व्यर्थं स्यात्। न च कृपूर्व्यावृत्तिस्तत्फलमिति शङ्क्यम्, "तासि च क्लृपः" इति चकारेण सकारादार्धधातुकेऽपि नित्यमिण्निषेधप्रवृत्तेर्वक्ष्यमाणत्वात्। तथाच चतुर्ग्रहणं चतुर्णामपि सर्वत्र इण्निषेधार्थमिति दिक्।

**'मस्त्योदके अनुष्यन्देते' इत्यत्र षत्वं कथमिति ब्रूत।** ननु 'मस्त्योदके अनुष्यन्देते'

इत्यत्र कथं षत्वं प्राणिकर्तृकत्वस्याऽपि सत्त्वादिति चेदुच्यते—अप्राणिषु इति पर्युदासात् मत्स्योदके अनुष्यन्देते इत्यत्रापि पक्षे षत्वं भवत्येव। प्राणिकर्तृकस्य नेति न प्रतिषेधः, येनात्र प्राणिकर्तृकत्वस्यापि सत्वात् षत्वं न स्यात्। किन्तु प्राणिभिन्नकर्तृकस्येति पर्युदास आश्रीयते। एवञ्च प्राण्यप्राणिकर्तृकस्यापि अप्राणिकर्तृकत्वानपायादिह षत्वं निर्बाधमिति दिक्।

**'कमलवनोद्घाटनम्' अत्र शङ्कासमाधानं निरूप्यताम्।** ननु धातुपाठेऽर्थनिर्देशस्योपलक्षणत्वादर्थान्तरवृत्तेरपि घटधातोर्घटादिकार्यम्भवत्येव, अत एव घटयति विघटयतीत्यादावपि—संश्लेषयति विश्लेषयतीत्याद्यर्थेऽपि ह्रस्वः प्रवर्तते। एवञ्च विकसनार्थेऽपि उद्घाटनमित्यादिषु घटधातोर्णौ मित्वात् ह्रस्वः स्यादिति शङ्काकर्तुराशयः। समाधित्सोस्त्वयमाशयः—चुरादौ 'घट सङ्घाते' इति धात्वन्तरम्, तस्य णौ मित्वाभावादुपधाह्रस्वाभावे उद्घाटनं प्रविघाटयेत्यादिरूपम्। अर्थनिर्देशस्योपलक्षणतया सङ्घातादन्यत्र विकसनेऽपि तस्य वृत्तिरिति। न च चौरादिकस्य घट चेष्टायामित्यस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यम्। "नान्ये मितोऽहेतौ" इति निषेधात्। अहेतौ—स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेति तदर्थः।

**'विव्यथे' इति रूपं शङ्कानिरासपूर्वकं प्रसाधय।** व्यथ् व्यथ् ए इति स्थिते 'सत्यपि सम्भवे बाधनं भवति' इति वचनेन यलोपविषये हलादिशेषलभ्यं यकारस्य लोपं बाधित्वा "व्यथो लिटि" इति सूत्रेण सम्प्रसारणे थकारस्य "हलादिशेषः" इति लोपे "न सम्प्रसारणे सम्प्रसारणम्" इति निषेधे च कृते 'विव्यथे' इति रूपम्। न च 'अभ्यासविकारे बाध्यबाधकभावो नास्ति' इति वचनेन 'हलादिशेषापवादः' इति ग्रन्थासङ्गतिरिति वाच्यम्। "लिट्यभ्यासस्योभयेषाम्" इति सूत्रे उभयेषां ग्रहणसामर्थ्येन अभ्यासलोपविषये उक्तवचनाप्रवृत्तेः।

**'विज्ञापना भर्तृषु सिद्धिमेति' 'तज्ज्ञापयत्याचार्यः' इत्यत्र च "मितां ह्रस्वः" इति कस्मान्न प्रवर्तते।** घटादौ मित्त्वप्रकरणे "मारणतोषणनिशामनेषु ज्ञा" इति पठितम्। तत्र निशामनं चाक्षुषज्ञानम् इति माधवः। अन्ये तु ज्ञापनमात्रम् अर्थमाहुः। हरदत्तादयस्तु निशामन इत्यत्र निशानेष्विति पेठुः। निशानञ्च तीक्ष्णीकरणम्। एष्वेवार्थेषु मित्त्वं नान्यत्रेत्यनेन नियम्यते। विज्ञापनेत्यत्र तज्ज्ञापयतीत्यत्र च अचाक्षुषज्ञानस्यैवात्मज्ञानस्य विवक्षितत्वात् मित्त्वाभावान्माधवमते ह्रस्वो न प्रवर्तते। बोधनमात्रे तु उक्तं रूपद्वयं ज्ञा नियोगे इति चौरादिकस्य बोध्यम्। धातूनामनेकार्थत्वाच्च तस्य ज्ञापने वृत्तिः। 'नान्ये मितोऽहेतौ" इति निषेधान्न मित्त्वम्। निशानेष्विति हरदत्तादीनां मते तु उक्तप्रयोगयोर्ज्ञापनार्थवृत्तित्वात् ज्ञापनस्य च मारणतोषणतीक्ष्णीकरणान्यत्वात् तस्मिन्नर्थे ज्ञाधातोर्मित्त्वप्रसक्तिरेव नास्तीति दिक्।

**"न कम्यमिचमाम्" इत्यतो न उत्तरत्रानुवर्तते न वेति व्याख्येयम्।** स्वामी "न कम्यमिचमाम्" इति सूत्रात् शमो दर्शने इत्यादिसूत्रत्रये नञ्पदस्यानुवृत्तिं न करोतीति स्वामिमते—आशामयतीति उदाहरणे आयमयतीति स्यात्। यमयतीति प्रत्युदाहरणे यामयति ब्राह्मणानिति स्यात्। एवमवस्खादयति परिस्खादयतीत्युदाहरणे अवस्खदयति परिस्खदयतीति स्यात्। प्रत्युदाहरणे च प्रस्खादयतीति स्यात्। एवञ्च

पर्यवसितं नियमयन्निति प्रयोगः साधुरेव। नञ्पदानुवृत्तौ तु यमोऽपरिवेषणे "खदिरवपरि-
ज्याञ्च" इति सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः। इदं च स्वामिमतं वृत्तिन्यासादिवि-
रोधाद्धेयमेव।

**भ्राजधातोरुभयत्र पाठे को विशेष इति लिख।** भ्राजधातोः फणादौ पाठः "फणाञ्च
सप्तानाम्" इति सूत्रेण एत्वाभ्यासलोपार्थः। पूर्वं पाठस्तु "व्रश्चभ्रस्ज०" इति सूत्रेण प्राप्तस्य
षत्वस्य निषेधार्थः। तत्र हि राजधातुः फणादिर्गृह्यते, तत्साहचर्याच्च भ्राजधातुरपि फणादिरेव
ग्राह्यः, इति पूर्वपठितभ्राजधातुविषये षत्वाभावः सिद्ध्यतीति दिक्।

**'सस्वरिव' इत्यत्रेडागमः केन भवतीति प्रदर्शय।** "आर्धधातुकस्येड्वलादेः" इत्या-
दिविधिशास्त्रेभ्यः प्राक् "नेड्वशिकृति" "श्र्युकः किति" इत्यादिसूत्राणां प्रकरणमाचार्येण
कृतमिति तत्सामर्थ्येन परमपि "स्वरतिसूति०" इत्यादिसूत्रं बाधित्वा "श्र्युकः किति" इति
निषेधः प्राप्तस्तमपि बाधित्वा क्रादिनियमान्नित्यमिट् भवतीति दिक्।

**'प्रणिमयते' इत्यत्र मारूपाभावात् णत्वं कथमिति ब्रूत।** ननु प्रणिमयत इत्यत्र
"नेर्गदनद०" इति णत्वं न सम्भवति, शिद्विषये आत्वाभावेन मारूपाभावात्। तथा प्रणिमा-
नशब्देऽपि णत्वं न सम्भवति, तत्र मेङः कृतात्वस्य लाक्षणिकमारूपत्वात्। "गामादाग्रहणे-
ष्वविशेषः" इत्याश्रित्य मेङोऽपि कृतात्वस्य णत्वविधौ ग्रहणे तु मानानिमिनोत्योरात्वे प्रनि-
माता प्रनिमास्यति इत्यत्रापि नेर्णत्वापत्तिरिति चेद्? उच्यते। "नेर्गदनद०" इति णत्वविधौ
घुमेत्यस्य स्थाने घुप्रकृतिमाङिति पठित्वा तत्र प्रकृतिशब्दस्य घुमाङ्प्रकृतिपरत्वमाश्रित्य घौ
माङ्धातौ घुमाङ्प्रकृतौ च परतः इति पर्यवसानमाश्रित्य माप्रकृतेर्ङितो मेङ्धातोः कृतात्व-
स्यापि ग्रहणस्य भाष्यकृता अभ्युपगतत्वात्। एवञ्च प्रणिमयते इत्यत्र नाव्याप्तिः, मेङः कृतात्व-
माकृतित्वे सति ङित्वात्। नापि मीनातिमिनोत्योरात्वे प्रनिमाता प्रनिमास्यतीत्यत्र अति-
व्याप्तिः, मारूपस्य ङित्वाभावात्। एतच्च घुसंज्ञासूत्रे भाष्ये स्थितम्।

**'परिष्कण्णः' इत्यत्र णत्वं भवति न वेति युक्तियुक्तं प्रतिपादय।** 'परिष्कन्दत्' इति
स्थिते "अनिदिताम्" इति नलोपे "रदाभ्याम्" इति निष्ठातकारस्य तत्पूर्वदकारस्य च नत्वे
सत्यानेन षत्वपक्षे प्रथमनकारस्य रेफापेक्षया भिन्नपदस्थत्वेऽपि षात् परत्वात् णत्वे द्वितीयन-
कारस्य ष्टुत्वेन णत्वे 'परिष्कण्णः' इति रूपम्। ननु दकारस्थानिकनकारस्य षकारनिमित्तकं
णत्वमन्तरङ्गम्, निमित्तनिमित्तिनोरेकपदस्थत्वात्। षत्वं तु परि इत्युपसर्गात्मकपदान्तर-
स्थमिणं निमित्तीकृत्य प्रवर्तमानं बहिरङ्गम्। ततश्च णत्वे कर्तव्ये बहिरङ्गस्य षत्वस्यासिद्धत्वात्
षात्परत्वाभावात् कथं णत्वमिति चेद्? उच्यते। पदद्वयाश्रयतया बहिरङ्गस्य षत्वस्यासिद्धत्वं
यत्प्रसक्तं तन्नाश्रीयते। "धातूपसर्गयोः कार्यमन्तरङ्गम्" इत्यभ्युपगमात्। पूर्वं धातुरुपसर्गेण
सह युज्यते—सन्ध्यादिकार्यं लभते। पश्चात्—धातूपसर्गकार्यप्रवृत्त्यनन्तरं साधनेन युज्यते। पूर्वं
धातुः साधनेन युज्यते, पश्चादुपसर्गेण इति पक्षे तु षत्वस्य बहिरङ्गतया असिद्धत्वान्न णत्व-
मिति याथार्थ्यम्।

**'विव्याय' इत्यत्र परत्वात् हलादिशेषेण यकारलोपे सति वकारस्य सम्प्रसारणं**

प्राप्तं तत्कया रीत्या वार्यते। व्येञ् धातोर्लिटि तिपि णलि व्ये अ इति स्थिते "अचो ञ्णिति" इति वृद्धौ 'व्यै अ' इति जाते, ननु तत्र द्वित्वे "लिट्यभ्यासस्य" इत्यभ्यासे यकारस्य सम्प्रसारणे पूर्वरूपे उत्तरखण्डस्य आयादेशे 'विव्याय' इति रूपं भवति, तदयुक्तम्, सम्प्रसारणात्प्राक् परत्वात् हलादिशेषेण यकारस्य निवृत्तौ वकारस्य सम्प्रसारणे उकारे सति 'उव्याय' इत्यापत्तेरिति चेद्? न। परमपि हलादिशेषं बाधित्वा यस्य सम्प्रसारणम्, उभयेषां ग्रहणसामर्थ्यात्। अन्यथा वच्यादीनां ग्रह्यादीनाञ्चानुवृत्त्यैव सिद्धे किं तेन।

**'जक्षतुः' इत्यत्र स्थानिवद्भावः कथं वारित इति लिख।** ननु 'जघस् अतुस्' इति स्थितौ "गमहनजनखनघसाम्" इत्युपधालोपे तस्य "अचः परस्मिन् पूर्वविधौ" इति स्थानिवत्वेन व्यवधानात् खरपरत्वाऽभावाच्चर्त्वाऽप्राप्त्या जक्षतुरिति न सिद्ध्येदिति चेद्? उच्यते। "न पदान्तद्विर्वचन०" इति सूत्रेण चर्त्वं प्रति स्थानिवत्त्वनिषेधात् सर्वमुपपन्नमिति यावत्।

**'जहि' इत्यत्र "अतो हेः" इति हेर्लुक् कुतो नेति वद।** ननु हन्तेर्लोटि मध्यमपुरुषैकवचने हौ, तस्मिन् परे "हन्तेर्जः" इत्यनेन हन्तेर्जादेशे "अतो हेः" इति हेर्लुक् दुर्वार इति चेद्? उच्यते—"असिद्धवदत्राभात्" इत्यनेन आभीयतया जस्यासिद्धत्वाद्धेर्न लुक्।

**'चक्षिङ्' इत्यत्र ङित्त्वादेवात्मनेपदे सिद्धे इकारोच्चारणं किमर्थमिति ब्रूत।** ननु चक्षिङ् इत्यत्र इकारोच्चारणं व्यर्थम्। न च सुखोच्चारणार्थं तदिति वाच्यम्, अकारोच्चारणेनैव तत्सिद्धेः। नाप्यनुदात्तत्वप्रयुक्तात्मनेपदार्थं तदिति शक्यं वक्तुम्, ङित्त्वादेव तत्सिद्धेरिति चेद्? न। "अनुदात्तेतश्च हलादेः" इति ल्युडपवादयुच्प्रत्ययार्थत्वात्। ततश्च "विचक्षणः" इति प्रयोगः सिद्ध्यति, नुम् तु न भवति। यत्र धातौ इकारोऽन्तावयवो भवति, तत्रैव "इदितो नुम् धातोः" इत्यनेन नुम्भवतीति व्याख्यानात्। एवञ्च इकारस्यानुदात्तत्वात् "अनुदात्तङित आत्मनेपदम्" इत्यनेनानुदात्तेत्निमित्तके आत्मनेपदे सिद्धे ङकारोपादानं व्यर्थमेव। तदेव व्यर्थं सत् 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' इति ज्ञापयति। तेन स्फायन्निति प्रयोगे शतृप्रत्ययस्य सिद्धिरिति दिक्।

**'अत्र भाष्ये ख्शादिरयमादेशः' इयं फक्किका व्याख्येया।** अत्रेदं तात्पर्यम्—'चक्षिङः ख्याञ्' इत्यनेन न चक्षिङः ख्याञादेशः, किन्तु ख्शाञादेश एव, तेन पुंख्यानमित्यत्र न "पुमः खय्यम्परे" इति रुत्वमित्यादि हल्सन्धावेवोक्तम्। असिद्धकाण्डे "शस्य यो वा" इति स्थितम् इति तेन णत्वप्रकरणानन्तरमिति शेषः। अत एव शकारेण व्यवधानान्न "कृत्यचः" इत्यनेन पर्याख्यानमित्यत्र णत्वम्। नापि सुप्रख्येन निर्वृत्तं सौप्रख्यम्, तत्र भवः सौप्रख्यीयः इत्यत्र यत्वासिद्धत्वेन "धन्वयोपधाद्" इति वुञ्, किन्तु छप्रत्यय एवेति दिक्।

**'युयात्' इत्यत्र "उतो वृद्धिर्लुकि हलि" इति वृद्धिः कुतो नेति वद।** ननु लिङ्स्थानिकादेशस्य तिपः पित्त्वात्तस्य च "यदागम" परिभाषया यासुट्विशिष्टे सत्त्वात्तस्मिन् "उतो वृद्धिर्लुकि" इत्यनेन वृद्धिर्दुर्वारेत्यत उच्यते—इह उतो वृद्धिर्न, भाष्ये 'पिच्च ङिन्न ङिच्च पिन्न' इति व्याख्यानात्। "सार्वधातुकमपित्" इत्यस्यावृत्त्याऽस्य लाभः। न च पूर्ववाक्येन ङित्त्वमपि दुर्लभमिति वाच्यम्। विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधादित्यलम्।

**'अभीयात्' इत्यत्र "एतेर्लिङि" इति ह्रस्वः कुतो नेति वद।** ननु पूर्वान्तवद्भावेनोपसर्गत्वं परादिवद्भावेन च धातुत्वं वर्तत एवेति "एतेर्लिङि" इत्यनेनोपसर्गात्परस्यैणोऽणो ह्रस्वविधानात् 'अभीयात्' इत्यत्रापि ह्रस्वो दुर्वार इति चेद्? न। "उभयत आश्रयणे नान्तादिवत्" इति वचनेन निषेधात्। यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशकार्ये प्रेरितोऽविरोधार्थी न कस्यापि करोति कार्यन्तद्वत् पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्याञ्च विरोधस्य स्फुटत्वाद्विरुद्धातिदेशस्य युगपदसम्भव इति तात्पर्यम्। नैतद्विषये स्थानिवद्भावप्रवृत्तिः, आनुमानिकस्थान्यादेशभावे विशिष्टस्य स्थानित्वेऽपि प्रत्येकं तयोः स्थानित्वे मानाऽभावात् वर्णयोरेव श्रौतस्थान्यादेशभावविधानाच्चेति दिक्।

**'अध्ययै' इति यथाशास्त्रं साधय।** ननु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेत्यभियुक्तोक्त्या अन्तरङ्गत्वाद्गुणादेः प्रागेव सवर्णदीर्घे यणि 'अध्ययै' इति न स्यादिति चेद्, उच्यते। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षस्य "सुट्कात्पूर्वः" इत्यत्र भाष्ये सिद्धान्तितत्वात् पूर्वं गुणायादेशयोः कृतयोरुपसर्गस्य यण्। 'पूर्वं धातुरुपसर्गेण युज्यते' इति मते तु धातूपसर्गयोः कार्यं पूर्वं स्यादिति अन्तरङ्गत्वात्प्राप्तो दीर्घो "णेरध्ययने वृत्तम्" इति सूत्रे 'अध्ययने' इति पदनिर्देशान्न भवति। यदि पूर्वं दीर्घः स्यात्तदोक्तप्रयोगनिर्देशोऽनुपपन्नः स्यात्।

**"अयं सार्वधातुकमात्रविषयः" इत्यस्याशयः स्फुटं वर्णनीयः।** अस्य ख्याधातोः सार्वधातुक एव प्रयोगो न त्वार्धधातुके इत्यर्थः। अत्र च 'सस्थानत्वं नमः ख्यात्रे' इति वार्तिकं नञमध्याहृत्य 'नमः ख्यात्रे' इत्यत्र सस्थानत्वं जिह्वामूलीयत्वं न भवतीति व्याख्यानरूपं भाष्यञ्च प्रमाणम्। अत्र हि चक्षिङः ख्शाञादेशे शस्य यकारे शकारस्थानिकयत्वस्यासिद्धत्वात् "शर्परे विसर्जनीयः" इति इष्टो विसर्जनीयः सिध्यति, जिह्वामूलीयस्त्वनिष्टो न भवतीति भाष्यवार्तिकहृदयम्। अस्य ख्याधातोरार्धधातुकेऽपि प्रयोगसत्त्वे तु तृजन्ते ख्यातृशब्दे यकारस्य शकारस्थानिकत्वाभावात् असिद्धत्वाभावात् "शर्परे विसर्जनीयः" इत्यस्याप्रवृत्तौ "कुप्वोः" इति जिह्वामूलीयो दुर्वारः स्यात्। ततश्चार्धधातुके ख्याधातोर्न प्रयोगः इति विज्ञाप्यते। ज्ञापकस्य सामान्यापेक्षत्वादिति दिक्।

**दरिद्राधातोर्लिटि प्रथमपुरुषैकवचने रूपाणि विविच्य प्रसाधयत।** दरिद्राधातोर्लिटि दरिद्राञ्चकार, ददरिद्रौ, ददरिद्र इति रूपत्रयमुक्तं ग्रन्थकृता। तत्राद्यं द्वयं न्याय्यं तृतीयन्त्वन्याय्यम्। "कास्प्रत्ययादाममन्त्रे लिटि" इति सूत्रभाष्ये दरिद्राधातोराम उक्तत्वात् 'दरिद्राञ्चकार' इति न्याय्यम्। "आत औ णलः" इत्यत्र प्रथमातिक्रमे कारणाभावात् ओकार एव विधातुमुचितः। वृद्धौ सत्यां तावतैव 'ययौ' इत्यादिसिद्धेः। तस्मादौकारविधानं दरिद्राधातोर्णलि 'दरिद्रातेरार्धधातुके लोपो वक्तव्यः' इत्यालोपे 'ददरिद्रौ' इत्योकारश्रवणार्थं सम्पद्यते। ओकारविधाने तु आल्लोपे सति वृद्धेरसम्भवात् ददरिद्रो इत्योकार एव श्रूयते। अत एव लिटि आम्नेति विज्ञायते। आमि सति णल एवाप्रसक्तेः इति "वस्वेकाजाद्घसाम्" इति सूत्रभाष्ये

ध्वनितं, कैयटेन च स्पष्टीकृतम्। अतो द्वितीयं ददरिद्रौ इत्यपि न्याय्यम्। तृतीयन्तु सुतरामन्याय्यमिति दिक्।

**'ऐयः' इति रूपं प्रसाध्य 'धत्तः' एतत् शङ्कानिरासपूर्वकं साधय।** ऋधातोर्लङि तिपि सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि, "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इति धातोर्द्वित्वे "उरत्" इति अभ्यासस्य ऋकारस्याकारे रपरे "हलादिः शेषः" इति लोपे "अर्तिपिपर्त्योश्च" इति अभ्यासस्याकारस्येत्वे "अभ्यासस्यासवर्णे" इतीयङि "आडजादीनाम्" इत्याटि "आटश्च" इति वृद्धौ "सार्वधातुकार्धधातुकयोः" इति गुणे "श्नश्च" इतीकारलोपे "हल्ङ्याब्भ्यः" इति तकारस्य लोपे रेफस्य विसर्गे च रूपम्।

**धत्तः**—धाधातोर्लटि तसि सार्वधातुकसंज्ञायां "कर्तरि शप्" इति शपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ "श्लौ" इति धातोर्द्वित्वे पूर्वस्य अभ्याससंज्ञायां "ह्रस्वः" इति ह्रस्वे "अभ्यासे चर्च" इति धकारस्य दकारे "उभे अभ्यस्तम्" इति अभ्यस्तसंज्ञायां "श्नाभ्यस्तयोरातः" इति अकारस्य लोपे "दधस्तथोश्च" इति भष्भावे "खरि च" इति चर्त्वे सकारस्य रुत्वे विसर्गे च रूपम्। न चात्र "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण आकारस्य स्थानिवद्भावेन झषन्तत्वाभावाद् भष्भावो न स्यादिति वाच्यम्। अत्र भष्भावे कर्तव्ये आलोपो न स्थानिवत्, सूत्रारम्भसामर्थ्यात्। वस्तुतस्तु "पूर्वत्रासिद्धे न स्थानिवत्" इति परिभाषया त्रिपादिस्थे भष्भावे कर्तव्ये सपादसप्ताध्यायीस्थाकारलोपस्य स्थानिवत्त्वनिषेधात्। परिभाषारूपयुक्त्या कार्यनिर्वाहे सति वचनारम्भाश्रयणन्निष्फलमिति दिक्।

**'अश्लिक्षत्' इति रूपं शङ्कासमाधिपूर्वकं साधय।** श्लिष् धातोर्लुङि तिपि "च्लि लुङि" इति च्लौ पुषादित्वादङि प्राप्ते "निरवकाशो विधिरपवादः" इति वचनेन अपवादत्वात् "श्लिषः" इति सूत्रेण क्से अनुबन्धलोपे "षढोः कः सि" इति षस्य कत्वे कात्परकत्वात् षत्वे अटि च 'अश्लिक्षत्' इति रूपम्। न च "चिण् भावकर्मणोः" इति सूत्रेण प्राप्तस्य चिणोऽपि "श्लिषः" इति सूत्रेण बाधः स्यादिति वाच्यम्। पुरस्तादपवादन्यायेन पुषाद्यङ एव बाधकत्वात्। एवञ्च "श्लिषः" इति सूत्रेणाऽलिङ्गनरूपधात्वर्थे क्से सिद्धे "आलिङ्गने" इति योगविभागेन श्लिष्धातोरालिङ्गनेऽर्थे एव क्सो नान्यत्रेति नियम्यते। तथा च यदि "शल इगुपधादनिटः क्सः" इति सूत्रविहितस्य क्सस्य "आलिङ्गने" इत्यनेन नियमो न स्यात्तदा पुनरपि योगविभागो व्यर्थ एव, व्यर्थः सन् "शलः" इत्यादिसूत्रविहितस्यापि क्सस्य नियमं करोति। ततश्चानालिङ्गने 'समश्लिषज्जतु काष्ठम्' इत्यत्राङ्। कर्मणि प्रत्यये तु चिण् सिद्ध्यतीति दिक्।

**ञिमिदा स्नेहने धातोर्दिवादौ पाठः किमर्थः।** भ्वादौ द्युतादिगणे पाठेनैव अमिदत् अमेदिष्ट, इति रूपद्वयसिद्धौ दिवादिगणे पाठोऽमेदीदिति रूपनिवारणार्थः। इत्थञ्च गणद्वये पाठेन यदि रूपद्वयसिद्धिरेवेष्टा तदा द्युतादिभ्यः पृथगात्मनेपदिषु भ्वादौ पाठेनामेदिष्टेतिरूपम्। पुषादौ दिवादिगणे पाठेन च अमिददिति रूपञ्च सिद्धम्भवतीति द्युतादिगणे पाठो निष्फल एवेति प्रतिभाति॥

**'विव्याथ' इत्यत्र सम्प्रसारणं कुतो नेति वद।** 'व्यचेः कुटादित्वमनसि' इति वार्तिकं

यत्राऽभिन्नः असदृशः कृदन्तीयप्रत्ययः स्यात्तत्रैव लगति। यथा—'अब्राह्मणमानय' इत्युक्तौ ब्राह्मणभिन्नं ब्राह्मणसदृशं कञ्चन नरमानीय कृती भवति न तु लोष्टकाष्ठादिकम्, तद्वत्। तेन 'उद्विचितुम्' इत्यादिकृदन्तस्थले कुटादित्वेन "गाङ्कुटादिभ्योऽञ्णिण्ङित्" इति ङित्त्वेन "ग्रहिज्यावयि" इत्यादिना सम्प्रसारणं सिद्ध्यति। विव्यचेत्यत्र तु तिङन्तत्वेन ङित्वाभाव-पक्षे वार्तिकाप्रवृत्त्या सम्प्रसारणाभावः। अन्यथा तत्रापि सम्प्रसारणं स्यात्। सादृश्यञ्च कृदन्त-त्वेन ग्राह्यम्।

**'शे तृम्फादीनां नुम् वाच्यः' अस्यार्थं करणीयः।** "शे तृम्फादीनाम्" इति वार्तिके आदिशब्दः प्रकाररूपार्थस्य वाचकः। तथा तृम्फसदृशानां धातूनां नुम् स्यादित्यर्थो भवति। सादृश्यञ्च नकारयुक्तत्वेन गृह्यते। एवं हि नकाररहिततृफादिधातुषु नुम्न भवतीत्यलम्।

**'ममङ्क्थ इति सम्यक् साधय।** मस्जधातोर्लिटि सिपि "परस्मैपदानाम्" इत्यादिना थलि, "लिटि धातोः" इति द्वित्वे पूर्वस्याभ्याससंज्ञाया "हलादिः शेषः" इति लोपे इडभावपक्षे "मस्जिनशोर्झलि" इति "मस्जेरन्त्यात्पूर्वो नुम्वाच्यः" इति वचनेन जकारात्पूर्वं नुमि "स्कोः संयोगाद्योरन्ते च" इत्यादिना सकारलोपे "चोः कुः" इति कुत्वे चर्त्वे नकारस्यानुस्वारे परसवर्णे च कृते रूपम्।

**'सञ्चस्करतुः' अस्य सिद्धिं शङ्कासमाधिपूर्वकं प्रदर्श्य 'सञ्चस्करिथ' इत्यत्र इडा-गमः कथमिति प्रदर्शनीयः।** सम्पूर्वात्कृधातोः 'पूर्वं धातुरुपसर्गेण युज्यते' इति सिद्धान्तमा-श्रित्य 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति पूर्वं "सम्परिभ्यां करोतौ भूषणे" इति सुटि संस्कृ इत्यस्माल्लिटस्तसोऽतुसि इत्यस्य द्वित्वे उरदत्वे "शर्पूर्वाः खयः" इति रेफसकारयोर्निवृत्तौ अभ्यासचुत्वे "ऋतश्च संयोगादेर्गुणः" इति गुणे 'सञ्चस्करतुः इति रूपसिद्धेः। "कात्पूर्वः" "अडभ्यासव्यवायेऽपि" इति च न कर्तव्यमिति भाष्यकाराशयः। एवं समस्करोदित्यत्रापि विकरणान्ताङ्गभक्ताडागमापेक्षया अन्तरङ्गत्वात्प्रथमं सुट् भविष्यतीति कृत्वा 'अडव्यवायेऽपि' इत्यंशो न कर्तव्य इति दिक्।

ननु सञ्चस्करिव सञ्चस्करिथ इत्यत्र च "कृसृभृवृ" इति "ऋतो भारद्वाजस्य" इति च इण्निषेधः स्यादिति चेद्? न। "कृसृभृवृ" इत्यत्र "ऋतो भारद्वाजस्य" इत्यत्र च "कृञोऽसुट इति वक्तव्यम्" इति वार्तिकस्य जागरूकत्वात्।

**'संस्क्रियात्' अस्य सिद्धिः प्रदर्शनीया।** सम्पूर्वात्कृधातोः 'पूर्वं धातुरुपसर्गेण युज्यते' इति सिद्धान्तमाश्रित्यान्तरङ्गत्वात्पूर्वं सुटि तत आशीर्लिङि तिपि यासुडागमे "रिङ्शय" इति ऋकारस्य रिङादेशे यासुटः सकारस्य "स्कोः" इति लोपे संस्क्रियादिति रूपम्। न चात्र लकारो-पदेशकाले धातोः संयोगादित्वात् "गुणोर्तिसंयोगाद्योः" इति गुणः कुतो नेति वाच्यम्। अत्र सूत्रे 'पूर्वं सुटो विहितत्वेन "नित्य छन्दसि" इत्यतो नित्यमित्यनुवर्तते। तेन नित्यं संयोगा-दि—धातूपदेश काले यः संयोगादिः इत्यर्थाद् गुणाप्रवृत्तेः।

**'अबान्धाम्' इति रूपं शङ्कानिरासपूर्वकं विधेयम्।** बन्धधातोर्लुङि तसि "तस्थस्" इत्यादिना तामि, "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिजादेशे अटि "पूर्वत्रासिद्धम्"

इति भष्भावात्पूर्वस्मिन् सिज्लोपे "झषस्तथोर्धोऽधः" इति धकारे "अतो हलादेर्लघोः" इति वृद्धौ नलोपे जश्त्वे च रूपम्। नचात्र "एकाचो वशो भष् झषन्तस्य स्ध्वोः" इति भष्भावः स्यादिति वाच्यम्। "पूर्वत्रासिद्धम्" इति शास्त्रेण भष्भावविधायकस्यासिद्धत्वेन सिज्लोपात्स-काराभावात्। न च प्रत्ययलक्षणेन पुनरपि भष्भाव इति वाच्यम्। "प्रत्ययलोप" इति सूत्र-प्रति सिज्लोपस्यासिद्धत्वात्।

**चितिधातोरिदित्करणस्य णिचः पाक्षिकत्वे ज्ञापकत्वम्, मतभेदेन विशेषापेक्षसा-मान्यापेक्षत्वयोः प्रमाणञ्च फलप्रदर्शनपुरःसरं सोपपत्तिकं निरूपणीयम्।** ननु चितिधातो इदित्करणं मास्तु, प्रक्रियालाघवात् 'चिन्त स्मृत्याम्' इत्येवोच्यताम्। न च नलोपनिवृत्त्यर्थमिदि-त्वमिति वाच्यम्, चिन्तयतीत्यादौ णिचः क्ङित्वाभावादेव नलोपस्याप्रसक्तेः। न च णिजभावे आशीर्लिङि चिन्त्यादिति, कर्मणि लकारे यकि सति चिन्त्येत इत्यत्र च नलोपनिवृत्त्यर्थमिदित्व-मिति शङ्क्यम्। चुरादिणिचो नित्यत्वेन णिचं विना केवलात् चिन्त्यात् चिन्त्येत, इति प्रयो-गस्य असम्भवादिति चेद्? उच्यते—अत्रत्यमिदित्करणं णिचः पाक्षिकत्वे लिङ्गम्। एवं हि कदाचिद् चिन्त्यात् चिन्त्येत इति प्रयोगस्य सत्त्वात् तत्र नलोपनिवृत्त्यर्थमिदित्करणमिति स्वांशे चरितार्थम्। फलञ्च—चिन्तति चिन्तेत् इत्यादिप्रयोगोपपत्तिः। इदं हि ज्ञापकं चुरादित्वसामा-न्यापेक्षमिति वृत्तिकारादयः। तेन जगाण, जगणतुः इत्यादीनां सिद्धिः। ज्ञापकस्य चितिधा-तुमात्रविषयकत्वे चौरादिकस्य गणधातोर्जगाण, जगणतुः इत्याद्युदाहरणानुपपत्तिः स्यात्। न चैवम् "आधृषाद्वा" इति व्यर्थमिति वाच्यम्। ज्ञापकसिद्धस्यासार्वत्रिकत्वात्। केचित्तु सर्वस्यापि चुरादेर्णिज्विकल्पे सति "आधृषाद्वा" इति कतिपयचुराद्यन्तर्गणपठितानां णिज्वकल्पविधेर्वै-यर्थ्यमाशङ्क्य ज्ञापकं चितिधातुमात्रविषयकमाहुः। अस्मिन्नेव पक्षे ग्रन्थाकारस्य सम्मतिरित्यलम्।

**चुरादौ पृधातोः दीर्घोच्चारणस्य फलमुच्यताम्।** नन्वयं धातुर्ह्रस्वान्त एव निर्दिश्यतां तावतैव परयतीत्यादिसिद्धेः। न च णिजभावपक्षे परिता परिष्यतीत्यत्र इडर्थं दीर्घोच्चारणम्। ऋदन्तत्वेऽनिट्कत्वप्रसङ्गादिति वाच्यम्। चुरादिणिचो नित्यत्वेन ततो णिजभावस्यात्यन्तमस-म्भवादिति प्रष्टुराशयः। उत्तरयितुस्त्वयमाशयः—पृधातोर्दीर्घोच्चारणमिडर्थम्, ह्रस्वान्तत्वे "ऊदृदन्तैः" इत्यनिट्कारिकासु ऋदन्तस्य पर्युदासेन ऋदन्तस्यानिट्कत्वावगमादिण्न स्यात्। तच्च तदैवं सार्थकं भवेत्, यदाऽस्माद्धातोर्णिचो विकल्पः स्यात्, अन्यथा पारीति णिजन्तस्य धात्वन्तरत्वात्सेट्कत्वे किं तेन। एवञ्च दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम्। तेन पृणातिपि-पर्तिभ्यां 'परिता' इत्यादिसिद्धावपि पारयति, परति इत्यादिसिद्धिश्च दीर्घोच्चारणस्य फलम्।

**'अचीकृतत्' इति रूपं साधय।** कृतधातोश्चुरादित्वात् णिचि तस्माल्लुङि तिपि अटि च्लौ "णिश्रिद्रुस्रुभ्यः" इति चङि "उपधायाश्च" इतीत्वं बाधित्वा "उर्ऋत्" इति पाक्षिके ऋकारादेशे "चङि" इति द्वित्वे पूर्वस्याभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरे "हलादिः शेषः" इति लोपे "सन्वल्लघुनि" इत्यादिना सन्वद्भावे "सन्यतः" इतीकारे "कुहोश्चुः" इति चुत्वे "दीर्घो लघोः" इति दीर्घे "हलश्च" इत्यकारलोपे रूपम्। ऋकारादेशाभावे तु "उपधायाश्च" इतीत्वे रपरे कीर्तशब्दस्य द्वित्वे अभ्यासकार्ये 'अचिकीर्तत्' इति रूपम्।

इति सूत्रे निपातनादस्य वः । स चान्तरङ्गोऽपि द्वित्वविषये 'नन्द्राः-' (सू २४८६) इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्तते । न तु ततः प्राक् । दकारोच्चारणसामर्थ्यात् । औब्जिजत् । अजादेरित्येव । नेह । अदिद्रपत् । **२५८१ रभेरशब्लिटोः ७।१।६३॥** रभेर्नुम् स्यादचि न तु शब्लिटोः । **२५८२ लभेश्च ७।१।६४॥** अररम्भत् । अललम्भत् । 'हेरचङि' ( सू २५३१ ) इति सूत्रे अचङि इत्युक्तेः कुत्वं न । अजीहयत् । 'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्' ( सू २५६६ ) । असस्मरत् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः । **२५८३ विभाषा वेष्टिचेष्ट्योः ७।४।९६॥** अभ्यासस्यात्वं वा स्याच्चङ्परे णौ । अववेष्टत् ।

---

द्विशेषे औब्जिजदिति रूपं स्यात् । औब्जिजदित्येव तु इष्यते । तत्राह—उदित्ते दकारोपधोऽयमिति । ततश्च 'न न्द्राः' इति दकारस्य द्वित्वनिषेधात् जि इत्यस्यैव द्वित्वमिति भावः । तर्हि दकारः कुतो न श्रूयते इत्यत आह—सुनन्युक्त्वादिति । ननु द्वित्वात्प्रागन्तरङ्गत्वात् दकारस्य बकारादेशे सति 'न न्द्राः' इति निषेधस्य कथमिह प्रवृत्तिरित्यत आह—स चेति । ननु 'द्रु गतौ' द्रावयति । चङि 'द्रु' इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्धयावादेशयोः उपधाह्रस्वे 'स्रवतिश्रृणोति' इत्यभ्यासस्य इत्वे अदिद्रवदिति इष्यते । तन्नोपपद्यते । 'न न्द्राः' इति दकारस्य द्वित्वनिषेधादित्यत आह—अजादेरित्येवेति । 'न न्द्राः' इत्यत्र अजादेरित्यनुवर्तत एवेत्यर्थः । 'आदिभूतादचः' इति व्याख्यातं प्राक् । ततश्च आदिभूतादचः पराः नदराः द्विर्न भवन्तीति फलितम् । नेहेति । प्रकृते आदिभूतादचः परत्वाऽभावान्न दकारद्वित्वनिषेध इत्यर्थः । 'अदिद्रप' दिति पाठे द्राधातोर्णिचि पुकि 'द्रापि' इत्यस्मादूपम् । ननु 'लावस्थायाम्' । डिति पक्षे अचः परत्वमस्त्येवेति चेत् , न—'न न्द्राः' इत्यत्र 'लिटि धातोः' इत्यतो धातोरित्यनुवर्त्य धातुसंज्ञाकालिकादादेरचः पराः नदराः द्विर्नेति व्याख्यानादित्याहुः । रभेरशब्लिटोः । 'इदितो नुम्धातोः' इत्यतो नुमिति 'रधिजभोरचि' इत्यतः अचीति चानुवर्तते । तदाह—रभेर्नुमित्यादि । लभेश्च । लभेरपि नुम् स्यात् अचि, ननु शब्लिटोरित्यर्थस्य स्पष्टत्वादनुक्तिः । अररम्भदिति । नुमि कृते संयोगपरत्वेन अकारस्य लघुत्वाऽभावान्न सन्वत्त्वमिति भावः । 'हि गतौ वृद्धौ च' इत्यस्माच्चङि अजीहयदित्यत्र 'हेरचङि' इति हकारस्य कुत्वं नेत्याह—इत्युक्तेः । 'अत् स्मृदृत्वर' इति सूत्रं चुरादौ 'प्रथ प्रख्याने' इति धातौ व्याख्यातम् । असस्मरदिति । अत्र 'सन्यतः' इतीत्वे प्राप्ते अत्वम् । अत एव ज्ञापकादनेकहल्व्यवधानेऽपि लघुपरत्वमित्युक्तं प्राक् । संयोगपरत्वेन लघुत्वाऽऽभावान्नाऽभ्यासदीर्घः । अददरदिति । दृ विदारणे इत्यस्य रूपम् । अत्रापि 'सन्यतः' इत्यस्यापवादः अत्वम् । 'दीर्घो लघोः' इति दीर्घमाशङ्क्य आह—तपरत्वसामर्थ्यादिति । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् । विभाषा वेष्टिचेष्ट्योः । 'अत्र लोपः' इत्यस्मादभ्यासस्येत्यनुवर्तते । 'अत्

अविवेष्टत् । अववेष्टत्-अविवेष्टत् । 'भ्राजभास-' ( सू २५६५ ) इत्यादिना वोपधाह्रस्वः । अबिभ्रजत्-अबभ्राजत् । 'काण्यादीनां वेति वक्तव्यम्' ( वा ४६१३ ) ण्यन्ताः कणरणभणश्रणलुपहेठाः काण्यादयः षट् भाष्ये उक्ताः । ह्वायिवाणिलोठिलापयश्चत्वारोऽधिकाः न्यासे । चाणिलोटी इत्यप्यन्यत्र । इत्थं द्वादश । अचीकणत्-अचकाणत् । **२५८४ स्वापेश्चङि** ६।१।१८॥ ण्यन्तस्य स्वपेश्चङि सम्प्रसारणं स्यात् । असूषुपत् । **२५८५ शाच्छासाह्वाव्यावेपां युक्** ७।३।३७॥ णौ परे । पुकोऽपवादः । शाययति । छाययति । साययति । ह्वाययति । व्याययति । २५८६

---

स्मृदृत्वर' इत्यतः अदिति 'सन्वल्लघुनि' । इत्यतः चङ्परे इति । चङ् परो यस्मादिति बहुव्रीहिः । णाविस्यार्थिकम् । तदाह—अभ्यासस्याऽत्वमिति । अबिभ्रजदिति । उपधाह्रस्वपक्षे लघुपरत्वात् सन्वत्त्वादभ्यासस्य इत्वम् । 'दीर्घो लघोः' इति तु, न संयोगपरत्वादलघुत्वात् । काण्यादीनां वेति । णौ चङ्युपधायाः इति ह्रस्व इति शेषः । ण्यन्ताः कणरणेति । 'कण निमीलने, रण शब्दे, श्रण दाने, लुप छेदने, हेठ विबाधायाम्' इति षट् धातवो ण्यन्ताः काण्यादयो भाष्ये पठिता इत्यर्थः । ह्वायीति । 'ह्वेञ् स्पर्धायां शब्दे च' आत्वे युकि च निर्देशः, 'वण शब्दे' दन्त्योष्ठ्यादिः, 'लुठ प्रतीघाते' टवर्गद्वितीयोपधः 'लप व्यक्तायां वाचि' इति चत्वारो ण्यन्ताः भाष्योक्तेभ्योऽधिकाः न्यासग्रन्थे पठिता इत्यर्थः । चाणिलोटी इति । 'चण दाने' तालव्यादिः 'लुट स्तेये' टवर्गप्रथमान्तः भ्वादिः । चुरादौ भाषार्थकोऽपि । एतावपि ण्यन्तौ द्वौ भाष्यन्यासग्रन्थाभ्यामन्यत्र क्वचित् ग्रन्थे पठितौ इत्यर्थः । इत्थं द्वादशेति । अनेन मतभेदेन काण्यादयो द्वादशेत्यर्थः । अचीकणदिति । उपधाह्रस्वपक्षे लघुपरत्वात् सन्वत्त्वदीर्घौ च । अचकाणदिति । उपधाह्रस्वाभावपक्षे रूपम् । अरीरणत्—अरराणत् । अबीभणत्-अबभाणत् । अशिश्रणत्—अशश्राणत् । अलूलुपत्—अलुलोपत् । अजीहिठत्—अजिहेठत् । अजूहवत्-अजुहावत् । अवीवणत्—अववाणत् । अलूलुठत्—अलुलोठत् । अलीलपत्—अललापत् । अचीचणत्—अचचाणत् । अलूलुटत्—अलुलोटत् । स्वापेश्चङि । सम्प्रसारणमिति । ष्यङः सम्प्रसारणमित्यतस्तदनुवृत्तेरिति भावः । असूषुपदिति । 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनात्कृते सम्प्रसारणे द्वित्वे पूर्वरूपं सन्वत्त्वदीर्घौ षत्वमिति भावः । शाच्छासा । 'शो तनूकरणे' 'छो छेदने' 'षो अन्तकर्मणि' ह्वेञ् स्पर्धायां शब्दे च, 'व्येञ् संवरणे' एषां कृतात्वानां निर्देशः । 'वेञ् तन्तुसन्ताने' 'पा पाने' भ्वादिः । एषां द्वन्द्वात् षष्ठीबहुवचनम् । णौ परे इति । शेषपूरणमिदम् । आदन्तलक्षणपुकोऽपवादः । युकि ककार इत् उकार उच्चारणार्थः किस्त्वादागमः अत्र 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्' इति वचनात् 'पा रक्षणे' इति न गृह्यते । तस्य तु पालयतीति रूपमनुपदमेव वक्ष्यति । शाययतीति । लुङि अशीशयत् । छाययतीति । अचिच्छयत् । साययतीति । असीषयत् । ह्वाययतीति ।

ह्वः सम्प्रसारणम् ६।१।३२॥ सन्परे चङ्परे च णौ ह्वः सम्प्रसारणं स्यात् । अजूहवत्-अजुहावत् । **२५८७ लोपः पिबतेरीच्चाभ्यासस्य ७।४।४॥** पिबतेरुपधाया लोपः स्यात् अभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत् । 'अर्ति-ह्री-' ( सू २५७० ) इति पुक् । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । स्थापयति । **२५८८ तिष्ठतेरित् ७।४।५॥** उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् । **२५८९ जिघ्रतेर्वा ७।४।६॥** अजिघ्रिपत्-अजिघ्रपत् । 'उर्ऋत्' (सू २५६७) । अचीकृतत्-अचिकीर्तत् । अवीवृतत्-

लुङि तु विशेषो वक्ष्यते । व्याययतीति । अविव्ययत् । वाययति । अवीवयत् । पाययति । लुङि तु विशेषो वक्ष्यते । ह्वः सम्प्रसारणम् । ह्वेञः कृतात्वस्य 'ह्व' इति षष्ठी । 'णौ च संश्चङोः' इत्यनुवृत्तिमभिप्रेत्य आह—सन्पर इत्यादि । अजूहवदिति । ह्वा इ अत् इति स्थिते 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनात् कृते सम्प्रसारणे पूर्वरूपे च हु इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यावादेशयोः कृतयोरुपधाह्रस्वे सन्वत्त्वदीर्घाविति भावः । अत्र कृते सम्प्रसारणे पूर्वरूपे च ह्वारूपाभावान्न युक् । पाधातोर्णौ पुगागमे पापि इत्यस्माल्लुङि चङि द्वित्वादौ अपीपप् अ त् इति स्थिते—लोपः पिबतेः । चङ्परे णाविति । 'णौ चङ्युपधायाः' इत्यतस्तदनुवृत्तेरिति भावः । अपीप्यदिति । 'नानर्थकेऽलोऽन्त्यविधिः' इत्यस्य अनभ्यासविकार इति निषेधादभ्यासाऽन्त्यस्य ईत्त्वम् । इह उपधालोपे कृते अग्लोपित्वादलघूपधत्वाच्च सन्वत्त्वदीर्घयोरप्राप्तावीत्त्वविधिः । अर्तिह्री इति पुगिति । क्रमेणोदाह्रियत इति शेषः । अर्पयतीति । ऋधातोरुदाहरणम् । वृद्धिं बाधित्वा नित्यत्वात् पुक् । गुणः । ह्रेपयतीति । 'ह्री लज्जायाम्' इत्यस्य रूपम् । व्लेपयतीति । 'व्ली विशरणे' इत्यस्य रूपम् । रेपयतीति । 'री क्षये' इत्यस्योदाहरणम् । 'क्नूयी शब्दे' इत्यस्य क्नोपयतीत्युदाहरिष्यन्नाह—यलोप इति । क्नूयीधातोर्णौ पुकि 'लोपो व्योः' इति यलोप इत्यर्थः । ततः क्नूप् इ इति स्थिते अलघूपधत्वेऽपि पुगन्तत्वाद्गुणः । क्ष्मापयतीति । 'क्ष्मायी विधूनने' अस्माण्णौ पुकि यलोपः । आदन्तस्योदाहरति—स्थापयतीति । लुङि चङि अतिष्ठप् अ त् इति स्थिते—तिष्ठतेरित् । 'णौ चङ्युपधायाः' इत्यनुवर्तते । तदाह—उपधाया इति । जिघ्रतेर्वा । घ्राधातोरुपधाया इद्वा स्याच्चङ्परे णावित्यर्थः । अजिघ्रप् अ त् इति स्थिते उपधाया ह्रस्वविकल्पः । उर्ऋदिति । धातोरुपधायाः ऋकारस्य ऋद्वा चङ्परे णाविति व्याख्यातं चुरादौ । अचीकृतदिति । कृत् इ अ त् इति स्थिते ऋत्त्वपक्षे कृत् इत्यस्य द्वित्वे उरदत्वे हलादिशेषे अभ्यासचुत्वे सन्वत्त्वात् इत्वे तस्य दीर्घे रूपम् । अचिकीर्तदिति । कृत् इ अ त् इति स्थिते 'उर्ऋत्' इत्युपधाया ऋत्वाऽभावपक्षे 'उपधायाश्च' इति इत्वे रपरत्वे 'किर्त' इत्यस्य द्वित्वे उत्तरखण्डे 'उपधायां च' इति दीर्घे रूपम् । अवीवृतदिति । 'वृतु वर्तने' । णिचि लघूपधगुणं बाधित्वा 'उर्ऋत्' । चङि, 'वृत्' इत्यस्य

अववर्तत् । अमीमृजत्-अममार्जत् । 'पातेर्णौ लुग्वक्तव्यः' ( वा ४५२० ) पुकोऽपवादः । पालयति । **२५६० वो विधूनने जुक् ७।३।३८॥** वातेर्जुक्स्याण्णौ कम्पेऽर्थे । वाजयति । कम्पे किम् । केशान्वापयति । 'विभाषा लीयतेः' ( सू २५०६ ) । **२५६१ लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने ७।३।३९॥** लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्तो णौ स्नेहद्रवे । विलीनयति । विलाययति । विलालयति । विलापयति वा घृतम् । ली ई इति ईकारप्रश्लेषादात्वपक्षे नुग्न । स्नेहद्रवे किम् । लोहं विलापयति । 'प्रलम्भनाभिभवपूजासु लियो नित्यमात्वमशिति वाच्यम्' ( वा३४८३ ) **२५६२ लियः संमाननशालिनीकरण-**

---

द्वित्वे उरदत्वे सन्वत्त्वात् इत्वं दीर्घश्चेति भावः । अववर्तदिति । ऋत्वाऽभावपक्षे वृत् इत्यस्य द्वित्वे उरदत्वे उत्तरखण्डस्य लघूपधगुणे रूपम् । लघुपरकत्वाऽभावान्न सन्वत्त्वदीर्घौ । अमीमृजदिति । उपधाया ऋत्वपक्षे रूपम् । अममार्जदिति । उपधाया ऋत्वाभावपक्षे द्वित्वे उरदत्वे उत्तरखण्डे 'मृजेर्वृद्धिः' इति वृद्धौ रपरत्वे रूपम् । लघुपरत्वाभावान्न सन्वत्त्वम् । पातेर्णौ लुगिति । लुगागम इत्यर्थः । पुकोऽपवाद इति । आदन्तलक्षणपुकोऽपवाद इत्यर्थः । यद्यपि 'पाल रक्षणे' इति धातोरेव सिद्धम्, तथापि पुको निवृत्तिः फलम् । वो विधूनने । 'ओ वै शोषणे' इति धातोः कृतात्वस्य वः इति षष्ठ्यन्तम् । 'अर्तिह्री' इत्यतः णावित्यनुवर्तते । तदाह—वातेरित्यादि । पुकोऽपवादो जुक् । केशान्वापयतीति । सुगन्धीकरोतीत्यर्थः । अत्र वेधातोः पुगेव । वाधातोस्त्विह न ग्रहणम्, लुग्विकरणत्वात् । केचित्तु वातेरेवात्र ग्रहणम्, नतु वेञः नापि वै इत्यस्य, लाक्षणिकत्वात्, सानुबन्धकत्वाच्चेत्याहुः । आत्वविधायकसूत्रं स्मारयति—विभाषा लीयतेरिति । लीलीङोरात्वं वा स्यादेज्विषये ल्यपि च इति व्याख्यातं प्राक् श्यन्विकरणे । तत्र लीयतेः इति यका निर्देशः, नतु श्यना । तेन 'ली श्लेषणे' इति श्नाविकरणस्य 'लीङ् श्लेषणे' इति श्यन्विकरणस्य च ग्रहणमिति च प्रागुक्तं न विस्मर्तव्यम् । लीलोः । ली ला इत्यनयोः षष्ठीद्विवचनम् । णाविति । 'अर्तिह्री' इत्यतस्तदनुवृत्तेरिति भावः । स्नेहस्य तैलस्य, निपातनं द्रावणं, स्नेहनिपातनम् । तदाह—स्नेहद्रवे इति । आत्वाऽभावपक्षे आह—विलीनयतीति । लीलीङोरीकारान्तयोर्नुकि रूपम् । द्रवीकरोतीत्यर्थः । लीलीङोरात्वनुगभावपक्षे आह—विलाययतीति । लाधातोर्लुगागमे आह—विलालयतीति । अत्र लातेरादादिकस्य कृतात्वलायतेश्च ग्रहणम्, व्याख्यानात् । विलापयतीति । लुगागमाऽभावे रूपम् । ननु कृतात्वस्य लीधातोरपि एकदेशविकृतन्यायेन लीत्वान्नुक् स्यादित्यत आह—ली ई इति । लोहं विलापयतीति । नुग्लुकोरभावादात्वपक्षे पुक् । आत्वाऽभावे तु वृद्ध्यायादेशाविति भावः । प्रलम्भनाभिभवेति । प्रलम्भनं वञ्चना । अभिभवः तिरस्कारः । पूजा प्रसिद्धा । एष्वर्थेषु लीलीङोः एज्विषये नित्यमात्वं वक्तव्यमित्यर्थः । लियः सम्मानन । 'लियः' इति लीलीङोर्ग्रह-

**योश्च १।३।७०॥** लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे । जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः । श्येनो वर्त्तिकामुल्लापयते । अभिभवतीत्यर्थः । बालमुल्लापयते वञ्चयतीत्यर्थः । **२५६३ बिभेतेर्हेतुभये ६।१।५६॥** बिभेतेरेच आत्वं वा स्यात्प्रयोजकाद्भयं चेत् । **२५६४ भीस्म्योर्हेतुभये १।३।६८॥** आभ्यां ण्यन्ताभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ । सूत्रे भयग्रहणं धात्वर्थोपलक्षणम् । मुण्डो भापयते । **२५६५ भियो हेतुभये षुक् ७।३।४०॥** भी ई इति ईकारः प्रश्लिष्यते । ईकारान्तस्य भियः षुक्स्याण्णौ हेतुभये । भीषयते । **२५६६ नित्यं स्मयतेः ६।१।५७॥** स्मयतेरेचो नित्यमात्वं स्याण्णौ हेतोः स्मये । जटिलो विस्मापयते । हेतोश्चेद्भयस्मयावित्युक्तेर्नेह । कुञ्चिकयैनं भाययति । कथं तर्हि 'विस्मापयन्विस्मितमात्मवृत्तौ' इति । 'मनुष्यवाचा'

---

णम् । 'अनुदात्तङितः' इत्यतः आत्मनेपदमिति, 'णेरणौ' इत्यतो णेरिति चानुवर्तते । 'णिचश्च' इति सिद्धे अकर्त्रभिप्रायार्थमिदम् । सम्माननं पूजालाभः । शालिनीकरणम् अभिभवः । चकारात् । 'गृधिवञ्च्योः' इति पूर्वसूत्रात्प्रलम्भनग्रहणं समुच्चीयते । तदाह—लीङ्लियोरित्यादिना । बिभेतेर्हेतुभये । 'आदेच उपदेशे' इत्यतः एच इति आदिति चानुवर्तते । 'विभाषा लीयतेः' इत्यतो विभाषेति, 'चिस्फुरोः' इत्यतो णाविति च । हेतुभयं प्रयोजकाद्भयम् । तदाह—बिभेतेरेच इत्यादिना । भीस्म्योर्हेतुभये । 'अनुदात्तङितः' इत्यतः आत्मनेपदमिति 'णेरणौ' इत्यतो णेरिति चानुवर्तते । हेतुः प्रयोजकः । तदाह—आभ्यां ण्यन्ताभ्यामिति । अकर्त्रभिप्रायार्थमिदम् । ननु हेतोश्चेत् भयस्मयावित्यनुपपन्नम्, सूत्रे स्मयग्रहणाऽभावादित्यत आह—सूत्रे भयेति । सूत्रे भयग्रहणं स्मिङ्धात्वर्थस्य स्मयस्याप्युपलक्षणमित्यर्थः । मुण्डो भापयते इति । अत्र आत्वं, पुक्, आत्मनेपदं च । भिय आत्वाऽभावपक्षे विशेषमाह—भियो हेतुभये षुक् । भी ई इति । इयोः सवर्णदीर्घे भीशब्दात् षष्ठीति भावः । इदं च स्थानिवत्सूत्रे भाष्ये स्पष्टम् । ईकारप्रश्लेषफलमाह—ईकारान्तस्येति । तेन आत्वपक्षे न षुगिति फलितम् । णाविति । 'अर्तिह्री' इत्यतस्तदनुवृत्तिरिति भावः । नित्यं स्मयतेः । 'आदेच उपदेशे' इत्यतः एच इति आदिति चानुवर्तते । 'चिस्फुरोः' इत्यतो णाविति 'बिभेतेर्हेतुभये' इत्यतः हेतुभये इति च । तत्र भयग्रहणं स्मयस्याप्युपलक्षणम्, अत्र तु स्मय एव विवक्षितः, स्मयतेर्भीत्यर्थकत्वाऽसम्भवात् । तदाह—स्मयतेरेच इत्यादि । 'विभाषा लीयतेः' इत्यतो विभाषानुवृत्तये नित्यग्रहणम् । अथ 'बिभेतेर्हेतुभये' इति 'नित्यं स्मयतेः' इति च आत्वविधौ 'भीस्म्योर्हेतुभये' इति आत्मनेपदविधौ च हेतुग्रहणस्य प्रयोजनमाह—हेतोश्चेत् भयस्मयावित्युक्तेर्नेहेति । कुञ्चिकयैनमिति । केशबन्धविशेषः कुञ्चिका । तस्याश्च करणतया प्रयोजककर्तृत्वाऽभावात् आत्वं षुक् च नेति भावः । आक्षिपति-कथमिति । रघुवंशकाव्ये-

इति करणादेव हि तत्र स्मयः। अन्यथा शानजपि स्यात्। सत्यम्। विस्माय-यन् इत्येव पाठ इति साम्प्रदायिकाः। यद्वा मनुष्यवाक्प्रयोज्यकर्त्री विस्मापयते तया सिंहो विस्मापयन्निति ण्यन्ताण्णौ शता इति व्याख्येयम्। २५९७ स्फायो वः ७।३।४१॥ णौ। स्फावयति। २५९८ शदेरगतौ तः ७।३।४२॥ शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ। शातयति। गतौ तु गाः शादयति गोविन्दः। गमयतीत्यर्थः। २५९९ रुहः पोऽन्यतरस्याम् ७।३।४३॥ णौ। रोपयति-रोहयति। २६०० क्रीङ्जीनां णौ ६।१।४८॥ एषामेच आत्वं स्याण्णौ। क्रापयति। जाप-

'तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम्।
विस्मापयन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः'॥

इति श्लोके विस्मापयन्निति कथमित्याक्षेपः। प्रयोजकाद्भयाऽभावेन आत्वपुगनुपपत्तेरिति भावः। ननु मनुष्यवागेव तत्र प्रयोजिकेत्यत आह—मनुष्येति। मनुष्यवाचेति तृतीयान्तगम्यकरणात् मनुष्यवागात्मकादेव हि तत्र स्मयः। ननु करणभूताऽपि मनुष्यवाक् प्रयोजिका कुतो नेत्यत आह—अन्यथेति। मनुष्यवाचः स्मयप्रयोजकत्वमभ्युपगम्य आत्वाश्रयणे 'भीस्म्योर्हेतुभये' इत्यात्मनेपदमपि स्यादित्यर्थः। स्मयोऽत्र प्रयोजकमूलको नेति युक्तमेव। किन्त्वात्वपुगाक्षेपो न युज्यते इत्यर्थाङ्गीकारेण परिहरति—सत्यमिति। विस्मापयन्नितीति। णौ आयादेशे स्मायि इत्यस्माल्लटः शतरि शपि णेर्गुणे अयादेशे विस्मापयन्नित्येव कालिदासो महाकविः प्रायुङ्क्त। 'विस्मापय'न्निति पकारपाठस्तु लेखकप्रमादकृत इति भावः। यद्वेति। राजा दिलीपो विस्मयते। तं सिंहोच्चारिता मनुष्यवाक् प्रयोजयति 'विस्मापयते मनुष्यवाक् राजानम्'। अत्र मनुष्यवाक् प्रयोजककर्त्री। राजा तु प्रयोज्यकर्तेति स्थितिः। अत्र स्मयस्य प्रयोजककर्तृभूतमनुष्यवाङ्मूलकत्वादात्त्वे पुक्। मूले 'प्रयोज्यकर्त्री'त्येव पाठः। प्रयोजककर्त्रीत्यर्थः। प्रयोज्यः कर्ता यस्याः सा प्रयोज्यकर्त्री इति बहुव्रीह्याश्रयणात्। 'प्रयोजककर्त्री'त्येव पाठः सुगमः। तां विस्मापयमानां प्रयोजककर्त्रीं मनुष्यवाचं प्रयोजयति सिंहः। विस्मापयति। स्मापि इति ण्यन्तात् णौ प्रथमणेर्लोपे स्मापि इत्यस्मात् शतृप्रत्यये शपि णेर्गुणे अयादेशे विस्मापयन्निति भवतीत्यभिप्रेत्य आह—तया सिं इति। प्रयोजककर्तरि तृतीया। आत्मनेपदं भीस्मीप्रकृतिकण्यन्तादेव, न तु ण्यन्तप्रकृतिकण्यन्तादिति भावः। स्फायो वः। णाविति शेषपूरणम्। 'अर्तिह्री' इत्यतस्तदनुवृत्तेरिति भावः। शदेरगतौ तः। 'अर्तिह्री' इत्यतो णावित्यनुवृत्तिं मत्वा आह—शदेर्णाविति। तोऽन्तादेश इति। तकार इत्यर्थः। अकार उच्चारणार्थः। रुहः पो। णाविति शेषपूरणम्। क्रीङ्जीनां णौ। 'डु क्रीञ् द्रव्यविनिमये, 'इङ् अध्ययने' 'जि जये' एषां द्वन्द्वः। एच आत्वमिति। 'आदेच उपदेशे' इत्यतस्तदनुवृत्तेरिति भावः। क्रापयति जापयतीति। आत्वे पुक्। क्रुङि

यति । अध्यापयति । २६०१ णौ च संश्चङोः २।४।५१॥ सन्परे चङ्परे च णौ इङो गाङ्वा स्यात् । अध्यजीगपत् । अध्यापिपत् । २६०२ सिध्यतेरपारलौकिके ६।१।४९॥ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरे आत्वं स्याण्णौ । अन्नं साधयति । निष्पादयतीत्यर्थः । अपारलौकिके किम् । तापसः सिध्यति । तत्त्वं निश्चिनोति। तं प्रेरयति, सेधयति तापसं तपः । २६०३ प्रजने वीयतेः ६।१।५५॥ अस्यैच आत्वं वा स्याण्णौ प्रजनेऽर्थे । वापयति-वाययति वा गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः । 'ऊदुपधाया गोहः' ( सू. २३६४ ) । गूहयति । २६०४ दोषो

अचिक्षपत् । अजीजपत् । अध्यापयतीति । इङः आत्वे पुकि रूपम् । अधि इ इ अ त् इति स्थिते । णौ च संश्चङोः । विषयसप्तमीयमित्याकरे स्पष्टम् । णौ विवक्षिते इति लभ्यते । 'इङश्च' इत्यतः इङ इति 'गाङ् लिटि' इत्यतो गाङिति ' विभाषा लुङ्लृङोः इत्यतो विभाषेति चानुवर्तते । तदाह—सन्परे चङ्परे चेत्यादि । सन्परे चङ्परे च णौ विवक्षिते इत्यर्थः । अध्यजीगपदिति । णौ इङो गाङादेशे पुकि उपधाह्रस्वे अधि गप् इ अ त् स्थिते गप् इत्यस्य द्वित्वे हलादिशेषे अभ्यासह्रस्वे सन्वत्त्वादित्वे दीर्घे अभ्यासचुत्वे रूपम् । नच द्वित्वे कार्ये 'णावजादेशो न' इति द्वित्वात् प्राक् गाङादेशनिषेधः शङ्क्यः, अभ्यासोत्तरखण्डे अवर्णसत्त्व एव तन्निषेधप्रवृत्तेरुक्तत्वात् । द्वित्वे कार्ये गाङादेशस्य निषेधे सति गाङः पूर्वम् 'अजादेर्द्वितीयस्य' इति णिच एव द्वित्वे सति प्रक्रियायां परिनिष्ठिते वा धातोरुत्तरखण्डे अवर्णाऽभावादिति भावः । अध्यापिपदिति । गाङभावे 'क्रीङ्जीनां णौ' इत्यात्वे पुकि अधि आ प् इ अ त् इति स्थिते 'पि' इत्यस्य द्वित्वे रूपमिति भावः । सिध्यतेरपारलौकिके । 'आदेच उपदेशे' इत्यस्मादादेच इति 'क्रीङ्जीनाम्' इत्यस्माण्णाविति चानुवर्तते । तदाह—ऐहलौकिके इत्यादि । अन्नमिति । तन्निष्पादनं तृप्त्यर्थत्वादैहलौकिकमिति भावः । तत्त्वमिति । आत्मस्वरूपमित्यर्थः । सेधयति तापसं तप इति । तत्त्वं निश्चाययतीत्यर्थः । आत्मतत्त्वनिश्चयः आमुष्मिकफलक इति भावः । प्रजने वीयतेः । 'आदेच उपदेशे' इत्यस्मादादेच इति 'चिस्फुरोः' इत्यतो णाविति 'विभाषा लीयतेः' इत्यतो विभाषेति चानुवर्तते । तदाह—अस्यैच इत्यादि । 'वीयतेरि'ति न श्यना निर्देशः, 'वी गतिप्रजनकान्त्यसनखादनेषु' इत्यस्य लुग्विकरणत्वात् । किन्तु यका निर्देशोऽयम् । तेन व्येञोऽपि ग्रहणम्, तस्यापि सम्प्रसारणे वीधातुना तुल्यत्वादिति केचित् । वस्तुतस्तु व्येञो न ग्रहणम् । तस्य प्रजनार्थकत्वाऽभावात् । तस्य णौ 'शाच्छासा' इति युगपवादयुग्विधानेन व्याययतीति रूपे विशेषाभावाच्चेति शब्देन्दुशेखरे प्रपञ्चितम् । गर्भं ग्राहयतीति । पुरोवातकाले गावो गर्भं गृह्णन्तीति प्रसिद्धिः । अथ 'गुहू संवरणे' इत्यस्य णिनिमित्ते अजादौ प्रत्यये परे उपधाया ऊत्वविधिं स्मारयति—ऊदुपधाया गोह इति । गूहयतीति । लघूपधगुणापवादः ऊत्वमिति भावः । दोषो णौ । 'ऊदुपधाया' इत्यनुवर्तते । 'दुष वैकृत्ये' इति

णौ ६।४।९०॥ दुषः इति सुवचम्। दुष्यतेरुपधाया ऊत्स्यात्। दूषयति। **२६०५ वा चित्तविरागे ६।४।९१॥** विरागोऽप्रीतता। चित्तं दूषयति-दोषयति वा कामः। 'मितां ह्रस्वः' (सू २५६८)। भ्वादौ चुरादौ च मित उक्ताः। घटयति। 'जनीजृष्—'। जनयति। जरयति। जृणातेस्तु जारयति। 'रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः' (वा ४०६७)। मृगरमणमाखेटकम्। रजयति मृगान्। 'मृग-' इति किम्। रञ्जयति पक्षिणः। रमणादन्यत्र तु रञ्जयति मृगान् तृणदानेन। चुरादिषु ज्ञपादिश्चिञ्। 'चिस्फुरोर्णौ' (सू २५६६)। चपयति—चययतीत्युक्तम्। चिनोतेस्तु चापयति-चाययति। स्फारयति-स्फोरयति। अपुस्फरत्-अपुस्फुरत्। **२६०६ उभौ साभ्यासस्य ८।४।२१॥** साभ्यासस्यानितेरुभौ नकारौ णत्वं प्रा-

---

श्यन्विकरणः। तस्य कृतलघूपधगुणस्य निर्देशः। ततश्च गुणविषयकमेवेदम्—दुष्यतेरुपधाया ऊत्स्यादिति। णाविति शेषः। दूषयतीति। लघूपधगुणापवाद ऊत्। 'दूषो णा' वित्येव सुवचम्। वा चित्तविरागे। ऊदुपधाया इति, दोषो णाविति, चानुवर्तते। चित्तविरागे दुष उपधाया ऊद्वा स्यात् णाविति फलितम्। विरागपदस्य विवरणं अप्रीततेति। इच्छाविरह इत्यर्थः। चित्तमिति। चित्तं दुष्यति स्नानसन्ध्यावन्दनादिनित्यकर्मसु विरक्तं भवति। तत्प्रयोजयति काम इत्यर्थः। मितां ह्रस्व इति। णौ मितामुपधाया ह्रस्वः इति प्रागव्याख्यातमपि स्मारयति। जनीजृषिति। इदमपि व्याख्यातं स्मार्यते। जृणातेस्त्विति। श्नाविकरणस्य अषित्वात् न मित्त्वमिति भावः। रञ्जेर्णाविति। णेः क्ङित्वाऽभावात् अनिदितामित्यप्राप्तौ वचनम्। 'मृगरमण' पदस्य विवरणम्-आखेटकमिति। मृगयेत्यर्थः। रजयति मृगानिति। 'रञ्ज रागे' शब्विकरणः 'रञ्जेश्च' इति शपि नलोपः। 'रजन्ति मृगाः' ग्राह्या भवन्ति। तान् मृगान् तादृग्व्यापारविषयान् करोति मृगवधासक्तो राजादिरित्यर्थः। अत्र नकारलोपः। रञ्जयति पक्षिणः इति। 'पक्षिणो रजन्ति' ग्राह्या भवन्ति। तान् तादृग्व्यापारविषयान् करोतीत्यर्थः। पक्षिग्रहणमिदं न मृगयेति मन्यते। रञ्जयति मृगान् तृणदानेनेति। घातको मृगान् रक्षणाय तृणसमर्पणेन बन्धनस्थानगान् करोतीत्यर्थः। चुरादिष्विति। चुरादिषु ज्ञपादिपञ्चकान्तर्गतश्चिञ्धातुरस्ति। तस्मात् स्वार्थणिचि कृते 'चिस्फुरोः' इति आत्वपक्षे पुकि मित्त्वादुपधाह्रस्वे चपयतीति रूपम्। आत्वाऽभावे तु वृद्धौ आयादेशे मित्त्वाद्ध्रस्वे चययतीति रूपमुक्तं चुरादावित्यर्थः। चिनोतेस्त्विति। श्नुविकरणस्य तु चिञ्धातोर्हेतुमण्णौ 'चिस्फुरोः' इति आत्वे पुकि मित्त्वाभावाद्ध्रस्वाऽभावे 'चापयती'ति रूपम्। आत्वाऽभावे वृद्धौ आयादेशे मित्त्वाऽभावाद्ध्रस्वाऽभावे चाययतीति रूपमित्यर्थः। स्फारयति-स्फोरयतीति। 'चिस्फुरोः' इत्यात्वविकल्पः। अपुस्फरत्-अपुस्फुरदिति। स्फुर् इ अ त् इति स्थिते द्वित्वे कर्तव्ये णावच आदेशस्य निषिद्धतया 'स्फु'रित्युकारवतो द्वित्वे ततश्चिस्फुरोर्णाविति उत्तरखण्डे आत्वविक-

प्लुतो निमित्ते सति । प्राणिणत् । **२६०७ णौ गमिरबोधने २।४।४६॥** इणो गमिः स्याण्णौ । गमयति । बोधने तु प्रत्याययति । 'इण्वदिकः' ( वा १५७७ ) । अधिगमयति । 'हनस्तोऽचिण्णलोः' ( सू २५७४ ) । 'हो हन्तेः' ( सू ३५८ ) इति कुत्वम् । घातयति । ईर्ष्ययति । 'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' ( वा ३४०६ ) तृतीयव्यञ्जनस्य तृतीयैकाच इति वार्थः । आद्ये षकारस्य द्वित्वं वारयितुमिदम् । द्वितीये तु 'अजादेर्द्वितीयस्य' ( सू २१७६ ) इत्यस्यापवादतया सन्नन्ते प्रवर्तते । ऐर्ष्यियत्-ऐर्षिष्यत् । द्वितीयव्याख्यायां णिजन्ताच्चङि यकार एवाभ्यासे श्रूयते ।

णपः । आत्वपक्षे उपधाह्रस्व इति भावः । उभौ साभ्यासस्य । अनितेरित्यनुवर्तते । 'अन प्राणने' इति धातोरित्यर्थः । 'रषाभ्यां नो णः' इत्यधिकृतम् । 'उपसर्गादसमासेऽपि' इत्यतः उपसर्गादित्यनुवर्तते । तदाह—साभ्यासस्येत्यादिना । निमित्ते सतीति । उपसर्गस्थे रेफे सतीत्यर्थः । प्राणिणदिति । प्र अन् इ अ त इति स्थिते 'अनितेः' इति णत्वस्यासिद्धत्वात् नि इत्यस्य द्वित्वे उत्तरखण्डे नकारस्याभ्यासनकारेण व्यवधानाण्णत्वे अप्राप्ते उभयोर्नकारयोरनेन णत्वमित्यर्थः । नच 'पूर्वत्रासिद्धीयमद्विर्वचने' इति निषेधात् द्वित्वे कर्तव्ये णत्वस्याऽसिद्धत्वविरहेण परत्वात् कृते णत्वे ततः पश्चात् द्वित्वे 'प्राणिण'दिति सिद्धमिति वाच्यम्, अत एव 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्याऽनित्यत्वविज्ञानात् । तेन 'ऊर्णुनावे'त्यत्र णत्वात् पूर्वमेव नुशब्दस्य द्वित्वे कृते अभ्यासोत्तरखण्डे णत्वाभावसिद्धिरित्यन्यत्र विस्तरः । णौ गमिरबोधने । 'इणो गा लुङि'इत्यतः इण इत्यनुवर्तते । तदाह—इणो गमिरिति । मकारादिकार उच्चारणार्थः । गमयतीति । प्रापयतीत्यर्थः । प्रत्याययतीति । बोधयतीत्यर्थः । लुङि प्रत्याययित् । इणो णिचि 'इणो यण्' इति यणं बाधित्वा परत्वात् वृद्धौ आयादेशे आय् इ अ त् इति स्थिते 'यि' इत्यस्य द्वित्वम् । नच द्वित्वे कार्ये णावजादेशस्य निषिद्धत्वाद्वृद्धेर्निषेधः शङ्क्यः, 'अजादेर्द्वितीयस्य'इति णिचो द्वित्वे उत्तरखण्डे अवर्णाभावात् । 'इक् स्मरणे' इत्यस्य इण्वत्त्वमुक्तं स्मारयति—इण्वदिक इति । अधिगमयतीति । स्मारयतीत्यर्थः । हन्तेर्ञ्णिति णिति च तकारादेशमुक्तं णौ स्मारयति—हनस्तोऽचिण्णलोरिति । कुत्वमिति । 'हस्ये'ति शेषः । उपधावृद्धिं मत्वा आह—घातयतीति । लुङि अजीघतत् । ईर्ष्ययतीति । ईर्ष्यतेर्णौ रूपम् । वक्तव्यमिति । 'द्वित्व'मिति शेषः । इति वार्थ इति । 'न न्द्राः' इति सूत्रभाष्ये स्पष्टमिदम् । आद्ये इति । 'तृतीयस्य व्यञ्जनस्ये'ति पक्षे इत्यर्थः । षकारस्येति । अन्यथा ईर्ष्य् इ अ त् इति स्थिते 'नन्द्राः' इति रेफं वर्जयित्वा षकारसहितस्य 'ष्यि' इत्यस्य द्वित्वं स्यात् । ततश्च उत्तरखण्डे णिलोपे ऐर्षिष्यदिति स्यात् । ऐर्ष्य्यदितीष्टं न स्यात् । अतस्तृतीयव्यञ्जनस्येत्युक्तम् । एवञ्च यकारमात्रस्य द्वित्वे णिलोपे संयुक्तद्वियकारमिष्टं सिध्यतीत्यर्थः । द्वितीये इति । 'तृतीयैकाच' इति व्याख्याने इत्यर्थः । सन्नन्ते प्रवर्तते इति । 'उक्तवार्तिक'मिति शेषः । सनि इटि ईर्ष्य् इस इति स्थिते ईर्ष्य्

हलादिशेषात् । द्वित्वं तु द्वितीयस्यैव । तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः । निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थः । तेन 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादि सिद्धम् । एवं सकर्मकेषु सर्वेषूह्यम् । इति तिङन्ते णिच्प्रकरणम् ।

## अथ तिङन्ते सन्प्रकरणम् ॥ १२ ॥

२६०८ धातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७॥ इषिक-

इति प्रथमैकाच् 'ष्यिस्' इति द्वितीयैकाच् स इति तृतीयैकाजिति स्थितिः । तत्र तृतीयैकाचः सम्भवात्तस्य द्वित्वविधिः । अन्यथा 'अजादेर्द्वितीयस्य' इति स्यादिति भावः । ऐष्य् यदिति । यकारमात्रस्य द्वित्वे षिलोपे संयुक्तद्वियकारं रूपम् । अथ द्वितीयव्याख्यायां रूपमाह—ऐर्षिष्यदिति । तदुपपादयति—द्वितीयव्याख्यायामिति । ण्यन्तात्सनि ईर्ष्य् इ स त् इति स्थिते 'न न्द्राः' इति निषेधाद्रेफं वर्जयित्वा 'अजादेर्द्वितीयस्य' इति ष्यि इत्यस्य द्वित्वम् नतु यकारमात्रस्य, प्रथमव्याख्याने एव तृतीयस्यानस्येत्युक्तेः । तत्र 'ष्यि' इत्यस्य द्वित्वे कृतेऽपि अभ्यासे षकार एव हल् इकारशिरस्कः श्रूयते, नतु यकारोऽपीत्यर्थः । कुत इत्यत आह—हलादिशेषादिति । ननु तृतीयस्यैकाच इति द्वितीयव्याख्यायाम् इह द्वितीयस्यैकाचः कथं द्वित्वमित्यत आह—द्वित्वं तु द्वितीयस्यैवेति । 'एकाच' इति शेषः । कुत इत्यत आह—तृतीयाभावेनेति । ईर्ष्य् इ स त् इत्यत्र ईर्ष्य् इति प्रथमैकाच्, ष्यि इति द्वितीयैकाच्, नतु चङि परे तृतीयैकाजस्ति अतोऽत्र 'तृतीयैकाच' इति वार्तिकं न प्रवर्तते । तस्मात् द्वितीयस्यैव एकाचो द्वित्वमित्यर्थः । एवञ्च 'तृतीयस्यैकाच' इति वार्तिकं सन्नन्त एव प्रवर्तते । ईर्ष्यितेरामः सत्त्वेन ततः परस्य लिटोऽभावादिति बोध्यम् । ननु 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इति माघकाव्ये प्रार्थयन्तीति न चौरादिकस्वार्थिकणिजन्तम्, तस्याऽऽगर्वीयतया आत्मनेपदप्रसङ्गात् । नापि हेतुमण्ण्यन्तम् । स्वाभीष्टं याचते इत्यर्थे तदसम्भवात् । नहि प्रयोजकव्यापाराभावे तत्प्रवृत्तिरस्तीत्यत आह—निवृत्तेति । निवृत्तं प्रेषणं यस्मात् सः निवृत्तप्रेषणः । सम्प्रति अविवक्षितप्रेषण इत्यर्थः । तस्माद्धातोः भूतपूर्वगत्या प्रेषणमादाय हेतुमण्णौ कृते शुद्धेन णिज्विहीनेन धातुना तुल्योऽर्थः प्रतीयते इत्यर्थः । तदुक्तम्—'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' इति । इदं च 'णेरणौ' इति सूत्रे भाष्ये स्पष्टम् । इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां हेतुमण्णिचो निरूपणं समाप्तम् ।

अथ सन्प्रक्रिया निरूप्यन्ते । धातोः कर्मणः । 'गुप्तिज्किद्भ्यः' इत्यतः सन्नित्यनुवर्तते । इच्छायाः श्रुतत्वात्तां प्रत्येव कर्मत्वं विवक्षितम् । तथा समानकर्तृकत्वमपि इच्छानिरूपितमेव विवक्षितम् । कर्मेति स्ववाचकशब्दद्वारा धातौ सामानाधिकरण्येनान्वेति । एवञ्च इच्छासमानकर्तृकत्वे सति इच्छाकर्मीभूतो यो व्यापारः तद्वाच-

र्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्। धातोर्विहितत्वादिह सन आर्धधातुकत्वम्। इट्। द्वित्वम्। 'सन्यतः' (सू २३१७)। पठितुमिच्छति पिपठिषति। कर्मणः किम्। गमनेनेच्छतीति करणान्माभूत्। समानकर्तृकात् किम्। शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणात्पक्षे वाक्यमपि। लुङ्सनोर्घस्लृ' (सू २४२७)। 'एकाच उपदेशे-' (सू २२४६) इति नेट्। सस्य तत्वम्। अत्तुमिच्छति जिघत्सति। ईर्ष्यतेस्तृतीयस्य' (वा ३४०३) इति यिसनोर्द्वित्वम्। ईर्ष्यियिषति-ईर्ष्यिषिषति। **२६०९ रुदविदमुषग्रहिस्वपिप्रच्छः संश्च १।२।८॥** एभ्यः सन् क्त्वा च कितौ स्तः। रुरुदिषति। विविदिषति। मुमुषिषति।

---

काद्धातोरिच्छायां सन् वा स्यादिति फलति। तदाह—इषिकर्मण इत्यादि। इषिरिच्छा। इषिणा एककर्तृकत्वात् इषिकर्मीभूतव्यापारवाचकाद्धातोरित्यर्थः। ननु समानकर्तृकादित्युक्त्यैव धातोरिति लब्धम्। धात्वर्थव्यापाराश्रयस्यैव कर्तृत्वान्नियत आह—धातोरिति। धातोरिति विहितस्यैव प्रत्ययस्यार्धधातुकत्वं, न तु धातोः परस्य। अन्यथा जुगुप्सते इत्यत्र धातोरित्यविहितस्यापि 'गुप्तिज्किद्भ्यः' इति सन आर्धधातुकत्वापत्तौ लघूपधगुणापत्तेरिति भावः। अस्य सन आर्धधातुकत्वे फलमाह—इडिति। द्वित्वमिति। 'सन्यतोः' इत्यनेनेति भावः। अभ्यासस्य इत्वविधिं स्मारयति—सन्यत इति। पठितुमिच्छतीति। भावस्तुमुनर्थः 'अव्ययकृतो भावे' इत्युक्तेः। धात्वर्थ एव भाव इत्युच्यते। तथाच पठितुमित्यस्य पठनक्रियैवार्थः। तस्मिन् पठने इच्छाकर्मत्वम्, इच्छासमानकर्तृकत्वं च सना गम्यते। तथा च स्वकर्तृकं पठनमिच्छतीत्यर्थे पिपठिषतीति शब्दो वर्तत इत्युक्तं भवति। अथ 'अद भक्षणे' इति धातोः सनि घस्लृभावं स्मारयति—लुङ्सनोर्घस्लृ इति। घस् स इति स्थिते इटमाशङ्क्य आह—एकाच इति। नेडिति। घस् स इति स्थिते आह—सस्य तत्वमिति। 'सः स्यार्द्धधातुके' इत्यनेनेति भावः। जिघत्सतीति। द्वित्वे अभ्यासजश्त्वचुत्वे इति भावः। यसनोर्द्वित्वमिति। 'तृतीयस्य व्यञ्जनस्ये'ति पक्षे ईर्ष्य इस इत्यत्र यकारमात्रस्य द्वित्वे, सनः षत्वे, संयुक्तद्वियकारं रूपमिति भावः। तदाह—ईर्ष्यियिषतीति। तथाच सन्नन्ते ईकाररेफषकारयकारद्वित्वेकारषकाराः। 'तृतीयस्यैकाच' इति पक्षे ईर्ष्य इ स इत्यत्र स इत्यस्य द्वित्वे अभ्यासेत्वे सकारद्वयस्यापि षत्वे रूपं मत्वा आह—ईर्ष्यिषिषतीति। अत्र तु सन्नन्ते ईकाररेफषकारयकारेकारषकारेकारषकाराऽकाराः। रुदविद। इका निर्देशात् सम्प्रसारणे गृहीति निर्देशः। स्वपीति इकारस्तु उच्चारणार्थः, न श्विका निर्देशः, सुपीति सम्प्रसारणप्रसङ्गात्। चकारात् 'मृडमृदगुध' इति पूर्वसूत्रस्थं क्त्वेति समुच्चीयते। तदाह—सन् क्त्वा चेति। कितावित। 'असंयोगाल्लिट्' इत्यतस्तदनुवृत्तेरिति भावः। स्वप्साहचर्याद्विदेरेव ग्रहणमिति केचित्। अविशेषात्सर्वस्येत्यन्ये। 'इलन्ताच्च' इति सिद्धे रुदविदमुषां ग्रहणं 'रलो व्युपधात्' इति विकल्पबाधनार्थम्। ग्रहेस्तु सन्यप्राप्तौ

**२६१० सनि ग्रहगुहोश्च ७।२।१२॥** ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात् । 'ग्रहिज्या-' ( सू २४१२ ) इति सम्प्रसारणम् । सनः षत्वस्यासिद्धत्वाद्भष्भावः । जिघृक्षति । जुघुक्षति । **२६११ किरश्च पञ्चभ्यः ७।२।७५॥** कॄ, गॄ, दृङ्, धृङ्, प्रच्छ् एभ्यः सन इट् स्यात् । पिपृच्छिषति । चिकरिषति । जिगरिषति । जिगलिषति । अत्रेटो दीर्घो नेष्टः । दिदरिषते । दिधरिषते । कथम् 'उद्दिधीर्षुः' इति । औवादिकयोर्दृङ्धृञोरिति गृहाण । **२६१२ इको झल् १।२।९॥** इगन्ता-

'न क्त्वा सेट्' इतिनिषेधबाधनार्थम् । स्वपिप्रच्छ्योस्तु क्त्वायां किवेऽपि सन अप्राप्तकित्त्वविधानार्थम् । रुरुदिषतीत्यादौ सनः कित्वाल्लघूपधगुणाऽभावः । सनि ग्रहगुहोश्च । चकारात् 'श्र्युकः क्किति' इत्यतः उक इत्यनुवृत्यते, न तु श्रयतिः, तस्य 'सनीवन्तर्ध' इति विकल्पस्य वक्ष्यमाणत्वात् । 'नेड्वशि कृति' इत्यतः नेडिति चानुवर्तते । तदाह—ग्रहेरित्यादि । ग्रहधातोर्नित्यमिटि प्राप्ते गुहेः ऊदित्वाद्विकल्पे प्राप्ते वचनम् । ग्रहिज्येति । ग्रह् स इति स्थिते सनः कित्वात् 'ग्रहिज्या' इति रेफस्य सम्प्रसारणम् ऋकार इत्यर्थः । ननु गृह् स इति स्थिते हस्य ढत्वे भष्भावापेक्षया परत्वात् कत्वे सस्य षत्वे च कृते झषन्तत्वाभावे कथं भष्भाव इत्यत आह—सनः षत्वस्येति । कत्वस्यासिद्धत्वादित्येव सुवचम् । जिघृक्षतीति । गृह् स इति स्थिते हकारादिषः परस्य सस्य षत्वं परत्वात् प्राप्तं, तस्यासिद्धत्वात् हस्य ढत्वे भष्भावः, ततः कत्वे कात्परस्य षत्वमिति क्रम इति भावः । गुहेः जुघुक्षतीत्युदाहार्यम् । उगन्तात् बुभूषति । अत्र 'श्र्युकः क्किती'त्यनेन तु न सिध्यति, तत्र कित एव निषेधात् । परत्वादिडागमे 'इको झल्'इत्यस्याऽप्राप्तेः । स्पष्टं चेद शब्देन्दुशेखरे । सुषुप्सतीति । सनः कित्वात् 'वचिस्वपि' इति सम्प्रसारणं लघूपधगुणाभावश्च । किरश्च पञ्चभ्यः । किर इति पञ्चमी । किरादिभ्य इति विवक्षितम् । तुदादौ 'कॄ विक्षेपे, गॄ निगरणे, दृङ् आदरणे, धृङ् अवस्थाने, प्रच्छ ज्ञीप्सायाम्' इति स्थिताः । तदाह—कॄ गॄ इत्यादिना । सन इडिति । 'स्मिपूङ्रञ्ज्वशां सनि' इत्यतः 'इडत्यर्ति' इत्यतश्च तदनुवृत्तेरिति भावः । किरतिगिरत्योः 'इट् सनि वे'ति विकल्पे अन्येषां च 'एकाच' इति निषेधे प्राप्ते अयमिड्विधिः । शब्देन्दुशेखरे तु 'सनि ग्रहे'ति 'एकाच' इति च निषेधे प्राप्ते वचनमित्युक्तम् । पिपृच्छिषतीति । सनः कित्वात् 'ग्रहिज्या' इति सम्प्रसारणम् । चिकरिषतीति । कॄधातोः सनि इटि रूपम् । जिगरिषतीति । 'गॄ निगरणे' इत्यस्मात्सनि इटि रूपम् । जिगलिषतीति । 'अचि विभाषा' इति लत्वविकल्प इति भावः । 'इट् सनि वे'त्यस्यायमपवादः । चिकरिषति, जिगरिषति इत्यत्र 'वॄतो वा' इति दीर्घमाशङ्क्य आह—अत्रेटो दीर्घो नेष्टः इति । वार्तिकमिदं वृत्तौ स्थितम् । भाष्ये तु न दृश्यते । दिदरिषते दिधरिषते इति । दृङो धृङश्च सनि इटि रूपम् । 'पूर्ववत्सनः' इत्यात्मनेपदम् । कथमिति । 'उद्दिधीर्षु'रिति कथमि-

ज्झलादिः सन्कित्स्यात् । बुभूषति । दीङ् । दातुमिच्छति दिदीषते । एज्विषयत्वाभावात् 'मीनातिमिनोति-' ( सू २५०८ ) इत्यात्वं न । अत एव 'सनि मीमा-' ( सू २६२३ ) इति सूत्रे माधातोः पृथङ्मीग्रहणं कृतम् । **२६१३ हलन्ताच्च १।२।१०॥** इक्समीपाद्धलः परो झलादिः सन्कित्स्यात् । गुहू-जुघुक्षति । बिभित्सति । इकः किम् । यियक्षते । झल् किम् । विवर्धिषते । हल्ग्रहणं जातिपरम् । तृंहू-तितृक्षति तितृंहिषति । **२६१४ अज्झनगमां सनि ६।४।**

इत्यन्वयः । कित्त्वाभावादित्त्वेन इट्प्रसङ्गादिति भावः । भौवादिकयोरिति । 'धृङ् अवस्थाने' 'धृञ् धारणे' इत्यनयोर्भौवादिकयोः सनि कित्त्वाभावादिडभावे 'अज्झनगमां सनि' इति दीर्घे 'ऋत इद्धातोः' इति इत्वे, रपरत्वे, 'हलि च' इति दीर्घे, षत्वे, दिधीर्षं इत्यस्मात्, 'सनाशंसभिक्ष उः' इत्युप्रत्यये दिधीर्षुरिति रूपमिति गृहाण जानीहीति शङ्कां प्रति उत्तरम् । इको झल् । इगन्तादिति । सना आक्षिप्तधातुविशेषणत्वात्तदन्तविधिरिति भावः । सन् किदिति । 'रुदविदमुषग्रहि' इत्यतः 'असंयोगाल्लिट् कित्' इत्यतश्च तदनुवृत्तेरिति भावः । बुभूषतीति । कित्त्वान्न गुणः । उकः परत्वान्नेट् । दिदीषते इति । सनः कित्त्वान्न गुणः । दीङो ङित्त्वात् 'पूर्ववत्सनः' इत्यात्मनेपदम् । एज्विषयत्वाभावादिति । कित्त्वे गुणनिषेधादिति भावः । अत एवेति । यद्येज्विषयादन्यत्राप्यात्वं स्यात् तदा मीमेति पृथक् ग्रहणमनर्थकं स्यात् । 'मामादाग्रहणेष्वविशेषः' इत्युक्तेरिति भावः । हलन्ताच्च । 'इको झल्' इति पूर्वसूत्रमनुवर्तते । 'रुदविदमुष' इत्यतः सनिति 'असंयोगाल्लिट्' इत्यतः किदिति च । 'हलि'ति पञ्चम्यन्तमेकं पदम् । अन्तशब्दः समीपवाची । तदाह—इक्समीपादित्यादि । जुघुक्षतीति । सनः कित्त्वान्न गुणः । 'सनि ग्रहगुहोश्च' इत्यूदित्त्वेऽपि नित्यं नेट् । हस्य ढत्वे भष्भावे कत्वषत्वे इति भावः । बिभित्सतीति । भिदेः सनः कित्त्वान्न गुणः । यियक्षते इति । अत्र इकः इक्समीपत्वाऽभावान्न कित्त्वम् । सति तु कित्त्वे यजेः सम्प्रसारणं स्यादिति भावः । विवर्धिषते इति । वृधेः सनि रूपम् । अत्र सन इटि झलादित्व नेति भावः । ननु 'तृंहु हिंसायाम्' तुदादिः नोपधोऽयम् । कृतानुस्वारस्य निर्देशः । अस्मात्सनः 'अनिदिताम्' इति नलोपार्थं कित्त्वमिष्यते । तन्नोपपद्यते । न ह्यत्र इक्समीपादनुस्वारात् सन् परो भवति, हकारेण व्यवधानात् । हकारात्तु परः सन् इक्समीपाद्धलः परो न भवति, अनुस्वारेण व्यवधानादित्यत आह—हल्ग्रहणं जातिपरमिति । हल्त्वजात्याक्रान्तैकाऽनेकव्यक्तिपरमित्यर्थः । तृंहिति । तृंहुधातोः प्रदर्शनमिदम् । तितृक्षतीति । ऊदित्त्वादिडभावपक्षे रूपम् । सनः कित्त्वान्नलोपः लघूपधगुणाभावश्च । ढत्वकत्वषत्वानि । इट्पक्षे आह—तितृंहिषतीति । झलादित्वाऽभावेन कित्त्वाऽभावान्नलोपो नेति भावः । अज्झनगमां सनि । अच्, हन्, गम् एषां द्वन्द्वः । 'नोपधायाः' इत्यतः उपधायाः इत्यनुवृत्तं हनगमोरन्वेति न त्वजन्ते, असम्भवात् । अङ्गस्येत्यधिकृतम् ।

१६॥ अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । 'सन्लिटोर्जेः' ( सू २३३१ )। जिगीषति । 'विभाषा चेः' ( सू २५२५ )। चिकीषति-चिचीषति । जिघांसति । **२६१५ सनि च २।४।४७॥** इणो गमिः स्यात् सनि, न तु बोधने । जिगमिषति । बोधने प्रतीषिषति । 'इण्वदिकः' ( वा १५७७ )। अधिजिगमिषति । कर्मणि तङ् । 'परस्मैपदेषु' इत्युक्तेनेट् । 'झलादौ सनि' इति दीर्घः । जिगांस्यते । अधिजिगांस्यते । अजादेशस्येत्युक्तेर्गच्छतेर्न दीर्घः । जिगंस्यते । संजिगंसते । **२६१६ इङश्च २।४।४८॥** इङो गमिः स्यात्सनि । अधिजिगांसते । **२६१७ रलो व्युपधाद्धलादेः संश्च १।२।२६॥** उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेः रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । 'द्युति-

**अवस्तद्विशेषणत्वात्तदन्तविधिः गमधातुरिह । अजादेश एव विवक्षित इति प्रकृतसूत्रभाष्ये स्पष्टम् । 'ढ्लोपे पूर्वस्य' इत्यतो दीर्घं इत्यनुवर्तते । तदाह—**अजन्तानामित्यादिना । झलादौ सनीति । **'च्छ्वोः शूठ्' इति सूत्रभाष्ये 'अज्झनगमाम्' इत्यत्र सनं झला विशेषयिष्याम इत्युक्तेरिति भावः । अथ जिधातोरभ्यासात् परस्य कुत्वविधिं स्मारयति-**सन्लिटोर्जेरिति । जिगीषतीति । **जेर्दीर्घे अभ्यासात्परस्य कुत्वम् । अथ चिञ्धातोरभ्यासात्परस्य कुत्वविकल्पं स्मारयति—**विभाषा चेरिति । चिकीषति-चिचीषतीति । **अजन्तत्वाद्दीर्घः ।** जिघांसतीति । **हनेः सनि 'अज्झन' इत्यकारस्य दीर्घः, न त्वभ्यस्य नकारस्य । दीर्घश्रुत्या 'अचः' इत्युपस्थितेः । द्वित्वम् 'अभ्यासाच्च' इति कुत्वम् । 'नश्च' इत्यनुस्वारः ।** सनि च । **'इणो गा लुङि' इत्यतः इण इति 'णौ गमिरबोधने' इत्यतः गमिरबोधने इति चानुवर्तते । तदाह—**इणो गमिरित्यादि । जिगमिषतीति । **'गमेरिति इट् । अत्र 'अज्झनगमाम्' इति दीर्घो न 'झलादौ सनी'त्युक्तेः ।** प्रतीषिषतीति **बोधयितुमिच्छतीत्यर्थः । अत्र बोधनार्थत्वादिणो न गमिः । इ स इति स्थिते 'अजादेर्द्वितीयस्य' इति सनो द्वित्वे अभ्यासेत्वम् । प्रतिना सवर्णदीर्घे सकारद्वयस्यापि षत्वमिति भावः । 'इक् स्मरणे' इत्यस्याह—**इण्वदिक इति । **अनेन वार्तिकेन इक्धातुरिणवद्भवतीत्यर्थः । ततश्च 'सनि च' इति गमिरादेश इति भावः ।** कर्मणि तङिति । **इण्धातोरिग्धातोश्च सन्नन्तात्कर्मणि लटस्तङित्यर्थः । 'भावकर्मणोः' इत्यनेनेति भावः ।** परस्मैपदेष्विति । **'गमेरिट् परस्मैपदेषु' इत्युक्तेस्तङि नेडित्यर्थः ।** झलादाविति । **'अज्झन' इति झलादौ सनि विहितो दीर्घ इत्यर्थः ।** जिगांस्यते इति । **गन्तुमिष्यते इत्यर्थः । इणो रूपम् ।** अधिजिगांस्यते इति । **स्मर्तुमिष्यत इत्यर्थः । इको रूपम् ।** जिगंस्यते इति । **गम्लृधातोः सन्नन्तात्कर्मणि तङि रूपम् । गमेरजादेशत्वाभावान्न दीर्घः । इङश्च ।** गमिः स्यात् सनीति । **'णौ गमिः' इत्यतः 'सनि च' इत्यतश्च तदनुवृत्तेरिति भावः । इङो ङित्वात् 'पूर्ववत्सनः' इति तङ् । परस्मैपदेष्वित्युक्तेर्नेट् । 'अज्झन' इति दीर्घ इति भावः ।** रलो । क्त्वासनाविति । **चकारेण 'पूङः क्त्वा च'**

स्वाप्योः सम्प्रसारणम्' (सू २३४४) । दिद्युतिषते-दिद्योतिषते । रुरुचिषते-रुरोचिषते । लिलिखिषति-लिलेखिषति । रलः किम् । दिदेविषति । व्युपधात् किम् । विवर्तिषते । हलादेः किम् । एषिषिषति । इह नित्यमपि द्वित्वं गुणेन बाध्यते । उपधाकार्यं हि द्वित्वात्प्रबलम्, ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकत्वात् ।

**२६१८ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ७।२।४९॥** इवन्तेभ्यः ऋधादिभ्यश्च सन इड्वा स्यात् । इडभावे 'हलन्ताच्च' (सू २६१३) इति कित्त्वम् । 'च्छ्वोः-' (सू २५६१) इति वस्य ऊठ् । यण् । द्वित्वम् । दुद्यूषति ।

इत्यतः क्त्वाया अनुकर्षादिति भावः । सेटाविति । 'न क्त्वा सेट्' इत्यतस्तदनुवृत्तेरिति भावः । वा किताविति । 'नोपधात्थफान्ताद्वा' इत्यतः 'असंयोगाल्लिट् कित्' इत्यतश्च तदनुवृत्तेरिति भावः । दिद्युतिषते इति । 'द्युत दीप्तौ' अनुदात्तेत् । सनि द्वित्वे कित्त्वात् 'द्युतिस्वाप्योः' इत्यभ्यासस्य सम्प्रसारणे पूर्वरूपे सनः कित्त्वान्न लघूपधगुण इति भावः । सनः कित्त्वाऽभावे आह—दिद्योतिषते इति । 'पूर्ववत्सनः' इत्यात्मनेपदम् । एषिषिषतीति । इष्धातोः सन् । इट् । हलादित्वाऽभावेन कित्त्वाभावाद्गुणे एष् इस ति इति स्थिते 'अजादेर्द्वितीयस्य' इति षिस् इत्यस्य द्वित्वे हलादिशेषे सनः षत्वे रूपम् । नन्विह सत्यपि कित्त्वे नित्यत्वात् परमपि गुणं बाधित्वा षिस् इत्यस्य द्वित्वे धात्ववयवस्य इकारस्य उपधात्वाऽभावादेव गुणाऽप्रसक्तेर्हलादेरिति व्यर्थमित्यत आह—इह नित्यमपि द्वित्वं गुणेन बाध्यते इति । कुत इत्यत आह—उपधाकार्यं हि द्वित्वात्प्रबलमिति । तच्च कुत इत्यत आह—ओणेरिति । ओणेः ऋदित्करणस्य ज्ञापकत्वादित्यन्वयः । तथाहि—ओण्धातोः ण्यन्तात्लुङि चङि 'णौ चङ्युपधायाः' इति ह्रस्वस्य 'नाग्लोपिशास्वृदिताम्' इति निषेधे सति ओणि अ त् इति स्थिते णि इत्यस्य द्वित्वे मा भवानोणिणदिति रूपम् । अत्र उपधाह्रस्वनिषेधार्थमोणेः ऋदित्करणम् । उपधाह्रस्वे कृते तु उण् इ अ त् इति स्थिते णि इत्यस्य द्वित्वे मा भवानुणिणदिति स्यात् । ओकारो न श्रूयेत इति स्थितिः । यदि तु नित्यत्वात् उपधाह्रस्वात् प्रागेव ओण् इ अ त् इत्यस्यां दशायां द्वित्वं स्यात् । तदा ओकारस्य उपधात्वाऽभावादेव ह्रस्वाऽप्रसक्तेस्तन्निषेधार्थमृदित्करणमनर्थकं स्यात् । तस्मादुपधाह्रस्वात्मकं उपधाकार्यं द्वित्वात् प्रबलमिति विज्ञायते इत्यर्थः । ननु भवतु उपधाह्रस्वो द्वित्वात् प्रबलः । प्रकृते तु उपधागुणः कथं द्वित्वात् प्रबलः स्यादित्यत आह—सामान्यापेक्षेति । उपधाह्रस्वस्य उपधाकार्यत्वेन रूपेण द्वित्वात् प्राबल्यविज्ञानादित्यर्थः । वस्तुतस्तु 'णौ चङ्युपधायाः' इति सूत्रे 'वक्ष्यमाणिमृदितं करोति तत् ज्ञापयति' द्विर्वचनादुपधाह्रस्वत्वं बलीय' इति भाष्ये विशिष्य उपधाह्रस्वग्रहणात् सामान्यापेक्षत्वं ज्ञापकस्य चिन्त्यमिति शब्देन्दुशेखरे प्रपञ्चितम् । सनीवन्तर्ध । सनि इवन्तेति च्छेदः । इवन्त, ऋध, भ्रस्ज, दम्भु, श्रि, स्वृ, यु, ऊर्णु, भर, ज्ञपि, सन्, एषां द्वन्द्वः । इव् अन्ते येषां ते

दिदेविषति। 'स्तौतिण्योरेव-' (सू. २६२७) इति वक्ष्यमाणनियमान्न षः। सुस्यूषति। सिसेविषति। **२६१९ आप्ज्ञप्यृधामीत् ७।४।५५॥** एषामच ईत्स्यात्सादौ सनि। **२६२० अत्र लोपोऽभ्यासस्य ७।४।५८॥** 'सनि मीमा-' (सू. २६२३) इत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात्। आप्तुमिच्छति ईप्सति। रपरत्वम्। चर्त्वम्। ईर्त्सति। अर्दिधिषति। बिभ्रज्जिषति-बिभ्रक्षति बिभर्जिषति-बिभर्क्षति। **२६२१ दम्भ इच्च ७।४।५६॥** दम्भेरच इत्स्यादीच्च सादौ सनि।

---

इवन्ताः। 'स्वरति' इत्यतः वेति 'इण्निष्ठायाम्' इत्यतः इडिति चानुवर्तते। तदाह-इवन्तेभ्यः इत्यादि। इवन्तस्य दिव्धातोरुदाहरिष्यन्नाह—इडभावे इति। वस्येति। वकारस्येत्यर्थः। यणिति। 'इकारादिकारस्य' इति शेषः। द्वित्वमिति। 'द्यु इत्यस्ये'ति शेषः। दुद्यूषतीति। 'अज्झन' इति दीर्घः। इट्पक्षे आह—दिदेविषतीति। अझलादित्वान्न सनः कित्त्वम्, अतो नोट्, किन्तु लघूपधगुण इति भावः। इवन्तस्योदाहरणान्तरं सिवुधातोः सुस्यूषतीति वक्ष्यते। तत्र द्वितीयस्य षत्वमाशङ्क्य आह—स्तौतिण्योरिति। सुस्यूषतीति। सिवुधातोः सनि इडभावे दुद्यूषतीतिवद्रूपम्। इट्पक्षे आह—सिसेविषतीति। ऋधुधातोः सनि ईर्त्सतीति रूपं वक्ष्यन्नाह—आप्ज्ञप्यृधामीत्। सादौ सनीति। 'सनि मीमाघुरभ' इत्यतः सनीति अच इति चानुवर्तते। 'सः स्यार्धधातुके' इत्यतः सीत्यनुवृत्तं सनो विशेषणम्। तदादिविधिरिति भावः। अत्र लोपोऽभ्यासस्य। 'सनि मीमा' इति 'आप्ज्ञप्यृधामीत्' इति 'दम्भ इच्च' इति 'मुचोऽकर्मकस्य गुणो वा' इति पूर्वसूत्रचतुष्टयविहितकार्यमत्रेत्यनेन परामृश्यते। तदाह—सनि मीमेत्यारभ्येति। सूत्रचतुष्टयकार्ये कृते सतीत्यर्थः। ईप्सतीति। आप्धातोः सनि आकारस्य ईत्वे 'अजादेर्द्वितीयस्य' इति प्स इत्यस्य द्वित्वे अभ्यासलोप इति भावः। रपरत्वमिति। ऋधेः सनि इडभावे ऋकारस्य ईत्वं रपरत्वमित्यर्थः। चर्त्वमिति। ईर्ध् स इति स्थिते धस्य चर्त्वे 'न न्द्राः' इति रेफं वर्जयित्वा 'अजादेर्द्वितीयस्य' इति 'त्स' इत्यस्य द्वित्वे अभ्यासस्य लोप इति भावः। 'पूर्वत्रासिद्धीयमद्वित्वे' इति वचनात् चर्त्वे कृते द्वित्वमिति बोध्यम्। इट्पक्षे आह—अर्दिधिषतीति। सनः सार्धधातुकत्वाऽभावादीत्त्वाऽभावे गुणे रपरत्वे अर् ध् इ स इति स्थिते धिस् इत्यस्य द्वित्वमिति भावः। भ्रस्ज्धातोः सनः इटि 'भ्रस्जो रोपधयोः' इति रमागमाऽभावे आह—बिभ्रज्जिषतीति। सस्य श्चुत्वेन शः, शस्य जश्त्वेन जः। कित्त्वाभावात् 'ग्रहिज्या' इति सम्प्रसारणं न। बिभर्जिषतीति। इटि रमागमपक्षे भ्रस्ज् इस इति स्थिते अकारादुपरि सकारात्प्राक् रेफागमे भकाराद्रेफस्य सकारस्य च निवृत्तौ भर्ज् इस इति स्थिते भर्ज् इत्यस्य द्वित्वे हलादिशेषे अभ्यासस्य इत्वे जश्त्वे सनः षत्वे च रूपम्। तदेवमिट्पक्षे रमागमतदभावाभ्यां रूपद्वयम्। बिभ्रक्षतीति। इडभावे रमागमाऽभावे च रूपम्। जस्य कुत्वं सस्य षः। बिभर्क्षतीति। इडभावे रमागमे च रूपम्। तदेवमिडभावपक्षे रमागम-

अभ्यासलोपः । 'हलन्ताच' ( सू २६१३ ) इत्यत्र हल्ग्रहणं जातिपरमित्युक्तम् । तेन सनः कित्वान्नलोपः । धिप्सति-धीप्सति-दिदम्भिषति । शिश्रीषति-शिश्रयिषति । 'उदोष्ठ्यपूर्वस्य' ( सू २४९४ ) । मुस्तूर्षति । सिस्वरिषति । युयूषति । यियविषति । ऊर्णुनूषति । ऊर्णुनुविषति । ऊर्णुनविषति । नच परत्वाद्गुणावादेशयोः सतोरभ्यासे उकारो न श्रूयेतेति वाच्यम् । 'द्विर्वचनेऽचि' (सू २२४३)

तदभावाभ्यां द्वे रूपे । दम्भ इच । 'सनि मीमा' इत्यतः सनीति अच इति चानुवर्तते । चकारात् 'आप्ज्ञप्यृधाम्' इति सूत्रादीदिति समुच्चीयते । 'सः सि' इत्यतः सीत्यनुवृत्तं सनो विशेषणम्, तदादिविधिः । तदाह-दम्भेरच इत्यादि । अभ्यासलोप इति । 'अत्र लोपः' इत्यनेनेति शेषः । दिम्भ् स इति स्थिते इक्समीपाद्धल्त्वाराद्व्यवहितपरत्वाभावेऽपि हलन्तादित्वस्य प्रवृत्तिमुपपादयति-हलन्ताच्चेत्यत्रेति । हल्ग्रहणं हल्त्वजात्याक्रान्तैकाऽनेकव्यक्तिपरमिति प्रागुक्तमित्यर्थः । ततः किमित्यत आह—तेनेति । धिप्सतीति । 'सनीवन्त' इति इडभावे ह्रस्वे रूपम् । धीप्सतीति । इडभावे ईत्वे च रूपम् । दिदम्भिषतीति । इट्पक्षे सनो झलादित्वाऽभावादकित्वान्नलोपो नेति भावः । शिश्रीषतीति । 'सनीवन्त' इति इडभावे अज्झनेति दीर्घः । सनः कित्वान्न गुणः । इट्पक्षे आह -शिश्रयिषतीति । अझलादित्वान्न कित्वं, नाप्यज्झनेति दीर्घः । स्तृधातोः सनि ऋकारस्य उत्वविधिं स्मारयति—उदोष्ठ्येति । तुस्तूर्षतीति । 'सनीवन्ते'ति इडभावे ऋकारस्य 'अज्झन' इति दीर्घ कृते उत्वे रपरत्वे 'उपधायां च' इति दीर्घ इति भावः । सिस्वरिषतीति । 'स्वृ' इत्यस्य द्वित्वे उदरत्वे इत्त्वमिति भावः । युयूषतीति । 'सनीवन्त' इति इडभावे 'अज्झन' इति दीर्घः । यियविषतीति । इट्पक्षे 'द्विर्वचनेऽचि' इति गुणनिषेधात् 'यु' इत्यस्य द्वित्वं 'ओः पुयण्जि' इतीत्वमिति भावः । ऊर्णुनूषतीति । 'सनीवन्त' इति इडभावपक्षे 'न न्द्राः' इति रेफं वर्जयित्वा नुस इत्यस्य द्वित्वे 'अज्झनेति' दीर्घः । 'इको झल्' इति सनः कित्वान्न गुणः । इट्पक्षे तु 'विभाषोर्णोः' इति सनः ङित्वविकल्पं मत्वा आह-ऊर्णुनुविषतीति-ऊर्णुनविषतीति । ङित्वपक्षे गुणाऽभावान्नुशब्दस्य द्वित्वे उत्तरखण्डे उवङ् । ङित्वाभावपक्षे 'नु' इत्यस्य द्वित्वे उत्तरखण्डस्य गुणावादेशाविति भावः । उभयत्राप्यभ्यासे उवर्णः श्रूयते । ननु ङित्वाभावपक्षे ऊर्णु इस इति स्थिते द्वित्वात् प्रागेव परत्वात् गुणे अवादेशे च कृते नवशब्दस्य द्वित्वे अभ्यासस्याऽत इत्त्वे ऊर्णिनविषतीति अभ्यासे इकार एव श्रूयेत, न तु उकार इत्याशङ्क्य निराकरोति—द्विर्वचनेऽचीति । अस्मिन् सूत्रे 'स्थानिव'दित्यनुवर्त्य रूपातिदेशं चाश्रित्य द्वित्वनिमित्ते अचि परे यः अजादेशः स द्वित्वे कर्तव्ये स्थानिरूपं प्रतिपद्यते इत्येकोऽर्थः । 'न पदान्त' इत्यतो नेत्यनुवर्त्य द्वित्वनिमित्ते अचि यः अजादेशः स न स्यात् द्वित्वे कर्तव्ये इत्यन्योऽर्थः । तत्र प्रथमव्याख्याने तु कृतस्यापि गुणस्य स्थानिभूतोकाररूपप्रतिपत्त्या 'नु' इत्यस्य द्वित्वे अभ्यासे उकार एव श्रूयते । द्वि-

इति सूत्रेण द्वित्वे कर्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा। न च सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता कथमिति वाच्यम्। "कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते, न त्वननुभवन्नपि" ( प ११ )। न चेह सन् द्वित्वमनुभवति-बुभूर्षति-बिभरिषति। ज्ञपिः पुगन्तो मित्सञ्ज्ञकः पकारान्तश्चौरादिकश्च। इड-भावे 'इको झल्' ( सू २६१२ ) इति कित्वान्न गुणः। 'अज्झन-' ( सू २६१४ ) इति दीर्घः परत्वाण्णिलोपेन बाध्यते। 'आप्ज्ञप्-' ( सू २६१९ ) इति ईत्। ज्ञीप्सति। जिज्ञपयिषति। अमितस्तु जिज्ञापयिषति। 'जनसन-' ( सू २५०४ ) इत्यात्त्वम्। सिषासति-सिसनिषति। 'तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः' ( वा ५०५९ )। २६२२ तनोतेर्विभाषा ६।४।१७॥ अस्योपधाया दीर्घो वा

---

द्वीयव्याख्यानेऽपि द्वित्वात् प्राक् गुणस्य निषिद्धतया नुशब्दस्यैव द्वित्वे अभ्यासे उकार एव श्रूयते इति भावः। ननु ऊर्णु इस इति सन्नन्तस्य द्वित्वरूपकार्यभाक्त्वे तदन्तर्गतस्य इस इत्यस्यापि कार्यित्वान्न द्वित्वनिमित्तत्वम्, 'नहि कार्यी निमित्ततया आश्रीयते' इत्युक्तेः। तथा च द्वित्वे कर्तव्ये द्वित्वनिमित्ताऽचपरकादेशस्य क्रियमाणो निषेधः कथमिह गुणस्य प्रसज्यते इत्याशङ्क्य निराकरोति—न च सन्नन्तस्येति। कार्यमनुभवन्निति। अत्र व्याख्यानमेव शरणम्। न चेह सन्निति। किन्तु नुशब्द इत्यर्थः। बुभूर्षतीति। 'सनीवन्ते'ति इडभावपक्षे भृ स इति स्थिते 'अज्झन' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वे रपरत्वे उत्तरखण्डस्य 'हलि च' इति दीर्घः। सनः कित्वान्न गुण इति भावः। इट् पक्षे आह—बिभरिषतीति। भृ इस इति स्थिते द्वित्वे उदत्वे रपरत्वे हलादिशेषे अभ्यासस्य अत इत्वे उत्तरखण्डस्य गुणे रपरत्वमिति भावः। ज्ञपिः पुगन्तो मित्संज्ञक इति। 'सनीवन्त' इति सूत्रे गृह्यत इति शेषः। 'मारणतोषणनिशामनेषु ज्ञा' इति घटादौ। ततो हेतुमण्णौ पुकि घटादित्वेन मित्त्वात् उपधाह्रस्वे ज्ञपीति ण्यन्तो गृह्यत इत्यर्थः। पकारान्तश्चौरादिकश्चेति। 'ज्ञप मिच्च' इति यः स्वतः पकारान्तः पठितः चुरादौ, न तु पुगन्तः सोऽपि 'सनीवन्त' इति सूत्रे गृह्यते इत्यर्थः। इडभावे इति। उभयविधादपि ण्यन्तात् ज्ञपि इत्यस्मात् सनि इडभावपक्षे णेः परस्य सनः 'इको झल्' इति कित्वाण्णेर्गुणो नेत्यर्थः। परत्वादिति। णेर्लोपे सति अचोऽभावान्न दीर्घ इति भावः। तथाच 'ज्ञीप्' इत्यस्य द्वित्वे हलादिशेषे 'अत्र लोपः' इत्यभ्यासलोपे परिनिष्ठितमाह—ज्ञीप्सतीति। इट्पक्षे आह—जिज्ञपयिषतीति। अमितस्त्विति। मारणादिव्यतिरिक्तार्थकस्य घटादिकस्य हेतुमण्ण्यन्तस्य 'ज्ञा नियोगे' इति चौरादिकण्यन्तस्य च मित्त्वाऽभावेन उपधाह्रस्वाऽभावात् 'सनीवन्त' इत्यत्र ज्ञपिग्रहणेनाऽग्रहणान्नित्यमेव इडिति भावः। तदाह—जिज्ञापयिषतीति। सनधातोः सनि आह—जनसनेत्यात्त्वमिति। 'नकारस्येति' शेषः। सिषासतीति। आत्त्वे कृते सा इत्यस्य द्वित्वे अभ्यासस्य ह्रस्वे अत इत्वे षत्वे रूपम्। नच 'स्तौतिण्योरेव' इति नियमान्न ष इति शङ्क्यम्, सनः षत्वे

स्याज्झलादौ सनि। तितांसति। तितंसति। तितनिषति। 'आशङ्कायां सन्वक्तव्यः' (वा १७०७) श्वा मुमूर्षति। कूलं पिपतिषति। **२६२३ सनि मीमाघुरभलभशकपतपदामच इस् ७।४।५४॥** एषामच इस् स्यात्सादौ सनि। अभ्यासलोपः। 'स्कोः–' (सू ३८०) इति सलोपः। पित्सति। दिदरिद्रिषति। दिदरिद्रासति। डु मिञ्, मीञ् आभ्यां सन्। कृतदीर्घस्य मिनोतेरपि मीरूपाविशेषादिस्। 'सः सि–' (सू २३४२) इति तः। मित्सति। मित्सते। मा माने–मित्सति। माङ्मेङोः–मित्सते। दोदाणोः–दित्सति। देङ्–दित्सते। दाञ्–दित्सति। दित्सते। धेट्–धित्सति। धाञ्–धित्सति। धित्सते। रिप्सते। लिप्सते।

---

सत्येव तत्प्रवृत्तेः। इट्पक्षे त्वाह–तितनिषतीति। अत्र 'जनसन' इत्यात्वं तु न, सनो झलादित्वाऽभावात्। 'स्तौतिण्योरेव' इति नियमान्न ष इति भावः। तनिपतीति। प्राप्तविभाषेयम्। तनोतेर्विभाषा। उपधाया दीर्घ इति। 'नोपधायाः' इत्यतः 'ढ्रलोपे' इत्यतश्च तदनुवृत्तेरिति भावः। झलादौ सनीति। 'अज्झन' इत्यतस्तदनुवर्तते। तत्र झलादाविति भाष्ये स्थितमिति भावः। आशङ्कायामिति। आशङ्काविषयक्रियावृत्तेर्धातोः स्वार्थे सन्नित्यर्थः। श्वा मुमूर्षतीति। शङ्कितमरणो भवतीत्यर्थः। कूलं पिपतिषतीति। शङ्कितपतनं भवतीत्यर्थः। 'तनिपति' इति इट्पक्षे रूपम्। पतेः सनि इडभावपक्षे त्वाह–सनि मीमा। सादौ सनीति। 'सः सि' इत्यतः सोऽत्यनुवृत्तेरिति भावः। अभ्यासलोप इति। 'अत्र लोपः' इत्यनेनेति भावः। पिस् स ति इति स्थिते आह–स्कोरिति। दरिद्रातेः सनि 'तनिपति' इति इड्विकल्पमुदाहरति–दिदरिद्रिषति। दिदरिद्रासतीति। डुमिञिति। 'डु मिञ् प्रक्षेपणे' स्वादिः, 'मीञ् हिंसायाम्' क्र्यादिः, आभ्यां सन्नित्यर्थः। 'सनि मीमा' इत्यत्र मीग्रहणेन एतयोरुभयोर्ग्रहणमिति भावः। ननु मी इति दीर्घश्रवणात् डु मिञ् इत्यस्य ह्रस्वान्तस्य कथं ग्रहणमित्यत आह–कृतदीर्घस्येति। डु मिञ्धातोः सनि 'अज्झन' इति कृतदीर्घस्य तथा 'मीञ् हिंसायाम्' इति स्वतःसिद्धदीर्घस्य च मीरूपाविशेषादुभयोरपि ग्रहणमित्यर्थः। सः सीति। उभयोरपि धात्वोः मी स इति स्थिते 'सनि मीमा' इति इसादेशे द्वित्वे 'अत्र लोपः' इत्यभ्यासलोपे 'सः सि' इति सस्य तकार इत्यर्थः। मित्सति मित्सते इति। प्रकृतेर्ञित्त्वात् 'पूर्ववत्सनः' इति उभयपदित्वम्। माङ्मेङोरिति। मेङः सनि 'आदेचः' इत्यात्वे कृते मारूपत्वाऽविशेषात् 'सनि मीमा' इत्यत्र उभयोरपि ग्रहणमिति भावः। दोदाणोरिति। 'दो अवखण्डने' इति धातोः सनि आत्वे कृते दारूपाऽविशेषात् घुत्वादुभयोर्ग्रहणमिति भावः। दित्सतीति। 'हलन्ताच्च' इति कित्त्वान्नोपधागुणः। देङिति। तस्यापि कृतात्वस्य दारूपत्वेन घुत्वादिति भावः। दाञिति। 'डु दाञ् दाने' इति धातुरपि घुत्वात् गृह्यते इति भावः। धेडिति। अस्यापि कृतात्वस्य घुत्वात् 'सनि मीमा' इत्यत्र ग्रहणमिति भावः। रिप्सते इति। रभधातोः रूपम्। लिप्सते इति। लभधातोः रूपम्।

शक्लृ–शिक्षति । शक मर्षणे इति दिवादिः स्वरितेत् । शिक्षति–शिक्षते । पित्सति । 'राधो हिंसायां सनीस् वाच्यः' ( वा ४६३५ ) । रित्सति । हिंसायाम् किम् । आरिरात्सति । **२६२४ मुचोऽकर्मकस्य गुणो वा ७।४।५७॥** सादौ सनि । अभ्यासलोपः । मोक्षते । मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णः । 'न वृद्भ्यश्चतुर्भ्यः' ( सू २३४८ ) । विवृत्सति । तङि तु विवर्तिषते । 'सेऽसिचि–' ( सू २५०६ ) इति वेट् । निनर्तिषति । निनृत्सति । **२६२५ इट् सनि वा ७।२।४१॥** वृङ्वृञ्भ्यामॄदन्ताच्च सन इड्वा स्यात् । तितरिषति । तितरीषति । तितीर्षति । विवरिषति । विवरीषति । वुवूर्षति । वृङ् । वुवूर्षते । विवरिषते । दुध्वूर्षति । **२६२६ स्मिपूङ्रञ्ज्वशां सनि ७।२।७४॥** स्मिङ्, पूङ्, ऋ, अञ्जू, अश, एभ्यः सन इट् स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति । इह रिस्शब्दस्य द्वित्वम् । इस् इति सनोऽवयवः

---

पित्सतीति । पत्लृधातोः रूपम् । पदधातोः पित्सते इति रूपम् । सनि इस् वाच्य इति । अकारस्येति शेषः । रित्सतीति । सनि इसादेशः । 'अत्र लोपः' इत्यभ्यासलोपः । मुचोऽकर्मकस्य । सादौ सनीति । शेषपूरणमिदम् । 'सः सि' इत्यतः सोति 'सनि मीमा' इत्यतः सनीति चानुवृत्तेरिति भावः । 'हलन्ताच्च' इति कित्त्वाद्गुणनिषेधे प्राप्ते वचनम् । अभ्यासलोप इति । 'अत्र लोपः' इत्यनेनेति शेषः । मोक्षते इति । 'अत्र लोपः' इत्यभ्यासलोपः । तङि त्विति । 'न वृद्भ्यः' इत्यत्र परस्मैपदग्रहणानुवृत्तेस्तङ्त्वादिति भावः । निनृत्सतीति । इडभावपक्षे 'हलन्ताच्च' इति कित्त्वान्न गुणः । इट् सनि वा । 'वृतो वा' इत्यतो 'वृत' इत्यनुवर्तते इति मत्वा आह—वृङ्वृञ्भ्यामित्यादि । 'सनि ग्रहगुहोश्च' इत्यस्यापवादः । चिकीर्षतीत्यादौ 'अज्झन' इति दीर्घे कृते सनि नेदं प्रवर्तते, 'एकाच उपदेश' इत्यत उपदेशे इत्यनुवर्त्य उपदेशे ॠकारान्तादिति व्याख्यानात् । तितरिषति–तितरीषतीति । तॄधातोः सनि इटि 'वृतो वा' इति दीर्घः । इडभावे त्वाह—तितीर्षतीति 'इको झल्' इति कित्त्वाद्गुणाभावे तॄ इत्यस्य ॠकारस्य इत्त्वे रपरत्वे 'हलि च' इति दीर्घ इति भावः । विवरिषतीति । वृञ्धातोः सनि इटि 'वृतो वा' इति दीर्घविकल्पः । इडभावे त्वाह—वुवूर्षतीति । 'उदोष्ठ्य' इत्युत्वे रपरत्वे 'हलि च' इति दीर्घः । वुवूर्षते इति । ञित्त्वादात्मनेपदम् । दुध्वूर्षतीति । 'ध्वृ कौटिल्ये' 'अज्झन' इति दीर्घः । 'उदोष्ठ्य' इत्युत्वे, 'हलि च' इति दीर्घ इति भावः । स्मिपूङ् । स्मि, पूङ्, ऋ, अञ्जू, अश एषां द्वन्द्वः । ऋकारस्य यणि रेफे रञ्ज्वशामिति निर्देशः । इट् स्यादिति । 'इडत्यर्ति' इत्यतस्तदनुवृत्तेरिति भावः । पूङस्तु पुपूषतीत्येव । 'सनि ग्रह' इति इण्निषेधात् । सिस्मयिषते इति । 'स्मिङ्पूङोरेव' इति नियमान्न षः । पिपविषते इति । पूङ्धातोः पू इत्यस्य द्वित्वे 'ओः पुयण्ज्यपरे' इति इत्त्वम् । अरिरिषतीति ।

कार्यभागिति कार्यिणो निमित्तत्वायोगात् । 'द्विर्वचनेऽचि' ( सू २२४३ ) इति न प्रवर्तते । अञ्जिजिषति । अशिशिषते । 'उभौ साभ्यासस्य' ( सू २६०६ ) । प्राणिणिषति । उच्छेस्तुक् । श्चुत्वम् । 'पूर्वत्रासिद्धीयमद्वित्वे' इति चछाभ्यां सहितस्यैटो द्वित्वम् । 'हलादिः शेषः' ( सू२१७९ ) उचिच्छिषति । 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति त्वनित्यम् । 'च्छ्वोः' (सू २५६१) इति सतुक्कग्रहणाज्ज्ञापकात् । प्रकृतिप्रत्यापत्तिवचनाद्वा । 'णौ च संश्चङोः' ( सू २५७६ ) ( सू

ऋधातोः सनि इटि रूपम् । रिस्शब्दस्येति । गुणे रपरत्वे 'अजादेर्द्वितीयस्य' इति रिस् इत्यस्य द्वित्वमित्यर्थः । ननु 'द्विर्वचनेऽचि' इति निषेधाद्गुणाऽसम्भवात् रिस् इत्यस्य कथं द्वित्वमित्यत आह—द्विर्वचनेऽचि इति न प्रवर्तते इति । कुत इत्यत आह—कार्यिणो निमित्तत्वाऽयोगादिति । 'नहि कार्यी निमित्ततया आश्रीयते' इति निषेधादिडादेः सनो द्वित्वरूपकार्यिणो न द्वित्वनिमित्तत्वमिति भावः । ननु इडागमः सन्भक्तः। ततश्च इस् इत्यस्य द्वित्वेऽपि समुदायस्य इस इत्यस्य द्वित्वकार्यित्वाऽभावात् द्वित्वनिमित्तत्वमित्यत आह-इस् इतीति । इस् इति सनोऽवयवो द्वित्वभागिति कृत्वा अवयवद्वारा इस इति समुदायस्य कार्यित्वमिति भावः । अञ्जिजिषतीति । अञ्जेः सनि इटि 'न न्द्राः' इति नकारस्य निषेधात् जिस् इत्यस्य द्वित्वम् । ऊदित्वादिड्विकल्पे प्राप्ते नित्यमिट् । अशिशिषते इति । 'अशू व्याप्तौ' ऊदित्वादिड्विकल्पे प्राप्ते नित्यमिट् । 'अश भोजने' इति क्र्यादिस्तु नित्यं सेडेव । उच्छेरिति । 'उछी विवासे' । अत्र 'छे च' इति तुगित्यर्थः । श्चुत्वमिति । तुक इति शेषः । ननु च्छ् इस इति स्थिते श्चुत्वस्याऽसिद्धत्वात्तकारसहितस्य द्वित्वे अभ्यासे तकारः श्रूयेत इत्यत आह-पूर्वत्रेत्यादि । हलादिः शेष इति । च्छिस् इत्यस्य द्वित्वे हलादिशेषादभ्यासे छकारसकारयोर्निवृत्तौ तुकश्चकारः इकारश्च शिष्यते इत्यर्थः । तदाह—उचिच्छिषतीति । उत्तरखण्डे छकारे परे इकारस्य तुकश्चुत्वेन चकारः । ननु च्छिस् इत्यस्य द्वित्वे हलादिशेषात्पूर्वखण्डे छकारसकारयोर्निवृत्तौ 'निमित्ताऽपाये नैमित्तिकस्याप्यपायः' इति न्यायेन तुकोऽपि निवृत्तेस्तदादेशचकारस्य कथमभ्यासे श्रवणमित्यत आह—निमित्तापाये इति । कथमनित्यत्वमित्यत आह—च्छ्वोरिति । पृष्टः, पृष्टवानित्यादौ प्रच्छेः छकारस्य 'च्छ्वोः' इति शकारे व्रश्चादिना शस्य षत्वे तुक्चकारस्य श्रवणप्राप्तौ तन्निवृत्त्यर्थं सतुक्कग्रहणम् । तत्र चकारस्य शकारे सति निमित्ताभावादेव तुकोऽपि निवृत्तिसिद्धेः सतुक्कग्रहणं व्यर्थमापद्यमानम् 'निमित्तापाये' इत्यस्याऽनित्यतां ज्ञापयतीत्यर्थः । प्रकृतिप्रत्यापत्तिवचनाद्वेति । 'हनश्च वधः' इति हनधातोरप्प्रत्यये प्रकृतेर्वधादेशे वधशब्दः । कंसवधमाचष्टे कंसं घातयतीत्यादौ 'आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः' इति अप्प्रत्ययस्य लुकि प्रकृतेर्वधादेशनिवृत्तिर्विहिता । तत्र कृतो लुकि निमित्ताऽपायादेव वधादेशनिवृत्तिसिद्धेः प्रकृतिप्रत्यापत्तिवचनं व्यर्थमापद्य-

२६०१ ) इति सूत्राभ्यामिङो गाङ्, श्वयतेः सम्प्रसारणं च वा । अधिजिगापयिषति—अध्यापिपयिषति । शिश्वाययिषति—शुशावयिषति । 'ह्वः सम्प्रसारणम्' ( सू २५८६ ) । जुहावयिषति । 'णौ द्वित्वात्प्रागच आदेशो न' इत्युक्तत्वादुकारस्य द्वित्वम् । पुस्फारयिषति । चुक्षावयिषति । 'ओः पुयण्ज्यपरे' ( सू २५७७ ) । पिपावयिषति । विभावयिषति । यियावयिषति । रिरावयिषति । लिलावयिषति ।

---

मानं 'निमित्तापाये' इत्यस्य अनित्यतां ज्ञापयतीत्यर्थः । यद्यप्यत्र वधशब्दे अप्प्रत्ययः वधादेशश्च युगपद्विहितः, नतु प्रत्यये परे । तथापि सन्नियोगशिष्टत्वात् प्रत्ययस्य निमित्तत्वं पर्यवसानगम्यमेति बोध्यम् । वस्तुतस्तु पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके 'पुष्ययोगे ज्ञि' इति वचने भाष्योक्तप्रकृतिप्रत्ययापत्तिरित्यनुवृत्तिरिह ज्ञापिका । तत्र हि 'चजोः' इति घिति परतः कुत्वम् । अन्यथा कृल्लुकि निमित्तापायपरिभाषयैव कुत्वनिवृत्तौ किं प्रकृतिप्रत्ययापत्त्यनुवृत्त्येति शब्देन्दुशेखरे विस्तरः । अथ 'इङ् अध्ययने' 'टु ओ श्वि गतिवृद्ध्योः' इत्याभ्यां ण्यन्ताभ्यां सनि विशेषमाह—णौ चेति । 'णौ च संश्चङोः' इति सूत्रं द्वितीयस्य चतुर्थे पादे षष्ठस्य प्रथमे पादे च स्थितम् । 'सन्परे चङ्परे च णौ इङो गाङ्वे'ति प्रथमस्यार्थः । सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वे'ति द्वितीयस्यार्थः । प्रथमसूत्रेण इङो गाङ्, द्वितीयसूत्रेण श्वयतेः सम्प्रसारणमित्युभयमपि पाक्षिकं भवतीत्यर्थः । अधिजिगापयिषतीति । इङो णौ विवक्षिते गाङि पुकि गापि इत्यस्मात्सनि रूपम् । 'णौ च संश्चङोः' इति गाङ्विधौ विषयसप्तमीति प्रागेवोक्तम् । गाङभावे आह—अध्यापिपयिषतीति । 'क्रीङ्जीनां णौ' इत्यात्वे पुक् । शिश्वाययिषतीति । श्विधातोर्णौ वृद्धावायादेशे श्वायि इत्यस्मात्सनि सम्प्रसारणाऽभावे रूपम् । सम्प्रसारणपक्षे आह—शुशावयिषतीति । ण्यन्तात्सनि इटि श्वि इ इस इति स्थिते 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनात्प्रथमं सम्प्रसारणं पूर्वरूपम् । 'शु' इत्यस्य द्वित्वे उत्तरखण्डे उकारस्य वृद्ध्यावादेशौ णिचो गुणाऽयादेशाविति भावः । ह्वः सम्प्रसारणमिति । हेतुमण्ण्यन्तप्रक्रियायां व्याख्यातम् । जुहावयिषतीति । ह्वेञो ण्यन्तात्सनि इटि प्रथमं सम्प्रसारणं पूर्वरूपम् । हु इत्यस्य द्वित्वम् । उकारस्य वृद्ध्यावादेशौ, णिचो गुणाऽयादेशाविति भावः । ननु परत्वात् द्वित्वात् प्रागेव उकारस्य वृद्ध्यावादेशयोः कृतयोः हाव् इत्यस्य द्वित्वे अभ्यासस्याऽत इत्वे इकार एव श्रूयेतेत्यत आह—णौ द्वित्वादिति । पुस्फारयिषतीति । स्फुरतेः ण्यन्तात्सनि इटि 'चिस्फुरोर्णौ' इत्यस्मात् प्रागेव स्फुर् इत्यस्य द्वित्वम्, द्वित्वे कार्ये णावच आदेशस्य निषेधात् । 'ओः पुयण्जि' इति इत्वं तु न, पकारस्य सकारेण व्यवहिततया पवर्गपरत्वाऽभावात् । चुक्षावयिषतीति । क्षुधातोः ण्यन्तात् सनि इटि क्षु इत्यस्य द्वित्वम् । परिनिष्ठिते रूपे अवर्णपरत्वेन णावच आदेशस्य निषेधादिति भावः । ओः पुयण्जीति । हेतुमण्णिच्प्रक्रियायामिदं व्याख्यातमपि स्मार्यते । पिपावयिषतीत्यादि । पू, भू, यु, रु, लु, जु एभ्यो ण्यन्तेभ्यः सनि इटि द्वित्वे कार्ये णा-

जिजावयिषति । पुयण्जि इति किम् । नुनावयिषति । अपरे किम् । बुभूषति । 'स्रवति-' ( सू २५७८ ) इतीत्त्वं वा । सिस्रावयिषति । सुस्रावयिषतीत्यादि । अपरे इत्येव । शुश्रूषते । २६२७ स्तौतिण्योरेव षण्यभ्यासात् ८।३।६१॥ अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यत्र । तुष्टूषति । 'शुतिस्वाप्योः-' ( सू २३४४ ) इत्युत्वम् । सुष्वापयिषति । सिषाधयिषति । स्तौतिण्योः किम् । सिसिक्षति । उपसर्गात्तु 'स्थादिष्वभ्यासेन च—' ( २२७७ ) इति षत्वम् । परिषिषिक्षति । षणि किम् । तिष्ठासति । सुषुप्सति ।

षष आदेशनिषेधात् उवर्णान्तानामेव द्वित्वे अभ्यासोवर्णस्य इत्वमिति भावः । जुः सौत्रो धातुः, 'जुचङ्क्रम्य' इत्यत्रोक्तः । अथ 'स्रवति शृणोति' इति सूत्रं हेतुमण्णिचप्रक्रियायां व्याख्यातं स्मारयति—स्रवतीतीत्त्वं वेति । शुश्रूषते इति । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । स्तौतिण्योरेव । 'षणी'ति कृतषत्वस्य सनो ग्रहणम् । 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम् 'इण्कोः' इति च । तत्र कुग्रहणं निवर्तते असम्भवात् । णिग्रहणेन तदन्तग्रहणम् । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । तदाह—अभ्यासेण इत्यादि । षभूते इति । षकारं प्राप्ते सनीत्यर्थः । नान्यत्रेति । अभ्यासेणः परस्य चेत्सस्य षत्वं तर्हि स्तौतिण्यन्तयोरेवेत्यर्थः । नच 'आदेशप्रत्यययोः' इत्येव सिद्धे आरम्भसामर्थ्यादेव नियमलाभात् एवकारो व्यर्थ इति शङ्क्यम्, षण्येवेति नियमनिरसनार्थत्वात् । 'षण्येवे'ति नियमे सति तुष्टावेत्यत्र षत्वाऽनापत्तेः । स्तौतेरुदाहरति—तुष्टूषतीति । 'अज्झन' इति दीर्घः । ण्यन्तस्योदाहरिष्यन्नाह—शुतीति । उत्वमिति । वकारस्य सम्प्रसारणमुकार इत्यर्थः । सुष्वापयिषतीति । स्वपेर्णौ उपधावृद्धौ स्वापि इत्यस्मात् सनि इटि वकारस्य सम्प्रसारणे पूर्वरूपे सुप इत्यस्य द्वित्वे णेर्गुणे अयादेशे सनः षत्वे अभ्यासेणः परस्य षत्वमिति भावः । सिषाधयिषतीति । अत्रापि ण्यन्तत्वादभ्यासेणः परस्य सस्य षत्वमिति भावः । सिसिक्षतीति । सेक्तुमिच्छतीत्यर्थः । सिच्धातोः सन् 'हलन्ताच्च' इति कित्त्वान्न लघूपधगुणः । अभ्यासेणः परस्य सस्य चेत् षत्वं तर्हि 'स्तौतिण्योरेव' इति नियमान्न ष इति भावः । ननु परिषिषिक्षतीत्यत्र अभ्यासेणः परस्य सस्य कथं षत्वं 'स्तौतिण्योरेव' इति नियमात् 'स्थादिष्वभ्यासेन च' इति षत्वस्याप्यनेन नियमेन निवृत्तेरित्यत आह—उपसर्गात्त्विति । 'स्तौतिण्योरेव' इति नियमेन मध्येऽपवादन्यायबलात् 'आदेशप्रत्यययोः' इति षत्वमेव बाध्यत इति भावः । षणि किमिति । कृतषत्वनिर्देशः किमर्थ इति प्रश्नः । तिष्ठासतीति । 'धात्वादेः' इति षस्य सत्वे स्था इत्यस्य द्वित्वे अभ्यासह्रस्वे इत्वे 'आदेशप्रत्यययोः' इति षत्वम् । कृतषत्वे सन्येवायं नियमः, अत्र तु सनः षत्वाऽभावेन नियमाऽप्रवृत्तेः षः निर्बाधमिति भावः । सुषुप्सतीति । स्वप्धातोः सनि 'रुदविदमुषग्रहिस्वपि' इति कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे कृते द्वित्वम् । कित्त्वान्न

अभ्यासादि:युक्तेर्नेह निषेधः । इण् । प्रतीषिषति । इक् । अधीषिषति । **२६२८ सः स्विदिस्वदिसहीनां च ८।३।६२** ।। अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव, न षः, षणि परे । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति । 'स्थादिष्वेवाभ्यासस्य' इति नियमान्नेह । अभिसुसूषति ।

'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपप्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ।।' ( भाष्यम् )

शैषिकाच्छैषिकः सरूपो न । तेन शालीये भव इति वाक्यमेव, न तु छान्ताच्छः । सरूपः किम् । अहिच्छत्त्रे भव आहिच्छत्त्रः, आहिच्छत्त्रे भव आहिच्छत्त्रीयः । अण्णन्ताच्छः । तथा मत्वर्थात्सरूपः स न । धनवानस्यास्ति । इह मतुबन्तान्मतुप् न । विरूपस्तु स्यादेव । दण्डिमती शाला । सरूप इत्यनुषज्यते । अर्थद्वारा सादृश्यं तस्यार्थः । तेन इच्छासन्नन्तादिच्छासन्न । स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते । मीमांसिषते । इति तिङन्ते सन्प्रकरणम् ।

---

लघूपधगुणः । इहापि 'स्तौतिण्योरेव' इति नियमो न भवति, सनः षत्वाऽभावादिति भावः । ननु 'षणि' इणः परस्य सस्य चेत् षत्वं तर्हि 'स्तौतिण्योरेव'त्येतावदेवास्तु । अभ्यासादिति किमर्थमित्यत आह—अभ्यासादिर्युक्तेर्नेहेति । प्रतीषिषतीति । इणधातोः सनि 'अजादेर्द्वितीयस्य' इति स इत्यस्य द्वित्वे अभ्यासेत्वम् । इह षभूते सनि 'इण गतौ' इति धातोः परस्य सस्य षत्वं भवत्येव, अभ्यासेणः परत्वे सत्येव नियमप्रवृत्तेरिति भावः । अधीषिषतीत्यप्येवम् । सः स्विदि । सः स्विदीतिच्छेदः । 'स्तौतिण्योरेव षण्यभ्यासात्' इति सूत्रं स्तौतिवर्जमनुवर्तते । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तं च । तदाह—अभ्यासेण इति । सकारविधिर्नियमार्थं इत्याह—सस्य स एवेति । सुनोतेः सनि 'स्तौतिण्योरेव' इति नियमादुत्तरखण्डस्य षत्वाऽभावे अभिसुसूषतीत्यत्र 'उपसर्गात्सुनोति' इत्यभ्यासस्य षत्वमाशङ्क्य आह—स्थादिष्वेवेति । शैषिकादिति । सन्विधायकसूत्रस्थमिदं वार्तिकम् । शैषिकात्सरूपः शैषिकः प्रत्ययो न । मतुबर्थीयात् सरूपो मतुबर्थिकः प्रत्ययो नेत्यन्वयः । शेषाधिकारे विहितः शैषिकः । भवार्थे अध्यात्मादित्वाट्ठञ् । मतुबर्थे भवो मतुबर्थीयः गहादित्वाच्छः । मतुबर्थोऽस्यास्तीति मतुबर्थिकः 'अत इनिठनौ' इति ठन् । शालीये इति । शालायां भवः शालीयः । 'वृद्धाच्छः' शालीये भव इत्यर्थे शालीयशब्दात् पुनः छो नेत्यर्थः । आहिच्छत्त्रे भव इति । आहिच्छत्त्रशब्दो भवार्थे अणन्तः । ततो भवार्थे 'वृद्धाच्छः' इति छ एव भवति । न तु पुनरणिति भावः । ननु जुगुप्सिषते इत्यादौ कथं सन्नन्तात् सनिष्यत आह—सरूप इत्यनुषज्यते इति । सन्नन्तान्न सनिष्यते इत्यत्रापि सरूप इत्यनुषज्यते इत्यर्थः । नन्वेवमपि जुगुप्सिषते इत्यत्र सरूपस्य सनः कथं प्रवृत्तिरित्यत आह—अर्थद्वारेति । शब्दतो वैरूप्यस्याऽसम्भवादर्थद्वारकमेव सारूप्यं विवक्षितमिति

## अथ तिङन्ते यङ्प्रकरणम् ॥ १३ ॥

**२६२९ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२॥** पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः तस्मिन् द्योत्ये यङ् स्यात्। **२६३० गुणो यङ्लुकोः ७।४।८२॥** अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। 'सनाद्यन्ताः—' (सू २३०४) इति धातुत्वाल्लडादयः। ङिदन्तत्वादात्मनेपदम्। पुनः पुनरतिशयेन वा भवति बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट। धातोः किम्। आर्धधातुकत्वं यथा स्यात्। तेन 'ब्रुवो वचिः' (सू २४५३) इत्यादि। एकाचः किम्। पुनः पुनर्जागर्ति। हलादेः किम्। भृशमीक्षते। भृशं शोभते रोचते इत्यत्र यङ् नेति भाष्यम्। पौनःपुन्ये तु स्यादेव। रोरुच्यते। शोशुभ्यते। 'सूचिसूत्रिमू-

---

भावः। तेनेति। इच्छासन्नन्तादिच्छासन्नेति लभ्यते इत्यर्थः। स्वार्थेति। स्वार्थसन्नन्तात्तु इच्छासन् भवत्येवेत्यर्थः। इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां सन्नन्तनिरूपणं समाप्तम्।

अथ यङ्प्रक्रियाः निरूप्यन्ते। धातोरेकाचो। तस्मिन्द्योत्ये इति। वाच्यत्वे तु प्रत्ययार्थस्य प्रधानतया सन्नन्ते इच्छाया इव तस्य विशेष्यत्वं स्यादिति भावः। गुणो यङ्लुकोः। यङ् च लुक् च इति द्वन्द्वात् सप्तमी। लुगिह यङ एव विवक्षितः, उपस्थितत्वात्। 'अत्र लोपः' इत्यतः अभ्यासस्येत्यनुवर्तते। तदाह—अभ्यासस्येति। इक्परिभाषया इगन्तस्येति लभ्यते। बोभूयते इति। 'सन्यङोः' इति द्वित्वम्। यङो ङित्त्वादूकारस्य न गुणः। 'बोभूय' इत्यस्माल्लटि तिपि शपि पररूपम्। 'क्रियासमभिहारे द्वे वाच्ये' इति पुनर्द्वित्वं तु न, तस्य 'क्रियासमभिहारे' इति विहितलोडन्तमात्रविषयत्वात्। अत एव 'क्रियासमभिहारे लोट्' इति सूत्रभाष्ये 'क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे वाच्ये' इत्येव पठितम्। पौनःपुन्ये यङि तु 'नित्यवीप्सयोः' इति न द्वित्वम्, ''क्रियासमभिहारे द्वे' इत्यनेन पौनःपुन्येऽपि लोडन्तद्वित्वविधानेन पौनःपुन्यस्य अन्यतो लाभे सौत्रद्वित्वाऽप्रवृत्तेर्ज्ञापनादित्यलम्। धातोः किमिति। 'क्रियासमभिहारे' इत्यनेनैव धातोर्लाभात्किमर्थं धातुग्रहणमिति प्रश्नः। आर्धधातुकत्वमिति। 'धातो'रित्यभावे आर्धधातुकत्वं न स्यात्। धातोरिति विहितप्रत्ययस्यैव आर्धधातुकत्वादिति भावः। ब्रुव इति। यङः आर्धधातुकत्वे सत्येव तस्मिन् परे 'ब्रुवो वचिः' 'वेञो वयिः' इत्यादि कार्यं सिध्यति। अन्यथा 'आर्धधातुके' इत्यधिकृत्य तद्विधानान्न स्यादिति भावः। भृशमीक्षते इति। नच भृशशब्देनैवात्र भृशार्थलाभात् यङ् न भविष्यतीति वाच्यम्, भृशत्वं हि यङ्द्योत्यम्, न तु वाच्यम्। द्योतनं च द्योतकस्यापि सम्भवतीति भावः। यङ् नेति। अनभिधानादिति भाष्ये स्पष्टम्। पौनःपुन्ये त्विति। पुनःपुनश्शब्दसमभिहारेऽपि यङस्त्येव, भृशार्थ एवानभिधानोक्तेरिति

ऽयट्यत्यर्यशूर्णोतिभ्यो यङ् वाच्यः' ( वा १७५१ )। आयाम्रयश्चुरादावदन्ताः। सोसूच्यते। सोसूत्र्यते। अनेकाच्कत्वेनाषोपदेशत्वात्षत्वं न। मोमूत्र्यते। **२६३१ यस्य हलः ६।४।४९॥** यस्य इति सङ्घातग्रहणम्। हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके। 'आदेः परस्य' ( सू ४४ )। 'अतो लोपः' ( सू २३०८ )। सोसूचाञ्चक्रे। सोसूचिता। सोसूत्रिता। मोमूत्रिता। **२६३२ दीर्घोऽकितः ७।४।८३॥** अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च। अटाट्यते। **२६३३ यङि च ७।४।३०॥** अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि यङ्लुकि च। यकारपररेफस्य न द्वित्वनिषेधः। अरार्यते इति भाष्योदाहरणात्। अरारिता। अशा-

---

भावः। सूचिसूत्रीति। सूचि, सूत्रि, मूत्रि, अटि, अर्ति, अशू, ऊर्णोति-एषां द्वन्द्वः। 'सूच पैशुन्ये, सूत्र वेष्टने, मूत्र प्रस्रवणे' एते अयश्चुराद्यन्तर्गणे कथादावदन्ताः। तेषामनेकाच्त्वादप्राप्तौ यङ्वचनमित्याह—आयाम्रय इति। 'अट गतौ, ऋ गतौ, अश भोजने, अशू व्याप्तौ' एषां हलादित्वाभावाद्वचनम्। ऊर्णोस्तु हलादित्वाभावादेकाच्त्वाभावाच्च वचनम्। सोसूच्यते इति। ण्यन्ताद्यङि णिलोपे द्वित्वे 'गुणो यङ्लुकोः' इति अभ्यासगुणः। सूचेः षोपदेशत्वभ्रमं वारयति—अनेकाच्कत्वेनेति। षोपदेशत्वे तु 'धात्वादेः' इति षस्य सत्वे कृते आदेशसकारत्वादुत्तरखण्डस्य षत्वं स्यादिति भावः। लिटि सोसूच् य आमिति स्थिते—यस्य हलः। यकाराद्कारस्य उच्चारणार्थत्वभ्रमं वारयति—सङ्घातग्रहणमिति। यकाराकारसमुदायस्येत्यर्थः। 'हलः' इति पञ्चमी। 'आर्द्धधातुके' इत्यधिकृतम्। 'अतो लोपः' इत्यस्मात् लोप इत्यनुवर्तते। तदाह—हलः परस्येत्यादिना। ननु 'अलोऽन्त्यस्य' इति यकाराद्कारस्य लोपः स्यादित्यत आह—आदेः परस्येति। 'अलोऽन्त्यस्य' इत्यस्यायमपवाद इति भावः। अतो लोपः इति। यकाराऽकारसङ्घाते यकारस्य लोपे सति परिशिष्टस्याऽकारस्य 'अतो लोपः' इत्यर्थः। ननु मास्तु संघातग्रहणम्। यकारस्यैवात्र लोपो विधीयताम्। अतो लोपे सति इष्टसिद्धिरिति चेत्, न-ईर्ष्य धातोस्तृचि इटि ईर्ष्यितेत्यत्र यकारलोपनिवृत्त्यर्थत्वादित्यलम्। अटधातोः यङि 'अजादेर्द्वितीयस्य' इति 'ट्य' इत्यस्य द्वित्वे हलादिशेषेण अभ्यासे यकारनिवृत्तौ अटट्यते इति स्थिते—दीर्घोऽकितः। अभ्यासस्येति। 'अत्र लोपोऽभ्यासस्य' इत्यतस्तदनुवृत्तेरिति भावः। यङि यङ्लुकि चेति। 'गुणो यङ्लुकोः' इत्यतस्तदनुवृत्तेरिति भावः। 'अकित' इत्यस्य तु यंयम्यते इत्यादौ प्रयोजनं वक्ष्यते। ऋधातोर्यङि कृते ङित्त्वाद्गुणनिषेधे प्राप्ते—यङि च। 'गुणोऽर्तिसंयोगाद्योः' इति सूत्रमनुवर्तते। 'रीङ् ऋतः' इत्यस्मात् ऋत इति च। तदाह—अर्तेरित्यादि। तथाच ऋ य इति स्थिते ऋकारस्य गुणे अकारे रपरत्वे अर् य इति स्थिते 'न न्द्राः' इति रेफस्य द्वित्वनिषेधे य इत्यस्य द्वित्वे 'दीर्घोऽकितः' इत्यभ्यासदीर्घे 'अर्यायते' इति प्राप्ते आह—यकारपररेफस्येति। भाष्योदाहरणादिति। 'धातोरेकाच' इति सूत्रे

शिता । उर्णोनूयते । बेभिद्यते । अल्लोपस्य स्थानिवत्वान्नोपधागुणः । बेभिदिता । **२६३४ नित्यं कौटिल्ये गतौ ३।१।२३॥** गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे । कुटिलं व्रजति वाव्रज्यते । **२६३५ लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ३।१।२४॥** एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति लोलुप्यते । सासद्यते । **२६३६ चरफलोश्च ७।४।८७॥** अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः । नुक् इत्यनेनानुस्वारो लक्ष्यते । 'स च पदान्तवद्वाच्यः' ( वा ४६६१ ) 'वा पदान्तस्य' ( सू १२५ ) इति यथा स्यात् । **२६३७ उत्परस्यातः ७।४।८८॥** चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः । हलि च (सू ३५४) इति दीर्घः । चंचूर्यते-चञ्चूर्यते । पम्फुल्यते-पंफुल्यते । २६३८

**इति शेषः ।** भराशितेति । **'यस्य हलः' इति यकारलोपः ।** अशाशितेति । **अशाशा-शोर्यङि 'श्य' इत्यस्य द्वित्वे हलादिशेषेण अभ्यासे यकारनिवृत्तौ 'दीर्घोऽकितः' इति दीर्घे 'यस्य हलः' इति यकारलोपः ।** ऊर्णोनूयते इति । **ऊर्णु य इति स्थिते 'न न्द्राः' इति 'नु' इत्यस्य द्वित्वे हलादिशेषे अभ्यासगुणे 'अकृत्' इति दीर्घः ।** बेभिद्यते इति । **भिद् य इति स्थिते भिद् इत्यस्य द्वित्वे हलादिशेषे अभ्यासगुणः । ननु बेभिद्य इति यङन्ताल्लुटि तासि इटि यलोपे अतो लोपे बेभिदितेत्यत्र तासि परे लघूपधगुणः स्यादित्यत आह—**अल्लोपस्य स्थानिवत्त्वादिति । नित्यं कौटिल्ये गतौ । **'नित्य' शब्दः एवार्थे । कौटिल्ये इत्यस्योपरि द्रष्टव्यः । 'धातोरेकाचः' इत्यतो यङित्यनुवर्तते । तदाह-**गत्यर्थात्कौटिल्य एवेति । **गत्यर्थवृत्तेर्धातोः कौटिल्ये द्योत्य एव यङित्यर्थः । एवशब्दव्यवच्छेद्यमाह—**न तु क्रियासमभिहारे इति । **शब्देन्दुशेखरे तु गत्यर्थेभ्यः क्रियासमभिहारे यङस्त्येवेति प्रपञ्चितम् ।** लुपसद । **लुप, सद, चर, जप, जभ, दह, दश, गॄ एषां द्वन्द्वः । यङित्यनुवर्तते । भावः धात्वर्थः । तद्गता गर्हा भावगर्हा । नित्य-मित्यनुवृत्तम् एवकारार्थकम् । तदाह—**एभ्य इत्यादि । चरफलोश्च । **'अत्र लोपः' इत्य-स्मादभ्यासस्येत्यनुवर्तते । 'नुगतोऽनुनासिकान्तस्य' इत्यस्मात् अतो नुगिति । 'गुणो यङ्लुकोः' इत्यस्मात् यङ्लुकोरिति च तदाह—**अनयोरित्यादि । **नुकि ककार इत्, उकार उच्चारणार्थः ।** लक्ष्यते इति । **'नुगतोऽनुनासिकान्तस्य' इति पूर्वसूत्रे यंय-म्यते, रंरम्यते, इत्यादौ अनुस्वारश्रवणार्थं नुगित्यनुस्वारोपलक्षणमाश्रयणीयम् । अ-न्यथा झलपरत्वाभावात् 'नश्च' इत्यनुस्वाराऽसम्भवान्नकार एव श्रूयेतेत्युक्तं भाष्ये । तस्यैवेहानुवृत्तेरत्राप्यनुस्वारोपलक्षणार्थत्वमिति भावः ।** पदान्तवदिति । **'नुगतोऽनु-नासिकान्तस्य' इति पूर्वसूत्रस्थमिदं वार्तिकमत्राप्यनुवर्तते इति भावः ।** उत्परस्यातः । **'अत्र लोपः' इत्यस्मादभ्यासस्येत्यनुवृत्तं परशब्दयोगात् पञ्चम्या विपरिणम्यते । 'गुणो यङ्लुकोः' इत्यतः यङ्लुकोरिति 'चरफलोः' इति चानुवर्तते तदाह—**चरफलो-रित्यादि । दीर्घ इति । **'उकारस्ये'ति शेषः ।** चञ्चूर्यते इति । गर्हितं **चरतीत्यर्थः । यङि**

**जपजभदहदशभञ्जपशां च ७।४।८६॥** एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः । गर्हितं जपति जञ्जप्यते इत्यादि । **२६३९ ग्रो यङि ८।२।२०॥** गिरतेः रेफस्य लत्वं स्याद्यङि । गर्हितं गिलति जेगिल्यते । 'घुमास्था–' ( सू २४६२ ) इतीत्वम् । गुणः । देदीयते । पेपीयते । सेषीयते । 'विभाषा श्वेः' ( सू २४२० ) । शोशूयते । शेश्वीयते । 'यङि च' ( सू २६३३ ) । सास्मर्यते । 'रीङृतः' ( सू १२३४ ) । चेक्रीयते । सुट् । सञ्चेस्क्रीयते । **२६४० सिचो यङि ८।३।११२॥** सिचः सस्य षो न स्याद्यङि । निसेसिच्यते । **२६४१ न कवतेर्यङि ७।४।६३॥** कवतेरभ्यासस्य चुत्वं न स्याद्यङि । कोकूयते । कौतिकुवत्योस्तु चो-

---

द्वित्वे हलादिशेषे अभ्यासाऽकारादुपरि अनुस्वारागमे 'वा पदान्तस्य' इति तस्य परसवर्णे मकारे उत्तरखण्डे अकारस्य उत्वे तस्य दीर्घः । परसवर्णाऽभावपक्षे त्वाह—चंचूर्यते इति । पंफुल्यते इति । अत्र अनुस्वारस्य मकारः परसवर्णः । जपजभ । 'चरफलोश्च' इत्यत्र यदनुवृत्तं तासर्वमिहाप्यनुवर्तते । तदाह—एषामिति । इत्यादीति । जञ्जभ्यते । दन्दह्यते । दन्दश्यते । बम्भज्यते । पम्पश्यते । 'पश' धातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति माधवः । 'तालव्यान्त' इति काशिका । ग्रो यङि । 'गॄ' इत्यस्य 'ग्रः' इति षष्ठ्येकवचनम् । 'कृपो रो लः' इत्यनुवर्तते । तदाह—गिरतेरित्यादि । दा, पा, सा, एभ्यो यङि विशेषमाह—घुमास्थेत्यादि । शोशूयते इति । श्विधातोर्यङि 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनात् सम्प्रसारणे पूर्वरूपे 'शु' इत्यस्य द्वित्वम् । 'अकृत्सार्वधातुकयोः' इति दीर्घः । सास्मर्यते इति । स्मृ य इति स्थिते संयोगादित्वात् 'यङि च' इति परत्वाद्गुणे रपरत्वे द्वित्वे 'दीर्घोऽकितः' इत्यभ्यासदीर्घः । चेक्रीयते इति । कृ य इति स्थिते परत्वात् ऋकारस्य रीङादेशे 'क्री' इत्यस्य द्वित्वे अभ्यासगुणः । सुडिति । 'सम्परिभ्यां करोतौ भूषणे' 'समवाये च' इत्यनेनेति शेषः । सिचो यङि । 'सहेः साडः सः' इत्यतः स, इति षष्ठ्यन्तमनुवर्तते । 'मूर्धन्यः' इत्यधिकृतम् 'न रपरसृपि' इत्यतः नेत्यनुवर्तते । तदाह—सिच इति । निसेसिच्यते इति । 'उपसर्गात्सुनोति' इति 'स्थादिष्वभ्यासेन' इति च षत्वमनेन निषिध्यते । न कवतेर्यङि । 'अत्र लोपः' इत्यत अभ्यासस्येति 'कुहोश्चुः' इत्यतः चुरिति चानुवर्तते इति मत्वा आह—कवतेरभ्यासस्येति । ननु 'कोर्यङि' इत्येव सिद्धे श्तिपा निर्देशो व्यर्थ इत्यत आह—कौतिकुवत्योस्त्विति । शपा निर्देशार्थं कवतिग्रहणम् । तेन 'कु शब्दे' इति लुग्विकरणस्य 'कुङ् शब्दे' इति शविकरणस्य च ग्रहणं न लभ्यते इति भावः । नच 'को'रित्युक्तेऽपि दीर्घान्तस्य शविकरणस्य न ग्रहणप्रसक्तिरिति वाच्यम्, तुदादौ 'कुङ् शब्दे' इति ह्रस्वान्तपाठस्य न्याससम्मतत्वात् । वस्तुतस्तु न्याससम्मते तौदादिकेऽस्याप्रवृत्तिरेव फलम् । 'लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इति लुग्विकरणस्य ग्रहणनिवृत्तिरिति बोध्यम् ।

कूयते। २६४२ नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ७।४।८४॥ एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः। अकित इत्युक्तेर्न दीर्घः। नलोपः। वनीवच्यते। सनीस्रस्यते इत्यादि। २६४३ नुगतोऽनुनासिकान्तस्य ७।४।८५॥ अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात्। नुका अनुस्वारो लक्ष्यते इत्युक्तम्। यँय्यम्यते-यंयम्यते। तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न। भाम क्रोधे। बाभाम्यते। 'ये विभाषा' (सू २३२६) जाजायते-जञ्जन्यते। 'हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः' (वा ४६२१)। जेघ्नीयते। हिंसायां किम्। जङ्घन्यते। २६४४ रीगृदुपधस्य च ७।४।९०॥ ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः। वरीवृत्यते। क्षुभ्नादित्वान्न णः। नरीनृत्यते। जरीगृह्यते। उभयत्र लत्वम्। चलीक्लृप्यते। 'रीगृत्वत इति वक्त-

नीग्वञ्चु। अभ्यासस्येति। 'अत्र लोपः' इत्यतस्तदनुवृत्तेरिति भावः। यङ्लुकोरिति। यङि यङ्लुकि चेत्यर्थः। न दीर्घ इति। नीगागमात्प्राक् प्राप्तोऽभ्यासदीर्घो नेत्यर्थः। भविष्यदपि कित्वं दीर्घप्रतिबन्धकमिति भावः। नलोप इति। 'अनिदिताम्' इत्यनेन नकारस्य लोपः इत्यर्थः। इत्यादीति। सनीस्रस्यते, दनीध्वस्यते, बनीभ्रस्यते, चनीकस्यते, पनीपत्यते, पनीपद्यते, चनीस्कद्यते.। नुगतोऽनु। अङ्गस्येत्यधिकृतम्। 'अत्र लोपः' इत्यतः अभ्यासस्येत्यनुवर्तते। 'गुणो यङ्लुकोः' इत्यतः यङ्लुकोरिति च। तदाह—अनुनासिकान्तस्येत्यादि। ननु 'यंयम्यते' इत्यत्र नुको नकारस्य अपदान्तत्वादझल्परकत्वाच्च कथं 'नश्च'इत्यनुस्वार इत्यत आह—नुकेति। अन्वभ्यासे ह्रस्वविधानाद्दीर्घस्याऽभावात् नुग्विधावत इति तपरकरणं व्यर्थमित्यत आह-तपरत्वसामर्थ्यादिति। स्वाभाविक एव ह्रस्वः अकारः, तस्यैव ग्रहणम्, नतु दीर्घादेशभूतस्य ह्रस्वाऽकारस्येत्येतदर्थं तपरकरणमिति भावः। बाभाम्यते इति। अत्र आकारस्यानिकस्य ह्रस्वत्वविधिसम्पन्नस्य अकारस्य न नुगिति भावः। जनधातोर्यङि नकारस्य आत्वविकल्पं स्मारयति-ये विभाषेति। घ्नीभाव इति। यद्यपीह ह्नीभावविधावपि 'अभ्यासाच्च' इति कुत्वे हकारस्य घकारः सिध्यति। तथापि प्रयत्नलाघवाऽभावात् प्रक्रियालाघवाच्च 'घ्नी'ति घकारोच्चारणमिति भावः। जेघ्नीयते इति। पुनः पुनरतिशयेन वा हिनस्तीत्यर्थः।' अत्र 'यङी'ति विषयसप्तमी। यङि विवक्षिते सतीति लभ्यते। तेन द्वित्वस्य परत्वेऽपि प्रागेव घ्नीभाव इति बोध्यम्। जङ्घन्यते इति। गर्हितं गच्छतीत्यर्थः। रीगृदुपधस्य च। अभ्यासस्येति। 'अत्र लोपः' इत्यतः तदनुवृत्तेरिति भावः। यङ्लुकोरिति। 'गुणो यङ्लुकोः' इत्यतस्तदनुवृत्तेरिति भावः। वरीवृत्यते इति। 'वृतु वर्तने' अस्माद्यङि द्वित्वे उरदत्वे हलादिशेषे अभ्यासस्य रीक्। नृतेर्यङि नरीनृत्यते इत्यत्र णत्वमाशङ्क्य आह—क्षुभ्नादित्वान्न ण इति। जरीगृह्यते इति। 'ग्रह उपादाने' अस्माद्यङि 'ग्रहिज्या' इति सम्प्रसारणे द्वित्वे उरदत्वे हलादिशेषे अभ्यासस्य रीक्।

ण्यम्' ( वा ४६६२ )। परीपृच्छ्यते। वरीवृश्च्यते। **२६४५ स्वपिस्यमिव्येञां यङि ६।१।१६॥** सम्प्रसारणं स्याद्यङि। सोषुप्यते। सेसिम्यते। वेवीयते। **२६४६ न वशः ६।१।२०॥** वावश्यते। **२६४७ चायः की ६।१।२१॥** चेकीयते। **२६४८ ई घ्राध्मोः ७।४।३१॥** जेघ्रीयते। देध्मीयते। **२६४६ अयङ् यि क्ङिति ७।४।२२॥** शीङोऽयङादेशः स्याद्यादौ क्ङिति परे। शाशय्यते। अभ्यासस्य ह्रस्वः। ततो गुणः। डोढौक्यते। तोत्रौक्यते। इति तिङन्ते यङ्प्रकरणम्।

---

उभयत्रेति। कृपधातोः यङि द्वित्वे उरदत्वे रपरत्वे हलादिशेषे रीक्। चलीक्लृप्यते 'कृपो रो लः' इत्यभ्यासे रेफस्य लकारः। उत्तरखण्डे ऋकारस्याऽवयवो यो रेफः तस्य लकारसदृश इत्यर्थः। ननु व्रश्चधातोर्यङि वरीवृश्च्यते इत्यत्र कथमभ्यासस्य रीक्। धातोः शकारोपधत्वेन ऋदुपधत्वाऽभावादित्यत आह रोगृत्वत इति। 'रीगृदुपधस्य' इत्यत्र ऋदुपधस्येत्यपनीय 'ऋत्वत' इति वक्तव्यमित्यर्थः। ऋत् अस्यास्तीति ऋत्वत्। 'तसौ मत्वर्थे' इति भत्वात् पदत्वाभावाच्च जश्त्वम्। परीपृच्छ्यते इति। प्रच्छधातोर्यङि 'ग्रहिज्या' इति रेफस्य सम्प्रसारणमृकारः। पूर्वरूपं द्वित्वं रपरत्वं हलादिशेषः रीक्। वरीवृश्च्यते इति। व्रश्चधातोर्यङि सम्प्रसारणे द्वित्वादि पूर्ववत्। स्वपिस्यमि। 'सम्प्रसारणं स्या'दिति शेषपूरणम्। 'ष्यङः सम्प्रसारणम्' इत्यतस्तदनुवृत्तेरिति भावः। सोषुप्यते इति। स्वपधातोर्यङि वकारस्य सम्प्रसारणे उकारे पूर्वरूपे द्वित्वे अभ्यासगुणः। उत्तरखण्डे सस्य षत्वम्। सेसिम्यत इति। स्यमुधातोर्यङि यकारस्य सम्प्रसारणे पूर्वरूपे द्वित्वादि। अषोपदेशत्वान्न षः। वेवीयते इति। व्येञो यङि यकारस्य सम्प्रसारणे पूर्वरूपे द्वित्वादि। 'हलः' इति 'अकृत्सार्वधातुकयोः' इति वा दीर्घः। अथ वशधातोर्यङि 'वावश्यते' इत्यत्र 'ग्रहिज्या' इति सम्प्रसारणे प्राप्ते तन्निषेधं स्मारयति-न वशः। वशधातोः छान्दसत्वं प्रायिकमिति प्रागेवोक्तम्। चायः की। 'यङी'ति शेषः। 'स्वपिस्यमिव्येञां यङि' इत्यतस्तदनुवृत्तेरिति भावः। चेकीयते इति। 'चायृ पूजानिशामनयोः'। अस्माद्यङि प्रकृतेः कीभावे द्वित्वादि। ई घ्राध्मोः। घ्रा ध्मा अनयोः द्वन्द्वात् षष्ठीद्विवचनम्। 'यङी'ति शेषः, 'यङि च' इत्यतस्तदनुवृत्तेः। जेघ्रीयते। देध्मीयते इति। ईत्वे कृते द्वित्वादि। ह्रस्वस्य इकारस्य विधावपि 'अकृत्सार्वधातुकयोः' इति दीर्घसिद्धेः दीर्घोच्चारणम् 'अस्य च्वौ' इत्युत्तरार्थम्। अयङ् यि क्ङिति। 'यि' इति सप्तमी। क् ङ् एतौ इतौ यस्येति विग्रहः। शीङ इति। 'शीङः सार्वधातुके गुणः' इत्यतस्तदनुवृत्तेरिति भावः। अयङि ङकार इत्। यकाराकार उच्चारणार्थः। ङित्त्वादन्तादेशः। शाशय्यते इति। शी य इति स्थिते ईकारस्य अय्। ततो द्वित्वे आभ्यासदीर्घः। ढौकृधातोर्यङि विशेषमाह-अभ्यासस्य ह्रस्व इति। द्वित्वे अभ्यासह्रस्वे उकारे तस्य 'गुणो यङ्लुकोः' इति गुण इत्यर्थः। तोत्रौक्यते इति। त्रौकेः रूपम्। इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां यङ्निरूपणं समाप्तम्।

# अथ तिङन्ते यङ्लुक्प्रकरणम् ॥ १४ ॥

२६५० यङोऽचि च २।४।७४॥ यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनापि बहुलं लुक्स्यात्। अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः। 'शेषात्कर्तरि' (सू २१५९) इति परस्मैपदम्। 'अनुदात्तङितः' (सू २१५७) इति तु न। ङित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः। यत्र हि 'प्रत्ययस्यासाधारणं रूप-

---

अथ यङ्लुक्प्रक्रिया निरूप्यन्ते। यङोऽचि च। अचि इति प्रत्ययग्रहणम्, नतु प्रत्याहारः, यङा साहचर्यात्। 'ण्यक्षत्रियार्ष' इत्यतः लुगित्यनुवर्तते। तदाह—यङोऽच्प्रत्यये लुगिति। चकारात्तं विनापीति। अच्प्रत्ययाऽभावेऽपीत्यर्थः। बहुलमिति। चकारात् 'बहुलं छन्दसि' इति पूर्वसूत्राद्बहुलग्रहणमप्यनुकृष्यते इति भावः। एवञ्च अच्प्रत्यये तदभावेऽपि यङो बहुलं लुगिति फलितम्। तेन लूञो यङन्तादचि यङो लुगभावपक्षे अतो लोपे 'लोलूय' इति रूपम्। लुकि तु 'लोलुव' इति रूपं सिध्यति। तथा अच्प्रत्ययाऽभावेऽपि बोभूयते बोभवीति इत्यादौ यङो लुग्विकल्पः सिध्यतीति बोध्यम्। अनैमित्तिकोऽयमिति। अच्प्रत्ययादन्यत्र 'बोभवीती'त्यादौ यङ्लुक् अनैमित्तिकः ततश्च परस्मादपि द्वित्वादिकार्यात्प्रागेव अन्तरङ्गत्वाद्यङो लुक् भवति, ततो द्वित्वादीति वस्तुतः स्थितिकथनमिदम्। अच्प्रत्यये विधीयमानस्तु यङ्लुक् नैमित्तिकत्वाद्बहिरङ्ग एव। ततश्च परत्वान्नित्यत्वाच्च आदौ द्वित्वे कृते यङो लुकि अच्प्रत्ययमाश्रित्य प्राप्तो गुणः 'न धातुलोप आर्धधातुके' इति निषेधान्न भवति, अच्प्रत्ययस्य यङ्लोपनिमित्तत्वादिति बोध्यम्। नन्वेवं सति यङ्लुकि 'सन्यङोः' इति द्वित्वं न स्यात्। यङो लुका लुप्तत्वेन प्रत्ययलक्षणाऽभावादित्यत आह—तत इति। यङो लुगनन्तरमित्यर्थः। 'न लुमता' इत्यनेन हि लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं निषिध्यते। द्वित्वादिकं तु यङन्तस्य कार्यम्, नतु यङ्निमित्तकम्, यङि परतस्तद्विध्यभावादिति भावः। द्वित्वमिति। न च 'एकाचः' विधीयमानं द्वित्वं कथमिह यङ्लुकि स्यात 'श्तिपा शपा' इति निषेधादिति वाच्यम्, 'गुणो यङ्लुकोः' इत्याद्यभ्यासकार्यविधिबलेन द्वित्वनिषेधाऽभावज्ञापनादिति भावः। अभ्यासकार्यमिति। गुणादीति भावः। धातुत्वादिति। यङो लुकि सत्यपि प्रत्ययलक्षणमाश्रित्य यङन्तत्वात् 'सनाद्यन्ताः' इति धातुत्वम्। नच 'न लुमता' इति निषेधः शङ्क्यः, धातुसंज्ञायाः यङन्तधर्मत्वेनायङि परतोऽङ्गकार्यत्वाभावादिति भावः। यङो ङित्वात्तदन्तादात्मनेपदमाशङ्क्य आह—शेषादिति। ननु 'शेषात्कर्तरि' इत्यत्र आत्मनेपदनिमित्तहीनो धातुः शेषः। यङन्तधातुस्तु न तथा, आत्मनेपदनिमित्तङकारानुबन्धसत्त्वादित्यत आह—अनुदात्तङित इति तु नेति। कुत इत्यत आह—ङित्वस्येति। तदेवोपपादयति-यत्र होति। यत्र प्रत्यये लुप्तेति प्रत्ययमात्रवृत्तिधर्मपुरस्कारेण तमाश्रित्य कार्यप्रवृत्तिरिष्यते तत्रैव प्रत्ययलक्षणम्। यथा 'राजे'त्यत्र। तत्र हि लुप्तं सुप्प्रत्ययं सुप्त्वात्मकप्रत्ययमात्रवृत्ति-

माश्रीयते तत्रैव तत्' । अत एव सुदृषत्प्रासाद इत्यत्र 'अत्वसन्तस्य–' (सू ४२५) इति दीर्घो न । येऽपि स्पर्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न । 'अनुदात्तङितः–' ( सू २१५७ ) इत्यनुबन्धनिर्देशात् । तत्र च 'श्तिपा शपा—' ( प १३२ ) इति निषेधात् । अत एव श्यनादयो न । गणेन निर्देशात् । किं तु शबेव । 'चर्करीतं च' इत्यादौ पाठाच्छपो लुक् । २६५१ यङो वा ७।३।९४॥ यङन्तात्परस्य

धर्मपुरस्कारेण अस्य सुबन्ततया पदत्वात् 'नलोपः' इति नकारलोपप्रवृत्तिः । ङित्त्वं तु न प्रत्ययमात्रधर्मः । 'ऋतेरीयङ्' इत्यादिप्रत्ययेष्वप्रत्ययेष्वपि विन्नङादिषु सत्त्वात् । ततश्च यङि लुप्ते सति प्रत्ययलक्षणेन तमाश्रित्य तद्वृत्तिङित्त्वप्रयुक्तं कार्यमात्मनेपदं न शङ्कितुं शक्यमिति भावः । ननु यत्किञ्चिद्धर्मपुरस्कारेण प्रत्ययाश्रयकार्ये प्रत्ययलक्षणं कुतो नेत्यत आह—अत एवेति । प्रत्ययमात्रवृत्तिधर्मपुरस्कारेण प्रत्ययाश्रयकार्ये प्रत्ययलक्षणाश्रयणादेवेत्यर्थः । दीर्घो नेति । सु शोभनाः दृषदः यस्य सः सुदृषत्प्रासाद इत्यत्र समासावयवत्वाल्लुप्तं जसं प्रत्ययलक्षणेनाऽऽश्रित्य प्राप्तः असन्तत्वलक्षणो दीर्घो न भवति । उणादीनामव्युत्पत्तिपक्षे च 'अप्सरस्' 'वेधा' इत्यादावप्रत्यये च असन्तत्वस्य सत्त्वेन प्रत्ययमात्रवृत्तित्वाऽभावेन तत्पुरस्कारेण दीर्घे क्रियमाणेप्रत्ययलक्षणाऽसम्भवादिति भावः । एतत्सर्वं प्रत्ययलक्षणसूत्रभाष्यकैयटादिषु स्पष्टम् । न च 'सुदृषत्प्रासाद' इत्यत्र जसो लुका लुप्तत्वात् 'न लुमता' इति निषेधादेव दीर्घो न भविष्यतीति वाच्यम् , दीर्घस्याऽसन्तकार्यत्वेन जसि परे अङ्गकार्यत्वाऽभावादित्यलम् । ननु उक्तरीत्या प्रत्ययलक्षणाभावात् लुप्तयङन्तात् ङित्त्वप्रयुक्तमात्मनेपदं मास्तु । ये तावत् स्पर्धादयः अनुदात्तेतः, ये च शीङादयो ङितः पठिताः । तेभ्यः आत्मनेपदं दुर्वारमित्यत आह–येऽपीति । तेभ्योऽपि नेति । तेभ्यो यङ्लुकि नात्मनेपदमित्यर्थः । कुत इत्यत आह–अनुदात्तङित इत्यनुबन्धनिर्देशादिति । नन्वनुबन्धनिर्देशेऽपि यङ्लुकि आत्मनेपदं कुतो न स्यादित्यत आह–तत्र च श्तिपेति । न चाऽनुबन्धनिर्देशादेव ङित्त्वप्रयुक्तमपि कार्यमात्मनेपदं यङ्लुकि न भविष्यति । अतः प्रत्ययाऽसाधारणधर्माश्रयत्वे सत्येव प्रत्ययलक्षणमिति क्लेशाऽनुभवो वृथेति वाच्यम् , यङो ङकारस्य प्रत्ययानुबन्धत्वेन यङन्तस्य धातोरनुबन्धेनाऽनिर्देशादित्यलम् । अत एवेति । 'श्तिपा शपा' इति निषेधादेव यङ्लुकि श्यनादयो विकरणा नेत्यर्थः । 'श्तिपा शपा' इति निषेधमुपपादयति—गणेन निर्देशादिति । 'दिवादिभ्यः श्यन्' रुधादिभ्यः श्नम्' इत्यादिगणनिर्देशादित्यर्थः । किन्तु शबेवेति । 'कर्तरि शप्' इत्यस्य 'श्तिपा शपा' इति निषेधाऽविषयत्वादिति भावः । चर्करीतमिति । यङ्लुगन्तमदादौ बोध्यमिति व्याख्यातं प्राक् । अतो यङ्लुगन्ताच्छपो लुगित्यर्थः । एवञ्च भूधातोर्यङो लुकि द्वित्वादौ 'बोभू' इत्यस्माल्लटि तिपि शपो लुकि बोभू ति इति स्थिते—यङो वा । 'उतो वृद्धिः' इत्यतो हलीति 'नाभ्यस्तस्याचि' इत्यतः पिति सार्वधातुके इति 'ब्रुव ईट्' इत्यतः ईडिति

हलादेः पितः सार्वधातुकस्येड्वा स्यात् । 'भूसुवोः-' ( सू २२२४ ) इति गुणनिषेधो यङ्लुकि भाषायां न । '—बोभूतु तेतिक्ते-' ( सू ३५६६ ) इति छन्दसि निपातनात् । अत एव यङ्लुग्भाषायामपि सिद्धः । न च यङ्लुक्यप्राप्त एव गुणाभावो निपात्यतामिति वाच्यम् । 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणात्' (प १०१) 'द्विः-

---

प्रयोगो द्विर्वचनम्' इत्यनुवर्तते । तदाह—यङन्तादित्यादिना । टित्त्वात्तिप आद्यवयव ईट् । तथाच बोभू ई ति इति स्थिते ऊकारस्य गुणे अवादेशे बोभवीतीति रूपं वक्ष्यति । 'भूसुवोस्तिङि' इति गुणनिषेधमाशङ्क्य आह—भूसुवोरिति । निपातनादिति । 'कृषेः छन्दसि' इत्यतः छन्दसीत्यनुवृत्तौ 'दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते' इत्यादिसूत्रे भूधातोर्यङ्लुगन्तस्य गुणाऽभावो निपात्यते । 'भूसुवोः' इत्येव तत्र गुणनिषेधे सिद्धे गुणाऽभावनिपातनं नियमार्थम्—'यङ्लुकि छन्दस्येवाऽयम् 'भूसुवोः' इति गुणनिषेधो नान्यत्र' इति । अतो लोकेऽपि यङ्लुगस्तीति विज्ञायते । एतेन'यङोऽचि च'इति यङ्लुग्विधौ 'बहुलं छन्दसि' इति पू र्वसूत्राच्छन्दसीत्यनुवर्तयन्तः परास्ताः । तदाह-अत एव यङ्लुक् भाषायामपि सिद्ध इति । 'भूसुवोस्तिङि' इति सूत्रभाष्ये तु 'बोभूत्वित्येतन्नियमार्थम् । अत्रैव यङ्लुगन्तस्य गुणो न भवति, नान्यत्र । क्व मा भूत् बोभवीती'त्युक्तम् । अत्रैवेत्यस्य बोभूत्विति लोटयेवेत्यर्थः । यङ्लुगन्तस्येत्यस्य 'भूधातो'रिति शेषः । बोभवीतीत्येवोदाहृतत्वादिति शब्देन्दुशेखरे प्रपञ्चितम् । वस्तुतस्तु भाष्ये यङ्लुगन्तस्येति सामान्याभिप्रायमेव । भूधातुमात्रसङ्कोचे मानाऽभावात् । 'बोभवीति' इत्युदाहरणं तु धात्वन्तराणामपि प्रदर्शनपरमिति मूलकृदाशयः । ननु भूधातोर्यङ्लुकि 'बोभू' इत्यस्य 'भूसुवोस्तिङि' इति गुणनिषेधप्रसक्तिर्नास्ति, द्वित्वे सति यङ्लुगन्तस्य प्रकृत्यन्तरत्वेन भूरूपत्वाऽभावात्। ततश्च यङ्लुगन्तस्याऽप्राप्ते गुणाऽभावे तत्प्राप्त्यर्थमेव बोभूत्विति निपातनमिति युक्तम् । तथा च छन्दस्येव यङ्लुगन्तस्य गुणनिषेधः, न तु भाषायामिति नियमः कथं सिध्येदित्याशङ्क्य निराकरोति—न च यङ्लुगीति । प्रकृतीति । 'प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणम्' इति परिभाषया 'भूसुवोः' इत्यत्र भूग्रहणेन बोभू इति यङ्लुगन्तस्यापि ग्रहणादित्यर्थः । ननु 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इत्यत्र किं प्रमाणमित्याशङ्क्य न्यायसिद्धमिदमित्याह—द्विः प्रयोग इति । षष्ठाध्यायादौ 'एकाचो द्वे प्रथमस्य' इत्यत्र किमिदं द्विर्वचनम्—एकाचः प्रथमस्य एकस्य स्थाने द्वितीयात्मक आदेशः स्थान्यपेक्षया अन्यो विधीयते, उत स्थानिन एकस्य सतः द्विरुच्चारणं विधीयते, नतु तत्स्थानिनः अतिरिच्यते इति संशय्य 'द्विः प्रयोगो द्विर्वचनम्' इति सिद्धान्तितम् । तदधिकारस्थत्वात् 'सन्यङोः' इति द्विर्वचनमपि तथाविधमेव । ततश्च भू इत्यस्यैव 'बोभू' इति द्विः प्रयुज्यमानतया 'भूसुवोः' इति भूग्रहणेन ग्रहणाद्यङ्लुक्यपि निषेधसिद्धेः बोभूत्विति निपातनं छन्दस्येव यङ्लुकि गुणनिषेधः, नतु भाषायामिति नियमकाभाल्लोकेऽपि यङ्लुक् सिद्ध इति

प्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तात्। बोभवीति–बोभोति। बोभूतः। बोभुवति। बोभवाञ्चकार। बोभविता। अबोभवीत्–अबोभोत्। अबोभूताम्। अबोभवुः। बोभूयात्। बोभूयाताम्। बोभूयास्ताम्। 'गातिस्था—' ( सू २२२३ ) इति सिचो लुक्। 'यङो वा' इतीट्पक्षे गुणं बाधित्वा नित्यत्वाद् वुक्। अबोभूवीत्। अबोभोत। अबोभूताम्। अभ्यस्ताश्रयो जुस्। नित्यत्वाद्वुक्। अबोभूवुः। अबोभविष्यदित्यादि। पास्पर्धीति–पास्पर्द्धि। पास्पर्द्धः। पास्पर्धति। पास्पर्त्सि।

भावः। बोभूत इति। अपित्त्वादीण्न। ङित्त्वाच्च न गुणः। बोभुवतीति। 'अदभ्यस्तात्' इत्यत्। ङित्त्वात् गुणाऽभावे उवङिति भावः। बोभवीषि—बोभोषि। बोभूथः। बोभूथ। बोभवीमि-बोभोमि। बोभूवः। बोभूमः। बोभवाञ्चकारेति। 'कास्यनेकाच्' इत्याम्। बोभविता। बोभविष्यति। बोभवीतु-बोभोतु—बोभूतात्। बोभूताम्। बोभुवतु। हेरपित्त्वादीण्न ङित्त्वान्न गुणः। बोभूहि–बोभूतात्। बोभूतम्। बोभूत। आटः पित्त्वेन अङित्त्वात् गुणः। बोभवानि। बोभवाव। बोभवाम। लङ्याह—अबोभवीदित्यादि। अबोभवुरिति। 'सिजभ्यस्त' इति जुसि गुणे अवादेशः। अबोभवीः। अबोभोः। अबोभूतम्। अबोभूत। अबोभवम्। अबोभूव। अबोभूम। बोभूयादिति। विधिलिङि आशीर्लिङि च रूपम्। बोभूयातामिति। विधिलिङस्तामि रूपम्। बोभूयुः। बोभूयाः। बोभूयातम्। बोभूयात। बोभूयाम्। बोभूयाव। बोभूयाम। बोभूयास्तामिति। आशीर्लिङि तामि रूपम्। बोभूयास्त। बोभूयासम्। बोभूयास्व। बोभूयास्म। लुङ्स्तिपि सिचि कृते आह—गातिस्थेति। ईट्पक्षे इति। 'इतश्च' इति इकारलोपे कृते ईडागमे 'सार्वधातुकार्धधातुकयोः' इति गुणं परमपि बाधित्वा नित्यत्वात् 'भुवो वुग्लुङ्लिटोः' इति वुगित्यर्थः। गुणे कृते अकृते च प्राप्तेः वुको नित्यत्वं बोध्यम्। अबोभूवीदिति। वुकि कृते सति तेन व्यवधानादूकारस्य न गुणः। ननु लुको झेर्जुसि वुकि अबोभूवुरिति रूपं वक्ष्यति। तदयुक्तम्, 'आतः' इति सूत्रे सिज्लुकि आदन्तादेव झेर्जुसिति नियमनादित्यत आह—अभ्यस्ताश्रयो जुसिति। 'सिजभ्यस्त' इत्यनेन अभ्यस्तात्परत्वात् जुसित्यर्थः। 'सिजभ्यस्त' इति सूत्रे सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तस्यैवायं नियमः, न त्वभ्यस्ताश्रयजुस इति भावः। अबोभू उस् इति स्थिते 'जुसि च' इति गुणमाशङ्क्य आह—नित्यत्वाद्वुगिति। 'जुसि च' इति गुणापेक्षयेत्यर्थः। अबोभूवुरिति। न चात्राभ्यस्ताश्रयजुसं बाधित्वा परत्वात् 'अदभ्यस्तात्' इत्यदादेशः स्यादिति शङ्क्यम्, अभ्यस्ताश्रयजुसः अदादेशापवादत्वादिति भावः। अबोभूवीः–अबोभोः। अबोभूतम्। अबोभूत। अबोभूवम्। अबोभूव। अबोभूम। इत्यादीति। अबोभविष्यताम्। अबोभविष्यन् इत्यादि व्यक्तम्। पास्पर्धीतीति। स्पर्धधातोः यङ्लुकि द्वित्वे 'शर्पूर्वाः खयः' इति सकारलोपे 'दीर्घोऽकितः' इति दीर्घे पास्पर्ध् इत्यस्माल्लटस्तिपि शपि शपो लुकि 'यङो

'ढुझल्भ्यो हेर्धिः' ( सू २४२५ )। पास्पर्धि । लङ् । अपास्पर्द्-अपास्पद् । सिपि 'दश्च' ( सू २४६८ ) इति रुत्वपक्षे 'रो रि' ( सू १७३ ( अपास्पाः । जागाद्धि । जाघात्सि । अजाघात् । सिपि रुत्वपक्षे-अजाघाः । नाथृ-नानात्ति । नाना-

वा' इति ईडागमे रूपम् । इडभावे त्वाह—पास्पर्द्धीति । पास्पर्ध् ति इति स्थिते 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः । 'झलां जश् झशि' इति पूर्वधकारस्य द इति भावः । मिब्वस्मस्सु पास्पर्धीमि—पास्पर्ध्मि । पास्पर्ध्वः । पास्पर्ध्मः । पास्पर्धाञ्चकार । पास्पर्धिता । पास्पर्धिष्यति । पास्पर्धीतु । पास्पर्द्ध । पास्पर्द्धात् । पास्पर्धतु । हेरपित्वादीडभावं सिद्धवत्कृत्य आह—हुझल्भ्य इति । पास्पर्धीति । हेर्धिभावे 'झरो झरि' इति वा धलोपः । पास्पर्धात् पास्पर्धम् । पास्पर्धानि । पास्पर्धाव । पास्पर्धाम । लङिति । उदाहरणसूचनम् । ईटि अपास्पर्धीत् इति सिद्धवत्कृत्य ईडभावे आह—अपास्पर्त् इति । अपास्पर्ध् त् इति स्थिते हल्ङ्यादिना तकारलोपे 'वाऽवसाने इति चर्त्वविकल्प इति भावः । अपास्पर्धात् । अपास्पर्धुः । सिपि तु अपास्पर्ध् स् इति स्थिते जश्त्वे 'दश्च' इति दकारस्य रुत्वपक्षे अपास्पर् र् स् इति स्थिते हल्ङ्यादिना सकारलोपे 'रो रि' इति रेफलोपे 'ढ्रलोपे' इति दीर्घे विसर्गे अपास्पाः इति रूपम् । न च दीर्घे 'दश्च' इति रुत्वमसिद्धमिति शङ्क्यम् , 'ढ्रलोपे' इति सूत्रे ढ्रग्रहणेन लण्सूत्रे 'जर्गृधेः अजर्घाः' इति भाष्यप्रयोगेण च पूर्वत्रासिद्धमित्यस्याऽप्रवृत्तिबोधनात् । अपास्पर्धम् । अपास्पर्ध्व । अपास्पर्ध्म । लिङि—पास्पर्ध्यात् । पास्पर्ध्याताम् । पास्पर्ध्यास्ताम् , इत्यादि । लुङि अपास्पर्ध् स् इति स्थिते 'अस्तिसिचः' इति नित्यमीट् । 'इट ईटि' इति सलोपः । अपास्पर्धीत् । अपास्पर्धिष्टाम् । अपास्पर्धिषुः । अपास्पर्धिष्यत् । गाधधातोर्यङ्लुगन्तात् लटस्तिपि इट्पक्षे जागाधीतीति सिद्धवत्कृत्य ईडभावे आह—जागाद्धीति । जागाध् ति इति स्थिते 'झषस्तथोः' इति तकारस्य धः । जागाद्धः । जागाधति । सिपि ईट्पक्षे-जागाधीषीति सिद्धवत्कृत्य ईडभावपक्षे आह—जाघात्सीति । जागाध् सि इति स्थिते 'एकाचो बशः' इति गस्य भष् । धस्य चर्त्वमिति भावः । जागाद्धः । जागाद्ध । जागाध्मि । जागाध्वः । जागाध्मः । जागाधाञ्चकार । जागाधिता । जागाधिष्यति । जागाधीतु । जागाद्धु । जागाद्धात् । जागाद्धाम् । जागाधतु । जागाद्धि । जागाद्धात् । जागाद्धम् । जागाद्ध । जागाधानि । जागाधाव । जागाधाम । लङि-अजागाधीत् । अजाघात् । अजागाद्धाम् । अजागाधुः । सिपि ईट्पक्षे अजागाधीरिति सिद्धवत्कृत्य ईडभावपक्षे आह—सिपीति । अजागाध् स् इति स्थिते भष्भावे, जश्त्वे, 'दश्च' इति दस्य रुत्वपक्षे, हल्ङ्यादिलोपे, रेफस्य विसर्गे, अजाघाः इति रूपमित्यर्थः । पक्षे अजाघात् इति बोध्यम् । अजागाद्धाम् । इत्यादि । जागाध्यात् । लुङि 'अस्तिसिचः' इति नित्यमीट् । अजागाधीत् । अजागाधिष्टाम् इत्यादि । नाथृ इति । उदाहरणसूचनम् ।

त्तः । दध-दादद्धि । दादद्धः । दाधत्सि । अदाधत् । अदादधुः । अदाधः । अदाधत् । लुङि, अदादाधीत्-अदादधीत् । चोस्कुन्दीति । चोस्कुन्ति । अचोस्कुन् । अचोस्कुन्ताम् । अचोस्कुन्दुः । मोमुदीति । मोमोत्ति । मोमोदाञ्चकार । मोमोदितः अमोमुदीत्-अमोमोत् । अमोमुत्ताम् । अमोमुदुः । अमोमुदीः-अमोमोः ।

---

वर्गद्वितीयान्तोऽयं धातुः न झषन्तः । तस्य ईट्पक्षे नानाथीति इति सिद्धवत्कृत्य ईडभावपक्षे आह—नानात्तीति । नानाथ् ति इति स्थिते 'खरि च' इति थस्य चर्त्वम् । 'झषस्तथोः' इति 'एकाचो बशो भष्' इति च न, अझषन्तत्वात् । नानात्तः । नानाथति । नानाथीषि । नानात्सि । नानात्थः । नानात्थ । नानाथीमि । नानाथ्मि । नानाथ्वः । नानाथ्मः । लोटि नानाथीतु । नानात्तु । हेर्धिः । थस्य जश्त्वेन दः । नानाद्धि । नानाथानि । नानाथाव । नानाथाम । लङि—अनानाथीत् । अनानात् । अनानात्ताम् । अनानाथुः । इत्यादि । लुङि 'अस्तिसिचः' इति नित्यमीट् । अनानाथीत् । अनानाथिष्टाम् । इत्यादि । दधेति । उदाहरणसूचनमिदम् । दधधातोर्लटस्तिपि ईट्पक्षे दादधीतीति सिद्धवत्कृत्य ईडभावपक्षे आह—दादद्धीति । ददाध् ति इति स्थिते 'झषस्तथोः' इति तकारस्य धः । दादधीषीति सिद्धवत्कृत्य आह—दाधत्सीति । 'एकाचो बशः' इति दस्य भष् । धस्य 'खरि च' इति चर्त्वमिति भावः । दादत्थः । दादत्थ । दादध्मि । इत्यादि । लोटि दादधीतु । दादद्धु । दादद्धि । दादधानि । लिङस्तिपि ईटि अदादधीत् इति सिद्धवत्कृत्य ईडभावे आह—अदाधत् इति । अदादध् त् इति स्थिते हल्ङ्यादिलोपे भष्भावे धस्य 'वावसाने' इति चर्त्वविकल्प इति भावः । सिपि ईटि अदादधीरिति सिद्धवत्कृत्य ईडभावे आह—अदाध इति । अदादध् स् इति स्थिते जश्त्वे 'दश्च' इति दस्य रुत्वे हल्ङ्यादिना सलोपे रुत्वजश्त्वयोरसिद्धत्वेन झषन्तत्वात् दस्य भषिति भावः । अदाधदिति पक्षे रूपम् । 'अस्तिसिचः' इति नित्यमीडिति मत्वा आह—अदादधीदिति । 'अतो हलादेः' इति वृद्धिविकल्पः । अदादधिष्टाम् । इत्यादि । 'स्कुदि आप्रवणे' इदित्वान्नुम् । अस्माद्यङ्लुकि उदाहरति—चोस्कुन्दीति । ईटि रूपम् । तदभावे त्वाह—चोस्कुन्तीति । 'झरो झरि सवर्णे' इति दकारस्य लोपविकल्पः । इह यङो लुक्त्वादिदित्वाच्च यङं लिङं चाश्रित्य नलोपो न । लङि इट्पक्षे अचोस्कुन्दीदिति सिद्धवत्कृत्य ईडभावे आह—अचोस्कुन्निति । अचोस्कुन् द् त् इति स्थिते हल्ङ्यादिना तकारलोपे दकारस्य संयोगान्तलोपः । लुङि तु 'अस्तिसिचः' इति नित्यमिट् । अचोस्कुन्दीत् । अचोस्कुन्दिष्टाम् । इत्यादि । मोमुदीतीति । 'मुद हर्षे' ईटि 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति लघूपधगुणो न मोमोत्तीति । ईडभावे अजादित्वाभावात् 'नाभ्यस्तस्याचि' इति लघूपधगुणनिषेधो न । मोमोदितेति । 'न धातुलोप आर्धधातुके' इति गुणनिषेधस्तु न, धात्वंशलोपनिमित्ते आर्धधातुके परे एव तन्निषेधस्य प्रवृत्तेः, इह च यङ्लुकः अनैमि-

अमोमोत् । लुङि गुणः । अमोमोदीत् । चोकूर्ति । चोकूर्दीति । लङ् । तिप् । अचोकूर्त् । अचोकूर्दीत् । सिप्पक्षे—अचोकूः । अचोखूः । अजोगूः । वनीवञ्चीति । वनीवङ्क्ति । वनीवक्तः । वनीवचति । अवनीवञ्चीत् । अवनीवन् । जङ्गमीति । जङ्गन्ति । 'अनुदात्तोपदेशः' (सू २४२८) इत्यनुनासिकलोपः । जङ्गतः । जङ्ग्मति । 'म्वोश्च' (सू २३०६) । जङ्गन्मि । जङ्गन्वः । एकाज्ग्रहणेनोक्तत्वान्नेण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याऽभीयत्वेनासिद्धत्वान्न हेर्लुक् । जङ्गहि । 'मो नो धातोः' ( सू ३४१ ) । अजङ्गन् । अनुबन्धनिर्देशान्न च्लेरङ् । 'ह्ययन्त—'

ण्त्तिकत्वस्य उक्तत्वात् । लुङि गुण इति । सिजिनिमित्तक इति शेषः । अतो 'नाभ्यस्तस्य' इति गुणनिषेधो न शङ्क्यः । चोकूर्तीति । कुर्द क्रीडायाम्, यङ्लुक् छ्वित्वादि । ईडभावे 'उपधायां च' इति दीर्घः । अचोकूर्त् इति । लङस्तिपि अचोकूर्द त् इति स्थिते हल्ङ्यादिलोपे 'रात्सस्य' इति नियमान्न संयोगान्तलोपः इति भावः सिप्पक्षे इति । लङः सिपि ईडभावे अचोकूर्द स् इति स्थिते 'दश्च' इति रुत्वपक्षे हल्ङ्यादिना सलोपे 'रो रि' इति प्रथमरेफलोपे दीर्घे दकारस्थानिकरेफस्य विसर्गे अचोकूरिति रूपमित्यर्थः । अचोखूरिति । खुर्द धातोर्यङ्लुगन्तात् लङः सिपि कूर्दवद्रूपम् । अजोगूरिति । गुर्द धातोर्यङ्लुगन्तात् सिपि रूपम् । वनीवञ्चीतीति । 'वञ्चु गतौ, अस्मात् 'नित्यं कौटिल्ये गतौ' इति यङन्तस्य लुक् । द्वित्वादि । 'नीग्वञ्चु' इत्यादिना अभ्यासस्य नीगागमः । यङो लुका लुप्तत्वान्न तदाश्रितो नलोपः । तिपः पित्त्वेन अङित्त्वान्न तदाश्रितोऽपि नलोपः । ईकारोच्चारणसामर्थ्यान्नीको न गुणः । अन्यथा निकमेव विदध्यात् । अथ 'नीग्वञ्चु' इत्यनुबन्धनिर्देशाद्यङ्लुकि नीक् दुर्लभ इति शङ्क्यम्, तत्र यङ्लुकोः इत्यनुवृत्तिसामर्थ्येन अदोषादिति भावः । वनीवङ्क्तीति । ईडभावे चस्य कुत्वेन कः । नकारस्थानिकानुस्वारस्य परसवर्णो ङकार इति भावः । वनीवक्त इति । तसो ङित्वाद्विह स्यादेव 'अनिदिताम्' इति नलोपः । लोटि वनीवञ्चीतु—वनीवङ्क्तु—वनीवक्तात् । वनीवक्ताम् । वनीवचतु । हेर्धिः । अपित्वेन ङित्वान्नलोपः । अत एव ईडपि न । वनीवग्धि । वनीवञ्चानि । आटः पित्वादङित्वान्नलोपो न । लङि तिपि ईट्पक्षे आह-अवनीवञ्चीदिति । ईडभावे त्वाह-अवनीवन् इति । हल्ङ्यादिना तलोपे चकारस्य संयोगान्तलोपः जङ्गमीतीति । गमेर्यङ्लुगन्ताल्लटस्तिपि ईट् । 'नुगतोऽनुनासिकान्तस्य' इति नुक् । 'नश्च' इत्यनुस्वारः परसवर्णश्चेति भावः । तसि आह—अनुदात्तेति । जङ्ग्मतीति । 'गमहन' इत्युपधालोप इति भावः । ननु गमेरनिट्कत्वात् प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणाज्जङ्गमितेत्यत्र कथमिडित्यत आह—एकाज्ग्रहणेनेति । ननु 'जङ्गहीत्यत्र अनुनासिकलोपे कृते 'अतो हेः' इति लुक् स्यादित्यत आह—अनुनासिकलोपस्येति । लङस्तिपि अजङ्गमीदिति सिद्धवत्कृत्य ईडभावे आह-मो न इति । अजङ्गम् त् इति स्थिते हल्ङ्यादिना तलोपे 'मो नो धातोः' इति मस्य न इत्यर्थः । तदाह—अजङ्गन्निति ।

(सू २२९९) इति न वृद्धिः । अजङ्गमीत् । अजङ्गमिष्टाम् । हन्तेर्यङ्लुक् । 'अभ्यासाच्च' (सू २४३०) इति कुत्वं यद्यपि 'हो हन्तेः—' (सू ३५८) इत्यतो हन्तेः इत्यनुवर्त्य विहितम् । तथापि यङ्लुकि भवत्येवेति न्यासकारः । 'श्तिपा शपा' (प १३२ इति निषेधस्त्वनित्यः । 'गुणो यङ्लुकोः' (सू २६३०) इति सामान्यापेक्षज्ञापकादिति भावः । जङ्घनीति–जङ्घन्ति । जङ्घतः । जङ्घ्नति । जङ्घनिता । श्तिपा निर्देशाज्जादेशो न । जङ्घहि । अजङ्घनीत्–अजङ्घन् । जङ्घन्यात् । आशिषि तु–वध्यात् । अवधीत् । अवधिष्टामित्यादि । वधादेशस्य द्वित्वं तु न भवति । स्थानिवत्त्वेन 'अनभ्यासस्य' इति निषेधात् । तद्धि समानाधिक-

---

अजङ्गताम् । अजङ्गमुः । अजङ्गन् । अजङ्गतम् । अजङ्गत । अजङ्गमम् । अजङ्गन्व । अजङ्गन्म । लुङि अजङ्गमीदित्यत्र 'पुषादिद्युताद्य्लृदित' इत्यङमाशङ्क्य आह—अनुबन्धेति । हन्तेर्यङ्लुगिति । 'हिंसार्थे क्रियासमभिहारे गत्यर्थत्वे तु कौटिल्ये इति बोध्यम् । हन्तेरित्यनुवर्त्येति । तथाच 'श्तिपा शपा' इति निषेधात्कथमिह हन्तेः कुत्वमित्याक्षेपः । गुण इति । 'गुणो यङ्लुकोः' इति ज्ञापकादित्यन्वयः । 'एकाचो द्वे प्रथमस्य' इत्यत्र एकाज्ग्रहणाद्यङ्लुकि द्विर्वचनस्याऽप्रवृत्त्या अभ्यासाऽभावात् 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणविधानं व्यर्थं सत् 'श्तिपा शपा' इत्यादिनिषेधस्य क्वचिद्यङ्लुकि अप्रवृत्तिं ज्ञापयतीत्यर्थः । नन्वेकाज्ग्रहणविधेरेव यङ्लुकि क्वचिदप्रवृत्तिज्ञापनलाभेऽपि हन्तेः इति श्तिपा निर्देशनिमित्तकनिषेधस्य कथं यङ्लुकि अप्रवृत्तिः स्यादित्यत आह–सामान्यापेक्षेति । 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणविधानमेकाऽज्ग्रहणस्यानित्यत्वं ज्ञापयत् तद्वचनोपात्तत्वसामान्यात् 'श्तिपा शपा' इत्यादिसर्वनिषेधानां यङ्लुकि क्वचिदप्रवृत्तिं ज्ञापयतीत्यर्थः । इति भाव इति । न्यासकृत इति शेषः । जङ्घनीतीति । 'नुगतः' इति नुक् । जङ्घतः इति । 'अनुदात्तोपदेश' इत्यनुनासिकलोपः । जङ्घ्नतीति । 'गमहन' इत्युपधालोपः । जङ्घनितेति । एकाज्ग्रहणादिण्निषेधो न । जङ्घहीत्यत्र 'हन्तेर्जः' इत्याशङ्क्य आह—श्तिपेति । अजङ्घन्निति । लङ्स्तिपि ईडभावे अजङ्घन् त् इति स्थिते हल्ङ्यादिलोप इति भावः । आशिषि तु वध्यादिति । जङ्घन इत्यस्मादाशीर्लिङि 'हनो वध लिङि' इति वधादेशः, प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणादिति भावः । अवधीदिति । जङ्घन् इत्यस्माल्लुङस्तिपि 'लुङि च' इति वधादेशे 'अस्तिसिचः' इति नित्यमीडिति भावः । ननु हनो यङ्लुगन्तात् आशीर्लिङो लुङश्च तिपि द्वित्वात्प्रागेव वधादेशे कृते तस्य द्वित्वं कुतो न स्यादित्यत आह—वधादेशस्य द्वित्वं तु न भवतीति । कुत इत्यत आह—स्थानिवत्त्वेनेति । वधादेशात्परत्वादादौ द्वित्वे कृते सति कृतद्विर्वचनस्य स्थाने वधादेशः । तस्य च स्थानिवत्त्वेन साभ्यासतया 'अनभ्यासस्ये'ति निषेधान्न द्वित्वमित्यर्थः । ननु साभ्यासस्य स्थाने भवन् वधादेशः स्थानिवत्त्वेन साभ्यासोऽस्तु । द्वित्वं तु दुर्वारम् । साभ्यासत्वेऽप्यभ्यासाऽभावक-

रणं धातोर्विशेषणम्, बहुव्रीहिबलात् । आङ्पूर्वात्तु 'आङो यमहनः' ( सू २६९५ ) इत्यात्मनेपदम् । आजङ्घ्नते इत्यादि । 'उत्परस्य—' ( सू २६३७ ) इति तपरत्वान्न गुणः । 'हलि च' ( सू ३५४ ) इति दीर्घस्तु स्यादेव । तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात् । चञ्चुरीति—चञ्चूर्ति । चञ्चूर्तः । चञ्चुरति । अचञ्चुरीत् । अचञ्चूः । चङ्क्नीति—चङ्क्नन्ति । 'जनसन—' ( सू २५०४ ) इत्यात्वम् । चङ्खातः । 'गमहन—' ( सू २३६३ ) इत्युपधालोपः । चङ्ख्नति । चङ्खाहि । चङ्खनानि । अचङ्खनीत् । अचङ्खन् । अचङ्ख्नुः । 'ये विभाषा' ( सू २३१९ ) चङ्खायात् ।

स्यात् 'अनभ्यासस्ये'त्यनेन धातोरवयवस्याभ्यासस्य द्वित्वनिषेधादित्यत आह—तद्धीति । 'धात्ववयवस्य अभ्यासस्ये'ति नार्थः । किन्तु अनभ्यासो यो धातुः तदवयवस्यैकाच इत्येवम् अनभ्यासग्रहणं सामानाधिकरण्येन धातोर्विशेषणमित्यर्थः । नन्वेवमपि न अभ्यासः अनभ्यासः इति विग्रहे द्वित्वं दुर्निवारमेव, यथादेशस्य स्थानिवत्त्वेन साभ्यासत्वेऽप्यभ्यासानात्मकत्वादित्यत आह—बहुव्रीहिबलादिति । न विद्यते अभ्यासो यस्य धातोरिति बहुव्रीहिमाश्रित्य अनभ्यासस्येत्येतद्धातोः सामानाधिकरण्येन विशेषणमित्यर्थः । प्रकृते च यथादेशस्य स्थानिवत्त्वेन साभ्यासत्वादभ्यासहीनत्वाऽभावान्न द्वित्वमिति भावः । आङ्पूर्वात्त्विति । 'यङ्लुगन्ताच्च नधातोरि'ति शेषः । 'आङो यमहनः' इत्यत्र हन्ग्रहणेन यङ्लुगन्तस्यापि ग्रहणम्, प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः । उत्परस्येति । 'चर गतौ भक्षणे च' अस्माद्यङ्लुकि लटि तिपि ईडभावे द्वित्वे 'चरफलोश्च' इत्यभ्यासस्य नुक् । 'उत्परस्यातः' इत्युत्तरखण्डे अकारस्य उत्वम्, 'हलि च' इति दीर्घः । चञ्चूर्तीति रूपम् । तिपमाश्रित्य उकारस्य लघूपधगुणस्तु न, उदिति तपरकरणसामर्थ्यात् । अन्यथा 'उ'रित्युक्तेऽपि 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इत्येव दीर्घादिव्यावृत्तेरित्यर्थः । ननु उदिति तपरकरणाद्यथा गुणो निवर्तते तथा 'हलि च' इति दीर्घोऽपि निवर्तेत इत्यत आह—हलि चेति दीर्घस्तु स्यादेवेति । कुत इत्यत आह—तस्येति । 'हलि च' इति दीर्घशास्त्रस्य त्रैपादिकत्वेन 'उत्परस्यातः' इति शास्त्रं प्रत्यसिद्धतया तपरकरणेन तन्निवृत्तेरसम्भवादित्यर्थः । वस्तुतस्तु गुणस्यापि बहिरङ्गतया असिद्धत्वात्तपरत्वनिवर्त्यत्वं न भवति । अत एव विप्रतिषेधसूत्रे भाष्ये 'उतोऽत्र' इत्युक्त्वे पोपूर्यते इत्यत्राभ्यासगुणो दृश्यमान उपपद्यते इति शब्देन्दुशेखरे प्रपञ्चितम् । अचञ्चूरिति । लङ्सिपि ईडभावे हल्ङ्याबादिना तल्लोपे प्रत्ययलक्षणेन पदान्तत्वात् 'हलि च' इति वा 'र्वोरुपधायाः' इति वा दीर्घः । चञ्चु अवदारणे, अस्माद्यङ्लुकि उदाहरति—चङ्क्नीतीति । चङ्खाहीति । हेरपित्त्वेन ङित्त्वात् 'जनसन' इत्यात्वम् । अचङ्खनीदिति । 'अतिसिचः' इति नित्यमीट् । 'अतो हलादेः' इति वृद्धिविकल्पः । युधातोः । योयोतीत्यत्र, द्यो

चञ्चन्यात् । अचञ्चनीत् । अचञ्चानीत् । 'उतो वृद्धिः—' (सू २४४३) इत्यत्र 'नाभ्यस्तस्य' इत्यनुवृत्तेरुतो वृद्धिर्न । योयोति । योयवीति । अयोयवीत्-अयोयोत् । योयुयात् । आशिषि दीर्घः । योयूयात् । अयोयावीत् । नोनवीति । नोनोति । जाहेति । जाहाति । 'ई हल्यघोः' ( सू २४९७ ) जाहीतः । इह 'जहातेश्च' ( सू २४९८ ) 'आ च हौ' ( सू २४९९ ) 'लोपो यि' ( सू २५०० ) 'घुमास्था' ( सू २४६१ ) एर्लिङि' ( सू २३७४ ) इत्येते पञ्चापि न भवन्ति । श्तिपा निर्देशात् । जाहति । जाहासि । जाहेषि । जाहीथः । जाहीथ । जाहीहि । अजाहेत् । अजाहात् । अजाहीताम् । अजाहुः । जाहीयात् । आशिषि जाहायात् । अजाहासीत् । अजाहासिष्टाम् । अजाहिष्यत् । लुका लुप्ते प्रत्ययलक्षणाभावात् 'स्वपिस्यमि —'

वृद्धिः' इति वृद्धिमाशङ्क्य आह—उतो वृद्धिरित्यत्रेति । आशिषि दीर्घः इति । 'अकृत्सार्वधातुकयोः' इत्यनेनेति भावः । अयोयावीदिति । ईटि सिचि वृद्धिः । नुधातोरपि युधातुवद्रूपाणीति मत्वा आह—नोनवीतीति । हाक्हाकोर्यङ्लुकि तुल्यानि रूपाणि ङित्वप्रयुक्तात्मनेपदस्य यङ्लुकि अप्रवृत्तेरुक्तत्वादिति मत्वा आह—जाहेतीति । हाक्हाकोर्यङ्लुगन्ताल्लटस्तिपि ईटि आद्गुणे रूपम् । नच हाकोऽभ्यासस्य 'भृञामित्' इति ह्रस्वम्, हाकस्तु तन्नास्ति, भृञ् माङ् ओहाङ् एषां त्रयाणामेव तत्र ग्रहणात् । तत् कथं हाक्हाकोस्तुल्यत्वमिति शङ्क्यम्, "भृञामित्" इत्यस्य श्लावेव प्रवृत्तेः । न च अकित इति निषेधात् हाकोऽभ्यासस्य दीर्घाभावात् कथमुभयोस्तुल्यरूपत्वमिति वाच्यम्, क् इत् यस्य सः कित्, न विद्यते कित् यस्य स अकित्, तस्य अकित इति बहुव्रीहिगर्भबहुव्रीह्याश्रयणात् । इह च हाको धातोः कित्वेऽपि न कित्त्वम् । तदभ्यासस्य तु दूरेतरां न कित्त्वम्, 'द्विःप्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तात् । बहुव्रीह्याश्रयणसामर्थ्यादेव व्यपदेशिवत्त्वेन हाको न कित्त्वम् । अतो हाकोऽप्यभ्यासदीर्घो निर्बाध इति भावः । जाहीत इति । हाक्हाकोस्तसि ईत्त्वमेव । ननु हाको 'जहातेश्च' इति इत्त्वविकल्पः कुतो नेत्यत आह—इहेति । हलादौ क्ङिति सार्वधातुके 'जहातेश्च' इति इत्त्वविकल्पः, तथा 'आ च हौ' इति जहातेर्हौ परे आत्वमित्त्वमीत्वं च, तथा 'लोपो यि' इति यादौ सार्वधातुके जहातेराल्लोपश्च, तथा 'घुमास्था' इति जहातेर्हलादौ क्ङित्यार्द्धधातुके ईत्वं च, तथा 'एर्लिङि' इति जहातेरार्द्धधातुके किति लिङ्येत्वं च इत्येते पञ्चापि विधयो यङ्लुकि न भवन्तीत्यर्थः । कुत इत्यत आह—श्तिपेति । एवञ्च 'जाहीत' इत्यत्र 'ई हल्यघोः' इति ईत्वमेव, न त्वित्त्वविकल्प इति स्थितम् । जाहतीति । 'अदभ्यस्तात्' इत्यदादेशः, 'श्नाभ्यस्तयोः' इत्याल्लोपः । जाहाञ्चकार । जाहिता । जाहिष्यति । जाहेतु । जाहातु । जाहातात् । जाहीताम् । जाहतु । जाहीहीति । हेरपित्त्वेन ङित्वादीत्वम् । इह 'आ च हौ' इति न । विधिलिङ्याह—जाहीयादिति । 'ई हल्यघोः' इति ईत्वमेव । 'लोपो यि' इत्याल्लोपस्तु न । आशिषि जाहायादिति । इह 'घुमास्था' इति ईत्वं न । 'एर्लिङि' इत्यपि न । अजाहासीदिति । 'यमरम' इति सगिटौ ।

( सू २६४५ ) इत्युत्वं न । रुदादिभ्यः—' ( सू २४७४ ) इति गणनिर्दिष्टत्वादिण्न । सास्वपीति । सास्वप्ति । सास्वप्तः । सास्वपति । असास्वपीत् असास्वप् । सास्वप्यात् । आशिषि तु 'वचिस्वपि—' ( सू २४०९ ) इत्युत्वम् । सासुप्यात् । असास्वापीत् । असास्वपीत् । **२६५२ रुग्रिकौ च लुकि ७।४।९१॥** ऋदुपधस्य धातोरभ्यासस्य रुक् , रिक् , रीक् एते आगमाः स्युर्यङ्लुकि । **२६५३ ऋतश्च ७।४।९२॥** ऋदन्तधातोरपि तथा । वर्वृतीति । वरिवृतीति । वरीवृतीति । वर्वर्ति । वरिवर्ति । वरीवर्ति । वर्वृतः-वरिवृतः । वरीवृतः । वर्वृतति । वरिवृतति । वरीवृतति । वर्वर्तामास-वरिवर्तामास-वरीवर्तामास । वर्वर्तिता-वरिवर्तिता । वरीवर्तिता । गणनिर्दिष्टत्वात् 'न वृद्भ्यश्चतुर्भ्यः' ( सू २३४८ ) इति न । वर्वर्तिष्यति । वरिवर्तिष्यति । वरीवर्तिष्यति । अवर्वृतीत् । अवरिवृतीत् । अवरीवृतीत् । अवर्वर्त् । अवरिवर्त्—अवरीवर्त् । सिपि 'दश्च' ( सू २४६७ ) इति रुत्वपक्षे 'रो रि' ( सू १७३ ) अवर्वाः । अवरिवाः । अवरीवाः । गणनिर्दिष्टत्वादङ् न । अवर्व-

---

**'ञि ष्वप शये' । अस्य यङ्लुकि 'स्वपिस्यमिव्येञां यङि' इति सम्प्रसारणमाशङ्क्य आह—**लुका लुप्ते इति । उत्वं नेति । **वस्य सम्प्रसारणं नेत्यर्थः । ईडभावपक्षे 'रुदादिभ्यः' इति इटमाशङ्क्य आह—**रुदादिभ्य इति । असास्वप् इति । **लङस्तिपि ईडभावे हल्ङ्यादिलोपः ।** असास्वापीत् इति । **'अतो हलादेः' इति वृद्धिविकल्पः । 'अस्तिसिचः' इति नित्यमीट्** रुग्रिकौ च लुकि । **'रीगृदुपधस्य च' इत्यतः ऋदुपधस्येत्यनुवर्तते । रिगपि इह चकारात् समुच्चीयते । 'अत्र लोपः' इत्यतः अभ्यासस्येत्यनुवर्तते । 'गुणो यङ्लुकोः' इत्यतः यङ्ग्रहणं च । तदाह—**ऋदुपधस्येत्यादिना । **रुकि उकार उच्चारणार्थः । रिकि तु इकारः श्रूयत एव । एवं रीकि ईकारश्च, व्याख्यानात् ।** ऋतश्च । तथेति । **अभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युः यङ्लुकीत्यर्थः । 'वृतु वर्तने' अस्माद्यङ्लुगन्तात् ववृत् इत्यस्माल्लटस्तिपि ईट्पक्षे अभ्यासस्य क्रमेण रुकं रिकं रीकं चोदाहरति—**वर्वृतीति वरिवृतीति वरीवृतीति इति । **इट्पक्षे 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषेधान्न लघूपधगुणः । ईडभावेऽपि रुगाद्यागमत्रयमुदाहरति—**वर्वर्तीत्यादि ॥ इति नेति । **इण्निषेधो नेत्यर्थः । लोटि वर्वृतीतु-वर्वर्तु-वर्वृतात् वर्वृताम् वर्वृततु । वर्वृद्धि । वर्वर्तानि । लङस्तिपि ईटि आह—**अवर्वृतीदिति ॥ **ईडभावे त्वाह—**अवर्वर्त् इति । **हल्ङ्यादिना तिपो लोपः । 'रात्सस्य' इति नियमान्न संयोगान्तलोपः ।** अवर्वा इति । **लङः सिपि अवर्वर्त् स् इति स्थिते जश्त्वे 'दश्च' इति दकारस्य रुत्वे 'रो रि' इति पूर्वरेफस्य लोपे ढ्लोपे इति दीर्घे हल्ङ्यादिना सिपो लोपे रेफस्य विसर्ग इति भावः ।** अङ् नेति । **'पुषादिद्युतादि' इत्यनेनेति शेषः । 'अस्तिसिचः' इति नित्यमीट् । अथ 'डु कृञ् करणे' इति धातोरुदाहरति—चर्करीती-**

तीत् । अवरिवर्तीत् । अवरीवर्तीत् । चर्करीति । चर्कर्ति । चरिकर्ति । चरीकर्ति । चर्कृतः । चर्क्रति । चर्करांचकार । चर्करिता । अचर्करीत् । अचर्कः । चर्कृयात् । आशिषि रीङ् । चर्क्रियात् । लुङि अचर्कारीत् । 'ऋतश्च' (सू २६५३) इति तपरत्वान्नेह । कॄ विक्षेपे । चाकर्ति । तातर्ति । तातीर्तः । तातिरति । तातीर्हि । तातराणि । अतातरीत् । अतातः । अतातीर्ताम् । अतातरुः । अतातारीत् । अतातारिष्टामित्यादि । अर्तेर्यङ्लुकि द्वित्वेऽभ्यासस्योरदत्वं रपरत्वम् । 'हलादिः शेषः' ( सू २१७९ ) । रुक् । रिग्रीकोस्तु 'अभ्यासस्यासवर्णे' ( सू २२९० ) इति इयङ् । अरर्ति-अरियर्ति । अररीति । अरियरीति । अर्ऋतः । अरियृतः । झि अत् । यण् ।

---

त्यादि । चर्कृयादिति । विधिलिङस्तिङः सार्वधातुकत्वात् 'अकृत्सार्वधातुकयोः' इति दीर्घो न । आशिषीति । आशीर्लिङ आर्धधातुकत्वात् 'रिङ् शयग्लिङ्क्षु' इति रिङिति भावः । लुङि अचर्कारीरिति । सिचि वृद्धिः । ऋतश्च इति तपरत्वान्नेहेति । 'रुग्रिकौ' इति शेषः । चाकर्तीति । ईडभावे रूपम् । न चाभ्यासह्रस्वत्वे 'रीगृत्वतः' इति रीक् शङ्क्यः, नित्यत्वादुरदत्त्वस्य प्राप्तेः । चाकीर्तः चाकिरति इत्यादि । ङित्वाद्गुणाभावे ऋत इत्वं रपरत्वम् । ईटि चाकरीति चाकीर्तः चाकरति । चाकराञ्चकार । चाकरिता । चाकर्तु-चाकीर्तात् चाकिरतु । चाकीर्हि । चाकिराणि । लङि अचाकरीत् । अचाकः । अचाकीर्ताम् । अचाकरुः । विधावाशिषि च चाकीर्यात् । यासुटो ङित्वाच्च गुणः । इत्वं 'हलि च' इति दीर्घः । चाकीर्याताम् । चाकीर्यास्ताम् इत्यादि । लुङि अचाकारीत् । अचाकारिष्टाम् इत्यादि । एवं 'तॄ प्लवनतरणयोः' इत्यस्यापि रूपाणि । अद्वैतदीपिकायां तु 'चोद्यं 'नावतरीतर्ती'ति लेखकप्रमादः । 'चोद्यं तु नावतातर्ती'ति पाठः प्रामाणिकः । अर्तेरिति । 'सूचिसूत्रि' इत्यादिना ऋधातोर्यङ् । 'तस्य लुक् । व्यपदेशिवत्त्वेन ऋ इत्यस्य आदिभूतादचः परत्वात् द्वितीयैकाच्त्वाच्च द्वित्वम् । अभ्यासऋवर्णस्य अत्वे रपरत्वे अर् ऋ इति स्थिते अभ्यासस्य रुक् । लटस्तिपि ईडभावे अर् ऋ ति इति स्थते हलादिशेषेण रेफस्य निवृत्तिः । अ ऋ इति स्थिते अभ्यासस्य रुक् । लटस्तिपि ईडभावे अर् ऋ ति इति स्थिते, तिपि, ऋकारस्य गुणे, अकारे, रपरे सति, अरर्तीति रूपमित्यर्थः । रिग्रीकोस्त्विति । यङ्लुकि द्वित्वे उरदत्वे हलादिशेषे अ ऋ इति स्थिते रिकि रीकि च कृते तिपि उत्तरखण्डस्य ऋकारस्य गुणे अकारे रपरे कृते अरि अर्ति अरी अर्तीति स्थिते अभ्यासे रेफादिवर्णस्य यणं बाधित्वा 'अभ्यासस्यासवर्णे' इति इयङि अरियर्तीति रिग्रीकोरनुरूपं रूपमित्यर्थः । अथ लटस्तिपि ईट्पक्षे आह–अररीति अरियरीति । अर्ऋत इति । रुकि तसि रूपम् । ङित्वान्न गुणः । अरियृत इति । द्वित्वे उरदत्त्वे हलादिशेषे अ ऋ तस् इति स्थिते रिकि रीकि च कृते इयङादेशे रूपम् । झि अदिति 'झि' इत्यविभक्तिकनिर्देशः उदाहरणसूचनार्थः । 'अदभ्यस्तात्' इति झेः अदादेश इति यावत् । यणिति । रुकि

रुको 'रो रि' ( सू १७३ ) इति लोपः । न च तस्मिन्कर्तव्ये यणः स्थानिवत्त्वम् । पूर्वत्रासिद्धे तन्निषेधात् । आरति । अरियृति । लिङि श्तिपा निर्देशात् "गुणोऽर्ति—' ( सू २३८० ) इति गुणो न । रिङ् । रलोपः दीर्घः । आरियात् । अरियियात् । गृहू ग्रहणे जर्गृहीति । जर्गर्ढि । जर्गृढः । जर्गृहति । अजर्घट् ।

कृते अर् ऋ अति इति स्थिते ऋकारस्य यण् रेफ इत्यर्थः । तथाच अर् र् अतीति स्थिते आह—रुको रो रीति लोप इति । ननु रेफस्य लोपे कर्तव्ये यणादेशसम्पन्नस्य रेफस्य 'अचः परस्मिन्' इति स्थानिवत्त्वात् ऋकारपरकत्वाद्रेफपरकत्वाऽभावात् कथं पूर्वरेफस्य लोप इत्यत आह—पूर्वत्रासिद्धे तन्निषेधादिति । पूर्वत्रासिद्धीयकार्ये कर्तव्ये स्थानिवत्त्वनिषेधादित्यर्थः । आरतीति । अर् र् अति इति स्थिते पूर्वरेफस्य लोपे सति 'ढ्रलोपे' इति दीर्घः । न च यणः स्थानिवत्त्वं शङ्क्यम् , दीर्घविधौ तन्निषेधादिति भावः । अरियृतीति । द्वित्वे उरदत्वे हलादिशेषे रिकि रीकि च कृते, परत्वादभ्यासस्य इयङि, ततो यणि रिग्रीकोस्तुल्यमेव रूपमित्यर्थः । अरर्षि । अरियर्षि । अररीषि । अरियरीषि । अर्ऋथः । अरियृथः । अरर्मि । अरियर्मि । अररीमि । अरियरीमि । अर्ऋवः—अरियृवः । अरराञ्चकार । अरियराञ्चकार । अररिता । अरियरिता । अररिष्यति । अरियरिष्यति । अरर्तु । अरियर्तु । अररीतु । अरियरीतु । अर्ऋतात् । अरियृतात् । अर्ऋताम्-अरियृताम् । आरतु । अरियृतु । अर्ऋहि । अरियृहि । अरराणि—अरियराणि । अरराव । अरियराव । लङि-आरः—आरियः । आररीत्—आरियरीत् । आर्ऋताम्—आरियृताम् । आररुः—आरियरुः । आरः—आरियः । आररीः—आरियरीः । आर्ऋतम्—आरियृतम् । आर्ऋत—आरियृत । आररम् । आरियरम् । आर्ऋव । आरियृव । विधिलिङि-अर्ऋयात् । अरियृतात् । अर्ऋयाताम् । अर्ऋयुः—अरियृयुः इत्यादि । आशीर्लिङि विशेषमाह-लिङि श्तिपेति । रुकि अर् ऋ यात् इति स्थिते अर्ति इति श्तिपा निर्देशात् 'गुणोऽर्ति' इति गुणो नेत्यर्थः । रिङिति । 'ऋकारस्ये'ति शेषः । तथाच अर् रि यात् इति स्थिते आह—दीर्घः इति । 'रो रि' इति लोपे 'ढ्रलोपे' इति दीर्घ इत्यर्थः । तथाच परिनिष्ठितमाह—आरियादिति । रिग्रीकोस्त्वाह—अरियियादिति । अरि ऋ यात , अरी ऋ यात् इति स्थिते इवर्णस्य इयङ् ऋकारस्य रिङ् । 'लोपो व्योः' इति यलोपस्तु न' बहिरङ्गत्वेन रिङोऽसिद्धत्वात् 'अचः परस्मिन्' इति स्थानिवत्त्वाच्च । 'न पदान्त' इति निषेधस्तु न शङ्क्यः, 'स्वरदीर्घयलोपेषु लोपरूपाऽजादेश एव न 'स्थानिवत्' इत्युक्तेरित्यलम् । लुङि-आरारीत् । आरियारीत् । लृङि आररिष्यत्—आरियरिष्यत् । गृहू ग्रहणे इति । ऊदुपधोऽयम् । यङ्लुकि द्वित्वे उरदत्वे हलादिशेषे अभ्यासस्य रुग्रिग्रीकः । तदाह—जगृहीतीत्यादि । ईट्पक्षे 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति लघूपधगुणनिषेधः । ईडभावे त्वाह—जर्गर्ढि इत्यादि । जर्गृह् ति स्थिते लघूपधगुणे रपरत्वे ढत्वधत्व

गृह्णातेस्तु जाग्रहीति–जाग्राढि । तसादौ ङिन्निमित्तं सम्प्रसारणम् । तस्य बहिरङ्गत्वेनासिद्धत्वान्न रुगादयः । जागृढः । जागृहति । जाग्रहीषि—जाग्रक्षि । लुटि–जाग्रहिता । 'ग्रहोऽलिटि–' ( सू २५६२ ) इति दीर्घस्तु न । तत्र एकाच इत्यनुवृत्तेः । माधवस्तु दीर्घमाह । तद्भाष्यविरुद्धम् । जर्गृधीति—जर्गर्द्धि । जर्गृद्धः । जर्गृधति ।

---

ष्टुत्वढलोपाः । 'यणो मयः' इति शिष्टस्य ढस्य द्वित्वविकल्पः । एवं जरिगर्ढि—जरीगर्ढि । जर्गृढः इति । हक् ढत्वधत्वष्टुत्वढलोपाः । ङित्वान्न गुणः । एवं जरिगृढः जरीगृढः । जर्गृहतीति । 'अदभ्यस्तात्' इत्यत् । जर्गृहीषि–जरिगृहीषि–जरीगृहीषि । 'नाभ्यस्तस्याचि पिति' इति न लघूपधगुणः । जर्घर्षि–जरिघर्षि–जरीघर्षि । जर्गृढः-जरिगृढः–जरीगृढः । जर्गृढ–जरिगृढ–जरीगृढ । जर्गृहीमि–जरिगृहीमि–जरीगृहीमि । जर्गर्ह्मि–जरिगर्ह्मि–जरीगर्ह्मि । जर्गृह्वः–जरिगृह्वः–जरीगृह्वः । जर्गृह्मः–जरिगृह्मः–जरीगृह्मः । जर्गर्हाञ्चकार–जरिगर्हाञ्चकार–जरीगर्हाञ्चकार । जर्गर्हिता–जरिगर्हिता–जरीगर्हिता । जर्गर्हिष्यति–जरिगर्हिष्यति–जरीगर्हिष्यति । जर्गृहीतु–जरिगृहीतु–जरीगृहीतु । जर्गर्ढु–जरिगर्ढु–जरीगर्ढु । जर्गृढात्–जरिगृढात्–जरीगृढात् । जर्गृढाम्–जरिगृढाम्–जरीगृढाम् । जर्गृहतु–जरिगृहतु–जरीगृहतु । जर्गृढि–जरिगृढि–जरीगृढि । जर्गृहाणि–जरिगृहाणि–जरीगृहाणि । लङि–अजर्गृहीत्–अजरिगृहीत्–अजरीगृहीत् । ईडभावे तु अजर्गर्ह् त् इति स्थिते हल्ङ्यादिना तलोपे हस्य ढत्वे गस्य भष् घकारः । अजर्घर्ट्–अजरिघर्ट्–अजरीघर्ट् । एकाज्ग्रहणे सत्यपीह यङ्लुकि भष्, 'गुणो यङ्लुकोः' इत्यनेन 'श्तिपा शपा' इति निषेधस्याऽनित्यत्वज्ञापनादित्याहुः । अजर्गृढाम् ३ अजर्गृहुः ३ । अजर्गृहीः ३ अजर्घर्ट् ३ अजर्गृढम् ३ अजर्गृढ ३ अजर्गृहम् ३ अजर्गृह्व ३ अजर्गृह्म ३ । जर्गृह्यात् ३ । लुङि 'अस्तिसिचः' इति नित्यमिट् । अजर्गृहीत् ३ । अजर्गर्हिष्यत् ३ । गृह्णातेस्त्विति । 'ग्रह उपादाने' इत्यस्मादित्यर्थः । अदुपधोऽयम् । ईटि आह—जाग्रहीतीति । यङो लुका लुप्तत्वात् तिपः पित्त्वाच्च 'ग्रहिज्या' इति सम्प्रसारणं नेति भावः । ईडभावे त्वाह—जाग्राढीति । जाग्रह् ति इति स्थिते ढत्वधत्वष्टुत्वढलोपदीर्घाः । जाग्रह् तस् इति स्थिते आह—तसादाविति । कृते सम्प्रसारणे ऋदुपधत्वात् रुगादीनाशङ्क्य आह—तस्येति । सम्प्रसारणस्येत्यर्थः । जागृढ इति । ढत्वधत्वष्टुत्वढलोपाः । 'ढ्रलोपे' इति दीर्घस्तु न, ऋकारस्यानण्त्वात् । जागृहति । सिपः पित्वान्न सम्प्रसारणमिति मत्वा आह—जाग्रहीषि जाग्रक्षीति । ईडभावे, हस्य ढः, तस्य कः, सस्य षः, भष्भावः । जागृढः । जागृढ । जाग्रहीमि—जाग्रह्मि । जागृह्वः । जागृह्मः । इत्यनुवृत्तेरिति । 'एकाचो द्वे' इति सूत्रे हरदत्तेन तथोक्तत्वादिति भावः । माधवस्त्विति । एकाज्ग्रहणं नानुवर्तत इति तदाशयः । भाष्यविरुद्धमिति । 'एकाचो द्वे प्रथमस्य' इति सूत्रभाष्ये 'ग्रह उपादाने' इत्यस्माद्यङि सम्प्रसारणे अभ्यासस्य रीकि यङन्तात् जरीगृहिता, जरीगृहितम्, जरीगृहितव्यमित्यत्र इटो दीर्घाऽभावं सिद्धवत्कृत्य तत्र दीर्घमाशङ्क्य ग्रहोऽङ्गात्परस्य इटो दीर्घो विधीयते । 'जरीगृह'

जर्गृधीषि—जर्घत्सि। अजर्गृधीत्। ईडभावे गुणः, हल्ङ्यादिलोपः, भष्भावः, जश्त्वचर्त्वे। अजर्घत्। अजर्गृद्धाम्। सिपि 'दश्च' (सू २४६८) इति पक्षे रुत्वम्। अजर्घाः। अजर्गर्धीत्। अजर्गर्धिष्टाम्। पाप्रच्छीति। पाप्रष्टि। तसादौ 'ग्रहिज्या–' (सू २४१२) इति सम्प्रसारणं न भवति। श्तिपा निर्देशात्। 'च्छ्वोः शू-

इत्युक्तं तच्च न ग्रहधातुरिति निष्कर्षाद्विशेषणासामर्थ्यादेव 'प्रकृतिग्रहणे यङ्लुगन्तस्याऽपि ग्रहणम्' इति नात्र प्रवर्तत इति समाहितम्। यङन्ते उक्तो न्यायो यङ्लुगन्तेऽपि जाग्रहितेत्यादौ समान इत्यादि प्रौढमनोरमायां ज्ञेयम्। न च हरदत्तमत एकाज्ग्रहणानुवृत्त्यैवात्र दीर्घनिवारणे सति भाष्योक्तमिदं समाधानं नादरणीयमिति वाच्यम्, उपायस्य उपायान्तराऽदूषकत्वादित्यलम्। जाग्रहिष्यति। जाग्रहीतु-जाग्राढु। जागृढात्। जागृढाम्। जागृहतु। हौ जागृढि। जाग्रहाणि। लङि अजाग्रहीत्। अजाग्रट्। अजागृढाम्। अजागृढम्। अजागृढ। अजाग्रहम्। अजागृह्व। अजागृह्म। जागृह्यात्। लुङि—अजाग्रहीत्। 'ह्ययन्त' इति न वृद्धिः। 'अस्तिसिचः' इति नित्यमीट्। अजाग्रहिष्यत्। 'गृधु अभिकाङ्क्षायाम्' अस्माद्यङ्लुगन्ताल्लटश्तिपि ईटि आह—जर्गृधीतीति। 'नाभ्यस्तस्य' इति न लघूपधगुणः। ईडभावे आह—जर्गर्द्धीति। जर्गृध् ति इति स्थिते 'झषस्तथोः' इति तकारस्य धः। लघूपधगुणः रपरत्वम्। जर्गृद्धः इति। तसादौ क्त्विाच्च गुणः। 'झषस्तथोः' इति तस्य धः। जर्घत्सीति। जर्गृध् सि इति स्थिते, गस्य भष् घः, गुणः, रपरत्वं, धस्य चर्त्वम्। जर्गर्धि ३-जर्गृधीमि ३। जर्गृध्वः ३। जर्गर्धाचकार ३। जर्गर्धिता ३। जर्गर्धिष्यति ३। जर्गृधीतु ३-जर्गर्द्धु ३-जर्गृद्धात्। हौ जर्गृद्धि ३। जर्गृधानि ३। लङि तिपि ईट् अजर्गृधीत्। ईडभावे इति। अजर्गृध् त् इति स्थिते पित्त्वादक्त्वित्त्वात् गुणे रपरत्वे हल्ङ्यादिना तकारलोपे पदान्तत्वात् गस्य भष् घकारः। धस्य जश्त्वेन दकारे तस्य 'वाऽवसाने' इति चर्त्वविकल्प इत्यर्थः। अजर्घत् इति। 'रात्सस्य' इति नियमाच्च संयोगान्तलोपः। अजर्गृद्धाम्। अजर्गृधुः सिपि ईडभावपक्षे अजर्गृध् स् इति स्थिते, गुणे, रपरत्वे, हल्ङ्यादिलोपे भष्भावे, धस्य जश्त्वे, तस्य चर्त्वविकल्पे, पूर्ववदेव रूपं सिद्धवत्कृत्य आह—सिपि दश्चेति पक्षे रुत्वमिति। तथाच अजर्घर् र् इति स्थिते 'रोरि' इति लोपे, 'ढ्रलोपे' इति दीर्घे, शिष्टरेफस्य विसर्गे, अजर्घाः इति रूपमित्यर्थः। अजर्गृद्धम्। अजर्गृद्ध। अजर्गृधम्। अजर्गृध्व अजर्गृध्म। लुङि आह—अजर्गर्धीदिति। 'अस्तिसिचः' इति नित्यमीट्। पाप्रच्छीतीति। 'प्रच्छ ज्ञीप्सायाम्' अस्माद्यङ्लुगन्ताल्लटश्तिपि ईटि रूपम्। ईडभावे आह—पाप्रष्टीति। 'व्रश्चे'ति छस्य षः। तकारस्य ष्टुत्वेन टः। 'च्छ्वोः' इति छस्य शकारस्तु नात्र भवति, तस्य अनुनासिकादौ प्रत्यये क्वौ झलादौ क्ङिति ङिति च विहितत्वात्। ननु तिपः पित्त्वेन ङित्त्वाऽभावात् 'ग्रहिज्या' इति सम्प्रसारणाऽभावेऽपि तसो ङित्त्वात् सम्प्रसारणं दुर्वारमित्यत आह—

ङ्—' ( सू २५६१ ) इति शः। 'व्रश्च—' ( सू २९४ ) इति षः। पाप्रष्टः। पाप्रच्छति। पाप्रश्मि। पाप्रच्छ्वः। पाप्रश्मः। 'यकारवकारान्तानां तु ऊठभाविनां यङ्लुङ् नास्ति' इति 'च्छ्वोः—' (सू २५६१) इति सूत्रे भाष्ये ध्वनितम्। कैयटेन स्पष्टीकृतम्। इदं च 'च्छ्वोः—' ( सू २५६१ ) इति यत्रोठ् तद्विषयकम्। 'ज्वर-

---

तसादाविति। श्तिपेति। 'ग्रहिज्या' इति सूत्रे 'प्रच्छती'ति श्तिपा निर्देशादित्यर्थः। पाप्रच्छतीति। 'अदभ्यस्तात्' इत्यत्। प्राप्रच्छीषि। सिपि ईडभावे तु 'च्छ्वोः' इति छस्य न शः, सिपो झलादित्वेऽपि ङित्त्वाभावात्। किन्तु 'व्रश्च' इति ष एव। 'षढोः' इति षस्य कः, सस्य षत्वम्। पाप्रक्षि पाप्रष्ठः पाप्रष्ठ। पाप्रश्मीति। अनुनासिकप्रत्ययपरकत्वात् छस्य 'च्छ्वोः' इति श इति भावः। पाप्रच्छ्वः इति। अत्र 'च्छ्वोः' इति न शः, वसो झलादित्वाभावात्। पाप्रश्मः इति। अनुनासिकादिप्रत्ययपरकत्वात् छस्य शः। प्राप्रच्छाञ्चकार। पाप्रच्छिता। पाप्रच्छिष्यति। पाप्रच्छीतु—प्राप्रष्टु—पाप्रष्टात्। प्राप्रष्टाम्। पाप्रच्छतु। 'हेर्धिः', अपित्त्वेन ङित्त्वात्, झलादित्वाच्च छस्य शः, तस्य 'व्रश्च' इति षः, ष्टुत्वेन धस्य ढः, षस्य जश्त्वेन डः, प्राप्रड्ढि। पापच्छानि। लङि तिपि ईटि अपाप्रच्छीत्। इडभावे तु अपाप्रच्छ्त् इति स्थिते हल्ङ्यादिना तलोपे छस्य षः, तस्य जश्त्वचर्त्वे। अपाप्रट्। अपाप्रष्टाम्। अपाप्रच्छुः। अपाप्रच्छीः। अपाप्रट्। अपाप्रष्टम्। अपाप्रष्ट। अपाप्रच्छम्। अपाप्रच्छ्व। अपाप्रश्म। लिङि-पाप्रच्छ्यात्। लुङि अपाप्रच्छीत्। 'अस्तिसिचः' इति नित्यमीट्। अपाप्रच्छिष्यत्। ऊठ्भाविनामिति। 'भू प्राप्तौ' चुरादिरात्मनेपदीयः। तस्मात् 'आवश्यकाधमर्ण्ययोर्णिनिः' इति भविष्यदर्थे णिनिः। ऊठं प्राप्स्यतामित्यर्थः। ऊठ्विषयाणामिति यावत्। ध्वनितमिति। सूचितमित्यर्थः। स्पष्टीकृतमिति। तथाहि 'च्छ्वोः' इति सूत्रे क्ङिद्ग्रहणानुवृत्तौ कांश्चित् दोषानुद्भाव्य परिहृत्य क्ङिद्ग्रहणाननुवृत्तिं स्वीकृत्योक्तं भाष्ये—'एतावानेव विशेषः। अनुवर्तमाने क्ङिद्ग्रहणे 'छ्वः षत्वं वक्तव्य'मिति। अत्र कैयटः—प्रष्टा पृष्टमित्यादौ 'च्छ्वोः' इति छस्य शत्वे कृते तस्य 'व्रश्च' इति षत्वे ष्टुत्वमिति स्थितिः। तत्र क्ङितीत्यनुवृत्तौ छस्य षत्वं न स्यात्। अतः छस्य षत्वं वक्तव्यमित्यर्थः। न च क्ङिद्ग्रहणानुवृत्तावत्र शत्वाभावेऽपि न दोषः। व्रश्चादिना छस्य षत्वे इष्टसिद्धेरिति वाच्यम्। 'च्छ्वोः' इत्यत्र 'छस्य षत्वं वक्तव्यम्' इत्यनेनैव प्रष्टेत्यादिसिद्धेः व्रश्चादिसूत्रे छग्रहणं न कर्तव्यमित्याशयात्। नच प्रडिति क्विबन्तात् सोर्लोपे षत्वार्थं व्रश्चादिसूत्रे छग्रहणमिति वाच्यम्। तत्रापि क्विन्निमित्तशादेशस्य दुर्निवारत्वात्। विच् तु प्रच्छधातोरनभिधानान्नास्ति। एवं चात्र भाष्ये 'ऊठ्भाविभ्यो यङ्लुङ्नास्ति' इत्युक्तप्रायम्। 'अन्यथा 'च्छोः' इत्यत्र क्ङिद्ग्रहणानुवृत्तौ दिवेर्यङ्लुकि तिबादौ ईडभावे लघूपधगुणे 'लोपो व्योः' इति वलोपे देदेति देदेषीत्याद्यूठः अभावे रूपम्। तदनुवृत्तौ तु वस्य ऊठि देद्योति। देद्योषि इत्यादि रूपमिति विशेषस्य सत्त्वादेतावानेवेत्येवकारो विरुध्येत। अतः ऊठ्भाविनां यकारवकारान्तानां यङ्लुक्-

त्वर—' ( सू१६५४ ) इत्यूठ्भाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यम् । माधवादिसंमतं च । 'मव्य बन्धने', अयं यान्त ऊठ्भावी । 'तेवृ देवृ देवने' इत्यादयो वान्ताः । 'हय गतौ' । जाहयीति । जाहति । जाहतः । जाहयति । जाहयीषि । जाहसि । वलि लोपे यञादौ दीर्घः । जाहामि । जाहावः । जाहामः । 'हर्य गतिकान्त्योः' । जाहर्यीति । जाहर्ति । जाहर्तः । जाहर्यति । लोटि—जाहर्हि । अजाहः । अजाहर्ताम् । अजाहर्युः । 'मव बन्धने' । २६५४ **ज्वरत्वरस्रिव्यविमवामुपधायाश्च** ६।४।२०॥ ज्वरादीनामुपधावकारयोरूठ् स्यात्क्वौ झलादावनुनासिकादौ च प्रत्यये । अत्र क्ङिति इति नानुवर्तते । अवतेस्तुनि ओतुः इति दर्शनात् । अनुनासिकग्रहणं चानुवर्तते । अवतेर्मन्प्रत्यये तस्य टिलोपे ओम् इति

---

**नास्तीति विज्ञायते इत्यलम् ।** इदं चेत **'च्छ्वोः' इति सूत्रेण यत्र ऊठ् प्रवर्तते तद्विषयकमेव इदम् उक्तं ज्ञापनमित्यर्थः ।** स्रिविमव्योरित्विति । **'स्रिवु गतिशोषणयोः, 'मव्य बन्धने' इत्यनयोरित्यर्थः ।** न्याय्यमिति । **उक्तज्ञापनस्य 'छ्वोः' इति सूत्रस्थभाष्यमूलकत्वादिति भावः । ननु ज्ञापनस्य सामान्यापेक्षत्वं कुतो नाश्रीयते इत्यत आह—**माधवादिसम्मतं चेति । **'उक्तविशेषपरत्व'मिति शेषः ।** ऊठ्भावीति । **अतो नास्य यङ्लुगिति भावः ।** वान्ता इति । **'ऊठ्भाविन' इति शेषः । नैतेषामपि यङ्लुगिति भावः । ऊठ्भाविनामिति विशेषणस्य व्यावर्त्यं आह—**हय गताविति । **अस्य यान्तत्वेऽपि ऊठ्विषयत्वाभावादस्त्येव यङ्लुगिति भावः ।** जाहतीति । **तिप ईडभावे 'लोपो व्योः' इति यलोपः । मिपि ईडभावे जाहय् मि इति स्थिते आह**-वलि लोपे इति । **ईटि जाहयीमि । जाहयाञ्चकार । जाहयिता । जाहयिष्यति । लोटि, जाहयीतु । जाहतात् । जाहताम् । जाहयतु । जाहहि । जाहयानि । जाहयाव । लङि-अजाहयीत् । अजाहत् । अजाहताम् । अजाहयुः । अजाहयीः । अजाहः । अजाहतम् । अजाहत । अजाहयम् । अजाहाव । अजाहाम । जाहय्यात् । लुङि 'ह्ययन्त' इति न वृद्धिः । 'अस्तिसिचः' इति नित्यमिट् । अजाहयीत् । अजाहयिष्टाम् । अजाहयिष्यत् ।** जाहर्तीति । **तिपि जाहर्य् ति इति स्थिते ईडभावे यलोपः ।** जाहर्यीति । **हौ यलोपः । लङस्तिपि अजाहर्य् त् इति स्थिते यलोपः । हल्ङ्यादिना तकारलोपः ।** रेफस्य विसर्गं **इति मत्वा आह—**अजाहः इति । **सिप्यप्येवं रूपम् ।** ज्वरत्वरस्रिव्यविमवामुपधायाश्च । **ज्वर, त्वर, स्रिवि, अवि, मव् एषां द्वन्द्वः । 'च्छ्वोः शूट्' इत्यतः वकारग्रहणम्, ऊठ्ग्रहणम्, अनुनासिके इति चानुवर्तते छस्य श इति नानुवर्तते, ज्वरादिषु छस्य असम्भवात् । 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यतः क्विझलोरिति चानुवर्तते । चकारो वकारसमुच्चयार्थस्तदाह-**ज्वरादीनामिति । अवतेस्तुनीति । **अवधातोरौणादिके तुन्प्रत्यये कृते, अकारवकारयोरूठि, तस्य गुणे, 'ओतु'रिति दृश्यते । क्ङितीत्यनुवृत्तौ तु तन्न स्यादिति भावः ।** ओमिति । **'अवतेष्टिलोपश्च' इत्यौणादिकसूत्रम् । 'अव रक्षणे' इति**

दर्शनात्। ईडभावे ऊठि पिति गुणः। मामोति—मामवीति मामूतः। मामवति। मामोषि। मामोमि। मामावः। मामूमः। मामोतु—मामूतात्। मामूहि। मामवानि। अमामोत्। अमामोः। अमामवम्। अमामाव। अमामूम। तुर्वी हिंसायाम्। तोतूर्वीति। २६५५ राल्लोपः ६।४।२१॥ रेफात्परयोश्छ्वोर्लोपः स्यात्क्वौ झलादावनुनासिकादौ च प्रत्यये। इति वलोपः। लघूपधगुणः। २६५६ न धातु-

धातोर्मन्प्रत्ययःस्यात्, प्रत्ययस्य टेर्लोपश्चेति तदर्थः। तथाच अव् म् इति स्थिते उपधाभूतस्य अकारस्य वकारस्य च ऊठि तस्य गुणे ओमिति दृश्यते। 'ज्वरत्वर' इत्यत्र अनुनासिकग्रहणानुवृत्तौ तु मनिनि परे अवतेरूठ् न स्यात्, क्विझलोरेव तद्विधिलाभादिति भावः॥ ऊठि पितीति। मवधातोर्यङ्लुक्। मामवति इति स्थिते ईडभावपक्षे अकारवकारयोरेकस्मिन् ऊठि तिपः पित्त्वेन ङित्वाऽभावादूकारस्य गुणे मामोतीति रूपमित्यर्थः। उपधायाः वकारस्य च प्रत्येकमूठ् इति पक्षे सवर्णदीर्घः। पक्षद्वयमपि 'एकः पूर्वपरयोः' इत्यत्र भाष्ये स्पष्टम्। ईट्पक्षे आह—मामवीतीति। अत्र ऊठ् न, क्वौ झलादौ अनुनासिकादौ च प्रत्यये परे तद्विधानात्। मामूतः इति। अकारवकारयोरूठि ततो ङित्त्वान्न गुणः इति भावः। मामवतीति। 'अदभ्यस्तात्' इत्यत्। 'मामवीषी'ति सिद्धवत्कृत्य आह—मामोमीति। अनुनासिकपरकत्वादूठ्, गुणः। मामावः इति। मामव् वस् इति स्थिते परनिमित्ताभावादूठ् न 'लोपो व्योः' इति वलोपे 'अतो दीर्घो यञि' इति दीर्घः। मामूमः इति। मामव् मस् इति स्थिते अनुनासिकपरकत्वादूठ् ङित्त्वान्न गुणः। मामवाञ्चकार। मामविता। मामविष्यति। लोटि आह—मामोत्विति। मामूतादिति। ङित्वान्न गुणः। मामूताम्। मामवतु। मामूहीति। ऊठि हेरपित्त्वेन ङित्त्वान्न गुणः। मामूतात्। मामूतम्। मामूत। मामावानीति। आटः पित्त्वादङित्त्वादगुणः। मामवाव। मामवाम। लङ्स्तिप्याह—अमामोदिति। अमामूताम्। अमामवुः। सिप्याह—अमामोरिति। अमामूतम्। अमामूत। लिङि-मामव्यात्। लुङि 'अस्तिसिचः' इति नित्यमीट्। अमामवीत्। अमामावीत् अमामविष्यत्। ज्वरतेस्तु-जाज्वरीति। जाजूर्ति इत्यादि। त्वरतेस्तु-तात्वरीति। तातूर्ति इत्यादि। स्रिवेस्तु-सेस्रवीति। ईडभावे तु ऊठि सेस्रोति इत्यादि। अवतेस्तु यङभावात् क्विप्युदाहरणम्। ऊः उवौ उवः। इत्याद्यूह्यम्। तोतूर्वीतीति। 'उपधायां च' इति दीर्घः। ईडभावे तोतुर्व् ति इति स्थिते—राल्लोपः। 'च्छ्वोः शूडनुनासिके च' इति सूत्रं शूठ्वर्जमनुवर्तते। 'अनुनासिकस्य क्विझलोः' इत्यतः क्विझलोरिति च तदाह—रेफात्परयोरित्यादि। अत्रापि क्ङितीति नानुवर्तते, पूर्वसूत्रे तदननुवृत्तेः। वलोप इति। तथाच तोतुर् ति इति स्थिते उकारस्य लघूपधगुणः, तिपः पित्त्वेन अङित्त्वादित्यर्थः। न धातुलोपे। 'इको गुणवृद्धी' इत्यनुवर्तते। तत्र धातुलोपे सति 'इको गुणवृद्धी' न स्तः आर्धधातुके परत इत्यर्थः, लूञ्धातोः यङन्तात् पचाद्यचि, यङो लुकि, लो-

लोप आर्धधातुके १।१।४॥ धात्वंशलोपनिमित्ते आर्धधातुके परे इको गुणवृद्धी न स्तः। इति नेह निषेधः। तिबादीनामनार्धधातुकत्वात्। तोतोर्ति। 'हलि च' (सू ३५४) इति दीर्घः। तोतूर्तः। तोतूर्वति। तोथोर्ति। दोदोर्ति। दोधोर्ति। मुर्च्छा। मोमोर्ति। मोमूर्तः। मोमूर्च्छतीत्यादि। आर्धधातुके इति विषयसप्तमी। तेन

---

लुव इत्यत्र गुणनिषेधाऽभावप्रसङ्गात्, अत्र धात्ववयवस्य यङो लोपेऽपि धातोर्लोपाभावात्। 'धात्ववयवलोपे सती'त्यर्थं तु शीङ्धातोस्तृचि शयिता इत्यत्र गुणो न स्यात् तत्र धात्ववयवङकारलोपसत्त्वात्। 'आर्द्धधातुके परे यो धात्ववयवलोपः तस्मिन् सती'त्यर्थे क्नोपयतीत्यत्रापि गुणनिषेधः स्यात्। तत्र यकारलोपस्य आर्द्धधातुकपरकत्वमस्त्वादित्यतो व्याचष्टे—धात्वंशलोपनिमित्त इति। धातु लोपयतीति धातुलोपः कर्मण्यण्। धातुलोपनिमित्ते आर्द्धधातुके परे इति यावत्। 'लोलुवः' इत्याद्युदाहरणम्। लूञ्धातोर्यङन्तात् पचाद्यचि 'यङोऽचि च' इत्यच्प्रत्ययमाश्रित्य यङो लुकि, अच्प्रत्ययमाश्रित्य प्राप्तो गुणोऽनेन निषिध्यते। 'मरीमृज' इति तु वृद्धिनिषेधोदाहरणम्। धात्विति किम् शीङ्, शयिता। इह 'उत्सृष्टानुबन्धस्य धातुत्वं, नतु सानुबन्धस्ये'ति कैयटादिमते तु धातुग्रहणं स्पष्टार्थम्। इदं सूत्रं भाष्ये प्रत्याख्यातम्। हरदत्तेन पुनरुद्धृतम्। कौस्तुभे तु तदपि दूषयित्वा प्रत्याख्यातमेव।

इति नेहेति। तोतोर्तीत्यत्र अयं गुणनिषेधो नेत्यर्थः। हलि चेति। तोतुव् तस् इति स्थिते 'लोपो व्योः' इति वकारस्य लोपं बाधित्वा 'च्छ्वोः शूठ्' इत्यूठि प्राप्ते, वकारस्यानेन लोपे, 'हलि च' इति दीर्घं इत्यर्थः। यद्यपि तोतोर्तीत्यत्र 'च्छ्वोः' इत्यूठः अप्रवृत्तेर्वकारस्य 'लोपो व्योः' इति लोपः सिध्यति। तथापि तोतूर्तः इत्यादौ ऊठो बाधनाय आवश्यकोऽयं लोपो न्यायत्वात्तोतोर्तीत्यत्रोपन्यस्त इति बोध्यम्। तोतूर्वतीति। 'अदभ्यस्तात्' इत्यत्। 'उपधायां च' इति दीर्घः। तोतूर्वीषि-तोतोर्षि। तोतूर्थः। तोतूर्थ। तोतूर्वीमि। तोतोर्मि। तोतूर्वः। तोतूर्मः। तोतूर्वाञ्चकार। तोतूर्विता। तोतूर्विष्यति। तोतूर्वीतु। तोतोर्तु। तोतूर्तात्। तोतूर्ताम् तोतूर्वतु। तोतूर्हि। तोतूर्वाणि। लङि अतोतूर्वीत्। अतोतोः अतोतूर्ताम् अतोतूर्वुः। अतोतूर्वीः। अतोतोः। अतोतूर्तम्। अतोतूर्त। अतोतूर्वम्। अतोतूर्व। अतोतूर्म। तोतूर्व्यात्। लुङि 'अस्तिसिचः' इति नित्यमीट्। अतोतूर्वीत्। अतोतूर्विष्यत्। थुर्वीधातोरुदाहरति—तोथोर्तीति। तुर्वीवद्रूपाणि। दोदोर्तीति। दुर्वीधातोः रूपम्। दोधोर्तीति। धुर्वीधातोः रूपम्। मुर्च्छाधातोः मोमूर्च्छीति सिद्धवत्कृत्य इडभावे आह—मोमोर्तीति। 'राल्लोपः' इति छस्य लोपः। इत्यादीति। मोमूर्च्छीषि-मोमोर्षि। मोमूर्च्छीमि-मोमोर्मि। मोमूर्च्छ्वः। मोमूर्हि। अमोमूर्च्छीत्। अमोमूः। सिध्यन्त्येवम्। लुङि 'अस्तिसिचः' इति नित्यमीट्। अमोमूर्च्छीत्। अमोमूर्च्छिष्यत्। विषयसप्तमीति। 'अजेर्व्यघञपोः' इति वीभावविधौ आर्द्धधातुके इत्यनुवृत्त विषयसप्तम्यन्तत्वमाश्रीयते।

यङि विवक्षिते अजेर्वी । 'ववीयते' अस्य यङ्लुग्नास्ति । लुकापहारे विषयत्वासम्भवेन वीभावस्याप्रवृत्तेः । इति तिङन्ते यङ्लुक्प्रकरणम् ।

## अथ तिङन्ते नामधातुप्रकरणम् ॥ १५ ॥

**२६५७ सुप आत्मनः क्यच् ३।१।८॥** इषिकर्मणः एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच्प्रत्ययो वा स्यात् । धात्ववयवत्वात्सुब्लुक् । **२६५८ क्यचि च ७।४।३३॥** अस्य ईत् स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति । 'वान्तो यि प्रत्यये' ( सू ६३ ) गव्यति । नाव्यति । 'लोपः शाकल्यस्य' ( सू ६७ ) इति तु न । अपदान्तत्वात् । तथा हि । **२६५९ नः क्ये १।४।१५॥**

---

**ननु परसप्तम्यन्तमित्यर्थः । ततः किमित्यत आह—**तेनेति । **विषयसप्तम्याश्रयणेनेत्यर्थः ।** विवक्षिते । **यङि विवक्षिते ततः प्रागेव अजेर्वीभाव इत्यर्थः । एवञ्च कृते वीभावे हलादित्वाद्यङ् लभ्यते इति मत्वा आह**-वेवीयते इति । **ननु अजेर्वीभावानन्तरं यङि सति तस्य 'यङोऽचि च' इति पाक्षिको लुक् कुतो नोदाह्रियते इत्यत आह—**अस्य यङ्लुङ् नास्तीति । विषयत्वेति । **लुका लुप्तयङः भाविज्ञानविषयत्वाभावेनेत्यर्थः ।**

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां यङ्लुगन्तप्रक्रिया समाप्ता ।

**अथ नामधातुप्रक्रियाः निरूप्यन्ते ।** सुप आत्मनः क्यच् । **प्रत्ययग्रहणपरिभाषया सुबन्तादिति लभ्यते । 'धातोः कर्मणः' इति सूत्रात्कर्मणः इच्छायां वेत्यनुवर्तते । कर्मण इति पञ्चमी । कर्मकारकादिति लभ्यते ।** सन्निधानादिच्छां प्रत्येव कर्मत्वं विवक्षितम् । **आत्मन्शब्दः स्वपर्यायः । तादर्थ्यस्य शेषत्वविवक्षायां षष्ठी । स्वार्थात्कर्मण इति लभ्यते । स्वश्च इच्छायां सन्निधापितत्वादेषितैव विवक्षितः ।** तथाच **स्वस्मै यदिष्यते कर्मकारकं तद्वृत्तेस्सुबन्तादिच्छायां क्यज्वा स्यादिति फलति । तदिदमभिप्रेत्य आह**-इषिकर्मणः एषितृसम्बन्धिनः इत्यादिना । **एषिग्रर्थादिषिकर्मण इत्यर्थः । एषित्रा स्वार्थं यदिष्यते कर्मकारकं तद्वाचकात्सुबन्तादिति यावत् ।** धात्ववयवत्वादिति । **सुबन्तात् क्यचि कृते तदन्तस्य सनाद्यन्ताः इति धातुत्वादिति भावः ।** क्यचि च । **'अस्य च्वौ' इत्यतोऽस्येत्यनुवर्तते । 'ई घ्राध्मोः' इत्यतः ईग्रहणं चेति मत्वा शेषं पूरयति—**अस्येति । **अकारस्येत्यर्थः ।** पुत्रीयतीति । **क्यचि पुत्र य इति स्थिते ईत्वे पुत्रीय इति धातोर्लडादिरित्यर्थः । आत्मनः किम् । राज्ञः पुत्रमिच्छति । पदविधित्वेन समर्थपरिभाषायाः प्रवृत्तेः महान्तं पुत्रमिच्छतीत्यत्र पुत्रशब्दान्न क्यच् ।** गव्यतीति । **गामात्मन इच्छतीत्यर्थः ।** नाव्यतीति । **नावमात्मन इच्छतीत्यर्थः ।** अपदान्तत्वादिति । **'लोपः शाकल्यस्य' इत्यस्य पदान्त एव प्रवृत्तिरिति भावः । नन्वन्तर्वर्तिविभक्त्या पदत्वमस्त्येवेत्यत आह—**तथा हीति । **यथा पदत्वं न भवति तथो**

क्यचि क्यङि च नान्तमेव पदं स्यान्नान्यत्। सन्निपातपरिभाषया क्यचो यस्य लोपो न। गव्याञ्चकार। गव्यिता। नाव्याञ्चकार। नाव्यिता। नलोपः। राजीयति। 'प्रत्ययोत्तरपदयोश्च' (सू १३७३)। त्वद्यति। मद्यति। एकार्थयोः इत्येव। युष्मद्यति। अस्मद्यति। 'हलि च' (सू ३५४)। गीर्यति। पूर्यति। धातोः इत्येव। नेह। दिवमिच्छति दिव्यति। इह पुरमिच्छति पुर्यतीति माधवोक्तं प्रत्युदाहरणं चिन्त्यम्। पुर्गिरोः साम्यात्। दीव्यतीति दीर्घस्तु प्राचः प्रामा-

क्यते इत्यर्थः। नः क्ये। नकाराद्कार उच्चारणार्थः। 'सुप्तिङन्तम्' इत्यतः सुबन्तं पदमित्यनुवर्तते। सुबन्तं नकारेण विशेष्यते। तदन्तविधिः। नकारान्तं सुबन्तं पदसञ्ज्ञं स्यादिति लभ्यते। सुबन्तत्वादेव पदत्वे सिद्धे नियमार्थमिदम्। क्यग्रहणेन क्यच्क्यङोर्ग्रहणम्। न तु क्यषः 'लोहितडाज्भ्यः क्यष्वचनम्' इति वक्ष्यमाणतया हलन्तात् क्यषोऽभावात्। तदाह—क्यचि क्यङि चेत्यादिना। ननु गव्याञ्चकारेत्यत्र आम आर्धधातुकत्वात्तस्मिन् परे वकाराद्धल उत्तरस्य यकारस्य 'यस्य हलः' इति लोपः स्यादित्यत आह—सन्निपातेति। यकारनिमित्तकावादेशसम्पन्नवकारस्य यकारलोपं प्रति निमित्तत्वाऽसम्भवादिति भावः। गव्यितेति। इटि अतो लोपः। राजीयतीत्यत्र आह—नलोप इति। राजानमिच्छतीत्यर्थे क्यचि राजन् य ति इति स्थिते 'नः क्ये' इति पदत्वान्नकारस्य लोप इत्यर्थः। कृते नलोपे 'क्यचि च' इत्यकारस्य ईत्वमिति मत्वा आह—राजीयतीति। न च ईत्वे कर्तव्ये नलोपस्यासिद्धत्वं शङ्क्यम्, 'नलोपः सुप्स्वर' इति नियमादित्यलम्। ननु त्वामात्मनः इच्छति, मामात्मनः इच्छतीत्यत्र युष्मदस्मदोः क्यचि धात्ववयवत्वात् सुपो लुकि प्रत्ययलक्षणाऽभावात् 'त्वमावेकवचने' इति कथं त्वमौ स्याताम्, विभक्तौ परत एव तद्विधानादित्यत आह—प्रत्ययोत्तरपदयोश्चेति। सुपो लुका लुप्तत्वेऽपि क्यचमादाय मपर्यन्तस्य त्वमाविति भावः। ननु युष्मानात्मनः इच्छति, अस्मानात्मनः इच्छति, युष्मद्यति अस्मद्यति इत्यत्रापि क्यचमादाय त्वमौ स्यातामित्यत आह—एकार्थयोरित्येवेति। 'प्रत्ययोत्तरपदयोश्च' इत्यत्र 'त्वमावेकवचने' इति सूत्रमनुवृत्तम्। एकवचनशब्दश्च न रूढः, किन्तु एकत्वविशिष्टार्थवृत्तित्वमेकवचनशब्देन विवक्षितमिति युष्मदस्मत्प्रक्रियायां प्रपञ्चितं प्राक्। तथा च युष्मदस्मदोरेकत्वविशिष्टार्थवृत्तित्वाऽभावान्न त्वमाविति भावः। गिरमात्मनः इच्छति, पुरमात्मनः इच्छतीत्यत्र गिर्शब्दात्पुर्शब्दाच्च क्यचि विशेषमाह—हलि चेति। उपधादीर्घ इति शेषः। ननु दिवमिच्छति दिव्यतीत्यत्रापि 'हलि च' इति दीर्घः स्यादित्यत आह—धातोरित्येवेति। 'हलि च' इति सूत्रे 'सिपि धातोः' इत्यतस्तदनुवृत्तेरिति भावः। दिव्यतीति। दिव्शब्दः अव्युत्पन्नं प्रातिपदिकमिति भावः। इहेति। 'हलि च' इति सूत्रे धातोरित्यनुवृत्तेः पुर्यतीत्यत्र न दीर्घ इति माधवग्रन्थश्चिन्त्य इत्यर्थः। कुत इत्यत आह—पुर्गिरोः साम्यादिति। 'गॄ शब्दे' 'पॄ पालनपूरणयोः' इत्याभ्यां क्विपि 'ॠत इद्धातोः' इति 'उदोष्ठ्यपूर्वस्य' इति च इत्वे उत्वे

दिक एव। अदस्यति 'रीङृतः' ( सू १२३४ )। कर्त्रीयति। 'क्यच्व्योश्च' ( सू २११६ )। गार्गीयति। वात्सीयति। 'अकृत्सार्व-' ( सू २२९८ ) इति दीर्घः। कवीयति। वाच्यति। समिध्यति। २६६० क्यस्य विभाषा ६।४।५०॥ हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्द्धधातुके। 'आदेः परस्य' ( सू ४४ )। 'अतो लोपः' ( सू २३०८ )। तस्य स्थानिवत्त्वाल्लघूपधगुणो न। समिधिता समिध्यिता। 'मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न' ( वा १७१४ )। किमिच्छति। इदमिच्छति। स्वरिच्छति। २६६१ अशनायोदन्यधनाया बुभुक्षा-

च कृते रपरत्वे गिर्शब्दस्य पुर् शब्दस्य च निष्पत्तेरिति भावः। प्रामादिक एवेति। दिव्शब्दस्य अव्युत्पन्नप्रातिपदिकत्वान्न धातुत्वम्। दिव्धातोः क्विबन्तात् ऊठि द्यूशब्दाच्च क्यचि 'द्यूयती'त्येव उचितम्। विचि तु लघूपधगुणे 'लोपो व्योः' इति लोपे देशब्दात् क्यचि देयतीत्येवोचितमिति भावः। अदस्यतीति। अमुमात्मनः इच्छतीत्यर्थे अदस्शब्दात् क्यचि सुपो लुका लुप्तत्वाद्विभक्तिपरकत्वाऽभावान्न त्यदाद्यत्वम्। सान्तत्वाभावेऽत्वमत्वे। 'नः क्ये' इति नियमेन पदान्तत्वाऽभावान्न सस्य रुत्वमिति भावः। कर्तृशब्दात् क्यचि विशेषमाह—रीङृत इति। गार्ग्यशब्दात् क्यचि विशेषमाह—क्यच्व्योश्चेति। आपत्यस्य यञो यकारस्य लोप इति भावः। कृते यलोपे 'क्यचि च' इत्यकारस्य ईत्वं मत्वा आह—गार्गीयतीति। वात्सीयतीति। वात्स्यशब्दात् क्यचि पूर्ववत्। कविशब्दात् क्यचि विशेषमाह—अकृत्सार्वेति। वाच्यतीति। वाच्शब्दात् क्यचि 'नः क्ये' इति नियमेन पदत्वाऽभावान्न कुत्वम्। 'वचिस्वपि' इति सम्प्रसारणं तु न, धातोः कार्यमुच्यमानं धातुविहितप्रत्यये एवेति नियमात्। समिध्यतीति। समिध्शब्दात् क्यचि 'नः क्ये' इति नियमेन पदत्वाऽभावान्न जश्त्वम्। लुटस्तासि इटि समिध्य इता इति स्थिते 'यस्य हलः' इति नित्ये यलोपे प्राप्ते—क्यस्य विभाषा। 'यस्य हलः' इत्यतः हल इति पञ्चम्यन्तमनुवर्तते। 'आर्द्धधातुके' इत्यधिकृतम्। तदाह—हलः परयोः क्यच्क्यङोरिति। क्यष् तु नात्र गृह्यते, 'लोहितडाज्भ्यः क्यष्वचनम्' इति वचनमात्रतया हलन्तात्तदभावात्। अन्तलोपमाशङ्क्य आह—आदेः परस्येति। तथा च समिध् अ इता इति स्थिते आह—अतो लोपः इति। तथा च समिध् इता इति स्थिते लघूपधगुणमाशङ्क्य आह—तस्य स्थानिवत्त्वादिति। क्यच्सूत्रे 'मान्ताव्ययेभ्यः प्रतिषेधः' इति वार्तिकम्। मान्तेभ्यः अव्ययेभ्यश्च प्रतिषेध इत्यर्थः। पुत्रमात्मनः इच्छति पुत्रीयतीत्यत्र न स्यात्। पुत्राविच्छतीत्यादावेव स्यात्। मान्तानि अव्ययानि मान्ताव्ययानि तेभ्य इत्यर्थे स्वरिच्छतीत्यत्र क्यचः प्रतिषेधो न स्यात्। अतस्तद्वार्तिकं विवृण्वन्नाह—मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् नेति। अशनायोदन्य। अशनाय, उदन्य, धनाय इत्येषां द्वन्द्वः। क्यजन्ता इति। एते त्रयः शब्दाः क्रमेण बुभुक्षादिष्वर्थेषु निपात्यन्ते इत्यर्थः। भोक्तुमिच्छा बुभुक्षा। पातु-

**पिपासागर्धेषु ७।४।३४** ॥ क्यजन्ता निपात्यन्ते । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् । अशनीयति । उदकीयति । धनीयति । **२६६२ अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ७।१।५१॥** एषां क्यचि असुगागमः स्यात् । 'अश्ववृषयोर्मैथुनेच्छायाम्' ( वा ४३०६ ) अश्वस्यति वडवा । वृषस्यति गौः । 'क्षीरलवणयोर्लालसायाम्' ( वा ४३१५ ) । क्षीरस्यति बालः । लवणस्यत्युष्ट्रः । 'सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ' ( वा ४६१६-१७ ) दधिस्यति-दध्यस्यति । मधुस्यति । मध्वस्यति । **२६६३ काम्यच्च ३।१।९॥** उक्तविषये काम्यच् स्यात् । पुत्रमात्मनः इच्छति पुत्रकाम्यति । इह 'यस्य हलः' ( सू २६३१ ) इति लोपो न, अनर्थकत्वात् । यस्य इति सङ्घातग्रहणमित्युक्तम् । यशस्काम्यति । सर्पिष्काम्यति । मान्ताव्ययेभ्योऽप्ययं स्यादेव । किंकाम्यति ।

---

मिच्छा पिपासा । गर्द्धः अभिकाङ्क्षा । अशनायतीति । अश्यते यत् तदशनम् अन्नं, तद्भोक्तुमिच्छतीत्यर्थः । 'क्यचि च' इति ईत्वाऽभावो निपात्यते । 'अकृत्सार्व' इति दीर्घः । उदन्यतीति । उदकं पातुमिच्छतीत्यर्थः । उदकशब्दस्य उदन्नादेशो निपात्यते नलोपाऽभावश्च । धनायतीति । जीवनार्थं सत्यपि धने अधिकं धनं वाञ्छतीत्यर्थः । ईत्वाऽभावो निपात्यते । अशनीयतीति । अशनम् अन्नं तत्संग्रहीतुमिच्छति वैश्वदेवाद्यर्थमित्यर्थः । उदकीयतीति । सस्यादिसेचनार्थमुदकमिच्छतीत्यर्थः । धनीयतीति । दरिद्रः सन् जीवनाय धनमिच्छतीत्यर्थः । अश्वक्षीर । क्यचि । 'परे असु'गिति शेषपूरणम्, 'आज्जसेरसुक्' इत्यतस्तदनुवृत्तेरिति भावः । असुकि ककार इत्, उकार उच्चारणार्थः । कित्वादन्त्यावयवः । अश्ववृषयोः इति । वार्तिकम् । अश्वस्यति वडवेति । मैथुनार्थमश्वमिच्छतीत्यर्थः । वृषस्यति गौरिति । मैथुनार्थं वृषमिच्छतीत्यर्थः । 'वृषस्यन्ती तु कामुकी' इति कोशस्तु अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छामात्रे लाक्षणिकः । क्षीरलवणयोरिति । वार्तिकम् । असुगिति शेषः । लालसा-उत्कटेच्छा । सर्वप्रातिपदिकानामिति । इदमपि वार्तिकम् । लालसायां सर्वेषां प्रातिपदिकानां क्यच् वक्तव्यः । तस्मिन् परे प्रकृतीनां सुगसुकौ च वक्तव्यौ इत्यर्थः । न चानेनैव वार्तिकेन सिद्धे 'क्षीरलवणयोर्लालसायाम्' इति वार्तिकं व्यर्थमिति शङ्क्यम्, 'क्षीरलवणयोः' इति वार्तिकं कात्यायनीयं, 'सर्वप्रातिपदिकानाम्' इति तु मतान्तरमित्यदोषात् । एवञ्च भाष्ये 'अपर आह'इत्यनेन ध्वनितम् । काम्यच्च ।'सुप आत्मनः क्यच्' इत्युत्तरमिदं सूत्रम् । तदाह—उक्तविषये इति । पुत्रकाम्यतीति । कस्येत्संज्ञा तु न, फलाभावात् । अनर्थकत्वादिति । काम्यचः एकदेशस्य यकारस्य अर्थाऽभावादित्यर्थः । ननु वेभिदिता इत्यत्राऽपि यकारस्य अनर्थकत्वाल्लोपो न स्यादित्यत आह—यस्य इतीति । 'यस्य हलः' इत्यत्र 'यस्ये'त्यनेन यकाराऽकारसङ्घातग्रहणमित्यनुपदमेवोक्तमित्यर्थः । तथाच वेभिद्य इता इति स्थिते यङो यस्य सङ्घातस्यार्थवत्वाद्यकारलोपो निर्बाधः । प्रकृते

स्वः काम्यति। २६६४ उपमानादाचारे ३।१।१०॥ उपमानात्कर्मणः सुबन्तादाचारार्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्। 'अधिकरणाच्चेति वक्तव्यम् (वा १७१७)। प्रासादीयति कुट्यां भिक्षुः। कुटीयति प्रासादे। २६६५ कर्तुः क्यङ् सलोपश्च ३।१।११॥ उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात्, सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात्। क्यङ् वेत्युक्तेः पक्षे वाक्यम्। सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः। स च व्यवस्थितः। 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' (वा १७१९-२०)। कृष्ण इवाचरति कृष्णायते। ओजश्शब्दो वृत्तिविषये तद्वति। ओजायते। अप्सरायते। यशायते। यशस्यते। विद्वायते। विद्वस्यते। त्वद्यते। मद्यते। अनेकार्थत्वे तु

---

तु काम्यजेकदेशस्य यस्याऽनर्थकत्वाल्लोपो नेति भावः। यशस्काम्यतीति। 'सोऽपदादौ' इति सत्वम्। ननु किमात्मनः इच्छति किंकाम्यति स्वःकाम्यति कथम्? 'मान्ताव्ययानां नेत्यनुवृत्तेरित्यत आह—मान्ताव्ययेभ्योऽप्ययमिति। उपमानादाचारे। 'सुप आत्मनः क्यच्' इत्यतः सुप इत्यनुवर्तते। 'धातोः कर्मणः समानकर्तृकात्' इत्यतः कर्मण इति। तदाह—उपमानात्कर्मण इत्यादिना। उपमानं यत्कर्मकारकं तद्वृत्तेः सुबन्तादित्यर्थः। पुत्रमिवेति। 'धातोः कर्मणः' इत्यतः वेत्यनुवृत्तिरनेन सूचिता। छात्रं पुत्रत्वेन उपचरतीत्यर्थः। विष्णूयतीति। द्विजं विष्णुत्वेन उपचरतीत्यर्थः। अधिकरणाच्चेति। उपमानभूताधिकरणवृत्तेरपि सुबन्तादाचारे क्यजिति वक्तव्यमित्यर्थः। प्रासादीयति कुट्यामिति। प्रासादे इव कुट्यां हृष्टो वर्तते इत्यर्थः। कुटीयति प्रासादे इति। कुट्यामिव प्रासादे विलष्टो वर्तते इत्यर्थः। कर्तुः क्यङ् सलोपश्च। 'कर्तु'रित्यावर्तते। 'कर्तुः क्यङि'त्येकं वाक्यम्। अत्र कर्तुरिति पञ्चम्यन्तम्। उपमानादाचारे इत्यनुवर्तते। 'धातोः कर्मणः' इत्यतः वेति च। तदाह—उपमानादिति। उपमानं यत्कर्तृकारकं तद्वृत्तेः सुबन्तादित्यर्थः। 'कर्तुः सलोपश्चे'ति द्वितीयं वाक्यम्। चकारः 'तु' पर्यायः भिन्नक्रमः। 'स' इति लुप्तषष्ठीकं पृथक्पदम्। 'कर्तु'रिति षष्ठ्यन्तस्य विशेषणम्। तदन्तविधिः। तदाह—सान्तस्य लोपस्त्विति। एतच्च महाभाष्ये स्पष्टम्। क्यङि सलोपविकल्पः सर्वत्र स्यादित्यत आह—स च व्यवस्थित इति। सान्तस्य सलोप इत्यर्थः। व्यवस्थामेव दर्शयति—ओजसोऽप्सरस इति। इदं वार्तिकम्। ओजश्शब्दः इति। क्यङन्तोऽयम्। 'सनाद्यन्ता' इति धातुत्वात् वृत्तिः। तत्र ओजश्शब्दः ओजस्विनि वर्तत इत्यर्थः। ओजायते इति। ओजस्वीवाचरतीत्यर्थः। ओजश्शब्दात् क्यङि सलोपे 'अकृत्सार्व' इति दीर्घ इति भावः। अप्सरायते इति। अप्सरश्शब्दात् क्यङि सलोपदीर्घौ। क्यङो ङित्वादात्मनेपदम्। 'इतरेषां विभाषये'त्यस्योदाहरति-यशायते यशस्यते इति। यशस्वीवाचरतीत्यर्थः। विद्वायते विद्वस्यते इति। विद्वानिवाचरतीत्यर्थः। विद्वच्छब्दात् क्यङि सलोपविकल्पः। त्वद्यते मद्यते इति। त्वमिव अहमिव आचरतीत्य-

युष्मद्यते । अस्मद्यते । 'क्यङ्मानिनोश्च' ( सू ८३७ ) । कुमारीवाचरति कुमारायते । हरिणीवाचरति हरितायते । गुर्वीव गुरूयते । सपत्नीव सपत्नायते । सपतीयते । सपत्नीयते । युवतिरिव युवायते । पट्वीमृद्व्याविव पट्वीमृदूयते । 'न कोपधायाः' ( सू ८३८ ) । पाचिकायते । 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा- ( वा १७२१ । ) वाग्रहणात् क्यङपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नि-

र्थः । युष्मदस्मच्छब्दात् क्यङि 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वमौ । युष्मद्यते अस्मद्यते इति । यूयमिव वयमिव आचरतीत्यर्थः । 'त्वमावेकवचने' इत्यस्मात् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे 'एकवचने' इत्यनुवृत्तेरेकत्वविशिष्टार्थवृत्तित्वे सत्येव युष्मदस्मदोस्त्वमाविति भावः । कुमार्यादिशब्दात् क्यङि पुंवत्त्वं स्मारयति—क्यङ्मानिनोश्चेति । कुमारायते इति । पुंवत्त्वेन ङीषो निवृत्तौ दीर्घः । हरितायते इति । हरिणीशब्दात् क्यङि पुंवत्त्वेन 'वर्णादनुदात्तात्' इति नत्वस्य ङीषश्च निवृत्तौ दीर्घः । गुरूयते इति । गुर्वीशब्दात् क्यङि ङीषो निवृत्तौ दीर्घः । सपत्नायते इति । शत्रुपर्यायात् सपत्नशब्दात् शार्ङ्गरवादित्वेन ङीनन्तात् पुंवत्त्वेन ङीनो निवृत्तौ दीर्घ इति भावः । सपतीयते इति । समानः पतिः स्वामी यस्याः इति बहुव्रीहौ सपतिशब्दस्य नत्वे ङीपि च निष्पन्नात् सपत्नीशब्दात् क्यङि पुंवत्त्वेन ङीब्नत्वयोर्निवृत्तौ दीर्घ इति भावः । सपत्नीयते इति । विवाहनिबन्धनं पतिशब्दमाश्रित्य समानः पतिः यस्याः इति बहुव्रीहौ सपत्नीशब्दस्य नित्यस्त्रीलिङ्गत्वान्न पुंवत्त्वमिति भावः । युवायते इति । युवतिशब्दात् क्यङि पुंवत्त्वे तिप्रत्ययस्य निवृत्तौ नलोपे दीर्घ इति भावः । वयोवाचिनां जातिकार्यं वैकल्पिकमिति 'जातेरस्त्रीविषयात्' इत्यत्र भाष्ये स्पष्टम् । एतेन 'जातेश्च' इति निषेधादिह पुंवत्त्वं दुर्लभमित्यपास्तमिति शब्देन्दुशेखरे स्थितम् । पट्वीमृदूयते इति । इह पूर्वपदस्य क्यङ्परकत्वाऽभावान्न पुंवत्त्वम् । ननु पाचिकेवाचरति पाचिकायते इत्यत्रापि 'क्यङ्मानिनोश्च' इति पुंवत्त्वेन टापः 'प्रत्ययस्थात्' इति इत्वस्य च निवृत्तौ पाचकायते इति स्यादित्यत आह—न कोपधाया इति । 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा' इति वार्तिकम् । उपमानादित्यनुवर्तते । 'धातोः कर्मणः' इत्यतो वाग्रहणस्यास्मिन्प्रकरणे अनुवृत्त्यैव सिद्धे वाग्रहणं व्यर्थमित्यत आह—वाग्रहणात् क्यङपीति । अन्यथा विशेषविहितत्वात् क्विपा क्यङो बाधः स्यादिति भावः । तथाचाऽत्र वाशब्दो विकल्पार्थक इति फलितम् । अत्र सुप इति नानुवर्तते । प्रातिपदिकात् क्यङोऽप्राप्तौ वाग्रहणात् समुच्चीयते इति केचित् । अवगल्भादय इति । 'गल्भ धार्ष्ट्ये' अवपूर्वः, 'क्लीब अधार्ष्ट्ये' 'होडृ अनादरे' एभ्यः पचाद्यचि अवगल्भादिशब्दास्त्रयो निष्पन्ना इत्यर्थः । तथा च अवगल्भ इवाचरति, क्लीब इवाचरति, होड इवाचरतीत्यर्थे अवगल्भादिशब्देभ्यः क्विप्क्यङाविति स्थितम् । अवगल्भते इत्यात्मनेपदलाभायाह—क्विप्सन्नियोगेनेति । अन्त्यस्य अकारस्य अनुदात्तत्वमनुनासिकत्वं चात्र प्रतिज्ञायते ।

योगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते। तेन तङ्। अवगल्भते। क्लीबते। होडते। भूतपूर्वादप्यनेकाच आम्। एतद्वार्तिकारम्भसामर्थ्यात्। न च अवगल्भते इत्यादिसिद्धिस्तत्फलम्। केवलानामेवाचारेऽपि वृत्तिसम्भवात् धातूनामनेकार्थत्वात्। अवगल्भाञ्चक्रे। क्लीबाञ्चक्रे। होडाञ्चक्रे। वार्तिकेऽवेत्युपसर्गविशिष्टपाठात्केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः। तङ् नेति तूचितम्। 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' ( वा १७२२ )। पूर्ववार्तिकं तु अनुबन्धा-

---

ततश्च तस्य इत्संज्ञायां लोपे अनुदात्तेत्त्वादात्मनेपदं लभ्यते। तदाह—तेन तङिति। अवगल्भते इति। क्विबपि मकारादकारस्य लोपे हलन्तात्लडादौ तङि शबिति भावः। ननु अवगल्भाञ्चक्रे, क्लीबाञ्चक्रे, होडाञ्चक्रे इत्यत्र कथमाम्? अन्त्यस्य च इत्संज्ञालोपाभ्यामपहारेण धातूनामेकाच्त्वेन 'कास्यनेकाच्' इत्यस्याऽप्रवृत्तेः। नच 'अवगल्भ' इत्यस्य क्विबन्तस्य धातोरनेकाच्कत्वमस्तीति वाच्यम्, उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इत्यनुपदमेव वक्ष्यमाणत्वादित्यत आह—भूतपूर्वादपीति। क्विबुत्पत्तेः प्राक्तनमनेकाच्त्वं भूतपूर्वगत्या आश्रियेत्यर्थः। भूतपूर्वगत्याश्रयणे प्रमाणमाह—एतद्वार्तिकेति। 'सर्वप्रातिपदिकेभ्यः क्विब्वा' इति वक्ष्यमाणवार्तिकादेव अवगल्भते, अवजगल्भे इत्यादिसिद्धौ पुनरेभ्यः क्विब्विधानं तत्संनियोगेन अन्त्यवर्णस्य अनुदात्तत्वानुनासिकत्वप्रतिज्ञानार्थं सद् भूतपूर्वगत्या अनेकाच्त्वाश्रयणं ज्ञापयतीत्यर्थः। नन्वनुदात्तत्वानुनासिकत्वप्रतिज्ञानस्यात्मनेपदसिद्धावुपक्षीणत्वात् कथमुक्तज्ञापकतेत्याशङ्क्य निराकरोति-न चावगल्भते इत्यादिसिद्धिस्तत्फलमिति। कुत इत्यत आह-केवलानामिति। अच्प्रत्ययरहितानां धातुपाठसिद्धानामनुदात्तेतामेव गल्भादिधातूनामवगल्भ इवाचरतीत्याद्यर्थेषु वृत्तिसम्भवात्। तच्च कुत इत्यत आह—धातूनामनेकार्थत्वादिति। एवञ्च 'आचारेऽवगल्भ' इति क्विब्विधानमनुबन्धासञ्जनार्थं सद् भूतपूर्वगत्या अनेकाच्त्वाश्रयणं ज्ञापयतीति सिद्धम्। नच 'सर्वप्रातिपदिकेभ्यः' इति क्विबपि अवगल्भतीत्यादिवारणाय अनुबन्धासञ्जनमुपक्षीणमिति कथं तस्य उक्तज्ञापकतेति वाच्यम्, 'सर्वप्रातिपदिकेभ्यः' इति वार्तिकेन क्विपि तथा प्रयोगे इष्टापत्तेः भूतपूर्वाश्रयणपरभाष्यप्रामाण्येन 'सर्वप्रातिपदिकेभ्यः' इति वार्तिकस्य अवगल्भादिभ्यः अप्रवृत्तिविज्ञानाद्वेत्यास्तां तावत्। 'आचारेऽवगल्भ' इत्यत्र अवेत्यस्य प्रयोजनमाह—अवेत्युपसर्गेति। केवलादिति। उपसर्गविहीनाद्गल्भशब्दादित्यर्थः। उपसर्गान्तरेति। प्रगल्भाऽनुगल्भादिशब्दादित्यर्थः। क्यङेवेति। ननु क्विबित्यर्थः। माधवादयः इत्यस्वरसोद्भावनम्। तद्बीजमाह—तङ् नेति तूचितमिति। केवलादुपसर्गान्तरविशिष्टाच्च गल्भशब्दात् प्रगल्भादिशब्दाच्च अनेन क्विबभावेऽपि 'सर्वप्रातिपदिकेभ्यः' इति वार्तिकेन क्विप् निर्बाधः। परन्तु अवपूर्वस्य एवानुबन्धसञ्जनादात्मनेपदमेव तत्र नेति वक्तुमुचितमित्यर्थः। सर्वप्रातिपदिकेभ्य इति। 'आ-

सञ्जनार्थम् । तत्र क्विबनूद्यते । प्रातिपदिकग्रहणादिह सुप इति न सम्बध्यते । तेन पदकार्यं न । कृष्ण इवाचरति कृष्णति । 'अतो गुणे' ( सू० १९१ ) इति शपा सह पररूपम् । अ इवाचरति अति । अतः । अन्ति । प्रत्ययग्रहणमपनीय अनेकाच इत्युक्तेर्नाम् । औ । अतुः । उः । द्वित्वम् । 'अतो गुणे' ( सू १९१ ), 'अत आदेः' ( सू २२४८ ) इति दीर्घः, णल औ, वृद्धिः । अतुसादिषु तु 'आतो लोप

चारे' इति शेषः । नन्वनेनैव वार्तिकेन सिद्धे 'आचारेऽवगल्भ' इति वार्तिकं व्यर्थमित्यत आह—पूर्ववार्तिकं त्विति । अन्त्यवर्णस्य इत्संज्ञासिद्ध्यर्थमित्यर्थः । तर्हि तत्र क्विब्ग्रहणं व्यर्थमित्यत आह—तत्र क्विबनूद्यते इति । तत्संनियोगेनानुबन्धासञ्जनार्थमित्यर्थः । पदकार्यं नेति । 'राजानती'त्यादौ नलोपादिकं नेत्यर्थः । अन्यथा अन्तर्वर्तिविभक्त्या पदत्वान्नलोपादिकं स्यादिति भावः । पररूपमिति । कृष्णशब्दात् क्विबन्ताल्लडादौ शपि 'अतो गुणे' इति पररूपमित्यर्थः । कृष्णाञ्चकार । कृष्णिता । कृष्णिष्यति । कृष्णतु । अकृष्णत् । कृष्णेत् । कृष्ण्यात् । अतो लोपात्परत्वात् 'अकृत्सार्व' इति दीर्घः । पूर्वविप्रतिषेधस्य विहितत्वादतो लोप इत्यन्ये । अ इवेति । अः विष्णुः । स इवेत्यर्थः । अतीति । शपा पररूपम् । असि । अथः । अथः । आमि । आवः । आमः । क्विप्प्रत्ययान्तत्वाल्लिटि 'कास्प्रत्ययात्' इत्याम्प्रत्ययमाशङ्क्य आह—प्रत्ययग्रहणमपनीयेति । औ, अतुः, उः इति सिद्धरूपप्रदर्शनम् । तत्र प्रक्रियां दर्शयति-द्वित्वमिति । णलि 'द्विर्वचनेऽचि' इति लोपस्य निषेध इति भावः । अतो गुणे इति । द्वित्वे कृते अ अ अ इति स्थिते अन्तरङ्गत्वादतो लोपं बाधित्वा पररूपमिति भावः । अत आदेरिति । नच परत्वान्नित्यत्वादपवादत्वाच्च 'अतो गुणे' इत्यस्मात्प्राक् 'अत आदेः' इत्यस्य प्रवृत्तिरिति वाच्यम् । तस्य बहिरङ्गत्वात् 'अत आदेः' इत्यस्यापवादत्वेऽपि आनर्दैत्यत्र हलादिशेषात्प्रागेव परत्वात् 'अत आदेः' इत्यस्य चरितार्थत्वेन बाधकत्वाऽसम्भवात् 'अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते' इत्युक्तेरित्यन्यत्र विस्तरः । यद्यप्यत्र प्रक्रियाव्युत्क्रमे फलविशेषो नास्ति, तथापि न्याय्यत्वादेवमुक्तम् । णल औ इति । पररूपे दीर्घे च आ अ इति स्थिते 'आत औ णलः' इत्यौत्वमिति भावः । वृद्धिरिति । आ औ इति स्थिते 'वृद्धिरेचि' इति वृद्धिरित्यर्थः । तथाच 'औ' इति रूपं परिनिष्ठितम् । अतुसादिष्विति । अ अतुस् , अ उस् , इति स्थिते द्वित्वे पररूपे 'अत आदेः' इति दीर्घे आतो लोप इत्यर्थः । अतुः उः । इति प्रत्ययमात्रं शिष्यते । थलि इटि द्वित्वे दीर्घे आल्लोपे, इथ । अथुः । अ । औ । इव । इम । वस्तुतस्तु 'कास्यनेकाज्ग्रहणम्' इति वार्तिकव्याख्यावसरे प्रत्ययग्रहणमपनीयेति भाष्ये नोक्तम् । कासेश्च प्रत्ययान्ताच्च आमिति लभ्यते । अत एव 'आचारेऽवगल्भक्लीबहोडेभ्यः' इति वार्तिके अवगल्भाञ्चक्रे इत्यादौ अन्त्यवर्णस्यानुबन्धत्वेन एकाच्त्वे-

इटि च' ( सू २३७२ ) इत्याल्लोपः। मालेवाचरति मालाति। लिङ्गविशिष्टपरिभाषयैकादेशस्य पूर्वान्तत्वाद्वा क्विप्। मालाञ्चकार। लङि अमालात्। अत्र हल्ङ्याादिलोपो न। ङीप्साहचर्यादापोऽपि सोरेव लोपविधानात्। इट्सकौ। अमालासीत्। कविरिव कवयति। आशीर्लिङि कवीयात्। 'सिचि वृद्धिः—' ( सू २२९७ ) इत्यत्र धातोः इत्यनुवर्त्य धातुरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः। अकवयीत्। माधवस्तु नामधातोरपि वृद्धिमिच्छति। अकवायीत्। विरिव वयति। विवाय। विव्यतुः। अवयीत्-अवायीत्। श्रीरिव श्रयति। शिश्राय। शिश्रियतुः। पितेव। पितरति। आशिषि रिङ्। पित्रियात्। भूरिव भवति। अत्र 'गातिस्था—' ( सू २२२३ ) इति, 'भुवो वुक्—' ( २१७४ ) इति, 'भवतेरः—' ( सू २१८१ ) इति च न भवति। अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात्। अभावीत्। बुभाव। द्रुरिव द्रवति। 'णिश्रि—' ( सू

ऽपि 'कास्प्रत्ययात्' इत्यामित्युक्तं भाष्ये इति शब्देन्दुशेखरे प्रपञ्चितम्। इता। इष्यति। अतु-अतात्। अताम्। अन्तु। अ-अतात्। अतम्। अत। आनि। आव। आम। आत्। आताम्। आन्। आः। आतम्। आत। आम्। आव। आम। विधिलिङि एत्। एताम्। एयुः। एः। एतम्। एत। एयम्। एव। एम। यात्। यास्ताम्। यासुः। लुङि 'इट ईटि' इति सिज्लोपे 'आटश्च' इति वृद्धिं बाधित्वा परत्वादतो लोपे इटा सह आटो वृद्धौ ऐत् ऐष्टाम् ऐषुः, इत्यादीति केचित्। आर्धधातुकोपदेशकाले एव परत्वादतो लोपे अङ्गस्याभावादाट् नेत्यन्ये। ईत् इष्टाम् इत्यादि। ऐष्यत्। ननु मालाशब्दस्य टाप्प्रत्ययान्तत्वेन प्रातिपदिकत्वाऽभावात्ततः कथं क्विबित्यत आह—लिङ्गविशिष्टेति। वस्तुतस्तु आबन्तेभ्यः आचारे क्विप् नास्त्येवेति विश्वपाशब्दनिरूपणे प्रपञ्चितम्। ङीप्साहचर्यादिति। ङ्यन्तादाचारक्विबन्तात् गौरीशब्दात् लुङि अगौरयत् इत्यादौ तिस्योर्ङ्यन्तात्परत्वाऽसम्भवात् तत्साहचर्यादाबन्तादपि न तयोर्लोप इत्यर्थः। कवयतीति। शपि गुणाऽयादेशौ। कवीयादिति। 'अकृत्सार्व' इति दीर्घः। लुङि अकवि ईत् इति स्थिते सिचि वृद्धिमाशङ्कय आह—सिचि वृद्धिरित्यत्रेति। सिचा धातोराक्षेपतो लाभेऽपि 'ऋत इद्धातोः' इत्यतस्तदनुवृत्तेर्धातुरेव यो धातुरिति लभ्यते इति भावः। कैयटादय इति। 'इको गुणवृद्धी' इति सूत्रे गोशब्दादाचारक्विपि अगवीदित्युपक्रम्य तथोक्तत्वादिति भावः। माधवस्त्विति। 'सिचि वृद्धिः' इत्यत्र 'ऋत इद्धातोः' इत्यतो धातुग्रहणानुवृत्तौ मानाऽभावेन धातुरेव यो धातुरित्युक्तार्थाऽलाभादिति तदाशयः। वस्तुतस्तु 'इको गुणवृद्धी' 'वदव्रजहलन्तस्याचः' इत्यादिसूत्रस्थभाष्ये सिचि परतः एजन्तं नास्तीत्युक्तत्वादेजन्तेभ्यः आचारक्विप् नास्त्येवेति शब्देन्दुशेखरे प्रपञ्चितम्। विरिवेति। विः पक्षी स इवेत्यर्थः। अभिव्यक्तत्वेनेति। 'अभिव्यक्तपदार्था ये' इति न्यायेनेति

२३१२ ) इति चङ् न । अद्रावीत् । २६६६ **अनुनासिकस्य क्विझलोः क्ङिति ६।४।१५॥** अनुनासिकान्तस्योपधाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति । राजेव राजानति । पन्था इव पथीनति । मथीनति । ऋभुक्षीणति । द्यौरिव देवतीति माधवः । अत्र ऊठि द्यवतीत्युचितम् । क इव कति । चकौ इति हरदत्तः । माधवस्तु 'ण्यल्लोपौ' इति वचनाण्णलि वृद्धिं बाधित्वा अतो लोपात् चक इति रूपमाह । स्व इव सस्वौ । सस्व । यत्तु स्वामास स्वाञ्चकार इति तदनाकरमेव । २६६७ **भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ३।१।१२॥** अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्याद्धलन्तानामेषां लोपश्च । अभृशो

भावः । अद्रावीदिति । इह 'गातिस्था' इति सिचो न लुक् । दुद्रावेति । इह न वुक् । अभ्यासस्य अत्त्वं च न । चङ् नेति । 'णिश्रि' इति सूत्रे द्रुग्रहणेन धातुपाठस्थस्यैव ग्रहणादिति भावः । अनुनासिकस्य । अङ्गस्येत्यधिकृतमनुनासिकेन विशेष्यते । तदन्तविधिः । 'नपोधायाः' इत्यतः उपधाया इति 'ढ्लोपे' इत्यतो दीर्घ इति चानुवर्तते । तदाह—अनुनासिकान्तस्येत्यादिना । इदामतीति । 'हलन्तेभ्यः आचारक्विप् नास्ति' इति 'ह्रस्वनद्यापः' इति सूत्रभाष्ये स्पष्टमिति शब्देन्दुशेखरे स्थितम् । पथीनतीति । पथिन्शब्दात् क्विपि 'अनुनासिकस्ये'ति इकारस्य दीर्घः । इदं तु माधवानुरोधेन । 'क्विबभ्युपगमेऽपि तिपि पथेनतीत्येव युक्तम्, 'इन्हन्' इति नियमेन दीर्घाऽप्राप्तेः । नच नियमस्य सजातीयापेक्षत्वात् सुबानन्तर्ये एवाऽयं नियमो नान्यत्रेति वाच्यम्, तथाऽसति वृत्रघ्नः स्त्री वृत्रघ्नीत्यत्रापि अल्लोपं बाधित्वा अन्तरङ्गत्वात् 'अनुनासिकस्य' इत्युपधादीर्घापत्तेरित्याहुः । देवतीतीति । दिव्शब्दादाचारक्विबन्तात् शपि लघूपधगुणः । 'नः क्ये' इति नियमेन अपदान्तत्वात् 'दिव उत्' इत्युत्वं नेति भावः । अत्र ऊठीति । दिव्शब्दात् क्विपि 'च्छ्वोः' इति वकारस्य ऊठि कृते लघूपधगुणं बाधित्वा परत्वादिकारस्य यणि द्यूशब्दात् शपि ऊकारस्य गुणे अवादेशे च द्यवतीति रूपमुचितमित्यर्थः । चकाविति । कशब्दात् क्विबन्ताल्लिटि णलि द्वित्वे चुत्वे चक अ इति स्थिते ककारादकारस्य अतो लोपात्परत्वाद्वृद्धौ आकारे 'आत औ णलः' इत्यौत्वे वृद्धिरेकादेश इति भावः । माधवस्त्विति । चक अ इति स्थिते पूर्वविप्रतिषेधाद्वृद्धिं बाधित्वा ककारादकारस्य अतो लोपे कृते णलोऽकारेण सह चक इति रूपमित्यर्थः । नचैवं सति अ इवाचरति अति, औ, अतुः इत्यत्रापि लिटि 'अत आदेः' इति दीर्घं बाधित्वा अतो लोपः स्यादिति वाच्यम्, 'ण्यल्लोपा'विति पूर्वविप्रतिषेधलभ्यः अतो लोपः सन्निहितमेव 'अकृत्सार्व' इति दीर्घं बाधते, न तु 'अत आदेः' इति दीर्घमपि, 'अनन्तरस्य' इति न्यायादिति माधवाशय इत्याहुः । तदनाकरमेवेति । अनेकाच्त्वाभावादिति भावः । वस्तुतस्तु 'प्रत्ययग्रहणमपनीये'त्यस्य भाष्ये अदर्शनात् प्रत्ययान्तत्वादाम्भवत्येवेति युक्तमेवेत्यनुपदमेवोक्तम् । भृशादिभ्यो ।

भृशो भवति भृशायते। अच्वेः इति पर्युदासबलात् अभूततद्भावे इति लब्धम्। तेनेह न। क्व दिवा भृशा भवन्ति। ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः। सुमनस्, अस्य सलोपः। सुमनायते। चुरादौ 'संग्राम युद्धे' इति पठ्यते। तत्र संग्राम इति प्रातिपदिकम्। तस्मात् 'तत्करोति–' इति णिच् सिद्धः। तत्संनियोगेनानुबन्ध आसज्यते। युद्धे योऽयं ग्रामशब्दः इत्युक्तेऽपि सामर्थ्या-

---

भवनं भूः, भावे क्विप्। तदाह–भवत्यर्थे इति। भवने इत्यर्थः। क्यङ् स्यादिति। 'कर्तुः क्यङ् सलोपश्च' इत्यतस्तदनुवृत्तेरिति भावः। हलन्तानामेषामिति। भृशादिषु ये हलन्ताः तेषां लोपः, क्यङ् चेत्यर्थः। ननु 'अभूततद्भावे' इति कुतो लब्धमित्यत आह–अच्वेरिति पर्युदासबलादिति। 'अभूततद्भावग्रहण'मिति वार्तिकमेतल्लभ्यार्थकथनपरमिति भावः। ये रात्रौ भृशा इति। प्रकाशाऽतिशयवन्त इत्यर्थः। भृशादिषु हलन्तमुदाहरति–सुमनस् इति। सुमनायते इति। असुमनाः सुमनाः भवतीत्यर्थः। यद्यपि स्त्रियामित्यधिकारे 'अप्सुमनस्समासिकतावर्षाणां बहुत्वं च' इति लिङ्गानुशासनसूत्रे सुमनश्शब्दस्य नित्यं बहुवचनं विहितम्, तथापि तद्देवादिपर्यायरूढविषयम्। सु शोभनं मनो यस्येति सुमनाः इति बहुव्रीहिर्यौगिक इति भावः। सुमनायते इति। क्यङि सलोपे 'अकृत्सार्व' इति दीर्घः। ननु लुङि मनश्शब्दात्प्रागटि 'स्वमनायत' इति वक्ष्यमाणमनुपपन्नम् अङ्गस्य अड्विधानात् सुमनश्शब्दस्य समस्तस्यैव तदङ्गं प्रत्ययकृत्वात् 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति न्यायादित्याशङ्क्य आह–चुरादौ संग्राम युद्धे पठ्यते इति। ततश्च क्वचित् सोपसर्गपाठबलादन्यस्मात् सोपसर्गादाचारक्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इति विज्ञायते इत्यर्थः। ननु चुरादौ 'संग्रामे'ति समस्तो धातुः, न तु सोपसर्गो ग्रामशब्दः। एवं चास्य प्रातिपदिकत्वाऽभावात् सोपसर्गात् क्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इत्यत्र कथमिदं गमकमित्यत आह–तत्र संग्राम इति प्रातिपदिकमिति। 'ग्रसेरा च' इत्यौणादिके मनूप्रत्यये निष्पन्नस्य ग्रामशब्दस्य 'कृत्तद्धित' इति प्रातिपदिकत्वम्। अव्युत्पत्तिपक्षे 'अर्थवदधातुः' इति प्रातिपदिकत्वमित्यर्थः। ननु चुरादावस्य पाठो धात्वधिकारविहितचौरादिकणिजर्थः। एवं च प्रातिपदिकत्वेन चुरादौ तस्य पाठो व्यर्थं इत्यत आह—तस्मादिति। तस्मात् संग्राम इति प्रातिपदिकात् चौरादिकणिजसम्भवेऽपि 'तत्करोति' इत्यर्थे णिच् सिद्ध इत्यर्थः। ननु 'तत्कोरोति' इत्यनेनैव संग्रामशब्दात् प्रातिपदिकाण्णिचि सिद्धः किमर्थमिह चुरादौ तस्य पाठ इत्यत आह—तत्सन्नियोगेनेति। णिच्संनियोगेन अकारस्य इत्संज्ञकस्य अनुदात्तेत्त्वार्थकस्य आसञ्जनार्थं इत्यर्थः। न च मकारादकारस्य इत्संज्ञकत्वे अल्लोपस्य णिनिमित्तकत्वाभावादससंग्रामत इत्यत्र 'णौ चङ्युपधायाः' इत्युपधाह्रस्वः स्यादिति वाच्यम्, संग्रामेत्ययं हि कथादित्वादन्तः। तस्मादकारो भिन्न एव अनुबन्धत्वेनासज्यते इत्यर्थः। एवं च णौ अतो लोपे सति

त्संग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति—'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इति। तेन मनःशब्दात्प्रागट्। स्वमनायत। उन्मनायते। उदमनायत। एवं च अवागल्भत अवागल्भिष्टेत्यादावप्यवेत्यस्य पृथक्करणं बोध्यम्। ज्ञापकं च सजातीयविषयम्। तेन यत्रोपसर्गस्वरूपं सकलं श्रूयते; न त्वादेशेनापहृतं तत्रैव पृथक्कृतिः। एवं च 'आ ऊढः ओढः' स

---

त्वाचरक्विपित्वान्नोपधाह्रस्वः। कथादित्वलब्धाऽदन्तत्वलाभायैवाऽस्य चुरादौ पाठ इति भावः। ननु चुरादौ संग्रामशब्दस्य 'तत्करोति' इति णिचि परे अस्त्वनुबन्धाऽऽसङ्गः। तथापि आचारक्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इत्यत्र कथमस्य ज्ञापकत्वमित्यत आह—युद्धे इति। सामर्थ्यादिति। 'ग्राम युद्धे' इत्येतावतैव संग्रामशब्दो लभ्यते, केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाऽभावादित्यर्थः। विशिष्टपाठ इति। संग्रामशब्दपाठ इत्यर्थः। ज्ञाप्यमर्थमाह—समानाकारमिति। संग्रामशब्दे युद्धवाचिनि समित्यस्य क्रियायोगाऽभावात् समानाकारमित्युक्तम्। धातुसंज्ञाप्रयोजके इति। 'क्विबादा'विति शेषः। पृथक् क्रियते इति। तथा च न तस्य धातुसंज्ञाप्रवेश इत्यर्थः। ततः किमित्यत आह—तेनेति। सम् इत्यस्य धातुसंज्ञाप्रवेशाऽभावेनेत्यर्थः। तथा च सुमनश्शब्दात् आचारक्विपि विवक्षिते मनश्शब्दमात्रस्य धातुत्वात्ततो लङि मनश्शब्दस्यैवाङ्गत्वात्ततः प्रागेव अट्। न तु सुमनस् इति समुदायात्प्रागित्यर्थः। एतेन 'संग्रामयते'रेव सोपसर्गात् 'नाऽन्यस्मा'दित्यादि भाष्यं 'भृशादिभ्य' इति सूत्रस्थं व्याख्यातमिति बोध्यम्। उन्मनायते इति। भृशादित्वात् क्यङि सलोपः। एवं चेति। एवमुक्तरीत्या 'आचारेऽवगल्भ' इति क्विब्विधावपि अवेत्यस्य पृथक्करणात् गल्भशब्दात्प्रागेव अट् इत्यर्थः। ननु आ ऊढः ओढः 'कुगति' इति समासः। अस्माद्भृशादित्वात् क्यङि 'ओढायते' इत्यादि रूपम्। अत्रापि आङो धातुसंज्ञाप्रवेशो न स्यात्। तत्र यद्यपि लङि ऊढशब्दाद्वा आङो वा प्राक् आटि न रूपे विशेषः। उभयथापि औढायतेत्येव रूपं सिद्धमेव। तथापि ओढायेति क्यङन्तात् क्त्वाप्रत्यये अतो लोपे ओढायित्वेत्येवेष्यते अत्र क्यङि चिकीर्षिते उक्तरीत्या पृथक्करणे पृथक्कृतस्य आङः 'कुगतिप्रादयः' इति क्त्वाप्रत्ययान्तेन समासे सति 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप् स्यादित्यत आह—ज्ञापकं च सजातीयविषयमिति। तदेवोपपादयति-तेनेति। चुरादौ 'सङ्ग्राम युद्धे' इति सम्ग्रहणस्य उक्तार्थे पृथक्करणे ज्ञापकस्य सजातीयविषयकत्वाश्रयणेन यत्र उपसर्गस्वरूपमविकृतं श्रूयते नत्वेकादेशेनापहृतं तत्रैव उपसर्गस्य पृथक्कृतिरिति विज्ञायते इत्यर्थः, सङ्ग्रामे सम्ग्रहणस्य ज्ञापकस्य एवंविधत्वादिति भावः। ततः किमित्यत आह—एवञ्चेति। ओढायित्वेति। ओढशब्दात् भृशादित्वात् क्यङि ओढायेत्यस्मात् क्यङन्तात् क्त्वाप्रत्यये अतो लोपे रूपम्। अत्रेति। अत्र न ल्यबित्यन्वयः। क्यङि विवक्षिते आङः एकादेशेनापहृतत्वेन पृथक्करणाऽभावे सति

इवाचर्य ओढायित्वा, अत्र उन्मनाय्य, अवगल्भ्य इतिवन्न ल्यप् । ज्ञापकस्य विशेषविषयत्वे षाष्ठवार्तिकं तद्भाष्यं च प्रमाणम् । तथाहि—'उस्योमाङ्क्ष्वाटः प्रतिषेधः' ( वा ३६३६ ) । उस्योमाङोश्च परयोराटः पररूपं नेत्यर्थः । उस्रामैच्छत् औस्रीयत् । औङ्कारीयत् । औढीयत् । 'आटश्च' ( सू २६६ ) इति चशब्देन पुनर्वृद्धिविधानादिदं सिद्धमिति षाष्ठे स्थितम् । २६६८ लोहितादिडाज्भ्यः क्यष्

तस्य आङः क्त्वाप्रत्ययान्तेन समासाऽभावान्न ल्यबिति भावः । उन्मनाय्य, अवगल्भ्य इतिवदिति व्यतिरेकदृष्टान्तः।उन्मनस्शब्दात् भृशादित्वादाचारे क्यङि सकारलोपे 'अकृत्सार्व'इति दीर्घे उन्मनायेत्यस्मात्, क्त्वो ल्यपि, अतो लोपे, उन्मनाय्येति रूपम् । अवगल्भशब्दात् आचारेऽवगल्भेति क्विबन्तात् क्त्वो ल्यपि रूपम् । अत्र 'उदित्यस्य 'अवेत्यस्य च उपसर्गस्वरूपस्य अनपहृतत्वेन क्यङि क्विपि च विवक्षिते पृथक्कृततया तयोः क्त्वान्तेन समासे सति ल्यबुचितः । इह तु ओढायित्वेत्यत्र न तथेति व्यतिरेकदृष्टान्तोऽयम । ज्ञापकस्य सजातीयत्वे प्रमाणं दर्शयति–ज्ञापकस्येति । षाष्ठं वार्तिकं दर्शयति–उस्योमाङ्क्ष्विति । उसि, ओम्, आङ् एषां द्वन्द्वः । षष्ठस्य प्रथमे पादे 'ओमाङोश्च' इति सूत्रे इदं वार्तिकं पठितम् । तद्व्याचष्टे–उस्योमाङोश्च परयोरिति । 'एङि पररूपम्' इत्यतः पररूपग्रहणानुवृत्तिं मत्वा आह—पररूपं नेति । उसि तावदुदाहरति–औस्रीयदिति । उस्रामात्मन ऐच्छदित्यर्थे 'सुप आत्मनः' इति क्यजन्ताल्लङि उस्रीयशब्दादुस्राप्राग।टि कृते 'उस्यपदान्तात्'इति पररूपं प्राप्तमनेन निषिध्यते अर्थवद्ग्रहणपरिभाषा त्वनित्या, अस्मादेव भाष्योदाहरणात् । अन्यथा भिन्द्युरित्यादौ पररूपं न स्यात्, आगमसहितस्य उस एवार्थवत्त्वादिति भावः ओमि परतः उदाहरति–औङ्कारीयदिति ओङ्कारशब्दात् क्यजन्ताल्लङि अङ्गस्य आटि कृते 'ओमाङोश्च' इति पररूपं प्राप्तमनेन निषिध्यते । आङि उदाहरति–औढीयदिति आ ऊढः ओढः, तस्मात् क्यजन्ताल्लङि अङ्गस्य ओढशब्दस्य आटि कृते 'ओमाङोश्च' इति पररूपं प्राप्तमनेन निषिध्यते । उदाहरणत्रयमिदं भाष्ये स्थितम् । तत्र यदि उपसर्गस्वरूपस्य एकादेशेनापहारेऽपि पृथक्करणं स्यात्, तर्हि क्यचि विवक्षिते आङः पृथक्कृतौ सत्यां धातुबहिर्भावादूढशब्दात् प्रागाङः परत्र आटि सति पररूपस्याप्रसक्तेराङि पररूपप्रतिषेधो व्यर्थः स्यात् । उक्तज्ञापकस्य सजातीयविषयत्वे तु अत्र आङ एकादेशेनापहारात् पृथक्करणाभावादोढशब्दात् प्रागाडागमे सति आङि पररूपप्राप्तेस्तन्निषेधोऽर्थवान् भवति । अतो ज्ञापकस्य सजातीयविषयत्वे 'उस्योमाङ्क्षु' इत्याङ्ग्रहणम् औढीयदिति तदुदाहरणपरभाष्यं च अत्र प्रमाणमिति भावः । ज्ञापकस्य सजातीयविषयत्वे प्रमाणान्तरमाह—आटश्चेति चशब्देनेति । 'आटश्च' इति चकारः पुनर्वृद्धिविधानार्थः । तथाच आटोऽचि वृद्धिरेव यथा स्यात् नाऽन्यत्पररूपमिति लभ्यते इत्यपि षष्ठाध्याये 'ओमाङोश्च' इति सूत्रे 'आटश्च' इति सूत्रे च भाष्ये स्थितमित्यर्थः । एवञ्च एतद्वार्तिकप्रत्याख्यानपरः चौक्षरवक स्तद्भाष्यं चाऽत्र ज्ञापकमित्युक्तं भवति । लोहितादि ।

३।१।१३॥ लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात्। **२६६९ वा क्यषः १।३।९०॥** क्यषन्तात्परस्मैपदं वा स्यात्। लोहितायति। लोहितायते। अत्र अच्वेः इत्यनुवृत्त्या अभूततद्भावविषयत्वं लब्धम्। तच्च लोहितशब्दस्यैव विशेषणम्। न तु डाचोऽसम्भवात्। नाप्यादिशब्दग्राह्याणाम्, तस्य प्रत्याख्यानात्। तथाच वार्तिकं-'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' (वा १७२९-३०) इति। न चैवं काम्यच इव क्यषोऽपि ककारः श्रूयेत उच्चारणसामर्थ्यादिति वाच्यम्। तस्यापि भाष्ये प्रत्याख्यानात्। पटपटायति—पटपटायते। कृभ्वस्तियोगं विनापीह डाच्। डाजन्तात्क्यषो विधानसामर्थ्यात्। यत्तु—

लोहितश्यामदुःखानि हर्षगर्वसुखानि च। मूर्च्छानिद्राकृपाधूमाः करुणा नित्यचर्मणी॥

इति पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति। तद्भाष्यवार्तिकविरुद्धम्। तस्मात्तेभ्यः क्यङेव। श्यामायते। सुखादयो वृत्तिविषये तद्वति वर्तन्ते।

---

भवत्यर्थे इति। **'भृशादिभ्यो भुवि' इत्यतः भुवि इति अनुवृत्तेरिति भावः।** वा क्यषः परस्मैपदमिति। **'शेषात्कर्तरि' इत्यतस्तदनुवृत्तेरिति भावः।** लोहितायतीति। **अलोहितो लोहितो भवतीत्यर्थः।** अत्रेति। **'लोहितादि' इति सूत्रे इत्यर्थः।** तच्चेति। **अभूततद्भावविषयत्वमित्यर्थः।** असम्भवादिति। **अव्यक्तानुकरणात् डाचो विहितत्वेन तस्य अभूततद्भावविषयत्वे अनुकरणत्वस्य भङ्गापत्तेरिति भावः।** नाप्यादिशब्दग्राह्याणामिति। **'श्यामादिशब्दानामिति शेषः।** तस्येति। **आदिग्रहणस्येत्यर्थः। आदिग्रहणप्रत्याख्याने प्रमाणं दर्शयति-**तथा चेति। **आदिग्रहणमपनीय लोहितशब्दात् डाजन्तेभ्यश्च क्यष्वचनं कर्तव्यम्। इतराणि लोहितादिगणपठितानि श्यामादीनि प्रातिपदिकानि भृशादिष्वेव पठनीयानीत्यर्थः। एवञ्च श्यामादिशब्देभ्यः क्यङि आत्मनेपदमेवेति फलितम्।** तस्यापीति। **आदिग्रहणस्येव क्यषः ककारस्यापि भाष्ये प्रत्याख्यातत्वादित्यर्थः।** पटपटायतीति। **'अव्यक्तानुकरणात् द्व्यजवरार्धादनितौ डाच्' इति पटच्छब्दात् डाचि विवक्षिते सति 'डाचि विवक्षिते द्वे बहुलम्' इति द्वित्वे 'नित्यमाम्रेडिते डाचि' इति पूर्वखण्डान्तस्य तकारस्य उत्तरखण्डादेः पकारस्य च पररूपे एकस्मिन् पकारे, डित्वाट्टिलोपे, पटपटाशब्दात् डाजन्तात् क्यषि तदन्ताल्लडादीति भावः। 'अभूततद्भावे' इति तु नात्र सम्बध्यते इत्युक्तम्। न ह्यपटच्छब्दः पटच्छब्दो भवतीति युज्यते। ननु कृभ्वस्तियोगाऽभावादिह कथं डाजित्यत आह—**कृभ्वस्तियोगं विनापीति। **भवत्यर्थसत्तामात्रेणेत्यर्थः। कुत इत्यत आह—**डाजन्तादिति। तद्भाष्येति। **'भृशादिष्वितराणि' इत्युक्तवार्तिकतद्भाष्यविरुद्धमित्यर्थः।** तस्मादिति। **उक्तवार्तिकभाष्याविरोधात् तेभ्यः श्यामादिभ्यः भृशादित्वलक्षणः क्यङेव न तु क्यषित्यर्थः। ततश्च 'वा क्यषः' इत्यस्याप्रवृत्तेः ङित्त्वादात्मनेपदमेवेति मत्वा आह—**श्यामायते इति। **श्यामो भवतीत्यर्थः। ननु देवदत्तः सुखायते इति**

लिङ्गविशिष्टपरिभाषया लोहिनीशब्दादपि क्यष् । लोहिनीयति । लोहिनीयते । **२६७० कष्टाय क्रमणे ३।१।१४॥** चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहते इत्यर्थः । 'सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्' ( वा १७६१ ) । कण्वं पापम् । सत्रादयो वृत्तिविषये पापार्थाः । तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ् । पापं चिकीर्षतीत्यस्वपदविग्रहः । सत्रायते, कक्षायते इत्यादि । **२६७१ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ३।१।१५॥** रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात् । रोमन्थं वर्तयति रोमन्थायते । 'हनुचलने इति वक्तव्यम्' ( वा १७६२ ) । चर्वितस्याकृष्य पुनश्चर्वण इत्यर्थः । नेह । कीटो रोमन्थं वर्तयति ।

---

**कथम्? देवदत्तस्य सुखत्वाभावादित्यत आह—**सुखादय इति । **इयामाः पुये सुखदुःखादिशब्दाः गुणवचनास्ते सुखादिगुणवति वर्तन्ते इत्यर्थः। एवं च 'सुखायते' इत्यस्य सुखवान् भवतीत्यर्थः । एवं 'दुःखायते' इत्यादावपि । ननु लोहितशब्दाद्विहितः क्यष् कथं लोहिनीशब्दात् स्यादित्यत आह—**लिङ्गविशिष्टेति । कष्टाय क्रमणे । **'क्रमण'शब्दं विवृणोति ।** उत्साहे इति । **अस्वरितत्वात् क्यषिति नानुवर्तते इति भावः । 'क्रियार्थोपपदस्ये'ति चतुर्थीति मत्वाऽऽह—**पापं कर्तुमिति । **क्रमते इत्यत्र 'वृत्तिसर्गतायनेषु क्रमः' इति तङ् । 'कण्वचिकीर्षायाम्' इत्यत्र कण्वपदं व्याचष्टे—**कण्वं पापमिति । **सत्रादिशब्दान् विवृणोति ।** सत्रादय इति । द्वितीयान्तेभ्य इति । **चिकीर्षायां द्वितीयान्तस्यैवाऽन्वययोग्यत्वादिति भावः । कण्वशब्दस्तु सत्रादिशब्दानां कण्वपरत्वे तात्पर्यग्राहकः । केचित्तु 'कण्वे'त्यविभक्तिकम् । कण्ववर्तिभ्यः इति व्याचक्षते ।** अस्वपदविग्रह इति । **वृत्तावेव सत्रादिशब्दानां पापवाचित्वादिति भावः । इदं कष्टशब्दादन्यत्रैव । 'कष्टाय क्रमते' इति तु स्वपदविग्रहोऽस्त्येव । भाष्ये एवं विग्रहं प्रदर्श्य सत्रादिषु विग्रहाऽप्रदर्शनादित्याहुः ।** कर्मणो रोमन्थ । **वृतुधातोर्ण्यन्तात्, 'धात्वर्थनिर्देशे इक्वक्तव्यः' इति इकि वर्तिशब्दः । आवर्तनमर्थः । चरेः सम्पदादित्वाद्भावे क्विप् । वर्तिचर अनयोर्द्वन्द्वात्सप्तमी । आवर्तने चरणे चेति लभ्यते । कर्मशब्देन कर्मकारकं विवक्षितम् । द्वित्वे एकवचनम् । तथाच कर्मकारकवृत्तिभ्यां रोमन्थतपश्शब्दाभ्यामिति लभ्यते । यथासंख्यमन्वयः । तदाह—**रोमन्थतपोभ्यामिति । रोमन्थमिति । **उद्गीर्णस्य निगीर्णस्य वा मन्थो रोमन्थ इति भाष्यम् । उद्गीर्णस्य उदरादुपरि कण्ठद्वारा निर्गतस्य निगीर्णस्य अपानद्वारा निर्गतस्य च मन्थः चर्वणं रोमन्थ इत्यर्थः ।** वर्तयतीति । **आवर्तयतीत्यर्थः ।** हनुचलन इति । **हनु तालु तच्चलने सत्येव अयं विधिरित्यर्थः । तथाच उदरगतं भक्षितं द्रव्यं तृणादिकं पुनः पुनराकृष्य तालुचलनेन चूर्णितस्य पुनःपुनः प्राशने रोमन्थशब्दात् क्यङिति फलितम् । तदाह—**चर्वितस्येति । **हनुचलनेन भक्षितस्य उदरं प्रविष्टस्य पुनःपुनराकृष्य हनुचलनेन भक्षणे गम्ये इति फलितमित्यर्थः ।** कीट इति ।

अपानप्रदेशान्निस्सृतं द्रव्यमिह रोमन्थः। तदश्नातीत्यर्थ इति कैयटः। वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्तौ। 'तपसः परस्मैपदं च' (वा १७६६)। तपश्चरति तपस्यति। **२६७२ बाष्पोष्मभ्यामुद्वमने ३।१।१६॥** आभ्यां कर्मभ्यां क्यङ् स्यात्। बाष्पमुद्वमति बाष्पायते। ऊष्मायते। 'फेनाच्चेति वाच्यम्' (वा १७६४)। फेनायते। **२६७३ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ३।१।१७॥** एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते। पक्षे 'तत्करोति—' इति णिजपीष्यत इति न्यासः। शब्दयति। 'सुदिनदुर्दिननीहारेभ्यश्च' (वा १७३६-३७)। सुदिनायते। **२६७४ सुखादिभ्यः कर्तृवेदनायाम् ३।१।१८॥** एभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्तुरेव चेत्सुखादीनि स्युः। सुखं वेदयते सुखायते। कर्तृग्रहणं किम्। परस्य सुखं वेदयते। **२६७५ नमोवरिवश्चित्रङः क्यच् ३।१।१९॥** करणे इत्यनुवृत्तेः क्रियाविशेषे पूजायां परिचर्यायामाश्चर्ये च। नमस्यति देवान्। पूजयतीत्यर्थः। वरिवस्यति गुरून्। शुश्रूषते इत्यर्थः। चित्रीयते। विस्मयते इत्यर्थः। विस्मापयते इत्यन्ये। **२६७६ पु-**

---

इह हनुचलनाभावान्न क्यङिति भावः। तदेवोपपादयति—अपानेति। तपसः परस्मैपदं च। इति वार्तिकम्। तपश्शब्दः कर्मकारकवृत्तिः पूर्वसूत्राचरणे क्यङं लभते। ङित्वप्रयुक्तमात्मनेपदं बाधित्वा परस्मैपदमेव च लभते इत्यर्थः। तपस्यतीति। प्रातिपदिकत्वेऽस्य क्यङुत्पत्तेरन्तर्वर्तिविभक्त्यभावात् 'नः क्ये' इति नियमाच्च पदत्वाऽभावान्न रुत्वमिति भावः। बाष्पोष्मभ्यामुद्वमने। आभ्यां कर्मभ्यामिति। 'कर्मणो रोमन्थ' इत्यतः कर्मग्रहणमनुवर्तते इति भावः। कर्मकारकवृत्तिभ्यामित्यर्थः। फेनायते इति। फेनमुद्वमतीत्यर्थः। शब्दवैर। करणं क्रिया। तदाह—करोत्यर्थे इति। 'तत् करोती'ति णिचोऽपवादः। पक्षे इति। कदाचिदित्यर्थः। न्यास इति। भाष्याऽनारूढत्वमत्र अरुचिबीजम्। सुदिनदुर्दिन इति। वार्तिकम्। 'करोत्यर्थे क्यङि'ति शेषः। सुखादिभ्यः। 'कर्तृ' इति पृथक् लुप्तषष्ठीकम्। 'कर्मणो रोमन्थ' इत्यतः कर्मग्रहणाऽनुवृत्तिं मत्वा आह—एभ्यः कर्मभ्य इति। वेदनायामिति। ज्ञाने इत्यर्थः। कर्तृत्वं च वेदनां प्रत्येव विवक्षितम्, उपस्थितत्वात्। वेदनाकर्तृवृत्तिवाचिभ्यः सुखादिशब्देभ्य इति लभ्यते। फलितमाह—वेदनाकर्तुरेव चेदिति। सुखं वेदयते इति। जानातीत्यर्थः। 'विद चेतनायाम्' इति चुरादौ। नमो वरिवस्। नमस्, वरिवस्, चित्रङ् एषां समाहारद्वन्द्वात्पञ्चमी। आत्मनेपदार्थं चित्रशब्दो ङित्निर्दिष्टः। 'शब्दवैर' इत्यतः करणे इत्यनुवर्तते। करणं क्रिया। सा च पूजापरिचर्याऽऽश्चर्यात्मिका विवक्षिता, 'नमसः पूजायाम्' 'वरिवसः परिचर्यायाम्' 'चित्रङः आश्चर्ये' इति वार्तिकैः। तदाह—करणे इत्यनुवृत्तेरित्यादिना। नमस्यति देवानिति। कारकविभक्तेर्बलीयस्त्वात् द्वितीया। परिचर्या शुश्रूषेति मत्वा आह—शुश्रूषते इत्यर्थ इति। आश्चर्यशब्दो विस्मयवाचीति मत्वा आह—विस्मयते इत्यर्थ इति।

**च्छभाण्डचीवराण्णिङ् ३।१।२०॥** 'पुच्छादुदसने व्यसने पर्यसने च' ( वा १७४६ ) । विविधं विरुद्धं वोत्क्षेपणं व्यसनम् । उत्पुच्छयते । विपुच्छयते । परिपुच्छयते । 'भाण्डात्समाचयने' ( वा १७४४ ) । संभाण्डयते । भाण्डानि समाचिनोति । राशीकरोतीत्यर्थः । समवभाण्डत । 'चीवरादर्जने परिधाने च' ( वा १७४५ ) । संचीवरयते भिक्षुः । चीवराण्यर्जयति, परिधत्ते वेत्यर्थः । **२६७७ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ३।१।२१॥** कृञर्थे । मुण्डं करोति मुण्डयति । 'व्रताद्भोजनतन्निवृत्त्योः' ( वा ५०६० ) पयः शूद्रान्नं वा व्रतयति । 'वस्त्रात्समाच्छादने' ( वा ५०६१ ) । संवस्त्रयति । 'हल्यादिभ्यो ग्रहणे' ( वा ५०६२ ) । 'हलिकल्योरदन्तत्वं च निपात्यते' ( वा १७४७ ) । हलिं कलिं वा गृह्णाति हलयति, कलयति । महद्धलं हलिः । परत्वाद् वृद्धौ सत्यामपीष्ठवद्भावेनाऽग्गेव लुप्यते । अतः सन्वद्भावदीर्घौ न । अजहलत् । अचकलत् । कृतं गृह्णाति कृत-

---

विस्मापयत इत्यन्ये इति । आश्चर्यशब्दो विस्मापनपर इति भावः । तत्रश्रिश्रीयमाणोऽसाविति भट्टः । असौ मायामृगः विस्मयमुत्पादयन्नित्यर्थः । पुच्छभाण्ड । पुच्छादुदसने । इति वार्तिकम् । उत्पुच्छयते इति । विविधं विरुद्धं वा पुच्छमुत्क्षिपतीत्यर्थः । भाण्डात् समाचयने । इत्यपि वार्तिकम् । समवभाण्डतेति । 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियते' इत्युक्तत्वात् सम्भाण्डशब्दात् वय इत्यपि भाण्डशब्दात् प्रागेवाऽडिति भावः । एवम् उदपुपुच्छत इत्यादावपि । चीवरादर्जने । इत्यपि वार्तिकम् । मुण्डमिश्र । कृञर्थे इति । शेषपूरणमिदम्, 'शब्दवैर' इत्यतः करणे इत्यनुवृत्तेरिति भावः । व्रताद्भोजन । इति वार्तिकम् । पयः शूद्रान्नं वा व्रतयतीति । पयो भुङ्क्ते, शूद्रान्नं वर्जयतीत्यर्थः । वस्त्रात्समाच्छादने । इत्यपि वार्तिकम् । भाष्ये तु न दृश्यते । संवस्त्रयतीति । वस्त्रेण सम्यगाच्छादयतीत्यर्थः । वस्त्रं परिधत्ते इति वा । हल्यादिभ्यो ग्रहणे । इति वार्तिकम् । भाष्ये तु न दृश्यते । हलिकल्योरिति । हलिकली इदन्तौ । हलकलशब्दावदन्तौ इदन्तौ च । याविदन्तौ तयोरत्वं निपात्यते इति भाष्ये स्पष्टम् । हलयति कलयतीति । हलिकलिभ्यां णौ इकारस्य अकारे इष्ठवत्त्वेन टेर्लोपे हलि कलि इति ण्यन्ताभ्यां लडादीति भावः । महद्धलं हलिरिति । अत्र वृद्धप्रयोगः अन्वेषणीयः । नन्वनयोरिकारान्तयोरदन्तत्वनिपातनं व्यर्थम् । इकारस्य णाविष्ठवत्त्वाल्लोपे हलयति कलयतीति सिद्धेः । नच अजहलत् अचकलत् इत्यत्र सन्वत्त्वाऽप्रवृत्तये अग्लोपित्वाय तयोरदन्तत्वमिति वाच्यम् । इकारलोपेऽप्यग्लोपित्वसिद्धेरित्यत आह—परत्वादिति । इकारस्य णौ इष्ठवत्त्वे टिलोपात् प्रागेव परत्वात् 'अचो ञ्णिति' इति वृद्धौ कृतायां ऐकारस्य इष्टत्वाद् टिलोपे अग्लोपित्वं न स्यात् । इकारयोरत्वे तु अकारस्य टिलोपात् प्राक् परत्वाद्वृद्धौ सत्यामप्याकार

यति । तूस्तानि विहन्ति वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे । मुण्डादयः 'सत्यापपाश—' ( सू २५६३ ) इत्यत्रैव पठितुं युक्ताः । 'प्रातिपदिकाद्धात्वर्थे—' इत्येव सिद्धे केषांचिद्ग्रहणं सापेक्षेभ्योऽपि णिजर्थम् । मुण्डयति माणवकम् । मिश्रयत्यन्नम् । श्लक्ष्णयति वस्त्रम् । लवणयति व्यञ्जनम् । हलिकल्योरदन्तत्वार्थम् । सत्यस्यापुगर्थम् । केषांचित्तु प्रपञ्चार्थम् । सत्यं करोत्याचष्टे वा सत्यापयति । 'अर्थवेदयोरप्यापुग्वक्तव्यः' ( वा १७५८ ) । अर्थापयति, वेदापयति । पाशं विमुञ्चति विपाशयति । रूपं पश्यति रूपयति । वीणयोपगायत्युपवीणयति । तूलेनानुकुष्णात्यनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति उपश्लोकयति । सेनयाभियाति अभिषेणयति । 'उपसर्गात्सुनोति—' ( सू २२७० ) इति षः । अभ्यषेणयत् । 'प्राक्सितात्—' ( सू २२७६ ) इति षः । अभिषिषेणयिषति । 'स्थादिष्वभ्यासेन च—' ( सू २२७७ ) इति षः । लोमान्यनुमार्ष्टि अनुलोमयति । 'त्वच संवरणे' घः । त्वचं गृह्णाति

---

एव इष्टत्वात्तल्लुप्यते इत्यर्थः । अत इति । अग्लोपित्वात् सन्वत्त्वम्, 'दीर्घो लघोः' इति दीर्घश्च नेत्यर्थः । कृतं गृह्णातीति । उपकारं स्वीकरोतीत्यर्थः । पठितु युक्ता इति । लाघवादेकसूत्रत्वं युक्तमित्यर्थः । केषांचिदिति । मुण्डादीनामित्यर्थः । सापेक्षेभ्योऽपीति । अन्यथा णिजन्तस्याऽस्य सनाद्यन्तवृत्तित्वाद्विशेषणसापेक्षत्वे मुण्डादिभ्यो णिच् न भवेत्, सविशेषणानां वृत्तिनिषेधात् । इह मुण्डादीनां पुनर्ग्रहणे तु तत्सामर्थ्यात् सापेक्षेभ्योऽपि मुण्डादिभ्यो णिच् सिध्यतीत्यर्थः । स्पष्टं चेदं 'सुप आत्मनः' इत्यत्र भाष्यकैयटयोः । मुण्डयति माणवकमिति । अत्र माणवकं मुण्डं करोतीत्यर्थे मुण्डशब्दस्य माणवकसापेक्षत्वेऽपि णिच् सिध्यति । अन्यथा यदा प्रकरणादिना माणवकादिविशेषो ज्ञायते तदैव मुण्डयतीति णिच् स्यादिति भावः । 'सुप आत्मनः' इति सूत्रभाष्ये तु 'मुण्डयति माणवक'मित्यत्र गमकत्वाण्णिच्, 'महान्तं पुत्रमिच्छती'त्यादौ तु अगमकत्वात् न क्यजित्युक्तम् । तदा प्रपञ्चार्थमेव मुण्डादिग्रहणमिति शब्देन्दुशेखरे स्थितम् । श्लक्ष्णयति वस्त्रमिति । निर्मलं करोतीत्यर्थः । लवणयति व्यञ्जनमिति । लवणयुक्तं करोतीत्यर्थः । हलिकल्योरिति । एवं च ताभ्यां सापेक्षाभ्यां न णिच्, तद्ग्रहणस्य अदन्तत्वनिपातनेन चरितार्थत्वादिति भावः । ननु सत्यशब्दात् तत्करोति इत्यादिनैव णिच्सिद्धेः 'सत्याप' इति सूत्रे सत्यग्रहणं व्यर्थमित्यत आह—सत्यस्यापुगर्थमिति । केषांचिदिति । पाशादीनामित्यर्थः । सत्यापयतीति । आपुग्विधिसामर्थ्यान्न टिलोपः । पाशं विमुञ्चतीत्यादौ 'प्रातिपदिकाद्धात्वर्थे' इति णिच् । अभिषिषेणयिषतीति । अभि, षेणि इति ण्यन्तात्सनि रूपम् । ननु त्वचं गृह्णाति त्वचयतीति कथम् ? त्वच्छब्दाच्चकारान्ताण्णिचि टिलोपे

त्वचयति । वर्मणा संनह्यति संवर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसते अवचूर्णयति । इष्ठवदित्यतिदेशात्पुंवद्भावादयः । एनीमाचष्टे एतयति । दरदमाचष्टे दारदयति । पृथुं प्रथयति । वृद्धौ सत्यां पूर्वं वा टिलोपः । अपिप्रथत्–अपप्रथत् । मृदुं म्रदयति । अमम्रदत् । भृशं कृशं दृढं–भ्रशयति । क्रशयति । द्रढयति । अबभ्रशत् । अचक्रशत् । अदद्रढत् । परिव्रढयति । पर्यवव्रढत् । ऊढिमाख्यत् । औजिढत् । ढत्वादीनामसिद्धत्वात् हृतिशब्दस्य द्वित्वम् । 'पूर्वत्रासिद्धीयमद्वित्वे'

---

त्वयतीत्यापत्तेरित्यत आह—त्वचेति । 'त्वच संवरणे' इत्यस्मात् 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्यय इत्यर्थः । पुंवद्भावादय इति । आदिना रभावटिलोपादिग्रहणम् । एतयतीति । 'भस्याऽढे' इति पुंवत्त्वस्य इष्ठनि प्रवृत्तेः णावपि तस्याऽतिदेशात् 'वर्णादनुदात्तात्' इति स्त्रीप्रत्ययस्य तत्संनियोगशिष्टनत्वस्य च निवृत्तौ एतशब्दे तकारादकारस्य टिलोप इति भावः । नन्वेनीशब्दाण्णौ टिलोपेन स्त्रीप्रत्ययनिवृत्तौ तत्संनियोगशिष्टनत्वस्यापि निवृत्तौ एतयतीति सिध्यतीत्यस्वरसात् पुंवद्भावे उदाहरणान्तरमाह—दरदमिति । दरदिति कश्चिद्राजा, तस्यापत्यं दारदः 'द्व्यञ्मगध' इत्यण् । स्त्र्यपत्ये तु दरदोऽपत्यं स्त्री दरत् 'अतश्च' इत्यणो लुक् । तामाचष्ट इत्यर्थे दरच्छब्दाण्णौ इष्ठवत्त्वात् पुंवत्त्वेन स्त्रियामित्यनुवृत्तौ 'अतश्च' इति स्त्रियां विहितस्य अण्प्रत्ययलुको निवृत्तौ दारदशब्दे टेर्लोपे दारदयतीति रूपं सिध्यति । पुंवद्भावाऽभावे तु दरद्शब्दस्य टिलोपे सति दरयतीति स्यादिति भावः । टिलोपस्य अजादेशत्वेन स्थानिवत्त्वान्नोपधावृद्धिः । 'पृथुं मृदुं भृशं चैव कृशं च दृढमेव च । परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥' इति । श्लो० ग० कारः । क्रमेणोदाहरति—पृथुमिति । 'आचष्टे' इति शेषः । प्रथयति । तत्र प्रक्रियां दर्शयति–वृद्धौ सत्यामिति । पृथु इ इति स्थिते परत्वाद्वृद्धौ कृतायां टिलोपः । अथवा कृतायामकृतायां च वृद्धौ प्रवृत्त्या नित्यत्वाद्वृद्धेः प्राक् टिलोपः । उभयथापि 'र ऋतः' इति रभावे प्रथयतीति रूपमिति भावः । वस्तुतस्तु अकृतायां वृद्धौ उकारस्य लोपः । कृतायां तु औकारस्य लोपः । तथा च 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः' इति टिलोपः अनित्यः । ततश्च परत्वात् टिलोपात् प्राग्वृद्धिरेवेति 'मुण्डमिश्र' इति सूत्रे भाष्ये स्थितम् । वृद्धौ सत्यां पूर्वं वा टिलोप इति मूलं तु कृताऽकृतप्रसङ्गित्वाट्टिलोपस्य नित्यत्वमभिप्रेत्येति बोध्यम् । अपिप्रथदिति । वृद्धौ सत्यां टिलोपे अग्लोपित्वाऽभावात् सन्वत्त्वे 'सन्यतः' इति इत्वमिति भावः । अपप्रथदिति । वृद्धेः पूर्वं टिलोपेन उकारस्य निवृत्तावग्लोपित्वात् सन्वत्त्वाऽभावे रूपम् । अबभ्रशदित्यादौ वृद्धेः पूर्वं पश्चाद्वा टिलोपेऽपि अग्लोपित्वान्न सन्वत्त्वमिति भावः । औजिढदिति । वहधातोः क्तिनि ढत्वधत्वष्टुत्वढलोपेषु ऊढिः । तस्मात् णौ टिलोपे ऊढि इति ण्यन्ताल्लुङि चङि आटि वृद्धौ औढि अ त् इति स्थिते प्रक्रियां दर्शयति-ढत्वादीनामिति । ढत्वधत्वष्टुत्वढलोपानामसिद्ध-

इति त्वनित्यमित्युक्तम्। ढिशब्दस्य द्वित्वमित्यन्ये। औडिढत्। ऊढमाख्यत्। ओजढत्-औडढत्। 'ओः पुयण्—' (सू २५७७) इति वर्गप्रत्याहारजग्रहो लिङ्गं 'द्वित्वे कार्ये णावच आदेशो न' इति ऊनयतावुक्तम्। 'प्रकृत्यैकाच्' (सू २०१०) वृद्धिपुकौ। स्वापयति। त्वां मां वा आचष्टे त्वापयति मापयति। मप-र्यन्तस्य त्वमौ। पररूपात्पूर्वं, नित्यत्वाट्टिलोपः वृद्धिः पुक्। त्वादयति, मादयति इति तु न्याय्यम्। अन्तरङ्गत्वात्पररूपे कृते 'प्रकृत्यैकाच्' (सू २०१०) इति

त्वात् 'अजादेर्द्वितीयस्य' इति हतिशब्दस्य द्वित्वमित्यर्थः। इत्युक्तमिति।।'सुषिश्कर-णप्रक्रियायां ऊर्णुञ्धातावि'विति शेषः। एवञ्च हतिशब्दस्य द्वित्वे हलादिशेषे,'कुहो-श्चुः' इति हस्य चुत्वमिति भावः। ढिशब्दस्येति। 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्य क्वचिदनित्यत्वेऽप्यत्र तदप्रवृत्तौ मानाभावादिति भावः। ऊढमाख्यदिति। वहधातोः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपेषु ऊढशब्दात् ण्यन्ताल्लुङि चङि ढत्वादीनामसिद्ध-त्वात् 'हते' त्यस्य द्वित्वे हलादिशेषे अभ्यासस्य चुत्वे रूपम्। औडढदिति। 'पूर्वत्रा-सिद्धीयमद्वित्वे' इति ढत्वादीनामसिद्धत्वाऽभावपक्षे ढशब्दस्य द्वित्वे रूपम्। नन्विह दशात् टिलोपे सति णिचसहितस्य ढतीति ढीत्यस्य वा द्वित्वे कृते अभ्यासे इकार एव श्रूयेत नत्वकार इत्यत आह-ओः पुयणित्यादि। स्वशब्दाण्णिचि टिलोपमाशङ्क्य आह-प्रकृत्यैकाजिति। प्रकृतिभावाट्टिलोपाऽभावे अकारस्य वृद्धौ आकारे पुगागमः। तदाह-वृद्धिपुकाविति। त्वापयति मापयति इत्यत्र प्रक्रियां दर्शयति-मपर्यन्तस्येति। युष्मदस्मद्भ्यां णौ 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वमौ। त्व अद् इ, म अद्, इति स्थिते आह—पररूपादिति। कृते अकृते च पररूपे टिलोपस्य प्रवृत्तेर्नित्यत्वं बोध्यम्। त्व इ, म इ इति स्थिते आह—वृद्धिरिति। अकारस्य आकारः। टिलोपस्य स्थानिव-त्त्वं तु न शङ्क्यम्, अजादेशत्वाऽभावात्। पुगिति। 'अर्ति' इत्यनेनेति भावः। तदेवं प्राचीनमतमुक्त्वा स्वमतमाह-त्वादयतीत्यादिना। तदेवोपपादयति—अन्तरङ्गत्वादिति। त्व अद् इ, म अद् इ, इति स्थिते नित्यमपि टिलोपं बाधित्वा अन्तरङ्गत्वात्पररूपे कृते 'प्रकृत्यैकाच्' इति प्रकृतिभावे टिलोपस्याऽप्रवृत्तौ उपधावृद्धिरिति भावः। ननु इष्ठेमेयस्सु किमुदाहरणमिति प्रश्ने प्रेयान् प्रेमा प्रेष्ठः इत्युदाहरणानि प्रदर्श्य, 'नैतदस्ति प्रयोजनं' 'प्रस्थस्फ' इति विहितप्रादीनामाभीयत्वेनाऽसिद्धतया तत्र टि-लोपाप्रसक्तेरित्युक्त्वा श्रेयान् श्रेष्ठः इत्यत्र 'प्रशस्यस्य श्रः' इति आदेशस्य पाष्ठमि-कतया आभीयत्वाभावेनासिद्धत्वाभावात् टिलोपे प्राप्ते प्रकृतिभावविधिरित्युदाहर-णान्तरं प्रदर्श्य 'आदेशे अकारोच्चारणसामर्थ्याट्टिलोपो न भविष्यतीत्युक्त्वा स्रग्वि-तमः स्रजिष्ठः इत्यत्र 'विन्मतोर्लुक्' इति लुकि टिलोपनिवृत्त्यर्थं प्रकृतिभावविधान-मित्युक्त्वा प्राप्त एव टिलोपे आरभ्यमाणस्य लुकस्तदपवादतया लुका टिलोपस्य बाधो भविष्यतीत्ति 'प्रकृत्यैकाच्' इत्यस्य भाष्ये प्रत्याख्याततत्वात् त्वादयति, माद-

प्रकृतिभावात् । न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यम् । भाष्यस्य प्रेष्ठाद्युदाहरणविशेषेऽन्यथासिद्धिपरत्वात् । युवामावां वा युष्मयति, अस्मयति । श्वानमाचष्टे शावयति । 'नस्तद्धिते' ( सू ६७९ ) इति टिलोपः । प्रकृतिभावस्तु न, येन नाप्राप्तिन्यायेन 'टेः' ( सू १७८६ ) इत्यस्यैव बाधको हि सः । भत्वात्सम्प्रसारणम् । अन्ये तु 'नस्तद्धिते' ( सू ६७९ ) इति नेहातिदिश्यते, इष्ठनि तस्यादृष्टत्वात् । ब्रह्मिष्ठ इत्यादौ परत्वात् 'टेः' ( सू २७८६ ) इत्यस्यैव प्रवृत्तेः ।

यति इत्यत्र प्रकृतिभावोपन्यासो न युज्यते इत्याशङ्क्य निराकरोति—नच प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यमिति । कुत इत्यत आह—भाष्यस्येति । उदाहृतभाष्यस्य हि प्रेयान् प्रेष्ठः इत्यादिनां प्रकृतिभावं विनाऽपि साधने तात्पर्यम्, न तु प्रकृतिभावप्रत्याख्यानमभिमतम्, स्वमाचष्टे स्वापयतीत्यादौ तदावश्यकत्वात् । अत एव 'प्रकृत्यकाजिष्ठेमेयस्सु चेन्नैकाच उच्चारणसामर्थ्याद्वचनात् प्रकृतिभावः' इति वार्तिकव्याख्यावसरे 'अन्तरेणापि वचनं प्रकृतिभावो भविष्यति' इति भाष्ये उक्तम् । अन्यथा 'अन्तरेणैव वचनमित्युच्येत इत्यास्तां तावत् । प्रत्ययोत्तरपदयोश्च' इत्यत्र एकवचने इत्यनुवृत्तम् । तच्च यौगिकमाश्रीयते । एकत्वविशिष्टवाचिनोर्युष्मदस्मदोरिति लभ्यते इति मत्वा आह—युमावामां वेति । न च द्वयोरुक्तौ युवावादेशौ शङ्क्यौ, विभक्तेर्लुका लुप्तत्वात् । न च लुकः प्रागेव युवावौ किं न स्यातामिति वाच्यम्, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इत्युक्तेरिति भावः । शावयतीति । श्वानमाचष्टे इत्यर्थः । श्वन्शब्दाण्णौ श्वन् इ इति स्थिते आह—नस्तद्धिते इति । 'प्रकृत्यैकाच्' इति प्रकृतिभावमाशङ्क्य आह—प्रकृतिभावस्तु नेति । कुत इत्यत आह—येनेति । 'टेः' इति टिलोपे प्राप्ते सत्येव 'प्रकृत्यैकाजित्यारभ्यते 'नस्तद्धिते' इत्यस्य स्रजिष्ठः इत्यादौ अप्राप्तावपि प्रकृतिभाव आरभ्यते इति भावः । भत्वादिति । इष्ठवत्त्वेन भत्वात् 'श्वयुव' इति सम्प्रसारणमित्यर्थः । तथा च श्वन् इ इति स्थिते टिलोपे सति तस्याभीयत्वेनाऽसिद्धत्वाद्वन्नन्तत्वात् वस्य सम्प्रसारणे पूर्वरूपे उकारस्य वृद्धौ आवादेशः । अन्ये त्विति । इष्ठनि दृष्टस्यैव इष्ठवदित्यतिदेशः । टेरित्येव टिलोप इष्ठनि दृष्टः, नतु 'नस्तद्धिते' इति । अतो नाऽस्यातिदेश इत्यर्थः । नन्वतिशयेन ब्रह्मा ब्रह्मिष्ठ इत्यत्र नस्तद्धिते इति टिलोपो दृष्ट इत्यत आह—ब्रह्मिष्ठ इत्यादाविति । तेनेति । 'नस्तद्धिते' इत्यस्याऽप्रवर्तनेनेत्यर्थः । ततश्च प्रकृतिभावात् 'टेः' इति लोपस्याऽभावे सम्प्रसारणे शुनयतीति रूपमित्यर्थः । आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु ब्रह्मवच्छब्दाद्विष्ठनि टेरिति टिलोपापवादे 'विन्मतोर्लुक्' इति मतुपो लुकि 'नस्तद्धिते' इति टिलोपो दृष्ट एव । ततश्च 'इष्ठनि तस्याऽदृष्टत्वा'दित्ययुक्तम् । किञ्च ब्रह्मिष्ठ इत्यादौ परत्वाट्टेरित्यस्य प्रवृत्ति'रित्युक्तम् । केवलस्य ब्रह्मन्शब्दस्य वेदादिवचनस्य गुणवचनत्वाऽभावेन इष्ठनो दुर्लभत्वात् 'अजादी गुणवचनादेव' इत्यु-

तेन शुनयतीति रूपमाहुः । विद्वांसमाचष्टे विद्वयति । अङ्गवृत्तपरिभाषया सम्प्रसारणं नेत्येके । सम्प्रसारणे वृद्धावावादेशे च विदावयतीत्यन्ये । नित्यत्वाट्टिलोपात्प्राक्सम्प्रसारणम् । अन्तरङ्गत्वात्पूर्वरूपम् टिलोपः । विदयतीत्यपरे । उदञ्चमाचष्टे उदीचयति । उदैचिचत । प्रत्यञ्चं प्रतीचयति । प्रत्यचिचत् । 'इकोऽसवर्णे—' ( सू ९१ ) इति प्रकृतिभावपक्षे प्रतिअचिचत् । सम्यञ्चमाचष्टे समीचयति । सम्यचिचत् । समिअचिचत् । तिर्यञ्चमाचष्टे तिराययति । अञ्चेष्टिलोपेनापहारेऽपि

---

कः । मत्वन्तादिष्ठनि तु मतोर्लुकि तेन 'टेः' इत्यस्य प्रवृत्तिबाधेन लुगुत्तरं तदप्रवृत्त्या परत्वादित्यप्यसङ्गतिरिति शब्देन्दुशेखरे स्थितम् । विद्वयतीति । विद्वस्शब्दाण्णौ टिलोपः । ननु इष्ठवत्त्वात् भत्वे वसोः सम्प्रसारण'मित्याशङ्क्य आह—अङ्गवृत्तेति । 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषयेत्यर्थः । अङ्गकार्ये कृते पुनर्नाङ्गकार्यम् इति तदर्थः । वस्तुतस्तु विद्वयतीत्यत्र 'टेः' इत्यसो लोपे वस्वन्तत्वाऽभावात् सम्प्रसारणाऽप्रसक्तेरङ्गवृत्तपरिभाषोपन्यासो वृथेत्यस्वरसं सूचयति—इत्येके इति । सम्प्रसारणे इति । विद्वस्शब्दाण्णौ इष्ठवत्त्वेन टिलोपे कृते वकारस्य सम्प्रसारणे पूर्वरूपे उकारस्य वृद्धौ आवादेशे विदावयतीत्यन्ये मन्यन्ते इत्यर्थः । अत्रापि पूर्ववदेवाऽस्वारसः, टिलोपे सति वस्वन्तत्वाऽभावात् । नित्यत्वादिति । टिलोपे कृते अकृते च प्रवृत्तेः सम्प्रसारणं नित्यम् । टिलोपस्तु कृते सम्प्रसारणे पूर्वरूपे च कृते उसो भवति, अकृते तु अस इत्यनित्यः, 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः' इति न्यायादिति भावः । ननु कृतेऽपि सम्प्रसारणे पररूपात्प्राक् अस एव टिलोप इति तस्य नित्यत्वमित्यत आह—अन्तरङ्गत्वात्पूर्वरूपं टिलोप इति । सम्प्रसारणे पूर्वरूपे च कृते उसो लोपेऽपि वस्वन्तत्वस्य विनष्टत्वान्न सम्प्रसारणमित्यस्वरसं सूचयति—इत्यपरे इति । एवञ्च विद्वयतीति प्रथमपक्ष एव स्थितः । अत्राङ्गवृत्तपरिभाषोपन्यास एव वृथेति स्थितम् । उदीचयतीति । उत्पूर्वकादञ्चेः ऋत्विग्दधृगित्यादिना क्विनि 'अनिदिताम्' इति नलोपे उदच्शब्दः । तस्माण्णौ इष्ठवत्त्वेन भावादच इत्यकारलोपं बाधित्वा 'उद ईत्' इति ईत्वे 'उदीचि' इति ण्यन्ताल्लडादय इति भावः । उदैचिचदिति । लुङि 'द्विर्वचनेऽचि' इति णिलोपनिषेधात् चिशब्दस्य द्वित्वम् 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इत्युक्तेरुदः ऊपर्याडिति भावः । एवञ्च उदः पृथक्करणेन 'प्रकृत्यैकाच्' इति प्रकृतिभावान्न टिलोपः । प्रतीचयतीति । 'अचः' इत्यल्लोपे 'चौ' इति पूर्वस्य दीर्घः । प्रत्यचिचदिति । इह 'अचः' इत्यल्लोपे चिशब्दात्प्रागटि तकारादिकारस्य यण् । अच इत्यकारलोपस्याभीयत्वेऽपि असमानाश्रयत्वान्नाऽसिद्धत्वम् , लोपस्य णिनिमित्तत्वाद् आटस्तु लुङ्निमित्तत्वात् । इकोऽसवर्णे इतीति । 'न समासे' इति तु न, पृथक्करणेन समासनिवृत्तेः । समीचयतीति । 'समः समि' इति सम्यादेशः । अच इति लोपे चाविति दीर्घः । सम्यचिचदिति । सम्यादेशस्य स्थानिवत्त्वेनोपसर्गत्वात् पृथक्करणम् ,

बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः । 'असिद्धवदत्र—' ( सू २१८३ ) इति चिणो लुङ्न्यायेन प्रथमटिलोपोऽसिद्धः । अतः पुनष्टिलोपो न । अङ्गवृत्तपरिभाषया वा । चङ्यग्लोपित्वादुपधाह्रस्वो न । अतितिरायत् । सध्र्यञ्चमाचष्टे सध्रायति । अससध्रायत् । विष्वद्र्यञ्चम् अविविष्वद्रायत् । देवद्र्यञ्चम् अदिदेवद्रायत् । अदद्र्यञ्चम् आददद्रायत् । अमुमुञ्चम् अमुमुआययति । चङ् । आमुमुमुआयत् । अदमुय-

पृथक्करणेन उत्तरपदपरत्वाऽभावेऽप्यन्तरङ्गत्वाज्जातः सध्र्यादेशो न निवर्तते । तिरायतीति । 'तिरस्' इत्यव्ययम् । तत्पूर्वात् अञ्चेः क्विनि नलोपे तिरस् अच् इत्यस्माण्णौ टिलोपेन धातोर्निवृत्तौ 'तिरसस्तिर्यलोपे' इति तिरिभावे इकारस्य वृद्धावायादेशे 'तिरायि' इत्यस्मात् ण्यन्ताल्लडादीति भावः । न च तिरसः पृथक्करणे सति धातोः 'प्रकृत्यैकाच्' इति प्रकृतिभावात् कथं टिलोप इति वाच्यम् । तिरसित्यस्य कर्माद्यर्थानुपसर्गतया उपसर्गसमानाकारत्वाऽभावेन पृथक्करणाऽभावात् । नन्वेवं सति अञ्चतेष्टिलोपेनापहारे सति अञ्चतिपरकत्वविरहात्कथमिह तिरसस्तिरिभाव इत्यत आह—अञ्चेष्टिलोपेनेति । बहिरङ्गत्वेनेति । बहिर्भूतणिनिमित्तकत्वादिति भावः । नन्वस्तु तिरसस्तिरिः । तत्र रेफादिकारस्य टेरिति लोपः स्यादित्यत आह—असिद्धवदत्रेति । प्रथमटिलोपोऽसिद्ध इत्यन्वयः । तिरस् अच् इ इति स्थिते प्रथमप्रवृत्तः अच् इत्येवंरूपटेर्लोपः तिरेः टिलोपे कर्तव्ये आभीयत्वादसिद्ध इत्यर्थः । ननु प्रथमटिलोपस्य कथं तिरेष्टिलोपे कर्तव्ये असिद्धत्वम् टिलोपशास्त्रस्य एकत्वादित्यत आह—चिणो लुङ्न्यायेनेति । पच्धातोर्भावकर्मणोर्लुङ्स्तङि प्रथमपुरुषैकवचने तशब्दे परे 'चिण् भावकर्मणोः' इति च्लेश्चिणि उपधावृद्धौ अटि अपाचि त इत्यस्मात् 'तिङश्च' इति तरपि तदन्तात् 'किमेत्तिङव्ययघादाम्' इत्याम्प्रत्यये अपाचितरामिति स्थिते 'चिणो लुक्' इति प्रथमस्य तशब्दस्य लुकि कृते पुनस्तरप्प्रत्ययतशब्दस्य लुङ् न भवति, स्थानिभेदेन लुको भेदमाश्रित्य प्रथमलुकः असिद्धत्वेन व्यवधानादिति स्थितिः । एवमिहापीत्यर्थः । अत इति । प्रथमटिलोपस्याऽसिद्धत्वादित्यर्थः । अङ्गवृत्तपरिभाषया वेति । 'पुनष्टिलोपो न' इत्यनुषज्यते । न च तिरेरिकारस्याङ्गवृत्तपरिभाषया 'टे'रिति लोपाऽभावे तिराययतीति वृद्धिरपि तस्य न स्यादिति वाच्यम्, अङ्गवृत्तपरिभाषाया अनित्यत्वेन वृद्धिविषये तदप्रवृत्तेः । अग्लोपित्वादिति । तिरस् अच् इ इति स्थिते 'टेः' इत्यचो धातोर्लोपे सति तिरि इत्यस्य अग्लोपित्वम् अचो धातोर्लोपे अकारस्यापि लोपसत्त्वादित्यभिमानः । सध्रायतीति । सहस्य सध्रिः । तिराययतीतिवद्रूपम् । सहेत्यस्य उपसर्गत्वाऽभावान्न पृथक्करणम् । तदाह—असस्रध्रायदिति । विष्वद्र्यञ्चमिति । विष्वक् अच् इ इति स्थिते 'विष्वग्देवयोश्च' इति विष्वक्शब्दटेरद्र्यादेशे टेरित्यचो धातोर्लोपे विष्वद्रि इ इति स्थिते वृद्धौ आयादेशे विष्वद्रायि इति ण्यन्ताल्लटि विष्वद्राययतीति रूपम् । देवद्र्यञ्चमिति । देवशब्दस्य टेरद्र्यादेशे देवद्राययतीति सिद्धवत्कृत्य लुङ्याह—अदिदे

यम् अदमुआययति । आददमुआयत् । भुवं भावयति । अबीभवत् । भ्रुवम् अबुभ्रवत् । श्रियम् अशिश्रयत् । गाम् अजूगवत् । रायम् अरीरयम् । नावम् अनूनवत् । स्वश्वं स्वाशश्वत् । स्वः । अव्ययानां भमात्रे टिलोपः । स्वयति । असस्वत् । असिस्वत् । बहून् भावयति बहयतीत्यन्ये । स्रग्विणं स्रजयति । संज्ञापूर्वकत्वान्न वृद्धिः । श्रीमतीं श्रीमन्तं वा श्राययति । अशिश्रयत् । पयस्विनीं पयसयति । इह

वद्रायदिति । आततिरायदितिवद्रूपम् । आददद्रायदिति । सर्वनामत्वाददस्शब्दस्य टेर द्र्यादेशः । 'त्यदाद्यत्वे सत्येव उत्वमत्वे' इति पक्षे इदम्, अदस्शब्दाद्विभक्तेः लुका लुप्तत्वेन विभक्तिपरकत्वाऽभावेन त्यदाद्यत्वाऽप्रवृत्तेः । त्यदाद्यत्वाऽविषयत्वेऽपि उत्वमत्वे स्त इति मतमाश्रित्य आह—अमुमुयञ्चमिति । अदस् अच् इ इति स्थिते टेरद्र्यादेशे अच् इत्यस्य टेर्लोपे अदद्रि इ इति स्थिते 'अदसोऽद्रेः पृथङ्मुत्वम्' इति मते दकाराकारयोर्दकाररेफयोश्च मत्वोत्वयोः कृतयोः अमुमु इ इति स्थिते, प्रथमस्य इकारस्य णिचि वृद्धौ आयादेशे अमुमु आयि इति ण्यन्ताल्लङादिरिति भावः । मुत्वस्याऽसिद्धत्वान्न यण् । अदमुआययतीति । 'केचिदन्त्यसदेशस्य' इति मते इदम् । भुवमिति । भुवमाचष्टे इत्यर्थे भूशब्दात् णिच् वृद्ध्यावादेशौ भावि इत्यस्माल्लङादीति भावः । अबीभवदिति । 'ओः पुयण्जि' इति इत्वम् । अबुभ्रवदिति । अवर्णपरकपवर्गाद्दिपरत्वाभावात् 'ओः पुयण्जि' इति न । स्वश्वमिति । सु शोभनः अश्व इति विग्रहः । स्वाशश्वदिति । उपसर्गसमानाकारस्य पृथक्करणादश्वशब्दस्य 'अजादेर्द्वितीयस्य' इति द्वित्वमाडागमश्च । स्वरिति । स्वर् इत्यस्माण्णिचि 'अव्ययानां भमात्रे' इति टिलोपः इष्ठवत्त्वेन भत्वात् । 'प्रकृत्यैकाच्' इति प्रकृतिभावस्तु येन नाप्राप्तिन्यायेन 'टेः'रित्यस्यैव बाधकः । असस्वदिति । द्वित्वे कार्ये णावजादेशस्य निषेधात् टिलोपं बाधित्वा स्वरशब्दस्य द्वित्वम्, 'अचि'त्यस्य लोपे अकारस्यापि लोपसत्त्वेन अजादेशत्वादिति भावः । असिस्वदिति । अल्लोपस्य अजादेशत्वं नेति द्वित्वे कार्ये णौ टिलोपस्य निषेधाऽभावात् टिलोपे कृते णिचा सह स्विशब्दस्य द्वित्वमिति भावः । बहूनिति । बहुशब्दाण्णिचि 'णाविष्ठव'दित्यतिदेशात् 'बहोर्लोपो भू च बहोः' इति बहोर्भूभावः । 'इष्ठस्य यिट् चे'ति यिडागमस्तु न, 'णाविष्ठव'दिति सप्तम्या इष्ठनि परे इष्ठस्येव कार्यस्यातिदेशादिति भावः । बहयतीति । यिडभावे सन्नियोगशिष्टस्य भूभावस्याप्यभावादिति भावः । स्रजयतीति । इष्ठवत्त्वात् 'विन्मतोः' इति लुक् । नचाऽजादी गुणवचनादेवेति इष्ठन्प्रत्ययः स्रग्विन्शब्दात् दुर्लभ इति इष्ठवत्त्वमत्र कथमिति शङ्क्यम्, 'विन्मतोः' इति लुग्विधानेन स्रग्विन्शब्दादिष्ठवत्त्वसिद्धेरिति भावः । उपधावृद्धिमाशङ्क्य आह—संज्ञापूर्वकत्वान्न वृद्धिरिति । 'णाविष्ठव'दित्यनेनातिदेशेन । विनो लुकः सत्त्वादङ्गवृत्तपरिभाषया न वृद्धिरिति कैयटः । श्रीमतीमिति । श्रीमतीशब्दाण्णिचि 'णाविष्ठव'दित्यतिदेशेन 'भस्याढे' इति पुंवत्त्वे 'विन्मतोः' इति मतोर्लुकि रेफादिकारस्य वृद्ध्यायादेशयोः 'श्रायि' इत्यस्मात् लङादीति भावः । अशिश्र-

टिलोपो न। तदपवादस्य लुकः प्रवृत्तत्वात्। स्थूलं स्थवयति। दूरं दवयति। कथं तर्हि 'दूरयत्यवनते विवस्वति' इति। दूरमतति अयते वा दूरात्, दूरातं कुर्वतीत्यर्थः। युवानं यवयति कनयति। 'युवाल्पयोः—' ( सू २०१९ ) इति वा कन्। अन्तिकं नेदयति। बाढं साधयति। प्रशस्यं प्रशस्ययति। इह श्रज्यौ न, उपसर्गस्य पृथक्कृतेः। वृद्धं ज्यापयति। प्रियं प्रापयति। स्थिरं स्थापयति। स्फिरं स्फापयति। उरुं वरयति। वारयति। बहुलं बंहयति। गुरुं गरयति। वृद्धं वर्षयति।

---

यदिति। यावच आदेशो नेति वृद्ध्यायादेशयोः प्रागेव ओशब्दस्य द्वित्वे उत्तरखण्डे वृद्ध्यायादेशयोः कृतयोरुपधाह्रस्व इति माधवः। मतुपो लुकि अकारस्यापि लोपस्थत्वेन अग्लोपित्वान्नोपधाह्रस्वः इत्यन्ये। पयस्विनीमिति। णिचि इष्ठवत्त्वाद्विन्मतोरिति मतुपो लुगिति भावः। पयसयतीत्यत्र इष्ठवत्त्वात् टिलोपमाशङ्क्य आह— इह टिलोपो नेति। कुत इत्यत आह—तदपवादस्येति। न च टिलोपं बाधित्वा मतुपो लुकि कृते पयसष्टेर्लोपः कुतो न स्यादिति वाच्यम्, 'सत्यपि सम्भवे बाधन'मिति न्यायेन पयसष्टिलोपस्यापि मतुपो लुका बाधात्। स्थवयतीति। स्थूलशब्दात् णिचि इष्ठवत्त्वात् स्थूलदूरेति स्थूलशब्दस्य यणादेर्लोपे ऊकारस्य गुणे अवादेशे स्थवि इत्यस्माल्लडादीति भावः। गुणे ओकारस्याऽचो ञ्णितीति वृद्धिस्तु न शङ्क्या, अङ्गकार्यं कृते पुनरङ्गकार्यस्याऽप्रवृत्तेः। दवयतीति। पूर्ववद्यणादिलोपो गुणश्च। कथं तर्हीति। 'स्थूलदूरे'ति यणादिलोपस्य टिलोपाऽपवादत्वादिति भावः। दूरमततीति। 'अत सातत्यगमने' इति धातोः 'अन्येभ्योऽपि दृश्यते' इति क्विपि दूरादिति रूपम्। अय गतावित्यस्मात् क्विपि 'लोपो व्योः' इति यलोपे 'ह्रस्वस्य पिति' इति तुकि दूरादित्येव रूपम्। तस्माण्णौ टिलोपे दूरि इति ण्यन्तात् शतृप्रत्यये शपि इकारस्य गुणे अयादेशे दूरयच्छब्दस्य दूरयतीति सप्तम्यन्तमिति भावः। तदाह—दूरातं कुर्वतीत्यर्थ इति। 'कुर्वतीति' सप्तम्यन्तम्। यवयतीति। युवन्शब्दात् णौ स्थूलदूरेति वनो यणादेर्लोपः। पूर्वस्य उकारस्य गुणे अवादेशः। यवि इत्यस्माल्लडादि। कनयतीति। युवन्शब्दस्य कनादेशपक्षे रूपम्। तदाह—युवाल्पयोरिति। नेदयतीति। अन्तिकशब्दस्य णौ नेदादेशः। अन्तिकबाढयोर्नेदसाधा'वित्युक्तेः। साधयतीति। बाढशब्दस्य णौ साधादेशः। इहेति। प्रशस्ययतीत्यत्र 'प्रशस्यस्य श्रः' 'ज्य च' इति श्रज्यौ नेत्यर्थः। कुत इत्यत आह—उपसर्गस्येति। तत्पृथक्करणे सति विशिष्टस्य स्थानिनोऽभावाच्चादेशाविति भावः। वृद्धं ज्यापयतीति। 'वृद्धस्य चे'ति वृद्धशब्दस्य ज्यादेशे वृद्धौ पुगिति भावः। 'प्रियस्थिर' इति सूत्रक्रमेणोदाहरति—प्रियं प्रापयतीति। प्रियशब्दस्य प्रादेशे वृद्धिः पुक्। स्थापयतीति। स्थिरशब्दस्य स्थादेशे वृद्धिपुकौ। वरयति वारयतीति। उरुशब्दस्य वर्। संज्ञापूर्वकविधेरनित्यत्वादुपधावृद्धिविकल्प इति माधवः। बंहयतीति। बहुलस्य बंहादेशः। गरयतीति। गुरोः गर्। वृद्धं वर्षयतीति।

तृप्रं त्रापयति । दीर्घं द्राघयति । वृन्दारकं वृन्दयति ।

इति तिङन्ते नामधातुप्रकरणम् ।

# अथ तिङन्ते कण्ड्वादिप्रकरणम् ॥ १९ ॥

२६७८ कण्ड्वादिभ्यो यक् ३।१।२७॥ एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे । धातुभ्यः किम् । प्रातिपदिकेभ्यो मा भूत् । द्विधा हि कण्ड्वादयः, धातवः प्रातिपदिकानि च । १ कण्डूञ् गात्रविघर्षणे । कण्डूयति । कण्डूयते । २ मन्तु अपराधे । रोष इत्येके । मन्तूयति । चन्द्रस्तु जितमाह । मन्तूयते । ३ वल्गु पूजामाधुर्ययोः, वल्गूयति । ४ असु उपतापे, असु असूञ् इत्येके । अस्यति । असूयति-असूयते । ५ लेट् ६ लोट् धौर्त्ये पूर्वभावे, स्वप्ने च दीप्तावित्येके । लेट्यति-लेटिता । लोट्यति-लोटिता । ७ लेला दीप्तौ । ८ इरस्, ९ इरज्, १० इरञ्, ईर्ष्यायाम् । इरस्यति । इरज्यति । 'हलि च' (सू ३५४) इति दीर्घः । ईर्यति । ईर्यते । ११ उषस् प्रभातीभावे । १२ वेद धौर्त्ये, स्वप्ने च । १३ मेधा आशुग्रहणे । मेधायति । १४ कुषुभ क्षेपे । कुषुभ्यति । १५ मगध परिवेष्टने । नीचदास्ये इत्यन्ये । १६ तन्तस् १७ पम्पस् दुःखे । १८ सुख १९ दुःख तत्क्रियायाम् । सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः । २० सपर पूजायाम् । २१ अरर आराकर्मणि । २२ भिषज् चिकित्सायाम् । २३ भिष्णज् उपसेवायाम् । २४ इषुध शरधारणे । २५ चरण २६ वरण गतौ । २७ चुरण चौर्ये । २८ तुरण त्वरायाम् । २९ भुरण धारणपोषणयोः । ३० गद्गद वाक्-

---

वृद्धस्य वर्षादेशः 'वृद्धस्य चे'ति प्रादेशेन विकल्प्यते । त्रापयतीति । तृप्रस्य त्रप आदेशः । अदुपधः । संज्ञापूर्वकत्वान्न वृद्धिः । गरयतीत्यादिवत् । त्रापयतीति क्वचित्पाठः । द्राघयतीति । दीर्घस्य द्राघादेशः । वृन्दयतीति । वृन्दारकस्य वृन्दादेशः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां नामधातुप्रक्रिया समाप्ता ।

अथ कण्ड्वादिप्रक्रिया निरूप्यन्ते । कण्ड्वादिभ्यो यक् । धातुभ्य इति । 'धातोरेकाचः' इत्यतस्तदनुवृत्तेरिति भावः । नित्यमिति । वाग्रहणं तु निवृत्तमिति भावः । अन्यथा कण्डूवतीत्यादपि स्यादिति भावः । द्विधा हीति । एतच्च भाष्ये स्पष्टम् । तेन कण्डूरित्याद्यविगृहीतरूपसिद्धिः । लेटितेति । 'यस्य हलः' इति यलोपः । मेधा आशुग्रहणे इति । आशुग्रहणं त्वरया बोधः । 'सुग्रहणे' इति पाठान्तरम् । सुख्यतीति । यकि अतो लोपः । प्रातिपदिकेभ्यो यकि तु आर्धधातुकत्वाभावाल्लोपो न स्यादिति बोध्यम् । चौरादिकयोस्तु सुखयति दुःखयतीत्युक्तम् । अरर आराकर्मणीति आरा प्रतोदः तत्क-

स्खलने । ३१ एला ३२ केला ३३ खेला विलासे । ३४ इला इत्यन्ये । ३५ लेखा स्खलने च । अदन्तोऽयमित्यन्ये । लेख्यति । ३६ लिट अल्पकुत्सनयोः । लिट्यति । ३७ लाट जीवने । ३८ हृणीङ् रोषणे लज्जायां च । ३९ महीङ् पूजायाम् । महीयते । पूजां लभते इत्यर्थः । ४० रेखा श्लाघासादनयोः । ४१ द्रवस् परितापपरिचरणयोः । ४२ तिरस् अन्तर्धौ । ४३ अगद नीरोगत्वे । ४४ उरस् बलार्थः । उरस्यति बलवान्भवतीत्यर्थः । ४५ तरण गतौ । ४६ पयस् प्रसृतौ । ४७ सम्भूयस् प्रभूतभावे । ४८ अम्बर ४९ संवर संवरणे । आकृतिगणोऽयम् ।

इति तिङन्ते कण्ड्वादिप्रकरणम् ।

---

# अथ तिङन्ते प्रत्ययमालाप्रकरणम् ॥ १७ ॥

कण्डूयतेः सन् । 'सन्यङोः' ( सू २३९५ ) इति प्रथमस्यैकाचो द्वित्वे प्राप्ते 'कण्ड्वादेस्तृतीयस्येति वाच्यम्' ( वा ३४०४ ) । कण्डूयियिषति । क्यजन्तात्सन् । 'यथेष्टं नामधातुषु' ( वा ३४०६ ) । आद्यानां त्रयाणामन्यतमस्य द्वित्वमित्यर्थः । अजादेस्त्वाद्येतरस्य । पुपुत्रीयिषति–पुतित्रीयिषति–पुत्रीयियिषति । अशिश्वीयिषति–अश्वीयियिषति । नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः । इन्द्रीयतेः सन् । द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम् । इन्दिद्रीयिषति इन्द्रीयियि-

---

रणकं कर्म आराकर्म । भिषज् चिकित्सायाम । जान्तोऽयम् । भिषज्यति । लेखा स्खलने चेति । लेखायति । लेख्यतीति । अदन्तात्क्यकि अतो लोपः । आकृतिगणोऽयमिति । कण्ड्वादिरित्यर्थः । तेन दुवस सन्दीपने इत्यादिसंग्रहः । 'समिधा अग्नि दुवस्यते' ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां कण्ड्वादयः समाप्ताः ।

अथ प्रत्ययमालां वक्ष्यन्नाह-कण्डूयतेः सन्निति । 'धातोः कर्मणः' इत्यनेनेति भावः । प्रथमस्यैकाचः इति । 'अजादेर्द्वितीयस्य' इति द्वितीयैकाचो द्वित्वे प्राप्ते इत्यपि ज्ञेयम् । कण्ड्वादेस्तृतीयस्येति । 'एकाचो द्वित्व'मिति शेषः । 'कण्ड्वादे'रित्यनन्तरं 'यगन्तस्ये'ति शेषः, केवलकण्ड्वादिषु तृतीयैकाचोऽभावात् । कण्डूयियिषतीति । कण्डूयेति यगन्तात् सनि इटि अतो लोपः । इस् इति तृतीयस्यैकाचो द्वित्वम् । असु उपतापे, कण्ड्वादिः । असूयियिषति । अजादेस्तृतीयस्य एकाचो द्वित्वम् । क्यजन्तात्सन्निति । उदाहियते इति शेषः । यथेष्टं नामधातुषु । इत्यपि वार्तिकम् । नाम प्रातिपदिकं तद्घटितधातुष्वित्यर्थः । अजादेस्त्वाद्येतरस्येति । अजादेरित्यनुवृत्त्या आदिभूतादचः परेषामेकाचां यथेष्टमित्यर्थकमादिति भावः । नदराणामिति । तेषां मध्ये, आदिभूतादचः परस्यैवेत्यर्थः । इन्द्रीयतेः सन्निति । इन्द्रशब्दात् क्यजन्तात्सन्नित्यर्थः । द्रीशब्दयिशब्दयोरिति । नका-

षति । चिचन्द्रीयिषति चन्दिद्रीयिषति-चन्द्रीयियिषति । प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति पिप्रापयिषति । प्रापिपयिषति । प्रापयियिषति । उरुं विवारयिषति । वारिरयिषति । वारयियिषति । बाढं सिसाधयिषतीत्यादिरूपत्रयम् । षत्वं तु नास्ति । 'यङ्सनण्यन्तात्सन्' । बोभूयिषयिषति । यङ्णिच्सन्नन्ताण्णिच् । बोभूययिषयतीत्यादि । इति तिङन्ते प्रत्ययमालाप्रकरणम् ।

---

रस्य आदिभूतादचः परत्वाच्च द्वित्वम् । दकारस्य तु आदिभूतादचः परत्वाऽभावाच्च द्वित्वनिषेध इति भावः । चिचन्द्रीयिषतीति । चन्द्रीयतेः सनि प्रथमस्यैकाचो द्वित्वम् । चन्दिद्रीयिषतीति । द्वितीयस्यैकाचो द्वित्वम् । 'न न्द्राः' इति नकारस्य न द्वित्वमिति माधवः । आदिभूतादचः परेषां नदराणां न द्वित्वमित्येव भाष्यसम्मतम् । अत्र नकारस्यापि द्वित्वमित्येव युक्तम् । चन्द्रीयियिषतीति । तृतीयस्यैकाचो द्वित्वम् । प्रियमिति । प्रियमाख्यातुमिच्छतीत्यर्थे 'तत्करोति तदाचष्टे' इति ण्यन्तात्सनि इटि णाविष्ठवत्त्वात्प्रियशब्दस्य 'प्रियस्थिर' इति प्रादेशे वृद्धौ पुकि णिचो गुणाऽयादेशयोः षत्वे प्रापयिषेत्येव सन्नन्तम् । प्रियमाचक्षाणं प्रेरयितुमिच्छतीत्यर्थे तु प्रापि इतिण्यन्ताद्धेतुमण्णौ तदन्तात् सनि इटि द्वितीयं णिचमाश्रित्य प्रथमणिचो लोपे द्वितीयणिचो गुणायादेशयोः प्रापयिषेत्येव सन्नन्तम् । तत्र यथेष्टं नामधातुष्वित्याख्यानां त्रयाणामेकाचामेकैकस्य द्वित्वे पिप्रापयिषतीत्यादिरूपत्रयमित्यर्थः । उरुमिति । उरुमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छतीत्यर्थे उरुशब्दादाचष्टे इत्यर्थे णिचि 'प्रियस्थिर' इति वरादेशे उपधावृद्धौ वारि इति ण्यन्तात्सनि इटि णिचो गुणायादेशयोः षत्वे वारयिषेति सन्नन्तम् । माधवमते पृथग्णीकारात् वारि इत्यस्मात् हेतुमण्ण्यन्तात् सनि इटि प्रथमणेर्लोपे षत्वे वारयिषेत्येव रूपम् । तत्र यथेष्टं नामधातुष्वित्येकैकस्य एकाचो द्वित्वे विवारयिषतीत्यादिरूपत्रयमित्यर्थः । बाढं सिसाधयिषतीति । बाढमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छतीत्यर्थे णिजादि पूर्ववत् । अन्तिकबाढयोरिति साधादेशः । तत्र सकारस्यादेशत्वाऽभावाच्च षत्वम् । तदाह—षत्वं तु नास्तीति । बोभूयिषयिषतीत्यत्र प्रक्रियां दर्शयति—यङिति । 'भूधातो' रिति शेषः । द्वित्वे बोभूयेति स्थितम् । सन्निति । इटि अतो लोपे षत्वे बोभूयिषेति स्थितम् । ण्यन्तात् सन्निति । बोभूयिषेत्यस्मात् हेतुमण्णिचि अतो लोपे बोभूयिषि इति स्थितम् । तस्मात् सनि इटि णिचो गुणाऽयादेशयोः षत्वे बोभूयिषयिषेति स्थितम् । ततो लटस्तिपि शपि पररूपे बोभूयिषयिषतीति रूपम् । 'अनभ्यासस्ये' त्युक्तेर्न पुनर्द्वित्वम् । अथ बोभूययिषयतीत्यत्र प्रक्रियां दर्शयति—यङिति । 'भूधातो' रिति शेषः । द्वित्वे बोभूयेति स्थितम् । णिजिति । बोभूयेत्यस्माद्धेतुमण्णौ अतो लोपे बोभूयि इति स्थितम् । सन्नन्ताण्णिजिति । बोभूयि इत्यस्मात्सनि इटि णिचो गुणाऽयादेशयोः षत्वे बोभूययिषेति स्थितम् । तस्माद्धेतुमण्णिचि अतो लोपे बोभूययिषि इत्यस्माल्लटस्तिपि शपि गु-

## अथ तिङन्ते आत्मनेपदप्रकरणम् ॥ १८ ॥

'अनुदात्तङित आत्मनेपदम्' ( सू. २१५७ )। आस्ते। शेते। २६७९ **भावकर्मणोः १ । ३ । १३ ॥** बभूवे। अनुबभूवे। २६८० **कर्तरि कर्मव्यतिहारे १।३ १४॥** क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात्। व्यतिलुनीते। अन्यस्य योग्यं लवनमन्यः करोतीत्यर्थः। 'श्नसोरल्लोपः' ( सू २४६९ )। व्यतिस्ते। व्यतिषाते। व्यतिषते। 'तासस्त्योः—' ( सू २१९१ ) इति सलोपः। व्यतिसे। 'धि च' ( सू २२४९ )। व्यतिध्वे। 'ह एति' ( सू २२५० )। व्यतिहे। व्यत्यसै। व्यत्यास्त। व्यतिषीत। व्यतिराते। व्यतिराते। व्यतिराते। व्यतिभाते। व्यतिभाते। व्यतिभाते। व्यतिबभे। २६८१ **न गतिहिंसार्थेभ्यः १ । ३ । १५ ॥** व्यतिगच्छन्ति। व्यतिघ्नन्ति। 'प्रतिषेधे हसादीनामुपसङ्ख्यानम्' ( वा ८९८ )।

---

णाऽयादेशयोः बोभूययिषयतीति रूपं सिद्धम्। इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां प्रत्ययमाला समाप्ता।

---

अथ आत्मनेपदप्रक्रिया निरूप्यते। आत्मनेपदपरस्मैपदव्यवस्थापकानि सूत्राणि प्रथमस्य तृतीयपादे पठितानि। तानि क्रमेण व्याख्यास्यन् व्याख्यातमपि सूत्रं पुनः स्मारयति–अनुदात्तङित इति। 'आत्मनेपद'मित्येतत् 'शेषात्कर्तरि परस्मैपदम्' इत्यतः प्रागनुवर्तते। भावकर्मणोः। भावः भावना क्रियेति पर्यायाः। कर्मशब्दः कर्मकारके वर्तते। भावे कर्मणि च यो लकारस्तस्यात्मनेपदमित्यर्थः। भावे उदाहरति–बभूवे इति। भूता भवनक्रियेत्यर्थः। कर्मण्युदाहरति–अनुबभूवे इति। 'आनन्द' इति शेषः। आनन्दकर्मिका वृत्ता अनुभवक्रियेत्यर्थः। कर्तरि कर्म। कर्मव्यतिहारशब्दं विवृण्वन्नाह–क्रियाविनिमये द्योत्ये इति। एवं च कर्मशब्दः क्रियापरः व्यतिहारशब्दो विनिमयपर इत्युक्तं भवति। अन्यस्येति। शूद्रादियोग्यं सस्यादिलवनं ब्राह्मणः करोतीत्यर्थः। परस्परकरणमपि कर्मव्यतिहार इति कैयटः। सम्प्रहरन्ते राजानः। कर्तृग्रहणं भावकर्मणोरित्यस्यानुवृत्तिनिवृत्त्यर्थम्। अन्यथा व्यतिलुनीत इत्यत्र न स्यात्। वस्तुतस्तु पृथक् सूत्रारम्भादेव सिद्धे कर्तृग्रहणमुत्तरार्थमिति भाष्ये स्पष्टम्। व्यति अस् ते इति स्थिते आह—श्नसोरिति। व्यतिस्ते इति। तपसे अयोग्यः शूद्रस्तपस्वी भवतीत्यर्थः। इह 'उपसर्गप्रादुर्भ्याम्' इति न षः यच्परकत्वाभावादिति भावः। व्यतिषाते इति। इह अच्परकत्वादुपसर्गप्रादुर्भ्यामिति षः। व्यति स् से इति स्थिते आह—तासस्त्योरिति। 'उपसर्गप्रादुर्भ्याम्' इति नेह षत्वम्, अस्त्यवयवस्य सकारस्य लुप्तत्वात्। व्यतिषाथे। व्यति स् ध्वे इति स्थिते आह—धि चेति। सलोप इति शेषः। व्यतिस् ए इति स्थिते आह—ह एतीति। सकारस्य हकार इति भावः। व्यत्यसै इति। लोडुत्तमपुरुषैकवचनम्। व्यत्यास्तेति। लङि रूपम्। व्यतिषीतेति। लिङि रूपम्। व्यतिराते इति। लटि प्रथमपुरुषे-

हसादयो हसप्रकाराः शब्दक्रियाः । व्यतिहसन्ति । व्यतिजल्पन्ति । 'हरतेरप्रतिषेधः' ( वा ८९९ )। सम्प्रहरन्ते राजानः । **२६८२ इतरेतरान्योऽन्योपपदाच्च १।३।१६** ॥ 'परस्परोपपदाच्चेति वक्तव्यम्' ( वा ६०० )। इतरेतरस्यान्योऽन्यस्य परस्परस्य वा व्यतिलुनन्ति । **२६८३ नेर्विशः १।३।१७** ॥ निविशते । **२६८४ परिव्यवेभ्यः क्रियः १।३।१८** ॥ अकर्त्रभिप्रायार्थमिदम् । परिक्रीणीते । विक्रीणीते । अवक्रीणीते । **२६८५ विपराभ्यां जेः १।३।१९** ॥ विजयते । पराजयते । **२६८६ आङो दोऽनास्यविहरणे १।३।२०** ॥ आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात् । विद्यामादत्ते । अनास्य—इति किम् । मुखं व्याददाति । आस्यग्रहणमविवक्षितम् । विपादिकां व्याददाति । पादस्फोटो विपादिका । नदी कूलं व्याददाति । 'पराङ्गकर्मकान्न निषेधः' ( वा ६०३ )। व्याददते पिपीलिकाः पतङ्गस्य मुखम् । **२६८७ क्रीडोऽनुसंपरिभ्यश्च १।३।२१** ॥ चादाङः । अनुक्रीडते । सङ्क्रीडते । परिक्रीडते । आक्रीडते । अनोः कर्मप्रवचनी-

---

**कद्विबहुवचनेषु समानमेव रूपम्** । व्यतिभात इति । **भाधातोः रूपम्** । व्यतिबभे इति । **लिटि रूपम्** । न गतिहिंसार्थेभ्यः । **कर्मव्यतिहारे आत्मनेपदं नेत्यर्थः । हसादिगणस्य अदर्शनादाह**—हसप्रकारा इति । **उपसर्गमनपेक्ष्य ये गतिहिंसयोर्वर्तन्ते तेषामेव ग्रहणलाभाय अर्थग्रहणम् । हृञ्धातुस्तु उपसर्गबलाद्धिंसायां वर्तते इति न तस्य प्रतिषेध इत्याह**—हरतेरप्रतिषेध इति । **अर्थग्रहणलभ्यमिदं वार्तिकम्** । इतरेतर । **'नात्मनेपद'मिति शेषः** । नेर्विशः । **निपूर्वाद्विशः आत्मनेपदं स्यादित्यर्थः । नेति निवृत्तम् । यद्यपि न्यविशतेत्यत्र न विशिनेः परः, अटा व्यवधानात् अटो विकरणान्ताङ्गभक्तत्वेन विशधात्ववयवत्वाऽभावात् । तथापि 'अड्व्यवाये उपसंख्यानम्' इति वार्तिकाल्लभ्यतीति 'शदेः शितः' इत्यत्र भाष्ये स्पष्टम्** । परिव्यवेभ्यः । **परि वि अव एभ्यः परस्मात् क्रीञ्धातोरात्मनेपदमित्यर्थः । ञित्वादात्मनेपदसिद्धेः किमर्थमिदमित्यत आह**—अकर्त्रभिप्रायार्थमिति । विपराभ्यां जेः । **वि परा आभ्यां परस्मात् जिधातोरात्मनेपदमित्यर्थः** । विजयते इति । **उत्कृष्टो भवतीत्यर्थः** । पराजयते इति । **निकृष्टो भवतीत्यर्थः** । आङो दो । **आस्यविहरणं मुखविकसनम् । दा इत्यस्य दः इति पञ्चमी । तदाह**—ददातेर्मुखविकसनादन्यत्रेति । विद्यामादत्ते इति । **गृह्णातीत्यर्थः । दाणो ञित्वेऽप्यकर्त्रभिप्रायार्थमिदम्** । अविवक्षितमिति । **'अविहरणे' इत्येतावदेव विवक्षितमित्यर्थः** । विपादिकां व्याददातीति । **क्षारौषधादिना विदारयतीत्यर्थः । अत्र आस्यविहरणाऽभावेऽपि विकसनसत्त्वादात्मनेपदमिति भावः** । नदी कूलं व्याददातीति । **भिनत्तीत्यर्थः । अत्रापि विकसनसत्त्वादास्यविहरणाऽभावेऽपि नात्मनेपदम्** । पराङ्गकर्मकान्न निषेध इति । **वार्तिकम्** । पतङ्गस्येति । **पक्षिणो मुखं भक्षणाय**

याम । उपसर्गेण समा साहचर्यात् । माणवकमनुक्रीडति । तेन सहेत्यर्थः । 'तृतीयार्थे' ( सू ५४६ ) इत्यनोः कर्मप्रवचनीयत्वम् । 'समोऽकूजने' ( वा ९०४ ) । सङ्क्रीडते । कूजने तु सङ्क्रीडति चक्रम् । 'आगमेः क्षमायाम्' (वा ६०५) । ण्यन्तस्येदं ग्रहणम् । आगमयस्व तावत् । मा त्वरिष्टा इत्यर्थः । 'शिक्षेर्जिज्ञासायाम्' ( वा ९०६ ) धनुषि शिक्षते । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः । 'आशिषि नाथः' ( वा ९१० ) आशिष्येवेति नियमार्थं वार्तिकमित्युक्तम् । सर्पिषो नाथते । सर्पिर्मे स्यादित्याशास्त इत्यर्थः । कथं 'नाथसे किमु पतिं न भूभृताम्' इति । 'नाधसे' इति पाठ्यम् । 'हरतेर्गतताच्छील्ये' ( वा ६०८ ) । गतं प्रकारः । पैतृकमश्वा अनुहरन्ते । मातृकं गावः । पितुर्मातुश्च गतं प्रकारं सततं परिशीलयन्तीत्यर्थः । ताच्छील्ये किम् । मातुरनुहरति । 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' ( वा ६०७ ) । हर्षादयो विषयाः । तत्र हर्षो विक्षेपस्य कारणम् । इतरे

---

विकासयन्तीत्यर्थः । क्रीडोऽनु । चादाङ् इति । तथाच अनु सम् परि आङ् एभ्यः परस्मात् क्रीडधातोरात्मनेपदमित्यर्थः । 'अनोः कर्मप्रवचनीयात्त्व' इति वार्तिकम् । तदिदं न्यायसिद्धमित्याह—उपसर्गेण समेति । 'समोऽकूजने' इति वार्तिकम् । समः परस्मात् अकूजने विद्यमानात् क्रीडेरात्मनेपदमित्यर्थः । कूजने तु संक्रीडति चक्रमिति । कूजतीत्यर्थः । आगमेः क्षमायामिति । 'आत्मनेपद'मिति शेषः । वार्तिकमिदम् । ण्यन्तस्येदं ग्रहणमिति । भाष्ये ण्यन्तस्यैवोदाहरणादिति भावः । आगमयस्व तावदिति । कञ्चित्कालं सहस्वेत्यर्थः । आङुपसर्गवशात् गमधातुः क्षमायां वर्तते । 'ज्ञप्यर्थाश्च' इति चुरादिगणसूत्रेण स्वार्थे णिच् । चुरादेराकृतिगणत्वाद्वा । मा त्वरिष्ठा इति । फलितार्थकथनम् । 'शिक्षेर्जिज्ञासायाम्' । इत्यपि वार्तिकम् । धनुषि शिक्षते इति । वैषयिके आधारे सप्तमी । शकिः सन्नन्तः । 'सनि मीमा' इति इस् । अभ्यासलोपश्च । तदाह—धनुर्विषये इत्यादि । 'शिक्ष विद्योपादाने' इत्यस्य तु नेह ग्रहणम् , अनुदात्तेत्त्वादेव सिद्धेरिति भावः । कथमिति । भूभृतां पतिं किमु न नाथसे न याचसे इत्यर्थः । आशिषः अप्रतीतेः कथमात्मनेपदमित्यर्थः । नाधसे इति पाठ्यमिति । तवर्गचतुर्थान्तोऽयम् । 'आशिषि नाथः' इति नियमस्तु तवर्गद्वितीयान्तस्यैवेति भावः । 'हरतेर्गतताच्छील्ये' इति वार्तिकम् । आत्मनेपदमिति शेषः । गतं प्रकार इति । वृत्तमित्यर्थः । ताच्छील्यं स्वभावानुसरणम् । गतिताच्छील्यमिति यावत् । गतेति पाठे भावे क्तः । पैतृकमश्वा इति । पैतृकं वृत्तम् अश्वाः स्वभावादनुसरन्तीत्यर्थः । मातृकं गाव इति । अनुहरन्ते इत्यनुषज्यते । मातुरनुहरतीति । अनुकरोतीत्यर्थः । अत्र सादृश्यमात्रं विवक्षितं, न तु गतिताच्छील्यमिति भावः । किरतेरिति । वार्तिकम् । हर्षः प्रमादः, जीविका जीवनोपायभक्षणम्, कुलायकरणं आश्रयसम्पत्तिः, एषु कॄधातोरात्मनेपदमित्यर्थः । ननु कॄधातोर्विक्षेपार्थकस्य कथमेषु वृत्तिरित्यत आह—हर्षादयो विषया इति । धात्वर्थत्वाऽभावेऽपि पदान्तरसम-

**विभाषोपपदेन प्रतीयमाने १।३।७७॥** 'स्वरितञितः' इत्यादिपञ्चसूत्र्या यदात्मनेपदं विहितं तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात्। स्वं यज्ञं यजति-यजते वा। स्वं कटं करोति-कुरुते वा। स्वं पुत्रमपवदति-अपवदते वा। स्वं यज्ञं कारयति—कारयते वा। स्वं व्रीहिं संयच्छति-संयच्छते वा। स्वां गां जानाति-जानीते वा। इति तिङन्ते आत्मनेपदप्रकरणम्।

## अथ तिङन्ते परस्मैपदप्रकरणम् ॥ १९ ॥

'शेषात्कर्तरि परस्मैपदम्' (सू २१५९)। अत्ति। **२७४५ अनुपराभ्यां कृञः १।३।७९॥** कर्तृगेऽपि फले गन्धनादौ च परस्मैपदार्थमिदम्। अनुकरोति। पराकरोति। कर्तरीत्येव। भावकर्मणोर्मा भूत्। न चैवमपि कर्मकर्तरि प्रसङ्गः।

---

इति प्रथमान्तस्य कथमिहान्वय इत्यत आह—नृपेणेति विपरिणाम इति। **अवालुञ्चे इत्यत्रान्वितं नृप इति प्रथमान्तं तृतीयया विपरिणमितमत्रानुषज्यते इत्यर्थः।** विभाषोपपदेन। स्वरितञित इत्यादीति। **'स्वरितञितः कर्त्रभिप्राये क्रियाफले, 'अपाद्वदः,' 'णिचश्च,' 'समुदाङ्भ्यो यमोऽग्रन्थे,' 'अनुपसर्गाज्ज्ञः' इति पञ्चसूत्रीत्यर्थः। समीपोच्चारितं पदमुपपदम्, नतु तत्रोपपदं सप्तमीस्थम्' इति सङ्केतितम्। असम्भवात्। तदाह**—समीपोच्चारितेन पदेनेति। **फलस्य कर्तृगामित्वे नित्यमात्मनेपदे पञ्चसूत्र्या प्राप्ते विभाषेयमिति 'न वेति विभाषा' इति सूत्रे भाष्ये स्पष्टम्।** स्वं यज्ञमिति। **स्वीयमित्यर्थः। अत्र स्वशब्देनैव फलस्याऽऽत्मगामित्वावगमात् 'स्वरितञितः' इति नित्यात्मनेपदस्यानेन विकल्पः। स्वं यज्ञं कारयतीत्यत्र 'णिचश्च' इत्यस्याऽनेन विकल्पः।** स्वं व्रीहिमिति। **अत्र 'समुदाङ्भ्यो यमः' इत्यस्याऽनेन विकल्पः।** स्वां गामिति। **अत्र 'अनुपसर्गाज्ज्ञः' इत्यस्याऽनेन विकल्पः।** इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायाम् आत्मनेपदव्यवस्था समाप्ता।

**अथ परस्मैपदव्यवस्थां निरूपयितुमुपक्रमते**—शेषात्कर्तरीति। अनुपराभ्यां **कृञः। 'परस्मैपद'मिति शेषः। ननु 'स्वरितञितः' इत्यात्मनेपदस्य कर्तृगामिन्येव फले विधानादकर्तृगामिनि फले 'शेषात्कर्तरि' इति परस्मैपदस्य सिद्धत्वात् किमर्थमिदमित्यत आह**—कर्तृगेऽपीति। गन्धनादाविति। **'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु' इत्यर्थः।** मा भूदिति। **भावे कर्मणि लकारस्य कर्तृगे फले परस्मैपदनिवृत्त्यर्थं कर्तरीत्यस्याऽनुवृत्तिरिति भावः। ननु कर्तरीत्यस्यानुवृत्तावपि 'अनुक्रियते शब्दः स्वयमेवे'त्यत्र कर्मकर्तरि परस्मैपदं दुर्वारमित्याशङ्क्य परिहरति**—नचेति। **एवमपि कर्तरीत्यस्यानुवृत्तावपि कर्मकर्तरि आत्मनेपदस्य प्रसक्तो न शङ्क्य इत्यर्थः। कुत इत्यत आह**—कार्यातिदेशेति। **तत्र कर्मकर्तरि 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यात्मनेपदेन परेणाऽस्य परस्मैपदस्य बाधादित्यन्वयः। ननु कर्मणि यच्छास्त्रं तत् 'कर्मवत्क-**

कार्यातिदेशपक्षस्य मुख्यतया तत्र 'कर्मवत्कर्मणा—' (सू २७६६) इत्यात्मनेपदेन परेणास्य बाधात्। शास्त्रातिदेशपक्षे तु 'कर्तरि कर्म' ( सू २६८० ) इत्यतः 'शेषात्—' (सू २१५९) इत्यतश्च कर्तृग्रहणद्वयमनुवर्त्य कर्तैव यः कर्ता न तु कर्मकर्ता तत्रेति व्याख्येयम्। **२७४६ अभिप्रत्यतिभ्यः क्षिपः १।३।८०॥** क्षिप प्रेरणे। स्वरितेत्। अभिक्षिपति। **२७४७ प्राद्वहः १।३।८१॥** प्रवहति। **२७४८ परेर्मृषः १।३।८२॥** परिमृष्यति। भौवादिकस्य तु परिमर्षति। इह परेरिति योगं विभज्य वहेरपीति केचित्। **२७४९ व्याङ्परिभ्यो रमः १।३।८३॥** विरमति। **२७५० उपाच्च १।३।८४॥** यज्ञदत्तमुपरमति। उपरमयतीत्यर्थः। अन्तर्भा-

र्मणा' इति कर्मकर्तर्यतिदिश्यते। तथा चाऽत्र कर्मकर्तरि 'भावकर्मणोः' इत्यात्मनेपदशास्त्रमिह प्राप्तम्। तस्य च परत्वाभावात् 'अनुपराभ्यां कृञः' इत्यनेन कथं बाधः स्यादित्यत आह—कार्यातिदेशपक्षस्य मुख्यतयेति। शास्त्रातिदेशस्य कार्यातिदेशार्थतया कार्यातिदेशस्य मुख्यत्वम्। ततश्च 'कर्मवत् कर्मणे'त्यनेन कर्मणि विहितमात्मनेपदं कर्मकर्तरि विधीयते। तस्य च परत्वात्तेनात्मनेपदेन 'अनुपराभ्याम्' इति परस्मैपदं कर्मकर्तरि बाधमर्हतीति भावः। 'कर्मवत्कर्मणा' इत्यत्र शास्त्रातिदेशमभ्युपगम्य आह—शास्त्रातिदेशपक्षे त्विति। 'अनुपराभ्यां कृञः' इत्यत्र 'कर्तरि कर्मव्यतिहारे' इत्यस्मादेकं कर्तृग्रहणमनुवर्तते। तथा 'शेषात् कर्तरि परस्मैपदम्' इत्यस्मात् द्वितीयं कर्तृग्रहणमनुवर्तते। तथा च 'स्वभावत एव यः कर्ता, नतु विवक्षाधीनः कर्मकर्ता तथाविधकर्तर्येव अनुपराभ्यां कृञः परस्मैपद'मिति लभ्यते। एवञ्च कर्मकर्तरि नास्य प्रवृत्तिरित्यर्थः। अभिप्रति। 'परस्मैपद'मिति शेषः। स्वरितेदिति। ततश्च कर्तृगामिनि फले आत्मनेपदे प्राप्ते अनेन तत्रापि परस्मैपदमिति भावः। अभिक्षिपतीति। प्रतिक्षिपति अतिक्षिपति इत्यप्युदाहार्यम्। प्राद्वहः। प्रपूर्वाद्वहेः परस्मैपदमित्यर्थः। वहेः स्वरितेत्त्वात् कर्तृगामिन्यात्मनेपदे प्राप्ते तत्राप्यनेन परस्मैपदम्। परेर्मृषः। 'परस्मैपद'मिति शेषः। 'मृष तितिक्षायाम्' इति दैवादिकस्य स्वरितेत्त्वात् पदद्वये प्राप्ते अयं विधिः। तदाह—परिमृष्यतीति। चौरादिकस्यापि 'आधृषाद्वा' इति णिजभावे स्वरितेत्त्वेऽपि परस्मैपदमेव परिमर्षतीति। भौवादिकस्य त्विति। 'मृषु सहने सेचने च' इति भौवादिकस्य तु परस्मैपदित्वात् परिमर्षतीत्येव रूपं सिद्धम्। अतोऽस्मिन् सूत्रे तस्य न ग्रहणमिति भावः। इहेति। 'परे'रिति योगो विभज्यते। 'वह' इत्यनुवर्तते। परेर्वहः परस्मैपदमित्यर्थः। परिवहति। 'मृष' इति योगान्तरम्। तत्र परेः इत्यनुवर्तते, परेः मृषः परस्मैपदमित्युक्तोऽर्थः। इति केचिदाहुरित्यर्थः। भाष्ये त्वयं योगविभागो न दृश्यते। व्याङ्परिभ्यो रमः। 'परस्मैपद'मिति शेषः। रमेरनुदात्तेत्त्वाद्विधिरयम्। विरमतीति। आरमति, परिरमति, इत्यप्युदाहार्यम्। उपाच्च। उपपूर्वादपि रमेः परस्मैपदमित्यर्थः। उत्तरसूत्रे उपादित्यस्यैवाऽनुवृत्तये 'व्याङ्पर्युपेभ्यो रमे'रिति नोक्तम्।

वितण्यर्थोऽयम् । २७५१ विभाषाऽकर्मकात् १।३।८५॥ उपाद्रमेरकर्मकात्पर-स्मैपदं वा । उपरमति–उपरमते वा । निवर्तते इत्यर्थः । २७५२ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः १।३।८६॥ एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । 'णिचश्च' ( सू २५६४ ) इत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । अध्यापयति । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्यन्दयतीत्यर्थः । २७५३ निगरणचलनार्थे-

अत्र विरमतीत्यर्थे उपरमतीति नोदाहरणम् । तस्य अकर्मकतया उत्तरसूत्रेण परस्मैपदविकल्पविधानात् । अतः सकर्मकमुदाहरति—यज्ञदत्तमुपरमतीति । ननु विरामार्थकत्वात् कथं सकर्मकतेत्यत आह—उपरमयतीत्यर्थ इति । ननु णिजभावात् कथमयमर्थो लभ्यते इत्यत आह—अन्तर्भावितण्यर्थोऽयमिति । धातूनामनेकार्थत्वादिति भावः । विभाषाऽकर्मकात् । उपादिति, रम इति परस्मैपदमिति चानुवर्तते । तदाह–उपाद्रमेरिति । बुधयुध । बुध युध नश जन इङ् प्रु द्रु स्रु एषां द्वन्द्वः । बोधयति पद्ममिति । 'सूर्य' इति शेषः । बुध्निर्विकसनार्थकः । विकसति पद्मम् । तद्विकासयति सूर्य इत्यर्थः । 'अणाव-कर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदं तु न सिध्यति, अणौ पद्मस्य कर्तृतया चित्तवत्कर्तृकत्वाऽभावात् । योधयति काष्ठानीति । काष्ठानि युध्यन्ते स्वयमेव । तानि योधयतीत्यर्थः । अणावचित्तवत्कर्तृकत्वात् 'अणावकर्मकात्' इत्यस्य न प्राप्तिः । अत एव योधयति देवदत्तमिति नोदाहृतम् 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इत्येव सिद्धेः । एवमग्रेऽपि ज्ञेयम् । नाशयति दुःखमिति । दुःखं नश्यति, तत् नाशयति हरिरित्यर्थः । जनयति सुखमिति । जायते सुखम्, तत् जनयति हरिरित्यर्थः । अध्यापयतीति । अधीते वेदं विप्रः, तमध्यापयतीत्यर्थः । 'प्रु गतौ' इत्यस्योदाहरति—प्रावयतीति । गत्यर्थकत्वं मत्वा आह—प्रापयतीत्यर्थ इति । द्रावयतीति । द्रवत्याज्यं तत् द्रावयतीत्यर्थः । धातोर्द्रवीभावार्थकत्वं मत्वा आह—विलापयतीत्यर्थ इति । स्रावयतीति । स्रवति जलं, तत्स्रावयतीत्यर्थः । धातोः स्यन्दनार्थकत्वं मत्वा आह—स्यन्दयतीत्यर्थ इति । 'प्रीतिं भक्तजनस्य यो जनयते' इत्यात्मनेपदं तु प्रामादिकमेव । यद्वा भक्तजनः हरौ प्रीतिं जनयत्यात्मविषये तां हरिः जनयते इति ण्यन्ताण्णौ रूपम् । प्रयोज्यकर्तुः शेषत्वविवक्षया भक्तजनस्येति षष्ठीत्याहुः । निगरण । निगरणं भक्षणम् । चलनं कम्पनम् । एतदर्थकेभ्यो ण्यन्तेभ्यः परस्मैपदमित्यर्थः । पूर्वसूत्रे प्रुद्रुस्रूणां ग्रहणं तु अचलनार्थानामेव । अत एव मूले प्रापयतीत्यादि व्याख्यातम् । पानमपि भक्षणमेव 'अपोऽश्नाति' इति श्रुतेः । अत एव 'न पादम्याङ्यमाङ्यस' इति सूत्रे पाग्रहणमर्थवत् । 'न पीयतां नाम चकोरजिह्वया कथंचिदेतन्मुखचन्द्रचन्द्रिका । इमां किमाचामय से न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशी ॥' इति श्रीहर्षश्लोके आचामयेति पृथक्पदम् । अः विष्णुः तस्य स्त्री ईः लक्ष्मीः । तया

ण्यश्च १।३।८७॥ निगारयति । आशयति । भोजयति । चलयति । कम्पयति । 'अदेः प्रतिषेधः' ( वा ९५९ ) आदयते देवदत्तेन । 'गतिबुद्धि—( सू ५४० ) इति कर्मत्वम् 'आदिखाद्योर्न' ( वा ११०९ ) इति प्रतिषिद्धम् । 'निगरणचलन—' इति सूत्रेण प्राप्तस्यैवायं निषेधः । शेषादित्यकर्त्रभिप्राये परस्मैपदं स्यादेव । आदयत्यन्नं बटुना । **२७५४ अणावकर्मकाच्चित्तवत्कर्तृकात् १।३।८८॥** ण्यन्तात्परस्मैपदं स्यात् । शेते कृष्णः तं गोपी शाययति । **२७५५ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः १।३।८९॥** एभ्यो ण्यन्तेभ्यः परस्मैपदं न । पिबतिर्निगरणार्थः । इतरे चित्तवत्कर्तृका अकर्मकाः नृतिश्चलनार्थोऽपि । तेन सूत्रद्वयेन प्राप्तिः । पाययते । दमयते । आयामयते । आयासयते । परिमोहयते ।

---

सहिता से इत्येकारान्तस्य सेशब्दस्य सम्बोधनम् । 'एङ्ह्रस्वात्' इति सम्बुद्धिलोप इति व्याख्येयमिति प्रौढमनोरमायां स्थितम् । वस्तुतस्तु चक्षुषोर्मुखचन्द्रिकाकर्मकपानात्मकाचमनासम्भवादाचामिरादरे लाक्षणिकः । अतो निगरणार्थकत्वाऽभावान्न परस्मैपदम् । नचैवं सति प्रत्यवसानार्थकत्वाभावाच्चक्षुषोः 'गतिबुद्धि' इति कर्मत्वं न स्यादिति शङ्क्यम्, न ह्याचामिरत्र केवले आदरे वर्तते । किन्तु दर्शनपूर्वकादरे वर्तते । सादरज्ञाने लाक्षणिक इति यावत् । ततश्च बुद्ध्यर्थकत्वादाचामेः चक्षुषोः कर्मत्वं निर्बाधमित्यादि शब्देन्दुशेखरे प्रपञ्चितम् । अदेः प्रतिषेधः इति । अदेर्ण्यन्तात् निगरणार्थकतया प्राप्तस्य परस्मैपदस्य प्रतिषेधो वक्तव्य इत्यर्थः । 'आदयते देवदत्तेन'त्यत्र अदेः प्रत्यवसानार्थकत्वात् प्रयोज्यकर्तुर्देवदत्तस्य कर्मत्वमाशङ्क्य आह—गतिबुद्धीति । नन्वादयत्यन्नं बटुनेति कथम् । निगरणार्थकतया प्राप्तस्य परस्मैपदस्य अदेः प्रतिषेधादित्यत आह—निगरणचलनेति सूत्रेण प्राप्तस्यैवायं निषेध इति । ननु शेषात्कर्तरि इति प्राप्तस्येत्येवकारार्थः, 'अनन्तरस्य' इति न्यायादिति भावः । अणावकर्मकात् । ण्यन्तादिति शेषपूरणम्, णेरित्यनुवृत्तेरिति भावः । अणौ यो धातुरकर्मकः चित्तवत्कर्तृकश्च, तस्मात् ण्यन्तात्परस्मैपदमिति यावत् । चित्तवत्कर्तृकादिति किम् । व्रीहयः शुष्यन्ति, तान् शोषयते । अकर्मकात्किम् । कटं करोति तं प्रयुङ्क्ते । कटं कारयते । न पादम्याङ्यम् । पा दमि आङ्यम् आङ्यस परिमुह रुचि नृति वद वस् एषां समाहारद्वन्द्वात्पञ्चमी । प्राप्तस्य निषेध्यत्वात् प्राप्तिमुपपादयति—पिबतिर्निगरणार्थ इति । ततश्च 'निगरणचलनार्थेभ्यः' इति प्राप्तिरिति भावः । इतरे इति । दम्यादयः अणौ चित्तवत्कर्तृका अकर्मकाश्चेत्यर्थः । ततश्च 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति प्राप्तिरिति भावः । नृतिरिति । नृतिश्चलनार्थकः । अणौ चित्तवत्कर्तृकः, अकर्मकश्चेत्यर्थः । सूत्रद्वयेनेति । 'अणावकर्मकात्' इति 'निगरणचलनार्थेभ्यश्च' इति च सूत्रद्वयेनेत्यर्थः । पाययते इति । 'शाच्छासाह्वाव्यावेपां युक्' इति पुकोऽपवादो युक् । दमयते इति । 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्वाद्ध्रस्वः । ननु दिवादौ दमिः सकर्मक

रोचयते । नर्तयते । वादयते । वासयते । 'धेट उपसंख्यानम्' ( वा १६२ ) । 'धापयेते शिशुमेकं समीची' । अकर्त्रभिप्राये 'शेषात्—' ( सू २१५६ ) इति परस्मैपदं स्यादेव । वत्सान्पाययति पयः । दमयन्ती कमनीयतामदम् । भिक्षां वासयति । 'वाक्यषः' ( सू २६६९ ) लोहितायति । लोहितायते । 'द्युद्भ्यो लुङि' ( सू २३४५ ) । अद्युतत्–अद्योतिष्ट । 'वृद्भ्यः स्यसनोः' ( सू २३४७ ) । वर्त्स्यति–वर्तिष्यते । विवृत्सति–विवर्तिषते । 'लुटि च क्लृपः' ( सू २३५१ ) । कल्प्ता । कल्प्तासि । कल्पितासे । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते । चिक्लृप्सति । चिकल्पिषते । चिक्लृप्सते । इति तिङन्ते परस्मैपदप्रकरणम् ।

## अथ भावकर्मतिङ्प्रकरणम् ॥ २० ॥

अथ भावकर्मणोर्लडादयः । 'भावकर्मणोः' ( सू २६७९ ) इति तङ् । २७५६ **सार्वधातुके यक् ३।१।६७॥** धातोर्यक्प्रत्ययः स्याद्भावकर्मवाचिनि सार्वधातुके

---

**इत्युक्तम् । अतः कथमिह 'अणावकर्मकात्' इति प्राप्तिरिति चेन्न दमेः परस्मैपदनिषेधादेव दमिरकर्मकोऽपि । अतो दमिः सकर्मक इत्यस्य न विरोधः ।** आयामयते इति । **'यमोऽपरिवेषणे' इति मित्त्वनिषेधान्न ह्रस्वः ।** वासयते इति । **'वस निवासे' इति भौवादिकस्यैवात्र ग्रहणम् । ननु 'वस आच्छादने' इत्यादादिकस्याऽपि, तस्य सकर्मकत्वादेवाऽप्राप्तेः । 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहण'मित्युक्तेश्च ।** धेट उपसंख्यानमिति । **'परस्मैपदनिषेधस्ये'ति शेषः । धापयेते शिशुमिति मन्त्रः । ननु 'वत्सान् पाययति पयः', 'दमयन्ती कमनीयतामदम्' 'भिक्षां वासयति' इति च कथम् । 'न पादम्याङ्यम' इति परस्मैपदस्य निषेधादित्यत आह—**अकर्त्रभिप्राये इति । **'अनन्तरस्य' इति न्यायेन 'निगरणचलनार्थेभ्यश्च' 'अणावकर्मकात्' इति सूत्रद्वयप्राप्तस्यैव 'न पादम्याङ्यमाङ्यस' इति निषेध इति भावः । 'वा क्यषः' इत्यादि प्राग्व्याख्यातमपि सूत्रक्रमेण पुनरुपात्तम् ।** इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां परस्मैपदव्यवस्था समाप्ता ।

**अथ भावकर्मतिङ्प्रकरणं निरूप्यते । 'लः कर्मणि' इत्यत्र सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च, अकर्मकेभ्यस्तु भावे कर्तरि च लकारा विहिताः । तेषु कर्तरि लकारा निरूपिताः । अथेदानीं भावकर्मणोर्लकारा निरूप्यन्ते इति प्रतिजानीते—** अथ भावकर्मणोर्लडादय इति । **निरूप्यन्ते इति शेषः । तत्र 'शेषात्कर्तरि परस्मैपदम्' 'अनुपराभ्यां कृञः' इत्यादिपरस्मैपदविधिषु प्राप्तेष्वाह**—भावकर्मणोरिति तङिति । सार्वधातुके यक् । धातोरिति । **'धातोरेकाच' इत्यतस्तदनुवृत्तेरिति भावः ।** भावकर्मवाचिनीति । **'चिण्भावकर्मणोः' इत्यतस्तदनुवृत्तेरिति भावः । घटस्य भावो घटत्वमित्यादौ प्रकृतिजन्यबोधे प्रकारो भावः । कवेरयं भावः इत्यादौ अभिप्रायः । 'भावः पदार्थस-**

परे। भावो भावना उत्पादना क्रिया। सा च धातुत्वेन सकलधातुवाच्या भावार्थ-

त्तायां क्रियाचेष्टात्मयोनिषु। विद्वल्लीलास्वभावेषु भूत्यभिप्रायजन्तुषु॥' इति नानार्थरत्नमाला। 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्तुषु' इत्यमरः। इह तु 'लः कर्मणि' इत्यत्र भावशब्दो भावनायां यौगिक इत्याह—भावो भावनेति। 'लः कर्मणि' इत्यत्र भावशब्देन भावना विवक्षितेति भावः। भावनाशब्दस्य चिन्तायामपि प्रसिद्धत्वादाह—उत्पादनेति। उत्पत्त्यनुकूलो व्यापार इत्यर्थः। एवञ्च भूधातोरुत्पत्त्यर्थकाद्धेतुमण्यौ वृद्धयावादेशयोःभाविशब्दात् 'एरच्' इति भावे अचि णिलोपे भावशब्दः, भावयतेरुत्पत्त्यर्थकाद्धेतुमण्यौ स्त्रियामित्यधिकारे 'ण्यासश्रन्थो युच्' इति युचि अनादेशे टापि भावनाशब्द इति बोध्यम्। उत्पादना चेयं धात्वर्थान्नातिरिच्यते इति दर्शयितुमाह—क्रियेति। धात्वर्थात्मकक्रियैव उत्पादनेत्यर्थः। तथाहि फलव्यापारयोर्धातुरिति सिद्धान्तः। पचधातोः पाकोऽर्थः। पाको विक्लित्यनुकूलव्यापारः। तत्र विक्लित्त्यंशः फलम्। अधिश्रयणादिस्तदनुकूलो व्यापारः। तथाविधव्यापाराश्रयो देवदत्तादिः कर्ता, 'धातूपात्तव्यापाराश्रयः कर्ते'ति सिद्धान्तात्। अधिश्रयणादिव्यापारजन्या विक्लित्तिः फलं, तदाश्रयत्वादोदनं कर्म, 'व्यापारजन्यफलशालि कर्मे'ति सिद्धान्तात्। एवं सकर्मकेषु सर्वत्र ज्ञेयम्। 'एध वृद्धौ' इत्यस्मिन्नकर्मकेऽपि वृद्ध्यनुकूलव्यापारो धात्वर्थः। नचैवं सति 'एधते देवदत्त' इत्यत्र धातूपात्तव्यापाराश्रयत्वाद्व्यापारजन्यवृद्धिरूपफलाश्रयत्वाच्च कर्तृत्वं कर्मत्वं च स्यादिति वाच्यम्, 'धातूपात्तव्यापारजन्यतद्व्यापारव्यधिकरणफलाश्रयत्वं कर्मत्व'मिति सिद्धान्तात्। एवञ्च फलोत्पत्त्यनुकूलव्यापारात्मिका क्रिया धात्वर्थ इति सिद्धम्। एतेन क्रियावाची धातुः, धातुवाच्या क्रियेत्यन्योन्याश्रयोऽपि निरस्तः। उत्पत्त्यनुकूलव्यापारस्यैव क्रियात्वात्। तदुक्तम्—'व्यापारो भावना सैवोत्पादना सैव च क्रिया' इति। ननु उत्पत्त्यनुकूलव्यापारस्यैव सर्वत्र धातुवाच्यत्वे सर्वेषां धातूनामेकार्थत्वापत्तिः। विक्लित्त्यादितत्तत्फलोत्पत्त्यनुकूलव्यापारार्थकत्वं तु न सम्भवति। एकैकस्य धातोर्विक्लित्त्यादितत्तत्फलांशे, तदनुकूलव्यापारात्मकव्यापारसामान्ये च वाचकत्वानुपपत्तेरित्यत आह—सा च धातुत्वेन सकलधातुवाच्येति। पचयादयो धातुत्वेन रूपेण उत्पत्त्यनुकूलव्यापारात्मिकां क्रियामाहुः। पचित्वादिविशेषरूपेण तु विक्लित्यादितत्तत्फलांशमाहुः। तथाच वाचकतावच्छेदकभेदाद्विक्लित्यादिफलविशेषस्य क्रियासामान्यस्य च वाच्यता सङ्गच्छते इति भावः। तथाच भट्टिराह—'विभज्य सेनां परमार्थकर्मा सेनापतीन्नापि पुरन्दरोऽथ। नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून्॥' इति। अस्तिभवतिविद्यतीनामपि सत्तानुकूलव्यापार एवार्थः। तत्र सत्ता आत्मभरणम्। तदनुकूलव्यापारस्तु जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यति, इति वार्ष्यायणिप्रणीतषड्भावविकारेष्वन्यतमो यथायथं ज्ञेयः। भूवादिसूत्रे भाष्ये स्पष्टमेतत्। प्रपञ्चितं च मञ्जूषायामित्यलम्। ननु उत्पादनात्मकक्रियारूपस्य भावस्य

फलकारेणानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याऽभावात्प्रथमपुरुषः। तिङ्वाच्यभावनाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि। किन्त्वेकवचनमेव। तस्यौत्सर्गिकत्वेन संख्यानपेक्षत्वात्। अनभिहिते कर्तरि तृतीया। त्वया। मया अन्यैश्च भूयते। बभूवे। २७५७ **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च** ६।४।६२॥ उपदेशे योऽच् तदन्तानां हनादीनां

---

धातुवाच्यत्वे 'लः कर्मणि च भावे च' इति भावे कथं लकारविधिः। अनन्यलभ्यस्यैव शब्दार्थत्वादित्यत आह—भावार्थकलकारेणानूद्यते इति। 'द्वौ, त्रयः' इत्यादौ द्विवचनबहुवचनवदिति भावः। युष्मदस्मद्भ्यामिति। युष्मदि अस्मदि च तिङ्समानाधिकरणे उपपदे मध्यमोत्तमपुरुषौ विहितौ। युष्मदस्मदोस्तिङ्सामानाधिकरण्यं च तिङ्वाच्यकारकवाचित्वमेव। भावे लकारे तु 'आस्यते त्वया' 'आस्यते मया' इत्यादौ भाव एव तिङ्वाच्यः न तु युष्मदस्मदर्थौ। अतो न मध्यमोत्तमावित्यर्थः। कर्मलकारे तु 'त्वं वन्द्यसे,' 'अहं वन्द्ये' इत्यादौ लकारस्य युष्मदस्मदोश्च सामानाधिकरण्यसम्भवात्पुरुषत्रयमपि यथायथमुदाहरिष्यते। तिङ्वाच्येति। सत्त्वं द्रव्यं लिङ्गसंख्यान्वययोग्यम्। तिङ्वाच्या या भावना क्रिया सा असत्त्वरूपा लिङ्गसंख्यान्वयायोग्या, शब्दशक्तिस्वभावात्। ततश्च तस्यां तिङ्वाच्यभावनायां द्वित्वबहुत्वयोरप्रतीतेः युवाभ्यां युष्माभिर्वा आस्यते इत्यादौ न द्विवचनं, बहुवचनं चेत्यर्थः। तिङ्वाच्येत्यनेन कृद्वाच्यायाः क्रियायाः लिङ्गसंख्यान्वयित्वात्मकं सत्त्वरूपत्वमस्तीत्युक्तं भवति। तद्यथा—पाकौ पाकाः इत्यादि। तदुक्तं—'सार्वधातुके यक्' इति सूत्रे भाष्ये 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति। द्रव्यवत् लिङ्गसंख्यान्वयं लभते इत्यर्थः, शब्दशक्तिस्वभावादिति भावः। ननु तिङ्वाच्यभावनाया असत्त्वरूपतया द्विबहुवचनाऽभावे आस्यते इत्यादौ एकवचनं च न स्यादित्यत आह—किन्त्वेकवचनमेवेति। तिङ्वाच्यभावलकारस्येति शेषः। तस्येति। 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति सूत्रन्यासं भङ्क्त्वा 'एकवचनं' 'द्विबहुषु द्विबहुवचने' इति सूत्रन्यासः कर्तव्यः। तत्र द्वित्वबहुत्वयोर्द्विबहुवचननियमे सति तयोरविषये एकवचनमिति लभ्यते इति भाष्ये स्पष्टम्। एवञ्च एकवचनस्य एकत्वमुत्सृज्य द्विबहुवचनान्यविषये विहितत्वेन औत्सर्गिकतया एकत्वसंख्यानपेक्षत्वात् भावलकारस्य असत्त्वरूपभाववाचित्वेऽप्येकवचनमेवेति भावः। अनभिहिते इति। भावलकारे कर्तुस्तिङ्वाच्यत्वाभावेन अनभिहितत्वात्तृतीयेत्यर्थः। त्वया मयेति। त्वत्कर्तृकं मत्कर्तृकम् अन्यकर्तृकं भवनमित्यर्थः। स्यसिच्। अच् हन् ग्रह दृश् एषां द्वन्द्वात् षष्ठी। उपदेश इत्यच एव विशेषणम्, नेतरेषाम्, अव्यभिचारात्। तदाह—उपदेशे योऽजिति। 'अजिग्यस्य उपदेशान्वयित्वेऽपि सौत्रः समासः। 'अजि'ति लुप्तषष्ठीकं वा। 'चिण्व' दिति सप्तम्यन्ताद्वतिः 'स्यसिच्सीयुट्ता-

च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु परेषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च। अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न। इट्चाधातुके इत्यधिकृतं सीयुटो विशेषणं, नेतरेषामव्यभिचारात्। चिण्वद्भावाद्वृद्धिः। (नित्यश्चायं वलि-

सिच्वित्युपमेयतः सप्तमीदर्शनात्। तदाह—चिणीवेति। अङ्गकार्यमिति। अङ्गस्येत्यधिकृतत्वादिति भावः। 'भावकर्मवाचिषु स्यादिष्विति' नार्थः, सीयुटो लिङागमतया भावकर्मवाचित्वेऽपि स्यसिच्तासीनां भावकर्मवाचित्वाऽभावात्। नापि भावकर्मवाचिनि प्रत्यये परे ये स्यादयस्तेष्वित्यर्थः, स्यसिच्तासीनां भावकर्मवाचिप्रत्ययपरत्वसम्भवेऽपि सीयुटस्तदसम्भवात्। सीयुडागमविशिष्टस्यैव लिङो भावकर्मवाचितया केवलसीयुटो न भावकर्मवाचिप्रत्ययपरकत्वमस्ति अतो विषयसप्तमीति मत्वा आह—भावकर्मणोर्गम्यमानयोरिति। इड्विधौ स्यसिच्सीयुट्तासिषु इति सप्तमी षष्ठ्या विपरिणम्यते इति मत्वा आह—स्यादीनामिडागमश्चेति। अत्र भज्झनग्रहदृशां स्यादीनां च न यथासङ्ख्यम्, व्याख्यानात्। 'स्यादिषु परेषु अङ्गस्य इ'डिति नार्थः, 'आर्द्धधातुकस्येड्वलादेः' इत्यत्र 'आर्द्धधातुके' इति योगं विभज्य 'यावानिट् स आर्द्धधातुकस्यैवे'ति भाष्ये उक्तत्वात्। चिणि यदङ्गाधिकारविहितं कार्यं तस्यैवात्रातिदेशः, नतु चिणि दृष्टमात्रस्य। तेन 'घानिष्यते' इत्यत्र 'हनो वध लिङि, 'लुङि च' इति चिणि दृष्टो वधादेशश्चिण्वदिति नातिदिश्यते, तस्य हैतीयीकत्वेन अङ्गाधिकारविहितत्वाऽभावात्। तथा आयिष्यते इत्यत्र इणो गादेशो न। 'अध्यायिष्यते' इत्यत्र इङो गाङादेशो न, हैतीयीकत्वात्। चिण्वत्त्वाऽभावे अयमिट् नेत्याह—अयमिडिति। सेट्कस्य वलादित्वलक्षण इट् तु स्यादेवेति भावः। ननु भूयेतेति विधिलिङि चिण्वत्वम् इट् च स्यातामित्यत आह—इटार्द्धधातुके इति नेतरेषामिति। स्यसिच्तासीनां न विशेषणमित्यर्थः। अव्यभिचारादिति। स्यसिच्तासीनां स ँआऽऽर्धधातुकत्वनियमादितिभावः। अत्र वार्तिकम्—

'चिण्वद्वृद्धियुक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति।
इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वलूनिमित्तो विघाती॥' इति।

स्यसिच्सीयुडिति सूत्रस्य वृद्ध्यादि प्रयोजनमित्यर्थः। तत्र वृद्धिं दर्शयति—चिण्वद्भावाद्वृद्धिरिति। लुटि भू ता इति स्थिते चिण्वत्त्वात् 'अचोऽञ्णिति' इति वृद्धिरित्यर्थः। इडागमश्चेत्यपि बोध्यम्। तत्फलं तु वक्ष्यते। तथा दाधातोर्लुटि 'आतो युक् चिण्कृतोः' इति युक्। तथा लृटि 'घानिष्यते' इत्यत्र 'होहन्तेर्ञ्णिन्नेषु' इति घत्वम्। शमेर्हेतुमण्ण्यन्ताल्लुटि शामिता, शमितेत्यत्र 'चिण्णमुलोः इति दीर्घः। तथा अनेनैवात्र इटि कृते तस्य आभीयत्वेनासिद्धत्वात् अनिटीति निषेधाऽभावात् णिलोपः। तथा 'भाविष्यते' इत्यत्र भू स्य इति स्थिते परमपि वलादिलक्षणं इटं बाधित्वा नित्यत्वादनेन इट्, वलिनामत्ते इटि कृतेऽकृते च चिण्वदिटः प्रवृत्त्या कृताऽकृतप्रसङ्गित्वात्। वलादिलक्षणस्त्विट् न नित्यः, 'चिण्वदिट कृते

मित्तो विघाती) । भाविता। भविता । भाविष्यते । भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट । भविषीष्ट । **२७५८ चिण्भावकर्मणोः ३।१।६६॥** च्लेश्चिण्स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि । अभाविष्यत । अभविष्यत । तिङोक्तत्वात्कर्मणि न द्वितीया । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम्—अन्वभविषाताम् । णिलोपः । भाव्यते । भावयांचक्रे । भावयांबभूवे । भावयामासे । इह तशब्दस्य एशि, इट एत्वे च कृते 'ह एति' ( सू २२५० ) इति हत्वं न, तासिसाहचर्यादस्तेरपि व्यतिहे इत्यादौ सार्वधातुके एव हत्वप्रवृत्तेरित्याहुः । भावि-

---

वलादित्वस्य विहितत्वेन वलादिलक्षणस्य इटः अप्रवृत्तेः। नित्यश्चायमित्यस्य 'चिण्वदि'डिति शेषः । वदिनमित्त इत्यनन्तरं 'इडनित्य' इति शेषः । अनित्यत्वे हेतुः–'विघातीं'ति । चिण्वदिटो वलादिनिमित्तविघातकत्वादित्यर्थः एवञ्च सेट्कत्वेऽप्यनेनैव इट् । एतदभावपक्षे तु सेट्कत्वे वलादिलक्षण इडिति बोध्यम् । तदाह—भवितेति । चिण्वदिडभावपक्षे वलादिलक्षण इडिति भावः । चिण्भावकर्मणोः । च्लेरिति । 'च्लेः सिच्' इत्यतस्तदनुवृत्तेरिति भावः । तशब्दे परे इति । 'चिण् ते पदः' इत्यतस्तदनुवृत्तेरिति भावः । अभावीति । च्लेश्चिणि कृते 'चिणो लुक्' इति तशब्दस्य लोपः । चिण्विधौ तशब्दे किम् । अभाविषाताम् । अथ अनुपूर्वात् भूधातोरुपभोगार्थकात्सकर्मकात्कर्मणि लकारे विशेषमाह—तिङोक्तत्वादिति । कर्तुस्त्वनभिहितत्वात् तृतीयैवेति भावः । तदाह—अनुभूयते आनन्दश्चैत्रेण त्वया मया चेति । इहाऽऽनन्दस्य तिङाभिहितत्वात् प्रथमेति भावः । युष्मदस्मदुपात्तयोः कर्त्रोस्त्वनभिहितत्वात् तृतीया । अनुभूयेते इति । 'सुखदुःखे' इति शेषः । अनुभूयन्ते इति । 'सुखानी'ति शेषः । णिलोप इति । भूधातोर्णौ वृद्धौ आवादेशे भावि इति ण्यन्तात् कर्मणि लटस्तादेशे यकि णिलोप इत्यर्थः । भावयामासे इति । प्रथमपुरुषैकवचने उत्तमपुरुषैकवचने च रूपम् । इहेति । 'भावयामासे' इत्यत्र प्रथमैकवचनतशब्दस्य 'लिटस्तझयोः' इति एशादेशे उत्तमपुरुषैकवचनस्य इटश्च 'टित आत्मनेपदानाम्' इत्येत्वे च कृते भावयामास् ए इति स्थिते 'ह एति' इति सकारस्य हकारः प्राप्तो न भवतीत्यर्थः । कुत इत्यत आह—तासीति । 'ह एति' इत्यत्र तासस्त्योरित्यनुवर्तते । तत्र एधिताहे इत्यादौ तासेः सस्य सार्वधातुक एव एति परे हकार इति निर्विवादम् । तथाविधतासिसाहचर्यादस्तेरपि सकारस्य 'व्यतिहे' इत्यादौ सार्वधातुक एव परे प्रवृत्तिः । अतो 'भावयामासे' इत्यत्र नास्तेः सकारस्य हकारः, एकारस्यार्द्धधातुकत्वादित्यर्थः । भावितेति । ण्यन्तात् भावि ता इति स्थिते परत्वाद्वलादिलक्षणमिटं बाधित्वा चिण्वदिटि तस्याऽऽभीयत्वेनाऽसिद्धत्वादनिटीति निषेधाऽभावाण्णिलोपे भावितेति रूपम् । अत एव चिण्वदिड्विधौ 'उपदेशे योऽ'जित्येव व्याख्यातम्, नतु 'उपदेशे अजन्तस्ये'ति, तथा सति हि

ता । चिण्वदिटः आभीयत्वेनासिद्धत्वाण्णिलोपः । पक्षे भावयिता । भाविष्यते । भावयिष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भाविषीष्ट-भावयिषीष्ट । अभावि । अभाविषाताम् । अभावयिषाताम् । बुभूष्यते । बुभूषांचक्रे । बुभूषिता । बुभूषिष्यते । बोभूय्यते । यङ्लुगन्तात्तु—बोभूयते । बोभवांचक्रे । बोभाविता । बोभविता । 'अकृत्सार्व—' ( सू२२९८ ) इति दीर्घः । स्तूयते विष्णुः । तुष्टुवे । स्ताविता—स्तोता । स्ताविष्यते-स्तोष्यते । अस्तावि । अस्ताविषाताम्-अस्तोषाताम् । 'गुणोऽर्ति' ( सू २३८० ) इति गुणः । अर्यते । स्मर्यते । सस्मरे । परत्वान्नित्यत्वाच्च गुणे रपरे कृते अजन्तत्वाभावेऽप्युपदेशग्रहणाच्चिण्वदिट् । आरिता । अर्ता । स्मारिता । स्मर्ता । 'गुणोऽर्ति-' ( सू २३८० ) इत्यत्र नित्यग्रह-

---

णाजन्तस्य उपदेशाभावान्न स्यादिति भावः । वलादिलक्षणे इटि कृते तु तस्य अनाभीयत्वेन असिद्धत्वाभावादनिटीति निषेधाण्णिलोपाभावे णेर्गुणाऽयादेशयोः कृतयोर्भावयितेति रूपमिति मत्वा आह—पक्षे भावयितेति । अथ सन्नन्तात् भूधातोः भावलकारे उदाहरति—बुभूष्यते इति । यकि सनोऽकारस्य 'अतो लोपः' इति लोपः । बुभूषिता । बुभूषिष्यते इति । चिण्वदिटि वलादिलक्षणे इटि च रूपं तुल्यम् । चिण्वदिडभावपक्षेऽपि तदतिदेशेन प्राप्तां वृद्धिं बाधित्वा परत्वादतो लोपः । अथ यङन्तात् भूधातोः भावलकारे उदाहरति—बोभूय्यते इति । यकि यङोऽकारस्य पूर्ववदतो लोपः । द्वियकारकं रूपम् । यङ्लुगन्तात् बोभूयते इति एकयकारं रूपम् । ष्टुञ्धातोः कर्मलकारे यकि तस्यार्धधातुकत्वात् 'अतो दीर्घो यञि' इत्यप्राप्तावाह—अकृत्सार्वेति । स्ताविता स्तोतेति । चिण्वदिडभावपक्षे अनिट्कत्वान्नेट् । अथ ऋधातोः कर्मणि लकारे यकि कृते कित्त्वाद्गुणनिषेधे प्राप्ते आह-गुणोऽर्तीति । अर्यते इति । गुणे कृते रपरत्वम् । 'स्मृ' धातोः कर्मणि लकारे आह—स्मर्यते इति । 'गुणोऽर्ति' इति संयोगादित्वात् गुणे रपरत्वमिति भावः । ननु लुटि ऋ ता, स्मृ ता इति स्थिते चिण्वदिटं बाधित्वा परत्वात् गुणः प्राप्नोति नित्यत्वाच्च, अकृते कृते च चिण्वदिटि गुणस्य प्राप्तेः । कृते तु गुणे रपरत्वे अजन्तत्वाभावाच्चिण्वदिडभावे अनिट्त्वाद्वलादिलक्षणेडभावे अर्ता स्मर्तेत्येव स्यात्, आरिता स्मारितेति न स्यादित्यत आह—परत्वादित्यादि । कृते गुणे रपरत्वे अजन्तत्वाऽभावेऽपि उपदेशे योऽच् तदन्तस्येत्युक्तेश्चिण्वदिट् निर्बाध इत्यर्थः । आरितेति । कृतेऽपि गुणे रपरत्वे चिण्वदिटि उपधावृद्धिः । अर्तेति । चिण्वदिडभावे रूपम् । एवं स्मारिता स्मर्तेत्यपि । ननु सम्पूर्वात् कृञः कर्मणि लकारे यकि 'रिङ् शयग्लिङ्क्षु' । इति रिङादेशे 'सम्परिभ्यां करोतौ भूषणे, 'समवाये च' इति सुटि संस्क्रियते इति वक्ष्यते । तत्र 'गुणोऽर्ति' इति संयोगादित्वात् गुणः स्यादित्यत आह—नित्यग्रहणानुवृत्तेरिति । 'नित्यं करोतेः' इत्यतो नित्यमित्यनुवृत्तेः 'गुणोऽर्ति' इत्यत्र नित्यं यः संयोगादिस्तस्यैव संयोगादित्व-

णानुवृत्तेरुक्तत्वान्नेह गुणः। संस्क्रियते। 'अनिदिताम्—' (सू ४१५) इति नलोपः। स्रस्यते। इदितस्तु नन्द्यते। सम्प्रसारणम्। इज्यते। 'अयङ् यि क्ङिति' (सू २६४९)। शय्यते। **२७५९ तनोतेर्यकि ६।४।४४॥** आकारोऽन्तादेशो वा स्यात्। तायते। तन्यते। 'ये विभाषा' (सू २३१९)। जायते। जन्यते। **२७६० तपोऽनुतापे च ३।१।६५॥** तपश्च्लेश्चिण्न स्यात्कर्मकर्तर्यनुतापे च। अन्वतप्त पापेन। पापं कर्तृ। तेनाभ्याहत इत्यर्थः। कर्मणि लुङ्। यद्वा पापेन पुंसा कर्त्रा अशोचीत्यर्थः। 'घुमास्था—' (सू २४६२) इतीत्वम्। दीयते। धीयते। 'आदेचः–' (सू २३७०) इत्यत्र अशितीति कर्मधारयादित्संज्ञकशकारादौ निषेधः। एशः आदिशित्वाभावात्तस्मिन्नात्वम्। जग्ले। **२७६१ आतो युक्चिण्कृतोः**

**णो गुण इति लभ्यते। कृञ् तु न नित्यं संयोगादिः, सम्परिपूर्वकत्वाऽभावे तदभावादिति भावः। अथ स्रंसधातोर्भावलकारे यकि विशेषमाह—**अनिदितामिति नलोप इति। इदितस्त्विति। **'टु नदि समृद्धौ' इत्यस्माद्भावलकारे यकि इदित्वान्नलोपो नेत्यर्थः। अथ यजधातोः कर्मलकारे यकि विशेषमाह—**सम्प्रसारणमिति। **वचिस्वपियजादीनाम्' इत्यनेनेति भावः। शीङ्धातोर्भावलकारे यकि विशेषमाह—**अयङ् यि क्ङितीति। तनोतेर्यकि। **'विड्वनोः' इत्यतः आदिति 'ये विभाषा' इत्यतः विभाषेति चानुवर्तते। तदाह**-आकारोऽन्तादेशो वा स्यादिति। **शेषपूरणमिदम्।** तायते तन्यते इति। **कर्मणि लकारः।** तपोऽनुतापे च। **'च्लेः सिच्' इत्यतः च्लेरिति 'चिण् ते' इत्यतश्चिण् इति 'न रुधः' इत्यतो नेति चानुवर्तते। चकारात् 'अचः कर्म' इत्यतः कर्मक रीति समुच्चीयते। तदाह—**तपश्च्लेरित्यादि। **तत्र कर्मकर्तरि कर्मकर्तृप्रक्रियायामुदाहरिष्यति। अनुतापे कर्मलकारे उदाहरति—**अन्वतप्त पापेनेति। **पापेनेति कर्तरि तृतीयेति मत्वा आह=**पापं कर्त्रिति। **अनुपूर्वस्य तपेः पश्चात्तापार्थकत्वे असङ्गतिः। नहि पापस्य सूर्यादिवत्तपनशक्तिरस्ति। शोकार्थकत्वे अकर्मकत्वापत्तिरित्यत आह—**अभ्याहत इति। **अनुपूर्वस्तपिरिह उपसर्गवशात् अभिहननार्थक इति भावः। तस्य च सकर्मकत्वात् कर्मलकार उपपद्यते इति मत्वा आह—**कर्मणि लुङिति। **शोकार्थकत्वमाश्रित्य भावे वा लुङित्याह—**यद्वा पापेन पुंसा कर्त्रेति। **परिणाममसमीक्ष्य सहसा किञ्चित्कृत्यं कृत्वा पश्चात् दुःखमन्वभवदित्यथः। दुःखानुभवः शोकः। धात्वर्थेनोपसङ्ग्रहादकर्मकः। 'शुच शोके' अकर्मकः। 'पुत्रमनुशोचति'इत्यत्र तु वियुक्तं पुत्रं स्मृत्वा शोचतीत्यर्थः। स्मरणे पुत्रस्य कर्मत्वात् द्वितीयेत्यविरोधः। अथ दाधातोर्धाधातोश्च कर्मलकारे यकि विशेषमाह—**घुमास्थेतीत्वमिति। **ग्लैधातोर्भावे लिटल्तादेशस्य एशादेशे 'आदेचः' इत्यात्वस्य अशितीति निषेधमाशङ्क्य आह—**आदेच इत्यत्रेति। **श् चासाविच्च इति कर्मधारयाश्रयणादित्संज्ञकशकारादौ प्रत्यये परे आत्वस्य निषेधो लभ्यते। एशः शित्वेऽपि आदिभूतशकारेत्कत्वाभावान्निषेधाऽभावात्तस्मिन् एशि परे आत्वं भवत्येवेत्यर्थः।** जग्ले इति। **आत्वे कृते 'आतो लोप इटि च' इति तस्य लोप**

७।३।३३॥ आदन्तानां युगागमः स्याच्चिणि ञिति णिति कृति च। दायिता—दाता। दायिषीष्ट-दासीष्ट। अदायि। अदायिषाताम्-अदिषाताम्। अधायिषाताम्-अधिषाताम्। अग्लायिषाताम्-अग्लासाताम्। हन्यते। 'अचिण्णलोः' ( सू २५७४ ) इत्युक्तेर्हनस्तो न। 'हो हन्तेः-' ( सू ३५८ ) इति कुत्वम्। घानिता। हन्ता। घानिष्यते-हनिष्यते। आशीर्लिङि वधादेशस्यापवादश्चिण्वद्भावः। आर्धधातुके सीयुटीति विशेषविहितत्वात्। घानिषीष्ट। पक्षे वधिषीष्ट। अघानि।

---

इति भावः। आतो युक् अङ्गस्येत्यधिकृतमाता विशेषितम्, तदन्तविधिः॥ 'अचो ञ्णिति' इत्यतो ञ्णितीत्यनुवृत्तं कृत एव विशेषणम्, नतु चिणः, तस्य णित्त्वाऽव्यभिचारात्। तदाह—आदन्तानामित्यादि। दायितेति। चिण्वदिट्पक्षे युक्। अदायिषामिति। 'स्थाघ्वोरिच्च' इत्येतत् बाधित्वा परत्वाच्चिण्वदिटि कृते 'घुमास्था' इतीत्वं न, अजादित्वात्। पुनः 'स्थाघ्वोरिच्च' इति तु न भवति, अझलादित्वात्। तत्र हि 'इको झल' इति सूत्रात् झल् इत्यनुवृत्तम्। तथाच झलादिरेव सिच् किदिति लाभादिडादिः सिच् न कित्। तत्संनियोगादित्वमपि न भवतीत्याहुः। वस्तुतस्तु सत्यपि तस्मिन्नत्र काचित् क्षतिः। सिचः कित्वेऽप्यनिग्लक्षणया वृद्ध्या रूपसिद्धेरिति दिक्। अथ हनधातोः कर्मलकारे आह—हन्यते इति। अचिण्णलोरिति। लुटि चिण्वदिटि वृद्धौ 'हनस्तोऽचिण्णलोः' इति हनो नकारस्य तकारो न भवति, चिण्वत्त्वादित्यर्थः। कुत्वमिति। तस्य णिति विहितस्याऽत्र चिण्वत्त्वात् प्राप्तिरिति भावः। घानिष्यते इति। 'ऋद्धनोः' इति बाधित्वा नित्यत्वाच्चिण्वदिट्। 'ऋद्धनोः' इति तु चिण्वदिटि कृते न भवतीत्यनित्यम्, तत्र वलीत्यनुवृत्तेरिति भावः। नन्वाशीर्लिङि घानिषीष्टेत्यत्र हन् सीट इति स्थिते परमपि चिण्वत्त्वं बाधित्वा वधादेशः प्राप्नोति आर्द्धधातुके विवक्षिते विहितत्वेन वधादेशस्याऽन्तरङ्गत्वादित्यत आह—आशीर्लिङि वधादेशस्यापवादश्चिण्वद्भाव इति। ननु घानितेत्यादौ अप्राप्तेऽपि वधादेशे आरम्भात् कथं वधादेशस्य चिण्वद्भावः अपवादः स्यादित्यत आह—आर्द्धधातुके सीयुटीति। 'स्यसिच्सीयुट्' इति सूत्रे अजन्तस्य स्ये, अजन्तस्य सिचि, अजन्तस्य आर्द्धधातुके सीयुटि, अजन्तस्य तासौ, इत्यजन्तस्य चत्वारि वाक्यानि। एवं हनग्रहदृशामप्येकैकस्य चत्वारि वाक्यानीति स्थितिः। तत्र हनः आर्धधातुके सीयुटि चिण्वदिड्विधिर्निरवकाशत्वाद्वधादेशापवादः, अप्राप्त एव वधादेशे आरम्भात्। वधादेशस्तु न चिण्वदिटोऽपवादः, तस्य वध्यादित्यत्र कर्तरि लिङि चरितार्थत्वादिति भावः। पक्षे इति। चिण्वत्त्वाऽभावपक्षे 'हनो वध लिङि' इति वधादेशे वलादिलक्षणे इटि अतो लोपे रूपम्, वधादेशस्याऽदन्तत्वात्। नच हनधातोरनुदात्तत्वादुपदेशे एकाच्त्वात्तदीयवधादेशस्यापि तथाविधत्वादिह कथं वलादिलक्षण इडिति वाच्यम्, 'एकाच उपदेश' इत्यत्र 'अच' इत्येकत्वसामर्थ्यादेकत्वे सिद्धे पुनरेकग्रहणबलेन 'य उपदेशे एकाजेव नतु कदाप्यनेका'जिति लभ्यते तेन

अघानिषाताम् । अहसाताम् । पक्षे वधादेशः । अवधि । अवधिषाताम् । 'अघानिष्यत-अहनिष्यत । नच स्यादिषु चिण्वदित्यतिदेशाद्वधादेशः स्यादिति वाच्यम् । 'अङ्गस्य' ( सू २०० ) इत्यधिकारादाङ्गस्यैवातिदेशात् । गृह्यते । चिण्वदिटो न दीर्घत्वम् । प्रकृतस्य वलादिलक्षणस्यैवेटो 'ग्रहोऽलिटि'-( सू २५६२ ) इत्यनेन दीर्घविधानात् । ग्राहिता-ग्रहीता । ग्राहिष्यते-ग्रहीष्यते । ग्राहिषीष्ट-ग्रहीषीष्ट । अग्राहि । अग्राहिषाताम्-अग्रहीषाताम् । दृश्यते । अदर्शि । अदर्शिषाताम् । सिचः किस्वादम्न । अदृक्षाताम् । गिरतेर्लुङि ध्वमि चतुरधिकं शतम् । तथा हि-

वधेर्हन्त्युपदेशमादाय एकाचोऽपि न निषेधः । आदेशोपदेशे अनेकाच्त्वादित्युक्तं प्राक् । लुङि तु सिचश्चिणि उपधावृद्धौ कुत्वेन घः । 'आत्मनेपदेष्वन्यतरस्या'मिति वधादेशाऽभावः । अघानिषातामिति । चिण्वदिटि वधादेशाऽभावपक्षे रूपम् । अहसातामिति । चिण्वदिडभावपक्षे 'हनः सिच्' इति किस्वादनुदात्तोपदेशेत्यनुनासिकलोपः । पक्षे अवधीति । 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेशपक्षे इत्यर्थः । अवधिषातामिति । 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेशस्यापि पाक्षिकतया अप्राप्तेऽपि वधादेशे चिण्वत्त्वस्यारम्भात्तापवादत्वमिति भावः । ननु चिणि वधादेशस्य दृष्टत्वात् स्यादिषु चिण्वत्त्वाद्वधादेशः स्यादित्याशङ्क्य परिहरति—न चेत्यादिना । आङ्गस्यैवेति । वधादेशस्तु द्वितीयीकः, न त्वङ्गाधिकारस्थ इति भावः । अथ 'ग्रह उपादाने' इत्यस्माद्दुपधात् कर्मलकारे उदाहरति—गृह्यते इति । 'ग्रहिज्या' इति सम्प्रसारणम् । अथ लुटि तासि चिण्वदिटि 'ग्रहोऽलिटि' इति दीर्घमाशङ्क्य आह—चिण्वदिटो न दीर्घत्वमिति । कुत इत्यत आह—प्रकृतस्येति । वलादिलक्षणस्य इटः प्रकृतत्वात्तस्यैव 'ग्रहोऽलिटि' इति दीर्घविधौ ग्रहणम्, नतु चिण्वदिटः इति भाष्ये स्पष्टम् । ग्राहितेति । चिण्वदिटि रूपम् । ग्रहीतेति । चिण्वदिडभावपक्षे वलादिलक्षणस्य इटो दीर्घे रूपम् । अथ दृशेः कर्मलकारे उदाहरति—दृश्यत इति । लिटि ददृशे । लुटि तासि चिण्वदिट्पक्षे दर्शिता । चिण्वत्त्वाऽभावे 'सृजिदृशोः' इत्यम् । द्रष्टा । दर्शिष्यते द्रक्ष्यते । दर्शिषीष्ट । चिण्वदिडभावे तु 'लिङ्सिचावात्मनेपदेषु' इति किस्वात् 'सृजिदृशोः' इत्यम्न । नापि लघूपधगुणः । दृक्षीष्ट । अदर्शीति । चिणि लघूपधगुणः । अदर्शिषातामिति । चिण्वदिटि रूपम् । चिण्वत्त्वाऽभावे त्वाह—सिचः किस्वादम्नेति । 'लिङ्सिचावात्मनेपदेषु' इति सिचः किस्वात् 'सृजिदृशोः' इत्यम्न भवति, अकितीति पर्युदासादित्यर्थः । अथ गॄधातोः कर्मलकारे यकि ऋत इत्वे 'हलि च' इति दीर्घे-गीर्यते । जगरे । लुटि तासि चिण्वत्त्वपक्षे, गारिता । चिण्वत्त्वाऽभावे वलादिलक्षणे इटि गुणे रपरत्वे गरिता—गरीता, 'वॄतो वा' इति दीर्घः । गारिष्यते । गरिष्यते । गरीष्यते । गीर्यताम् । अगीर्यत । गीर्येत । गारिषीष्ट । चिण्वत्त्वाऽभावपक्षे तु 'लिङ्सिचोरात्मनेपदेषु' इति इड्विकल्पः । इडभावपक्षे 'उश्च' इति कित्त्वम् । इत्वम् । रपरत्वम् । 'हलि च' इति दीर्घः ।

चिण्वदिटो दीर्घो नेत्युक्तम्। अगारिध्वम्। द्वितीये त्विटि 'वृतो वा' (सू २३९१) इति वा दीर्घः। अगरीध्वम्। अगरिध्वम्। एषां त्रयाणां लत्वं ढत्वं द्वित्वत्रयं चेति पञ्च वैकल्पिकानि। इत्थं षण्णवतिः। 'लिङ्सिचोः—' (सू २५२८) इति विकल्पादिडभावे 'उश्च' (२३६८) इति कित्वम्। इत्वं रपरत्वं 'हलि च' (सू ३५४) इति दीर्घः। 'इणः षीध्वम्—' (सू २२०७) इति नित्यं ढत्वम्। अगीढ्वम्। ढवमानां द्वित्वविकल्पेऽष्टौ। उक्तषण्णवत्या सह सङ्कलने उक्ता संख्येति।

---

षत्वम्। गीर्षीष्ट। इट्पक्षे तु, गरिषीष्ट। लुङि अगारि। अगारिषाताम्। अगीर्षाताम्। अगरिषाताम्। इति सिद्धवत्कृत्य आह—लुङि ध्वमि चतुरधिकं शतमिति। रूपाणीति शेषः। तदेवोपपादयति—तथाहीति। अगारिध्वमिति। गॄ स् ध्वम् इति स्थिते चिण्वदिटि वृद्धौ रपरत्वे 'धि च' इति सलोपे रूपमिति भावः। द्वितीये त्विटीति। चिण्वदिडभावपक्षे वलादिलक्षणे सिचः इटि ऋकारस्य गुणे रपरत्वे 'धि च' इति सलोपे 'वृतो वा' इति दीर्घविकल्पे अगरिध्वम्, अगरीध्वम् इति रूपद्वयमित्यर्थः। एषामिति। एषां त्रयाणां मध्ये एकस्मिन् रेफस्य 'अचि विभाषा' इति लत्वम्। 'विभाषेटः' इति वा धस्य ढत्वम्। तथा धस्य तदादेशढस्य, वस्य, मस्य च द्वित्वत्रयमित्येवं पञ्च वैकल्पिकानीत्यर्थः। तत्र धढयोर्मस्य च 'अनचि च' इति द्वित्वविकल्पः। वकारस्य तु 'मय' इति पञ्चमीमाश्रित्य 'यणो मयः' इति द्वित्वविकल्प इति विवेकः। यद्यपि धढयोर्वस्य मस्य च द्वित्वचतुष्टयमिति वक्तुमुचितम्, तथापि ढस्य, धस्थानिकतया धढयोरेकत्वमभिप्रेत्य 'द्वित्वत्रय'मित्युक्तिः। इत्थमिति। एवञ्च त्रयाणामेषां लत्वविकल्पे रेफवन्ति त्रीणि, लकारवन्ति त्रीणि इति षट्। एषु षट्सु धस्य द्वित्वविकल्पे एकधानि षट्, द्विधानि च षडिति द्वादश। तथा रेफवत्सु त्रिषु लकारवत्सु च त्रिषु ढस्य द्वित्वविकल्पे एकढानि षट्, द्विढानि च षडिति द्वादश। उभयेषामपि द्वादशानां मेलने चतुर्विंशतिः। एषु वस्य द्वित्वविकल्पे एकवानि चतुर्विंशतिः, द्विवानि चतुर्विंशतिरित्यष्टाचत्वारिंशत्। एषु मस्य द्वित्वविकल्पे एकमान्यष्टाचत्वारिंशत्, द्विमान्यष्टाचत्वारिंशदिति षण्णवतिरित्यर्थः। लिङ्सिचोरितीति। चिण्वदिडभावपक्षे वलादिलक्षणस्य इटो 'लिङ्सिचोः' इति विकल्पितत्वात्तदभावपक्षे, 'उश्च' इति सिचः कित्वाद्गुणाभावे ऋत इत्वे रपरत्वे 'हलि च' इति दीर्घे रेफादियाः परत्वात् 'इणः षीध्वम्' इति नित्यं ढत्वे अगीढ्वमिति रूपमित्यर्थः। ढवमानामिति। ढस्य 'अचो रहाभ्याम्' इति द्वित्वविकल्पे एकढं द्विढमिति द्वे रूपे। तयोः वस्य 'यणो मयः' इति द्वित्वविकल्पे एकवे द्वे, द्विवे द्वे इति चत्वारि। एषु चतुर्षु मस्य 'अनचि च' इति द्वित्वविकल्पे एकमानि चत्वारि, द्विमानि चत्वारीत्यष्टौ रूपाणीत्यर्थः। षण्णवत्येति। उक्तषण्णवत्या अष्टानां मेलने सति या संख्या सिध्यति सा चतुरुत्तरशतसंख्या इक्तेति ज्ञेयमित्यर्थः। उक्तप्रक्रियां श्लोकेन सङ्गृ-

इट् दीर्घश्चिण्वदिट् लत्वढत्वे द्वित्वत्रिकं तथा ।
इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम् ॥

हेतुमण्ण्यन्तात्कर्मणि लः । यक् णिलोपः । शम्यते मोहो मुकुन्देन । २७६२ **चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ६।४।९३॥** चिण्परे णमुल्परे च णौ मितामुपधायाः दीर्घो वा स्यात् । प्रकृतो 'मितां ह्रस्वः' ( सू २५६८ ) एव तु न विकल्पितः । ण्यन्तात्णौ ह्रस्वविकल्पासिद्धेः । दीर्घविधौ हि णिचो लोपो न स्थानिवदिति दीर्घः सिध्यति । ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम् । भाष्ये तु 'पूर्वत्रासिद्धे न स्था-

द्वाति—इट्दीर्घ इत्यादिना । वलादिलक्षण इट्, 'वृतो वा' इति दीर्घः । अजन्तलक्षणः चिण्वदिट् 'अचि विभाषा' इति लत्वं, 'विभाषेटः' इति वा ढत्वं धढवमानां द्वित्वत्रिकमित्यष्टानां विकल्पात् चतुरधिकं शतं रूपाणीत्यर्थः । 'शम्यते मोहो मुकुन्देने'-त्यत्र प्रक्रियां दर्शयति—हेतुमण्ण्यन्तादिति । शमधातोर्हेतुमण्णौ उपधावृद्धौ अमन्तत्वेन मित्वाद्ध्रस्वे शमीत्यस्मात्कर्मणि लः, न तु भावे, हेतुमण्ण्यन्तस्य सकर्मकत्वनियमादिति भावः । यगिति । तङि कृते 'सार्वधातुके यक्' इत्यनेनेति शेषः । णिलोप इति । 'णेरनिटि' इत्यनेनेति शेषः । लुटि तासि शमि इ ता इति स्थिते अमन्तत्वेन मित्वाण्णिस्यमुपधाह्रस्वे प्राप्ते—चिण्णमुलोः । 'दोषो णौ' इत्यतो णाविति 'ऊदुपधाया गोहः' इत्यस्मादुपधाया इति 'मितां ह्रस्वः' इत्यतो मितामिति चानुवर्तते । तदाह—चिण्परे इत्यादिना । नन्विह दीर्घग्रहणं व्यर्थम् । 'चिण्णमुलोरन्यतरस्या'मित्येतावतैव 'मितां ह्रस्वः' इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्य विकल्पे दीर्घविकल्पस्य सिद्धेरित्यत आह—प्रकृतो मितां ह्रस्व एव तु न विकल्पितः इति । कुत इत्यत आह—ण्यन्ताण्णाविति । शमधातोर्ण्यन्ताण्णौ पूर्वणेर्लोपे लुटि तासि ण्यन्तस्याऽजन्तत्वाच्चिण्वदिटि तस्याऽऽभीयत्वेनासिद्धतया 'अनिटी'ति निषेधाऽभावाण्णिलोपे दीर्घविकल्पे सति शमिता शामितेति रूपद्वयमिष्यते । ह्रस्वविकल्पस्य विधौ तु ह्रस्वविकल्पो न स्यात् । प्रथमणिलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन व्यवहिततया चिण्परकणिपरकत्वाभावादित्यर्थः । दीर्घविकल्पविधौ तु न दोष इत्याह—दीर्घविधाविति । दीर्घविकल्पविधौ हि प्रथमस्य णिचो लोपो न स्थानिवत्, दीर्घविधौ स्थानिवत्त्वनिषेधात् अतोऽत्र दीर्घविकल्पः सिध्यति । ह्रस्वविधौ तु प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, तत्र स्थानिवत्त्वनिषेधाभावादित्यर्थः । भाष्ये त्विति । न पदान्तसूत्रस्थभाष्ये तु 'पूर्वत्रासिद्धे न स्थानिवत्' इत्येव सिद्धत्वात् 'न पदान्त' सूत्रे द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः । सुद्ध्युपास्य इत्यत्र 'अनचि च' इति द्विर्वचनस्य, शिण्ढीत्यत्र 'नश्च' इत्यनुस्वारस्य 'अनुस्वारस्य ययि' इति परसवर्णस्य च, प्रतिदीव्न इत्यत्र 'हलि च' इति दीर्घस्य, सग्धिरित्यत्र 'झलां जश् झशि' इति जश्त्वस्य, जक्षतुरित्यत्र 'खरि च' इति चर्त्वस्य च पूर्वत्राऽसिद्धीयत्वादित्यर्थः । ननु ण्यन्ताण्णौ 'चिण्णमुलोः'

णिवत्' इत्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः। णाविति जातिपरो निर्देशः। दीर्घग्रहणं चेदं मास्त्विति तदाशयः। शामिता। शमिता-शमयिता। शामिष्यते-शमिष्यते-शमयिष्यते। यङन्ताण्णिच्। शंशाम्यते। शंशामिता-शंशमिता-शंशमयिता। यङ्लुगन्ताण्णिच्यप्येवम्। भाष्यमते तु यङन्ताच्चिण्वदिटि दीर्घो नास्तीति विशेषः। ण्यन्तत्वाभावे शम्यते मुनिना।

२७६३ **नोदात्तोपदेशस्य मान्तस्यानाचमेः** ७।३।३४॥ उपधाया वृद्धिर्न स्याच्चिणि ञ्णिति णिति कृति च। अशमि। अदमि। उदात्तोपदेशस्य इति किम्। अगामि। मान्तस्य किम्। अवादि। अनाचमेः किम्। आचामि। 'अनाचमिकमिवमीना-

---

इति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, 'चिण्णमुलोः' इति दीर्घस्य पूर्वत्रासिद्धीयत्वाऽभावात्। ततश्च प्रथमणिचा व्यवहितत्वात् दीर्घाऽनापत्तिः। एवञ्च तत्र दीर्घे कर्तव्ये स्थानिवत्त्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात्कथं दीर्घग्रहणप्रत्याख्यानमित्यत आह—णावितीति। 'चिण्णमुलोः' इति दीर्घविधौ चिण्परे णमुल्परे च 'णौ' इत्यत्र णाविति णित्वजातिप्रधानो निर्देशः। चिण्णमुल्परकणित्वजातौ परतः इति लभ्यते। णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्त्वेऽपि दीर्घो निर्बाध इति 'न पदान्त' सूत्रे दीर्घग्रहणप्रत्याख्यानभाष्यस्याशय इत्यर्थः। शामिता-शमितेति। शमधातोर्ण्यन्ताल्लुटि तासि चिण्वदिटि दीर्घविकल्पः॥शमयितेति। चिण्वत्त्वाऽभावे वलादिलक्षणे इटि रूपम्। यङन्तादिति। शमधातोर्यङि शंशम्य इत्यस्मात् हेतुमण्णौ 'यस्य हलः' इति यकारलोपे अतो लोपे 'शंशमि' इत्यस्मात् कर्मलकारे णिलोपे 'शंशम्यते' इति रूपमित्यर्थः। शंशामिता—शंशमितेति। 'चिण्णमुलोः' इति दीर्घविकल्पः। शंशमयितेति। चिण्वत्त्वाऽभावे वलादिलक्षणे इटि रूपम्। भाष्यमते त्विति 'न पदान्त' सूत्रे दीर्घग्रहणप्रत्याख्यानपरभाष्यमते त्वित्यर्थः। यङन्तादिति। 'ण्यन्ता'दिति शेषः। यङन्ताण्णिचि यलोपे अल्लोपे च कृते 'शंशमी' त्यस्माल्लुटि तासि चिण्वदिटि कृते तस्यासिद्धत्वाण्णिलोपे 'शंशमिते' त्यत्र अल्लोपस्य स्थानिवत्त्वेन णिच्परकत्वाऽभावात् 'चिण्णमुलोः' इति दीर्घो नास्ति, भाष्यमते 'न पदान्त' सूत्रे दीर्घग्रहणाऽभावेन स्थानिवत्त्वनिषेधाऽभावादित्यर्थः। शम्यते मुनिनेति। अकर्मकत्वाद्भावे ल इति भावः। नोदात्तोपदेशस्य। 'मृजेर्वृद्धिः' इत्यतो वृद्धिरिति 'अत उपधायाः' इत्यतः उपधाया इति 'अचो ञ्णिति' इत्यतो ञ्णितीति 'आतो युक्' इत्यतश्चिण्कृतोः इति चानुवर्तते। तत्र ञ्णितीति कृत एव विशेषणम्, नतु चिणः अव्यभिचारात्। तदाह—उपधाया इत्यादिना। अनुदात्तोपदेशाः सङ्गृहीताः। ततोऽन्यः सर्वोऽपि धातुरुदात्तोपदेशः। आङ्पूर्वश्चमिराचमिः तद्वर्जस्येत्यर्थः। अशमि। अदमीति। शमधातोर्दमधातोश्च लुङि चिणि 'अत उपधायाः' इति वृद्धिर्न। अगामीति। गमेरनुदात्तोपदेशत्वादिति भावः। अवादीति। वदधातुर्न मान्त इति भावः। आचामीति। अ-

मिति वक्तव्यम्' (वा ४५१८)। चिणि 'आयादयः—' (सू २३०५) इति णिङभावे। अकामि। णिङ्णिचोरप्येवम् अवामि। वध हिंसायाम्, हलन्तः। 'जनिवध्योश्च' (सू २५१२) इति न वृद्धिः। अवधि। 'जाग्रोऽविचिण्णल्ङित्सु' (सू २४८०) इत्युक्तेर्न गुणः। अजागारि। **२७६४ भञ्जेश्च चिणि ६।४।३३॥** नलोपो वा स्यात्। अभाजि-अभञ्जि। **२७६५ विभाषा चिण्णमुलोः ७।१।६९॥** लभेर्नुमागमो वा स्यात्। अलम्भि-अलाभि। व्यवस्थितविकल्पत्वात्प्रादेर्नित्यं नुम्। प्रालम्भि। द्विकर्मकाणां तु।

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः।

---

नाचमेरित्युक्तेरिह नोपधावृद्धिनिषेधः। अनाचमिकमिवमीनामिति। आचमिकमिवमिवर्जानाम् इत्यर्थः। एवञ्च कमिवध्योरपि न निषेध इति फलितम्। ननु कमेर्णिङन्तत्वात् केवलस्य तस्य चिणादौ प्रयोग एव नास्तीत्यत आह—चिण्यायादय इति। णिङ्णिचोरप्येवमिति। णिङन्ताण्णिजन्ताद्वा कमेश्चिणि णिलोपे सति पूर्ववत् रूपं शिष्यते इत्यर्थः। ननु 'जनिवध्योश्च' इति वधेरुपधावृद्धिनिषेधो व्यर्थः। वधादेशस्याऽदन्ततया अल्लोपस्य स्थानिवत्त्वादेव अवधीत्यादौ उपधावृद्ध्यभावसिद्धेरित्याशङ्क्य वधिर्धात्वन्तरं हलन्तमेव 'जनिवध्योश्च' इत्यत्र गृह्यत इत्यभिप्रेत्य आह—वध हिंसायां हलन्त इति। भञ्जेश्च चिणि। 'श्नान्नलोपः' इत्यतो नेति लुप्तषष्ठीकं, लोप इति चानुवर्तते। 'जान्तनशां विभाषा' इत्यतो विभाषेति मत्वा शेषं पूरयति—नलोपो वा स्यादिति। अभाजीति। नलोपपक्षे उपधावृद्धिः। विभाषा चिण्णमुलोः। 'लभेश्च' इत्यतो लभेरिति 'इदितो नुम्' इत्यतो नुमिति चानुवर्तते इति मत्वा शेषं पूरयति—लभेर्नुमागमो वेति। ननु प्रालम्भि उपालम्भीत्यादौ उपसर्गपूर्वस्यापि लभेः नुम्विकल्पः स्यादित्यत आह—व्यवस्थितेति। प्रादेरुपसर्गात्परस्य लभेर्नित्यं नुम्। अनुपसर्गात्परस्य तु लभेर्विभाषा नुमिति व्यवस्थितविकल्पाश्रयणादुपसर्गपूर्वस्य लभेर्नित्यं नुमित्यर्थः। वस्तुतस्तु 'चिण्णमुलोरनुपसर्गस्य' इति वार्तिकात् भाष्ये 'उपसर्गात् खल्घञोः' इत्यतः उपसर्गादिति 'न सुदुर्भ्याम्' इत्यतो नेति चानुवर्त्य उपसर्गात्परस्य लभेः 'विभाषा चिण्णमुलोः' इति नेति व्याख्यातम्। तेन प्रपूर्वस्य लभेर्नित्यं नुमिति व्याख्यानं परास्तम्। 'लः कर्मणि' इति लकारा विहिताः। तथा 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणि कृत्यादिप्रत्यया वक्ष्यन्ते। ते तावत् द्विकर्मकधातुषु कतरस्मिन् कर्मणि भवन्तीत्यत्र व्यवस्थामाह—द्विकर्मकाणां त्विति। 'कर्मप्रत्ययव्यवस्था वक्ष्यते' इति शेषः। तां व्यवस्थां सार्धश्लोकेन दर्शयति—गौणे कर्मणीत्यादिना। दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषां गौणे कर्मणि लादयो मता इत्यन्वयः। 'अकथितं

( १०९०—१०९५ वार्तिकार्थः ) । गौर्दुह्यते पयः । अजा ग्रामं नीयते । ह्रियते । कृष्यते । उह्यते । बोध्यते माणवकं धर्मः, माणवको धर्ममिति वा । भोज्यते माणवकमोदनः, माणवक ओदनं वा । देवदत्तो ग्रामं गम्यते । 'अकर्मकाणां

च' इति सूत्रेण यस्य कर्मसंज्ञा तद् गौणं कर्मेति बोध्यम् । प्रधाने इति । नीहृकृष्वहां प्रधाने कर्मणि लादयो मता इत्यन्वयः । 'अकथितं च' इति सूत्रांशेन यस्य कर्मसंज्ञा तत्प्रधानं कर्मेति बोध्यम् । अथ 'गतिबुद्धि' इति सूत्रेण ये द्विकर्मकाः तेषु व्यवस्थामाह—बुद्धीति । बुद्ध्यर्थकस्य भक्षार्थकस्य शब्दकर्मकाणां च प्रधाने वा गौणे वा कर्मणि स्वेच्छया लादयो मता इत्यन्वयः । इह 'गतिबुद्धि' इत्यनेन यस्य कर्मसंज्ञा तद् गौणं कर्म । तदितरत्तु प्रधानं कर्म । प्रयोज्येति ।' अन्येषां गत्यर्थानां अकर्मकाणां 'हृक्रोः' इति सूत्रोपात्तहृक्रोश्च प्रयोज्यकर्मणि लादयो मता इत्यन्वयः । अयं सार्धश्लोकः 'अकथितं च' इति सूत्रस्थवार्तिकभाष्यसंग्रह इति बोध्यम् । गौर्दुह्यते पयः इति । 'गोपेनेति' शेषः । अत्र गोरप्रधानकर्मत्वात्तस्मिन् कर्मणि लकारः । तिङा अभिहितत्वात् गोः प्रथमा । प्रधानकर्मत्वात्पय इति द्वितीयान्तम्, तस्य तिङा अनभिहितत्वात् । बलिर्याच्यते वसुधाम् । अविनीतो विनयं याच्यते । तण्डुलाः ओदनं पच्यन्ते गर्गाः शतं दण्डयन्ते । व्रजो रुध्यते गाम् । माणवकः पन्थानं पृच्छ्यते । वृक्षोऽवचीयते फलानि । माणवको धर्मम् उच्यते । शिष्यते वा । शतं जीयते देवदत्तः । सुधां क्षीरोदधिर्मथ्यते । देवदत्तः शतं मुष्यते । एतेषु गौणकर्मणि लकारः । अथ 'प्रधाने नीहृकृष्वहाम्' इत्यस्योदाहरति—अजा ग्रामं नीयते, ह्रियते, कृष्यते, उह्यते इति । प्रतिक्रियमजा ग्राममित्यन्वेति । उह्यत इत्यत्र वहतेर्यजादित्वात्सम्प्रसारणम् । अत्र अजायां प्रधानकर्मणि लकारः, ग्रामस्याऽनभिहितत्वात् द्वितीया । बुद्ध्यर्थस्योदाहरति—बोध्यते माणवकं धर्मः, माणवको धर्ममिति वेति । 'गुरुणे'ति शेषः । अत्र माणवके गौणकर्मणि धर्मे वा प्रधानकर्मणि ण्यन्तात् लकारः । भक्षार्थस्य तु 'अश्यन्ते देवाः अमृतं हरिणा' अश्यतेऽमृतं देवानिति वा उदाहार्यम् । शब्दकर्मकस्य तु वेदोऽध्याप्यते विधिं हरिणा, वेदमध्याप्यते विधिरिति वेत्युदाहार्यम् । यदुक्तं 'गत्यर्थानामकर्मकाणां हृक्रोश्च' इत्येतेषां प्रयोज्यकर्मणि लकार इति । तत्र गत्यर्थस्योदाहरति—देवदत्तो ग्रामं गम्यते इति । 'यज्ञदत्तेने'ति शेषः । अत्र प्रयोज्यकर्मणि देवदत्ते गमेर्ण्यन्तात् लः । ननु अकर्मकाणां ण्यन्तानां प्रयोज्यकर्मण्येव लादय इति व्यवस्था व्यर्था । तत्र प्रयोज्यं विना अन्यस्य कर्मणोऽभावादित्याशङ्क्य 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्, इति वार्तिकेन अकर्मकधातूनामपि देशकालादिकर्मत्वेन ण्यन्तानां तेषां द्विकर्मकतया प्रयोज्यकर्मण्येव तत्र लादय इति व्यवस्था प्रयोजनवतीत्यभिप्रेत्य 'मासमास्यते माणवक' इति ण्यन्ते प्रयोज्यकर्मणि माणवके एव लः, न तु मासे कर्मणि इत्युदाहरिष्यते । एवं तर्हि अण्यन्तेष्वकर्मकेषु 'मासमास्यते देवदत्तेने'ति भावे लकारो न स्यात् , 'सकर्मकेभ्यः कर्मणि कर्तरि च लः' इति नियः-

कालादिकर्मकाणां कर्मणि भावे च लकार इष्यते'। मासो मासं वा आस्यते देवदत्तेन। णिजन्तात्तु प्रयोज्ये प्रत्ययः। मासमास्यते माणवकः।

इति भावकर्मतिङ्प्रकरणम्।

## अथ कर्मकर्तृतिङ्प्रकरणम् ॥ २१ ॥

यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते। स्वव्यापारे स्वतन्त्रत्वात्। तेन पूर्वं करणत्वादिसत्त्वेऽपि

---

मात्। 'मास आस्यते देवदत्तेने'त्येव कर्मणि मासे लकारः स्यादित्याशङ्क्य आह—अकर्मकाणामित्यादि। ये अकर्मकाः 'कर्तुरीप्सिततमं कर्म, तथायुक्तं चानीप्सितम्' इति सूत्रसिद्धकर्मरहिताः 'आस उपवेशने' 'वृतु वर्तने' इत्यादयः, तेषां 'अकर्मकधातुभिर्योगे' इति वार्तिकसिद्धकर्मकाणां कर्मणि भावे च लकार इष्यते इत्यर्थः। न चेदं वार्तिकमिति भ्रमितव्यम्, भाष्ये अदर्शनात्। किन्तु न्यायमूलकमेव, अकर्मकधातुभिर्योगे देशकालादीनां कर्मसंज्ञाविकल्पस्य भाष्याद्यभिमतत्वात्। यथा चैतत्तथा कारकाधिकारे 'अकर्मकधातुभिर्योगे' इति वचनव्याख्यावसरे अवोचाम। तदाह—मासो मासं वा आस्यते देवदत्तेनेति। अत्र मासस्य कर्मत्वपक्षे कर्मणि लकारः, मासस्याऽभिहितत्वात् प्रथमा। मासस्य कर्मत्वाऽभावपक्षे तु भावे लकारः। मास इति सप्तमी। मासमिति स्वपपाठः। अथ प्रकृतमनुसरति—णिजन्तात्त्विति। आसधातोः प्रकृतिसिद्धकर्मरहितत्वेन अकर्मकाण्णौ मासस्य कर्मत्वपक्षेऽपि प्रयोज्यकर्मण्येव लकार इत्यर्थः। मासमास्यते माणवक इति। ण्यन्तात्प्रयोज्यकर्मणि माणवके लः। मासस्याऽनभिहितत्वात् द्वितीया। हृक्रोस्तु ह्रार्यते कार्यते वा भृत्यः कटं देवदत्तेन। इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां भावकर्मप्रक्रिया समाप्ता।

अथ कर्मकर्तृप्रक्रियां निरूपयिष्यन् कर्मणः कर्तृत्वं साधयितुमाह—यदेति। 'फलव्यापारयोर्धातु'रिति सिद्धान्तः। पचिर्हि विक्लित्त्यनुकूलव्यापारे वर्तते। तत्र विक्लित्तिः फलम्। तदाश्रय ओदनं कर्म। तदनुकूलो अधिश्रयणादिः पुरुषप्रयत्नरूपो व्यापारः। तत्राधिश्रयणं चुल्ल्या उपरि तण्डुलयुक्तस्थाल्याः स्थापनम्। स्थापनं स्थित्यनुकूलव्यापारः। तत्र स्थितिः स्थालीतण्डुलनिष्ठा। तदनुकूलः पुरुषचेष्टाविशेषः। धातूपात्तव्यापाराश्रयः पुरुषः कर्ता, स्वतन्त्रत्वात्। स्वातन्त्र्यं प्राधान्यमिति भाष्यम्। कर्मकरणादिकं तु पुरुषप्रयत्नपरतन्त्रत्वान्न कर्तृत्वं लभते इति स्थितिः। तत्र यदा सौकर्यातिशयविवक्षया कर्तुः पुरुषस्य व्यापारः प्रयत्नः न विवक्ष्यते, किन्तु कर्मादिगत एव व्यापारः विक्लित्त्यादिफलानुकूलत्वेन विवक्ष्यते तदा कर्मादिकारकाण्यपि कर्तृसंज्ञां लभन्ते इत्यर्थः। ननु कर्मादिगतव्यापारस्य पुरुषप्रयत्नाधीनत्वात् स्वतन्त्रत्वात्कथं कर्मणः कर्तृत्वमित्यत आह—स्वव्यापारे स्वतन्त्रत्वादिति। स्वातन्त्र्येण विवक्षितत्वादित्यर्थः। तदुक्तं 'कर्मवत्कर्मणा' इत्यत्र भाष्ये—'कर्मकर्तरि कर्तृत्वं स्वा-

सम्प्रति कर्तृत्वात्कर्तरि लकारः। साध्वसिश्छिनत्ति। काष्ठानि पचन्ति। स्थाली पचति। कर्मणस्तु, कर्तृत्वविवक्षायां प्राक्सकर्मका अपि प्रायेणाकर्मकाः। तेभ्यो भावे कर्तरि च लकाराः। पच्यते ओदनेन। भिद्यते काष्ठेन। कर्तरि तु-२७६६ **कर्मवत्कर्मणा तुल्यक्रियः ३।१।८७॥** कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात्। कार्यातिदेशोऽयम्। तेन यगात्मनेपदचिण्चिण्वदिटः स्युः। कर्तुर-

तन्त्रयस्य विवक्षितत्वात्' इति। अत्र कर्मग्रहणं करणादिकारकस्याप्युपलक्षणम्। तेनेति। असिना छिनत्तीत्यादिप्रयोगदशायां असिकुठारादीनां करणत्वादिसत्त्वेऽपि, 'असिः छिनत्ति' इत्यादिप्रयोगदशायां कर्तृत्वेन विवक्षितत्वात् कर्तरि लकार इत्यर्थः। साध्वसिः छिनत्तीति। अत्र करणस्य कर्तृत्वविवक्षा। 'साधु' इति क्रियाविशेषणं सौकर्यातिशयद्योतनाय। अतितैक्ष्ण्यात् पुरुषप्रयत्नविशेषमाघातातिशयं विना स्वयमेव असिः छिनत्तीत्यर्थः। काष्ठानि पचन्तीति। अत्रापि करणानां कर्तृत्वविवक्षा। स्थाली पचतीति। अत्राधिकरणस्य कर्तृत्वविवक्षा। काष्ठानामतिशुष्कत्वात् धमनफूत्कारानपेक्षया स्थाल्या अतिलघुत्वादविलम्बयश्रपणतया सौकर्यं बोध्यम्। कर्मणस्त्विति। ये छिदिभिदिप्रभृतयः एककर्मकाः, तत्र कर्मणः कर्तृत्वविवक्षायां 'वृक्षः छिनत्ती'त्यादौ प्राक्सकर्मकत्वेऽपि सम्प्रति कर्मणः कर्तृत्वविवक्षायामकर्मका एते इत्यर्थः। ये तु द्विकर्मकाः, तत्र एकस्य कर्मणः कर्तृत्वविवक्षायामपि इतरेण कर्मणा सकर्मकत्वसत्त्वात्प्रायेणेत्युक्तिः। ततश्च तेषु द्विकर्मकेषु कर्मणि कर्तरि च लकारः। तत्र कर्मणि लकारे यथा—'सुधां क्षीरसागरो मथ्यते'। कर्तरि यथा—'सुधां क्षीरसागरो मथ्नाति'। अथ यदुक्तं-एककर्मकेषु कर्मणः कर्तृत्वविवक्षायामकर्मकत्वमिति, तस्य प्रयोजनमाह—तेभ्यो भावे कर्तरि च लकारा इति। नतु कर्मणि, असम्भवात्। अत एव 'अकर्मकेभ्यो भावे कर्तरि ल' इत्युक्तमिति भावः। तत्र एककर्मकेभ्यः कर्मणः कर्तृत्वविवक्षायां भावे लकारमुदाहरति—पच्यते ओदनेनेति। ओदनकर्तृकः पाक इत्यर्थः। एवं भिद्यते काष्ठेनेत्यपि। यद्यपि पचेर्द्विकर्मकत्वम्, तथापि तण्डुलानामविवक्षायाम् एककर्मकत्वं पचेराश्रितम्। कर्तरि त्विति। एककर्मकेषु कर्मणः कर्तृत्वविवक्षायां कर्तरि लकारे विशेषो वक्ष्यते इत्यर्थः। कर्मवत्कर्मणा। 'कर्तरि शप्' इत्यतः कर्तरीत्यनुवृत्तं प्रथमया विपरिणम्यते। तुल्या क्रिया यस्य सः तुल्यक्रियः कर्ता। 'कर्मणे'त्यनेन कर्मकारकस्था क्रिया विवक्षिता, क्रियायाः कर्मकारकेण। तुल्यत्वस्य तत्स्थक्रियामादायैव उपपाद्यत्वात्। तदाह—कर्मस्थयेत्यादिना। कर्मणः कर्तृत्वेन विवक्षायां कर्ता कर्मवदिति यावत्। वाक्यार्थाऽभावे तु कर्मसंज्ञक इत्यर्थशङ्का स्यात्। तथा सति सकर्मकत्वात् पच्यते ओदनेन भिद्यते काष्ठेनेति भावे लो न स्यात्। कार्यातिदेशोऽयमिति। यद्यपि शास्त्रातिदेशे कार्यातिदेशे वा न फलभेदः। तथापि शास्त्रातिदेशस्यापि कार्यातिदेशार्थत्वावश्यत्वात् कार्यातिदेश एवाश्रयणीय इत्यर्थः। तेनेति। 'स्यु'रित्यत्रान्वेति। कर्मवत्त्ववचनेन कर्मकार्याणि 'सार्वधातुके यक्' इति यक्, 'भावकर्मणोः' इत्यात्मने-

बाढमित्यर्थेऽनयोस्तुल्यार्थता। उत अपि वा हन्यादघं हरिः। समर्थयोः किम्। उत दण्डः पतिष्यति। अपिधास्यति द्वारम्। प्रश्नः प्रच्छादनं च गम्यते। इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ्। **२८१० कामप्रवेदनेऽकच्चिति ३।३।१५३॥** स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्न तु कच्चिति। कामो मे भुञ्जीत भवान्। अकच्चिति इति किम्। कच्चिज्जीवति। **२८११ सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे ३।३।१५४॥** अलमर्थोऽत्र प्रौढिः। सम्भावनमित्यलमिति च प्रथमया सप्तम्या च विपरिणम्यते। सम्भावनेऽर्थे लिङ् स्यात्, तच्चेत्सम्भावनमलमिति, अलमि सिद्धाप्रयोगे सति। अपि गिरिं शिरसा

---

त्यर्थः। कमर्थमादायानयोरेकार्थकत्वमित्यत आह—बाढमिति। तथाच बाढार्थकयोः उत अपि इत्यनयोः प्रयोगे लिङ् स्यान्न तु लकारान्तरमित्यर्थः। उत अपि वेति। उत हन्यादघं हरिः, अपि हन्यादघं हरिरित्यन्वयः। 'उतापी'बाढमित्यर्थकौ। गम्यते इति। 'उत दण्डः पतिष्यती'त्यत्र उतशब्देन प्रश्नो गम्यते। 'अपिधास्यति द्वार'मित्यत्र अपिना धाधातोः प्रच्छादनार्थकत्वं गम्यत इत्यर्थः। इतः प्रभृतीति। 'वोताप्योः' इति मर्यादायामाङ्। 'उताप्योः' इत्यतः प्राक् भूते लिङ्निमित्ते लृङ् वेत्यधिक्रियते। 'उताप्योः'इत्यादिसूत्रेषु भूते 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इत्येवाधिक्रियते इत्युक्तम्। एवञ्च 'उताप्योः' इति सूत्रप्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूते लृङित्येवाधिक्रियते, नतु वाग्रहणम्। अतो नित्यमेवाऽत्र विषये क्रियातिपत्तौ भूते भविष्यति च लृङित्यर्थः। कामप्रवेदनेऽकच्चिति। अकच्चितीति च्छेदः। तदाह—नतु कच्चिती'ति। सर्वलकारापवादः अभिप्रायः इच्छा। काम इति। भवान् भुञ्जीतेति मे कामः। इच्छेत्यर्थः। अत्र लिङ्निमित्तस्य सत्त्वात् क्रियातिपत्तौ भूतेऽपि नित्यं लिङ्। प्रश्न एवायं कामप्रवेदनद्योतक इति प्राप्तिः। अत्र कच्चिच्छब्दस्य इच्छार्थकत्वाभावादिच्छार्थेष्विति वक्ष्यमाणं नात्र प्रवर्तते। सम्भावने। अलमर्थोऽत्र प्रौढिरिति। पर्याप्तिरित्यर्थः। विपरिणम्यते इति। सम्भावने इति यत् सप्तम्यन्तं तत् आवर्त्य प्रथमया सम्भावनमिति च विपरिणम्यते। यत्तु अलम् इति प्रथमान्तं तत् आवर्त्य सप्तम्या अलमि इति च विपरिणम्यत इत्यर्थः। 'छान्दसं विभक्तिव्यत्ययमाश्रित्ये'ति शेषः। तथाच सम्भावने इति सप्तम्यन्तं, सम्भावनमिति प्रथमान्तं च लभ्यते। तथा अलम् इति प्रथमान्तं अलमि इति सप्तम्यन्तं च लभ्यते। तत्र सम्भावने इति सप्तम्यन्तमर्थनिर्देशपरम्। तदाह—सम्भावनेऽर्थे लिङ् स्यादिति। 'उत्कटान्यतरकोटिकं ज्ञानं सम्भावन'मित्युच्यते। सम्भावनमिति प्रथमान्तं तु अलमिति प्रथमान्तेन विशेष्यते। इतिहेतौ। तदाह—तच्चेदिति। तत्सम्भावनम्, अलं पर्याप्तिहेतुकं चेदित्यन्वयः। षिधधातोर्ज्ञानार्थकात् 'मतिबुद्धि' इति वर्तमाने कर्मणि क्ते सिद्धशब्दः। सिद्धे गम्यमानेऽप्यकमर्थं अप्रयोगो यस्य सः सिद्धाप्रयोगः तस्मिन्निति विग्रहः। अलमि इति सप्तम्यन्तमत्र विशेष्य-

भिन्द्यात् । सिद्धाप्रयोगे किम् । अलं कृष्णो हस्तिनं हनिष्यति । **२८१२ विभाषा धातौ सम्भावनवचनेऽयदि ३।३।१५५॥** पूर्वसूत्रमनुवर्तते । सम्भावनेऽर्थे धातावुपपदे उक्तेऽर्थे लिङ् वा स्यात्, न तु यच्छब्दे । पूर्वेण नित्ये प्राप्ते वचनम् । सम्भावयामि भुञ्जीत भोक्ष्यते वा भवान् । अयदि किम् । सम्भावयामि यद्भुञ्जीथास्त्वम् । **२८१३ हेतुहेतुमतोर्लिङ् ३।३।१५६॥** वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत् सुखं यास्यति । 'भविष्यत्येवेष्यते' ( वा २२७६) नेह । हन्तीति पलायते । **२८१४ इच्छार्थेषु लिङ्लोटौ ३।३।१५७॥** इच्छामि भुञ्जीत, भुङ्क्तां वा भवान् । एवं कामये प्रार्थये इत्यादियोगे बोध्यम् । 'कामप्रवेदने इति वक्तव्यम्' (वा २२३६) । नेह, इच्छन्करोति । **२८१५ लिङ् च ३।३।१५९॥** समानकर्तृकेषु इच्छार्थेषु लिङ् । भुञ्जीयेतीच्छति । **२८१६ इच्छार्थेभ्यो विभाषा वर्तमाने ३।३।१६०॥** लिङ् स्यात्पक्षे लट् । इच्छेत् । इच्छ-

---

समर्पकं सम्बध्यते । अलंशब्दप्रयोगं विनापि तदर्थे गम्यमाने इति यावत् । तदाह—सिद्धाप्रयोगे सतीति । 'अल'मिति शेषः । अपि गिरिमिति । बलवन्तं पुरुषमधिकृत्य आयुक्तिरियम् । प्रायेण शिरसा गिरिं भेत्तुमयं समर्थ इत्यर्थः । गिरिभेदसम्भावनस्य सामर्थ्यहेतुकत्वद्योतकः अपिशब्दः । अत्र लिङ्निमित्तसत्त्वात् क्रियातिपत्तौ भूते लृङ् । 'अलमिति सम्भावने सिद्धाप्रयोगश्चेत्' इति सुवचम् । विभाषा धातौ । 'अयदी'ति च्छेदः । तदाह—न तु यदिति । लिङभावे लृट्, 'शेषे लृडयदौ' इत्यतस्तदनुवृत्तेः । सम्भावयामीति । प्रायेण भोक्तुं समर्थ इत्यर्थः । हेतुहेतुमतोर्लिङ् । पूर्वसूत्राद्विभाषानुवृत्तिं मत्वा आह—वा स्यादिति । पक्षे लृट् । हेतुभूते फलभूते वाऽर्थे वर्तमानाद्धातोर्लिङ् वा स्यादिति यावत् । भविष्यत्येवेति । लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणादिति भावः । हन्तीतीति । इतिर्हेतौ वर्तमानकालिकहननाद्धेतोरित्यर्थः । अत्र लिङ्निमित्तसत्त्वात् भविष्यति तु क्रियातिपत्तौ भूते च लृङ् । इच्छार्थेषु लिङ्लोटौ । इच्छार्थकधातुषु प्रयुज्यमानेषु लिङ्लोटौ स्तः । सर्वलकारापवादः । असमानकर्तृकविषयमिदम् । समानकर्तृकेषु तु 'लिङ् च' इति वक्ष्यते । इच्छामीति । भुञ्जीत भवानिति इच्छामीत्यन्वयः । कामप्रवेदने इति । परं प्रति स्वाभिप्रायाविष्करणे 'इच्छार्थेषु लिङ्लोटौ' इति विधिरित्यर्थः । इच्छन्करोतीति । परं प्रति स्वाभिप्रायाविष्करणाभावान्न लिङ्लोटाविति भावः । 'कामप्रवेदनेऽकच्चिति' इति सूत्रं तु प्रकरणादिना यत्र कामप्रवेदनं नत्विच्छार्थकमुपपदमस्ति तद्विषयमिति बोध्यम् । इत उत्तरसूत्रं 'समानकर्तृकेषु तुमुन्'नित्यत्र कृदधिकारे व्याख्यास्यते । लिङ् च । समानकर्तृकेष्विति, इच्छार्थेष्विति चानुवर्तते । तदाह—समानेत्यादि । भुञ्जीयेतीच्छतीति । अत्र भोक्तुरेव इषिकर्तृत्वात्समानकर्तृकत्वम् । 'समानकर्तृकेषु इच्छार्थेषु'ति लोटो निवृत्त्यर्थमिदं सूत्रम् । क्रियातिपत्तौ तु भविष्यति नित्यं लृङ्, भूते चेत्यधिकारः सम्पूर्णः । इच्छार्थेभ्यो । लिङित्येवानुवर्तते । समानकर्तृकेष्विति

ति । कामयेत । कामयते । 'विधिनिमन्त्रण' ( सू २२०८ ) इति लिङ् । विधौ—यजेत । निमन्त्रणे—इह भुञ्जीत भवान् । आमन्त्रणे—इहासीत । अधीष्टे—पुत्रमध्यापयेद्भवान् । सम्प्रश्ने–किं भो वेदमधीयीय उत तर्कम् । प्रार्थने–भो भोजनं लभेय । एवं लोट् । **२८१७ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३।३।१६३॥** लोट् च । प्रैषो विधिः । अतिसर्गः कामचारानुज्ञा । भवता यष्टव्यम् । भवान्यजताम् । चकारेण लोटोऽनुकर्षणं प्राप्तकालार्थम् । **२८१८ लिङ् चोर्ध्वमौहूर्तिके ३।३।१६४॥** प्रैषादयोऽनुवर्तन्ते । मुहूर्तादूर्ध्वं यजेत, यजताम्, यष्टव्यम् । **२८१९ स्मे लोट् ३।३।१६५॥** पूर्वसूत्रस्य विषये । लिङः कृत्यानां चापवादः । ऊर्ध्वं मुहूर्ताद्यजतां स्म । **२८२० अधीष्टे च ३।३।१६६॥** स्मे उपपदेऽधीष्टे लोट् स्यात् । त्वं स्माऽध्यापय । **२८२१ लिङ् यदि ३।३।१६८॥** यच्छब्दे उपपदे काल-

निवृत्तम् । तत् सूचयन्नुदाहरति—इच्छेत् इच्छतीति । 'विधिनिमन्त्रण' इति सूत्रातौ व्याख्यातमपि सूत्रक्रमप्राप्तत्वात् स्मारितम् । एवं लोडिति । लोट् चेति विध्यादिषु विहितो लोडप्येवमुदाहर्तव्य इत्यर्थः । प्रैषातिसर्ग । लोट् चेति । पूर्वसूत्रोपात्तो लोट् चकारात्समुच्चीयते । कृत्यसंज्ञकाः प्रत्ययाः वक्ष्यमाणा लोट् च प्रैषादिषु भवन्तीत्यर्थः । प्रैषे अतिसर्गे च कृत्यप्रत्ययमुदाहरति—भवता यष्टव्यमिति । भावे तव्यप्रत्ययः । लोटमुदाहरति—भवान् यजतामिति । ननु चकारेण लोटोऽनुकर्षणं व्यर्थम्, प्रैषस्य विधिरूपतया, अतिसर्गस्य आमन्त्रणरूपतया च 'लोट् च' इत्यनेनैव सिद्धेरित्यत आह—चकारेणेति । प्राप्तकाले यथा—गुरुणा भोक्तव्यम् । गुरुर्भुञ्जीत । भोजनं प्राप्तावसरमित्यर्थः । 'प्राप्तकाले च कृत्याश्च' इत्युक्तौ तु निमन्त्रणादिष्वपि कृत्याः स्युः । अतः प्रैषादिग्रहणम् । लिङ् चोर्ध्वमौहूर्तिके । 'लोडर्थलक्षणे च' इत्युत्तरमेवञ्जातीयकमेव सूत्रं लिङ्लङ्लुङ्लृङ्विधायकं प्राक् पठितम् । तत्र ऊर्ध्वमौहूर्तिकशब्दो व्याख्यातः । प्रैषादयः इति । तथाच मुहूर्तादुपरितनकालके भाव्यर्थे विद्यमानाद्धातोः प्रैषातिसर्गप्राप्तकालेषु लिङ् च स्यात्, लोट्, कृत्याश्चेत्यर्थः । क्रमेण लिङादीनुदाहरति–मुहूर्तादूर्ध्वं यजेत यजतां यष्टव्यमिति । अत्र प्राप्तकाले अप्राप्तस्य लिङो विधिः, विध्यादिसूत्रे लिङ्विधौ प्राप्तकालस्य ग्रहणाऽभावात् । प्रैषातिसर्गयोस्तु विध्यादिसूत्रेणैव लिङ् सिध्यति । लिङ एवात्र विधौ तु, तेन लोटः कृत्यानां च बाधः स्यात् । अतश्चकारेण तेषामपि विधिरिति ज्ञेयम् । स्मे लोट् । पूर्वसूत्रेति । तथाच मुहूर्तादुपरितनकाले प्रैषातिसर्गप्राप्तकाले लोडेव स्यात्, नतु लिङ् कृत्याश्चेत्यर्थः । तदाह—लिङः कृत्यानां चापवाद इति । अधीष्टे च । लोट् स्यादिति । अधीष्टे विहितस्य लिङोऽपवादः । अधीष्टं सत्कारपूर्वको व्यापार इत्युक्तम् । त्वं स्माध्यापयेति गुरुं प्रत्युक्तिः । 'स्मे लोडधीष्टे च' इत्येकसूत्रत्वेन सिद्धे योगविभागस्तु ऊर्ध्वमौहूर्तिक इत्यनुवृत्तिनिवृत्त्यर्थः । 'कालसमयवेलासु तुमुन्' इत्युत्तरसूत्रं तु कृदधिकारे व्याख्यास्यते ।

समयवेलासु च लिङ् स्यात्। कालः समयो वेला वा यद्भुञ्जीत भवान्। **२८२२ अर्हे कृत्यतृचश्च ३।३।१६९ ॥** चाल्लिङ्। त्वं कन्यां वहेः। **२८२३ शकि लिङ् च ३।३।१७२ ॥** शक्तौ लिङ् स्यात्, चात्कृत्याः। भारं त्वं वहेः। 'माङि लुङ्' (सू २२१९)। मा कार्षीः। कथं मा भवतु, मा भविष्यतीति। नायं माङ् किंतु माशब्दः। **२८२४ धातुसंबन्धे प्रत्ययाः ३।४।१॥** धात्वर्थानां संबन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः। तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः। वसन्ददर्श। भूते लट्। अतीतवासकर्तृकर्तृकं दर्शनमर्थः। सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणो

---

लिङ् यदि। **कालसमयवेलास्वित्यनुवर्तते। सर्वलकारापवादः। तुमुनपवादश्च। भुञ्जीत भवानिति यत् तस्य कालः समयो वेला वेत्यन्वयः।** अर्हे कृत्यतृचश्च। चाल्लिङिति। **योग्ये कर्तरि गम्ये कृत्याः तृच् लिङ् चेत्यर्थः।** त्वं कन्यां वहेरिति। **कन्याविवाहस्य योग्य इत्यर्थः।** शकि लिङ् च। **'शक्' इति भावे क्विबन्तम्। शक्तौ गम्यमानायामित्यर्थः।** भारं त्वं वहेरिति। **वोढुं शक्त इत्यर्थः। माङि लुङिति व्याख्यातमपि क्रमप्राप्तं विशेषविवक्षया पुनः स्मार्यते। ननु सर्वलकारापवादोऽयमित्युक्तम्। एवं सति मा भवतु मा भविष्यतीति कथमिति शङ्कते—**कथमिति। **परिहरति—**नायं माङिति। किंत्विति। **ङकारानुबन्धविनिर्मुक्तस्यापि अव्ययेषु पाठादिति भावः। नच माशब्दमादाय मा भवत्वित्यादिप्रयोगसत्त्वे 'माङि लुङ्' इति व्यर्थमिति वाच्यम्। सर्वलकारविषये 'न माङ्योगे' इत्यडाड्रहितलुङन्तप्रयोगार्थं तदावश्यकत्वात्।** धातुसम्बन्धे। **धातुशब्देन धात्वर्थो लक्ष्यते। धात्वोः सम्बन्ध इति विग्रहः, सम्बन्धस्य द्विनिष्ठत्वात्। तथा च धात्वर्थयोः सम्बन्धे सति प्रत्ययाः स्युरिति लब्धम्। कस्मिन्नर्थे इत्याकाङ्क्षायां काले इति गम्यते, 'वर्तमाने लट्' इत्यारभ्य तत्तत्कालविशेषेष्वेव प्रत्ययविधिदर्शनात्। तत्र तत्तद्विधिभिरेव तत्तत्कालविशेषे प्रत्ययसिद्धेस्ततोऽन्यस्मिन्काले इति गम्यते। तदाह—**धात्वर्थानामित्यादिना। **धात्वर्थयोरित्यर्थः। उदाहरणत्वाभिप्रायं बहुवचनम्। 'वर्तमानसामीप्ये वर्तमानवद्वा' इत्यादिसूत्रे यत्र काले ये प्रत्यया उक्ताः ते धात्वर्थयोः सम्बन्धे गम्ये ततोऽन्यस्मिन्नपि काले स्युरिति यावत्। तथा च 'वसन् ददर्श' इत्यत्र लडादेशः शतृप्रत्ययो' भूतकाले इति सिद्धं भवति। ननु 'वसन् ददर्श' इत्यत्र भूते लडिव वर्तमाने लिडित्यपि स्यादित्यत आह—**तिङन्तेति। **'वसन् ददर्श' इत्यादौ तिङन्तवाच्या दर्शनादिक्रिया प्रधानम्। वासादिक्रिया तु दर्शनादिक्रियार्थत्वात् गुणभूता। अतः प्रधानभूतदर्शनादिक्रियानुसारेण गुणभूतवासादिक्रियावाचिभ्य एव इह प्रत्ययाः कालान्तरेषु विधीयन्त इत्यर्थः।** भूते लडिति। **एवञ्च उषित्वा ददर्शेत्यर्थः। तदाह—**अतीतेति। **अतीतवासे कर्ता यस्येति विग्रहः। 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकाद्व्यधिकरणपदो**

यः पुत्रस्तत्कर्तृकं भवनम् । २८२५ क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः । ३।४।२ ॥ पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च हिस्वौ स्तः । तिङामपवादः । तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्त-

---

बहुव्रीहिः । उदाहरणान्तरमाह—सोमयाजीति । सोमेन इष्टवान्यः स सोमयाजी । 'करणे यजः' इति भूते विहितो णिनिः, इह भवितेत्यनद्यतनभविष्यल्लुडन्तप्रधानक्रियानुसारेण अनद्यतनभविष्यति बोध्यः । तदाह—सोमेन यक्ष्यमाण इति । भवनमिति । उत्पत्तिरित्यर्थः । 'गोमानासी'दित्यप्युदाहार्यम् । अत्र गौरस्यास्तीति अस्तिक्रियायां वर्तमानायां 'तदस्यास्ती'ति विहितो मतुप् गौरस्यासीदिति भूतायामस्तिक्रियायां भवति, धात्वर्थद्वयसम्बन्धस्य सत्त्वात् । एतेन अर्थद्वारके धात्वोः सम्बन्धे इत्यपि व्याख्यानं परास्तम् । तथा सति परस्परसम्बन्धार्थबोधकधातुद्वयप्रयोगे प्रत्यया इत्यर्थलाभात् गोमानासीदित्यत्र मतुबनापत्तेः । नहि धात्वोरिह प्रयोगोऽस्ति । धात्वर्थयोः सम्बन्धे इत्यर्थाभ्युपगमे तु गोमानासीदित्यत्र धातुद्वयप्रयोगाभावेऽपि धात्वर्थद्वयस्य सत्त्वादासीदर्थे मतुप् निर्बाध इत्यन्यत्र विस्तरः। क्रियासमभि । अत्र चत्वारि वाक्यानि । तत्र 'क्रियासमभिहारे लो'डिति प्रथमं वाक्यम् । पौनःपुन्यं भृशार्थश्च क्रियासमभिहार इत्युक्तम् । क्रियासमभिहारे इति धात्वर्थविशेषणम् । क्रियासमभिहारविशिष्टक्रियावृत्तेर्धातोरिति लभ्यते । लोट् तु द्योतकः । तदाह—पौनः पुन्ये भृशार्थे च द्योत्ये इति । क्रियासमभिहारविशिष्टक्रियावृत्तेर्धातोर्लोडिति यावत् । सर्वलकारापवादः । 'लोटो हिस्वा'विति द्वितीयं वाक्यं व्याचष्टे—तस्येति । पूर्ववाक्यविहितस्य लोटः हिस्वावादेशौस्त इत्यर्थः । तिङामपवाद इति । अपवादावित्यर्थः । प्रत्येकाभिप्रायमेकवचनम् । ननु हिस्वयोरुभयोरपि लादेशत्वात् परस्मैपदत्वं स्यात् । तथा सति हेः परस्मैपदत्वं, स्वादेशस्य त्वात्मनेपदत्वमितीष्टा व्यवस्था न सिध्येत् । अस्य स्वादेशस्य तङ्प्रत्याहारप्रविष्टत्वाभावेन 'तङानावात्मनेपदम्' इत्यस्याऽप्रवृत्तेः । 'तिप्तस्झि' इत्यादिसूत्रोपात्तेषु ताऽऽतामादिष्वेव तङसंज्ञाप्रवृत्तेः । किञ्च अनयोर्हिस्वयोः 'तिप्तस्झि' इति सूत्रानन्तर्भूतत्वात्तिङ्त्वं च दुर्लभमित्यत आह—तौ चेति । 'लोटो हिस्वा'विति द्वितीयवाक्ये तावत्क्रियासमभिहारे लोडिति प्रथमवाक्यात् लोडित्यनुवृत्तं स्थानषष्ठ्या विपरिणतं तृतीयं वाक्यं सम्पद्यते । तत्र हि 'लोटो हिस्वौ' इति द्वितीयवाक्यात् हिस्वावित्यनुवृत्त धर्मपरमाश्रीयते । तथा च लोडादेशो हिस्ववद्भवत इति लभ्यते । कौ भवतः इत्याकाङ्क्षायां पूर्ववाक्योपस्थितौ हिस्वाविति गम्यते । ततश्च याविमौ तिङन्तर्भूतौ हिस्वावुक्तौ तौ प्रसक्तलोडादेशतिङन्तर्भूतहिस्ववत् भवत इति तृतीयं वाक्यं पर्यवस्यति । तिङन्तर्भूतहिस्वयोस्तावत् क्रमात् परस्मैपदत्वमात्मनेपदत्वं तिङ्त्वं च प्रसक्तम् । अतः प्रकृतौ हिस्वौ क्रमात् परस्मैपदात्मनेपदसंज्ञौ स्तः तिङ्संज्ञौ चेत्यर्थः । तिङामपवादावित्युक्तं भवति । ननु 'वा च तध्वमोः' इति तध्वमोर्हिस्वादेशवि-

स्तिङ्संज्ञौ च । तध्वमोर्विषये तु हिस्वौ वा स्तः । पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्येते । हिस्वविधानसामर्थ्यात् । तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि । आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु । २८२६ **समुच्चयेऽन्यतरस्याम् ३।४।३॥** अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात् । २८२७ **यथाविध्यनुप्रयोगः पूर्वस्मिन् ३।४।४॥** आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्र-

कल्पविधिरनुपपन्नः । लोडादेशभूतहिस्वयोस्तिङ्त्वादतया लोटस्तध्वमोरप्रसक्तेरित्यत आह—तध्वमोर्विषये त्विति । स्थानषष्ठीमाश्रित्य लोडादेशतध्वमोः स्थाने हिस्वावित्यर्थ इति न भ्रमितव्यम्, येनोक्तदोषः स्यात् । किन्तु विषयविषयिभावः षष्ठ्यर्थः । तथा च तध्वमोर्विषये लोटो हिस्वौ, पक्षे तध्वमाविति फलतीत्यर्थः । अत्र मध्यमपुरुषबहुवचनमेव तशब्दो गृह्यते । व्याख्यानात् ध्वंसाहचर्याच्च । ननु हिस्वयोरनयोर्मध्यमपुरुषैकवचनत्वस्यात्यतिदेशाद्युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव हिस्वौ स्याताम् । तथा च 'इमौ हिस्वौ सर्वेषां पुरुषाणां, सर्वेषां च वचनानामिष्येते' इति भाष्यमनुपपन्नमित्यत आह—पुरुषैकवचनसंज्ञे त्विति । हिस्वयोर्मध्यमपुरुषसंज्ञा एकवचनसंज्ञा च नातिदिश्यते इत्यर्थः । कुत इत्यत आह—हिस्वविधानेति । यदि हिस्वयोर्मध्यमपुरुषैकवचनसंज्ञे स्याताम् । तर्हि युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव लोटो हिस्वौ स्याताम् । अन्यत्र तु यथायथं तिबाद्यादेशाः स्युः । तथा सति लोटो हिस्वविधानमनर्थकं स्यात् । अतो न पुरुषवचनातिदेश इत्यर्थः । तेनेति । हिस्वयोः पुरुषवचनातिदेशाऽभावेन क्रमात् परस्मैपदात्मनेपदसंज्ञालाभेन चेत्यर्थः । सकलेति । सकलपुरुषवचनविषये हिर्भवति । स च भवन् परस्मैपदिभ्य एव कर्तर्येव भवति, न त्वात्मनेपदिभ्यो भावकर्मकर्तृष्वित्यर्थः, 'शेषात्कर्तरि परस्मैपदम्' इत्युक्तेरिति भावः । आत्मनेपदिभ्यः स्वः इति । 'अनुदात्तङित आत्मनेपदम्' 'भावकर्मणोः' इत्यादिसूत्रविषयेभ्यो धातुभ्यः भावकर्मकर्तृषु लोटः स्व एव भवतीत्यर्थः । अनयोरत्र क्रमात् परस्मैपदात्मनेपदसंज्ञाविध्यभावे तु लादेशत्वेन उभयोः परस्मैपदत्वात् कर्तर्येव परस्मैपदमात्मनेपदिभ्योऽपि स्यादिति भावः । समुच्चये । समभिहार इति पदरहितं 'क्रिया, लोट् लोटो हिस्वौ वा च तध्वमोः' इति पूर्वसूत्रमनुवर्तते । क्रियेति लुप्तषष्ठीबहुवचनान्तं समुच्चय इत्यत्रान्वेति । तदाह—अनेकक्रियासमुच्चये द्योत्ये इति । एवं च कारकसमुच्चयमाश्रित्य नाऽस्य प्रवृत्तिः । प्रागुक्तमिति । धातोर्लोट्, तस्य हिस्वौ प्रसिद्धहिस्वधर्मकौ, तध्वमोर्विषये वा इत्युक्तमित्यर्थः । यथाविध्यनुप्रयोगः । 'क्रियासमभिहारे' इति, 'समुच्चयेऽन्यतरस्याम्' इति च लोड्विधी उक्तौ । तयोर्मध्ये यत्पूर्वसूत्रं 'क्रियासमभिहारे' इति तदेतत्पूर्वशब्देन परामृश्यते । तदाह—आद्ये लोड्विधाने इति । विधिमनतिक्रम्य यथाविधि । यस्याः प्रकृतेः लोड्विहितः तस्या अनुप्रयोग इति लभ्यते । तदाह—लोट्प्रकृतिभूत एवेति । अत्राऽनुप्रयोगः पश्चात्प्रयोगः,

योज्यः। २८२८ समुच्चये सामान्यवचनस्य ३।४।५॥ समुच्चये लोड्विधौ सामान्यार्थकस्य धातोरनुप्रयोगः स्यात्। अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च। ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः। 'क्रियासमभिहारे द्वे वाच्ये' (वा ४६९५)। याहि याहीति याति। पुनःपुनरतिशयेन वा यानं ह्यन्तस्यार्थः। एककर्तृकं वर्तमानं यानं 'याती'त्यस्य। इतिशब्दस्त्वभेदान्वये तात्पर्यं ग्राहयति। एवं यातः। यान्ति। यासि। याथः। याथ। यात यातेति यूयं यात। याहि याहीत्ययासीत्। अयास्यद्वा। अधीष्वाऽधीष्वेत्यधीते। ध्वंविषये पक्षे अधीध्वमधीध्वमिति यूयमधीध्वम्। समुच्चये तु सक्तून्पिब, धानाः खादेत्यभ्यवहरति। अन्नं भुङ्क्ष्व, दाधिकमास्वादयस्वेत्यभ्यवहरते। तध्वमोस्तु पिबत, खादतेत्यभ्यवहरत। भुङ्ग्ध्वमास्वदध्वमित्यभ्यवहरध्वम्। पक्षे हिस्वौ। अत्र समुच्चीय-

मानस्यव्यवहितत्वं विवक्षितम्, 'लुनीहि लुनीहि इत्येवायं लुनाती'ति भाष्यप्रयोगालिङ्गात्। समुच्चये सामान्यवचनस्य। उच्यतेऽनेनेति वचनः। सामान्यवाचिन इत्यर्थः। फलितमाह—सामान्यार्थकस्येति। समुच्चीयमानक्रियासामान्यवाचिन इत्यर्थः। अनुप्रयोगादिति: अनुप्रयुज्यमानादित्यर्थः। तत इति। अनुप्रयुज्यमानधातुप्रकृतिकलडादिभिरित्यर्थः। हिस्वाभ्यां तु न सङ्ख्याकारकाद्यभिव्यक्तिः। तथाच भाष्यम्—'हिस्वान्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थः' इत्यादि। 'क्रियासमभिहारे द्वे वाच्ये' इति वार्तिकं द्विरुक्तप्रक्रियायां व्याख्यातम्। इदमाद्यसूत्रविहितलोडन्तविषयमिति भाष्ये स्पष्टम्। क्रियासमभिहारे लोटमुदाहरति—याहि याहीति यातीति। भाष्ये 'इति' शब्दस्य दर्शनादिति भावः। ह्यन्तस्येति। याहि याहीत्यस्येत्यर्थः। एककर्तृकमिति। यातीति यानकर्तुस्तदेकत्वस्य च प्रतीतेरित्यर्थः। अभेदान्वये इति। तथाच पुनः पुनरतिशयेन वा यद्यानं तदात्मकमेकर्तृकं वर्तमानं यानमिति बोधः। तिङन्तेषु सर्वत्र क्रियाविशेष्यक एव बोध इति सिद्धान्तादेवमुक्तिः। एवमिति। याहि याहीति यातः। याहि याहीति यान्तीत्यादिसकलपुरुषवचनेषूदाहार्यमित्यर्थः। याहि याहीति ययौ। याहि याहीति याता। याहि याहीति यास्यति। याहि याहीति यातु। लोण्मध्यमपुरुषबहुवचनतादेशविषये लोटो हिभावविकल्प उक्तः—वा च तध्वमोरिति। तत्र हिभावपक्षे याहि याहीति यूयं यातेति सिद्धवत्कृत्य अभावपक्षे आह—यात यातेति यूयं यातेति। याहि याहीत्ययात्। याहि याहीति यायात्। लुङ्याह—याहि याहीत्ययासीदिति। लृङ उदाहरति—अयास्यदेति। याहि याहीत्ययास्यदिति लृङि रूपम्। यास्यति वेति पाठे लृटि उदाहरणम्। क्रमस्तु न विवक्षितः। पक्षे इति। ध्वंविषये स्वादेशाभावपक्षे इत्यर्थः। यूयमधीध्वम् इति। लोण्मध्यमपुरुषबहुवचनम्। भावकर्मणोस्तु भूयस्व भूयस्वेति भूयते। पच्यस्व पच्यस्वेति पच्यते इत्युदाहार्यम्। अथ 'समुच्चये सामान्यवचनस्य' इत्यस्योदाहरति—

मानविशेषाणामनुप्रयोगार्थेन सामान्येनाऽभेदान्वयः । पक्षे सक्तून्पिबति । धानाः खादति । अन्नं भुङ्क्ते । दाधिकमास्वादयते । एतेन—

'पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हराऽमराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥'
माघ स. १ श्लो. ५१

इति व्याख्यातम् अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात् । इह पुनः पुनश्चस्कन्देत्यादिरर्थ इति व्याख्यानं भ्रममूलकमेव । द्वितीयसूत्रे 'क्रियासमभिहारे' इत्यस्याननुवृत्तेः । लोडन्तस्य द्वित्वापत्तेश्च । पूरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषांचित् भ्रम एव । पुरुषवचनसंज्ञे इह नेत्युक्तत्वात् । इति लकारार्थप्रकरणम् ।

---

समुच्चये द्विविति । अभ्यवहरतीति । पानं द्रवद्रव्यस्य दन्तसंमर्दनं विना भक्षणम् । खादनं तु कठिनद्रव्यस्य चर्वणम् । तयोः सामान्यरूपमभ्यवहरणम्, यथाकथञ्चित् भक्षणात्मकत्वात् । पक्षे हिस्वाविति । तध्वमोर्विषये कदाचित् हिस्वादेशौ पक्षे इत्यर्थः । 'पिब खादेत्यभ्यवहरते'इत्युदाहार्यम् । अत्रेऽपि । 'पिब खादेत्यभ्यवहरती'त्यादौ समुच्चीयमानपानखादनादिक्रियाविशेषाणामनुप्रयुज्यमानधातुवाच्याभ्यवहरणात्मकक्रिया सामान्येन अभेदान्वय इत्यर्थः । पक्षे सक्तूनिति । समुच्चये लोडभावपक्षे अनुप्रयोगोऽपि सामान्यवचनस्य नास्तीति भावः ।

एतेनेति । 'समुच्चयेऽन्यतरस्याम्' इति 'समुच्चये सामान्यवचनस्य' इति च सूत्रद्वयेन तदुदाहरणप्रदर्शनेन च 'पुरीमवस्कन्दे'त्यादि माघकाव्यस्थं श्लोकवाक्यं व्याख्यातमित्यर्थः । बली रावणः नमुचिद्विषा इन्द्रेण सह विगृह्य विरोधं प्राप्य, पुर्याः अमरावत्याः अवस्कन्दनं पीडनं, नन्दनवनस्य लवनं रत्नानां मोषणम्, अमराङ्गनानां हरणम् इत्येवंप्रकारेण अहर्दिवम् अहन्यहनि अस्वास्थ्यं चक्रे कृतवानित्यन्वयः इत्थंशब्दः इतिपर्यायः अवस्कन्दनादिक्रियाविशेषाणां अस्वास्थ्यक्रियासामान्ये अभेदं ग्राहयति फलितमाह—अवस्कन्दनलवनादीति । आदिना मोषणं हरणं च गृह्यते । भ्रममूलकत्वमुपपादयति—द्वितीयसूत्रे इति । अननुवृत्तेरिति । भाष्ये तदनुवृत्तेरनुक्तत्वादिति भावः । तदनुवृत्त्यभ्युपगमे बाधकमाह—लोडन्तस्येति । 'समुच्चयेऽन्यतरस्याम्' इति सूत्रे 'क्रियासमभिहारे' इत्यनुवृत्तौ 'अवस्कन्दे'त्यादिलोडन्तानां 'क्रियासमभिहारे द्वे वाच्ये' इति द्वित्वापत्तेरित्यर्थः । भ्रम एवेति । मध्यमपुरुषांऽशे एकवचनांशे च भ्रम एवेत्यर्थः । कुत इत्यत आह—पुरुषवचनसंज्ञे इह नेत्युक्तत्वादिति । अत्र भाष्ये हिस्वान्तयोरनभिव्यक्तसङ्ख्याकालकत्वात्तदभिव्यक्तये अनुप्रयोगस्य न्याय्यत एव प्राप्तत्वादनुप्रयोगविधिर्मास्तु इत्युक्तम् । एवञ्च 'तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्' इति श्रुतौ 'समुच्च-

# अथ कृदन्ते कृत्यप्रकरणम् ॥ ६३ ॥

२८२९ धातोः ३।१।९१॥ आ तृतीयसमाप्तेरधिकारोऽयम्। 'तत्रोपपदं सप्तमीस्थम्' (सू ७८१)। 'कृदतिङ्' (सू ३७४)। २८३० वाऽसरूपोऽस्त्रियाम् ३।१।९४॥ परिभाषेयम्। अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्ययः उत्सर्गस्य बाधको वा स्यात्स्त्र्यधिकारोक्तं विना। २८३१ कृत्याः ३।१।९५॥ अधिकारो-

---

येऽन्यतरस्याम्' इति लोटो हिस्वावेव भवतः, न त्वनुप्रयोगः। तत्र जननमरणक्रिययोरेव विवक्षिततया संख्याकालाभिव्यक्तेरविवक्षितत्वेन तत्राऽनुप्रयोगस्य प्रयोजनाऽभावात्। एतेन 'आ च सत्यलोकादाचाऽवीचेर्जायस्व म्रियस्व' इति विपरिवर्तमानमात्मानं जीवलोकं चालोकयाऽस्मिन् संसारे नित्याऽशुचिदुःखात्मकं प्रसक्त्यानमुपवर्तते' इति वाचस्पत्यग्रन्थेऽपि जायस्व म्रियस्वेति व्याख्यातम्। न चात्र 'समुच्चयेऽन्यतरस्याम्' इत्यत्र 'क्रियासमभिहारे' इत्यस्यानुवृत्तेरुक्तत्वात् कथमिह पौनःपुन्यावगतिरिति वाच्यम्, आ च सत्यलोकादाचावीचेः विपरिवर्तमानम् इति समभिव्याहारेण तदुपपत्तेः। उदाहृतश्रुतौ तु पौनःपुन्यं असकृत्पदगम्यमित्यदोषः। कल्पतरुग्रन्थे तु जायस्व म्रियस्वेत्यत्र 'क्रियासमभिहार' इति सूत्रेण लोडित्युक्तम्। तत्तु द्वित्वापत्तेरुपेक्ष्यमिति शब्देन्दुशेखरे प्रपञ्चितम्। इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां लकारार्थप्रक्रियानिरूपणं समाप्तम्।

अथ कृदन्तप्रक्रिया निरूप्यन्ते। तदे । 'प्रत्यया अथ कथ्यन्ते तृतीयाध्यायगोचराः' इति प्रतिज्ञातेषु तृतीयाध्यायस्थप्रत्ययेषु प्रथमपादे 'प्रत्ययः', 'परश्च' इत्यारभ्य 'कुषिरञ्जोः प्राचां श्यन्' इत्यन्तैः सूत्रैर्विहिताः कतिचित्प्रत्यया निरूपिताः। अथ तदुत्तरसूत्रविहितान् निरूपयितुमुपक्रमते—धातोः। आ तृतीयेति। आ तृतीयाध्यायपरिसमाप्तेरित्यर्थः। एतच्च भाष्ये स्पष्टम्। तत्रोपपदं सप्तमीस्थम् इति। कृदतिङ् इति। व्याख्यातं प्राक्। वाऽसरूपोऽस्त्रियाम्। असरूपः इति छेदः। परिभाषेयमिति। अधिकारत्वे स्वरितत्वकल्पनागौरवादिति भावः। असरूपः इति लिङ्गनिर्देशः। यत्र असरूपप्रत्ययो विधास्यते तत्र वेत्युपतिष्ठते। 'वेत्यतः प्राक् 'बाधक' इति शेषः। असरूपो वा बाधको भवतीति यावत्। कस्य बाधको वेत्याकाङ्क्षायाम् उत्सर्गस्येत्यर्थाल्लभ्यते। फलितमाह—अस्मिन् धात्वधिकारे इत्यादिना। स्त्रीशब्दः स्वर्यते। तदाह—स्त्र्यधिकारोक्तं विनेति। 'स्त्रियां क्तिन्' इति वक्ष्यमाणस्त्र्यधिकारस्थमपवादं विनेत्यर्थः। स्त्र्यधिकारस्तु असरूपः प्रत्ययः उत्सर्गस्य नित्यमेव बाधक इति भावः। 'ण्वुल्तृचौ' इत्युत्सर्गः। 'इगुपधज्ञाप्रीकिरः कः' इत्यपवादः। तद्विषये ण्वुल्तृचावपि भवतः। विक्षिपः। विक्षेपकः। विक्षेप्ता। असरूप इति किम्। 'कर्मण्यण्' इत्युत्सर्गः। 'आतोऽनुपसर्गे कः' इत्यपवादः स तु सरूपत्वान्नित्यं बाधक एव। गोदः। कम्बलदः। 'नानुबन्धकृतमसारूप्यम्' इति वचनात् अनुबन्धो न सारूप्यप्रतिबन्धकः।

ऽयं ण्वुलः प्राक्। **२८३२ कर्तरि कृत् ३।४।६७॥** कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते—**२८३३ तयोरेव कृत्यक्तखलर्थाः ३।४।७०॥** एते भावकर्मणोरेव स्युः। **२८३४ तव्यत्तव्यानीयरः ३।१।९६॥** धातोरेते प्रत्ययाः स्युः। तकाररेफौ स्वरार्थौ। एधितव्यम्। एधनीयं त्वया। भावे औत्सर्गिकमेकवचनं क्लीबत्वं च। चेतव्यश्चयनीयो वा धर्मस्त्वया। 'वसेस्तव्यत्कर्तरि णिच्च' (वा १९२०)। वसतीति वास्तव्यः। 'केलिमर उपसंख्यानम्' (वा १९१९)। पचेलिमा माषाः। पक्तव्याः। भिदेलिमाः सरलाः। भेत्तव्याः। कर्मणि प्रत्ययः। वृत्तिकारस्तु 'कर्म-

---

अस्त्रियां किम्। 'स्त्रियां क्तिन्' इत्युत्सर्गः। 'अ प्रत्ययात्' इति प्रत्ययान्ताद्विहितः अकारप्रत्ययः तस्य अपवादः। स बाधक एव भवति। चिकीर्षा। व्यावक्रोशी, व्याक्रुष्टिः इत्यत्र तु 'कर्मव्यतिहारे णच् स्त्रियाम्' इति णच् क्तिनो बाधको वा भवत्येव। 'अस्त्रिया'मिति निषेधस्तु नास्ति, तस्य 'णचः स्त्रिया'मित्यधिकारोक्तत्वाऽभावात्। कृत्याः। कृत्यसंज्ञका इत्यर्थः। ततश्च 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च,' 'अर्हे कृत्यतृचश्च,' शकि लिङ् च' इत्यादिषु प्रवर्तते। ण्वुलः प्रागिति। 'ण्वुल्तृचौ' इत्यतः प्रागित्यर्थः। एतच्च भाष्ये स्पष्टम्। कर्तरि कृत्। अर्थनिर्देशोऽयम्। इति प्राप्ते इति। वक्ष्यमाणतव्यदादिप्रत्ययानां कृत्संज्ञकत्वात्तेषां कर्तरि प्राप्ताविव्यर्थः। तयोरेव कृत्यक्तखलर्थाः। 'क्तः कर्मणि च भावे च' इति सूत्रोपात्ते भावकर्मणी तच्छब्देन परामृश्येते। तदाह—एते भावकर्मणोरेवेति। नतु कर्तरीति भावः। वैशेषिकत्वादेव सिद्धे एवकारस्तु तव्यदादीनां कृत्संज्ञकतया प्राप्तकर्त्रर्थकत्वस्याऽभावमनुवदन् कृत्यसंज्ञया वैशेषिक्या कृत्संज्ञाया अबाध गमयति। तव्यत्तव्यानीयरः। तव्यत् तव्य अनीयर् एषां द्वन्द्वः। प्रत्ययाः स्युरिति। ते कृत्यसंज्ञकाः कृत्संज्ञकाश्च इत्यपि ज्ञेयम्। स्वरार्थाविति। 'तित्स्वरितम्' इति 'उपोत्तमं रिति' इति च स्वरविशेषार्थावित्यर्थः। निरनुबन्धकस्य तु तव्यस्य प्रत्ययस्वरेण आद्युदात्तत्वमेवेति बोध्यम्। भावे उदाहरति—एधितव्यमिति। त्वत्कर्तृका एधनक्रियेत्यर्थः। ननु 'क्तः कर्मणि च' इत्यत्र असत्त्वभूतस्यैव भावस्य ग्रहणम्, तिङ्वाच्यभावनाया असत्त्वरूपताया उक्तत्वात्। ततश्च तस्य भावस्य असत्त्वरूपत्वाऽत्र 'तयोरेव कृत्य' इति तच्छब्देन परामर्शात्तव्यदादीनामसत्त्ववाचितया लिङ्गसंख्यान्वयोऽनुपपन्न इत्यत आह—भावे औत्सर्गिकमेकवचनमिति। 'एकवचनम्, द्विबहुषु द्विबहुवचने' इति सूत्रपाठमभ्युपगम्य द्वित्वबहुत्वाऽभावे एकवचनमिति भाष्यसिद्धान्तादिति भावः। क्लीबत्वं चेति। 'एकश्रुतिः स्वरसर्वनाम, लिङ्गसर्वनाम नपुंसकम्' इति 'दाण्डिनायन' इति सूत्रस्थभाष्यादिति भावः। कर्मण्युदाहरति—चेतव्य इति। 'वसेस्तव्यत् कर्तरि णिच्च' इति वार्तिकम्। वास्तव्य इति। वस्तेत्यर्थः। णित्वादुपधावृद्धिः। केलिमर इति। धातोरित्येव। भावकर्मणोरेवेदम्। केलिमरि ककाररेफावितौ। भिदेलिमा इति। कित्वाल्लोपधागुणः। सरलाः वृक्षविशेषाः।

कर्तरि चायमिष्यते' इत्याह । तद्भाष्यविरुद्धम् । **२८३५ कृत्यचः ८।४।२९॥** उपसर्गस्थान्निमित्तात्परस्याच्च उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात् । प्रयाणीयम् । अचः किम् । प्रमग्नः । 'निर्विण्णस्योपसंख्यानम्' ( वा ५००४ ) अचः परत्वाभावादप्राप्ते वचनम् । परस्य णत्वम् । पूर्वस्य ष्टुत्वम् । निर्विण्णः । **२८३६ णेर्विभाषा ८।४।३०॥** उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद्विहितो यः कृत्तत्स्थस्य नस्य णो वा स्यात् । प्रयापणीयम् । प्रयापनीयम् । विहितविशेषणम् किम् । यका व्यवधाने यथा स्यात् । प्रयाप्यमाणं पश्य । 'णत्वे दुर उपसर्गत्वं न' इत्युक्तम् । दुर्यानम् । दुर्यापनम् । **२८३७ हलश्चेजुपधात् ८।४।३१॥** हलादेरिजुपधात्कृत्स्थस्याचः परस्य णो वा स्यात् । प्रकोपणीयम् । प्रकोपनीयम् । हलः किम् । प्रोहणीयम् । इजुपधात् किम् । **२८३८ इजादेः सनुमः ८।४।३२॥** सनुमश्चेद्भवति तर्हि इजादेर्हलन्ताद्विहितो

तद्भाष्येति । भाष्ये भिदेलिमा इत्युदाहृत्य 'भेत्तव्या' इत्येव विवरणादिति भावः । कृत्यचः । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादनोत्परः' इत्यत उपसर्गादिति च । उपसर्गस्थादिति विवक्षितम् । 'कृती'त्यनन्तरं 'विद्यमानस्ये'ति शेषः । अच इति पञ्चमी । तदाह—उपसर्गस्थादिति । असमानपदत्वादप्राप्तौ वचनम् । 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इत्यनुवर्तते । तदाह—प्रयाणीयमिति । निर्विण्णस्येति । नस्य ण इत्युपसंख्यानमित्यर्थः । अचः परत्वाभावादिति । विदेः क्तप्रत्यये 'रदाभ्याम्' इति दकारादुत्तरस्य तकारस्य पूर्वदस्य च नत्वे 'निर्विन् न' इति स्थिते नकारस्य अचः परत्वाऽभावात् 'कृत्यचः' इति अप्राप्ते णत्वे इदं णत्ववचनमित्यर्थः । नकारेण व्यवधानाच्च णत्वस्याऽप्राप्तिर्बोध्या । पूर्वस्येति । नस्य णत्वे ष्टुत्वेन णत्वमित्यर्थः । तथाच द्विणकारकं रूपम् । णेर्विभाषा । 'कृत्यचः' इत्यनुवर्तते । 'रषाभ्यां नो णः' इति च । 'णे' रिति कृतो विहितविशेषणम् । तदाह—उपसर्गस्थादित्यादिना । प्रयापणीयमिति । याधातोर्णौ पुकि यापि इत्यस्मात् ण्यन्तादनीयरि णेर्लोपे अनेन णत्वविकल्पः । यकेति । यापि इत्यस्मात् ण्यन्तात् कर्मणि लटः शानचि 'आने मुक्' इति मुगागमे यकि णिलोपे प्रयाप्यमाणशब्दे णत्वविकल्पः इष्यते । णेः परो यः कृत् तत्स्थस्य णत्वविकल्प इत्युक्तौ तु कृतः शानचो यका व्यवहितत्वेन णिचः परत्वाऽभावात् तत्स्थस्य नस्य णत्वविकल्पो न स्यात् । तदर्थं णेरिति विहितविशेषणमाश्रितमित्यर्थः । भाष्ये तु ण्यन्तात्परो यः कृत् इत्यंशेऽप्यट्कुप्वाङ्नुम्व्यवायानुवर्त्य यकारव्यवधानेऽपि णत्वविकल्पः समर्थितः । णत्वे दुर इति । 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः' इत्यनेनेति भावः । ततश्च दुर उपसर्गत्वाऽभावात् ततः परे कृत्स्थनकारे सूत्रद्वयमपि न प्रवर्तते इत्यभिप्रेत्य उदाहरति—दुर्यानं दुर्यापनमिति । यातेर्ण्यन्तात् ल्युटि णिलोपे दुर्यापनमिति रूपम् । हलश्चेजुपधात् । हलन्तादिति नार्थः, इजुपधस्य हलन्तत्वाऽव्यभिचारात् । किन्तु हलादेरिति विवक्षितम् । तदाह—हलादेरिजुपधादिति । 'परस्ये'-

यः कृत्तस्थस्यैव । प्रेङ्खणीयम् । इजादेः किम् । 'मगि सर्पणे' । प्रमङ्गनीयम् । नुम्-ग्रहणमनुस्वरोपलक्षणार्थम् । 'अट्कुप्वाङ्'-( सू १९७ ) इति सूत्रेऽप्येवम् । तेनेह न । प्रेन्वनम् । इह तु स्यादेव । प्रोम्भणम् । **२८३९ वा निंसनिक्षनिन्दाम् ८।४।३३॥** एषां नस्य णो वा स्यात्कृति परे । प्रणिंसितव्यम् । प्रनिंसितव्यम् । **२८४० न भाभूपूकमिगमिप्यायीवेपाम् ८।४।३४॥** एभ्यः कृन्नस्य णो न । प्रभानीयम् । प्रभवनीयम् । 'पूञ एवेह ग्रहणमिष्यते' ( वा ५०११ ) । पूङस्तु प्रपवणीयः सोमः । 'ण्यन्तभादीनामुपसंख्यानम्' ( वा ५०१२ ) । प्रभापनीयम् । 'ख्याञः शस्य यो वा' (वा १५८४) इत्युक्तं णत्वप्रकरणोपरि तद्बोध्यम् । यत्वस्यासिद्धत्वेन शकारव्यवधानान्न णत्वम् । प्रख्यानीयम् । **२८४१ कृत्यल्युटो बहुलम् ३।३।११३॥** स्नान्त्यनेन स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः। **२८४२ अचो यत् ३।१।९७॥** अजन्ताद्धातोर्यत्स्यात् । चेयम् । जेयम् । अज्ग्रहणं शक्यमकर्तुम् । योगविभागोऽप्येवम् । तव्यदादिष्वेव यतोऽपि सुपठत्वात् । २८४३

---

ति शेषः । प्रोहणीयमित्यादिप्रत्युदाहरणे तु 'कृत्यचः' इति नित्यमेव णत्वम् । इजादेः । 'णेर्विभाषा' इति निवृत्तम् । 'कृत्यचः' इत्यनुवर्तते, 'हलश्चेजुपधात्' इत्यतो हल इति च । प्रकृतिविशेषणत्वात् तदन्तविधिः । तथाच सनुमो हलन्तात् इजुपधात् परस्य कृन्नस्य णः स्यादिति लभ्यते । एवञ्च प्रेङ्खणीयमित्यादौ 'कृत्यचः' इत्येव सिद्धेरिदं नियमार्थमित्याह—सनुमश्चेदिति । कृत्स्थस्यैवेत्यनन्तरं 'णत्वम्' इति शेषः । प्रेङ्खणीयमिति । इखधातुरिदित्वात्सनुम् । ननु 'इवि प्रीणने' इति धातोर्ल्युटि तस्यानादेशे प्रेन्वनमित्यत्रापि णत्वं स्यात्, सनुमोऽस्य इजादित्वाद्धलन्तत्वाच्चेत्यत आह—नुम्ग्रहणमित्यादि । अनुस्वारश्च सर्व एव गृह्यते, न तु नुंस्थानिक एव; अविशेषात् । तदाह—इहेति । प्रोम्भणमिति । इह उम्भधातुः स्वाभाविकानुस्वारवानेव, न तु नुम्स्थानिकानुस्वारवानिति भावः । वा निंस । 'कृत्यचः' इत्यतः कृतीत्यनुवृत्तम् । अच इति च निवृत्तम् । तदाह—एषां नस्येति । न भाभू । प्रभानीयमिति । इह 'कृत्यचः' इति प्राप्तं णत्वं नेति भावः । णत्वप्रकरणोपरीति । इदं 'चक्षिङः ख्याञ्' इति सूत्रे भाष्ये स्पष्टम् । प्रख्यानीयमिति । इह यत्वस्यासिद्धतया शकारेण व्यवधानात् 'कृत्यचः' इति णत्वं नेति भावः । कृत्यल्युटो । याभ्यः प्रकृतिभ्यो येष्वर्थेषु विहिताः ततोऽन्यत्रापि स्युरित्यर्थः । स्नानीयमिति । करणे अनीयर् । दानीय इति । सम्प्रदाने अनीयर् । भाष्ये तु 'कृतो बहुलमिति वक्तव्यम्' इत्युक्त्वा पादाभ्यां ह्रियते पादहारकः । कर्मणि ण्वुल् । कोऽग्नीनाधास्यमानेन । अनद्यतने भविष्यति लृडित्युदाहृतम् । अचो यत् । शक्यमकर्तुमिति । 'ऋहलोर्ण्यत्' इति ऋहलन्तात् विशिष्य ण्यतो विहितत्वेन हलन्तेभ्यो यत्प्रत्ययस्याप्रवृत्तिरित्यर्थः । वासरूपविधिस्तु सरूपत्वान्न भवति । योगविभागोऽप्येवमिति । कर्तुमशक्य इत्यर्थः । कुत इत्यत आह—तव्यदादिष्वे-

**ईद्यति ६।४।६५॥** यति परे आत ईत्स्यात् । गुणः । देयम् । ग्लेयम् । 'तकिशसिचतियतिजनिभ्यो यद्वाच्यः' (वा १९२२) तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । जनेर्यद्विधिः स्वरार्थः । ण्यतापि रूपसिद्धेः । न च वृद्धिप्रसङ्गः । 'जनिवध्योश्च' ( सू २५१२ ) इति निषेधात् । 'हनो वा यद्वधश्च वक्तव्यः' ( वा १९२३ ) वध्यः । पक्षे वक्ष्यमाणो ण्यत् । घात्यः । **२८४४ पोरदुपधात् ३।१।९८॥** पवर्गान्तादुदुपधाद्यत्स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् । 'नानुबन्धकृतमसारूप्यम्' । अतो न ण्यत् । तव्यदादयस्तु स्युरेव । **२८४५ आङो यि ७।१।६५॥** आङः परस्य लभेर्नुम्स्याद्यादौ प्रत्यये विवक्षिते । नुमि कृते अदुपधत्वाभा-

वेति । 'तव्यत्तव्यानीयर्यतः' इत्येकसूत्रत्वेनैव पठितुं शक्यत्वादित्यर्थः । ईद्यति । आतः इति । 'आतो लोप इटि च' इत्यतः तदनुवृत्तेरिति भावः । गुण इति । दाधातोः 'अचो यत्' इति यति आतः ईत्वे 'सार्वधातुकार्धधातुकयोः' इति गुण इति भावः । ग्लेयमिति । 'ग्लै हर्षक्षये' इति धातोर्यति 'आदेचः' इत्यात्वे ईत्वे गुण इति भावः । तकिशसीति । तकि, शसि, चति, यति जनि एषां पञ्चानां द्वन्द्वः । इका निर्देशः । 'ऋहलोर्ण्यत्' इत्यस्यापवादः । 'तक हसने, शसु हिंसायां, चते याचने, यती प्रयत्ने, जनी प्रादुर्भावे' इति धातवः । अत्र सर्वत्र अकर्मकेभ्यो भावे प्रत्ययः । सकर्मकेभ्यस्तु कर्मण्यपीति विवेकः । ननु 'अर्हे कृत्यतृचश्च' इत्यर्हेऽपि जनेर्ण्यताऽपि जन्यमिति रूपसिद्धेः जनिग्रहणं व्यर्थमित्यत आह—स्वरार्थ इति । 'यतोऽनावः' इत्याद्युदात्तार्थं इत्यर्थः । ननु ण्यति उपधावृद्धिः स्यात् अतस्तदभावार्थमिह जनेर्यद्विधिरस्त्वित्याशङ्क्य निराकरोति—न च वृद्धिप्रसङ्ग इति । कुत इत्यत आह—जनिवध्योरिति । हनो वेति । हनधातोर्यद्वा स्यात् । प्रकृतेर्वधादेशश्चेत्यर्थः । पक्षे इति । यदभावपक्षे इत्यर्थः । घात्य इति । ण्यति 'हनस्तोऽचिण्णलोः' इति नस्य तः । कुत्वम् । उपधावृद्धिः । वधादेशस्तु यत्सन्नियोगशिष्टत्वान्नेति भावः । पोरदुपधात् । ननु शप्यं लभ्यमित्यत्र 'ऋहलोर्ण्यत्' इति कदाचित् ण्यदपि स्यात् । यण्ण्यतोरसारूप्येण वाऽसरूप इत्यस्य प्रवृत्तेरित्यत आह-नानुबन्धकृतमसारूप्यमिति । वाऽसरूपसूत्रे भाष्ये स्थितमिदम् । अनुबन्धविनिर्मुक्तस्यैव असारूप्यं विवक्षितमित्यर्थः । प्रकृते च यण्ण्यतोरनुबन्धरहितयोः सारूप्यात् वासरूपविधेरप्रवृत्तेः शप्यमित्यादौ ण्यदपवादो यदेवेति भावः । आङो यि । 'इदितो नुम् धातोः' इत्यतो नुमिति 'लभेश्च' इत्यतो लभेरिति चानुवर्तते । तदाह—आङः परस्येति । विवक्षिते इति । यीति विषयसप्तमीति भाष्ये स्पष्टम् । 'विवक्षिते' इत्यस्य प्रयोजनमाह—नुमि कृते इति । यत्प्रत्यये विवक्षिते तत्प्रवृत्तेः प्रागेव नुमि कृते अदुपधत्वाभावाद्यत्प्रत्ययस्याऽप्रवृत्तेर्ण्यदेवेत्यर्थः । यति परे नुमित्यर्थे तु अदुपधत्वात् यदेव स्यात् नतु ण्यदिति भावः ।

वात् ण्यदेव । आलम्भ्यो गौः । २८४६ उपात्प्रशंसायाम् ७।१।६६॥ उपलम्भ्यः साधुः । स्तुतौ किम् । उपलब्धुं शक्यः उपलभ्यः । २८४७ शकिसहोश्च ३।१।९९॥ शक्यम् । सह्यम् । २८४८ गदमदचरयमश्चानुपसर्गे ३।१।१००॥ गद्यम् । मद्यम् । चर्यम् । 'चरेराङि चागुरौ' (वा १९२५) । आचर्यो देशः । गन्तव्य इत्यर्थः । अगुरौ किम् । आचार्यो गुरुः । यमेर्नियमार्थम् । सोपसर्गान्मा भूदिति । प्रयाम्यम् । निपूर्वात्स्यादेव । 'तेन तत्र न भवेद्विनियम्यम्' (वा १९३०) इति वार्तिकप्रयोगात् । एतेन 'अनियम्यस्य नायुक्तिः' 'त्वया नियम्या ननु दिव्यचक्षुषा' इत्यादि व्याख्यातम् । नियमे साधुरिति वा । २८४९ अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ३।१।१०१॥ वदेर्नञ्युपपदे 'वदेः सुपि-' (सू २८५४) इति यत्क्यपोः प्राप्तयोर्यदेव, सोऽपि गर्ह्यायामेवेत्युभयार्थं निपातनम् । अवद्यं पापम् । गर्ह्ये किम् । अनुद्यं गुरुनाम । तद्धि न गर्ह्यं वचनानर्हं च ।

---

आलम्भ्यो गौरिति । यद्यपि यत्ण्यतोर्न रूपभेदः । तथापि ण्यति कृते 'तित्स्वरितम्' । यति तु 'यतोऽनावः' इत्याद्युदात्तत्वमिति स्वरभेदः फलम् । उपात्प्रशंसायाम् । उपात्परस्य लभेर्नुम् स्यात् यादौ प्रत्यये विवक्षिते प्रशंसायां गम्यमानायामित्यर्थः । उपलम्भ्यः साधुरिति । समीपे प्राप्य इत्यर्थः । साधुशब्दात् प्रशंसा गम्यते । इहापि नुमि कृते अदुपधत्वाऽभावात् ण्यदेव । स्वरे विशेषः पूर्ववत् । शकिसहोश्च । पञ्चम्यर्थे षष्ठी । आभ्यां यदित्यर्थः । ण्यतोऽपवादः । गदमद । गद्, मद्, चर, यम् एषां चतुर्णां द्वन्द्वः । अनुपसर्गे इति सप्तमी पञ्चम्यर्थे । एभ्योऽनुपसर्गेभ्यो यदित्यर्थः । ण्यतोऽपवादः । उपसर्गात् ण्यदेव । प्रगाद्यमित्यादि । चरेराङि चागुराविति । वार्तिकमिदम् । आङि उपसर्गे सत्यपि चरेर्यत्स्यादगुरौ इत्यर्थः । आचार्यो गुरुरिति । शुश्रूषणीय इत्यर्थः । ननु 'पोरदुपधात्' इत्येव सिद्धे यमेरिह ग्रहणं व्यर्थमित्यत आह—यमेर्नियमार्थमिति । अनुपसर्गादेव यमेर्ण्यदिति नियमार्थमित्यर्थः । तत्फलमाह—सोपसर्गान्मा भूदिति । ननु 'अनियम्यस्य नायुक्तिः' इत्यत्र 'त्वया नियम्या ननु दिव्यचक्षुषा' इत्यादौ च निपूर्वाद्यमेः कथं यत् । अनुपसर्गादिति निषेधादित्यत आह—निपूर्वात्स्यादेवेति । 'यत्' इति शेषः । कुत इत्यत आह—तेन तत्रेति । प्रकारान्तरेण समाधत्ते—नियमे साधुरिति वेति । 'यमः समुपनिविषु च' इति निपूर्वाद्यमेर्भावे अप्प्रत्यये नियमशब्दः । नियमे साधुरित्यर्थे 'तत्र साधुः' इति प्राग्घितीये यत्प्रत्यये नियम्यशब्दो व्युत्पाद्य इत्यर्थः । अवद्यपण्य । अवद्य, पण्य, वर्य एषां द्वन्द्वात्प्रथमाबहुवचनम् । गर्ह्य, पणितव्य, अनिरोध एषां द्वन्द्वात्सप्तमीबहुवचनम् । अवद्यादयस्त्रयः क्रमात् गर्ह्यादिषु त्रिष्वर्थेषु निपात्यन्ते इत्यर्थः । ननु 'वदः सुपि' इत्येव सिद्धे अवद्यग्रहणं व्यर्थमित्यत आह—नञ्युपपदे इति । यत्क्यपोः स्वरे विशेषः, सम्प्रसारणतदभावौ चेति भावः । अवद्यं पापमिति । गर्हितत्वादवाच्यमित्यर्थः । अनुद्य गुरुनामेति । अत्र नञि उपपदे 'वदः सुपि' इति

'आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ।' इति स्मृतेः ।

पण्या गौः । व्यवहर्तव्येत्यर्थः । पाण्यमन्यत् । स्तुत्यर्हमित्यर्थः । अनिरोधोऽप्रतिबन्धस्तस्मिन्विषये वृङो यत् । शतेन वर्या कन्या । वृत्याऽन्या । २८५० करणम् ३।१।१०२॥ वहन्त्यनेनेति वह्यं शकटम् । करणम् किम् । वाह्यम् । वोढव्यम् । २८५१ अर्यः स्वामिवैश्ययोः ३।१।१०३॥ 'ऋ गतौ' अस्माद्यत् । ण्यतोऽपवादः । अर्यः स्वामी वैश्यो वा । अनयोः किम् । आर्यो ब्राह्मणः । प्राप्तव्य इत्यर्थः । २८५२ उपसर्या काल्या प्रजने ३।१।१०४॥ गर्भग्रहणे प्राप्तकाला चेदित्यर्थः । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः । प्रजने काल्या इति किम् । उपसार्या काशी । प्राप्तव्येत्यर्थः । २८५३ अजर्यं संगतम् ३।१।१०५॥ नञ्पूर्वाज्जीर्यतेः कर्तरि यत्, संगतं चेद्विशेष्यम् । न जीर्यतीत्यजर्यम् ।

---

क्यपि 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे रूपम् ॥ वचनाऽनर्हमित्यर्थः । अत्र गर्ह्याया अप्रतीतेः यदेवेति न नियम इति भावः । ननु गुरुनाम्नः अगर्ह्यत्वात् कथं वचनानर्हत्वमित्यत आह—तद्धि न गर्ह्यं वचनानर्हं चेति । कुत इत्यत आह—आत्मनामेति । पण्या गौरिति । पणधातोर्व्यवहारार्थकात् यन्निपात्यते इति भावः । यद्यपि 'पण व्यवहारे स्तुतौ च' इति धातोः अर्थद्वयमस्ति तथापि पण्यशब्दस्य प्रयोगबलेन व्यवहर्तव्य एव रूढत्वादिह व्यवहारार्थक एव गृह्यते । तदाह—व्यवहर्तव्येति । फलितमर्थमाह—पाण्यमन्यदिति । ण्यति उपधावृद्धिरिति भावः । व्यवहर्तव्यादन्यदित्यर्थः । तदाह—स्तुत्यर्हमिति । अप्रतिबन्ध इति । अनियम इत्यर्थः । वृङो यदिति । 'वृङ् सम्भक्तौ' इति क्रैयादिकस्यैवाऽत्र ग्रहणम् । ननु 'वृञ् वरणे' इत्यस्य, अनिरोधरूपार्थस्य सम्भक्तिवाचित्व एव सामञ्जस्यादिति भावः । शतेन वर्या कन्येति । पुरुषशतेन परिग्रहीतुमर्हा, अनेनैव वरणीयेति नियमो नास्तीत्यर्थः । वृत्या अन्येति । अनुरूपेण वरणीयेत्यर्थः । 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यपि तुक् । अत्र अनियमस्य अप्रतीतेर्न यत् । अत्र वर्याशब्दस्य स्त्रीलिङ्गस्य ग्रहणात्पुंसि 'वार्या ऋत्विजः' इति वृत्तिः । वह्यं करणम् । वहेः करणे यत् निपात्यते । ण्यतोऽपवादः । अर्यः स्वामिवैश्ययोः । अस्माद्यदिति । निपात्यत इति शेषः । ण्यतोऽपवाद इति । । 'ऋहलोः' इति प्राप्तस्य ण्यतोऽपवाद इत्यर्थः । यति ऋकारस्य गुणे रपरत्वम् । तदाह—अर्यः स्वामीति । आर्यो ब्राह्मण इति । ण्यति वृद्धौ रपरत्वमिति भावः । उपसर्या । प्रजननं प्रजनः गर्भग्रहणम् । भावे घञ् । 'जनिवध्योश्च' इति वृद्धिनिषेधः । कालः प्राप्तोऽस्याः काल्या । 'तदस्य प्राप्त'मित्यनुवर्तमाने 'कालाद्यत्' इति यत् । चेदित्यध्याहार्यम् । तदाह—गर्भग्रहणे प्राप्तकाला चेदिति । गर्भग्रहणे प्राप्तकाला स्त्रीपशुव्यक्तिः विवक्षिता चेत् उपसर्या इति निपात्य-

'तेन संगतमार्येण रामाजर्यं कुरु द्रुतम्' इति भट्टिः। 'मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध' इत्यत्र तु संगतमिति विशेष्यमध्याहार्यम्। संगतम् किम्। अजरिता कम्बलः। भावे तु संगतकर्तृकेऽपि ण्यदेव। अजार्यं संगतेन। **२८५४ वदः सुपि क्यप् च ३।१।१०६॥** उत्तरसूत्रादिह भाव इत्यपकृष्यते। वदेर्भावे क्यप् स्याच्चाद्यदनुपसर्गे सुप्युपपदे। ब्रह्मोद्यम्। ब्रह्मवद्यम्। ब्रह्म वेदः तस्य वदनमित्यर्थः। कर्मणि प्रत्ययावित्येके। उपसर्गे तु ण्यदेव। अनुवाद्यम्। अपवाद्यम्। **२८५५ भुवो भावे ३।१।१०७॥** क्यप् स्यात्। ब्रह्मणो भावो ब्रह्मभूयम्। सुपीत्येव। भव्यम्। अनुपसर्गे इत्येव। प्रभव्यम्। **२८५६ हनस्त च ३।१।१०८॥** अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप् स्यात्तकारश्चान्तादेशः। ब्रह्मणो हननं ब्रह्महत्या स्त्रीत्वं लोकात्। **२८५७ एतिस्तुशास्वृदृजुषः क्यप् ३।१।१०९॥** एभ्यः क्यप् स्यात्। **२८५८ ह्रस्वस्य पिति कृति तुक् ६।१।७१॥** इत्यः। स्तुत्यः। 'शास इदङ्हलोः' (सू २४८६)। शिष्यः। वृ इति वृञो ग्रहणं न वृङः। वृत्यः।

ते। उपपूर्वात् सृधातोः यदिति फलितम्। ण्यतोऽपवादः। अजर्यम्। कर्तरि यदिति। 'कर्तरीति वक्तव्यम्' इति वार्तिकम्। निपातनात् कर्तरीति लभ्यत इति तदाशयः। सङ्गतमिति। सङ्गतं सङ्गमः। न जीर्यतीत्यजर्यं जमिति। मित्रत्वमिति शेषः। जरितृ न भवतीत्यर्थः। अत्र भट्टिप्रयोगमाह—तेनेति। हे राम! तेन आर्येण अजर्यम् अनश्वरं सङ्गतं संगमं द्रुतं कुरु इत्यन्वयः। ननु 'मृगैरजर्यं जरसा' इत्यत्र संगतशब्दाऽभावात् कथं यदित्यत आह—मृगैरित्यादि। कालिदासकाव्यमिदम्। अजरितेति। तृजन्तम्। अत्र संगतशब्दाभावान्न यदिति भावः। भावे त्विति। भावस्य संगतकर्तृकत्वेऽपि संगतस्य प्रत्ययवाच्यत्वाभावात् न यदित्यर्थः। वदः सुपि। उत्तरेति। 'भुवो भावे' इत्युत्तरसूत्राद्भावे इत्यपकृष्यते इत्यर्थः। भूधातोरकर्मकत्वेन उत्तरसूत्रे भावग्रहणस्य वैयर्थ्यादिति भावः। अनुपसर्गे इति। 'वदः सुप्यनुपसर्गग्रहणम्' इति भाष्यादिति भावः। ब्रह्मोद्यमिति। वदेः क्यपि 'वचिस्वपि' इति सम्प्रसारणम्। 'वस्तुतस्तु नेह भावग्रहणमपकृष्यते। तत्र भावग्रहणमुत्तरार्थमिति भाष्यादिति मतमनुसृत्य आह—कर्मणि प्रत्ययावित्येके इति। क्यब्यतावित्यर्थः। भुवो भावे। ब्रह्मभूयमिति। कित्त्वान्न गुणः। क्लीबत्वं लोकात्। भव्यमिति। भाव इत्यर्थः। अत्र सुबुपपदत्वाऽभावात् यदेव, गुणः, 'वान्तो यि' इत्यवादेशः। प्रभव्यमिति। प्रभाव इत्यर्थः। हनस्त च। अन्तादेश इति। प्रकृतेरिति शेषः। भावे किम्? घात्यो वृषलः। अनुपसर्गे किम्? प्रघातः। निरुपपदं हत्येति तु असाध्वेव। एतिस्तु। एति स्तु, शास्, वृ, दृ, जुष्, एषां षण्णां समाहारद्वन्द्वात्पञ्चमी। सुप्यनुपसर्गे भाव इति निवृत्तम्। तदाह—एभ्यः क्यप् स्यादिति। ह्रस्वस्य। इत्यमिति न व्याख्यातम्। इत्य इति। इणः क्यपि तुक्। उपेयमित्यत्र तु ईतो देवादिकात्।

वृङस्तु वार्या ऋत्विजः । आदृत्यः । जुष्यः । पुनः क्यबुक्तिः परस्यापि ण्यतो बाधनार्था । अवश्यस्तुत्यः । 'शंसिदुहिगुहिभ्यो वा' ( वा १८३५ ) इति काशिका । शस्यम् । शंस्यम् । दुह्यम् । दोह्यम् । गुह्यम् । गोह्यम् । 'प्रशस्यस्य श्रः' ( सू २००९ ) 'ईडवन्दवृशंसदुहां ण्यतः' ( सू ३७०२ ) इति सूत्रद्वयबलाच्छंसेः सिद्धम् । इतरयोस्तु मूलं मृग्यम् । 'आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्' ( वा १९२५ ) । 'अञ्जू' व्यक्तिम्रक्षणादिषु । बाहुलकात्करणे क्यप् । 'अनिदिताम्—' ( सू ४१५ ) इति नलोपः । आज्यम् । **२८५९ ऋदुपधाच्चाक्लृपिचृतेः ३।१।११०॥** वृत् वृत्यम् । वृध् वृध्यम् । क्लृपिचृत्योस्तु, कल्प्यम् । चर्त्यम् । तपरकरणम् किम् । कृत् कीर्त्यम् । अनित्यण्यन्ताश्चुरादय इति णिजभावे ण्यत् । णिजन्तात्तु यदेव । **२८६० ई च खनः ३।१।१११॥** चात्क्यप् । आद्गुणः । खेयम् । इ च इति ह्रस्वः सुपठः । **२८६१ भृञोऽसंज्ञायाम् ३।१।११२॥**

वृञो ग्रहणमिति । वार्तिकमिदम् । न वृङः इति । 'वृङ् सम्भक्तौ' इति ङितः क्र्यादिकस्य न ग्रहणमित्यर्थः । वार्या ऋत्विज इति । अवश्यं भजनीया इत्यर्थः । अत्र 'वृङ् सम्भक्तौ' इत्यस्मात् ण्यदित्यर्थः । 'अवद्यपण्यवर्या' इति निपातनसिद्धो यत्तु न, अत्र निरोधस्य नियमस्य विवक्षितत्वात् । ननु 'वदः सुपि' इत्यतः अनुवृत्त्यैव सिद्धे क्यब्ग्रहणमिह व्यर्थम् । नच चकारानुकृष्टयतोऽप्यनुवृत्तिनिवृत्तये क्यब्ग्रहणमिति वाच्यम्, चकारस्य अस्वरितत्वेन 'भुवो भावे' इत्याद्युत्तरसूत्रेष्वनुवृत्त्यभावादित्यत आह—क्यबुक्तिः परस्यापीति । 'ओरावश्यके' इति विहितस्येत्यर्थः । वेति काशिकेति । वा क्यप् । तदभावे हलन्तत्वात् ण्यत् । भाष्ये त्वेतन्न दृश्यते इति भावः । शस्यम्, शंस्यमिति । क्यप्पक्षे 'अनिदिताम्' इति नलोपः । दुह्यमिति । क्यप्पक्षे कित्वान्न गुणः । अत्र 'शंसिदुहिगुहिभ्यो वा' इत्यस्य भाष्ये अदर्शनेऽपि शंसेर्ण्यत्क्यपौ प्रमाणिकावित्याह—प्रशस्यस्येति । 'प्रशस्यस्य श्रः' इति निर्देशबलात् शंसेः क्यप्सिद्धः । 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वविधौ शंसेर्ण्यदन्तत्वानुवादबलात् ण्यत्सिद्धः । ततश्च शस्यं शंस्यमिति रूपद्वयं सिद्धम् । इतरयोस्तु दुहिगुह्योः क्यब्विकल्पे मूलं नास्तीत्यर्थः । उपसंख्यानमिति । क्यप् इति शेषः । आज्यमिति । न चाङ्पूर्वकत्वे पदपाठे अवग्रहः स्यादिति वाच्यम्, इष्टापत्तेः । पदकाराणामवग्रहाऽभावस्त्वप्रामाणिक एव । पदपाठस्याऽधुनिकत्वात् इति भाष्ये स्पष्टम् । एवञ्च 'अस्मद्रियगित्यस्मद्रियगित्यवग्रहः अप्रामाणिक एव । अस्मद्रि अक् इत्येवाऽवग्रहो युक्तः, अस्मच्छब्दस्य टेरद्र्यादेशविधानात् इत्याद्यूह्यम् । ऋदुपधाच्चाक्लृपिचृतेः । क्लृप्चृती वर्जयित्वा ऋदुपधाद्धातोः क्यबित्यर्थः । ननु तपरकरणमिह व्यर्थमित्यत आह—अनित्यण्यन्ता इति । णिजन्तात्तु यदेवेति । 'अचो यत्' इत्यनेनेति भावः । ई च खनः । चात् क्यबिति । खने-

भृत्याः कर्मकराः । भर्तव्या इत्यर्थः । क्रियाशब्दोऽयं न तु संज्ञा । 'समश्च बहुलम्' ( वा १९४० ) । संभृत्याः-संभार्याः । असंज्ञायामेव विकल्पार्थमिदं वार्तिकम् । असंज्ञायाम् किम् । भार्या नाम क्षत्रियाः । अथ कथं भार्या वधूरिति । इह हि 'संज्ञायां समज-' ( सू ३२७६ ) इति क्यपा भाव्यम् । संज्ञापर्युदासस्तु पुंसि चरितार्थः । सत्यम् । विभर्तेर्भृ इति दीर्घान्तात्क्र्यादेर्वा ण्यत् । क्यप्तु भरतेरेव । 'तदनुबन्धकग्रहणे-' इति परिभाषया । **२८६२ मृजेर्विभाषा ३।१।११३॥** मृजेः क्यब्वा स्यात् । पक्षे ण्यत् । मृज्यः । **२८६३ चजोः कु घिण्ण्यतोः ७।३।५२॥** चस्य जस्य च कुत्वं स्याद्घिति ण्यति च प्रत्यये परे । 'निष्ठायामनिट इति वक्तव्यम्' ( वा ४५५१ ) । तेनेह न । गर्ज्यम् । 'मृजेर्वृद्धिः' ( सू २४७३ ) । मार्ग्यः । **२८६४ न्यङ्क्वादीनां च ७।३।५३॥** कुत्वं स्यात् । न्यङ्कुः । 'नावञ्चेः' ( उ सू १७ ) इत्युप्रत्ययः । **२८६५ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ३।१।११४॥** एते सप्त क्यबन्ता निपात्यन्ते । राज्ञा सोतव्योऽ-

---

क्यप् स्यात् प्रकृतेः ईकारोऽन्तादेशश्चेत्यर्थः । ह्रस्वः सुपठ इति । ह्रस्वस्य इकारस्य आद्गुणेन 'खेय'मिति सिद्धेः इति भावः । भृञोऽसञ्ज्ञायाम् । 'क्य'बिति शेषः । भृत्याः कर्मकरा इति । भृत्यर्थं कर्म कुर्वाणा इत्यर्थः । 'कर्मणि भृतौ' इति कृत्स्नः । भर्तव्या इति । वेतनदानेन परार्थे कर्मणि प्रेषयितव्या इत्यर्थः । ननु भृत्यशब्दस्य कर्मकरेषु रूढत्वात्सञ्ज्ञाशब्दत्वमेवेत्यत आह-'क्रियाशब्द इति । भार्या नाम क्षत्रिया इति । क्षत्रियविशेषेषु रूढः सञ्ज्ञाशब्दोऽयमिति भावः । अथ कथं भार्येति । क्यपा भवितव्यमित्याक्षेपः । ननु वध्वां भार्याशब्दस्य सञ्ज्ञाशब्दत्वात् 'भृञोऽसञ्ज्ञायाम्' इत्यस्याप्रवृत्तेरयमाक्षेपोऽनुपपन्न इत्यत आह-इह हीति । 'स्त्रियां क्तिन्' इत्यतः स्त्रियामित्यनुवृत्तौ 'व्रजयजोर्भावे क्यप्' 'सञ्ज्ञायां समजनिषद' इति सूत्रेण क्यप् स्यादित्यर्थः । ननु सञ्ज्ञायां भृञः क्यब्विधौ 'भृञोऽसञ्ज्ञायाम्' इत्यत्र असञ्ज्ञायामिति व्यर्थमित्यत आह-सञ्ज्ञापर्युदासस्त्विति । समाधत्ते-सत्यमिति । 'डु भृञ् धारणपोषणयोः' इति जुहोत्यादौ ह्रस्वान्तः डुवित् ञिच्च । 'भृ भर्त्सने, भरणेऽपि' इति क्र्यादौ दीर्घान्तः । आभ्याम् 'ऋहलोर्ण्यत्' इति ण्यदेवेत्यर्थः । क्यप् तु भरतेरेवेति । 'भृञ् भरणे' इति भ्वादौ ह्रस्वान्तो ञित् । अस्यैव 'सञ्ज्ञायां समजनिषद' इत्यत्र 'भृञोऽसञ्ज्ञायाम्' इत्यत्र च भृञ्ग्रहणेन ग्रहणम् । नतु डुभृञो जौहोत्यादिकस्य । न च क्र्यादिकस्य निरनुबन्धकस्य दीर्घान्तस्येति भावः । कुत इत्यत आह—तदनुबन्धकेति । 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषयेत्यर्थः । बिभर्तेः क्यबभावे बीजमिदम् । क्र्यादिकस्य दीर्घान्तत्वात् न क्यप् इति बोध्यम् । मृजेर्विभाषा । क्यप्पक्षे उदाहरति—मृज्य इति । कित्त्वान्न गुणः । चजोः कु घिण्ण्यतोः । 'कु' इत्यवि-

भिषवद्वारा निष्पादयितव्यः। यद्वा लतात्मकः सोमो राजा स सूयते कण्ड्यतेऽत्रेत्यधिकरणे क्यब्निपातनाद्दीर्घः। राजसूयः। राजसूयम्। अर्धर्चादिः। सरत्याकाशे सूर्यः। कर्तरि क्यब्निपातनादुत्वम्। यद्वा 'षू प्रेरणे' तुदादिः। सुवति कर्मणि लोकं प्रेरयति क्यपो रुट्। मृषोपपदाद्वदेः कर्मणि नित्यं क्यप्। मृषोद्यम्। विशेष्यनिघ्नोऽयम्। 'उच्छ्रायसौन्दर्यगुणा मृषोद्याः'। रोचतेः रुच्यः। गुपेरादेः कत्वं च संज्ञायाम्। सुवर्णरजतभिन्नं धनं कुप्यम्। गोप्यमन्यत्। कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः कर्मकर्तरि। शुद्धे तु कर्मणि कृष्टपाक्याः। न व्यथतेऽव्यथ्यः। २८६६ **भिद्योद्ध्यौ नदे ३।१।११५॥** भिदेरुज्झेश्च क्यप्। उज्झेर्धत्वं च। भिनत्ति कूलं भिद्यः। उज्झत्युदकमुद्ध्यः। नदे किम्। भेत्ता। उज्झिता। २८६७ **पुष्यसिध्यौ नक्षत्रे ३।१।११६॥** अधिकरणे क्यब्निपात्यते। पुष्यन्त्यस्मिन्नर्थाः पुष्यः। सिध्यन्त्यस्मिन्सिध्यः। २८६८ **विपूयविनीयजित्या मुञ्जकल्कहलिषु ३।१।११७॥** पूङ्नीजिभ्यः क्यप्। विपूयो मुञ्जः। रज्ज्वादिकरणाय शोधयि-

---

भक्तिको निर्देशः। चजोर्घिण्ण्यतोश्च यथासंख्यं तु न, 'तेन रक्तं रागात्' इति घञि जस्य कुत्वनिर्देशात्। राजसूय। राज्ञेति। क्षत्रियेणेत्यर्थः। अभिषवेति। ग्रावभिः रसनिष्पत्त्यर्थं सोमलतानां कुट्टनमभिषवः, तत्प्रणालिकया निष्पादयितव्यो यज्ञविशेषः राजसूय इत्यन्वयः। यद्वेति। लताविशेषात्मकः सोमः राजशब्देन विवक्षितः, 'राजानं क्रीणाती'त्यादौ तथा प्रसिद्धेः। सः राजा सूयते अभिसूयते अत्र यज्ञविशेषे इति व्युत्पत्त्या राजसूय इत्यन्वयः। 'कर्तरि कृत्' इत्यधिकारात् कथमधिकरणव्युत्पत्तिरित्यत आह—अधिकरणे क्यबिति। कुत इत्यत आह—निपातनादिति। ननु षुञ्धातोः क्यपि कथं दीर्घः। 'अकृत्सार्वधातुकयोः' इत्यस्य कृत्यप्रवृत्तेरित्यत आह—निपातनाद्दीर्घ इति। निपातनादित्युभयत्रान्वेति। उत्वमिति। तस्य रपरत्वे 'हलि च' इति दीर्घ इत्यपि बोध्यम्। मृषोद्यमिति। क्यपि 'वचिस्वपि' इति सम्प्रसारणम्। रोचतेरिति। रुचधातोः क्यपि 'रुच्य' इति रूपमित्यर्थः। गुपेरिति। गुप्धातोः क्यप् प्रकृतेरादिवर्णस्य ककारश्च संज्ञायां निपात्यते इत्यर्थः। सुवर्णरजतभिन्नं धनं कुप्यमिति ज्ञेयम्। तथाच 'हेमरूपे कृताऽकृते' इत्युक्त्वा अमरः आह 'ताभ्यां यदन्यत्तत्कुप्यम्' इति। कृष्ट इति। कृष्टप्रदेशे ये स्वयं पच्यन्ते फलन्ति ते कृष्टपच्या इत्यर्थः। कर्मकर्तरीति। अत्र कर्मकर्तरि क्यबित्यर्थः। निपातनादिति भावः। शुद्धे त्विति। शुद्धकर्मणि तु ण्यति उपधावृद्धौ 'चजोः' इति कुत्वे 'कृष्टपाक्य' इति रूपमित्यर्थः। न व्यथते अव्यथ्य इति। अत्र निपातनात् कर्तरि क्यबिति भावः। भिद्योद्ध्यौ नदे। क्यबिति। 'नदविशेषे कर्तरि निपात्यते' इति शेषः। पुष्यसिध्यौ। 'निपात्येते' इति शेषः। नक्षत्रविशेषे गम्ये इत्यर्थः। विपूय। विपूय, विनीय, जित्य एते यथाक्रमं मुञ्जकल्कहलिषु क्यबन्ता निपात्यन्ते। तदाह-पूङित्यादिना। न्यादिसाहचर्यात् भौवादिकस्यैव

तव्य इत्यर्थः । विनीयः कल्कः । पिष्ट ओषधिविशेष इत्यर्थः । पापमिति वा । जित्यो हलिः । बलेन क्रष्टव्य इत्यर्थः । कृष्टसमीकरणार्थं स्थूलकाष्ठं हलिः । अन्यत्तु विपव्यम् । विनेयम् । जेयम् । **२८६९ प्रत्यपिभ्यां ग्रहेः ३।१।११८॥** 'छन्दसीति वक्तव्यम्' ( वा १९४४ ) । प्रतिगृह्यम् । अपिगृह्यम् । लोके तु प्रतिग्राह्यम् । अपिग्राह्यम् । **२८७० पदास्वैरिबाह्यापक्ष्येषु च ३।१।११९॥** अवगृह्यं, प्रगृह्यं वा पदम् । अस्वैरी परतन्त्रः । गृह्यकाः शुकाः । पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः । बाह्यायां–ग्रामगृह्या सेना । ग्रामबहिर्भूतेत्यर्थः । स्त्रीलिङ्गनिर्देशात्पुंनपुंसकयोर्न । पक्षे भवः पक्ष्यः । दिगादित्वाद्यत् । आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः । **२८७१ विभाषा कृवृषोः ३।१।१२०॥** क्यप्स्यात् । कृत्यम् । वृष्यम् । पक्षे—**२८७२ ऋहलोर्ण्यत् ३।१।१२४॥** ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्स्यात् । कार्यम् । वर्ष्यम् । **२८७३ युग्यं च पत्रे ३।१।१२१॥** पत्रं वाहनम् । युग्यो गौः । अत्र क्यप्कुत्वं च निपात्यते । **२८७४ अमावस्यदन्यतरस्याम् ३।१।१२२॥** अमोपपदाद्वसेरधिकरणे ण्यत् । वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । अमा सह वसतोऽस्यां चन्द्रार्कावमावास्या–अमावस्या । 'ऋहलोर्ण्यत्' (सू २८७२ । 'चजोः–' (सू २८६३) इति कुत्वम् । पाक्यम् ।

---

पृथात्तोर्ग्रहणमिति भावः । कल्कः शोधकद्रव्यम् । पापमिति वेति । कल्कशब्दस्य शोधनीये पापेऽपि प्रसिद्धत्वादिति भावः । हलिशब्दस्य विवरणम्—कृष्टसमीकरणार्थमिति । प्रत्यपिभ्यां ग्रहेः । छन्दसीति । वार्तिकमिदम् । वृत्तिकृता तु सूत्रे प्रक्षिप्तम् । ननु छान्दसस्य किमर्थमिहोपन्यास इत्यत आह—लोके त्विति । पदास्वैरिबाह्यापक्ष्येषु च । पद, अस्वैरि, बाह्या, पक्ष्य एष्वर्थेषु ग्रहेः क्यबित्यर्थः । अवगृह्यं प्रगृह्यं वा पदमिति । समस्तपदस्य अवान्तरपदविच्छेदः अवग्रहः । 'अप्रावेरयादिपदमितिशिरस्कं प्रग्रहः' इति प्रातिशाख्ये प्रसिद्धम् । 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति सूत्रोदाहरणं च प्रगृह्यम् । विभाषा कृवृषोः । पञ्चम्यर्थे षष्ठी । कृञः ऋदन्तत्वात् नित्यं ण्यति प्राप्ते, वृषेः ऋदुपधत्वात् नित्यं क्यपि प्राप्ते च, क्यब्विकल्पोऽयम् । पक्षे इति । क्यबभावपक्षे विशेषो वक्ष्यते इत्यर्थः । ऋहलोर्ण्यत् । पञ्चम्यर्थे षष्ठी । तदाह—ऋवर्णान्तादिति । युग्यं च पत्रे । क्यबन्तं निपात्यते । ण्यतोऽपवादः । युग्यो गौरिति । शकटादिना योक्तव्य इत्यर्थः । क्यपि कुत्वं निपातनात् । पत्रं वाहनमिति । पतन्ति गच्छन्त्यनेनेत्यर्थे 'दाम्नीशस' इत्यादिना करणे ष्ट्रन् । ण्यति तु योग्यमिति स्यात् । अमावस्यद् । अधिकरणे इति । निपातनलभ्यमिदम् । अमेत्यस्य विवरणम्—सहेति । 'ऋहलोर्ण्यत्' इत्यनुपदमेव प्राक् प्रसङ्गाद्व्याख्यातमपि सूत्रक्रमात् पुनरुपात्तम् । कुत्वमिति । पचेर्ण्यति 'चजोः' इति कुत्वमिति भावः । ननु 'पाणौ सृजेर्ण्यद्'इति व्यर्थम् , 'ऋहलोः' इत्येव

'पाणौ सृजेर्ण्यद्वाच्यः' ( वा १९४६ ) ऋदुपधलक्षणस्य क्यपोऽपवादः। पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः। 'समवपूर्वाच्च' ( वा १९४७ )। समवसर्ग्या। **२८७५ न क्वादेः ७।३।५९॥** क्वादेर्धातोश्चजोः कुत्वं न। गर्ज्यम्। वार्तिककारस्तु 'चजोः-' (सू २८६३) इति सूत्रे 'निष्ठायामनिटः' इति पूरयित्वा 'न क्वादेः' इत्यादि प्रत्याचख्यौ। तेन अर्जितर्जिप्रभृतीनां न कुत्वम्। निष्ठायां सेट्त्वात्। ग्रुचुग्लुञ्चुप्रभृतीनां तु क्वादित्वेऽपि कुत्वं स्यादेव। सूत्रमते तु यद्यपि विपरीतं प्राप्तम्। तथापि 'यथोत्तरं मुनीनां प्रामाण्यम्'। **२८७६ अजिव्रज्योश्च ७।३।६०॥** न कुत्वम्। समाजः। परिव्राजः। **२८७७ भुजन्युब्जौ पाण्युपतापयोः ७।३।६१॥** एतयोरेतौ निपात्यौ। भुज्यते अनेनेति भुजः पाणिः। 'हलश्च' (सू ३३००) इति घञ्। न्युब्जन्त्यस्मिन्निति न्युब्जः। उपतापो रोगः। पाण्युपतापयोः किम्। भोगः। समुद्गः। **२८७८ प्रयाजानुयाजौ यज्ञाङ्गे ७।३।६२॥** एतौ निपात्यौ यज्ञाङ्गे। पञ्च प्रयाजाः। त्रयोऽनुयाजाः। यज्ञाङ्गे किम्। प्रयागः। अनुयागः। **२८७९ वञ्चेर्गतौ ७।३।६३॥** कुत्वं न। वञ्च्यम्। गतौ किम्। वङ्क्यं काष्ठम्। कुटिलीकृतमित्यर्थः। **२८८० ओक उचः के ७।३।६४॥** उचेर्गुणकुत्वे निपात्येते के परे। ओकः शकुन्तः षलौ। इगुपधलक्षणः कः। घञा सिद्धे अन्तोदात्तार्थमिदम्। २८८१ णय आ-

---

सिद्धेरित्यत आह—ऋदुपधलक्षणस्येति। 'ऋदुपधाच्चाऽक्लृपिचृतेः' इति ण्यदपवादस्य क्यपो बाधनार्थमित्यर्थः। पाणिसर्ग्या रज्जुरिति। ण्यति 'चजोः' इति कुत्वम्। समवपूर्वाच्चेति। वार्तिकमिदम्। सृजेर्ण्यदिति शेषः। न क्वादेः। कुः आदिर्यस्येति विग्रहः। 'चजोः कु' इत्यनुवर्तते। तदाह—क्वादेरिति। कवर्गादेरित्यर्थः। वार्तिककारस्त्विति। 'चजोः कु घिण्ण्यतोः' इति सूत्रे 'निष्ठायामनिटः' इति पूरितम्। तथा च निष्ठायां यः अनिट् तद्धात्ववयवयोः चजोः कु स्यात् घिति ण्यति चेत्यर्थः फलति। तथा 'न क्वादेः' इति सूत्रं 'अजिव्रज्योश्च' इति सूत्रं 'यजयाचरुचप्रवचर्चश्च' इत्यत्र याचरुचग्रहणं च न कर्तव्यमिति प्रत्याचख्याविरत्यर्थः। किं तत इत्यत आह—तेनेति। सूत्रमते अर्जितर्जिप्रभृतीनां ण्यति कुत्वं स्यात्, 'न क्वादेः' इति निषेधस्य तत्राऽप्रवृत्तेरिति भावः। तदेवं सूत्रमते अतिव्याप्तिमुक्त्वा अव्याप्तिमाह-ग्रुचुग्लुञ्चुप्रभृतीनामिति। तेषां कवर्गादित्वेपि ण्यति ग्रोच्यमित्यादौ कुत्वमिष्टं स्यादेव, वार्तिकमते 'न क्वादेः' इति निषेधस्य प्रत्याख्यातत्वात्। सूत्रमते तु 'न क्वादेः' इति निषेधात् 'ग्रोच्य'मित्यादौ कुत्वमिष्टं न स्यादित्यव्याप्तिरिति भावः। नन्विदं वार्तिकं विपरीतफलमपि संमतत्वात् ग्राह्यमेव। विरोधे विकल्पस्य वक्तुं शक्यत्वादिति शङ्कते–सूत्रमते तु यद्यपीति। परिहरति–तथापीति। यथोत्तरमिति। अथ वैयाकरणसमयः। अजिव्रज्योश्च। इत्यादि स्पष्टम्। वञ्चेर्गतौ। कुत्वं नेति। शेषपूरणमिदम्। 'चजोः कु घिण्ण्यतोः' इत्यतः कुग्रहणस्य 'न क्वादेः' इत्य-

**वश्यके ७।३।६५॥** कुत्वं न । अवश्यपाच्यम् । **२८८२ यजयाचरुचप्रवचर्चश्च ७।३।६६॥** ण्ये कुत्वं न । याज्यम् । याच्यम् । रोच्यम् । प्रवाच्यं ग्रन्थविशेषः । 'ऋच्' अर्च्यम् । ऋदुपधत्वेऽप्यत एव ज्ञापकाण्ण्यत् । 'त्यजेश्च' । त्याज्यम् । 'त्यजिपूज्योश्च' इति काशिका । तत्र पूजेग्रहणं चिन्त्यम् । भाष्यानुक्तत्वात् । 'ण्यत्प्रकरणे त्यजेरुपसङ्ख्यानम्' इति हि भाष्यम् । **२८८३ वचोऽशब्दसंज्ञायाम् ७।३।६७॥** वाच्यम् । शब्दाख्यायां तु वाक्यम् । **२८८४ प्रयोज्यनियोज्यौ शक्यार्थे ७।३।६८॥** प्रयोक्तुं शक्यः प्रयोज्यः । नियोक्तुं शक्यो नियोज्यो भृत्यः । **२८८५ भोज्यं भक्ष्ये ७।३।६९॥** भोग्यमन्यत् । 'ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम्' । लाप्यम् । दभिर्धातुष्वपठितोऽपि वार्तिकबलात्स्वीकार्यः । दाभ्यः । **२८८६ ओरावश्यके ३।१।१२५॥** उवर्णान्ताद्धातोर्ण्यत्स्यादवश्यम्भावे द्योत्ये । लाव्यम् । पाव्यम् । **२८८७ आसुयुवपिरपिलपित्रपिचमश्च ३।१।१२६॥** 'षुञ्' आसाव्यम् । 'यु मिश्रणे' याव्यम् । वाप्यम् । राप्यम् । त्राप्यम् । आचाम्यम् । **२८८८ आनाय्योऽनित्ये ३।१।१२७॥** आङ्पूर्वान्नयतेर्ण्यदायादेशश्च

तो नेत्यस्य चानुवृत्तेरिति भावः । ण्य आवश्यके । कुत्वं नेति । शेषपूरणमिदम् । आवश्यकेऽर्थे यो ण्यः तस्मिन् परे 'चजोः कु घिण्ण्यतोः' इति कुत्वं नेत्यर्थः । यजयाच । ण्ये कुत्वं नेति । शेषपूरणमिदम् । यज, याच, रुच, प्रवच, ऋच् एषां द्वन्द्वात् षष्ठी । एषां ण्ये परे 'चजोः कु घिण्ण्यतोः' इति कुत्वं नेत्यर्थः । ननु अर्च्यमित्यत्र कथं ण्यत् । 'ऋदुपधाच्चाक्लृपिचृतेः' इति ऋदुपधत्वलक्षणस्य क्यपो ण्यदपवादत्वादित्यत आह— ऋदुपधत्वेऽपीति । त्यजिपूज्योश्चेति । ण्ये कुत्वं नेति शेषः । वचोऽशब्दसञ्ज्ञायाम् । वचधातोर्ण्ये कुत्वं न शब्दसञ्ज्ञां वर्जयित्वेत्यर्थः । वाच्यमिति । 'वदित्वि'ति शेषः । 'अशब्दसञ्ज्ञाया'मित्यस्य प्रयोजनमाह—शब्दाख्यायां तु वाक्यमिति । 'एकतिङ् वाक्यम्' इति सञ्ज्ञाशब्दोऽयमिति भावः । 'प्रवाच्य'मित्यत्र तु ग्रन्थविशेषसंज्ञात्वेऽपि नायं कुत्वनिषेधस्य निषेधः, 'यजयाच' इत्यत्र प्रवचेति विशिष्योपादानात् , अशब्दसञ्ज्ञायामित्यस्य प्रपूर्वाद्वचेरन्यत्र चरितार्थत्वात् । एतदभिप्रायेणैव 'प्रवाच्यं ग्रन्थविशेषः' इत्युक्तं प्राक् । प्रयोज्यनियोज्यौ । शक्यार्थे ण्ये कुत्वाऽभावो निपात्यते । 'शकि लिङ् च' इति कृत्यानां शक्यार्थेऽपि विहितत्वात् ण्यदन्तस्य शक्यार्थकत्वमपि । भोज्यं भक्ष्ये । भक्ष्ये गम्ये ण्ये भुजेः कुत्वाऽभावो निपात्यते । इति प्रासङ्गिकम् । अथ प्रकृतम् । लपिदभिभ्यां चेति । वार्तिकमिदं 'ऋहलोर्ण्यत्' इति सूत्रस्थम् । 'पोरदुपधात्' इति प्राप्तस्य ण्यदपवादस्य यतोऽपवादः । ओरावश्यके । लाव्यं पाव्यमिति । 'अचो ञ्णिति' इति वृद्धौ 'वान्तो यि' इत्यावादेशः । आसुयुवपि । आसु, यु, वपि, रपि, त्रपि, चम् एषां समाहारद्वन्द्वः । 'ण्य'दिति शेषः । आसाव्यमिति । आङ्पूर्वस्य

निपात्यते। दक्षिणाग्निविशेष एवेदम्। स हि गार्हपत्यादानीयतेऽनित्यश्च सततमप्रज्वलनात्। आनेयोऽन्यः घटादिः, वैश्यकुलादानीतो दक्षिणाग्निश्च॥ २८८९ प्रणाय्योऽसम्मतौ ३।१।१२८॥ संमतिः प्रीतिविषयं भवनं कर्मव्यापारः। तथा भोगेष्वादरोऽपि संमतिः। प्रणाय्यश्चोरः। प्रीत्यनर्ह इत्यर्थः। प्रणाय्योऽन्तेवासी। विरक्त इत्यर्थः। प्रणेयोऽन्यः। २८९० पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ३।१।१२९॥ मीयतेऽनेन पाय्यं मानम्। ण्यत् धात्वादेः पत्वं च। 'आतो युक्-' (सू २७६१) इति युक्। सम्यङ् नीयते होमार्थमग्निं प्रतीति सान्नाय्यं हविर्विशेषः। ण्यदायादेशः समो दीर्घश्च निपात्यते। निचीयतेऽस्मिन्धान्यादिकं निकाय्यो निवासः। अधिकरणे ण्यत् आय् धात्वादेः कुत्वं च नि-

सुगो ग्रहणमिति भावः। आनाय्योऽनित्ये। 'अनित्ये' इति छेदः। दक्षिणाग्निविशेष एवेति। वार्तिकमिदम्। स हीति। दक्षिणाग्निर्हि अग्निहोत्रार्थमहरहः गार्हपत्यादेः प्रणीयत इत्यर्थः। एतेन आङ्पूर्वकस्य नयतेरर्थं उक्तः। अनित्यश्चेति। गार्हपत्यवन्नित्यधारणाऽभावादिति भावः। तदाह—सततमप्रज्वलनादिति। सततं धारणाऽभावादित्यर्थः। प्रणीतस्य दक्षिणाऽग्नेस्तत्कर्मणि समाप्ते लौकिकत्वमुक्तं कल्पसूत्रेषु 'अप्रवृत्ते कर्मणि लौकिकः सम्पद्यते' इति। ततश्च पुनः पुनः प्रणयनात् अनित्यत्वं दक्षिणाग्नेरिति बोध्यम्। यद्यप्याहवनीयस्यापि पुनः पुनः प्रणयनमस्ति, तथापि 'दक्षिणाग्निविशेष एवे'ति वार्तिकादाहवनीयस्य ग्रहणमित्यर्थः। विशेषग्रहणाग्नित्यधारणपक्षे दक्षिणाग्निरिह न गृह्यते इति सूचितम्, गतश्रियां दक्षिणाग्नेरपि नित्यधार्यत्वात्। 'गतश्रियो नित्यधार्या अग्नयः' इति वचनादित्यलं पल्लवितेन। वैश्यकुलादानीत इति। दक्षिणाग्निं प्रकृत्य हि श्रूयते-'अहरहरेवेनं वैश्यकुलादाहरन्' इति। तथाविधदक्षिणाग्नौ वाच्ये आनेयशब्द एवेति भावः। प्रणाय्योऽसम्मतौ। असम्मतौ गम्यायां 'प्रणाय्य' इति निपात्यते। तत्र असम्मतिशब्दैकदेशं सम्मतिशब्दं विवृणोति-सम्मतिः प्रीतिविषयीभवनमिति। तच्च कर्मनिष्ठमित्याह—कर्मव्यापार इति। तथेति। भोगेषु सुखदुःखानुभवेषु आसक्तिरपि सम्मतिरित्यर्थः। एवंविधा सम्मतिर्न भवतीति असम्मतिरिति फलितम्। प्रणाय्यश्चोर इति। ण्यति वृद्धौ आयादेशः। पाय्यसान्नाय्य। पाय्य, सान्नाय्य, निकाय्य, धाय्य एषां द्वन्द्वात्प्रथमाबहुवचनम्। मान, हविः, निवास, सामिधेनी एषां द्वन्द्वात्सप्तमी। मानादिषु गम्येषु क्रमात् पाय्यादयो निपात्यन्ते। मीयते अनेनेति। माधातोः करणे ण्यत्, धात्वादेर्मकारस्य पत्वं च निपात्यते इत्यर्थः। आत इति। ण्यति 'मीनाति' इत्यात्वे कृते, आतो युगिति भावः। ण्यदिति। सम्पूर्वात् नीधातोः कर्मणि निपात्यत इत्यर्थः। आयादेश इति। सन्नी य इति स्थिते आयादेशः निपात्यते इत्यन्वयः। निवास इति। कुसूलादिरित्यर्थः। अधिकरणे इति। चिन्धातोरधिकरणे ण्यन्निपात्यते इत्यन्वयः। आय् इति। अचपरकत्वाऽभावात् आयादेशोऽ-

पात्यते । धीयतेऽनया समिदिति धाय्या ऋक् । २८९१ क्रतौ कुण्डपाय्यसञ्चाय्यौ ३।१।१३०॥ कुण्डेन पीयतेऽस्मिन्सोमः कुण्डपाय्यः क्रतुः । सञ्चीयतेऽसौ सञ्चाय्यः । २८९२ अग्नौ परिचाय्योपचाय्यसमूह्याः ३।१।१३१॥ अग्निधारणार्थे स्थलविशेषे एते साधवः । अन्यत्र तु परिचेयम्-उपचेयम्-संवाह्यम् । २८९३ चित्याग्निचित्ये च ३।१।१३२॥ चीयतेऽसौ चित्योऽग्निः । अग्नेश्चयनमग्निचित्या । 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' ( सू. २८१७ ) । त्वया गन्तव्यम्, गमनीयम्-गम्यम् । इह लोटा बाधा मा भूदिति पुनः कृत्यविधिः 'स्त्र्यधिकाराद्र्ध्वं

प्राप्तो निपात्यते इत्यन्वयः । धाय्या ऋगिति । धाधातोः करणे ण्यति आयादेशो निपात्यते इति भावः । सामिधेन्यो नाम समिदाधानार्था ऋग्विशेषाः । तत्र 'समिध्यमानो अध्वरे' इति ऋच उपरि प्रक्षेप्या 'पृथुपाजा अमर्त्यः' इत्याद्या ऋक्प्रसिद्धा । क्रतौ कुण्डपाय्य । क्रतुविशेषे गम्ये एतौ निपात्येते । कुण्डेनेति । अल्पसरकैः चमसैरित्यर्थः । सामान्येनैकवचनम् । 'यदल्पसरकैश्चमसैर्भक्षयन्ति तदेषां कुण्डम्' इति श्रुतिः । कुण्डपाय्य इति । सत्रविशेषात्मकः क्रतुः । कुण्डेनेति तृतीयान्ते उपपदे अधिकरणे ण्यत् । आतो युक् । संचाय्य इति । सम्पूर्वात् चिञः कर्मणि ण्यत्, आयादेशश्च निपात्यते इति भावः । सञ्चाय्यो नाम क्रतुविशेषः क्वचिच्छाखायामन्वेषणीयः॥ अग्नौ परिचाय्य । अग्नौ गम्ये परिचाय्य, उपचाय्य, समूह्य एते निपात्यन्ते । अग्निशब्द इष्टकारचितस्थण्डिलविशेषे वर्तते, 'इष्टकाभिरग्निं चिनोति' इति श्रुतेः । इष्टकाकृतचयनेन अग्न्याख्यं स्थण्डिलं निष्पादयेदित्यर्थः । ब्रह्मवादिनो वदन्ति यन्मृदा चाग्निश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति यच्छन्दोभिश्चिनोत्यग्नयो वै छन्दांसि तस्मादग्निरुच्यतेऽथो इयं वा अग्निर्वैश्वानरो यन्मृदा चिनोति तस्मादग्निरुच्यते' इति वाक्यशेषाच्च । तदाह—अग्निधारणेति । तत्र परिपूर्वादुपपूर्वाच्च चिञः कर्मणि ण्यत्, आयादेशश्च निपात्यते । सम्पूर्वस्य वहेस्तु कर्मणि ण्यति सम्प्रसारणम्, दीर्घश्च निपात्यते । 'समूह्यं चिन्वीत पशुकामः, परिचाय्यं चिन्वीत ग्रामकामः' इति तैत्तिरीयश्रुतौ परिचाय्यसमूह्यौ प्रसिद्धौ । उपचाय्यस्त्वग्निः । क्वचिच्छाखायामन्वेषणीयः । चित्याग्निचित्ये च । चित्यश्च अग्निचित्या चेति द्वन्द्वः । अग्नौ निपात्यते । चित्योऽग्निरिति । कर्मणि ण्यत्, तुक् च निपात्यते । अग्नेश्चयनमिति । अग्निशब्दे षष्ठ्यन्ते उपपदे चिञो ण्यत् तुक् च, स्त्रीत्वं लोकात् । 'प्रैषातिसर्ग' इति व्याख्यातमपि स्मार्यते । गम्यमिति । 'पोरदुपधात्' इति ण्यदपवादः यत् । ननु सामान्येन भावकर्मणोर्विहितानां कृत्यानां प्रैषादिषु तदभावे च सिद्धेः प्रैषादिषु कृत्यविधिर्व्यर्थ इत्यत आह—लोटा बाधा इति । इह प्रैषादिषु कृत्यविध्यभावे लोट् चेति प्रैषादिषु लोटा विशेषविहितेन कृत्यानां बाधः स्यात्, कृत्यानां प्रैषाद्यभावे भावकर्मणोश्चरितार्थत्वात् । अतः प्रैषादिषु कृत्यानां लोटा बाधनिवृत्तये पुनः कृत्यविधिरित्यर्थः । ननु वासरूपविधिनैव

वासरूपविधिः क्वचिन्न' इति ज्ञापयति। तेन 'क्तल्युट्तुमुन्खलर्थेषु न—' इति सिद्धम्। 'अर्हे कृत्यतृचश्च' (सू२८२२)। स्तोतुमर्हः स्तुत्यः स्तुतिकर्म। स्तोता स्तुतिकर्ता। लिङा बाधा मा भूदिति कृत्यतृचोर्विधिः। **२८९४ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ३।४।६८॥** एते कृत्यान्ताः कर्तरि वा निपात्यन्ते। पक्षे तयोरेवेति सकर्मकात्कर्मणि, अकर्मकात्तु भावे ज्ञेयाः। भवतीति भव्यः। भव्यमनेन वा। गायतीति गेयः साम्नामयम्। गेयं सामानेन वा इत्यादि।

---

लोटः प्रैषादिषु कृत्यानां बाधो न भविष्यतीत्यत आह—स्त्र्यधिकारादूर्ध्वमिति। 'स्त्रियां क्तिन्' इत्यत ऊर्ध्वमित्यर्थः। 'प्राक् स्त्रियाः वासरूपविधिः' इति भाष्यम्। ननु स्त्र्यधिकारादूर्ध्वं वासरूपविधेरप्रवृत्तौ 'स्त्रियां क्तिन्' इति सामान्यविहितस्य क्तिनः 'षिद्भिदादिभ्योऽङ्' इति विशेषविहितेन नित्यबाधः स्यात्, ततः क्षमा, क्षान्तिः, भिदा, भित्तिरित्यादि न स्यादित्यत आह—क्वचिन्नेति। 'क्वचि'दित्यस्याऽनिर्धारणादाह—तेन क्तल्युट्तुमुन्खलर्थेषु नेति। सिद्धमिति। एषु वासरूपविधिर्नास्तीत्यर्थः। 'स्त्र्यधिकारात् प्राक् वासरूपविधिः, नतु तत ऊर्ध्वम्' इति भाष्यस्य 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ती'त्यत्र सङ्कोच इति भावः। अत्र व्याख्यानमेव शरणम्। अर्हे कृत्यतृचश्चेति। प्राग्व्याख्यातेति विशेषविवक्षया स्मार्यते। 'लिङ्यदि' इत्यतो लिङनुकर्षार्थश्चकार इत्युक्तं प्राक्। ननु अर्हे अनर्हे च सामान्यविधानादेव अर्हेऽपि कृत्यतृचोः सिद्धयोः पुनस्तद्विधिर्व्यर्थः इत्यत आह—लिङा बाधेति। 'अर्हे चे'त्येतावत्येव उक्ते चकारानुकृष्टस्य लिङ एवार्हे विधिः स्यात्। तथा च अर्हे कृत्यतृचोर्विधिर्न स्यात्, अर्हे विशेषविहितेन लिङा बाधात्, अनर्हे कृत्यतृचोश्चरितार्थत्वात्। वासरूपविधिस्तु स्त्र्यधिकारादूर्ध्वं न प्रवर्तते इत्युक्तमेव। अतो लिङा बाधा मा भूदिति कृत्यतृचोर्विधिरित्यर्थः। भव्यगेय। कर्तरि वेति। 'कर्तरि कृत्' इत्यतः कर्तरीत्यनुवृत्तं वेत्यनेन सम्बध्यते। तथा च कर्तरि वा एते निपात्यन्ते। अन्यत्र नेति फलति। तत्र अन्यत्रेत्यस्याऽनिर्धारणादाह—पक्षे इति। अन्यत्रापि न सर्वत्र, किन्तु 'तयोरेव कृत्यक्तखलर्थाः' इति सूत्रेण सकर्मकात् कर्मणि, अकर्मकाद्भावे एते कृत्या ज्ञेया इत्यर्थः। 'तयोरेव कृत्य' इति सूत्रे 'क्तः कर्मणि च' इत्यस्मात्सकर्मकेभ्यः कर्मणि अकर्मकेभ्यः भावे इत्यनुवर्तते इति भावः। भवतीति भव्य इति। कर्तरि अचो यत्। भव्यमनेन वेति। भावे यत्। गेयः साम्नामयमिति। गाधातोः कर्तरि यत्। 'ईद्यति' इति प्रकृतेः ईत्वम्। गुणः। साम्नां कर्मणामनभिहितत्वात् कृद्योगे षष्ठी। कर्तुरभिहितत्वात् प्रथमा। गेयं सामानेनेति। कर्मणि यत्, सकर्मकत्वात्। नतु भावे। कर्तुरनभिहितत्वात्तृतीया। कृद्योगषष्ठी तु कृत्ययोगे कर्तरि वैकल्पिकी, 'कृत्यानां कर्तरि वा' इत्युक्तेः। इत्यादीति। 'प्रवचनीयो गुरुर्वेदस्य'। प्रवक्तेत्यर्थः। कर्तरि अनीयर्। 'प्रवचनीयो वेदो गुरुणे'ति वा। 'उपस्थानीयः शिष्यो गुरोः' 'उपस्थानीयो गुरुः शिष्येणे'ति वा।

'शकि लिङ् च' (सू २८२३) । चात्कृत्याः । वोढुं शक्यो वोढव्यः । वहनीयो वाह्यः। लिङा बाधा मा भूदिति कृत्योक्तिः । लाघवादनेनैव ज्ञापनसम्भवे प्रैषादिसूत्रे 'कृत्याश्च' इति सुत्यजम् । अर्हे कृत्यतृचोर्ग्रहणं च । इति कृदन्ते कृत्यप्रकरणम् ।

## अथ कृदन्तप्रकरणम् ॥ २४ ॥

२८९५ ण्वुलतृचौ ३।१।१३३॥ धातोरेतौ स्तः । 'कर्तरि कृत्' (सू २८३२) इति कर्त्रर्थे । 'युवोरनाकौ' (सू १२४७) । कारकः । कर्ता । वोढुमर्हो वोढा । कारिका । कर्त्री । 'गाङ्कुटा—' (सू २४६१) इति ङित्त्वम् । कुटिता । अञ्णिदित्युक्तेर्न ङित्वम् । कोटकः । 'विज इट्' ( सू २५३६ ) । विजिता । 'हनस्तोऽचिण्णलोः' ( सू २५७४ ) । घातकः । 'आतो युक—' ( सू २७६१ ) । दायकः । 'नोदात्तोपदेशस्य—' ( सू २७६३ ) इति न वृद्धिः । शमकः । दमकः । अनिटस्तु नियामकः । 'जनिवध्योश्च' ( सू २५१२ ) । जनकः । 'वध हिंसायाम्' वधकः । 'रधि-

---

'जन्योऽसौ' । जायते इत्यर्थः । 'जन्यमनेने'ति वा । आप्लवतेऽसौ 'आप्लाव्यः' । 'ओरावश्यके' इति कर्तरि ण्यत् 'आप्लाव्यमनेने'ति वा । आपततसौ 'आपात्यः' । 'ऋहलोः' इति कर्तरि ण्यत् । 'आपात्यमनेन वा' । 'शकि लिङ् च' इत्यपि व्याख्यातं प्राक् । विशेषविवक्षया सूत्रक्रमादिहोपन्यस्तम् । नन्विह चकारानुकृष्टकृत्यविधिर्व्यर्थः । शक्तौ अशक्तौ च भावकर्मणोः सामान्यतः कृत्यविधित एव शक्तावपि सिद्धेरित्यत आह—लिङा बाधेति । 'शकि लिङ्' इत्येतावत्येवोक्ते शक्तौ विशेषविहितेन लिङा कृत्यानां बाधः स्यात्, अशक्तौ कृत्यानां चरितार्थत्वात् वासरूपविधिस्तु स्त्र्यधिकारादूर्ध्वं नेत्युक्तमेवेति भावः । लाघवादिति । इह चकारमात्रेण वासरूपविधेः स्त्र्यधिकारादूर्ध्वम् अनित्यताज्ञापनं सम्भवति । अतः 'प्रैषातिसर्गं' इति सूत्रे कृत्यग्रहणेन 'अर्हे कृत्यतृचश्च' इत्यत्र कृत्यतृड्ग्रहणेन च तज्ज्ञापनाश्रयणे गौरवमिति भावः । इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां कृदन्तकृत्यप्रकरणं समाप्तम् ।

अथ कृदन्तप्रकरणम् । ण्वुल्तृचौ । अनयोर्वर्तमानकालादन्यत्र न प्रयोग इति भाष्यम् । वोढुमर्हः इति । 'अर्हे कृत्यतृचश्च' इत्युक्तेरिति भावः । वोढेति । वहेस्तृच्यनुदात्तत्वादिडभावे ढत्वधत्वष्टुत्वढलोपेषु 'सहिवहोः' इत्योत्वम् । कुटितेत्यत्र लघूपधगुणमाशङ्क्य आह—गाङिति । तर्हि ण्वुलि कोटक इत्यत्रापि गुणो न स्यादित्यत आह—अञ्णिदित्युक्तेरिति । विजितेत्यत्र लघूपधगुणमाशङ्क्य आह—विज इडिति । इति ङित्वमिति शेषः । विजितेति । ङित्वान्न गुणः । अनिटस्त्विति । तस्यानुदात्तोपदेशत्वादिति भावः । 'जनक' इत्यत्रोपधावृद्धिमाशङ्क्य वृद्धिनिषेधं स्मारयति—जनिवध्योश्चेति । वध हिंसायामिति । धात्वन्तरं भौवादिकम्, भ्वादेराकृतिगणत्वात् । नत्वयं

जभोरचि' (सू २३०२)। रन्धकः। जम्भकः। 'नेट्यलिटि रधेः' ( सू २५१६ ) रधिता। रद्धा। 'मस्जिनशोः—' ( सू २५१७ ) इति नुम्। मङ्क्ता। ष्टा। नशिता। 'रभेरशब्लिटोः' ( सू २५८१ ) रम्भकः। रब्धा। 'लभेश्च' ( सू २५८२ )। लम्भकः। लब्धा। 'तीषसह—' ( सू २३४० )। एषिता-एष्टा। सहिता-सोढा। दरिद्रातेरालोपः। दरिद्रिता। 'ण्वुलि न'। दरिद्रायकः। 'कृत्य ल्युटः—' ( सू २८४१ ) इत्येव सूत्रमस्तु। यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात्। एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थम्। पादाभ्यां ह्रियते पादहारकः। कर्मणि ण्वुल्। 'क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः' ( वा ४४२२-४४२३ )। प्रक्रन्ता। कर्तरि इति किम्। प्रक्रमितव्यम्।

---

हन्तेर्वधादेशः। तथा सति 'जनिवध्योश्च इति वृद्धिनिषेधसूत्रे वधिग्रहणवैयर्थ्यात्, वधादेशस्याऽदन्ततया अल्लोपस्य स्थानिवत्वादेव वृद्ध्यभावसिद्धेः। वधक इति। 'जनिवध्योश्च' इति वृद्धिनिषेधः। रन्धकः। जम्भकः इत्यत्र इदित्त्वाऽभावादप्राप्ते नुमि तद्विधिं स्मारयति—रधिजभोरचीति। रधितेत्यत्र 'रधिजभोः' इति नुममाशङ्क्य आह—नेट्यलिटि रधेरिति। रधिता रद्धेति। 'रधादिभ्यश्च' इति वेट्। मस्ज् तृ इति स्थिते आह—मस्जिनशोरिति। नुम्विधिरयम्। मङ्क्तेति। मस्ज् तृ इति स्थिते 'मस्जेरन्त्यात् पूर्वो नुम् वाच्यः' इति सकारादुपरि जकारात् प्राङ्नुम्। मस्न्ज् तृ इति स्थिते 'स्कोः' इति सलोपः, जस्य कुत्वेन गः, तस्य चर्त्वेन कः, अनुस्वारः, परसवर्णेन ङ इति भावः। नंष्टा नशितेति। रधादित्वाद्वेट्। इडभावपक्षे 'मस्जिनशोः' इति नुमि नन्श् तृ इति स्थिते 'व्रश्च' इति शस्य षः। नस्याऽनुस्वारः। ष्टुत्वम्। रभेरशब्लिटोरिति। नुम्विधिरयम्। लब्धेति। 'झषस्तथोः' इति तस्य धः, जश्त्वेन भस्य बः। तीषसहेति। इड्विकल्पोऽयम्। सोढेति। ढत्वधत्वष्टुत्वढलोपाः। 'सहिवहोः' इत्योत्वम्। दरिद्रातेरालोप इति। 'दरिद्रातेरालोपो वक्तव्यः' इत्यनेनेति भावः। ण्वुलि नेति। 'दरिद्रातेर्ण्वुलि आल्लोपो नेत्यर्थः। 'न दरिद्रायके लोपः' इति वार्तिकादिति भावः। दरिद्रायक इति। 'आतो युक्' इति भावः। पादाभ्यां ह्रियते पादहारकः इत्यत्र कर्मणि ण्वुलं साधयितुमाह—कृत्यल्युट इत्येवेति। 'कृत्यल्युटः' इत्येतावतैव पुनर्वचनबलात् येष्वर्थेषु ते कृत्यल्युटः विहिताः, ततोऽन्येष्वप्यर्थेषु भवन्तीत्यर्थलाभात् बहुलग्रहणं योगविभागार्थम्-कृत्प्रत्यया येष्वर्थेषु विहिताः ततोऽन्यत्रापि क्वचित् भवन्तीति। एवञ्च कर्मण्यपि ण्वुल् सिध्यतीत्यर्थः। 'कृतो बहुलम्' इति वार्तिकं तु एतद्योगविभागसिद्धकथनपरमिति भावः। क्रमेरिति। आत्मनेपदविषयात् क्रमेः परस्य कर्तरि कृतो नेडित्यर्थः। 'स्नुक्रमोः' इति सूत्रस्थमिदं वार्तिकम्। प्रक्रन्तेति। 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदविषयोऽयम्। नन्वेवं सति क्रमितेत्यत्र कथमिडित्यत

आत्मनेपद—इति किम्। संक्रमिता। अनन्यभावे विषयशब्दः। तेन 'अनुपसर्गाद्वा' ( सू २७१६ ) इति विकल्पार्हस्य न निषेधः। क्रमिता। तदर्हत्वमेव तद्विषयत्वम्। तेन क्रन्तेत्यपीति केचित्। 'गमेरिट्–' ( सू २४०१ ) इत्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयति। संजिगमिषिता। एवं 'न वृद्भ्यश्चतुर्भ्यः' ( सू २३४८ )। विवृत्सिता। यङन्ताण्ण्वुल्। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। पापचकः। यङ्लुगन्तात्तु पापाचकः। २८९६ **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३।१।१३४॥** नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच्स्यात्। नन्दयतीति नन्दनः। जनमर्दयतीति जनार्दनः। मधुं सूदयतीति मधुसूदनः। विशेषेण भीषयते इति विभीषणः। लवणः। नन्द्यादिगणे निपातनाण्णत्वम्। ग्राही। स्थायी।

**आह—**अनन्यभावे विषयशब्द इति। 'वर्तते' इति शेषः। आत्मनेपदाऽविनाभाव इति यावत्। क्रमेः कर्तर्यात्मनेपदिन' इत्येतावतैव सिद्धे विषयपदोपादानादयमर्थो लभ्यते इति भावः। तथा च नित्यमात्मनेपदिन इति फलितम्। तेनेति। 'क्रमिते'त्यत्र क्रमेः 'अनुपसर्गाद्वा' इत्यात्मनेपदविकल्पविधानात् नित्यमात्मनेपदित्वाभावात् इण्निषेधो नेत्यर्थः। मतान्तरमाह—तदर्हत्वमेवेति। आत्मनेपदार्हत्वमेवात्मनेपदविषयत्वम्। ततश्च आत्मनेपदपक्षे इण्निषेधे सति क्रन्तेति रूपम्। आत्मनेपदाभावपक्षे तु क्रम इटि क्रमितेति रूपमिति केचिदाहुरित्यर्थः। अत्र पक्षे विषयपदस्य न प्रयोजनमित्यस्वरसः। ननु 'संजिगमिषिते' त्यत्र सनः कथमिट्, गमेरनिट्त्सु पाठात् सनः परस्मैपदपरत्वाभावेन 'गमेरिट् परस्मैपदेषु' इत्यस्याऽप्रवृत्तेरित्यत आह—गमेरिडित्यत्रेति। एवमिति। 'न वृद्भ्यश्चतुर्भ्यः' इत्यत्रापि परस्मैपदग्रहणमनुवृत्तं तङानयोरभावं लक्षयतीत्यर्थः। विवृत्सितेति। वृतेः सनि रूपम्। 'हलन्ताच्च' इति कित्त्वान्न गुणः। यङन्तादिति। पचिधातोर्यङन्तात् पापच्येत्यस्मात् ण्वुलित्यर्थः। तस्य अकादेशे 'यस्य हलः' इति यकारलोपे अतो लोपे पापच् अक इति स्थिते उपधावृद्धिमाशङ्क्य आह—स्थानिवत्त्वान्न वृद्धिरिति। यङ्लुगन्तात्त्विति। यङः संघातस्य लुकः अजादेशत्वाऽभावेन स्थानिवत्त्वाऽसम्भवादुपधावृद्धिर्निर्बाधा। 'न धातुलोप' इति निषेधस्तु न, यङ्लुकः अनैमित्तिकत्वात् उपधावृद्धेरिग्लक्षणत्वाऽभावाच्च। नन्दिग्रहि। नन्दि, ग्रहि, पच एषां द्वन्द्वः। नन्दिग्रहिपचाः आदिर्येषामिति विग्रहः। आदिशब्दस्य प्रत्येकमन्वयः फलति। ल्यु, णिनि, अच् एषां द्वन्द्वात्प्रथमा। यथासंख्यमन्वयः। तदाह—नन्द्यादेरित्यादि। नन्दि इति ण्यन्तग्रहणम्। तदाह—नन्दयतीति नन्दन इति। ल्योरनादेशः, 'णेरनिटि' इति णिलोपः। मधुं सूदयतीति। मधुरसुरविशेषः, तं सूदयति हन्तीति मधुसूदनः। ल्युः, अनादेशः, णिलोपः। 'सात्पदाद्योः' इति न षत्वम्। नन्द्यादयो वृत्तौ पठिताः। तत्र केचित् ण्यन्ताः केचिदण्यन्ताः। सूत्रे 'ग्रह उपादाने' इत्यस्य ग्रहीति इका निर्देशः। सौत्रत्वात् 'ग्रहिज्या' इति सम्प्रसारणं न। ग्राहीति। ग्रहधातोरुप-

मन्त्री। विशयी। वृद्ध्यभावो निपातनात्। विषयी। इह षत्वमपि। परिभावी। परिभवी। पाक्षिको वृद्ध्यभावो निपात्यते। पचादिराकृतिगणः। 'शिवशमरिष्टस्य करे' (सू ३४८६) 'कर्मणि घटोऽठच्' (सू १८३६) इति सूत्रयोः करोतेर्घटेश्चाच्प्रयोगात्। अच्प्रत्यये परे यङ्लुग्विधानाच्च। केषांचित्पाठस्त्वनुबन्धासञ्जनार्थः। केषांचित्प्रपञ्चार्थः। केषांचिद्बाधकबाधनार्थः। पचतीति पचः। नदट् चोरट् देवट् इत्यादयष्टितः। नदी। चोरी। देवी। दीव्यतेः 'इगुपध-' (सू २८९७) इति कः प्राप्तः। जारभरा। श्वपचा। अनयोः 'कर्मण्यण्' (सू २९१३) प्राप्तः। न्यङ्क्वादिषु पाठाच्छ्वपाकोऽपि 'यङोऽचि च' (२६५०) इति लुक्। 'न धातुलोपे'—(सू २६५६) इति गुणवृद्धिनिषेधः। चेक्रियः। नेन्यः। लोलुवः। पोपुवः। मरीमृजः। 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्या-

धाणिनिः। नकारादिकार उच्चारणार्थः। उपधावृद्धिः। विशयीति। विपूर्वात् 'शीङ् स्वप्ने' इति धातोर्णिनिः। गुणाऽयादेशौ। 'अचोऽञ्णिति' इति वृद्धिमाशङ्क्य आह—वृद्ध्यभाव इति। विषयीति। 'षिञ् बन्धने' अस्मात्कृतषत्वाण्णिनिः। गुणाऽयादेशौ। नन्विह कथं न वृद्धिः, कथं च षत्वं, पचादित्वादित्यत आह—षत्वमपीति। निपातनात् वृद्ध्यभावः षत्वं चेत्यर्थः। परिभावी, परिभवी इत्यत्र णित्वान्नित्यवृद्धिमाशङ्क्य आह—पाक्षिक इति। ग्रह्यादयो वृत्तौ पठिताः। पचादिराकृतिगण इति। पच वप इत्यादिकतिपयधातून् पठित्वा आकृतिगण इति गणपाठे वचनादिति भावः। गणपाठे आकृतिगणत्ववचनाऽभावेऽप्याह—शिवशमिति। सूत्रे करशब्दस्य पचादिगणेऽपठितस्य कृञः अच्प्रत्ययान्तस्य 'कर्मणि घटः' इति सूत्रे घटेरचि घटशब्दस्य च प्रयोगदर्शनादित्यर्थः। अच्प्रत्यय इति। यङन्तादच्प्रत्यये परे 'यङोऽचि च' इति यङो लुग्विधीयते। नहि पचादिगणे यङन्तं पठितमस्ति। अतोऽपि पचादेराकृतिगणत्वं विज्ञायते इत्यर्थः। पचादेराकृतिगणत्वे नदट् चोरट् इत्यादीनां तत्र पाठो व्यर्थं इत्यत आह—केषांचिदिति। टकारानुबन्धासञ्जनार्थं इत्यर्थः। नन्वेवमपि वद चल इत्यादीनाम् अनुबन्धरहितानां तत्र किमर्थः पाठः इत्यत आह—केषांचित्प्रपञ्चार्थं इति। बाधकेति। 'जारभर' 'श्वपच' इत्यादौ पचाद्यजपवादस्य कर्मण्यणो बाधनार्थं भरपचादीनां पाठ इति भाष्यम्। देवः सेवः इत्यादौ 'इगुपधज्ञाप्रीकिरः कः' इति विशिष्य विहितस्य कस्य बाधनार्थं च। तदेतदुपपादयति—नदडित्यादि। ननु पचादिगणे श्वपचशब्दस्य बाधकबाधनार्थत्वे श्वपाक इति कथमित्यत आह—न्यङ्क्वादिषु पाठाच्छ्वपाकोऽपीति। कदाचिदण्प्रत्ययः, कुत्वं चेत्यर्थः। चेक्रियः, मरीमृजः इत्यादौ प्रक्रियां दर्शयति—यङोऽचि चेति। क्रीञादिधातोरचि यङो लुगित्यर्थः। द्वित्वादौ चेक्री अ इत्यादिस्थितौ आह—न धातुलोप इति। चेक्रिय इति। गुणाऽभावे संयोगपूर्वत्वान्न यण्। नेन्य इति। 'एरनेकाचः' इति यण्। लोलुव इति। उवङ्। यण्तु न,

सस्येति वक्तव्यम्' ( वा ३४३० ) । आगागमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वो 'हलादिः शेषः' ( सू २१७९ ) च न । चराचरः । चलाचलः । पतापतः । वदावदः । 'हन्तेर्घत्वं च' ( वा ३४३१ ) । घत्वमभ्यासस्य, उत्तरस्य तु 'अभ्यासाच्च' ( सू २४३० ) इति कुत्वम् । घनाघनः । 'पाटेर्णिलुक्चोक्च दीर्घश्चाभ्यासस्य' । पाटूपटः । पक्षे चरः । चलः । पतः । वदः । हनः । पाटः । 'राश्रेः कृति—' ( सू १००४ ) इति वा मुम् । रात्रिंचरः । रात्रिचरः । २८६७ **इगुपधज्ञाप्रीकिरः कः ३।१।१३५ ॥** एभ्यः कः स्यात् । क्षिपः । लिखः । बुधः । कृशः । ज्ञः । प्रीणातीति प्रियः । किरतीति किरः । वासरूपविधिना ण्वुल्तृचावपि । क्षेपकः । क्षेप्ता । २८६८ **आतश्चोपसर्गे ३।१।१३६॥** कः स्यात् । 'श्याद्व्यध—' ( सू २९०३ ) इति णस्यापवादः । सुग्लः । प्रज्ञः । २८६९ **पाघ्राध्माधेट्दृशः शः ३।१।१३७ ॥** पिबतीति पिबः । जिघ्रः । धमः । धयः ।

---

'ओः सुपि' इत्युक्तेः । मरीमृज इति । अत्र 'न धातुलोपे' इति निषेधात् न मृजेर्वृद्धिः । चरिचलीति । एषाम् अच्प्रत्यये परे द्वित्वम्, अभ्यासस्य आगागमश्चेत्यर्थः । ननु 'चराचर' इत्यत्राऽभ्यासे रेफादाकारस्य ह्रस्वः स्यात्, हलादिशेषेण तत्र रेफस्यापि निवृत्तिः स्यादित्यत आह—आगागमस्येति । ह्रस्वत्वे सत्यागागमे दीर्घोच्चारणं व्यर्थम्, अगागमस्यैव विधातुं शक्यत्वात् । तथा हलादिशेषेण रेफस्य निवृत्तौ ह्रस्वत्वेऽपि सवर्णदीर्घेण 'चाचर' इति सिद्धेः दीर्घोच्चारणं हलादिशेषाभावं गमयतीत्यर्थः । हन्तेरिति । वार्तिकमिदम् । हनधातोरचि 'घत्वं आक् चेत्यर्थः । ननु उत्तरखण्डे 'अभ्यासाच्च' इति कुत्वसिद्धेः किमर्थमिह घत्वविधानमित्यत आह—घत्वमभ्यासस्येति । इह विधीयते इति शेषः । पाटेरिति । वार्तिकमिदम् । पाटेर्णौ पाटि इत्यस्मात् अचि णेर्लुक्, द्वित्वम् । अभ्यासस्य ऊगागमः । अभ्यासस्य आकारस्य ह्रस्वे तस्य दीर्घश्चेत्यर्थः । वृद्धिनिवृत्तये णेर्लुग्विधिः । आगागमे दीर्घोच्चारणात् हलादिशेषेण टकारस्य न निवृत्तिः, हलादिशेषे तु आद्गुणे पोपट इति रूपस्य उगागमेऽपि सिद्धेः । इगुपधज्ञा । 'कॄ विक्षेपे' इत्यस्य ह्रस्वे रपरत्वे च किर् इति रेफान्तम् । इगुपध, ज्ञा, प्री, किर् एषां द्वन्द्वात्पञ्चमी । कित्वं गुणनिषेधार्थम् । ज्ञ इति । आतो लोपः । प्रिय इति । प्रीञ् के इयङ् । किर इति । कॄधातोः के ह्रस्वे रपरत्वम् । आतश्चोपसर्गे । कः स्यादिति । शेषपूरणम् । उपसर्गे उपपदे आदन्ताद्धातोः कः स्यादिति फलति । णस्यापवाद इति । तस्य उपसर्गेऽनुपसर्गे च आदन्तसामान्यविहितत्वात् इति भावः । सुग्ल इति । ग्लैधातोः 'आदेचः' इत्यात्वे कृते कप्रत्यये आतो लोप इति भावः । प्रज्ञ इति । ज्ञाधातोरातो लोपः । पाघ्रा । अत्र 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्' इति मत्वा आह—पिबतीति पिब इति । पाधातोः शप्रत्यये तस्य शित्वेन सार्वधातुकत्वात् 'पाघ्राध्मा' इति पिबादेशः । स चाऽदन्त इत्युक्तम् ।

धया कन्या। धेटष्टित्त्वात् 'स्तनन्धयी' इति खशीव ङीप्प्राप्तः। 'खशोऽन्यत्र नेष्यते' इति हरदत्त.। पश्यतीति पश्यः। 'घ्रः संज्ञायां न' ( वा १९६७ )। '–व्याघ्रादिभि.–' ( सू ७३५ ) इति निर्देशात्। २९०० **अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ३।१।१३८ ॥** शः स्यात्। लिम्पः। विन्दः। धारयः। पारयः। वेदय । उदेजयः। चेतयः। सातिः सुखार्थः। सौत्रो हेतुमण्ण्यन्तः। सातय । वाऽसरूपन्यायेन क्विपि सात्परमात्मा। सात्वन्तो भक्ता.। 'षह मर्षणे' चुरादिः। हेतुमण्ण्यन्तो वा। साहयः। अनुप-

---

शप् पररूपम्। जिघ्र इति। 'पाघ्रा' इति घ्राधातोर्जिघ्रादेशः। धम इति। ध्माधातोर्धमादेशः। धय इति। धेटः शः, शप्, अयादेशः, पररूपमिति भावः। धया कन्येति। अत्र धेट्धातुष्टित्। स अदन्तो न भवति। यस्त्वदन्तो धयशब्दः, स न टित्। अतोऽत्र 'टिड्ढाणञ्' इति न ङीबिति भावः। धेटष्टित्त्वादित्यारभ्य हरदत्तमतम्। स्तनन्धयीतीति। स्तनशब्दे उपपदे धेट्धातोः 'नासिकास्तनयोः' इति खशि कृते 'खित्यनव्ययस्य' इति मुमि स्तनन्धयशब्दः। तत्र खशि कृते धेटष्टित्त्वमाश्रित्य यथा 'टिड्ढाणञ्' इति ङीप्, तथा धया कन्येत्यत्रापि ङीप् प्राप्तः। स ङीप् खशोऽन्यत्र नेष्यते इति हरदत्त आहेत्यर्थः। वस्तुतस्तु 'टिड्ढाणञ्' इति सूत्रे टिदावयवाकारस्यैव ग्रहणमिति भाष्यविरोधादिदं चिन्त्यम्। नच टित्त्वसामर्थ्यादेव स्तनन्धयीशब्दात् ङीबिति वाच्यम्, धया कन्येत्यत्रापि ङीप्प्रसङ्गात् खशोऽन्यत्र नेष्यते इत्यत्र प्रमाणाभावात्। तस्मात् स्तनन्धयीत्यप्रामाणिकमेव। तस्य प्रामाणिकत्वे गौरादित्वं कल्प्यम्, ङीष्यप्युदात्तनिवृत्तिस्वरप्राप्त्या स्वरे विशेषाऽभावात् इति शब्देन्दुशेखरे स्थितम्। श उदाहरति—पश्य इति। 'पाघ्रा' इति पश्यादेशः। घ्रः सञ्ज्ञायां नेति। घ्राधातोः सञ्ज्ञायां शो नेत्यर्थः। कुत इत्यत आह—व्याघ्रादिभिरिति। अन्यथा 'व्याजिघ्रादिभि'रिति निर्दिशेदिति भावः। अनुपसर्गात्। शः स्यादिति। शेषपूरणम्। लिम्पः, विन्द इति। 'लिप उपदेहे' 'विदॢ लाभे' इति तुदादौ, ताभ्यां शः, 'शे मुचादीनाम्' इति नुम्। सूत्रे कृतनुमौ लिम्पविन्दौ निर्दिष्टौ। अतस्तौदादिकयोरेव ग्रहणम्। धारय इति। 'धृञ् धारणे' 'धृङ् अवस्थाने' आभ्यां हेतुमण्ण्यन्ताभ्यां शः, शप्, गुणाऽयादेशौ। पारय इति। पॄधातोः ण्यन्ताच्छः, शप्, गुणाऽयादेशौ। विद वेदनाख्यादिषु। चुरादिण्यन्ताच्छः, शप् गुणाऽयादेशौ। उदेजय इति। उत्पूर्वादेजधातोः ण्यन्ताच्छः शप्, गुणाऽयादेशौ। चेतय इति। 'चिती सञ्ज्ञाने' ण्यन्ताच्छः, शप्, गुणाऽयादेशौ। एवं सातयः। सादिति रूपं साधयितुमाह—वासरूपन्यायेन क्विबिति। सातयति सुखयतीत्यर्थे क्विप्, णिलोपः। यद्यपि क्विप् सामान्यविहितः सातेः शप्रत्ययस्तु तदपवादः। तथापि वासरूपविधिना क्विबपि भवतीत्यर्थः। सात्परमात्मेति। 'एष ह्येवानन्दयति' इति श्रुतेः। तस्य सुखयितृ-

सर्गात् किम् । प्रलिपः । 'नौ लिम्पेर्वाच्यः' ( वा १९६८ ) । निलिम्पा देवाः । 'गवादिषु विन्देः संज्ञायाम्' ( वा १९६९ ) । गोविन्दः । अरविन्दः । २९०१ **ददातिदधात्योर्विभाषा ३।१।१३९॥** शः स्यात् । ददः । दधः । पक्षे वक्ष्यमाणो णः । अनुपसर्गादित्येव । प्रदः । प्रधः । २९०२ **ज्वलितिकसन्तेभ्यो णः ३।१।१४०॥** इतिशब्द आद्यर्थः । ज्वलादिभ्यः कसन्तेभ्यो वा णः स्यात् । पक्षेऽच । ज्वालः । ज्वलः । चालः । चलः । अनुपसर्गादित्येव । उज्ज्वलः । 'तनोतेरुपसंख्यानम्' ( वा १९७० ) । इहाऽनुपसर्गादिति, विभाषेति च न सम्बध्यते । अवतनोतीत्यवतानः । २९०३ **श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ३।१।१४१॥** श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात् । श्यैङोऽवस्यतेश्चाऽऽदन्तत्वात्सिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुम् । अवश्यायः । प्रतिश्यायः । आत् ।

---

त्वावगमादिति भावः । सात्वन्त इति । सात् परमात्मा भजनीयः एषामित्यर्थे मतुप् । 'मादुपधायाः' इति मस्य वः । 'तसौ मत्वर्थे' इति भत्वात् पदत्वाभावाच्च जश्त्वम् । साहय इति । साहेः शः । शप् । गुणाऽयादेशौ । प्रलिप इति । इगुपधलक्षणः कः । नौ लिम्पेरिति । वार्तिकमिदम् । 'नि' इत्युपसर्गे उपपदे लिम्पेः शो वाच्य इत्यर्थः । 'अनुपसर्गा'दित्युक्तेः पूर्वेणाप्राप्तौ वचनम् । गवादिष्विति । वार्तिकमिदम् । गवादिषु उपपदेषु विन्देः शो वाच्य इत्यर्थः । 'संज्ञायामेवे'ति नियमार्थमिदम् । गोविन्द इति । गाः उपनिषद्वाचः प्रमाणतया विन्दतीत्यर्थः । अरविन्दमिति । चक्रे नाभिनेम्योरन्तरालप्रोतानि काष्ठानि—अराणि, तत्सदृशानि दलानि विन्दतीत्यर्थः । कर्मण्यणोऽपवादः शः । ददातिदधात्योर्विभाषा । दाञ्, धाञ्, आभ्यां शो वा स्यात् । ददः दध इति । शः, शप्, श्लुः, 'श्लौ' इति द्वित्वम्, आतो लोपः । वक्ष्यमाण इति । 'श्याद्व्यध' इत्यनेनेति भावः । प्रदः प्रध इति । 'आतश्चोपसर्गे' इति कः । ज्वलिति । आद्यर्थ इति । तथा च ज्वल् इति आदिः येषां ते ज्वलितयः, ते च ते कसन्ताश्चेति ज्वलितिकसन्ताः, तेभ्य इति विग्रहः । तदाह—ज्वलादिभ्य इति । 'ज्वल दीप्तौ' इत्यारभ्य 'कस गतौ' इत्येवमन्तेभ्य इत्यर्थः । वा णः स्यादिति । विभाषेत्यनुवर्तते इति भावः । पक्षेऽजिति । 'इगुपधेभ्यः कः' इत्यपि बोध्यम् । उपसंख्यानमिति । 'णस्ये'ति शेषः । न सम्बध्यते इति । 'अवतानः' इत्येव भाष्ये उदाहरणादिति भावः । श्याद्व्यधास्रु । श्या, आत्, व्यध, आस्रु, संस्रु, अतीण्, अवसा, अवहृ, लिह, श्लिष, श्वस् एषामेकादशानां समाहारद्वन्द्वात्पञ्चमी । अनुपसर्गादिति निवृत्तम्, उत्तरसूत्रेऽनुपसर्गग्रहणात् । एवञ्च तत्सम्बद्धं विभाषाग्रहणं च नानुवर्तते । तदाह—नित्यमिति । श्यैङ इति । श्यैङ्धातोः अवपूर्वकस्य षोधातोश्च कृतात्त्वयोः सूत्रे निर्देशः । तयोरादन्तत्वादेव सिद्धे पुनर्ग्रहणम् 'आतश्चोपसर्गे' इति कप्रत्ययबाधनार्थमित्यर्थः । अवश्यायः प्रतिश्याय इति । श्यैङः आत्वे कृते णः, आतो युक् । आदिति । आदन्त-

दायः। धायः। व्याधः। 'स्रु गतौ' आङ्पूर्वः संपूर्वश्च। आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः। **२९०४ दुन्योरनुपसर्गे ३।१।१४२॥** णः स्यात्। दुनोतीति दावः। नीसाहचर्यात्सानुबन्धकाद्दुनोतेरेव णः। दवतेस्तु पचाद्यच् दवः। नयतीति नायः। उपसर्गे तु प्रदवः। प्रणयः। **२९०५ विभाषा ग्रहः ३।१।१४३॥** णो वा। पक्षेऽच्। व्यवस्थितविभाषेयम्। तेन जलचरे ग्राहः। ज्योतिषि ग्रहः। 'भवतेश्च' इति काशिका। भवो देवः संसारश्च। भावाः पदार्थाः। भाष्यमते तु प्राप्त्यर्थाच्चुरादिण्यन्तादच्। भावः। **२९०६ गेहे कः ३।१।१४४॥** गेहे कर्तरि ग्रहेः कः स्यात्। गृह्णाति धान्यादिकमिति गृहम्। तात्स्थ्यात् गृहा दाराः। **२९०७ शिल्पिनि ष्वुन् ३।१।१४५॥** क्रियाकौशलं शिल्पं, तद्वत्कर्तरि ष्वुन्स्यात्। 'नृतिखनिरञ्जिभ्य एव' ( वा १९७१ ) नर्तकः। नर्तकी। खनकः। खनकी। 'असि अके अने च रञ्जेर्नलोपो

---

**स्योदाहरणसूचनम्।** दायः धाय इति। **णे आतो युक्।** व्याध इति। **व्यधेर्णे उपधावृद्धिः।** आस्रावः, संस्राव इति। **णे 'अचोऽञ्णिति' इति वृद्धिः, आवादेशः।** अत्याय इति। **अतिपूर्वादिण्धातोर्णे वृद्ध्यायादेशौ।** अवसाय इति। **अवपूर्वात् 'षोऽन्तकर्मणि' इत्यस्मात् णे आत्वे आतो युक्।** लेहः श्लेष इति। **णे लघूपधगुणः।** श्वास इति। **णे उपधावृद्धिः।** दुन्योरनुपसर्गे। **दुनोतेः नयतेश्चेत्यर्थः। 'दव'शब्दं साधयितुमाह**—नीसाहचर्यादिति। **नीञ्धातुः सानुबन्धकः। तत्साहचर्यात् 'टु दु उपतापे' इति स्वादिगणस्थादेव णप्रत्यय इत्यर्थः।** दवतेस्त्विति। **'दु द्रु गतौ' इति भौवादिकात् निरनुबन्धकात्पचाद्यजित्यर्थः।** विभाषा ग्रहः। व्यवस्थितविभाषेयमिति। **इदं 'श्याद्व्यधा' इति सूत्रे भाष्ये स्पष्टम्।** तेनेति। **जलचरे मत्स्यादौ वाच्ये णप्रत्यये उपधावृद्धौ 'ग्राह' इत्येव भवति। ज्योतिषि सूर्यचन्द्रादौ वाच्ये अच्प्रत्यये 'ग्रह' इत्येव भवतीत्यर्थः।** भवतेश्चेति। **'णो वे'ति शेषः। पक्षे अच्।** काशिकेति। **भाष्ये तु न दृश्यते इति भावः। इयमपि व्यवस्थितविभाषैव। तदाह**-भवो देव इति। **महादेव इत्यर्थः। अत्र अजेवेति भावः।** भावाः पदार्था इति। **अत्र ण एवेति भावः। ननु 'भवतेश्चे'ति णविकल्पस्य भाष्ये अदर्शनात् कथं भाष्यमते भावशब्द इत्यत आह**-भाष्यमते त्विति। **भावयति प्रापयति स्वकार्यमित्यर्थे 'भू प्राप्तौ' इति चुरादिण्यन्तात् 'भावि' इत्यस्मात् अच्प्रत्यये णिलोपे भावशब्द इत्यर्थः।** गेहे कः। **'विभाषा ग्रहः' इत्यस्यापवादः।** गृहमिति। **'ग्रहिज्या' इति सम्प्रसारणं पूर्वरूपं च। ननु 'गृहा दारा' इति कथम्। गेहे कर्तर्येव वाच्ये कप्रत्ययविधानादित्यत आह**—तात्स्थ्यादिति। **गृहशब्दो गेहस्थे लाक्षणिक इति भावः।** गृहा दारा इति। **'दारेष्वपि गृहाः' इत्यमरः।** शिल्पिनि ष्वुन्। नृतिखनिरञ्जिभ्य एवेति। **वार्तिकमिदम्।** नर्तकीति। **षित्त्वात् ङीषिति भावः। 'दंशसञ्जस्वञ्जां शपि' इति सूत्रे 'रजकरजनरजस्सूपसंख्यानम्' इति वार्तिकम्। तत् अर्थतः संगृह्णाति**—असि अके अने

वाच्यः' ( वा ४०६७ )। रजकः। रजकी। भाष्यमते तु नृतिखनिभ्यामेव ष्वुन्। रञ्जेस्तु 'क्वुन्शिल्पिसंज्ञयोः' ( उ सू १९० ) इति क्वुन्। टाप्। रजिका। पुंयोगे तु रजकी। **२९०८ गस्थकन् ३।१।१४६॥** गायतेस्थकन्स्यात्, शिल्पिनि कर्तरि। गाथकः। **२९०९ ण्युट् च ३।१।१४७॥** गायनः। टित्वाङ्गायनी। **२९१० हश्च व्रीहिकालयोः ३।१।१४८॥** हाको हाङ्श्च ण्युट् स्यात् व्रीहौ काले च कर्तरि। जहात्युदकमिति हायनो व्रीहिः। जहाति भावानिति हायनो वर्षम्। जिहीते, प्राप्नोतीति वा। **२९११ प्रुसृल्वः समभिहारे वुन् ३।१।१४९॥** समभिहारग्रहणेन साधुकारित्वं लक्ष्यते। प्रवकः। सरकः। लवकः। **२९१२ आशिषि च ३।१।१५०॥** आशीर्विषयार्थवृत्तेर्वुन्स्यात्कर्तरि। जीवतात्—जीवकः। नन्दतात्—नन्दकः। आशीः प्रयोक्तुर्धर्मः। आशासितुः पित्रादेरियमुक्तिः।

इति तृतीयाध्यायस्य प्रथमः पादः ॥

**२९१३ कर्मण्यण् ३।२।१॥** कर्मण्युपपदे धातोरण्प्रत्ययः स्यात्। उपपदस-

---

चेति। रजक इति। रञ्जेः शिल्पिनि ष्वुनि अकादेशे नलोपः। रजकीति। षित्वात् ङीष्। 'नृतिखनिरञ्जिभ्य एवे'ति परिगणनात् 'वेञ् तन्तुसन्ताने' इत्यस्मात् कृतात्वात् 'श्याद्व्यध' इति णप्रत्यये आतो युकि 'वाय' इति सिध्यति। भाष्यमते तु नृतिखनिभ्यामेवेति। इदञ्च 'रंजशसञ्जस्वञ्जां शपि' इति सूत्रे भाष्ये स्पष्टम्। ननु भाष्यमते क्वुनि रजकीति कथमित्यत आह—पुंयोगे तु रजकीति। गस्थकन्। 'गः थकन्' इति छेदः। गैधातोः कृतात्वस्य 'गः' इति पञ्चम्यन्तम्। तदाह—गायतेरिति। ण्युट् च। चकारः थकः समुच्चये। गायतेर्ण्युट् थकन् च शिल्पिनि कर्तरि। गायन इति। आत्वे युक्। 'आदेचः' इत्यात्वस्य अनैमित्तिकत्वेन वृद्ध्यपेक्षया अन्तरङ्गत्वात्। यद्यपि 'गस्थकन् ण्युट् च' इत्येकमेव सूत्रमुचितम्। तथापि ण्युट एवोत्तरसूत्रे अनुवृत्त्यर्थो योगविभागः। हश्च। 'ओ हाक् त्यागे' इत्यस्य 'ओ हाङ् गतौ' इत्यस्य च 'हः' इति पञ्चम्यन्तम्। तदाह—हाको हाङश्चेति। प्रुसृल्वः। लक्ष्यते इति। एतच्च भाष्ये स्पष्टम्। प्रु, सृ, लू एषां समाहारद्वन्द्वात्पञ्चमी। आशिषि च। जीवक इति। आशास्यमानजीवनक्रियाश्रय इत्यर्थः। एवं नन्दकः। आशीरिति। आशासनम् अयमित्थं भूयादिति प्रार्थनं शब्दप्रयोक्तृकर्तृकमिति यावत्। तत आशासितुः पित्रादेरियमुक्तिः। इत्थं नन्दकशब्दप्रयोगः। औचित्यादिति भावः। इति तृतीयाध्यायस्य प्रथमः पादः।

---

अथ तृतीयाध्यायस्य द्वितीयः पादः। कर्मण्यण्। कर्मण्युपपदे इति। 'तत्रोपपदं सप्तमीस्थम्' इत्यत्र 'तत्रे'त्यनेनेदं लभ्यत इति तत्रैवोक्तम्। प्रत्ययस्तु कर्तर्येव। उपपदस-

मासः । कुम्भं करोतीति कुम्भकारः । आदित्यं पश्यतीत्यादावनभिधानान्न । 'शीलिकामिभक्ष्याचरिभ्यो णः' (वा १९८०)। अणोऽपवादार्थं वार्तिकम् । मांसशीला । मांसकामा । मांसभक्षा । कल्याणाचारा । 'ईक्षिक्षमिभ्यां च' (वा १९८१) सुखप्रतीक्षा । बहुक्षामा । कथं तर्हि गङ्गाधरभूधरादयः । कर्मणः शेषत्वविवक्षायां भविष्यन्ति । २९१४ ह्वावामश्च ३।२।२॥ एभ्यः अण् स्यात् । कापवादः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः । २९१५ आतोऽनुपसर्गे कः ३।२।३॥ आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यान्नाण् । 'आतो लोपः' । गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् । गोसन्दायः । 'कविधौ सर्वत्र सम्प्रसारणिभ्यो डः'

---

मास इति । 'उपपदमतिङ्' इत्यनेनेति भावः । कुम्भं करोतीति । अस्वपदो लौकिकविग्रहोऽयम् । कुम्भ अस् कार इत्यलौकिकविग्रहवाक्ये सुबुत्पत्तेः प्रागेव कारशब्देन कृदन्तेन कुम्भ अस् इति षष्ठ्यन्तस्य समास इति प्रागेवोक्तम् । ननु आदित्यं पश्यतीत्यादित्यदर्शः, हिमवन्तं शृणोतीति हिमवच्छ्रावः, ग्रामं गच्छतीति ग्रामगामः इत्यादि स्यादित्यत आह—आदित्यं पश्यतीत्यादावनभिधानान्नेति । एतच्च भाष्ये स्पष्टम् । शीलीति । शीलि, कामि, भक्षि, आचरि एभ्यो णप्रत्ययो वाच्य इत्यर्थः । ननु 'कर्मण्यण्' इत्यणैव सिद्धे किमर्थमिदमित्यत आह—अणोऽपवादार्थमिति । अणन्तत्वे तु ङीप् स्यात् । तन्निवृत्त्यर्थं णविधानमिति भावः । तदाह—मांसशीलेति । 'शील समाधौ' इति भ्वादिः । इह तु स्वभावतः सेवने वर्तते । मांसं स्वभावतः सेवमानेत्यर्थः । मांसकामेति । मांसं कामयते इति विग्रहः । मांसभक्षेति । मांसं भक्षयते इति विग्रहः । कल्याणाचारेति । कल्याणमाचरतीति विग्रहः । सर्वत्र टाप् । ईक्षिक्षमिभ्यामिति । वार्तिकमिदम् । 'ण' इति शेषः । कथमिति । कर्मण्यणि गङ्गाधारः इत्यादि स्यादित्याक्षेपः । कर्मणः शेषत्वेति । तथाच कर्मोपपदाभावान्नाणिति भावः । ह्वावामश्च । 'ह्वेञ् स्पर्धायाम्' 'वेञ् तन्तुसन्ताने' अनयोः कृतात्वयोर्निर्देशः, 'माङ् माने' एषां द्वन्द्वात्पञ्चम्येकवचनम् । एभ्य इति । कर्मण्युपपदे एभ्यः अण् स्यादित्यर्थः । ननु 'कर्मण्यण्' इत्येव सिद्धे किमर्थमिदमित्यत आह—कापवाद इति । 'आतोऽनुपसर्गे कः' इत्यस्याणपवादस्य वक्ष्यमाणस्य बाधनार्थमित्यर्थः । माङ्मेङोरिह ग्रहणम्, नतु 'मा माने' इत्यस्य, अकर्मकत्वात् । स्वर्गह्वाय इति । यद्यपि पराभिभवेच्छायां स्पर्धायां पराभिभवस्य कर्मणो धात्वर्थत्वेनोपसंग्रहादकर्मक इत्युक्तम् । तथापि इहाऽभिभवेच्छा धात्वर्थः । स्वर्गमभिभवितुं वाञ्छतीत्यर्थः । अन्तरङ्गत्वादात्वे कृते आतो युक् । एवमग्रेऽपि । आतोऽनुपसर्गे कः । पार्ष्णित्रमिति । पार्ष्णिः पादमूलभागः । तं त्रायते इति विग्रहः । 'त्रैङ् पालने' आत्वे कृते कः । गोसन्दाय इति । अण्यातो युक् । कविधौ सर्वत्रेति । वार्तिकमिदम् । सर्वत्र कप्रत्ययविधौ सम्प्रसारणार्हेभ्यः कापवादो डप्रत्ययो वाच्य इत्यर्थः ।

( वा १६८४ ) ब्रह्म जिनाति ब्रह्मज्यः। सर्वत्र ग्रहणादातश्चोपसर्गे। आह्वः। प्रह्वः। **२९१६ सुपि स्थः ३।२।४॥** सुपीति योगो विभज्यते। सुप्युपपदे आदन्तात्कः स्यात्। द्वाभ्यां पिबतीति द्विपः। समस्थः। विषमस्थः। ततः 'स्थः'। सुपि तिष्ठतेः कः स्यात्। आरम्भसामर्थ्याद्भावे। आखूनामुत्थानमाखूत्थः। **२९१७ प्रष्ठोऽग्रगामिनि ८।३।९२॥** प्रतिष्ठत इति प्रष्ठो गौः। अग्रतो गच्छतीत्यर्थः। अग्र—इति किम्। प्रस्थः। **२९१८ अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ८।३।९७॥** स्थः इति कप्रत्ययान्तस्यानुकरणम्। षष्ठ्यर्थे प्रथमा। एभ्यः स्थस्य सस्य षः स्यात्। द्विष्ठः।

---

वाचय इत्यर्थः। ब्रह्मज्य इति। '**ज्या वयोहानौ' अस्माड्डः। 'डित्वसामर्थ्यादभस्यापि टेर्लोपः'। अत्र कप्रत्यये सति कित्वात् 'ग्रहिज्या' इति सम्प्रसारणं प्रसक्तम्। अतो ड एव, नतु कः।** सर्वत्रेति। **उपसर्गे उपपदे आतोऽपि ड एव। ननु 'आतश्चोपसर्गे' इति कः। 'सर्वत्र'ग्रहणादित्यन्वयः। अन्यथा 'अनन्तरस्य विधि'रिति न्यायात् 'आतोऽनुपसर्गे कः' इत्येव बाध्येत, नतु 'आतश्चोपसर्गे' इति कप्रत्यय इति भावः।** आह्वः प्रह्व इति। **अत्र 'आतश्चोपसर्ग' इति कं बाधित्वा ड एव। तस्य अकित्वाद्यजादिलक्षणं सम्प्रसारणं न।** सुपि स्थः। योगो विभज्यते इति। **इदं भाष्ये स्पष्टम्। तत्र सुपीत्यंशं व्याचष्टे**—सुप्युपपदे इति। **इदं केवलोपसर्गे व्यर्थम्, 'आतश्चोपसर्गे' इत्येव सिद्धेः। कर्मण्युपपदेऽप्येतद्व्यर्थमेव, 'आतोऽनुपसर्गे कः' इत्यारम्भादिति मत्वोदाहरति**—द्वाभ्यामिति। तत इति। **'सुपी'त्यंशस्य व्याख्यानानन्तरं 'स्थः' इत्यंशो व्याख्यायत इत्यर्थः। ननु 'सुपि' इत्यंशेनैव सिद्धे किमर्थमिदमित्यत आह**—आरम्भसामर्थ्यादिति। **कर्तरि 'सुपि' इति पूर्वेण सिद्धेरिह 'कर्तरि कृत्' इति नानुवर्तते। अनिर्दिष्टार्थत्वात् 'गुप्तिज्किद्भ्यः सन्' इत्यादिवत् स्वार्थिकोऽयम्। स्वार्थश्च भाव एवेति भाष्ये स्पष्टम्। नच एवं सति 'घञर्थे कविधानम्' इत्येव सिद्धमिति वाच्यम्, नित्योपपदसमासार्थत्वात्। अत एव ल्युडन्तेन अस्वपदविग्रहं दर्शयन्नाह**—आखूनामुत्थानम् आखूत्थ इति। प्रष्ठोऽग्रगामिनि। **प्रपूर्वात् स्थाधातोः 'आतश्चोपसर्गे' इति कप्रत्यये आतो लोपे प्रस्थशब्दः। सः अग्रगामिनि वाच्ये कृतषत्वः निपात्यते। इण्कवर्गाभ्यां परत्वाऽभावात् षत्वस्य न प्राप्तिः।** प्रतिष्ठत इति **अग्रे गच्छतीत्यर्थः, उपसर्गवशात्।** प्रष्ठो गौरिति। **अग्रगामीत्यर्थः। एवं प्रष्ठोऽश्वः इत्यादि।** अम्बाम्ब। **अम्ब, आम्ब, गो, भूमि, सव्ये, (सव्य) अप, द्वि, त्रि, कुशे, कु, शङ्कु, अङ्गु, मञ्जि, पुञ्जि, परमे, बर्हिस्, दिवि, अग्नि—एषामष्टादशानां द्वन्द्वः। अम्बष्ठः, आम्बष्ठः, गोष्ठः, भूमिष्ठः। सव्येष्ठः निपातनादलुक्। 'हलदन्तात्सप्तम्याः' इति वा। अपष्ठः। एषु कतिपयेषु इण्कवर्गाभ्यां परत्वाऽभावात् षत्वस्य न प्राप्तिः। कतिपयेषु सात्पदाद्योः इति निषेधः प्राप्तः। एवमग्रेऽपि।** द्विष्ठ इति। **द्वाभ्यां तिष्ठतीति विग्रहः। एवं त्रिष्ठः, कुशेष्ठः, कुष्ठः, शङ्कुष्ठः,**

ग्निष्ठः। इत ऊर्ध्वं कर्मणि सुपीति द्वयमप्यनुवर्तते। तत्राऽकर्मकेषु सुपीत्यस्य सम्बन्धः। **२९१९ तुन्दशोकयोः परिमृजापनुदोः ३।२।५॥** तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात्। 'आलस्यसुखाहरणयोरिति वक्तव्यम्' (वा १९८८) तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः। शोकापनुदः सुखस्याहर्ता। अलसादन्यत्र तुन्दपरिमार्ज एव। यस्तु संसाराऽसारत्वोपदेशेन शोकमपनुदति स शोकापनोदः। 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' (वा १९८९) मूलानि विभुजति मूलविभुजो रथः। आकृतिगणोऽयम्। महीध्रः। कुध्रः। गिलतीति गिलः। **२९२० प्रे दाज्ञः ३।२।६॥** दारूपाज्जानातेश्च प्रोपसृष्टात्कर्मण्युपपदे कः स्यात्। अणोऽपवादः। सर्वप्रदः। पथिप्रज्ञः। अनुपसर्ग इत्युक्तेः प्रादन्यस्मिन्सुपि न कः। गोसम्प्रदायः। **२९२१ समि ख्यः ३।२।७॥** गोसंख्यः। **२९२२ गापोष्टक् ३।२।८॥** अनुपसृष्टाभ्यामाभ्यां टक्स्यात्कर्मण्युपपदे। सामगः। सामगी। उपसर्गे तु सामसङ्गायः। 'पिबतेः सुराशीध्वोरिति वाच्यम्' (वा १९९०) सुरापी। शीधुपी। अन्यत्र क्षीरपा ब्राह्मणी। सुरां पाति रक्षतीति सुरापा। **२९२३ हरतेरनुद्यमने-**

---

अङ्गुष्ठः, मञ्जिष्ठः, पुञ्जिष्ठः। परमेष्ठः, निपातनादलुक् 'हलदन्तात्' इति वा। बर्हिष्ठः। दिविष्ठः, पूर्ववदलुक्। अग्नि ः। कप्रत्ययान्तस्येति किम्। भूमिस्थितम्। इत ऊर्ध्वमिति। 'तुन्दशोकयोः' इत्यारभ्येत्यर्थः। सुपीत्यस्येति। ननु कर्मणीत्यस्य, असम्भवादिति भावः। तुन्दशोकयोः। तुन्दशोकयोरिति सप्तमी। परिमृज, अपनुद, अनयोर्द्वन्द्वात्पञ्चम्यर्थे षष्ठी। तदाह—उपपदयोराभ्यामिति। तुन्दपरिमृज इति। तुन्दम् उदरम्। अत्र 'मृजेरजादौ' इति पाक्षिकवृद्धिर्न भवति, व्यवस्थितविभाषाश्रयणादित्याहुः। मूलानि विभुजतीति। विमर्दयतीत्यर्थः। 'भुजो कौटिल्ये' तुदादिः। इहोपसर्गबलान्मर्दने वृत्तिः। महीध्र इति। महीं धरतीति विग्रहः। कित्वान्न गुणः। ऋकारस्य यण् रेफः। अणि तु 'महीधार' इति स्यात्। कुध्र इति। कुः पृथ्वी, तां धरतीति विग्रहः। गिल इति। 'गॄ निगरणे' अस्मात् कः, कित्वान्न गुणः, इत्वं रपरत्वम्। 'अचि विभाषा' इति लत्वम्। प्रे दाज्ञः। 'प्रे' इति सप्तमी पञ्चम्यर्थे। दा, ज्ञा अनयोर्द्वन्द्वात् पञ्चम्येकवचनम्। प्रोपसृष्टादिति। प्रेत्युपसर्गपूर्वकादित्यर्थः। सोपसर्गार्थम् आरम्भः। समिख्यः। 'समी'ति पञ्चम्यर्थे सप्तमी। गोसंख्य इति। गाः सञ्चष्टे इति विग्रहः। सम्पूर्वात् चक्षिङः ख्याञि रूपम्। 'ख्या प्रकथने' इत्यस्य तु सम्पूर्वस्य प्रयोगाऽभावात्, सार्वधातुकमात्रविषयत्वाच्च नेह सम्बध्यते। गापोष्टक्। 'गै शब्दे' 'पा पाने' इत्यनयोः टक् स्यात् कर्मण्युपपदे। सामग इति। टकि आतो लोपः। सामगीति। टित्वान्ङीबिति भावः। सामसङ्गाय इति। सोपसर्गात् गैधातोः कर्मण्यणि आतो युकि रूपम्। पिबतेरिति। वार्तिकमिदम्। पाधातोः सुराशीध्वोरुपपदयोः टक्

ऽच् ३।२।९॥ अंशहरः । अनुद्यमने किम् । भारहारः । शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुःषु ग्रहेरुपसंख्यानम्' ( वा १९९२ ) शक्तिग्रहः । लाङ्गलग्रहः । 'सूत्रे च धार्येऽर्थे' ( वा १९९३ ) सूत्रग्रहः । यस्तु सूत्रं केवलमुपादत्ते न तु धारयति तत्राऽण्येव, सूत्रग्राहः । २९२४ वयसि च ३।२।१०॥ उद्यमनार्थं सूत्रम् । कवचहरः कुमारः । २९२५ आङि ताच्छील्ये ३।२।११ ॥ पुष्पाण्याहरति तच्छीलः पुष्पाहरः । ताच्छील्ये किम् । भाराहारः । २९२६ अर्हः ३।२।१२॥ अर्हतेरच्स्यात्कर्मण्युपपदे । अणोऽपवादः । पूजार्हा ब्राह्मणी । २९२७ स्तम्बकर्णयो रमिजपोः ३।२।१३॥ 'हस्तिसूचकयोरिति वक्तव्यम्' ( वा १९९४ ) स्तम्बे रमते स्तम्बेरमो हस्ती । 'तत्पुरुषे कृति-' ( सू ९७२ ) इति 'हलदन्तात्—' ( सू ९६६ ) इति वा हेरलुक् । कर्णेजपः सूचकः । २९२८ शमि धातोः संज्ञायाम् ३।२।१४॥ शम्भवः । शंवदः । पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम् ।

---

स्यादित्यर्थः । चोरपेति । क्षीरं पिबतीत्यर्थे सुराशीध्वोरन्यतरत्वाभावात् 'आतोऽनुपसर्गे कः' इति कप्रत्यये टाप् पाति रक्षतीति । 'पा रक्षणे' इति लुग्विकरणस्य पिबतिग्रहणेन अग्रहणमिति भावः । हरतेरनुद्यमनेऽच् । अनुद्यमने विद्यमानात्कर्मण्युपपदे अजित्यर्थः । उद्यमनम् उद्ग्रहणम् । अंशहर इति । अंशस्य स्वीकर्तेत्यर्थः । भारहार इति । भारम् उद्गृह्णातीत्यर्थः । ग्रहेरुपसङ्ख्यानमिति । 'अच्प्रत्ययस्ये'ति शेषः । 'ग्रह उपादाने' अनुपचः । क्वचित् 'गृहे'रिति तु कृतसम्प्रसारणस्य इका निर्देशः । शक्तिग्रह इति । अकित्वान्न सम्प्रसारणम् । लाङ्गलग्रह इति । अङ्कुशग्रह इत्याद्यप्युदाहार्यम् । सूत्रे चेति । वार्तिकमिदम् । सूत्रे कर्मण्युपपदे धारणार्थकात् ग्रहधातोरजित्यर्थः । वयसि च । कर्मण्युपपदे वयसि गम्ये हरतेरजित्यर्थः । ननु 'हरतेरनुद्यमनेऽच्' इत्येव सिद्धे किमर्थमिदमित्यत आह—उद्यमनार्थमिति । आङि ताच्छील्ये । आङ्पूर्वाद्धरतेः कर्मण्युपपदे अच् स्यात्ताच्छील्ये गम्ये । ताच्छील्यं तत्स्वभावता । पुष्पाहर इति । पुष्पाहरणे फलानपेक्षमेव स्वाभाविकी प्रवृत्तिरस्येत्यर्थः । अर्हः । अणोऽपवाद इति । यद्यपि अणि अचि च पूजार्हरूपे न विशेषः, अनुपधत्वाभावेन वृद्धेरप्रसक्तेः । तथापि स्त्रियामण्यन्तत्वे ङीप्स्यात् । तन्निवृत्तये अज्विधिः । तदाह—पूजार्हेति । स्तम्बकर्णयोः । रम जप अनयोरकर्मकत्वात् कर्मणीति न सम्बध्यते । जपेः शब्दोच्चारणार्थकस्य धात्वर्थोपसंग्रहादकर्मकत्वं बोध्यम् । दर्भादितृणनिचयः स्तम्बः । सूचकः—पिशुनः । हस्तिसूचकयोः किम् । स्तम्बे रन्ता गौः । कर्णे जपिता गुरुः, मशको वा । शमि धातोः । 'शमि' इति सप्तम्यन्तम् । 'श'मिति सुखार्थकमव्ययम् । तस्मिन्नुपपदे धातोरच् स्यात्संज्ञायाम् । ननु धातुग्रहणं व्यर्थम् । नच रमिजपोरनुवृत्त्यर्थं तदिति वाच्यम् । अस्वरितत्वादेव तदननुवृत्तिसिद्धेरित्यत आह—पुनर्धातुग्रहणमिति । 'कृञो

कृञो हेत्वादिषु टो मा भूत् । शङ्करा नाम परिव्राजिका तच्छीला । **२९२९ अधिकरणे शेतेः ३।२।१५॥** खे शेते खशयः । 'पार्श्वादिषूपसंख्यानम्' ( वा १९९६ ) पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः । 'उत्तानादिषु कर्तृषु' ( वा १९९८ ) । उत्तानः शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य सोऽवमूर्धा । अधोमुखः शेत इत्यर्थः । 'गिरौ डश्छन्दसि' (वा १९९९) गिरौ शेते गिरिशः । लोके गिरिशयः । कथं तर्हि 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' इति । गिरिरस्यास्तीति विग्रहे लोमादित्वाच्छः । **२९३० चरेष्टः ३।२।१६॥** अधिकरणे उपपदे । कुरुचरः । कुरुचरी । **२९३१ भिक्षासेनादायेषु च ३।२।१७॥** भिक्षां चरतीति भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः । कथम् 'प्रेक्ष्य स्थितां सहचरीम्' इति । पचादिषु चरडिति पाठात् । **२९३२ पुरोऽग्रतोऽग्रेषु सर्तेः ३।२।१८॥** पुरःसरः । अग्रतःसरः । अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः । सूत्रेऽग्र इत्येदन्तत्वमपि निपात्यते । कथं तर्हि 'यूथं तदग्रसरगर्भवती मृगीभिः' इति ।

---

हेतुताच्छील्यानुलोम्येषु' इति टप्रत्ययः अच्प्रत्ययबाधको भवते, तद्बाधनार्थमित्यर्थः। अधिकरणे । सुबन्तेऽधिकरणवाचिन्युपपदे शीङ्धातोरच् स्यादित्यर्थः । पार्श्वादिष्विति । अत्राऽधिकरणवाचित्वमिति न सम्भवति । तत् स्वनयन्नुदाहरति—पार्श्वाभ्यामिति । उत्तानादिषु कर्तृष्विति । वार्तिकमिदम् । उत्तानादिशब्देषु कर्तृवाचिषूपपदेषु शीङोऽजित्यर्थः। गिराविति । वार्तिकमिदम् । गिराबुपपदे शीङो डप्रत्यय इत्यर्थः । 'अधिकरणे शेतेः' इत्यचोऽपवादः । "नमो गिरिशाय च शिपिविष्टाय च" इति । शीङोड प्रत्यये डित्वसामर्थ्यादभस्यापि टेर्लोपः । यद्यपि वैदिकप्रक्रियायामेवेदं व्याख्येयम् । तथापि लोके डप्रत्ययस्य न प्रवृत्तिः किं त्वजेवेति प्रदर्शनार्थमिह तद्व्याख्यानमित्यभिप्रेत्य लोके अच्प्रत्ययमुदाहरति—गिरिशय इति । कथमिति । लोके डप्रत्ययाऽसम्भवादिति भावः । समाधत्ते-गिरिरस्यास्तीत्यादि । चरेष्टः । ट इति च्छेदः । 'अधिकरणे उपपदे' इति शेषः। 'अधिकरणे शेते'रित्यतः तदनुवृत्तेरिति भावः । कुरुचर इति । कुरुषु चरतीति विग्रहः । न च 'अकर्मकधातुभिर्योगे' इति कर्मत्वं शङ्क्यम्; तस्य वैकल्पिकतायाः तत्रैव प्रपञ्चितत्वात् । तत्र अत्रत्यमपि भाष्यं प्रमाणम् । भिक्षासेना । भिक्षा, सेना, आदाय एषु चोपपदेषु चरेष्टः स्यादित्यर्थः । भिक्षां चरतीति । चरतिरत्र चरणपूर्वके आर्जने वर्तते । चरणेन भिक्षामार्जयतीत्यर्थः । सेनाचर इति । सेनां प्रापयतीत्यर्थः । ल्यबन्तमिति । अत्र व्याख्यानमेव शरणम् । आदाय चरतीति । लब्धं द्रव्यं गृहीत्वा चरतीत्यर्थः । कथमिति । अधिकरणे भिक्षासेनाऽऽदायेषु उपपदेषु च विहितस्य टप्रत्ययस्य सहपूर्वाच्चरेरसम्भवादिति भावः । समाधत्ते—पचादिष्विति । यद्यपि 'भिक्षाचर' इत्यादौ पचाद्यचि रूपसिद्धिः, तथापि नित्योपपदसमासार्थमञ्विधानमित्याहुः । पुरोऽग्रतः । पुरस्, अग्रतस्, अग्रे एषूपपदेषु सर्तेः टः स्यादित्यर्थः । अग्रेसर इति । ननु समासाऽवयवत्वात्सुपो लुकि

रगर्वितकृष्णसारम्' इति । बाहुलकादिति हरदत्तः । २९३३ **पूर्वे कर्तरि ३।२।१९॥** कर्तृवाचिनि पूर्वशब्द उपपदे सर्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरतीति पूर्वसारः । २९३४ **कृञो हेतुताच्छील्यानुलोम्येषु ३।२।२०॥** एषु द्योत्येषु करोतेष्टः स्यात् । 'अतः कृकमि'- ( सू १६० ) इति सः । यशस्करी विद्या । श्राद्धकरः । वचनकरः । २९३५ **दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ३।२।२१॥** एषु कृञष्टः स्यादहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः । भास्करः । बहुकरः । बहुशब्दस्य वैपुल्यार्थे संख्यापेक्षया पृथग्ग्रहणम् । लिपिलिबिशब्दौ पर्यायौ । संख्या—एककरः । द्विकरः । कस्कादित्वादहस्करः । 'नित्यं समासेऽनुत्तरपद-

---

अग्रसर इति स्यात् इत्यत आह—सूत्र इति । कथमिति । पूदन्तत्वनिपातनात् कथमग्रसरशब्द इत्यर्थः । समाधत्ते-बाहुलकादिति । पूर्वे कर्तरि । कर्तृशब्दः कर्तृवाचिनि गौणः । तदाह—कर्तृवाचिनीति । कृञो हेतु । हेतुः कारणम् । आनुलोम्यम्-आराध्यचित्तानुवर्तनम् । द्योत्येष्विति । कर्तुरेव प्रत्ययवाच्यत्वादिति भावः । हेत्वादिषूपपदेष्विति तु नार्थः, व्याख्यानात् । कर्मण्युपपदे इत्यपि द्रष्टव्यम् । 'कुप्वोः' इति जिह्वामूलीयमाशङ्क्य आह—अतः कृकमिति । हेतावुदाहरति—यशस्करी विद्येति । विद्या यशोहेतुः । श्राद्धकर इति । श्राद्धक्रियाशील इत्यर्थः । वचनकर इति । गुर्वादिवचनानुवर्तीत्यर्थः । दिवाविभा । दिवा, विभा, निशा, प्रभा, भास्, कार, अन्त, अनन्त, आदि, बहु, नान्दी, किम्, लिपि, लिबि, बलि, भक्ति, कर्तृ, चित्र, क्षेत्र, संख्या, जङ्घा, बाहु, अहर्, यद्, तद्, धनुस्, अरुस्-एषां सप्तविंशतेर्द्वन्द्वात्सप्तमी॥ एष्विति । 'उपपदेष्वि'ति शेषः । अहेत्वादिष्वपीति । 'हेतुताच्छील्यानुलोम्येषु' अगम्येष्वपीत्यर्थः । हेत्वादिग्रहणस्य अननुवृत्तेरिति भावः । एतेन अहेत्वाद्यर्थमिदं सूत्रमुक्तं भवति । अत्र कर्मणीति सुपीति चानुवृत्तं यथायोगमन्वेति । दिवाकर इति । दिवेत्यकारान्तमव्ययमहनीत्यर्थे । तस्याऽधिकरणशक्तिप्रधानस्यापि वृत्तिविषये कर्मत्वं बोध्यम् । दिवा-अहनि अर्थात् प्राणिनश्चेष्टायुक्तान् करोतीति वा विग्रहः । विभाकर इति । विभां करोतीति विग्रहः । निशाकर इति । निशां करोतीति विग्रहः । एवं प्रभाकरः । भासः करोति इति विग्रहे 'अतः कृकमि इत्यत्राऽत इति तपरकरणात्सस्वरयाऽप्राप्तेः 'कुप्वोः' इति जिह्वामूलीयविसर्गावाशङ्क्य आह-कस्कादित्वादिति । कारकरः, अन्तकरः, अनन्तकरः, आदिकरः इति सिद्धवत्कृत्य आह-बहुकर इति । ननु संख्याग्रहणेनैव सिद्धे बहुग्रहणं व्यर्थमित्यत आह-बहुशब्दस्येति । वैपुल्यवाचिनस्तस्य न संख्याशब्दत्वमिति 'बहुगणवतुडति संख्या' इत्यत्रोक्तम् । नान्दीकरः किङ्करः इति सिद्धवत्कृत्य आह-लिपिलिबिशब्दाविति । तथा च लिपिकरः, लिबिकरः, क्षेत्रकर इत्यन्तं सिद्धवत्कृत्य आह-संख्येति । 'उदाह्रियते' इति शेषः । अहः-

स्थस्य' ( सू १५९ ) इति षत्वम् । धनुष्करः । अरुष्करः । 'किंयत्तद्बहुषु कृञोऽज्विधानम् ।' ( वा २००२ ) इति वार्तिकम् । किंकरा । यत्करा । तत्करा । हेत्वादौ टं बाधित्वा परत्वादच् पुंयोगे ङीष् । किंकरी । **२९३६ कर्मणि भृतौ ३।२।२२॥** कर्मशब्दे उपपदे करोतेष्टः स्याद्भृतौ । कर्मकरो भृतकः । कर्मकारोऽन्यः । **२९३७ न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ३।२।२३॥** एषु कृञष्टो न । हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकार इत्यादि । **२९३८ स्तम्बशकृतोरिन् ३।२।२४॥** 'व्रीहिवत्सयोरिति वक्तव्यम्' (वा २००३) । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोः किम् । स्तम्बकारः । शकृत्कारः । **२९३९ हरतेर्दृतिनाथयोः पशौ ३।२।२५॥** दृतिनाथयोरुपपदयोर्हृञ इन्स्यात् पशौ कर्तरि । दृतिं हरतीति दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः । पशौ किम् । दृतिहरः । नाथहरः **२९४० फलेग्रहिरात्मम्भरिश्च ३।२।२६॥** फलानि गृह्णाति फलेग्रहिः । उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । आत्मानं बिभर्तीति आत्मम्भरिः । आत्मनो मुमागमः । भृञ इन् । चात्कुक्षिम्भरिः । चान्द्रास्तु आत्मो-

करः बाहुकर, इति सिद्धवत्कृत्य अहस्करशब्दे 'कुप्वोः' इति जिह्वामूलीयविसर्गावाशङ्क्य आह-कस्कादित्वादिति । ननु जहातेरुत्पन्ने अहन्शब्दे हन्शब्दस्योत्तरपदतया तद्विसर्गस्य उत्तरपदस्थत्वात् 'अतः कृकमि' इत्यस्य न प्राप्तिरिति भावः । धनुष्करशब्दे आह-नित्यं समास इति । प्रत्ययावयवत्वात्'इदुदुपधस्य च' इत्यस्य न प्राप्तिरिति भावः । कृञोऽज्विधानमिति । टस्याऽपवादः । किंकरेति । टप्रत्यये तु टित्वात् ङीप्स्यादिति भावः । हेत्वादिषु पूर्वविप्रतिषेधमाश्रित्य 'कृञो हेतु' इति किङ्करादिषु ट एव । 'किङ्करी'ति न्यासकारमतं दूषयितुमाह—हेत्वादाविति । पूर्वविप्रतिषेधाश्रयणस्य निर्मूलत्वादिति भावः । तर्हि किङ्करीति कथमित्यत आह—पुंयोगे ङीषिति । कर्मणि भृतौ । कर्मणीत्यनुवृत्तौ पुनः कर्मग्रहणं तु कर्मशब्दस्वरूपग्रहणार्थम् । कर्मकरो भृतक इति । वेतनं गृहीत्वा यः परार्थं कर्म करोति स भृतक इत्युच्यते । न शब्दश्लोक । शब्द, श्लोक, कलह, गाथा, वैर, चाटु, सूत्र, मन्त्र, पद, एषां नवानां द्वन्द्वः । हेत्वादिष्विति । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति प्राप्तः टप्रत्ययोऽनेन प्रतिषिध्यते इत्यर्थः । स्तम्बशकृतोरिन् । स्तम्बे शकृति च कर्मण्युपपदे कृञ इन् स्यात् । नकार इत् । व्रीहिवत्सयोरिति । व्रीहौ वत्से च कर्तरीत्यर्थः । स्तम्बशकृतोर्यथासङ्ख्यमन्वयः । स्तम्बकरिर्व्रीहिरिति । स्तम्बं तृणनिचयं करोतीति विग्रहः । हरतेर्दृतिनाथयोः । दृतिः चर्मभस्त्रिका । दृतिहरिः श्वा इति वृत्तिः । नाथशब्दस्य विवरणम्—नासारज्जुमिति । नासिकाप्रोतरज्जुमित्यर्थः । नाथहरिरिति । नासिकाप्रोतरज्जुके पशुविशेषे रूढोऽयम् । फलेग्रहिः । ग्रहेरिनिति । ननु 'गृहू ग्रहणे' इति ऋदुपधादित्यर्थः । मुमागम इति । आत्मन्शब्दस्य

दरकुक्षिष्विति पेठुः । 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इति मुरारिः । २९४१ **एजेः खश् ३।२।२८॥** ण्यन्तादेजेः खश् स्यात् । २९४२ **अरुर्द्विषदजन्तस्य मुम् ६।३।६७॥** अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते उत्तरपदे, न त्वव्ययस्य । शित्वाच्छबादिः : जनमेजयतीति जनमेजयः । 'वातशुनीतिलशर्धेष्वज-धेट्तुदजहातिभ्यः खशः उपसंख्यानम्' ( वा २००५ ) वातमजा मृगाः । २९४३ **खित्यनव्ययस्य ६।३।६६॥** खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात् । ततो मुम् । शुनिन्धयः । तिलन्तुदः । शर्धञ्जहा माषाः । शर्धोऽपानशब्दस्तं जहतीति विग्रहः । जहातिरन्तर्भावितण्यर्थः । २९४४ **नासिकास्तनयोर्ध्माधेटोः ३।२।२९ ॥** अत्र वार्तिकम्-'स्तने धेटो नासिकायां ध्मश्चेति वाच्यम्' ( वा २००६-७ )। स्तनं धयतीति स्तनन्धयः । धेटष्टित्वात्स्तनन्धयी । नासिकन्धमः । नासिकन्धयः ।

---

नलोपे कृते अकारादुपरि मुमित्यर्थः । चकारोऽनुक्तसमुच्चयार्थं इति मत्वा आह—चारुकुक्षिम्भरिरिति । भाष्ये तु 'भृञः कुक्ष्यात्मनोर्मुम् चेति वक्तव्यम्' इति स्थितम् । 'स्यादवन्ध्यः फलेग्रहिः' इति वृक्षपर्याये अमरः । 'उभावात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके' इति विशेष्यनिघ्नवर्गे । उदरम्भरिशब्दं समर्थयितुमाह—चान्द्रास्त्विति । एजेः खश् । एजेरिति ण्यन्तस्य एजृधातोर्ग्रहणम् । न त्विका निर्देशः, व्याख्यानादिति भावः । खकारशकारावितौ । कर्मण्युपपदे इत्यपि ज्ञेयम् । अरुर्द्विषत् । अरुष् , द्विषत् , अजन्त एषां समाहारद्वन्द्वात् षष्ठी । 'अलुगुत्तरपदे' इत्यधिकारात् उत्तरपदे इति लभ्यते । 'खित्यनव्ययस्य' इत्यतः खितीत्यनुवृत्तम् । खितः प्रत्ययत्वात्तदन्तविधिः । तदाह—खिदन्ते उत्तरपदे इति । जनमेजय इति । जनान् एजयतीति विग्रहः । खशः शित्वात्सार्वधातुकत्वं । शप् , गुणायादेशौ, पररूपम् , सुपो लुकि, मुम् । वातशुनीति । वार्तिकमिदम् । वात, शुनी, तिल, शर्ध एषां द्वन्द्वात्सप्तमी । अज, धेट् , तुद, जहाति एषां द्वन्द्वात्पञ्चमी । यथासङ्ख्यमन्वयः । वातमजा इति । वातमजन्तीति विग्रहः । सुपो लुकि मुम् । अथ शुनीं धयतीति विग्रहे शुनिशब्दे उपपदे धेटः खशि शपि अयादेशे पररूपे शुनीधय इति स्थिते आह—खित्यनव्ययस्य । ह्रस्वः स्यादिति । 'इको ह्रस्वोऽङ्यो गालवस्य' इत्यतः तदनुवृत्तेरिति भावः । अत्र ह्रस्वश्रुत्या अच इत्युपस्थितं द्रष्टव्यम् । ततो मुमिति । पूर्वं ह्रस्वे कृते ततो मुमित्यर्थः । पूर्वं मुमि कृते तु अजन्तत्वाऽभावाद्ध्रस्वो न स्यादिति भावः । शर्धञ्जहा माषा इति । भाष्ये तु 'मृगा' इति पाठः । शर्धः अपानद्वारे स्थितः शब्द इति माधवादयः । अन्तर्भावितेति । तथाच शर्धं हापयन्तीति विग्रहः फलितः । भाष्ये तु 'वातशुनी' इति वार्तिके गर्धेष्विति पठितम् । नासिका । नासिका, स्तन अनयोः द्वन्द्वात्सप्तमी । ध्मा, धेट् अनयोः द्वन्द्वात्पञ्चम्यर्थे षष्ठी । 'ख'शिति शेषः । यथासङ्ख्यमन्वये प्राप्ते आह—अत्र वार्तिकमिति । धेटष्टित्वादिति । यद्यपि 'टिड्ढ' इत्यत्र टिदाद्यन्तं यददन्तं प्रातिपदिकमिति व्याख्या-

**२९४५ नाडीमुष्टयोश्च ३।२।३०॥** एतयोरुपपदयोः कर्मणोर्ध्माधेटोः खश् स्यात् । 'यथासंख्यं नेष्यते' । नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः । 'घटीखारीखरीषूपसंख्यानम्' (वा २००८) । घटिन्धमः । घटिन्धय इत्यादि । खारी परिमाणविशेषः । खरी गर्दभी । **२९४६ उदि कूले रुजिवहोः ३।२।३१ ॥** उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजतीति कूलमुद्रुजः, कूलमुद्वहः । **२९४७ वहाभ्रे लिहः ३।२।३२॥** वहः स्कन्धस्तं लेढीति वहंलिहो गौः । अदादित्वाच्छपो लुक् । खशो ङित्वान्न गुणः । अभ्रंलिहो वायुः । **२९४८ परिमाणे पचः ३।२।३३॥** प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः । **२९४९ मितनखे च ३।२।३४॥** मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । पचिरत्र तापवाची । **२९५० विध्वरुषोस्तुदः ३।२।३५॥** विधुन्तुदः । मुमि कृते संयोगान्तस्य लोपः । अरुन्तुदः । **२९५१ असूर्यललाटयोर्दृशितपोः ३।२।३६ ॥** असूर्यमित्यसमर्थसमासः । दृशिना नञः संबन्धात् । सूर्यं न पश्यन्तीत्यसूर्यम्पश्या राजदाराः । ललाटन्तपः सूर्यः । **२९५२ उग्रम्पश्येरम्मदपाणिन्धमाश्च ३।२।३७ ॥** एते निपा-

---

**तम् , तथापि टित्त्वस्यावयवे अचरितार्थत्वात् ङीबिति हरदत्तः । अत्र यद्वक्तव्यं तत् 'पाघ्राध्माधेड्दृशः शः' इत्यत्रोक्तम् ।** नासिकन्धम इति । **ह्रस्वे कृते मुम् । नासिकायाः ध्मश्चेति चकाराद्धेटश्चेति लभ्यते । तस्योदाहरति—**नासिकन्धय इति । नाडीमुष्ट्योश्च। यथासङ्ख्यं नेष्यते इति । **इदं तु भाष्ये स्पष्टम् ।** घटीखारीति । **इत्यादि स्पष्टम् ।** उदि कूले । **उदीति दिग्योगपञ्चम्यर्थे सप्तमी । रुजिवहोरिति पञ्चम्यर्थे षष्ठी ।'रुजो भङ्गे' तुदादिः । अत्र रुजेः सकर्मकत्वात् कर्मण्युपपदे इति लब्धम् । तेन कूलं विशेष्यते । नतु उच्छब्दः, तस्य असत्त्ववाचित्वात् । तदाह—**उत्पूर्वाभ्यामित्यादि। कूलमुद्रुज इति । **सुपो लुकि मुमिति भावः ।** वहाभ्रे लिहः। **वहे अभ्रे च कर्मण्युपपदे लिहः खशित्यर्थः । वहशब्दस्य विवरणम्-**स्कन्ध इति । शपो लुगिति । **खशः शित्त्वेन सार्वधातुकत्वात् कृतस्य शपो लुगित्यर्थः ।** परिमाणे पचः । **परिमाणं प्रस्थादि । तस्मिन् कर्मण्युपपदे पचेः खशित्यर्थः ।** खारिम्पच इति । **'खित्यनव्ययस्य' इति ह्रस्वः । मुम् ।** मितनखे च । **मिते नखे च कर्मण्युपपदे पचेः खशित्यर्थः । नखानां विक्लित्त्यसम्भवादाह—**पचिरत्रेति । विध्वरुषोस्तुदः । **विधु, अरुस् , अनयोः कर्मणोरुपपदयोः तुदः खशित्यर्थः ।** विधुन्तुद इति । **विधुश्चन्द्रः तं तुदतीति विग्रहः । राहुरित्यर्थः । अरुसशब्दे उकारादुपरि मुमि कृते सकारस्य संयोगान्तलोप इत्यर्थः ।** अरुन्तुद इति । **अरुर्मर्म, तत्तुदतीति विग्रहः ।** असूर्यललाट । **दृशितपोरिति पञ्चम्यर्थे षष्ठी । असूर्ये ललाटे च कर्मण्युपपदे दृशेस्तपेश्च खशित्यर्थः ।** असूर्यमितीति । **असूर्यंपश्या इत्युदाहरणे असूर्यमित्यसमर्थसमासः सौत्र इत्यर्थः । कुतोऽसामर्थ्यमित्यत आह—**दृशिनेति । **सूर्यं न पश्यन्तीत्यर्थे नञो दृशिनाऽन्वि-**

त्यन्ते । उग्रमिति क्रियाविशेषणं तस्मिन्नुपपदे दृशेः खश् । उग्रं पश्यतीत्युग्रम्पश्यः । इरोदकं तेन माद्यति दीप्यतेऽबिन्धनत्वादिति इरम्मदो मेघज्योतिः । इह निपातनाच्छ्यन् । पाणयो ध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा । अन्धकारावृत इत्यर्थः । तत्र हि सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते । **२९५३ प्रियवशे वदः खच् ३।२।३८॥** प्रियंवदः । वशंवदः । 'गमेः सुपि वाच्यः' (वा २००९)। असंज्ञार्थमिदम् । मितङ्गमो हस्ती । 'विहायसो विह इति वाच्यम्' (वा २०१०)। 'खच्च डिद्वा वाच्यः' (वा २०११)। विहङ्गः । विहङ्गमः । भुजङ्गः । भुजङ्गमः । **२९५४ द्विषत्परयोस्तापेः ३।२।३९** । खच्स्यात् । **२९५५ खचि ह्रस्वः ६।४।९४॥** खच्परे णौ उपधाया ह्रस्वः स्यात् । द्विषन्तं परं वा तापयतीति द्विषन्तपः, परन्तपः । घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या । तेनेह न । द्विषतीं ताप्य-

---

**त्वेन सूर्यशब्देनाऽन्वयाभावादित्यर्थः ।** ललाटन्तपः सूर्य इति । **ललाटं तपतीति विग्रहः । सूर्यं पश्यतो ललाटस्य अवश्यं तापादिति भावः ।** उग्रम्पश्य । **उग्रम्पश्य, इरम्मद, पाणिन्धम एषां द्वन्द्वः ।** उग्रम्पश्य इति । **खशि शप्, पश्यादेशः । इराशब्दस्य विवरणम्**—उदकमिति । इरम्मद इति । **'खित्यनव्ययस्य' इति ह्रस्वः । मदेर्दैवादिकत्वात् श्यनमाशङ्क्य आह**—निपातनाच्छ्यन्नेति । पाणिन्धम इति । **शपि 'पाघ्रा' इति धमादेशः ।** प्रियवशे । **प्रिये वशे च कर्मण्युपपदे वदधातोः खजित्यर्थः । खशि प्रकृते खज्विधेरुत्तरसूत्रे प्रयोजनं वक्ष्यते ।** गमेः सुपि वाच्य इति । **'ख'जिति शेषः । ननु संज्ञायामित्यनुवृत्तौ 'गमश्च' इति वक्ष्यमाणसूत्रेणैव सिद्धे किमर्थमिदं वार्तिकमित्यत आह**—असंज्ञार्थमिदमिति । विहायस इति । **विहायश्शब्दः आकाशे वर्तते । तस्मिन्नुपपदे गमेः खच् । 'गमश्च' इति वक्ष्यमाणसूत्रेण पूर्ववार्तिकेन वा सिद्धः 'खच्' इत्यनूद्यते । प्रकृते विहायश्शब्दस्य विहादेशो वाच्यः, स च खच् डिद्वा वाच्य इत्यर्थः ।** विहङ्ग इति । **डित्पक्षे तत्सामर्थ्यादभस्यापि टेर्लोपः ।** विहङ्गम इति । **विहायसा गच्छतीति विग्रहः ।** भुजङ्गम इति । **भुजैर्गच्छतीति विग्रहः ।** द्विषत्परयोः । **'तप दाहे' चुरादिः, 'तप सन्तापे' भ्वादिः । द्वयोरपि ण्यन्तयोस्तापेरिति निर्देशः ।** खच् स्यादिति । **द्विषत्, पर अनयोः कर्मणोरुपपदयोः तापेः खजित्यर्थः । द्विषत् तापि अ इति स्थिते आह**—खचि ह्रस्वः । **'दोषो णौ' इत्यतो णाविति 'ऊदुपधायाः' इत्यत उपधाया इति चानुवर्तते । तदाह**—खच्परे णाविति । **खशि प्रकृते खचो विधिरिह ह्रस्वार्थः णिलोपार्थश्च । खशि तु तदुभयं न स्यात्, खशः शित्त्वेन सार्वधातुकतया णिलोपाऽसम्भवात् । न च इहैव सूत्रे खज्विधीयतां, पूर्वसूत्रे खशेवाऽनुवर्ततामिति वाच्यम्, अन्यतोऽपि विधानार्थत्वात् । एवं च 'गमेः सुपि' इति वार्तिकम् एतल्लभ्यार्थकथनपरमेवेत्याहुः ।** द्विषन्तप इति । **'अरुर्द्विषत्' इति तकारात्प्राक् मुम् ।** परन्तप इति । **परः शत्रुः । ननु लिङ्गविशिष्टपरिभाषया द्विषतीशब्देऽप्युपपदे तापेः खचि 'द्विषतीतप' इति स्यात् । 'द्विषतीताप' इत्य-**

तीति द्विषती तापः । **२९५६ वाचि यमो व्रते ३।२।४०॥** वाक्छब्दे उपपदे यमेः खच्स्याद् व्रते गम्ये । **२९५७ वाचंयमपुरन्दरौ च ६।३।६९॥** वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः । **२९५८ पूः सर्वयोर्दारिसहोः ३।२।४१॥** पुरं दारयतीति पुरन्दरः । सर्वंसहः । सहिग्रहणमसंज्ञार्थम् । 'भगे च दारेः' ( वा २०१३ ) इति काशिका । बाहुलकेन लब्धमिदमित्याहुः । भगं दारयतीति भगन्दरः । **२९५९ सर्वकूलाभ्रकरीषेषु कषः ३।२।४२॥** सर्वंकषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषङ्कषा वात्या । **२९६० मेघर्तिभयेषु कृञः ३।२।४३॥** मेघङ्करः । ऋतिङ्करः । भयङ्करः । भयशब्देन तदन्तविधिः । अभयङ्करः । **२९६१ क्षेमप्रियमद्रेऽण् च ३।२।४४॥** एषु कृञोऽण्स्यात् । चात्खच् । क्षेमङ्करः । क्षेमकारः । प्रियङ्करः । प्रियकारः । मद्रङ्करः । मद्रकारः । वेति वाच्येऽण्ग्रहणं हेत्वादिषु टो मा भूदिति । कथं तर्हि 'अल्पारम्भः क्षेमकरः' इति । कर्मणः शेषत्वविवक्षायां पचाद्यच् । **२९६२ आशिते भुवः करणभावयोः ३।२।४५॥** आशितशब्द उपपदे भवतेः खच् ।

---

णन्तं न स्यादित्यत आह—घटघटीति । 'शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसङ्ख्यानम्' इत्यत्र घटग्रहणेनैव लिङ्गविशिष्टपरिभाषया घटीशब्दस्यापि सिद्धे पुनर्घटीग्रहणात् लिङ्गविशिष्टपरिभाषा अनित्येति विज्ञायते इत्यर्थः । 'उपपदविधौ लिङ्गविशिष्टपरिभाषा ने'ति कर्मण्यण्सूत्रे भाष्यात्प्रतीयतेऽपि द्रष्टव्यम् । वाचि यमो व्रते । इत्यादि वक्तव्यम् । वाचंयमपुरन्दरौ च । वाक्पुरोरिति । वाचं यच्छतीति, पुरं दारयतीति च विग्रहे यमेर्दारेश्च खच् । सुपो लुकि वाच् यम, पुर् दार, इति स्थिते वाक्पुरोरमन्तत्वं निपात्यते इत्यर्थः । 'अरुर्द्विषदजन्तस्य' इति मुमस्तु न प्रसक्तिः । पूःसर्वयोर्दारिसहोः । दारिसहोरिति पञ्चम्यर्थे षष्ठी । पुर् शब्दे सर्वशब्दे च कर्मण्युपपदे दारेः सहेश्च खजित्यर्थः । यथासङ्ख्यमन्वयः । 'दारी'ति ण्यन्तस्य ग्रहणम् । पुरन्दर इति । पुरं दारयतीति विग्रहे दारेः खचि णिलोपे 'खचि ह्रस्वः' इत्युपधाह्रस्वे सुपो लुकि 'वाचंयमपुरन्दरौ च' इति निपातनादमन्तत्वम् । ननु 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' इत्येव सिद्धे सहधातोरिह ग्रहणं व्यर्थमित्यत आह—असंज्ञार्थमिति। भगे चेति। इत्यादि स्पष्टम् । ऋतिङ्कर इति । ऋतिर्गमनम् । अभयङ्करशब्दं साधयितुमाह—भयशब्देन तदन्तविधिरिति । इदं च 'येन विधिः' इत्यत्र भाष्ये स्पष्टम् । क्षेमप्रिय । ननु 'क्षेमप्रियमद्रे वा' इति खचो विकल्पविधौ खजभावे 'कर्मण्यण्' इत्यस्य सिद्धत्वादण्ग्रहणं व्यर्थमित्यत आह—वेति वाच्ये इति । हेत्वादिष्विति । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति विहितः इत्यर्थः । कथं तर्हीति । 'कृञो हेतु' इत्यस्य अणा बाधात् क्षेमकार इति भवितव्यम् । क्वचित्तु मुम् स्यादित्याक्षेपः, समाधत्ते—कर्मणः शेषत्वेति । तथाच कर्मोपप-

आशितो भवत्यनेनाशितम्भव ओदनः। आशितस्य भवनमाशितम्भवः। **२९६३ संज्ञायां भृतॄवृजिधारिसहितपिदमः ३।२।४६॥** विश्वं बिभर्तीति विश्वम्भरः। विश्वम्भरा। रथन्तरं साम। इह रथेन तरतीति व्युत्पत्तिमात्रं, न त्ववयवार्थानुगमः। पतिंवरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः। शत्रुंसहः। शत्रुन्तपः। अरिन्दमः। दमिः शमनायाम्, तेन सकर्मक इत्युक्तम्। मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः। **२९६४ गमश्च ३।२।४७॥** सुतङ्गमः। **२९६५ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ३।२।४८॥** संज्ञायामिति निवृत्तम्। एषु गमेर्डः स्यात्। डित्वसामर्थ्यादभस्यापि टेर्लोपः। अन्तं गच्छतीत्यन्तगः इत्यादि। 'सर्वत्रपन्नयोरुपसंख्यानम्' (वा २०१४)। सर्वत्रगः। पन्नं पतितं गच्छतीति पन्नगः। पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम्। 'उरसो लोपश्च' (वा २०१५) उरसा गच्छतीत्युरगः। 'सुदुरोरधिकरणे' (वा २०१६)। सुखेन गच्छत्यत्र सुगः। दुर्गः। 'अन्यत्रापि दृश्यत इति वक्तव्यम्' (वा २०१८)। ग्रामगः। 'डे च विहायसो विहादेशो वक्तव्यः' (वा २०१२)। विहगः। **२९६६ आशि-**

दाऽभावात् अणभावे चाऽजिति भावः। क्षेमङ्करीति तु गौरादित्वात् ङीषित्याहुः। आशिते। करणे उदाहरति—आशितो भवत्यनेनेति। भावे उदाहरति—आशितस्य भवनमिति। संज्ञायाम्। खजिति शेषः। भृ, तॄ, वृ, जि, धारि, सहि, तपि, दमि एषामष्टानां समाहारद्वन्द्वात्पञ्चमी। विश्वम्भर इति। विष्णोरियं संज्ञा। विश्वम्भरेति। पृथिव्याः संज्ञा इयम्। रथन्तरमिति। तॄधातोः खच्। रथेन तरितृत्वस्य सामविशेषे असम्भवादाह—इहेति। वृधातोरुदाहरति—पतिंवरेति। शत्रुञ्जय इति। जिधातोः खच्। 'धारी'ति ण्यन्तग्रहणं, तस्योदाहरति—युगन्धर इति। युगं धारयतीति विग्रहः। 'खचि ह्रस्वः' इत्युपधाह्रस्वः, णिलोपः। शत्रुंसह इति। शत्रून् सहते इति विग्रहः। इत्यादि पूर्ववत्। एवमग्रेऽपि। शत्रुन्तप इति। शत्रून् तपतीति विग्रहः। अरिन्दम इति। अरिषु निग्रहविषये दाम्यतीत्यर्थः। दमिः शमनायामिति। 'दमु उपशमे' इति धातुपाठे उपशमशब्दे शमेर्ण्यन्तात् घञ्। तथाच दाम्यतीत्यस्य उपशमयतीत्यर्थाश्रयणात् सकर्मकत्वमिति माधवादिमते सकर्मकोऽयमित्यर्थः। मतान्तरे त्विति। 'दमु उपशमे' इत्युपशमार्थस्य दमेरकर्मकत्वमिति हरदत्तादिभिरुक्तमित्यर्थः। गमश्च। 'संज्ञायां खजिति' शेषः। अन्तात्यन्त। इत्यादि व्यक्तम्। सर्वत्रपन्नयोरिति। सर्वत्रशब्दे, पन्नशब्दे चोपपदे गमेर्डस्योपसंख्यानमित्यर्थः। उरस इति। उरसि उपपदे गमेर्डः उरश्शब्दान्त्यस्य लोपश्चेति वक्तव्यमित्यर्थः। सुदुरोरिति। सु, दुर् अनयोरुपपदयोर्गमेर्डः स्यात् अधिकरणे वाच्ये इत्यर्थः। अन्यत्रापि दृश्यत इति। अन्येष्वप्युपपदेषु अन्येभ्योऽपि धातुभ्यः डो दृश्यते इत्यर्थः। अनेनैव सिद्धे 'सर्वत्रपन्नयोः' इत्यादि प्रपञ्चार्थमेव।

**षि हनः ३।२।४९॥** शत्रुं वध्याच्छत्रुहः। आशिषि किम्। शत्रुघातः। 'दारावाहनोऽणन्तस्य च टः संज्ञायाम्' (वा २०१९)। दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः। दार्वाघाटः। 'चारौ वा' (वा २०२०) चार्वाघाटः। चार्वाघातः। 'कर्मणि समि च' (वा २०२१)। कर्मण्युपपदे संपूर्वाद्धन्तेरुक्तं वेत्यर्थः। वर्णान्संहन्तीति वर्णसंघाटः। पदसंघाटः। वर्णसंघातः। पदसंघातः। **२९६७ अपे क्लेशतमसोः ३।२।५०॥** अपपूर्वाद्धन्तेर्डः स्यात्। अनाशीरर्थमिदम्। क्लेशापहः पुत्रः। तमोऽपहः सूर्यः। **२९६८ कुमारशीर्षयोर्णिनिः ३।२।५१॥** कुमारघाती। शिरसः शीर्षभावो निपात्यते। शीर्षघाती। **२९६९ लक्षणे जायापत्योष्टक् ३।२।५२॥** हन्तेष्टक्स्याल्लक्षणवति कर्तरि। जायाघ्नो ना। पतिघ्नी स्त्री। **२९७० अमनुष्यकर्तृके च ३।२।५३॥** जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। अमनुष्य-इति किम्। आखुघातः शूद्रः। अथ कथं बलभद्रः प्रलम्बघ्नः, शत्रुघ्नः, कृतघ्नः इत्यादि मूलविभुजादित्वात्सिद्धम्। चोरघातो नगरघातो हस्तीति तु बाहुलकादणि। २९७१

---

एवं च 'सप्तम्यां जनेर्डः' इत्यत्रापि 'अन्येष्वपि दृश्यते' इति प्रपञ्चार्थमेव। डे चेति। 'विहायसो विह' इत्युक्तस्य खविषयत्वादिदं वचनम्। विहग इति। खचि तु मुमि विहङ्गम इति रूपम्। आशिषि हनः। कर्मण्युपपदे हन्तेर्डः स्यात् आशिषि गम्यायामित्यर्थः। शत्रुघात इति। आशीरभावाड्डाऽभावे अण्। 'हनस्त' इति तत्वम्। दारावाहन इति। वार्तिकमिदम्। दारौ, आहनः, अण्, अन्तस्येति च्छेदः। अणसंनियोगेन टत्वविधानार्थमिदम्। चारौ वेति। वार्तिकमिदम्। चारुशब्दे उपपदे आङ्पूर्वाद्धन्तेः अण्, अन्तस्य टः वा स्यादित्यर्थः। कर्मणि समि चेति। वार्तिकमिदम्। उक्तं वेति। अण्, अन्तस्य टः इत्यर्थः। चारावित्यस्यानुवृत्तिनिवृत्तये कर्मणीत्युक्तिः। अपे क्लेशतमसोः। 'आशिषि हनः' इत्येव सिद्धे किमर्थमिदमित्यत आह—अनाशीरर्थमिति। कुमारशीर्षयोर्णिनिः। अनयोरुपपदयोः हन्तेर्णिनिः स्यादित्यर्थः। णकारादिकार उच्चारणार्थः। लक्षणे। लक्षणवतीति। सूत्रे लक्षणशब्दः अर्शआद्यजन्त इति भावः। जायाघ्नो नेति। जायाहननसूचकलक्षणवान् पुरुष इत्यर्थः। 'गमहन' इत्युपधालोपः। पतिघ्नी स्त्रीति। पतिहननसूचकलक्षणवतीत्यर्थः। टित्वात् ङीप्। अमनुष्य। अमनुष्यकर्तृके धात्वर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टगित्यर्थः। जायाघ्नस्तिलकालक इति। तिलाकृतिकृष्णबिन्दुरित्यर्थः। पूर्वसूत्रस्य लक्षणवति कर्तरि प्रवृत्तिरिति भावः। अथ कथमिति। प्रलम्बघ्नादौ हन्तेर्मनुष्यकर्तृकतया टकोऽसम्भवादित्याक्षेपः। समाधत्ते—मूलविभुजादित्वात्सिद्धमिति। कप्रत्ययेनेति भावः। ननु 'चोरघातो हस्ती' त्यादि कथम्, अमनुष्यकर्तृकत्वेन हन्तेष्टको दुर्वारत्वादित्यत आह—चोरघात इत्यादीति। बाहुलकाद-

**शक्तौ हस्तिकवाटयोः ३।२।५४॥** हन्तेष्टक्स्याच्छक्तौ द्योत्यायाम्। मनुष्यकर्तृकार्थमिदम्। हस्तिघ्नो ना। कवाटघ्नश्चोरः। कपाटेति पाठान्तरम्। **२९७२ पाणिघताडघौ शिल्पिनि ३।२।५५॥** हन्तेष्टक्टिलोपो घत्वं च निपात्यते पाणिताडयोरुपपदयोः। पाणिघः। ताडघः। शिल्पिनि किम्। पाणिघातः। ताडघातः। 'राजघ उपसंख्यानम्' (वा २०२२)। राजानं हन्ति राजघः। **२९७३ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ३।२।५६॥** एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन्स्यात्। अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम्। अच्वौ किम्। आढ्यीकुर्वन्त्यनेन। इह प्रतिषेधसामर्थ्याल्ल्युडपि नेति काशिका। भाष्यमते तु ल्युट् स्यादेव। अच्वावित्युत्तरार्थम्। **२९७४ कर्तरि भुवः खिष्णुच्खुकञौ ३।२।५७॥** आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः। अनाढ्यः आढ्यो भवतीति आढ्यम्भविष्णुः। आढ्यम्भावुकः।

---

णीति। **'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादपि समाधेयमिति भावः।** शक्तौ हस्तिकवाटयोः। हस्तिघ्न इति। **हस्तिनं हन्तुं शक्त इत्यर्थः। एवं कवाटघ्नः।** पाणिघताडघौ। **पाणिना हन्तीति पाणिघः। ताडः ताडनं, तेन हन्तीति ताडघः। मल्लादिः।** राजघ उपसंख्यानमिति। **राजघशब्दे उक्तनिपातनस्य उपसंख्यानमित्यर्थः।** आढ्यसुभग। **आढ्य, सुभग, स्थूल, पलित, नग्न, अन्ध, प्रिय एषां समानां द्वन्द्वात्सप्तमी।** ख्युन् स्यादिति। **'करणे वाच्ये' इति शेषः। 'करणाऽधिकरणयोश्च' इति ल्युडपवादोऽयम्। 'कर्तरी'ति तु अत्र न सम्बध्यते।** आढ्यङ्करणमिति। **'राजाद्यनुवर्तन'मिति शेषः। कृञः ख्युन् अनादेशः, 'अरुर्द्विषदजन्तस्य' इति मुम्। 'सुभगङ्करण'मित्याद्युदाहार्यम्।** आढ्यीकुर्वन्त्यनेनेति। **अत्र च्विप्रत्ययसत्त्वान्न ख्युनिति भावः। ननु ल्युडपवादभूतख्युनभावपक्षे उत्सर्गभूतो ल्युट् कुतो नेत्यत आह—**इहेति। **यदि ल्युडपवादख्युनभावे उत्सर्गभूतो ल्युट् स्यात्, तदा ख्युन्विधिरनर्थकः स्यात्। च्व्यन्ते उपपदे ख्युन्ल्युटोः रूपे विशेषाऽभावात्। न च ख्युनि मुम्, ल्युटि तदभावः इत्यस्ति विशेष इति वाच्यम्, च्विप्रत्ययान्तस्याव्ययत्वेन ख्युनि सत्यपि मुमभावात् 'अरुर्द्विषदजन्तस्य' इत्यत्राऽनव्ययस्येत्यनुवृत्तेः। एवञ्च 'अच्वौ' इति च्व्यन्ते उपपदे ख्युनः प्रतिषेधसामर्थ्यात् ख्युनभावे ल्युडपि नेति विज्ञायत इति काशिकामतमित्यर्थः। एवञ्च 'अच्वौ' इति च्व्यन्ते उपपदे ख्युन्प्रतिषेधः ख्युनभावपक्षे ल्युडभावार्थ इति स्थितम्।** भाष्यमते त्विति। **भाष्ये 'ख्युनि च्विप्रतिषेधानर्थक्यम्। ल्युट्ख्युनोरविशेषात्। मुमर्थमिति चेन्न, अव्ययत्वात्' इत्यादिसन्दर्भेण अच्विग्रहणं ख्युन्विधौ प्रत्याख्याय 'अच्वौ' इत्युत्तरार्थमित्युक्तम्। तन्मते तु च्व्यन्ते उपपदे ख्युना मुक्ते ल्युट् स्यादेवेत्यर्थः।** कर्तरि भुवः। **खिष्णुचि खचावितौ। खुकञि खञावितौ।** आढ्यम्भविष्णुरिति। **अनाढ्यः आढ्यो भवतीति विग्रहः।** आढ्यम्भावुक इति। **ञित्त्वाद्वृद्धिः। करणग्रहणाऽननुवृत्तिनि-**

'स्पृशोऽनुदके क्विन्' ( सू ४३२ )। घृतस्पृक्। कर्मणीति निवृत्तम्। मन्त्रेण स्पृशतीति मन्त्रस्पृक्। 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' ( सू ३७३ ) व्याख्यातम्। 'त्यदादिषु दृशोऽनालोचने कञ्च' ( सू ४२९ )। 'समानान्ययोश्चेति वाच्यम्' ( वा २०२९ ) सदृक्। सदृशः। अन्यादृक्। अन्यादृशः। 'क्सोऽपि वाच्यः' ( वा २०३० )। तादृक्षः। सदृक्षः। अन्यादृक्षः। **२९७५ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ३।२।६१।** एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे। द्युसत्। उपनिषत्। अण्डसूः। प्रसूः। मित्रद्विट्। प्रद्विट्। मित्रध्रुक्। प्रध्रुक्। गोधुक्। प्रधुक्। अश्वयुक्। प्रयुक्। वेदवित्। निविदित्यादि। 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' ( वा ५०६४ )। अग्रणीः। ग्रामणीः। **२९७६ भजो ण्विः ३।२।६२॥** सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात्। अंशभाक्। प्रभाक्। **२९७७ अदोऽनन्ने ३।२।६८॥** विट् स्यात्। आममत्ति आमात्। सस्यात्। अनन्ने किम्। अन्नादः **२९७८ क्रव्ये**

---

वृत्तये कर्तृग्रहणम्। क्विन्नुचि इकारस्तु ऽर्थ एव, इटा सिद्धेः। अच्वौ किम्। आढ्यीभविता। स्पृशोऽनुदके क्विन्निति। व्याख्यातं हलन्ताधिकारे। निवृत्तमिति। अत्र व्याख्यानमेव शरणम्। समानान्ययोश्चेति। अनयोरुपपदयोः दृशः क्विन्कञावित्यर्थः। सदृक् सदृश इति। समानो दृश्यते इति न विग्रहः, कर्तर्येव क्विन्विधानात्। किन्तु कर्मकर्तरि क्विन्कञौ। समानः पश्यतीति विग्रहः। समानत्वेन ज्ञानविषयो भवतीत्यर्थ इति भाष्ये स्पष्टम्। 'दृग्दृशवतुषु' इति समानस्य सभावविकल्पः। तत्र 'विभाषोदरे' इत्यतः विभाषानुवृत्तेः 'समानदृक् सदृक् समानदृशः सदृशः' इति भाष्याच्च। अन्यादृगिति। 'आ सर्वनाम्नः' इत्यात्वम्। क्सोऽपीति। त्यदादिषु समानान्ययोश्च दृशेः क्सोऽपि वाच्य इत्यर्थः। सत्सूद्विष। सद्, सू, द्विष, द्रुह दुह, युज, विद, भिद, छिद, जि, नी, राज् एषां द्वन्द्वात्पञ्चम्यर्थे षष्ठी। 'अनुपसर्गे' इत्यस्य निवृत्त्यैव सिद्धे 'उपसर्गेऽपी'ति वचनम् अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति ज्ञापनार्थम्। तेन 'वदः सुपि क्यप् च' इति विधिरुपसर्गे न भवतीति भाष्ये स्पष्टम्। द्युसदिति। दिवि सीदतीति विग्रहः। 'सात्पदाद्योः' इति न षत्वम्। 'पूर्वपदात्' इति षत्वं तु न भवति, तस्य छान्दसत्वात् 'आदितेया दिविषदः' इत्यत्र सुषामादित्वात् षत्वमित्याहुः। उपनिषदिति। 'सदिरप्रतेः' इति षत्वम्। इत्यादीति। काष्ठभित्, रज्जुच्छित्। शत्रुजित्, अत्र 'ह्रस्वस्य पिति' इति तुक्। सेनानीः, विराट्। अग्रग्रामाभ्यामिति। असमानपदत्वादप्राप्ते णत्वे वचनम्। भजो ण्विः। सुपि उपसर्गे चोपपदे भजेर्ण्विरित्यर्थः। अंशभागिति। णित्त्वादुपधावृद्धिः। अदोऽनन्ने। विट् स्यादिति। शेषपूरणमिदम्। अन्नादन्यस्मिन्ने सुप्युपपदे अदेर्विट् स्यादिति फलितम्। 'जनसनखनक्रमगमो विट्' इति छान्दससूत्राद्विडित्यनुवर्तते। सस्यादिति। सस्यमत्तीति विग्रहः।

च ३।२।६९॥ अदेर्विट् । पूर्वेण सिद्धे वचनमण्बाधनार्थम् । क्रव्यात् । आममांसभक्षकः । कथं तर्हि 'क्रव्यादोऽस्रप आशरः' इति । पक्वमांसशब्दे उपपदेऽण् । उपपदस्य क्रव्यादेशः, पृषोदरादित्वात् । २९७९ दुहः कब्घश्च ३।२।७०॥ कामदुघा । २९८० अन्येभ्योऽपि दृश्यन्ते ३।२।७५॥ छन्दसीति निवृत्तम् । मनिन्, क्वनिप्, वनिप्, विच् एते प्रत्ययाः धातोः स्युः । २९८१ नेड्वशि कृति ७।२।८॥ वशादेः कृत इण्न स्यात् । शृ, सुशर्मा । प्रातरित्वा । २९८२ विड्वनोरनुनासिकस्याऽऽत् ६।४।४१॥ अनुनासिकस्य आत्स्यात् । विजायत इति विजावा । ओण्, अवावा । विच्, रोट् । रेट् । सुगण् । २९८३ क्विप्च ३।२।७६॥ अयमपि दृश्यते । 'सत्सूद्विष—' ( सू २९७५ ) इति त्वस्यैव प्रपञ्चः । उखास्रत् । पर्णध्वत् । वाहभ्रट् । २९८४ अन्तः ८।४।२०॥ पदान्त-

---

अणाद इति । कर्मण्यण् । क्रव्ये च । अदेर्विडिति । शेषपूरणमिदम् । अण्बाधनार्थमिति । क्रव्ये अदेर्विटैव न त्वणित्यर्थलाभादिति भावः । कथं तर्हीति । 'क्रव्ये उपपदे अदेर्विटे-वे'ति नियमादणोऽसम्भवादित्याक्षेपः । समाधत्ते—पक्वमांसशब्द इति । तर्हि 'पक्वमांसाद' इति स्यादित्यत आह—उपपदस्य क्रव्यादेश इति । कुत इत्यत आह—पृषोदरादित्वादिति । दुहः कब्घश्च । सुप्युपपदे दुहेः कप्स्यात्, प्रकृतेर्घश्चान्तादेश इत्यर्थः । कामदुघेति । 'धेनुरि'ति शेषः । काममपेक्षितं दुग्धे इति विग्रहः । अन्येभ्योऽपि दृश्यन्ते । 'विजुपे छन्दसि' 'आतो मनिन्क्वनिब्वनिपश्च' इत्यधिकारे इदं सूत्रम् । निवृत्तमिति । व्याख्यानादिति भावः । मनिनि अन्त्यो नकार इत्, इकार उच्चारणार्थः । क्वनिपि वनिपि च पकार इत्, इकार उच्चारणार्थः । विचि चकार इत् इकार उच्चारणार्थः। नेड्वशि कृति । षष्ठ्यर्थे सप्तम्यौ । वशा कृद्विशेष्यते । तदादिविधिः । तदाह—वशादेरिति । सुशर्मेति । शृधातोर्मनिन् । प्रातरित्वेति । इण्धातोः क्वनिप् । विड्वनोरनुनासिकस्याऽऽत् । विड्वनोरिति सप्तमी । अनुनासिकस्य—आदिति छेदः । विजावेति । जनेर्वनिप् । जनेर्नकारस्य आकारः । सवर्णदीर्घः । अवावेति । ओणेर्वनिप् । णकारस्य आकारः अवादेशः । विजिति । 'उद्वाह्यते' इति शेषः । रोट् रेडिति । 'रुष, रिष हिंसायाम्' विच् । 'वेरपृक्तस्य' इति वलोपः । सुगण्णिति । गणेर्विच् । क्विप् च । अयमपीति । सर्वधातुभ्यः सोपपदेभ्यः निरुपपदेभ्यश्च छन्दसि लोके च क्विप् दृश्यते इत्यर्थः । नन्वनेनैव सिद्धे 'सत्सूद्विष' इति सूत्रं व्यर्थमित्यत आह—सत्सूद्विषेति । 'सत्सूद्विष' इति सूत्रं तु 'क्विप् च' इत्यस्यैव प्रपञ्च इत्यर्थः । उखास्रदिति । उखायाः स्रंसत इति विग्रहः । स्रंसेः क्विप्, 'अनिदिताम्' इति नलोपः, 'वसुस्रंसु' इति दत्वम् । एवं पर्णध्वत् । पर्णात् ध्वंसत इति विग्रहः । वाहभ्रडिति । वाहाद् भ्रश्यति इति विग्रहः । भ्रस्जादिना षः । अन्तः । 'अनितेः' इति सूत्रमनुवर्तते, 'रषाभ्यां नो

स्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत्। हे प्राण्। 'शास इत्—' (सू २४८६) इतीत्वम्। मित्राणि शास्ति मित्रशीः। 'आशासः क्वौ उपधाया इत्वं वाच्यम्' (वा ४०७०)। आशीः। इत्वोत्वे। गीः। पूः। **२९८५ ह्रस्मन्त्रन्क्विषु च ६।४।९७॥** एषु छादेर्ह्रस्वः स्यात्। तनुच्छत्। 'अनुनासिकस्य क्वि—' (२६६६) इति दीर्घः। 'मो नो धातोः' (सू ३४१)। प्रतान्। प्रशान्। 'च्छ्वोः—' (सू २५६१) इत्यूठ्। अक्षद्यूः। 'ज्वरत्वर—' (सू २६५४) इत्यूठ्। जूः। जूरौ। जूरः। तूः। स्रूः। ऊठ्, वृद्धिः, जनानवतीति जनौः। जनावौ। जनावः। मूः। मुवौ। मुवः। सुमूः। सुम्वौ। सुम्वः। 'राल्लोपः' (सू २६५५)। मुर्छा। मूः। मुरौ। मुरः। धुर्वी, धूः।

याः' इति च। अन्तः इति षष्ठ्यर्थे प्रथमा। पदस्याऽन्तो विवक्षितः। 'उपसर्गादसमासेऽपि' इत्यतः उपसर्गादित्यनुवर्तते। तदाह—पदान्तस्येत्यादिना। हे प्राणिति। प्रपूर्वाद्धनेः क्विबन्तात् सम्बोधनैकवचनस्य हल्ङ्यादिलोपः, नस्य णः। नलोपस्तु न, 'न ङिसम्बुद्ध्योः' इति निषेधात्। मित्रशीरिति। मित्राणि शास्तीति विग्रहः। शासेः क्विप् 'शास इदङ्हलोः' इत्युपधाया इत्वम्, 'र्वोरुपधायाः' इति दीर्घः। मित्रशिषाविल्यादौ अपदान्तत्वान्न दीर्घः। आशासः क्वाविति। 'आङः शासु इच्छायाम्' इत्यात्मनेपदी। तस्य 'शास इदङ्हलोः' इति इत्वं तु न भवति, तत्र परस्मैपदिन एव शासेर्ग्रहणात्। अन्यथा आशास्ते इत्यादावपि इत्वापत्तेः। अत आशासः क्वाविति विधिः। इत्वोत्वे इति। गधातोः क्विपि, ॠत इत्वे, रपरत्वे, सोर्लोपे, 'र्वोरुपधायाः' इति दीर्घे गीरिति रूपम्। पॄधातोः क्विपि, 'उदोष्ठ्यपूर्वस्य' इति ॠतः उत्वे, रपरत्वे, सुलोपे, उपधादीर्घे पूः इति रूपमित्यर्थः। ह्रस्मन्त्रन्। ह्रस्, मन्, त्रन्, क्वि एषां चतुर्णां द्वन्द्वः। 'छादेर्घेऽद्व्युपसर्गस्य' इत्यतः छादेरिति 'खचि ह्रस्वः' इत्यतः ह्रस्व इति चानुवर्तते। तदाह—एषु छादेरिति। अर्थादाकारस्येति गम्यते, अलोन्त्यपरिभाषामाश्रित्य इकारस्य ह्रस्वविधौ प्रयोजनाऽभावात्। एवञ्च 'ऊदुपधायाः' इत्यतः उपधाया इति नानुवर्तनीयम्, ण्यन्तस्य छादेरिकारोपधत्वात्। ह्रस् छद्मि, मन् छद्म, त्रन् छत्रम्। क्वौ उदाहरति—तनुच्छदिति। तनुं छादयतीति विग्रहः। अथ तनेः शमेश्च क्विपि विशेषमाह—अनुनासिकस्येति। 'अक्षद्यू'रित्यत्र आह—च्छ्वोरिति। अक्षैर्दीव्यतीति विग्रहे दिव्धातोः क्विपि वकारस्य ऊठि इकारस्य यणिति भावः। ज्वरेति। ज्वरधातोः क्विपि अकारवकारयोरेकस्मिन् ऊठि जूरिति रूपम्। एवं त्वरेः तूरिति रूपम्। स्रिवेः क्विपि इकारवकारयोरूठि स्रूरिति रूपम्। अवधातोः क्विपि अकारवकारयोरूठि ऊरिति रूपम्। वृद्धिरिति। जनानवतीति विग्रहे, अवेः क्विपि, अकारवकारयोरूठि, जन ऊ इति स्थिते, आद्गुणं बाधित्वा 'एत्येधत्यूठ्सु' इति वृद्धिरौकारादेश इत्यर्थः। मूरिति। मवेः क्विपि, अकारवकारयोरूठ्। सुम्वौ

**२९८६ गमः क्वौ ६।४।४०॥** अनुनासिकलोपः स्यात्। अङ्गगत्। 'गमादीनामिति वक्तव्यम्' ( वा ४०७६ )। पुरीतत्। संयत्। सुनत्। 'ऊङ्च गमादीनामिति वक्तव्यम्'। 'लोपश्च' ( वा ४०७३–७४ ) अग्रेगूः। अग्रेभ्रूः। **२९८७ स्थः क च ३।२।७७॥** चात्क्विप्। शंस्थः। शंस्थाः। 'शमि धातोः–' (सू २९२८) इत्यचं बाधितुं सूत्रम्। **२९८८ सुप्यजातौ णिनिस्ताच्छील्ये ३।२।७८॥** अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये। उष्णभोजी। शीतभोजी। अजातौ किम्। ब्राह्मणानामन्त्रयिता। ताच्छील्ये किम्। उष्णं भुङ्क्ते कदाचित्। इह वृत्तिकारे-

---

सुम्वः इति। अनेकाच्त्वात् गतिपूर्वत्वाच्च यणिति भावः। रादिति। मुर्छाधातोः क्विपि 'राल्लोपः' इति छकारस्य लोपे सुलोपे 'र्वोः' इति दीर्घे मूरिति रूपम्। मुरौ मुर इति। अपदान्तत्वान्नोपधादीर्घः। धुर्वीति। धुर्वीधातोः क्विपि 'राल्लोपः' इति वकारस्य लोपे सुलोपे 'र्वोः' इति दीर्घे धूरिति रूपमिति भावः। गमः क्वौ। अनुनासिकलोपः स्यादिति। शेषपूरणमिदम्। 'अनुदात्तोपदेश' इत्यतस्तदनुवृत्तेरिति भावः। झलादिप्रत्ययपरकत्वाऽभावात् अनुदात्तोपदेशेत्यप्राप्तौ वचनम्। अङ्गगदिति। अङ्गाख्यं देशं गच्छतीति विग्रहः। क्विपि मकारलोपे तुक्। एवं वङ्गगत् कलिङ्गगदित्यादि। गमादीनामिति। 'क्वावनुनासिकलोप' इति शेषः पुरीतदिति। पुरिः हृदयालयः मांसखण्डविशेषः। तं तनोति आच्छादयतीति विग्रहः। हृदयकमलाच्छादको मेदोविशेषः। 'पुरीतता हि हृदयमाच्छाद्यते' इति श्रुतिरिति कर्किभाष्यम्। तनेः क्विपि नकारलोपे तुक्. 'नहिवृतिवृषि' इति पूर्वपदस्य दीर्घः। संयदिति। यमेः क्विप्। मलोपे तुक्। सुनदिति। नमेः क्विपि मलोपे तुक्। ऊ चेति। गमादीनामुपधायाः ऊभावश्चेति वक्तव्यमित्यर्थः। लोपश्चेति। चकारादनुनासिकलोपः समुच्चीयते इति भावः। अग्रेगूरिति। अग्रे गच्छतीति विग्रहः। गमेरकारस्य ऊभावः मलोपश्च 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। अग्रेभ्रूरिति। भ्रमेरकारस्य ऊभावः, मलोपश्च। स्थः क च। 'के'त्यविभक्तिकम्। स्थ इति पञ्चम्यन्तम्। चात् क्विबिति। उपसर्गे अनुपसर्गे च सुबन्ते उपपदे स्थाधातोः कप्रत्ययः स्यात् क्विप् चेति फलितम्। शंस्थ इति। शमित्यव्ययं सुखे। तत्पूर्वात् स्थाधातोः कप्रत्यये आतो लोपः। शंस्था इति। क्विपि रूपम्। सुखं स्थापयतीत्यर्थः। तिष्ठतिरन्तर्भावितण्यर्थः। 'शंस्था' इति भाष्यप्रयोगात् पृषोदरादित्वाच्च 'घुमास्था' इति ईत्वं न। केचित्तु 'क चे'ति चकारात् विजेवानुकृष्यते इत्याहुः। ननु 'सुपि स्थः' इति कप्रत्यये 'क्विप् च' इति क्विपि च सिद्धे किमर्थमिदमित्यत आह—शमिधातोरित्यचमिति। अन्यथा धातुग्रहणसामर्थ्यात् कृञो हेत्वादिषु टप्रत्ययमिव शम्पूर्वात् स्थाधातोः कं क्विपं च अच्प्रत्ययो बाधेतेति भावः। सुप्यजातौ णिनिस्ताच्छील्ये। 'सुपि स्थः' इत्यतः सुपीत्यनुवृत्तौ पुनः सुब्ग्रहणमुपसर्गेऽपि विधानार्थम्। अन्यथा 'आतोऽनुपसर्गे' इत्यतः अनुपसर्गे

णोपसर्गभिन्न एव सुपि णिनिरिति व्याख्याय 'उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानम्' इति पठितम् । हरदत्तमाधवादिभिश्च तदेवानुसृतम् । एतच्च भाष्यविरोधादुपेक्ष्यम् । प्रसिद्धश्चोपसर्गेऽपि णिनिः । 'स बभूवोपजीविनाम्' 'अनुयायिवर्गः', 'पतत्यधो धाम विसारि', 'न वञ्चनीयाः प्रभवोऽनुजीविभिः' इत्यादौ । 'साधुकारिण्युपसंख्यानम्' ( वा २०३८ ) 'ब्रह्मणि वदः' ( वा २०३९ ) अताच्छील्यार्थं वार्तिकद्वयम् । साधुकारी, साधुदायी । ब्रह्मवादी । २९८९ **कर्तर्युपमाने ३।२।७९॥** णिनिः स्यात् । उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वाङ्क्षरावी । अताच्छील्यार्थं, जात्यर्थं च सूत्रम् । कर्तरि किम् । अपूपानिव भक्षयति माषान् । उपमाने किम् । उष्ट्रः क्रोशति । २९९० **व्रते ३।२।८०॥** णिनिः स्यात् । स्थण्डिलशायी । २९९१ **बहुलमाभीक्ष्ण्ये ३।२।८१॥** पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः स्यात् । क्षीरपायिणः उशीनराः । २९९२ **मनः ३।२।८२॥** सुपि मन्यते-

---

इत्यनुवर्तेत । तदुष्णवनयन्नुदाहरति—उष्णभोजीति । उष्णभोजनशील इत्यर्थः । उपसर्गाभिन्न एवेति । अनुपसर्ग इत्यनुवर्तते । सुब्ग्रहणं तु 'सत्सूद्विष' इति सूत्रात् उपसर्गेऽपीत्यनुवृत्तिनिवृत्तये इति भावः । उत्प्रतिभ्यामिति । उत्प्रतिभ्यां परे आङि प्रयुज्यमाने सति तत्पूर्वात्सर्तेर्णिनेरुपसङ्ख्यानमिति तदर्थः । उदासारिणी प्रत्यासारिणीत्युदाहरणम् । भाष्यविरोधादिति । सुब्ग्रहणमुपसर्गग्रहणानुवृत्तिनिवृत्त्यर्थम्, उपसर्गे अनुपसर्गे च सुबन्ते उपपदे धातोर्णिनिरित्येव भाष्ये उदाहृतत्वादिति भावः । तथा च 'उत्प्रतिभ्यामाङि सर्तेः' इति वचनं नादर्तव्यम् । भाष्ये तत्पाठस्तु प्रक्षिप्त एवेति भावः । अत एव 'अनुगादिनष्ठक्' इति सूत्रप्रयोगश्च सङ्गच्छते इति ज्ञेयम् । 'उपसर्गभिन्न एव सुपि णिनि'रिति मतं शिष्टप्रयोगविरुद्धं चेत्याह-प्रसिद्धश्चोपसर्गेऽपि णिनिरिति । 'इत्यादा'वित्यन्वयः । साधुकारिणीति । कृञ्ग्रहणं सर्वधातूपलक्षणम् । साधुकारीत्यादिशब्दविषये तत्सिद्ध्यर्थं णिनेरुपसङ्ख्यानमित्यर्थः । साधुशब्दे उपपदे धातोर्णिनिरिति यावत्, भाष्ये 'साधुकारी साधुदायी'त्युदाहरणात् । ब्रह्मणि वद इति । 'णिनेरुपसङ्ख्यान'मिति शेषः । ननु 'सुप्यजातौ' इत्येव सिद्धे किमर्थमिदं वार्तिकमित्यत आह—अताच्छील्यार्थमिति । साधुदायीति । आतो युक् । ब्रह्मवादीति । ब्रह्म वेदः । कर्तर्युपमाने । कर्तुरुपमानमिति । 'चे'दित्यध्याहार्यम् । ननु 'सुप्यजातौ' इति सिद्धे किमर्थमिदमित्यत आह—अताच्छील्यार्थमिति । व्रते । णिनिः स्यादिति । सुप्युपपदे णिनिः स्यात् व्रते गम्ये इति यावत् । स्थण्डिलशायीति । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । बहुलमाभीक्ष्ण्ये । जातावप्युपपदे प्राप्त्यर्थमिदम् । तत् ध्वनयन्नुदाहरति—क्षीरपायिण इति । मनः । दैवादिकस्यैव मनेर्ग्रहणं न तु तानादिकस्य, बहुलग्रहणाऽनुवृत्तेः । तदाह-सुपि मन्यतेरिति । मनुतेर्ग्रहणे तु बाधकमुत्तरसूत्रे वक्ष्यते ।

णिनिः स्यात् । दर्शनीयमानी । २९९३ आत्ममाने खश्च ३।२।८३॥ स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् । चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितम्मन्यः । 'पण्डितमानी । खित्यनव्ययस्य' ( सू २९४३ ) । कालिम्मन्या । अनव्ययस्य किम् । दिवामन्या । २९९४ इच एकाचोऽम्प्रत्ययवच्च ६।३।६८॥ इजन्तादेकाचोऽम्स्यात्स च स्वाद्यम्वत्खिदन्ते परे । 'औतोऽम्शसोः' ( सू २८५ ) । गाम्मन्यः । 'वाऽम्शसोः' ( सू ३०२ ) । स्त्रियम्मन्यः । स्त्रीम्मन्यः । नॄ, नरम्मन्यः । भुवम्मन्यः । श्रियमात्मानं मन्यते श्रिमन्यं कुलम् । भाष्यकारवचना-

आत्ममाने खश्च । आत्मनः स्वस्य मानः मननम् आत्ममानः । तदाह—स्वकर्मके मनने इति । पण्डितम्मन्य इति । खशः शित्त्वेन सार्वधातुकत्वात् श्यन् । खित्त्वात् 'अरुर्द्विषत्' इति मुम् । तानादिकस्य मनेर्ग्रहणे तु उविकरणः स्यात् । कालीमात्मानं मन्यते इत्यर्थे खशि श्यनि कृते आह—खित्यनव्ययस्येति । 'स्त्रियाः पुंवत्' इति पुंवत्त्वं बाधित्वा परत्वाद्ध्रस्वः इत्यर्थः । दिवामन्येति । अधिकरणशक्तिप्रधानस्यापि दिवाशब्दस्य वृत्तिविषये कर्मत्वं बोध्यम् । इच एकाचः । एकाचः अमिति छेदः । अम् च अम् चेत्येकशेषः। एकं विधेयसमर्पकम् । 'इच एकाचोऽमि'ति प्रथमं वाक्यम् । इच इत्येकाच इति च पञ्चमी । 'अलुगुत्तरपदे' इत्युत्तरपदाधिकारात् आक्षिप्तं पूर्वपदम् इचा विशेष्यते । तदन्तविधिः । तदाह—इजन्तादेकाचोऽम् स्यादिति । मुमोऽपवादः । द्वितीयम् अम्पदं प्रत्ययवदित्येकदेशेन प्रत्ययेन समानाधिकरणं सम्बध्यते । असामर्थ्येऽपि वतिप्रत्यय आर्षः । 'अम्प्रत्ययव'दिति द्वितीयं वाक्यं सम्पद्यते । स्वादिप्रत्ययेषु यत् द्वितीयैकवचनं तदेवाऽत्र अमिति विवक्ष्यते, व्याख्यानात् । तदाह—स च स्वाद्यम्वदिति । एतत्सर्वं भाष्ये स्पष्टम् । खिदन्ते पर इति । खिदन्ते उत्तरपदे परत इत्यर्थः । 'खित्यनव्ययस्य' इत्यतः खितीत्यनुवर्तते इति भावः । 'अम्प्रत्ययव' दित्यतिदेशस्य प्रयोजनमाह—औतोम्शसोरिति । गाम्मन्य इति । गामात्मानं मन्यते इत्यर्थे मनेः खशि श्यन्, सुपो लुक्, गोशब्दादम्, 'अम्प्रत्ययव'दित्यतिदेशात् मकारस्य 'न विभक्तौ' इति नेत्त्वम्। 'औतोऽम्शसोः' इत्योकारस्य आकार इति भावः । 'अम्प्रत्यय' वदित्यस्य प्रयोजनान्तरमाह—वाऽम्शसोरिति । स्त्रियम्मन्य इति । स्त्रियमात्मानं मन्यते इत्यर्थे मनेः खशि श्यन् । सुपो लुक् । स्त्रीशब्दात् 'वाऽम्शसोः' इति इयङ्विकल्पः । अत्र यकारादकारश्रवणार्थम् अम्विधिः। मुमि तु अकारो न श्रूयेत । स्त्रीम्मन्य इति । इयङभावपक्षे 'अमि पूर्वः' । अम्प्रत्ययवदित्यस्य प्रयोजनान्तरमाह—नॄ नरम्मन्य इति । 'नॄ' इत्यविभक्तिकम् उदाहरणे नॄशब्दस्य समावेशसूचनार्थम् । नरमात्मानं मन्यते इत्यर्थे मनेः खश्, श्यन्, सुपो लुक्, नॄशब्दादम् । 'अम्प्रत्ययव'दित्यतिदेशात् 'ऋतोऽङि' इति गुणः । अत्राऽपि रेफादकारश्रवणार्थः अम्विधिः । मुमि त्वकारो न श्रूयेत । 'अम्प्रत्यय' दित्यस्य प्रयोजनान्तरमाह—भुवम्मन्य इति । भुवमात्मानं मन्यते इत्यर्थे मनेः खश्,

च्छ्रीशब्दस्य ह्रस्वो मुममोरभावश्च। २९९५ भूते ३।२।८४॥ अधिकारोऽयम्। 'वर्तमाने लट्' ( सू २१५१ ) इति यावत्। २९९६ करणे यजः ३।२।८५॥ करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी। २९९७ कर्मणि हनः ३।२।८६॥ पितृव्यघाती। कर्मणीत्येतत् 'सहे च' ( सू ३००६ ) इति यावदधिक्रियते। २९९८ ब्रह्मभ्रूणवृत्रेषु क्विप् ३।२।८७॥

श्यन्, सुपो लुक्। भूशब्दादम्, 'अम्प्रत्ययव'दित्यतिदेशात् 'अचि श्नुधातु' इत्युवङ्। अतिदेशाऽभावे तु उवङ् न स्यात्, तस्याऽजादिप्रत्यये विधानात्। श्रिमन्यमिति। मनेः खश् श्यन्। अत्र मननक्रियां प्रति कुलत्वेन रूपेण कुलं कर्तृ, तस्यैव कुलस्य अध्यारोपितश्रीत्वेन रूपेण कर्मत्वं चेति स्थितिः। एवञ्च श्रीशब्दस्य नित्यस्त्रीलिङ्गस्यापि कुले लक्षणया वृत्तेर्नपुंसकत्वम्। यत्र हि प्रातिपदिकस्यैव लक्षणा प्रसिद्धा तत्र पूर्वलिङ्गत्यागः। यथा प्रकृते श्रीशब्दः। यत्र तु पदस्य लक्षणा, न तत्र पूर्वलिङ्गत्यागः' यथा 'गङ्गायां घोष' इत्यादौ इति 'पुंयोगादाख्यायाम्' इति सूत्रे, प्रकृतसूत्रे च भाष्यकैयटयोर्मर्यादा स्थिता। एवञ्च 'कालिम्मन्यं कुल' मित्यत्र कालीशब्दस्य न स्त्रीलिङ्गपरित्यागः, प्रयोगानुसारेण तत्र पदलक्षणाया एवाभ्युपगमात्। 'श्रिमन्यं कुल'मित्यत्र तु प्रयोगाऽनुसारात् श्रीशब्दस्य प्रातिपदिकस्यैव लक्षणेति पूर्वलिङ्गपरित्यागात् नपुंसकलिङ्गत्वमेवाश्रीयते। ततश्च श्रीशब्दस्याऽत्र नपुंसकत्वात् 'खित्यनव्ययस्य' इति बहिरङ्गं बाधित्वा 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्व एव न्याय्यः। मुमपवादे 'इच एकाचः' इति अमि कृते तस्य 'स्वमोर्नपुंसकात्' इति लुक्। तथाच 'श्रिमन्यं कुल'मिति सिद्धम्। न च गाम्मन्य इत्यादावपि 'सुपो धातुप्रातिपदिकयोः' इति लुक् स्यादिति वाच्यम्, 'इच एकाचः' इत्यमः 'सुपो धातुः' इति लुगपवादत्वात्। 'स्वमोर्नपुंसकात्' इति लुकस्तु नायमम्विधिर्बाधकः, मध्येऽपवादन्यायात् इति प्रकृतसूत्रे भाष्यकैयटयोः स्पष्टम्। तदाह–भाष्यकारवचनाच्छ्रीशब्दस्य ह्रस्व इति। 'ह्रस्वो नपुंसके' इत्यनेनेति शेषः। मुममोरभावश्चेति। मुमपवादस्य अमः 'स्वमोर्नपुंसकात्' इति लुकि सति तयोः प्रयोगाऽभावः फलतीत्यर्थः। भूते। अधिकारोऽयमिति। धातोरित्यधिकृतम्। ततश्च भूतार्थवृत्तेर्धातोरित्युत्तरत्राऽनुवर्तते इति फलति। वर्तमाने इति। 'वर्तमाने लट्' इत्यतः प्रागित्यर्थः। अत्र व्याख्यानमेव शरणम्। करणे यजः। सोमेनेति। सोमाख्यलताविशेषरसेन यागं कृतवानित्यर्थः। सोमलतारसद्रव्यकेन यागेन अपूर्वमुत्पादितवानिति मीमांसकाः। एतच्च द्वितीयस्य द्वितीये 'द्रव्यसंयोगाच्चोदना पशुसोमयोः' इत्यधिकरणे अध्वरमीमांसाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः। अग्निष्टोमयाजीति। अग्निष्टोमाख्ययागेन अपूर्वं भावितवानित्यर्थः। कर्मणि हनः। कर्मण्युपपदे भूतार्थाद् हनेर्णिनिः स्यात्। पितृव्यघातीति। पितृव्यं हतवानित्यर्थः। 'हनस्तः' इति तः, 'हो हन्तेः' इति हस्य घः। ब्रह्मभ्रूणवृत्रेषु क्विप्। पूर्वसूत्रात्कर्मग्रहणाऽनुवृत्तेराह—

एषु कर्मसूपपदेषु हन्तेर्भूते क्विप् स्यात् । ब्रह्महा । भ्रूणहा । वृत्रहा । 'क्विप् च' (सू- २९७३) इत्येव सिद्धे नियमार्थमिदम् । ब्रह्मादिष्वेव, हन्तेरेव, भूत एव, क्विबेवेति चतुर्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव क्विबेवेति द्विविधो नियम इति भाष्यम् । २९९९ **सुकर्मपापमन्त्रपुण्येषु कृञः ३।२।८९॥** सौकर्मादिषु च कृञः क्विप्स्यात् । त्रिविधोऽत्र नियम इति काशिका । सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । क्विबेवेति नियमात्कर्म कृतवानित्यत्राण् न । कृञ एवेति नियमान्मन्त्रमधीतवान् मन्त्राध्यायः । अत्र न क्विप् । भूत एवेति नियमान्मन्त्रं करोति, करिष्यति वेति विवक्षायां न क्विप् । 'स्वादिष्वेवे'ति नियमाऽभावादन्यस्मिन्नप्युपपदे क्विप् । शास्त्रकृत् । भाष्यकृत् । ३००० **सोमे सुञः ३।२।९०॥** सोमसुत् । 'चतुर्विधोऽत्र नियम' इति काशिका । एवमुत्तरसूत्रेऽपि । ३००१ **अग्नौ चेः ३।२।९१ ॥** अग्निचित् । ३००२ **कर्मण्यग्न्याख्यायाम् ३।२।९२॥** कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् स्यात् अग्न्याधारस्थलविशेषस्याख्यायाम् । श्येन इव चितः श्येनचित् । ३००३ **कर्मणीनि विक्रियः**

---

कर्मस्विति । हन्तेर्भूते इति । **भूतार्थवृत्तेरित्यर्थः** । चतुर्विध इति । **पुनर्विधानलभ्यस्य एवकारस्य विनिगमनाविरहाच्चतुर्ष्वपि निवेशः इति भावः । तत्र 'ब्रह्मादिष्वेव हन्तेरि'ति नियमात् पुरुषं हतवानित्यत्र न क्विप् । ब्रह्मादिषु हन्तेरेवेति नियमात् ब्रह्म अधीतवानित्यत्र न क्विप् । 'ब्रह्मादिषु हन्तेर्भूतकाले एवेति नियमात् ब्रह्म हन्ति हनिष्यति वेत्यत्र न क्विप् । 'क्विबेवेति नियमात् ब्रह्म हतवानित्यत्र अण् न भवति, किन्तु 'ब्रह्मभ्रूणा' इति क्विबेव । निष्ठा तु भवत्येव, सोपपदप्रत्ययस्यैव नियमेन व्यावृत्तेः ।** द्विविध इति । **'उभयतो नियमोऽयम्' 'ब्रह्मादिष्वेव' क्विबेवेति च भाष्यमित्यर्थः । एवञ्च 'हन्तेरेव' 'भूत एवेति' नियमद्वयमुपेक्ष्यमिति भावः ।** सुकर्म । **सु, कर्म, पाप, मन्त्र, पुण्य एषां पञ्चानां द्वन्द्वः ।** त्रिविध इति । **'सुकर्मादिषु भूते कृञः क्विबेवे'ति, 'सुकर्मादिषु भूते कृञ एव क्विबिति, 'सुकर्मादिषु भूत एव कृञ' इति त्रिविध इत्यर्थः ।** अण् नेति । **क्तवतुस्तु भवत्येव, सोपपदप्रत्ययस्यैव नियमेन व्यावृत्तेरिति भावः ।** स्वादिष्वेवेति । **सुकर्मादिषु पञ्चस्वित्यर्थः ।** सोमे सुञः । **सोमे कर्मण्युपपदे भूते सुनोतेः क्विबित्यर्थः ।** चतुर्विध इति । **पूर्ववद्व्याख्येयम् ।** एवमिति । **'अग्नौ चेः' इत्युत्तरसूत्रेऽपि चतुर्विधो नियम इत्यर्थः ।** अग्नौ चेः । **अग्नौ कर्मण्युपपदे भूतार्थवृत्तेश्चिनोतेः क्विप् स्यादित्यर्थः ।** अग्निचिदिति । **अग्न्याख्यं स्थण्डिलविशेषमिष्टकाभिश्चितवानित्यर्थः ।** कर्मण्यग्न्याख्यायाम् । **कर्मणीत्यनुवृत्तमुपपदसमर्पकम् । अत्रत्यं तु कर्मणीत्येतत्प्रत्ययार्थसमर्पकम् । तथा चाऽत्र कर्तरीति न सम्बध्यते । तदाह—**कर्मण्युपपदे इत्यादि । चिनोतेरिति । **भूतार्थादित्यपि बोध्यम् ।** श्येन इवेति । **श्येनशब्दः श्येनसदृशे लाक्षणिक**

३।२।६३॥ कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात्। 'कुत्सितग्रहणं कर्तव्यम्' ( वा २०४७ )। सोमविक्रयी। घृतविक्रयी। **३००४ दृशेः क्वनिप् ३।२।६४** कर्मणि भूत इत्येव। पारं दृष्टवान् पारदृश्वा। **३००५ राजनि युधिकृञः ३।२।६५॥** क्वनिप् स्यात्। युधिरन्तर्भावितण्यर्थः। राजानं योधितवान् राजयुध्वा। राजकृत्वा। **३००६ सहे च ३।२।९६॥** कर्मणीति निवृत्तम्। सहयुध्वा। सहकृत्वा **३००७ सप्तम्यां जनेर्डः ३।२।९७॥** सरसिजम्। मन्दुरायां जातो मन्दुरजः। 'ङ्यापोः—( सू १००१ ) इति ह्रस्वः। **३००८ पञ्चम्यामजातौ ३।२।९८॥** जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात्। संस्कारजः। अदृष्टजः। **३००९ उपसर्गे च संज्ञायाम् ३।२।९९॥** 'प्रजा स्यात्सन्ततौ जने'। **३०१० अनौ कर्मणि ३।२।१००॥** अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात्। पुमांसमनुरुध्य जाता पुमनुजा। **३०११ अन्येष्वपि दृश्यते ३।२।१०१॥** अन्येष्वप्युपपदेषु जनेर्डः स्यात्। अजः। द्विजः ब्राह्मणः ( ब्राह्मणजः )। अपिशब्दः

---

इति भावः। श्येनाकृतिक इति यावत्। कर्मणीनि विक्रियः। 'इनि' इत्यविभक्तिकम्। विपूर्वस्य क्रीञ्धातोर्विक्रिय इति पञ्चम्यन्तम्। कुत्सितेति। कुत्सिते कर्मण्युपपदे उक्तविधिर्भवतीत्यर्थः। सोमविक्रयीति। सोमद्रव्यं च विक्रीयमाणं विक्रेतुः कुत्सामावहति, तद्विक्रयस्य निषिद्धत्वादिति भावः। दृशेः क्वनिप्। "आतो मनिन्क्वनिब्वनिपश्च" 'अन्येभ्योऽपि दृश्यन्ते' इत्येव क्वनिपि सिद्धे तत्सहचरितमनिनादिव्यावृत्त्यर्थमिदं, सोपपदाऽण्यादिबाधनार्थं च। निष्ठा तु भवत्येव, सोपपदप्रत्ययस्यैवाऽत्र पुनः क्विब्ग्रहणेन निवृत्तेः। पारं दृष्टवान्। राजनि युधिकृञः। युधि, कृञ् अनयोः समाहारद्वन्द्वात् पञ्चमी। क्वनिप् स्यादिति। राजनि कर्मण्युपपदे भूतार्थाद्युधेः कृञश्च क्वनिबित्यर्थः। ननु युधेरकर्मकत्वात् तत्र कर्मण्युपपदे इत्यस्य कथमन्वय इत्यत आह—युधिरन्तर्भावितेति। राजकृत्वेति। राजानं कृतवानित्यर्थः। सहे च। सहशब्दे उपपदे युधिकृञ्भ्यां क्वनिबित्यर्थः। सप्तम्यां जनेर्डः। सप्तम्यन्ते उपपदे जनेः भूतार्थाड्ड इत्यर्थः। सरसिजमिति। डित्वसामर्थ्यादभस्यापि टेर्लोपः। 'हलदन्तात्' इति 'तत्पुरुषे कृति' इति वा अलुक्। मन्दुरज इति। 'वाजिशाला तु मन्दुरा' इत्यमरः। पञ्चम्यामजातौ। जनेरिति। 'भूतार्थादिति शेषः। संस्कारजमिति। संस्काराज्जातमित्यर्थः। उपसर्गे च। 'जनेर्ड' इति शेषः। संज्ञायामिति समुदायोपाधिः। अनौ कर्मणि। ननु जनेरकर्मकत्वात्तत्र कर्मण्युपपदे इत्यर्थस्य कथमन्वय इत्यत आह—पुमांसमनुरुध्येति। अनुरुध्य जननं जात्यर्थ इति भावः। पुमनुजेति। पुंस् इति पूर्वपदे संयोगान्तलोप इति भावः। अन्येष्वपि दृश्यते। अज इति। न जात इत्यर्थः। द्विजो ब्राह्मण इति। द्विर्जातः इत्यर्थः। 'मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात्' इत्यादिस्मृतेरिति भावः।

सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्। परितः खाता परिखा **३०१२ क्तक्तवतू निष्ठा १।१।२६॥** एतौ निष्ठासंज्ञौ स्तः। **३०१३ निष्ठा ३।२।१०२॥** भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र 'तयोरेव-'( सू२८३३ ) इति भावकर्मणोः क्तः। 'कर्तरि कृत्' ( सू२८३२ ) इति कर्तरि क्तवतुः। उक्ताविती। स्नातं मया। स्तुतस्त्वया विष्णुः। विष्णुर्विश्वं कृतवान्। **३०१४ निष्ठायामण्यदर्थे ६।४।६०॥** ण्यदर्थो भावकर्मणी, ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात्। **३०१५ क्षियो दीर्घात् ८।२।४६॥** दीर्घात्क्षियो निष्ठातस्य नः स्यात्। क्षीणवान्। भावकर्मणोस्तु क्षितः कामो मया। 'श्र्युकः क्किति' ( सू२३८१ ) श्रितः। श्रितवान्। भूतः। भूतवान्। क्ष्णुतः। 'ऊर्णोतेर्णुवद्भावो वाच्यः (वा १७५१) तेन एकाच्त्वान्नेट्। ऊर्णुतः। नुतः। वृतः। **३०१६ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८।२।४२॥**

---

अपिशब्द इति। 'सप्तम्यां जनेर्डः' इत्यादिसूत्रेषु द्वचिदिषु यानि विशेषणान्युपात्तानि प्रकृतिविशेषणरूपाणि भूते कर्तरीति प्रत्ययार्थविशेषणानि च तदतिक्रमार्थं इत्यर्थः। क्तक्तवतू निष्ठा। क्त, क्तवतु अनयोर्द्वन्द्वः। निष्ठेति प्रत्येकाभिप्रायमेकवचनम्। निष्ठा। भूते इति धातोरिति चाधिकृतम्। तदाह—भूतार्थेत्यादि। भावकर्मणोः क्त इति। तथाच क्तप्रत्ययविषये कर्तरीति न सम्बध्यते इति भावः। कर्तरि क्तवतुरिति। कृत्यक्तखलर्थानामेव भावकर्मणोर्विधानादिति भावः। 'तयोरेव कृत्यक्त' इत्यत्र 'लः कर्मणि' इत्यस्माद् सकर्मकेभ्यः कर्मणि कर्तरि च अकर्मकेभ्यो भावे कर्तरि चेत्यनुवर्तते। ततश्च अकर्मकेभ्यो भावे क्तः, सकर्मकेभ्यस्तु कर्मणीति व्यवस्था लभ्यते इति मत्वा उदाहरति-स्नातं मयेति। अकर्मकत्वात् भावे क्तः। स्तुतस्त्वया विष्णुरिति। सकर्मकत्वात् कर्मणि क्तः। कर्तरि क्तवतुमुदाहरति-विष्णुर्विश्वं कृतवानिति। निष्ठायामण्यदर्थे। ण्यदर्थो भावकर्मणी इति। 'ऋहलोः' इति ण्यतः कृत्यसंज्ञकस्य 'तयोरेवे'ति भावकर्मणोरेव प्रवृत्तेरिति भावः। ततोऽन्यत्रेति। कर्तरीत्यर्थः। क्तवताविति फलितम्। क्षियो दीर्घः स्यादिति। क्षिय इति पूर्वसूत्रमनुवर्तते, 'युप्लुवोर्दीर्घश्छन्दसि' इत्यतः दीर्घ इति चेति भावः। क्षियो दीर्घात्। दीर्घादिति क्षियो विशेषणम्। तदाह—दीर्घात् क्षिय इति। दीर्घान्तादित्यर्थः। निष्ठातस्य न इति। 'रदाभ्याम्' इत्यतस्तदनुवृत्तेरिति भावः। क्षीणवानिति। क्षिधातोः कर्तरि क्तवतुः, 'निष्ठायामण्यदर्थे' इति दीर्घः, तकारस्य नत्वम्, षात्परत्वाण्णः। क्षितः कामो मयेति। क्षपित इत्यर्थः। 'क्षि क्षये' इत्यस्मात् अन्तर्भावितण्यर्थात्कर्मणि क्तः। भावे तु क्षितं कामेनेत्युदाहार्यम्। अत्र ण्यदर्थयोर्भावकर्मणोर्विहिते क्ते दीर्घो न भवति, अण्यदर्थे इत्युक्तेः। दीर्घान्तत्वाऽभावात् 'क्षियो दीर्घात्' इति नत्वं न। श्र्युकः क्किताति। 'श्रित' इत्यादौ इण्निषेधस्मारकमिदम्। क्ष्णुत इति। 'टु क्षु शब्दे' अस्मात् क्तः। ननु ऊर्णुत इति कथम्। अनेकाच्त्वेन श्र्युकः इति निषेधस्याप्रवृत्ते-

रेफदकाराभ्यां परस्य निष्ठातस्य नःस्यात्। निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च। शॄ, 'ॠत इत्–' (सू २३९०) रपरः, णत्वम्। शीर्णः। बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्नेह-कृतस्यापत्यं कार्तिः। छिन्नः। भिन्नः। **३०१७ संयोगादेरातो धातोर्यण्वतः ८।२।४३॥** निष्ठातस्य नः स्यात्। द्राणः। स्त्यानः। ग्लानः। **३०१८ ल्वादिभ्यः ८।२।४४॥** एकविंशतेर्लूञादिभ्यः प्राग्वत्। लूनः। ज्या, ग्रहिज्या (२४१२)। जीनः। 'दुग्वोर्दीर्घश्च (वा ४८३२) 'दु गतौ' दूनः। 'टु दु उपतापे' इत्ययं तु न गृह्यते सानुबन्धकत्वात्। 'मृदुतया दुतया' इति माघः। गूनः। 'पूञो विनाशे' (वा ४८३३)। पूना यवाः। विनष्टा इत्यर्थः। पूतमन्यत्। 'सिनोतेर्ग्रासकर्मक-र्तृकस्य' (वा ४८३४)। सिनो ग्रासः। ग्रास इति किम्। सिता पाशेन सूकरी। कर्मकर्तृकस्य इति किम्। सितो ग्रासो देवदत्तेन। **३०१९ ओदितश्च ८।२।४५॥**

---

**रित्यत आह**-ऊर्णोतेर्नुवदिति। **वार्तिकमिदम्**। रदाभ्याम्। **रदाभ्यामित्यकारावुच्चारणार्थौ तदाह**—रेफदकाराभ्यामिति। **निष्ठायाः त् निष्ठात्, तस्य निष्ठात इति विग्रहः। तदाह**—निष्ठातस्येति। **निष्ठातकारस्येत्यर्थः**। नः स्यादिति। **नकारः स्यादित्यर्थः। सूत्रे 'न' इति प्रथमान्तम्। अकार उच्चारणार्थः**। दकारस्य चेति। **'नकार' इत्यनुषज्यते। सूत्रे 'द' इति षष्ठ्यन्तमिति भावः। चरितम्, मुदितम् इत्यत्र तु नात्वं न, निष्ठातकारस्य इटा व्यवहितत्वेन रदाभ्यां परत्वाऽभावात्। रेफात्परस्योदाहरति—शॄ इति। शॄधातोः क्तप्रत्ययसूचनमिदम्। ननु कृतस्यापत्यं कार्तिः। अत इञ्, आदि-वृद्धिः, रपरत्वम्। अत्र निष्ठातकारस्य रेफात् परस्य नत्वं स्यादित्यत आह**—बहिरङ्गत्वेनेति। **दात्परस्योदाहरति**-छिन्नः भिन्न इति। **अत्र निष्ठातकारस्य धात्वन्तदकारस्य च नत्वमिति भावः**। संयोगादेः। निष्ठातस्य नः स्यादिति। **शेषपूरणमिदम्**। द्राण इति। **'द्रा कुत्सायां गतौ' अस्मात् क्तः, नत्वम्, णत्वम्**। ग्लान इति। **'ग्लै हर्षक्षये' 'आदेचः' इत्यात्वे नत्वम्**। ल्वादिभ्यः। एकविंशतेरिति। **क्र्यादिषु ल्वादयो द्वाविंशतिः, तेषु आद्यं पूञ् विहाय ल्वादिभ्यः एकविंशतेरित्यर्थः**। ज्येति। धातुसूचनम्। ग्रहिज्येति। **सम्प्रसारणसूचनम्**। जीन इति। **ज्या त इति स्थिते 'संयोगादेः' इति निष्ठानत्वस्याऽसिद्धत्वात् ततः प्रागेव सम्प्रसारणे पूर्वरूपे च कृते आतः परत्वाभावात् 'संयोगादेरातः' इति नत्वस्याप्राप्तावनेन नत्वम्**। दुग्वोर्दीर्घश्चेति। **वार्तिकमिदम्। दु गु आभ्यां परस्य निष्ठातस्य नत्वं प्रकृतेर्दीर्घश्च इत्यर्थः। 'मृदुतया दुतया' इति माघकाव्ये दुतशब्दं साधयितुमाह**–टु दु उपतापे इत्यादि। गून इति। **गुधातोः क्ते दीर्घः**। पूञो विनाशे इति। **वार्तिकमिदम्। विनाशार्थात् पूञः परस्य निष्ठातस्य नत्वमित्यर्थः**। सिनोतेरिति। **वार्तिकमिदम्। कर्मैव कर्ता कर्मकर्ता, ग्रासः कर्मकर्ता यस्य सः ग्रासकर्मकर्तृकः, तस्मात् 'षिञ् बन्धने' इत्यस्मात्परस्य निष्ठातस्य नत्वमित्यर्थः**। ओदितश्च। **ओकारेतो**

भुजो, भुग्नः । टु ओ श्वि, उच्छूनः । ओहाक्, प्रहीणः । 'स्वादय ओदितः' इत्युक्तम् । सूनः । सूनवान् । दूनः । दूनवान् । ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट्, उड्डीनः । ३०२० द्रवमूर्तिस्पर्शयोः श्यः ६।१।२४॥ द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः सम्प्रसारणं स्यान्निष्ठायाम् । ३०२१ श्योऽस्पर्शे ८।२।४७॥ श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे । 'हलः' ( सू २५५९ ) इति दीर्घः । शीनं घृतम् । अस्पर्शे किम् । शीतं जलम् । द्रवमूर्तिस्पर्शयोः किम् । संश्यानो वृश्चिकः । शीतात्संकुचित इत्यर्थः । ३०२२ प्रतेश्च ६।१।२५॥ प्रतिपूर्वस्य श्यः सम्प्रसारणं स्यान्निष्ठायाम् । प्रतिशीनः । ३०२३ विभाषाऽभ्यव-

धातोः परस्य निष्ठातस्य नत्वमित्यर्थः । भुग्न इति । नत्वस्याऽसिद्धत्वात् जस्य पूर्वं कुत्वम् । ततो नत्वम् । उच्छून इति । उत्पूर्वात् 'टु ओ श्वि' इति धातोः क्तः, वजादित्वात्सम्प्रसारणम्, पूर्वरूपम्, 'ओदितः' इति नेट्, 'हलः' इति दीर्घः, निष्ठानत्वम् । प्रहीण इति । 'घुमास्था' इति ईत्वं, नत्वं, 'कृत्यचः' इति णत्वम् । स्वादय इति । 'षूङ् प्राणिप्रसवे' इत्याद्या नव धातवः ओदित इति दिवादिगणे उक्तमित्यर्थः । सून इति । षूङः क्तः, नत्वं 'श्र्युकः क्किति' इति इण्निषेधः । दून इति । 'दूङ् परितापे' अस्मात् क्तः, स्वादित्वेन ओदित्त्वान्नत्वम् । ननु 'डीङ् विहायसा गतौ' इत्यस्य उड्डीन इति कथं रूपं, सेट्कत्वात् उगन्तत्वाभावेन 'श्र्युकः क्किति' इति निषेधस्याऽप्रवृत्तेरित्यत आह—ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेडिति । इटि सति निष्ठातस्य ओदितः डीङः परत्वाऽभावान्नत्वाप्रसक्तेस्तस्य ओदित्सु पाठो व्यर्थः स्यादित्यर्थः । द्रवमूर्ति । श्यैङ् गतौ' इत्यस्य कृतात्वस्य 'श्य' इति षष्ठी । द्रवमूर्तिश्च, स्पर्शश्चेति विग्रहः । मूर्तिरित्यस्य विवरणम्—काठिन्ये इति । सम्प्रसारणं स्यादिति । 'ष्यङः सम्प्रसारणम्' इत्यतस्तदनुवृत्तेरिति भावः । तथाच श्यैङः क्ते आत्वे सम्प्रसारणे पूर्वरूपे शि त इति स्थिते—श्योऽस्पर्शे । श्यः अस्पर्शे इति छेदः । दीर्घ इति । नत्वात्प्रागेव 'हलः' इति दीर्घ इत्युचितम्, नत्वस्य त्रैपादिकत्वात् । शीनं घृतमिति । घनीभूतमित्यर्थः । धातूनामनेकार्थत्वात् । यद्यपि घृतेऽप्यनुष्णस्पर्शोऽस्त्येव । तथापि शीताख्यस्पर्शविशेष एव विवक्षित इति भावः। अस्पर्शे किमिति। श्यैङो निष्ठातस्य नत्वं स्यादित्येतावदेवास्त्वित्यर्थः। शीतं जलमिति । शीतस्पर्शवदित्यर्थः । अत्र 'द्रवमूर्ति' इति सम्प्रसारणमेव, नतु निष्ठानत्वमित्यर्थः । एवं च 'द्रवमूर्तिस्पर्शयोः' इत्यस्य स्पर्शे इदमुदाहरणम् । 'श्योऽस्पर्शे' इत्यस्य तु प्रत्युदाहरणमिति बोध्यम् । सूत्रयोः स्पर्शशब्दः प्रधानभूते गुणभूते च वर्तते । तत्र गुणभूते विशेष्यनिघ्नः। शीताः आपः, शीतं जलमित्यादि । यदा तु स्पर्शविशेषो गुणः प्राधान्येन विवक्षितः, तदा क्लीबत्वमेव । 'शीतं गुणे' इत्यमरः । सम्प्रसारणविधौ पृच्छति—द्रवमूर्तिस्पर्शयोः किमिति । संश्यान इति । अत्र स्पर्शस्याऽप्रतीतेः न सम्प्रसारणम् । नत्वं तु भवत्येवेति भावः । प्रतेश्च । द्रवमूर्तिस्पर्शाभ्या-

**पूर्वस्य ६।१।२६॥** श्यः सम्प्रसारणं वा स्यात् । अभिश्यानम्-अभिशीनं घृतम् । अवश्यानः-अवशीनो वृश्चिकः । व्यवस्थितविभाषेयम् । तेनेह न । समवश्यानः । **३०२४ अञ्चोऽनपादाने ८।२।४८॥** अञ्चो निष्ठातस्य नः स्यान्नत्वपादाने । **३०२५ यस्य विभाषा ७।२।१५॥** यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठाया इण्न स्यात् । 'उदितो वा' ( सू ३३२८ ) इति क्त्वायां वेट्त्वादिह नेट् । समक्नः । अनपादाने किम् । उदक्तमुदकं कूपात् । नत्वस्याऽसिद्धत्वात् 'व्रश्च—' ( सू २९४ ) इति षत्वे प्राप्ते, 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः' ( वा ४७७३ ) । वृक्णः । वृक्णवान् । **३०२६ परिस्कन्दः प्राच्यभरतेषु ८।३। ७५॥** पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते । परिस्कन्दः । प्राच्य-इति किम् । परिष्कन्दः । परिस्कन्दः । 'परेश्च' ( सू २३९९ ) इति षत्वविकल्पः । 'स्तन्भेः' (सू २२७२) इति षत्वे प्राप्ते-**३०२७ प्रतिस्तब्धनिस्तब्धौ च ८।३।११४॥** अत्र

---

अन्यत्रापि सम्प्रसारणप्राप्त्यर्थमिदम् । प्रतिशीन इति । प्रतिगत इत्यर्थः । अत्र 'श्योऽस्पर्शे' इति नत्वम् । विभाषा । 'श्यैङ' इति शेषः । सम्प्रसारणं वा स्यादिति । शेषपूरणमिदम् । द्रवमूर्तिस्पर्शयोर्नित्यं सम्प्रसारणे प्राप्ते ततोऽन्यत्राप्राप्ते विभाषेयम् । अभिश्यानं घृतमिति । अत्र द्रवमूर्तौ सम्प्रसारणविकल्पः । अवश्यानः-अवशीनः वृश्चिक इति । अत्र द्रवमूर्तिस्पर्शाऽभावेऽपि सम्प्रसारणविकल्पः । समवश्यान इत्यत्रापि सम्प्रसारणविकल्पमाशङ्क्य आह—व्यवस्थितेति । अञ्चोऽनपादाने । न त्वपादाने इति । अपादानसमभिव्याहारे असतीत्यर्थः । यस्य विभाषा । यस्येति । यस्मादित्यर्थः । निष्ठाया इण्न स्यादिति । 'श्वीदितः' इत्यतो निष्ठायामिति 'नेड्वशि' इत्यतो नेडिति चानुवर्तत इति भावः । नन्वञ्चेर्नित्यं सेट्कत्वात् कथं तस्य क्वचिद्वेट्कत्वमित्यत आह—उदितो वेति । समक्न इति । सङ्गत इत्यर्थः । सम्पूर्वात् अञ्चुधातोः क्तः 'आर्धधातुकस्ये—' इति प्राप्तस्य इटो निषेधः । 'अनिदिताम्' इति नलोपः । चस्य कुत्वम् । उदक्तमुदकं कूपादिति । उद्धृतमित्यर्थः । अत्राऽपादानसमभिव्याहारसत्त्वात् नत्वं नेति भावः। 'ओ व्रश्चू छेदने' तस्य श्चुत्वेन निर्देशः, अस्मात्क्तः, 'ग्रहिज्या' इति सम्प्रसारणम्, ऊदित्त्वेन वेट्कत्वादिह 'यस्य विभाषा' इति नेट् , चस्य कुत्वेन कः, 'ओदितश्च' इति निष्ठानत्वं, तस्याऽसिद्धत्वेन झल्परत्वात् 'स्कोः' इति सलोपः, णत्वम्, वृक्ण इति रूपमिति स्थितिः । तत्र नत्वस्याऽसिद्धत्वेन झल्परत्वात् 'व्रश्च' इति षत्वं स्यादित्यत आह—निष्ठादेशः षत्वेति । तथा च 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति षत्वे कर्तव्ये नत्वस्याऽसिद्धत्वाऽभावेन झल्परकत्वाऽभावान्न षत्वमित्यर्थः । स्वरप्रत्ययेड्विधिषूदाहरणानि भाष्ये स्पष्टानि । परिस्कन्दः प्राच्यभरतेषु । 'अपदान्तस्य मूर्धन्यः' इत्यधिकारे इदं सूत्रम् । पूर्वेणेति । 'परेश्च' इति पूर्वसूत्रम् । परेः परस्य स्कन्देः सस्य षो वा स्यादिति तदर्थः । तेन षत्वविकल्पे प्राप्ते प्राच्यभरतेषु

त्वं न स्यात् । ३०२८ दिवोऽविजिगीषायाम् ८।२।४९॥ दिवो निष्ठातस्य नः स्यादविजिगीषायाम् । द्यूनः । विजिगीषायां तु द्यूतम् । ३०२९ निर्वाणोऽवाते ८।२।५०॥ अवाते इतिच्छेदः । निःपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता न । निर्वाणोऽग्निर्मुनिर्वा । वाते तु निर्वातो वातः । ३०३० शुषः कः ८।२।५१॥ निष्ठात इत्येव । शुष्कः । ३०३१ पचो वः ८।२।५२॥ पक्वः ३०३२ क्षायो मः ८।२।५३॥ क्षामः। ३०३३ स्त्यः प्रपूर्वस्य ६।१।२३॥ प्रात् स्त्यः संप्रसारणं स्यान्निष्ठायाम् । ३०३४ प्रस्त्योऽन्यतरस्याम् ८।२।५४॥ निष्ठातस्य मो वा स्यात् । प्रस्तीमः । प्रस्तीतः । प्रात् किम् । स्त्यानः । ३०३५ अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ८।२।५५॥ ञि फला, फुल्लः निष्ठातस्य लत्वं निपात्यते । क्तवत्वेकदेशस्याऽपीदं

त्वाऽभावो निपात्यत इत्यर्थः । परिस्कन्द इति । परिपूर्वात् स्कन्देर्निष्ठायास्तकारलोपः । दिवो । 'अविजिगीषायाम्'मिति छेदः । द्यून इति । स्तुत इत्यर्थः । 'च्छ्वोः' इत्यूठ् । विजिगीषायां तु द्यूतमिति । द्यूतस्य विजिगीषया प्रवृत्तेरिति भावः । निर्वाणोऽवाते । कर्ता नेति । निरित्युपसर्गपूर्वो वाधातुर्विनाशे वर्तते, उपरमे च । तस्मिन् धात्वर्थे यदि वायुः कर्ता तदा नत्वं नेत्यर्थः । निर्वाणोऽग्निर्मुनिर्वेति । नष्टः, उपरत इति क्रमेणार्थः । 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । निर्वातो वात इति । अत्र वातस्य कर्तृत्वान्नत्वं नेति भावः । 'निर्वाणो दीपो वातेन' इत्यत्र तु वातस्य करणत्वेन विवक्षितत्वात्कर्तृत्वाऽभावात् नत्वं निर्बाधम् । भावे तु निर्वातं वातेन । शुषः कः । निष्ठात इति । शुषः परस्य निष्ठातस्य कः स्यादिति फलितम् । पचो वः । पचेः परस्य निष्ठातस्य वः स्यादित्यर्थः । पक्व इति । वत्वस्याऽसिद्धत्वात् कुत्वम् । क्षायो मः । 'क्षै क्षये' इत्यस्मात् परस्य निष्ठातस्य मः स्यादित्यर्थः । क्षाम इति । 'आदेचः' इत्यात्वम् । 'गत्यर्थाकर्मक' इति कर्तरि क्तः । क्षीण इत्यर्थः । अन्तर्भावितण्यर्थत्वे क्षपित इत्यर्थः । स्त्यः प्रपूर्वस्य । 'स्त्यै' इत्यस्य कृताऽऽत्वस्य 'स्त्य' इति षष्ठ्यन्तम् । 'ष्यङः सम्प्रसारणम्' इत्यतः सम्प्रसारणमिति 'स्फायः स्फी' इत्यतो निष्ठायामिति चानुवर्तते । तदाह—प्रादित्यादि । सम्प्रसारणे पूर्वरूपे 'हलः' इति दीर्घे प्रस्ती त इति स्थिते—प्रस्त्योऽन्यतरस्याम् । प्रस्त्य इति पञ्चमी । प्रपूर्वात्स्त्यैधातोरित्यर्थः । 'निष्ठातस्य म' इति शेषः । प्रस्तीम इति । सङ्घीभूत इत्यर्थः । अनुपसर्गात् । एते निपात्यन्ते उपसर्गात् परा न चेदित्यर्थः । लत्वमिति । 'आदितश्च' इति इडभावः, 'ति च' इत्युत्वं च सिद्धमिति भावः । 'फल निष्पत्तौ' इत्यस्य तु नात्र ग्रहणम् , इडभावस्याऽपि निपात्यत्वापत्तेः । ननु क्तवतुप्रत्यये फुल्लवानिति कथम् । क्तवतुप्रत्यये क्तस्याऽनर्थकत्वेन फुल्लशब्देनाऽग्रहणादित्यत आह—

निपातनमिष्यते । फुल्लवान् । क्षीबादिषु तु क्तप्रत्ययस्यैव तलोपः । तस्यासिद्धत्वात्प्राप्तस्येटोऽभावश्च निपात्यते । क्षीबो मत्तः । कृशस्तनुः । उल्लाघो नीरोगः । अनुपसर्गात् किम् ? ३०३६ आदितश्च ७।२।१६॥ आकारेतो निष्ठाया इण्न स्यात् । ३०३७ ति च ७।४।८९॥ चरफलोरत उत्स्यात्तादौ किति । प्रफुल्तः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः । कथं तर्हि 'लोध्रद्रुमं सानुमतः प्रफुल्लम्' इति । 'फुल्ल विकसने' पचाद्यच् । सूत्रं तु फुल्तादिनिवृत्त्यर्थम् । 'उत्फुल्लसंफुल्लयोरुपसंख्यानम्' ( वा ४८४३ ) । ३०३८ नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ८।२।५६॥ एभ्यो निष्ठातस्य नो वा । नुन्नः । नुत्तः । विद विचारणे, रौधादिक एव गृह्यते । उन्दिना परेण साहचर्यात् । विन्नः । वित्तः । वेत्तेस्तु विदितः । विद्यतेर्विन्नः । उन्दी । ३०३९ श्वीदितो निष्ठायाम् ७।२।१४॥ श्वयतेरीदितश्च निष्ठाया इण्न । उन्नः । उत्तः । त्राणः । त्रातः । घ्राणः । घ्रातः । ह्रीणः । ह्रीतः । ३०४० न ध्याख्यापॄमूर्च्छिमदाम् ८।२।५७॥ एभ्यो निष्ठातस्य नत्वं न । ध्यातः ।

---

क्तवत्वेकदेशस्यापीति । क्षीबादिष्विति । क्षीबकृशोल्लाघेष्वित्यर्थः । क्तप्रत्ययस्यैवेति । ननु क्तवत्वेकदेशस्यापीत्यर्थः । अनर्थकत्वादिति भावः । तस्येति । तलोपस्येत्यर्थः । क्षीबो मत्त इति । क्षीबेः क्तः, तलोपः, इडभावश्च । कृशस्तनुरिति । कृशेः क्तः, इडभावश्च । उल्लाघो नीरोग इति । लाघेः क्तः, तलोपः, इडभावश्च । अत्र मत्तादिरेवार्थः निपातनबलात् । अनुपसर्गात्किमिति । अथ 'प्रफुल्त' इति प्रत्युदाहरणं विवक्षन् तत्र विशेषमाह—आदितश्च । निष्ठाया इण्न स्यादिति । 'श्वीदितः' इत्यतो निष्ठायामिति 'नेड्वशि' इत्यतो नेडिति चानुवर्तते इति भावः । ति च । 'चरफलोश्च' इति सूत्रानुवृत्तिं मत्वा आह—चरफलोरिति । अत उत्स्यादिति । 'उत्परस्यातः' इत्यतस्तदनुवृत्तेरिति भावः । कितीति । 'दीर्घ इणः किति' इत्यतः मण्डूकप्लुत्या तदनुवर्तते इति भावः । वस्तुतस्तु कितीत्यनुवृत्तिर्निर्मूला, निष्फला च । तयोः सेट्कत्वेन निष्ठां विना तकारादिप्रत्ययाऽभावात् । कथं तर्हीति । प्रफुल्लमित्यस्य सोपसर्गत्वेन निष्ठातस्य लत्वासम्भवादिति भावः । समाधत्ते—फुल्लेति । ननु फुल्लेः पचाद्यचैव फुल्ल इत्यस्य सिद्धेः फुल्ल इत्यस्य निपातनं व्यर्थमित्यत आह—सूत्रं त्विति । उत्फुल्लसम्फुल्लयोरिति । 'निष्ठातस्य लत्वनिपातनम्'मिति शेषः । सोपसर्गार्थं वचनम् । नुदविदोन्द । ह्रीघ्रातोरप्राप्ते, इतरेभ्यो नित्यं प्राप्ते नत्वविकल्पोऽयम् । रौधादिक इति । 'विद विचारणे' इत्ययमित्यर्थः । वेत्तेस्त्विति । 'विद ज्ञाने' इत्यस्येत्यर्थः । अयं सेट्, अनिट्केष्वनन्तर्भावात् । तदाह—विदित इति । अत्र निष्ठातस्य इटा व्यवहितत्वान्नत्वं नेति भावः । विद्यतेर्विन्न इति । 'विद सत्तायाम्' इत्ययमनिट् 'रदाभ्याम्' इति नित्यं नत्वमिति भावः । उन्दीति । उदाहरणसूचनम् । श्वीदितो निष्ठायाम् । श्वि, ईदित् अनयोः समाहारद्वन्द्वात्पञ्चमी । 'नेड्वशि' इत्यतो नेडित्यनुवर्तते तदाह—श्वयतेरिति । न ध्याख्या । पञ्च-

ख्यातः। पूर्तः। 'राल्लोपः'। मूर्तः। मत्तः। **३०४१ वित्तो भोगप्रत्यययोः ४।२।५८॥** विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीते चार्थे। वित्तं धनम्। वित्तः पुरुषः। अनयोः किम्—विन्नः। 'विभाषा गमहन–' (सू ३०६६)। इति क्सौ वेट्कत्वादिह नेट्। **३०४२ भित्तं शकलम् ८।२।५९॥** भिन्नमन्यत्। **३०४३ ऋणमाधमर्ण्ये। ८।२।६०॥** ऋधातोः क्ते तकारस्य नत्वं निपात्यते आधमर्ण्यव्यवहारे। ऋतमन्यत्। **३०४४ स्फायः स्फी निष्ठायाम् ६।१।२२॥** स्फीतः। **३०४५ इण्निष्ठायाम् ७।२।४७॥** निरः कुषो निष्ठाया इट् स्यात्। 'यस्य विभाषा'

---

**स्यर्थे षष्ठी। तदाह—**ख्य इति। ध्यात इति। **ध्यैधातोः क्तः 'आदेचः' इत्यात्वम्। अत्र 'संयोगादेरातः' इति प्राप्तं नत्वं न।** ख्यात इति। **ख्याञादेशपक्षे यण्वत्वात् 'संयोगादेरातः' इति प्राप्तं नत्वं न। ख्यादेशस्य शस्य यत्वे तु यस्य षत्वप्रकरण-गतस्याऽसिद्धत्वाद्यण्वत्त्वाऽभावात् 'संयोगादेरातः' इति नत्वस्य न प्रसक्तिः। स्वतः सिद्धख्याधातोस्तु आर्धधातुके प्रयोगो नास्त्येवेति ख्याग्रहणं व्यर्थमेव।** पूर्त इति। **पॄधातोः क्तः 'श्र्युकः क्किति' इति नेट् 'उदोष्ठ्यपूर्वस्य' इति उत्त्वं, रपरत्वम्, इह 'रदाभ्याम्' इति प्राप्तं नत्वं न। मुर्छाधातोः क्ते आह—**राल्लोप इति। **छस्य लोप इति भावः।** मूर्त इति। **'आदितश्च' इति नेट्। छलोपे 'रदाभ्याम्' इति प्राप्तं नत्वं न। 'हलि च' इति दीर्घः।** मत्त इति। **'मदी हर्षग्लेपनयोः' अस्मात् क्तः 'श्वीदितः' इति नेट्। अत्र 'रदाभ्याम्' इति प्राप्तं नत्वं न।** वित्तो भोग। **भुज्यत इति भोगः भोग्यम्। प्रतीयते इति प्रत्ययः प्रख्यातः। अत्र विन्दतेरेव ग्रहणमिति भाष्ये स्पष्टम्। तदाह—**विन्दतेरिति। निपातोऽयमिति। **'नुदविदोन्द' इति प्राप्तस्य पाक्षिकनत्वस्य अभावनिपातनमित्यर्थः। तस्य भोगप्रत्यययोः कदाऽपि नत्वं नेत्यर्थः।** प्रतीते इति। **प्रख्याते इत्यर्थः।** वित्तः पुरुष इति। **प्रख्यात इत्यर्थः।** विन्न इति। **लब्धश्चोरा-दिरित्यर्थः। अत्र 'यस्य विभाषा' इति इण्निषेधमुपपादयति—**विभाषा गमेति। **'एका-च' इति निषेधाच्चेत्यपि बोध्यम्।** भित्तं शकलम्। **शकले वाच्ये भिदेः क्तस्य नत्वाऽ-भावो निपात्यते। शकलत्वजातिविशिष्टे अवयवार्थमनपेक्ष्य रूढोऽयम्। ततश्च भिन्नशकलयोः पर्यायत्वान्न सहप्रयोगः। भिदिक्रियाविवक्षायां तु 'भित्तं भिन्न' मिति-भवतीति भाष्ये स्पष्टम्।** ऋणमाधमर्ण्ये। **अधमर्णस्य कर्म आधमर्ण्यम्।** आधमर्ण्यव्यव-हारे इति। **स च अन्यदीयं द्रव्यं गृहीतमियता कालेन इयत्या वृद्ध्या प्रतिदीयते इति संविद्रूपः, तस्मिन्विषये इत्यर्थः।** ऋतमन्यदिति। **सत्यमित्यर्थः।** स्फायः स्फी। **'स्फायी-वृद्धौ' अस्य स्फीभावः स्यात् निष्ठायां परत इत्यर्थः।** इण्निष्ठायाम्। **'निरः कुषः' इति सूत्रमनुवर्तते। तदाह—** निर इति। **ननु 'आर्द्धधातुकस्येट्' इत्येव सिद्धे किमर्थ-मिदं सूत्रमित्यत आह—**यस्येति। **कुषधातोः तृजादौ 'निरः कुषः' इति पूर्वसूत्रेण वेट्-कत्वात् 'यस्य विभाषा' इति प्राप्तस्येण्निषेधस्य बाधनार्थं पुनरिह विधानमित्यर्थः।**

( सू ३०२५ ) इति निषेधे प्राप्ते पुनर्विधिः । निष्कुषितः । **३०४६ वसतिक्षुधोरिट् ७।२।५२॥** आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात् । उषितः । क्षुधितः । **३०४७ अञ्चेः पूजायाम् ७।२।५३॥** पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात् । अञ्चितः । गतौ तु अक्तः । **३०४८ लुभो विमोहने ७।२।५४॥** लुभः क्त्वानिष्ठयोर्नित्यमिट् स्यान्न तु गार्ध्ये । लुभितः । गार्ध्ये तु, लुब्धः । **३०४९ क्लिशः क्त्वानिष्ठयोः ७।२।५०॥** इड्वा स्यात् 'क्लिश उपतापे' अस्य नित्यं प्राप्ते 'क्लिशू विबाधने' अस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां निषेधे प्राप्ते विकल्पः । क्लिशितः । क्लिष्टः । **३०५० पूङश्च ७।२।५१॥** पूङः क्त्वानिष्ठयोरिड्वा स्यात् । **३०५१ पूङः क्त्वा च १।२।२२॥** पूङः क्त्वा निष्ठा च सेट् किन्न स्यात् । पवितः । पूतः । क्त्वाग्रहणमुत्तरार्थम् । 'नोपधात्—' ( सू ३३२४ ) इत्यत्र हि

---

इडित्यनुवर्तमाने पुनरिड्ग्रहणं तु 'स्वरतिसूति' इत्यतो वाग्रहणानुवृत्तिनिवृत्तये । वसतिक्षुधोरिट् । पञ्चम्यर्थे षष्ठी । क्त्वानिष्ठयोरिति । 'क्लिशः क्त्वानिष्ठयोः' इत्यतः तदनुवृत्तेरिति भावः । नित्यमिति । इडित्यनुवर्तमाने पुनरिड्ग्रहणस्य 'स्वरतिसूति' इत्यतो वाग्रहणानुवृत्तिनिवृत्त्यर्थत्वादिति भावः । 'एकाच उपदेशे' इति इण्निषेधबाधनार्थमिदं सूत्रम् । उषित इति । यजादित्वात् सम्प्रसारणम्, 'शासिवसिघसीनां च' इति षः । अञ्चेः पूजायाम् । 'उदितो वा' इति क्त्वायां विकल्पे प्राप्ते निष्ठायां तु 'यस्य विभाषा' इति निषेधे प्राप्ते वचनम् । अञ्चित इति । 'नाञ्चेः पूजायाम्' इति नलोपनिषेधः । लुभो विमोहने । 'लुभ' इति पञ्चमी । 'लुभ विमोहने' तुदादिः । 'विमोहनं व्याकुलीकरण'मिति वृत्तिः । 'लुभ गार्ध्ये' दिवादिः । अत्र तौदादिकस्यैव ग्रहणम्, तस्यैव विमोहनार्थकत्वात् । न तु दैवादिकस्य, तस्य गार्ध्यार्थकत्वात् । तदाह—न तु गार्ध्ये इति । 'तीषसह' इति क्त्वायां विकल्पे प्राप्ते निष्ठायां तु 'यस्य विभाषा' इति निषेधे प्राप्ते वचनम् । लुभित इति । विमोहित इत्यर्थः । गार्ध्ये तु लुब्ध इति । अभिकाङ्क्षावानित्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति कर्तरि क्तः । क्लिशः क्त्वानिष्ठयोः । 'इड्वा स्या'दिति शेषः । 'स्वरतिसूति' इत्यतो वेत्यनुवृत्तेरिति भावः । नित्यं प्राप्ते इति । 'आर्धधातुकस्येड्वलादेः' इत्यनेनेति भावः । विकल्पे सिद्ध इति । उदित्त्वादिति भावः । निष्ठायां निषेधे प्राप्ते इति । 'यस्य विभाषा' इत्यनेनेति भावः । पूङश्च । क्त्वानिष्ठयोरिति । 'क्लिशः क्त्वानिष्ठयोः' इत्यतस्तदनुवृत्तेरिति भावः । इड्वेति । 'स्वरतिसूति' इत्यतः वाग्रहणस्य 'इण्निष्ठायाम्' इत्यतः इट् इत्यस्य चानुवृत्तेरिति भावः । 'श्र्युकः' इति निषेधे प्राप्ते विकल्पोऽयम् । पूङः क्त्वा च । 'न क्त्वा सेट्' इत्यतो न सेट् इत्यनुवर्तते । 'असंयोगात्' इत्यतः किदिति 'निष्ठा शीङ्' इत्यतो निष्ठेति च । तदाह—पूङः क्त्वा निष्ठा चेत्यादि । ननु 'न क्त्वा सेट्' इत्येव सिद्धे किमर्थमिह क्त्वाग्रहणमित्यत आह—क्त्वाग्रहणमुत्तरार्थमिति । तदेवोपपाद-

क्त्वैव सम्बध्यते । **३०५२ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः १।२।१९॥** एभ्यः सेण्निष्ठा किन्न स्यात् । शयितः । शयितवान् । अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । शेशियतः । शेशियतवान् । 'आदिकर्मणि निष्ठा वक्तव्या' (वा २०५१) **३०५३ आदिकर्मणि क्तः कर्तरि च ३।४।७१॥** आदिकर्मणि यः क्तः स कर्तरि स्यात् । चाद्भावकर्मणोः । **३०५४ विभाषा भावादिकर्मणोः ७।२।१७॥** भावे आदिकर्मणि च आदितो निष्ठाया इड्वा स्यात् । प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन । 'ञि ष्विदा' इति भ्वादिरत्र गृह्यते, ञीद्भिः साहचर्यात् । स्विद्यतेस्तु स्विदितः इत्येव । 'ञि मिदा' 'ञि क्ष्विदा' दिवादी भ्वादी च । प्रमेदितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । धर्षितं तेन । सेट् किम् । प्रस्विन्नः । प्रस्विन्नं तेनेत्यादि । **३०५५ मृषस्तितिक्षायाम् १।२।२०॥** सेण्निष्ठा किन्न स्यात् । मर्षितः । मर्षितवान् । तितिक्षायां किम् ।

---

यति—नोपधादित्यत्रेति । तत्र हि क्त्वाप्रत्ययस्यैवानुवृत्तिरिह 'पूङश्च' इत्येवोक्तौ तु 'निष्ठा शीङ्' इत्यतो निष्ठाग्रहणमेवानुवर्तेतेति भावः । निष्ठा शीङ् । 'न क्त्वा सेट्' इत्यतः न सेडित्यनुवर्तते । 'असंयोगात्' इत्यतः किदिति च । तदाह—एभ्य सेडिति । शीङित ङकारस्य फलमाह—अनुबन्धेति । यङ्लुकि 'श्तिपा शपा' इति निषेधार्थं इत्यर्थः । शेशियतवानिति । अत्र कित्त्वनिषेधाऽभावात् कित्त्वान्न गुण इति भावः । आदिकर्मणि निष्ठा वक्तव्येति । दीर्घकालव्यासक्तायाः कटाद्युत्पादनक्रियायाः आरम्भकालविशिष्टोऽशः आदिकर्म । तत्र विद्यमानाद्धातोर्निष्ठा वक्तव्येत्यर्थः । तत्र आद्येषु क्रियाक्षणेषु भूतेष्वपि क्रियाया भूतत्वाऽभावात् भूते विहिता निष्ठा न प्राप्तेत्यारम्भः । आदिकर्मणि क्तः कर्तरि च । चाद्भावकर्मणोरिति । 'तयोरेव कृत्य' इत्यतस्तदनुवृत्तेरिति भावः । 'प्रकृतः कटं देवदत्तः, प्रकृतवान् कटं देवदत्तः' इति भाष्ये उदाहृतम् । आरभ्यमाणकरणक्रियेति बोधः । विभाषा भावादिकर्मणोः । आदितो निष्ठाया इड्वेति । 'आदितश्च' इत्यतः आदित इति 'श्वीदितः' इत्यतः निष्ठाग्रहणं 'नेड्वशि' इत्यतो नेति चानुवर्तते इति भावः । निषेधस्य वैकल्पिकत्वात्पक्षे इडभ्यनुज्ञायते । प्रस्वेदितश्चैत्र इति । चैत्रकर्तृका आरभ्यमाणप्रस्वेदनक्रियेत्यर्थः । ञीद्भिरिति । ञिः इत् येषां ते ञीतः, तैर्मिदिप्रभृतिभिरिति तदर्थः, स विषयः कित्त्वप्रतिषेधस्येति बोध्यम् । स्विद्यतेस्त्विति । 'ञि ष्विदा गात्रप्रक्षरणे' इति भ्वादिकस्यैव कित्त्वनिषेधविधौ ग्रहणमित्यर्थः । स्विदितः इति । 'विभाषा भाव' इति पक्षे इट् । कित्त्वनिषेधविधौ स्विद्यतेर्ग्रहणाऽभावात् कित्त्वान्न गुणः । अत्र स्विदादीनाम् 'आदितश्च' इति इट् प्रतिषिध्यते । भावादिकर्मणोस्तु पक्षे इट् । मृषस्तितिक्षायाम् । तितिक्षा क्षमा । सेण्निष्ठा किन्नेति । शेषपूरणमिदम् । 'निष्ठा शीङ्' इत्यतो निष्ठेति 'न क्त्वा सेट्' इत्यतः सेण्नेति, 'असंयोगात्' इत्यतः

अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः । **३०५६ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् १।२।२१॥** उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न स्यात् । द्युतितम्–द्योतितम् । मुदितं–मोदितं साधुना । प्रद्युतितः–प्रद्योतितः साधुः । प्रमुदितः–प्रमोदितः साधुः । उदुपधात् किम् । विदितम् । भाव–इत्यादि किम् । रुचितं कार्षापणम् । सेट् किम् । कुष्टम् । 'शब्विकरणेभ्य एवेष्यते' ( वा ६२६ ) । नेह । गुध्यतेर्गुधितम् । **३०५७ निष्ठायां सेटि । ६।४।५२॥** णेर्लोपः स्यात् । भावितः । भावितवान् । 'श्वीदितः–' (सू ३०३९) इति नेट् । सम्प्रसारणम् । शूनः । दस्तः । गुहू, गूढः । वनु, वतः । तनु, ततः । पतेः सनि वेट्कत्वादिडभावे प्राप्ते 'द्वितीया श्रित–' ( सू ६८६ ) इति सूत्रे निपातनादिट् । पतितः । 'सेऽसिचि' ( सू २५०६ ) इति वेट्कत्वात्सिद्धे कृन्तत्यादीनामीदित्त्वेनानित्य-

---

किदिति चानुवर्तत इति भावः । उदुपधाद्भावादिकर्मणोः । भावे उदाहरति—मुदितमित्यादि । आदिकर्मण्युदाहरति—प्रद्युतितः प्रद्योतितः साधुरिति । आदिकर्मणि कर्तरि क्तः । उदुपधात्किम् । विदितमिति । 'विद ज्ञाने' इति वेत्तेः रूपम् । गुध्यतेर्गुधितमिति । 'गुध परिवेष्टने' दिवादिः सेट्कः । निष्ठायां सेटि । णेर्लोपः । स्यादिति । शेषपूरणमिदम् । 'णेरनिटि' इत्यतो णेरिति 'आतो लोपः' इत्यस्माल्लोप इति चानुवर्तते इति भावः । 'अनिटी'ति निषेधादप्राप्ते आरम्भः । 'टु ओ श्वि गतिवृद्ध्योः' ,अस्मात् क्ते आह—श्वीदित इति नेडिति । सम्प्रसारणमिति । यजादित्वादिति भावः । सम्प्रसारणे सति पूर्वरूपे 'हलः' इति दीर्घे 'ओदितश्च' इति निष्ठानत्वे रूपमाह—शून इति । यद्यपि मूले 'ओदितश्च' इत्यत्र उच्छून इत्युदाहृतमेव, तथापि विशेषविवक्षया पुनरिहोपन्यासः । अत्र अकित्त्वेऽपि 'हल' इत्यारम्भसामर्थ्यादेव पूर्वरूपस्य सम्प्रसारणस्य... न च नित्यत्वात्सम्प्रसारणपूर्वरूपयोः 'श्र्युकः किति' इत्येव निषेधसिद्धेः । श्विग्रहणं व्यर्थमिति वाच्यम् । 'श्र्युकः किति' इत्यत्र 'एकाच उपदेशे' इत्यतः उपदेशे इत्यनुवृत्तेः । तथाच उपदेशे उगन्तत्वाऽभावात् निषेधाऽप्राप्तौ श्विग्रहणम् । अत एव 'स्तीर्ण'मित्यादौ उपदेशे उगन्तत्वाभावान्न इण्निषेधसिद्धिरित्यलम् । ईदित उदाहरति—दीप्त इति । 'दीपी दीप्तौ' दिवादिः । ईदित्वान्नेट् । गूढ इति । ऊदित्त्वेन वेट्कत्वात् 'यस्य विभाषा' इति नेट् । ढत्वधत्वष्टुत्वढलोपदीर्घाः । वनु वतः । तनु ततः इति । 'उदितो वा' इति क्त्वायां वेट्कत्वात् 'यस्य विभाषा' इति नेट् । 'अनुदात्तोपदेश' इति नकारलोपः । पतेः सनीति । 'पत्लृ गतौ' अस्य 'तनिपतिदरिद्राणामुपसंख्यानम्' इति सनि वेट्कत्वात् 'यस्य विभाषा' इति निष्ठायामिण्निषेधे प्राप्ते इत्यर्थः । 'पतित'शब्दे इटं साधयितुं युक्त्यन्तरमाह—सेऽसिचीति । 'कृती छेदने' 'चृती हिंसाग्रन्थनयोः' 'नृती गात्रविक्षेपे' एषामीदित्त्वं 'श्वीदितः' इति

त्वज्ञापनाद्वा । तेन 'धावितमिभराजधिया' इत्यादि । 'यस्य विभाषा' ( सू २०२५ ) इत्यत्रैकाच इत्येव । दरिद्रितः । ३०५८ क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ७।२।१८॥ क्षुब्धादीन्यष्टावनिट्कानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु । द्रवद्रव्यसम्पृक्ताः सक्तवो मन्थः, मन्थनदण्डश्च । क्षुब्धो मन्थश्चेत् । स्वान्तं मनः । ध्वान्तं तमः । लग्नं सक्तम् । निष्ठानत्वमपि निपातनात् । म्लिष्टमविस्पष्टम् । विरिब्धः स्वरः । म्लेच्छ, रेभृ अनयोरुपधाया इत्वमपि निपात्यते । फाण्टम् अनायाससाध्यः कषायविशेषः । माधवस्तु नवनीत-

इण्निषेधार्थमिति वक्तव्यम् । तन्न सम्भवति । एषां 'सेऽसिचि कृतचृतच्छृदतृदनृतः' इति सकारादौ वेट्कतया 'यस्य विभाषा' इत्येव निष्ठायां नित्यमिण्निषेधसिद्धेः । ततश्च एषामीदित्करणात् 'यस्य विभाषा' इति इण्निषेधस्य अनित्यत्वं विज्ञायते । एवञ्च कृतादीनां 'यस्य विभाषा' इति इण्निषेधस्य अभावसम्भावनायां 'श्वीदितः' इण्निषेधार्थमीदित्त्वमर्थवत् । तथा च पतितशब्दे 'यस्य विभाषा' इत्यनित्यत्वान्न भवतीत्यर्थः । तेनेति । 'यस्य विभाषा' इत्यस्याऽनित्यत्वज्ञापनेनेत्यर्थः । धावितमिति । 'स्वरतिसूति' इति धूञो वेट्कत्वेऽपि 'यस्य विभाषा' इति इण्निषेधो नेति भावः । ननु दरिद्राधातोः 'सनिपतिदरिद्राणामुपसङ्ख्यानम्' इति सनि वेट्कत्वात् 'यस्य विभाषा' इति निष्ठायामिण्निषेधः स्यादित्यत आह—यस्य विभाषेत्यत्रेति । क्षुब्धस्वान्त । क्षुब्ध, स्वान्त, ध्वान्त, लग्न, म्लिष्ट, विरिब्ध, फाण्ट, बाढ एषामष्टानां द्वन्द्वात्प्रथमाबहुवचनम् । मन्थ, मनः, तमः, सक्त, अविस्पष्ट, स्वर, अनायास, भृश एषामष्टानां द्वन्द्वात्सप्तमी । यथासङ्ख्यमन्वयः । समुदायेनेति । मन्थादिष्वेते रूढाः । अवयवार्थोऽभिनिवेशो न कर्तव्य इत्याह—द्रवद्रव्येति । अत्र याज्ञिकप्रसिद्धिरेव शरणीकर्तव्या । मन्थनदण्डश्चेति । 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः । क्षुब्ध इति । 'क्षुभ सञ्चलने' अस्मात् क्तः, इडभावो निपात्यते । 'झषस्तथोः' इति धः, जश्त्वम् । स्वान्तमिति । स्वनधातोः क्तः । 'अनुनासिकस्य क्वि' इति दीर्घः, निपातनान्नेट् । 'स्वान्तं हृन्मानसं मनः' इत्यमरः । ध्वान्तं तम इति । ध्वनेः क्तः । 'अनुनासिकस्य क्वि' इति दीर्घः । 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः । लग्नं सक्तमिति । सम्बद्धमित्यर्थः । लगेः क्तः, इडभावः । तत्र रदाभ्यां परत्वाऽभावात् कथं निष्ठानत्वमित्यत आह—निष्ठानत्वमपि निपातनादिति । म्लिष्टमविस्पष्टमिति । इडभावे 'व्रश्च' इति षः । तकारस्य ष्टुत्वेन टः । 'अथ म्लिष्टमविस्पष्टम्' इत्यमरः । विरिब्धः स्वर इति । स्वरविशेष इत्यर्थः । 'रेभृ शब्दे' अस्मात् क्तः, इडभावे 'झषस्तथोर्धोऽधः' इति धः । उभयत्र धातुस्वरूपं प्रदर्शयन् आह—म्लेच्छ रेभृ अनयोरिति । इत्वमपीति । इडभावश्चेत्यर्थः । फाण्टमिति । फणेः क्तः, इडभावः, निष्ठातस्य टत्वं च निपात्यते ।

भावात्प्रागवस्थापन्नं द्रव्यं फाण्टमिति वेदभाष्ये आह । बाढं भृशम् । अन्यत्र तु क्षुभितम् । 'क्षुब्धो राजा' इति त्वागमशास्त्रस्यानित्यत्वात् । स्वनितम् । ध्वनितम् । लगितम् । म्लेच्छितम् । विरेभितम् । फणितम् । बाहितम् ।

**३०५९ धृषिशसी वैयात्ये ७।२।१९॥** एतौ निष्ठायामविनय एवानिटौ स्तः । धृष्टः । विशस्तः । अन्यत्र धर्षितः । विशसितः । भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्ति । अत एव 'नियमार्थमिदं सूत्र'मिति वृत्तिः । धृषेरादित्वे फलं चिन्त्यमिति हरदत्तः । माधवस्तु भावाऽऽदिकर्मणोरवैयात्ये विकल्पमाह । धृष्टम्–धर्षितम् । प्रधृष्टः–प्रधर्षितः । **३०६० दृढः स्थूलबलयोः ७।२।२०॥** स्थूले बलवति च

---

तस्याऽसिद्धत्वात् 'अनुनासिकस्य' इति दीर्घः । 'अनायासकृतं फाण्टम्' इत्यमरः । वृत्तिकृन्मतमाह—कषायविशेष इति । 'यदश्रृतमपिष्टं च कषायमुदकसंसर्गमात्राद्धि भक्तरसमीषदुष्णं तत्फाण्टमित्युच्यते' इति वृत्तौ स्थितम् । वेदभाष्ये आहेति । 'तद्धै नवनीतं भवति । घृतं वै देवानां फाण्टं 'मनुष्याणाम्' इति शतपथब्राह्मणव्याख्यावसरे आहेत्यर्थः । बाढं भृशमिति । 'बाहृ प्रयत्ने' अस्मात् क्तः, इडभावः, ढत्वधत्वष्टुत्वढलोपाः । अन्यत्र त्विति । मन्थाद्यर्थाभावाऽभाव इत्यर्थः । धृषिशसी । वियातः अविनीतः, तस्य भावः वैयात्यम् । तत्र 'ञि धृषा प्रागल्भ्ये' इत्यस्य आदित्वादेवेण्निषेधः सिद्धः । 'शसु हिंसायाम्' इत्यस्य तु 'उदितो वा' इति क्त्वायां वेट्कत्वात् 'यस्य विभाषा' इति इण्निषेधः सिद्धः । अतो नियमार्थमित्याह—अविनय एवेति । धृष्टः विशस्त इति । अविनीत इत्यर्थः । अन्यत्रेति । वैयात्याऽभावे इत्यर्थः । धर्षित इति । बलात्कृत इत्यर्थः । विशसित इति । हिंसित इत्यर्थः । अत्र वैयात्याऽभावादिण्निषेधो नेति भावः । ननु धृषेरादित्वात् 'विभाषा भावादिकर्मणोः' इति भावे आदिकर्मणि च इड्विकल्पे प्राप्ते तदंशे नित्यार्थोऽत्र विधिरस्तु । ततश्च भावादिकर्मभ्यामन्यत्र वैयात्याऽभावेऽपि 'आदितश्च' इति इण्निषेध एव स्यादित्यत आह—भावादिकर्मणोस्त्विति । नास्तीति । अनभिधानादिति भावः । तत्र वृद्धसम्मतिमाह—अत एवेति । भावकर्मणोर्धृषेरनभिधानादेवेत्यर्थः । अन्यथा धृषेरादित्वात् 'विभाषा भावादिकर्मणोः' इति भावे आदिकर्मणि च इड्विकल्पे प्राप्ते तदंशे नित्यार्थतया विधानार्थत्वापत्तेरिति भावः । चिन्त्यमिति । धृषेरादित्वं हि न वैयात्ये आदित्वलक्षणेण्निषेधार्थम्, 'धृषिशसी वैयात्ये' इत्येव सिद्धेः । नापि वैयात्यादन्यत्र आदित्वलक्षणेण्निषेधार्थम्, धृषेर्वैयात्य एव इण्निषेधनियमेन ततोऽन्यत्र आदित्वलक्षणनिषेधाऽभावात् । नापि धृषेर्वैयात्ये भावादिकर्मणोर्विषये 'विभाषा भावादिकर्मणोः' इति इड्विकल्पार्थम्, भावादिकर्मणोर्वैयात्ये धृषेरनभिधानात् । तस्माद्धृषेरादित्वं व्यर्थमिति हरदत्त आहेत्यर्थः । माधवस्त्विति । अवैयात्ये भावादिकर्मणोरनभिधाने प्रमाणाऽभावादिति भावः । तत्र अवैयात्ये भावे उदाहरति–धृष्टम् धर्षितमिति । आदिकर्मण्युः

निपात्यते । 'दृह दृहि वृद्धौ' । क्तस्येडभावः, तस्य ढत्वम्, हस्य लोपः, इदितो नलोपश्च । दृहितः । दृंहितोऽन्यः । ३०६१ प्रभौ परिवृढः ७।२।२१॥ 'बृह बृहि वृद्धौ' । निपातनं प्राग्वत् । परिबृहितः । परिबृंहितोऽन्यः । ३०६२ कृच्छ्रगहनयोः कषः ७।२।२२॥ कषो निष्ठाया इण्न स्यादेतयोरर्थयोः । कष्टं दुःखं तत्कारणं च । 'स्यात्कष्टं कृच्छ्रमाभीलम्' । कष्टो मोहः । कष्टं शास्त्रम् । दुरवगाहमित्यर्थः । कषितमन्यत् । ३०६३ घुषिरविशब्दने ७।२।२३॥ घुषिर्निष्ठायामनिट् स्यात् । घुष्टा रज्जुः । अविशब्दने किम् । घुषितं वाक्यम् । शब्देन प्रकटीकृताऽभिप्रायमित्यर्थः । ३०६४ अर्देः संनिविभ्यः ७।२।२४॥ एतत्पूर्वादर्देर्निष्ठाया इण्न स्यात् । समर्णः । न्यर्णः । व्यर्णः । अर्दितोऽन्यः । ३०६५ अभेश्चाविदूर्ये ७।२।२५ ॥ अभ्यर्णम् । नाऽतिदूरमासन्नं वा । अभ्यर्दितमन्यत् । ३०६६ णेरध्ययने वृत्तम् ७।२।२६॥ ण्यन्ताद्वृतेः क्तस्येडभावो णिलुक्चाधीयमानेऽर्थे । वृत्तं छन्दः, छात्रेण संपादितम्, अधीतमिति यावत् । अन्यत्र तु वर्तिता रज्जुः । ३०६७ श्रृतं पाके ६।१।२७॥ श्रातिश्रपयत्योः क्ते श्रृभावो

---

दाहरति—प्रवृद्धः प्रवर्धित इति । दृढः स्थूलबलयोः । बलशब्दः अर्शआद्यजन्तः बलवत्परः । तदाह—बलवति चेति । तस्येति । निष्ठातकारस्य ढत्वं निपात्यते इत्यर्थः । हस्य लोप इति । 'निपात्यते' इति शेषः । इदित इति । अनिदितस्तु नलोपः सिद्ध एवेति भावः । ननु हस्य ढत्वे कृते 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वे तस्य ष्टुत्वेन 'ढो ढे' इति ढलोपे दृढ इति सिद्धम् । ततश्च इडभाव एव निपात्यताम्, न तु हकारलोपो ढत्वं चेति चेत्? मैवम् । तथाहि सति द्रढीयानित्यादौ ढलोपस्याऽसिद्धत्वेन ऋकारस्य संयोगपरतया लघुत्वाऽभावात् 'र ऋतो हलादेर्लघोः' इति रभावो न स्यात् । अत्र हकारलोपस्य ढत्वस्य च निपातने तु ऋकारस्य न संयोगपरकत्वम् । अस्य हलोपस्य साम्प्रतिकत्वेन असिद्धत्वाऽभावादिति भाष्ये स्पष्टम् । प्रभौ परिवृढः । प्राग्वदिति । तकारढत्वस्य हलोपस्य चेत्यर्थः । कृच्छ्रगहनयोः । कृच्छ्रशब्दो दुःखे तत्कारणे च वर्तते । कष्टं दुःखं तत्कारणं चेति । 'स्यात् कष्टं कृच्छ्रमाभीलम्' इत्यमरकोशवाक्यम् । दुःखकारणे उदाहरति—कष्टो मोह इति । गहने उदाहरति—कष्टं शास्त्रमिति । गहनशब्दं विवृणोति—दुरवगाहमिति । घुषिरविशब्दने । घुष्टा रज्जुरिति । उत्पादितेत्यर्थः । आयामितेति वा । शब्देन अभिप्रायप्रकाशनं विशब्दनम् । तदाह–शब्देनेति । अर्देः सन्निविभ्यः । समर्ण इति । सम् अर्द् त इति स्थिते 'रदाभ्याम्' इति निष्ठातस्य पूर्वदकारस्य च नत्वम्, णत्वम् । अभेश्चाविदूर्ये । अविदूरस्य भावः आविदूर्यम् । तस्मिन् गम्ये अभेः परः अर्दिरनिट्क इत्यर्थः । सामीप्य इत्येव तु नोक्तम् । अनतिदूरस्य असङ्ग्रहापत्तेः । तत्सूचयन्नाह—नातिदूरमिति । णेरध्ययने । णिलुक् चेति । णि-

निपात्यते क्षीरहविषोः पाके। शृतं क्षीरं, स्वयमेव विक्लिन्नं पक्वं वेत्यर्थः। क्षीरहविर्भ्यामन्यत्तु श्राणं। श्रपितं वा। **३०६८ वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ७।२।२७॥** एते णिचि निष्ठान्ता वा निपात्यन्ते। पक्षे, दमितः। शमितः। पूरितः। दासितः। स्पाशितः। छादितः। ज्ञापितः। **३०६९ रुष्यमत्वरसंघुषास्वनाम् ७।२।२८॥** एभ्यो निष्ठाया इड्वा स्यात्। रुष्टः। रुषितः। आन्तः। अमितः। तूर्णः। त्वरितः। अस्याऽऽदित्त्वे फलं

लोपे तु लघूपधगुणः स्यादिति भावः। अधीयमान इति। सूत्रे अध्ययनशब्दः कर्मणि ल्युडन्त इति भावः। शृतं पाके। 'श्रा पाके' घटादिः। तस्माद्धेतुमण्णिचि पुकि मित्वाद्ध्रस्वे अपि इति भवतीति स्थितिः। श्रातिश्रपयत्योरिति। अण्यन्तस्य ण्यन्तस्य च श्राधातोरित्यर्थः। क्षीरहविषोरिति। एतच्च वार्तिकाल्लभ्यते। अण्यन्तं व्याचष्टे—स्वयमेव विक्लिन्नमिति। श्राधातुरण्यन्तः पाके वर्तते। पाकश्चाऽत्र विक्लित्तिरेव विवक्षिता। न तु तदनुकूलव्यापारोऽपि। तथाच श्राधातोर्विक्लित्त्यावकर्मकत्वात् 'गत्यर्थाकर्मक' इति कर्तरि क्तः। तथाच क्षीरं विक्लित्त्याश्रय इति फलितम्। ततो णिचि विक्लित्त्यनुकूलव्यापारार्थकपचिना समानार्थकात् 'श्रपि' इत्यस्मात् कर्मणि क्तप्रत्यये फलितमाह—पक्वमिति। एतच्च भाष्यकैयटयोः स्पष्टम्। 'क्षीराज्यहविषां शृतम्' इत्यमरस्य तु प्रमाद एव, 'क्षीरहविषोः' इति वार्तिकविरोधात्। वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः। 'णेरध्ययने वृत्तम्' इत्यतो णेरित्यनुवर्तते। 'दमु शमु उपशमे' ण्यन्ताभ्यामिडभावो निपात्यते। 'अनुनासिकस्य' इति दीर्घः। णिलोपस्तु न स्थानिवत्, निपातनाद्दीर्घविधौ तन्निषेधाच्च। दान्तः। शान्तः। 'पूरी आप्यायने' ण्यन्तात् क्तः, इडभावो निपात्यते, णिलोपः रपरत्वाल्लत्वम्, णत्वम्, पूर्णः। एतेन 'न ध्याख्यापॄमूर्च्छि' इत्येव सिद्धे पूर्णग्रहणं व्यर्थमित्यपास्तम्, पूरीधातोर्ण्यन्तात् पूर्णरूपार्थत्वात्। 'दसु उपक्षये' ण्यन्तात् इडभावो निपात्यते, उपधावृद्ध्यभावश्च, णिलोपः। 'स्पश बाधने' ण्यन्तात् क्तः, इडभावो निपात्यते उपधावृद्ध्यभावश्च णिलोपः, स्पष्टम्। 'छद अपवारणे' ण्यन्तात् क्तः। इडभावो वृद्ध्यभावश्च निपात्यते। णिलोपः' 'रदाभ्याम्' इति नत्वम्, छन्नः। 'ज्ञप मिच्च' इति चुरादिण्यन्तात् क्तः। इडभावो णिलोपः इति कैयटः। ज्ञप्तः। पक्ष इति। निपातनाऽभावपक्ष इत्यर्थः। दमितः शमित इति। अमन्तत्वेन मित्वाद्ध्रस्वः। ज्ञापित इति। अचौरादिकस्य रूपम्। चौरादिकस्य तु ज्ञपित इत्येव। रुष्यमत्वर। रुषि, अम, त्वर, सङ्घुष्, आस्वन् एषां द्वन्द्वः। णेरिति निवृत्तम्। पञ्चम्यर्थे षष्ठी। तदाह—एभ्य इति। वा स्यादिति। 'वा दान्त' इत्यतस्तदनुवृत्तेरिति भावः। रुष्टः रुषितः इति। 'तीषसह' इति रुषो वेट्कत्वात् 'यस्य विभाषा' इति निषेधे प्राप्ते विकल्पोऽयम्। आन्तः अमित इति। 'अम गत्यादिषु' क्तः। इडभावपक्षे 'अनुनासिकस्य' इति दीर्घः। तूर्णः त्वरित इति। 'ञि

मन्दम् । संघुष्टः । संघुषितः । आस्वान्तः । आस्वनितः । ३०७० हृषेर्लोमसु ७।२।२९॥ हृषेर्निष्ठाया इड्वा स्यात् लोमसु विषये । हृष्टं-हृषितं लोम । 'विस्मित-प्रतिघातयोश्च' ( वा ४४१७ ) । हृष्टो-हृषितो मैत्रः । विस्मितः प्रतिहतो वे-त्यर्थः । अन्यत्र तु, 'हृषु अलीके' उदित्त्वान्निष्ठायां नेट् । 'हृष तुष्टौ' इट् । ३०७१ अपचितश्च ७।२।३०॥ चायेर्निपातोऽयं वा । अपचितः । अपचायितः । ३०७२ प्यायः पी ६।१।२८॥ पी वा स्यान्निष्ठायाम् । व्यवस्थितविभाषेयम् । तेन स्वाङ्गे नित्यम् । पीनं मुखम् । अन्यत्र प्यानः-पीनः स्वेदः । 'सोपसर्गस्य न' ( वा ५०६५ ) प्रप्यानः । 'आङ्पूर्वस्याऽन्धूधसोः स्यादेव' ( वा ३४६१ ) । आपीनोऽन्धुः । आपीनमूधः । ३०७३ ह्लादो निष्ठायाम् ६।४।९५॥ ह्रस्वः

---

त्वरा सम्भ्रमे' क्तः, इडभावपक्षे 'ज्वरत्वर' इत्यूठ् । 'रदाभ्याम्' इति नत्वम् , णत्वम् 'आदितश्च' इति नित्यमिण्निषेधे प्राप्ते विकल्पोऽयम् । आदित्त्वस्य तु फलमात्मनेपदमात्रम् । तदाह—अस्य आदित्त्वे फलं मन्दमिति । तथाच 'एध वृद्धौ' इत्यादिवत् इत्वानुबन्धत्वमेव न्याय्यमिति भावः । सङ्घुष्टः सङ्घुषित इति । 'घुषिरविशब्दने इति घुषेः सम्पूर्वस्य नित्यमिण्निषेधे प्राप्ते विकल्पोऽयम् । आस्वान्तः आस्वनितः इति । आङ्पूर्वस्वनेः क्तः । इडभावपक्षे 'अनुनासिकस्य' इति दीर्घः । 'क्षुब्धस्वान्त' इति निपातनं तु आङ्पूर्वस्य स्वनेर्न भवति, परत्वादस्यैव विकल्पस्य प्राप्तेरित्याहुः । 'न वा' इति सूत्रभाष्ये तु सङ्घुषाऽऽस्वनोर्विषये उभयत्र विभाषेत्युक्तम् । हृषेर्लोमसु । लोमसु कर्तृष्विति बोध्यम् । इदञ्च 'अजर्यम्' इति सूत्रे भाष्ये स्पष्टम् । हृष्टं हृषितं लोमेति । 'गत्यर्थाऽकर्मक' इति कर्तरि क्तः । रोमाञ्चितभूतमित्यर्थः । विस्मितप्रतिघातयोश्चेति । वार्तिकमिदम् । 'हृषेर्निष्ठाया इड्वा' इति शेषः । उदित्त्वादिति । 'उदितो वा' इति क्त्वायां वेट्कत्वात् 'यस्य विभाषा' इति निष्ठायां नेडित्यर्थः । तथा अलीकेऽर्थे हृष्ट इत्येव । मृषोक्तवानित्यर्थः । इडिति । 'हृष तुष्टौ' इति धातोः क्ते इडेव भवतीत्यर्थः । हृषितः, तुष्ट इत्यर्थः । विस्मितप्रतिघातयोस्तु धातूनामनेकार्थत्वाद्वृत्तिः । तत्र लोमसु विस्मितप्रतिघातयोश्च 'हृषु अलीके' इत्यस्मात् 'यस्य विभाषा' इति नित्यमिण्निषेधे प्राप्ते विभाषेयम् , 'हृष तुष्टौ' इत्यस्मात्तु नित्यमिट्प्राप्तौ विभाषा इति विवेकः । अपचितश्च । 'अपपूर्वस्य चिञो ण्यन्तस्य निष्ठायां चिभावो निपात्यते' इति भाष्यम् । तदाह—चायेर्निपातोऽयमिति । प्यायः पी । वा स्यान्निष्ठायामिति । शेषपूरणमिदम् । 'विभाषाऽभ्यवपूर्वस्य' इत्यतो विभाषेति 'स्फायः स्फी' इत्यतो निष्ठायामिति चानुवर्तते इति भावः । व्यवस्थितविभाषेति । अत्र व्याख्यानमेव शरणम् । 'सोपसर्गस्य न' इत्यादि भाष्ये स्पष्टम् । ह्लादो निष्ठायाम् । ह्रस्वः स्यादिति । शेषपूरणमिदम् । 'खचि ह्रस्वः' इत्यतस्तदनु-

स्यात्। प्रह्णः। ३०७४ द्यतिस्यतिमास्थामित्ति किति ७।४।४०॥ एषामिकारोऽन्तादेशः स्यात्तादौ किति। ईत्वदत्त्वयोरपवादः। दितः। सितः। मा, माङ्, मेङ्, मितः। स्थितः। ३०७५ शाच्छोरन्यतरस्याम् ७।४।४१॥ शितः-शातः। छितः। छातः। व्यवस्थितविभाषात्वाद्व्रतविषये श्यतेर्नित्यम्। संशितं व्रतम्। सम्यक्सम्पादितमित्यर्थः। संशितो ब्राह्मणः। व्रतविषयकयत्नवानित्यर्थः। ३०७६ दधातेर्हिः ७।४।४२॥ तादौ किति। अभिहितम्। निहितम्। ३०७७ दो दद्धोः ७।४।४६॥ घुसंज्ञकस्य दा इत्यस्य दथ् स्यात्तादौ किति। चर्त्वम्। दत्तः। घोः किम्। दातः। तान्तो वायमादेशः। न चैवं विदत्तमित्यादावुपसर्गस्य 'दस्ति' ( सू ३०७९ ) इति दीर्घापत्तिः। तकारादौ तद्विधानात्। दान्तो वा। धान्तो वा। न च दान्तत्वे निष्ठानत्वं, धान्तत्वे 'झषस्तथोः-' ( सू २२८० ) इति धत्वं शङ्क्यम्। सन्निपातपरिभाषाविरोधात्।

---

वृत्तेरिति भावः। प्रह्ण इति। 'ह्लादी सुखे' क्तः। 'श्वीदितः' इति नेट्। 'रदाभ्याम्' इति नत्वम्। द्यतिस्यति। एषां चतुर्णां द्वन्द्वात्षष्ठी। 'दो अवखण्डने' इत्यस्य द्यतीति निर्देशः। 'षो अन्तकर्मणि' इत्यस्य तु स्यतीति निर्देशः। इत् ति कितीति च्छेदः। ईत्वेति। 'घुमास्था' इति ईत्वस्य 'दो दद्धोः' इति दद्भावस्य च यथासम्भवमपवाद इत्यर्थः। दोधातोरुदाहरति—दित इति। मा माङ् मेङिति। 'गामादाग्रहणेष्वविशेषः' इति वचनादिति भावः। शाच्छोः। 'शो तनूकरणे' 'छो छेदने' अनयोः कृतात्वयोर्निर्देशः। अनयोरिकारोऽन्तादेशो वा स्यात् तादौ कितीत्यर्थः। व्यवस्थितेति। एतच्च भाष्ये स्पष्टम्। दधातेर्हिः। तादौ कितीति। शेषपूरणमिदम्। 'द्यतिस्यति' इत्यतस्तदनुवृत्तेरिति भावः। दो दद्घोः। 'द' इति षष्ठ्यन्तम्। तदाह—दा इत्यस्येति। 'दथ्' इति च्छेदः। तदाह—दथ् स्यादिति। तवर्गद्वितीयान्तोऽयमादेशः। तादौ कितीति। 'ति कितीत्यनुवृत्तेरिति भावः। चर्त्वमिति। 'खरि च' इति थकारस्य तकार इत्यर्थः। दात इति। दाप्लवनो रूपम्। 'अदाप्' इत्युक्तेः घुत्वाऽभावान्न दद्भावः। तान्तो वेति। तवर्गप्रथमान्त इत्यर्थः। नन्वेवं सति 'विदत्त'मित्यादौ 'दस्ती'त्युपसर्गस्य दीर्घत्वापत्तिः। तत्र हि 'द' इति षष्ठी सप्तम्यर्थे। इगन्तोपसर्गस्य दीर्घः स्यात् तकारान्ते ददातौ परत इत्यर्थ इत्याशङ्क्य निराकरोति—न चैवमिति। आदेशस्य तवर्गप्रथमान्तत्वे सतीत्यर्थः। तकारादाविति। 'दस्ति' इत्यत्र द इति षष्ठी तीत्यत्रान्वेति। तथा च इगन्तोपसर्गस्य दीर्घः स्यात् दादेशतकारादावुत्तरपदे इत्यर्थः। उत्तरपदाधिकारात्। ततश्च उत्तरपदस्याऽत्र तकारादित्वाऽभावात् न दीर्घ इति भावः। दान्तो वा धान्तो वेति। तवर्गतृतीयान्तो वा, चतुर्थान्तो वा अयमादेश इत्यर्थः। न चेति। दान्तत्वे निष्ठानत्वम्, धान्तत्वे 'झषस्तथोः' इति धत्वं च न शङ्क्यमित्यन्वयः। सन्निपातेति। दान्तादेशस्य, धान्तादेश-

**३०७८ अच उपसर्गात्तः ७।४।४७॥** अजन्तादुपसर्गात्परस्य दा इत्यस्य घोरचस्तः स्यात्तादौ किति । चर्त्वम् । प्रत्तः । अवत्तः ।

'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥'

चशब्दाद्यथाप्राप्तम् । **३०७९ दस्ति ६।३।१२४॥** इगन्तोपसर्गस्य दीर्घः स्याद्दादेशो यस्तकारस्तदादावुत्तरपदे । 'खरि च' ( सू १२१ ) इति चर्त्वमाश्रयात्सिद्धम् । नीत्तम् । सूत्तम् । 'घुमास्था-' ( सू २४६२ ) इतीत्वम् । धेट् । धीतम् । गीतम् । पीतम् । 'जनसन-' ( सू २५०४ ) इत्यात्वम् । जातम् । सातम् । खातम् । **३०८० अदो जग्धिर्ल्यप्ति किति २।४।३६।** ल्यबिति लुप्तसप्तमीकम् । अदो जग्धिः स्याल्ल्यपि तादौ किति च । इकार उच्चारणार्थः । धत्वम् । 'झरो

---

रूप च तकारादिप्रत्ययोपजीव्यतया तद्विघातकत्वचत्वे प्रति निमित्तत्वाऽसम्भवादिति भावः । अच उपसर्गात्तः । त इत्यत्राकार उच्चारणार्थः । अच इत्यावर्तते, एकमुपसर्गविशेषणम् । द्वितीयं तु स्थानिसमर्पकम् । तदाह—अजन्तादिति । घोरिति । घोरवयवस्येत्यर्थः । तः स्यादिति । तकारः स्यादित्यर्थः । ददादेशापवादः । चर्त्वमिति । प्र दा त इति स्थिते दकाराद्दाकारस्य तकारादेशे दकारस्य चर्त्वेन तकार इत्यर्थः ।

अवदत्तं विदत्तं चेति । भाष्यस्थश्लोकोऽयम् । अत्र आदिकर्मणीत्येतत् प्रदत्तमित्यत्रैव सम्बध्यते । नायम् 'अच उपसर्गात्तः' इत्यस्य अपवाद इति भ्रमितव्यमित्याह—चशब्दाद्यथाप्राप्तमिति । तथा चाऽवदत्तादिशब्देषु ददादेशोऽपि कदाचिल्लभ्यते इत्यर्थः । अत एव प्रकृतसूत्रभाष्ये 'अच उपसर्गात्तः' इत्यस्यावकाशः प्रत्तमवत्तम् इति सङ्गच्छते इति भावः । दस्ति । 'इकः काशे' इत्यत इक इति 'उपसर्गस्य घञ्यमनुष्ये' इत्यतः उपसर्गस्येति 'ढ्रलोपे' इत्यतो दीर्घ इति चानुवर्तते । उत्तरपदे इत्यधिकृतं तीत्यनेन विशेष्यते । तदादिविधिः । द इति षष्ठी ति इत्यत्राभ्रेति । तथा च दाधातोरादेशः यस्तकारः तदादौ उत्तरपदे इति लभ्यते । तदाह—इगन्तेत्यादि । ननु नि दा त इति स्थिते 'अच उपसर्गात्तः' इति दकाराद्दाकारस्य तकारे दकारस्य 'खरि च' इति चर्त्वे प्रकृतसूत्रेण उपसर्गस्य दीर्घे नीत्तमिति रूपं वक्ष्यति । तदयुक्तम् । दीर्घे कर्तव्ये चर्त्वस्याऽसिद्धत्वे दादेशे तकारादयुत्तरपदत्वाभावादित्यत आह—खरि चेति, चर्त्वमाश्रयात् सिद्धमिति । दादेशतकारमाश्रित्य विधीयमाने दीर्घे चर्त्वं नासिद्धम्, चार्त्वासिद्धं तकारमाश्रित्य विधित्वादित्यर्थः । सूत्तमिति तु चिन्त्यम्, 'गतिश्च' इति सूत्रभाष्यवार्तिकयोः सुदत्तमित्यत्र 'अच उपसर्गात्तः' इति तत्वे कर्तव्ये सोरुपसर्गत्वं नेति प्रपञ्चितत्वात् । अथ धेङ्गापाधातुभ्यः क्ते आह—घुमास्थेति । धीतमिति । 'दधातेर्हिः' इत्यत्र श्लुविकरणग्रहणान्न हिभावः । अदो जग्धिः । धत्वमिति । जग्ध् त इति स्थिते 'झषस्तथोः' इति तकारस्य धकार इत्यर्थः । झरो झरि

झरि–' ( सू ७१ )। जग्धः। 'आदिकर्मणि क्तः कर्तरि च' ( सू ३०५३ )। प्रकृतः कटं सः। प्रकृतः कटस्तेन। 'निष्ठायामण्यदर्थे' ( सू ३०१४ ) इति दीर्घः। 'क्षियो दीर्घात्' ( सू ३०१५ इति नत्वम्। प्रक्षीणः सः। **३०८१ वाऽऽक्रोशदैन्ययोः ६।४।६१॥** क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च। क्षीणायुर्भव। क्षितायुर्वा। क्षीणोऽयं तपस्वी, क्षितो वा। **३०८२ निनदीभ्यां स्नातेः कौशले ८।३।८९॥** आभ्यां स्नातेः सस्य षः स्यात्कौशले गम्ये। निष्णातः शास्त्रेषु। नद्यां स्नातीति नदीष्णः। 'सुपि–' ( सू २९१६ ) इति कः। **३०८३ सूत्रं प्रतिष्णातम् ८।३।९०॥** प्रतेः स्नातेः षत्वम्। प्रतिष्णातं सूत्रम्। शुद्धमित्यर्थः। अन्यत्र प्रतिस्नातम्। **३०८४ कपिष्ठलो गोत्रे ८।३।९१॥** कपिष्ठलो नाम यस्य, कापिष्ठलिः पुत्रः। गोत्रे किम्। कपीनां स्थलं कपिस्थलम्। **३०८५ विकुशमिपरिभ्यः स्थलम् ८।३।९६॥** एभ्यः स्थलस्य सस्य षः स्यात्। विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्। **३०८६ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ३।४।७२॥** एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च। गङ्गां गतः। गङ्गां प्राप्तः। म्लानः सः। लक्ष्मीमाश्लिष्टो हरिः। शेषमधिश-

---

इति। अनेन पाक्षिको धकारलोप इत्यर्थः। आदिकर्मणि क्त इति। व्याख्यातं प्राक्। उदाहरणान्तरविवक्षया पुनरुपन्यासः। प्रकृतः कटं स इति। कर्तुमारब्धवानित्यर्थः। कटस्य कर्मणः अनभिहितत्वात् द्वितीया। कर्तुरभिहितत्वात् तच्छब्दात्प्रथमा। चकाराद्भावे कर्मणि चेत्युक्तम्। तत्र कर्मण्युदाहरति—प्रकृतः कटस्तेनेति। प्रक्षीणः स इति। आदिकर्मणि क्तः। वाऽऽक्रोशदैन्ययोः। अण्यदर्थ इत्यनुवर्तते। 'ण्यदर्थो भावकर्मणी' इत्युक्तम्। आक्रोशे उदाहरति—क्षीणायुर्भवेति। 'गत्यर्थाकर्मक' इति कर्तरि क्तः। दैन्ये उदाहरति—क्षीणोऽयं तपस्वीति। कृश इत्यर्थः। निनदीभ्याम्। सस्य षः स्यादिति। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते, 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतमिति भावः। निष्णात इति। कुशल इत्यर्थः। नदीष्ण इति। नद्यां कुशलं स्नातीति विग्रहः। सुपीति क इति। 'सुपि स्थः' इत्यत्र 'सुपी'ति योगविभागात् क इत्यर्थः। गत्यर्थ। गत्यर्थ, अकर्मक, श्लिष, शीङ्, स्था, आस, वस, जन, रुह, जीर्यति एषां दशानां द्वन्द्वः। 'तः कर्मणि च भावे च' इत्यतः भावे कर्मणीति 'आदिकर्मणि क्तः कर्तरि च' इत्यतः कर्तरि इति चानुवर्तते। तदाह–एभ्य इत्यादिना। कर्तरीत्येवानुवृत्तौ भावकर्मणोर्न स्यादिति तयोरप्यनुवृत्तिः। गङ्गां गत इति। कर्तरि क्तः। गङ्गां प्राप्त इति। 'आप्लृ व्याप्तौ' उपसर्गवशाद्गतौ वर्तते। अकर्मकादुदाहरति—म्लान इति। क्षीण इत्यर्थः। 'संयोगादेः' इति निष्ठानत्वम्। आश्लिष्ट इति। आलिङ्गितवानित्यर्थः। ननु अकर्मकत्वादेव सिद्धे शीङादीनां पुनर्ग्रहणं व्यर्थमित्यत आह—

यितः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिदिनमुपोषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे प्राप्ता गङ्गा तेनेत्यादि । ३०८७ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ३।४।७६॥ एभ्योऽधिकरणे क्तः स्यात् । चाद्यथाप्राप्तम् । ध्रौव्यं स्थैर्यम् ।

"मुकुन्दस्याऽऽसितमिदमिदं यातं रमापतेः । भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥"

पक्षे आसेरकर्मकत्वात्कर्तरि भावे च । आसितो मुकुन्दः । आसितं तेन । गत्यर्थेभ्यः कर्तरि कर्मणि च । रमापतिरिदं यातः । तेनेदं यातम् । भुजेः कर्मणि । अनन्तेनेदं भुक्तम् । कथं 'भुक्ता ब्राह्मणाः' इति । भुक्तमस्ति एषामिति मत्वर्थी-

---

शेषमधिशयित इति । शेषे शयितवानित्यर्थः । 'अधिशीङ्स्थासाम्' इति शेषः कर्म । अतो नाऽकर्मकत्वादिह प्राप्तिरिति भावः । वैकुण्ठमधिष्ठित इति । वैकुण्ठे स्थितवानित्यर्थः । 'अधिशीङ्स्थासाम्' इति वैकुण्ठः कर्म । अतो नाऽकर्मकत्वादिह प्राप्तिः । शिवमुपासित इति । शिवं परिचरितवानित्यर्थः । उपवेशनार्थकत्वे अकर्मकत्वेऽपि इह उपसर्गवशेनार्थान्तरे सकर्मकत्वादकर्मकेत्यनेन न प्राप्तिरिति भावः । हरिदिनमुपोषित इति । 'वसतिक्षुधोः' इति इट् । यजादित्वात्सम्प्रसारणम् । 'शासि' इति षः । हरिदिने न भुक्तवानित्यर्थः । 'उपान्वध्याङ्वसः' इति हरिदिनं कर्म । ततश्चाकर्मकत्वाऽभावादप्राप्तिः । राममनुजात इति । अनुकृतवानित्यर्थः । अनुसृत्य जातवानिति वा । ततश्चाऽकर्मकत्वाऽभावादप्राप्तिः । गरुडमारूढ इति । उपर्याक्रान्तवानित्यर्थः । विश्वमनुजीर्ण इति । हतवानित्यर्थः । व्याप्तवानिति वा । अकर्मकत्वाऽभावादप्राप्तिः । जृधातोः कर्तरि क्तः । 'ॠत' इति इत्वं रपरत्वं 'हलि च' इति दीर्घः । 'रदाभ्याम्' इति नत्वं, णत्वम् । पक्षे इति । कर्तरि प्रत्ययाऽभावपक्षे इत्यर्थः ।

क्तोऽधिकरणे च । ध्रौव्यं गतिः, प्रत्यवसानं च अर्थो येषामिति विग्रहः । ध्रौव्यार्थेभ्यः, गत्यर्थेभ्यः, प्रत्यवसानार्थेभ्यश्चेति यावत् । चाद्यथाप्राप्तमिति । कर्मकर्तृभावेष्वपि यथासम्भवमित्यर्थः । ध्रौव्यमित्यस्य विवरणम्—स्थैर्यमिति । स्थिरीभवनम्, उपवेशनशयनादिक्रियेति यावत् । मुकुन्दस्यासितमिदमिति । श्लोकोऽयम् । आस्यते अस्मिन्नित्यासितम्, आसनमित्यर्थः । ध्रौव्यार्थस्योदाहरणमिदम् । इदं यातं रमापतेरिति । गत्यर्थस्योदाहरणम् । यायते गम्यते अस्मिन्निति यातं, मार्ग इत्यर्थः । भुक्तमेतदनन्तस्येति । भुज्यते अस्मिन्निति भुक्तम् । भोजनस्थानमित्यर्थः । 'अधिकरणवाचिनश्च' इति त्रिष्वपि कर्तरि षष्ठी । पक्षे इति । अधिकरणे प्रत्ययाभावपक्षे इत्यर्थः । आसेरकर्मकत्वादिति । ततश्च न कर्मणि क्त इत्यर्थः । आसितो मुकुन्द इति । आसितवानित्यर्थः । आसितं तेनेति । भावे उदाहरणम् । गत्यर्थेभ्य इति । तेषां सकर्मकतया कर्तरि कर्मणि च क्तः, न तु भावे इत्यर्थः, 'क्तः कर्मणि च' इत्यत्राऽदर्शनादिति भावः । भुजेः कर्मणीति । अकर्मकेभ्यो भावे प्रत्ययस्य 'क्तः कर्म-

योऽच् । वर्तमाने इत्यधिकृत्य-३०८८ **ञीतः क्तः ३।२।१८७॥** 'ञि क्ष्विदा' क्ष्विण्णः । 'ञि इन्धी' इद्धः । ३०८९ **मतिबुद्धिपूजार्थेभ्यश्च ३।२।१८८॥** मतिरिहेच्छा । बुद्धेः पृथगुपादानात् । राज्ञां मतः इष्टः । तैरिष्यमाण इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः । 'शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि' इत्यादि । ३०९० **नपुंसके भावे क्तः ३।३।११४॥** क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात् । जल्पितम् । शयितम् । हसितम् । ३०९१ **सुयजोर्ङ्वनिप् ३।२।१०३॥** सुनोतेर्यजेश्च ङ्वनिप्स्याद्भूते । सुत्वा । सुत्वानौ । यज्वा । यज्वानौ । ३०९२ **जीर्यतेरतृन् ३।२।१०४॥** भूते इत्येव । जरन् । जरन्तौ । जरन्तः । वासरूपन्यायेन निष्ठाऽपि । जीर्णः । जीर्णवान् । ३०९३ **छन्दसि लिट् ३।२।१०५॥** ३०९४ **लिटः**

---

णि' इत्यत्राऽदर्शनात् । नापि प्रत्यवसानार्थेभ्यः कर्तरि, अनभिधानादित्यर्थः । कथमिति । भुजेः कर्तरि क्ताऽभावस्योक्तत्वादिति भावः । समाधत्ते—भुक्तमस्यैषामिति । अत्र गत्यर्थेभ्यो भावेऽपि क्तप्रत्ययोऽस्त्येव, अविशेषात्, 'अजर्यं सङ्गतम्' इति सूत्रे 'अनेकमन्यपदार्थे' इति सूत्रे च भाष्ये गत्यर्थेभ्यो भावे क्तप्रत्ययस्य अभ्युपगमाच्चेति शब्देन्दुशेखरे विस्तरः । इत्यधिकृत्येति । 'वर्तमाने लट्' इत्यतो मण्डूकप्लुत्या अनुवर्तमान इत्यर्थः, चानशादीनां सर्वकालतायाः 'भूते' इति सूत्रे भाष्ये उक्तत्वादित्याहुः । ञीतः क्तः । ञि इत् यस्य तस्माद्वर्तमानक्रियावृत्तेः क्त इत्यर्थः । 'तयोरेव कृत्यक्त' इति भावकर्मणोरेव भूते विहितः क्तः वर्तमाने न प्राप्नोतीत्यारम्भः । क्ष्विण्ण इति । 'आदितश्च' इति नेट् । इद्ध इति । 'श्वीदितः' इति नेट् । मतिबुद्धि । मति, बुद्धि पूजा, अर्थ एषामिति विग्रहः । 'वर्तमाने क्त' इति शेषः । 'तयोरेव' इति भावकर्मणोरेव । मतः इष्ट इति । इच्छार्थकान्मनेरिषेश्च क्तः । 'तीषसह' इति वेट्कत्वात् 'यस्य विभाषा' इति नेट् । शीलितो रक्षित इति । भाष्यस्थश्लोकोऽयम् । इत्यादीति । आदिना 'रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि । हृष्टतुष्टौ तथाक्रान्तस्तथोभौ संयतोद्यतौ । कष्टं भविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ।' इति संग्रहः । कष्टशब्दो भविष्यति, अमृतशब्दो वर्तमाने इत्यर्थः । नपुंसके भावे क्तः । कालसामान्ये इति । अस्य वर्तमानाद्यधिकारानन्तर्भावादिति भावः । अकर्मकेभ्य एव नपुंसके भावे क्तः, न तु सकर्मकात् इति 'णेरध्ययने वृत्तम्' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । तद्ध्वनयन्नकर्मकेभ्य एवोदाहरति—जल्पितमित्यादि । गतं भुक्तमित्यादौ तु अविवक्षितकर्मकत्वात् अकर्मकत्वं बोध्यम् । अत एव गतं हंसस्य, भुक्तमोदनस्येत्यादौ शेषत्वविवक्षया षष्ठीति दिक् । सुयजोर्ङ्वनिप् । पञ्चम्यर्थे षष्ठी । सुनोतेर्यजेश्च ङ्वनिबित्यर्थः । भूते इति । अस्य भूताधिकारस्थत्वादिति भावः । सुत्वा सुत्वानाविति । ङ्वनिपि ङपावितौ, इकार उच्चारणार्थः । ङित्वान्न गुणः । जीर्यतेरतृन् । भूते इत्येवेति । भूतार्थवृत्तेर्जॄधातोरतृन् स्यादि-

कानज्वा ३।२।१०६॥ ३०१५ क्वसुश्च ३।२।१०७॥ इह भूतसामान्ये छन्दसि लिट् । तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम् । कवयस्तु बहुलं प्रयुञ्जते । 'तं तस्थिवांसं नगरोपकण्ठे' 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादि । ३०१६ वस्वेकाजाद्घसाम् ७।२।६७॥ कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट्, नान्येषाम् । एकाच्, आदिवान् । आरिवान् । आत्, ददिवान् । जक्षिवान् । एषाम् किम् ? बभूवान् । ३०१७ भाषायां सदवसश्रुवः

---

इत्यर्थः । ऋकारनकारावितौ । अप्रत्ययः श्लिष्यते । जरन्निति । उगित्वान्नुम् । जीर्ण इति । 'ऋत इत्' रपरत्वम्, 'हलि च' इति दीर्घः, निष्ठानत्वम् । छन्दसि लिट् । लिटः कानज्वा । क्वसुश्च । त्रीणीमानि सूत्राणि । अत्र प्रथमसूत्रे भूत इत्यनुवृत्तिमभिप्रेत्य व्याचष्टे—भूतसामान्ये छन्दसि लिडिति । अनद्यतनपरोक्षत्वं छन्दसि न विवक्षितमिति भावः । 'लिटः कानज्वा' इति द्वितीयं सूत्रम् । तत्र छन्दसीत्यनुवर्तते, भूते इति च । छन्दसि भूते लिटः कानजादेशः स्यादित्यर्थः । लिड्ग्रहणं लिण्मात्रस्य ग्रहणार्थम् । तेन 'परोक्षे लिट्' इति यो लिड्विहितः तस्यापि ग्रहणार्थः । अन्यथा 'अनन्तरस्य' इति न्यायेन प्रकृतस्यैव लिटो ग्रहणं स्यादिति वृत्तौ स्पष्टम् । वाग्रहणं तु पक्षे लिटः श्रवणार्थं, वाऽसरूपविधिर्लादेशेषु नेति ज्ञापनार्थं वा । तत्प्रयोजनं तु 'भाषायां सदवस' इत्यत्र अनुपदमेव वक्ष्यते । 'क्वसुश्च' इति तृतीयं सूत्रम् । छन्दसि भूते लिटः क्वसुरादेशः स्यादित्यर्थः । योगविभागस्तु उत्तरसूत्रे क्वसोरेवानुवृत्त्यर्थः । इमौ कानच्क्वसू आदेशौ छान्दसाविति अत्रैव भाष्यकैयटयोः स्पष्टम् । तदाह—तस्येत्यादि त्रिमुनिमतमित्यन्तम् । 'विभाषा पूर्वाह्णाऽपराह्णाभ्याम्' इति सूत्रभाष्ये तु पपुष आगतं पपिवद्रूप्यमिति प्रयुक्तम् । तेन लोकेऽपि क्वचित् क्वसोः साधुत्वं सूचितम् । तदाह—कवयस्त्विति । तस्थिवांसमिति । स्थाधातोः लिटः क्वसुः । द्वितीयैकवचने 'अत्वसन्तस्य' इति दीर्घः । उगित्त्वान्नुम् । अधिजग्मुष इति । अधिपूर्वाद्गमेर्लिटः क्वसुः 'गमहन' इत्युपधालोपः, शसि वसोः सम्प्रसारणं, पूर्वरूपम्, षत्वम् । वस्वे । 'वसु' इत्यविभक्तिको निर्देशः । तथा च व्याख्यास्यति—वसोरिति । नित्यत्वाद् द्वित्वे कृते एकाच्त्वमेव नेति कथमिट् स्यादित्यत आह—कृतद्विर्वचनानामेकाचामिति । कृतेऽपि द्वित्वे एकाच एव ये अवशिष्यन्ते तेषामित्यर्थः । 'नेड्वशि कृति' इति निषेधं बाधित्वा क्रादिनियमात् सर्वत्र प्राप्तस्य इटो नियमोऽयमित्याह—नान्येषामिति । आदिवानिति । अद भक्षणे । द्वित्वहलादिशेषाऽभ्यासदीर्घसवर्णदीर्घेषु कृतेषु कृतद्वित्वोऽप्ययमेकाजेवेति इट् । आरिवानिति । 'ऋ गतौ' 'ऋच्छत्यृताम्' इति गुणे कृते द्वित्वादिषु पूर्ववत् कृतेषु अयमेकाच् । ददिवानिति । डु दाञ् दाने । कृते द्वित्वे नाऽयमेकाच् । इणिम्लिसुद्धाऽऽतो लोपो नाऽसति तस्मिन् भवतीति अनेकाजर्थमाद्ग्रहणम् । जक्षिवानिति । 'लिट्यन्यतरस्याम्' इत्यदेर्घस्लादेशः । द्वित्वे कृते नायमेकाजिति

३।२।१०८॥ सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्, तस्य च नित्यं क्वसुः । 'निषेदुषीमासनबन्धधीरः' । 'अध्यूषुषस्तामभवज्जनस्य' । शुश्रुवान् । **३०९८ उपेयिवाननाश्वाननूचानश्च ३।२।१०९॥** एते निपात्यन्ते । उपपूर्वादिणो भाषायामपि भूतमात्रे लिड्वा, तस्य नित्यं क्वसुः । इट् । उपेयिवान् । 'उपेयुषः स्वामपि मूर्तिमग्र्याम्' । उपेयुषी । 'उपे'त्यविवक्षितम् । ईयिवान् । समीयिवान् । नञ्पूर्वादश्नातेः क्वसुरिडभावश्च । 'धृतजयधृतेरनाशुषः' इति भारविः । अनुपूर्वाद्वचेः कर्तरि कानच् । वेदस्यानुवचनं कृतवाननूचानः । **३०९९ विभाषा गमहनविदविशाम् ७।२।६८॥** एभ्यो वसोरिड्वा । जग्मिवान् । जगन्वान् । जघ्निवान् । जघन्वान् । विविदिवान् । विविद्वान् । विविशिवान् ।

---

घसिग्रहणम् । भाषायाम् । सद्, वस, श्रु एषां द्वन्द्वात्पञ्चमी । पुंस्त्वमेकवचनं चार्षम् । तस्य च नित्यं क्वसुरिति । वाग्रहणं लिटैव सम्बध्यते । तस्य क्वसुस्तु नित्यः इति भाष्ये स्पष्टम् । पक्षे लुङ्, तस्य भूतसामान्ये विहितत्वात् । वाग्रहणाननुवृत्तौ तु भूतसामान्ये लिडयं नित्यं लुङपवादः स्यात्, सरूपत्वात् । अस्य च भूतसामान्ये लिटः न तिङ्, अस्य क्वसोस्तदपवादत्वात् । वासरूपविधिस्तु लादेशेषु नेति 'लिटः कानज्वा' इत्यत्र उक्तमिति शब्देन्दुशेखरे विस्तरः । निषेदुषीमिति । निपूर्वात्सदेर्लिटः क्वसुः, द्वित्वम् 'अत एकहल्मध्ये' इत्येत्वाभ्यासलोपौ, वसोः सम्प्रसारणं, पूर्वरूपं, षत्वम् । अध्यूषुष इति । अधिपूर्वाद्वसधातोर्लिटः क्वसुः, यजादित्वाद्धातोर्वस्य सम्प्रसारणम् । पूर्वरूपम्, उस् इत्यस्य द्वित्वं, हलादिशेषः, सवर्णदीर्घः । शसि वसोः सम्प्रसारणं, पूर्वरूपम् । शुश्रुवानिति । श्रुधातोर्लिटः क्वसुः द्वित्वम् । उपेयिवान् । इडिति । उपपूर्वादिणधातोः लिटः क्वसुः नित्यत्वाद् द्वित्वम् । वलादिलक्षण इट् 'नेड्वशि कृति' इति प्रतिषिद्धः, स तावत् क्रादिनियमात्पुनरुत्थितः । पुनश्च 'वस्वेकाजाद्घसाम्' इति सूत्रेण 'एकाचश्च आदन्ताच्च घसेश्च परस्य वसोरिट् स्यात् नान्येभ्य' इत्यर्थकेन द्वित्वानन्तरमनेकाच्त्वात् प्रतिषिद्धः, सोऽयमिट् अनेन निपातनेन प्रतिप्रसूयते इति भाष्ये स्पष्टम् । इटि कृते उत्तरखण्डस्य इकारस्य यण् । अभ्यासस्य दीर्घस्तु न निपात्यते । नन्वत्र अपूर्व एव इट् निपात्यतामित्यत आह—उपेयुषीति । उगित्वान्ङीपि वसोः सम्प्रसारणम् । प्रतिप्रसूतो वलादिलक्षण इट् तु न । तन्निमित्तस्य वकारस्य सम्प्रसारणेन विनाशोन्मुखत्वात् । अत्र अपूर्वस्य इटो निपातने तु अत्रापि इट् स्यादिति भावः । उपेत्यविवक्षितमिति । अत्र व्याख्यानमेव शरणम् । अश्नातेरिति । 'अश भोजने' श्नाविकरणः, क्र्यादिः, लिटः क्वसुः, द्वित्वम् 'अत आदेः' इति दीर्घः, सवर्णदीर्घः, द्विहल्त्वाऽभावान्न नुट् । 'अश्नोतेश्च' इत्यपि न नुट्, श्नुविकरणस्यैव तत्र ग्रहणात् । नञ उपपदसमासः । 'नलोपो नञः' 'तस्मान्नुडचि' इति भावः । वचेः कर्तरीति । न तु भावकर्मणोरिति भावः । कानचि यजादित्वात्सम्प्रसारणं पूर्वरूपं

विविश्वान्। विशिना साहचर्याद्विन्दतेर्ग्रहणम्। वेत्तेस्तु विविद्वान्। 'नेड्वशि कृति' (सू २९८१) इतीण्निषेधः। 'दृशेश्च' (वा ४४५२)। ददृशिवान्-ददृश्वान्। **३१०० लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४॥** अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः। शवादि। पचन्तं चैत्रं पश्य। **३१०१ आने मुक् ७।२।८२॥** अदन्तस्याऽङ्गस्य मुगागमः स्यादाने परे। पचमानं चैत्रं पश्य। 'लडि'त्यनुवर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम्। तेन प्रथमासामानाधिकरण्येऽपि क्वचित्। सन् ब्राह्मणः। 'माङ्याक्रोशे इति वाच्यम्'। (वा २१०९)। 'मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति'। 'माङि लुङ्' (सू २२१९) इति प्राप्ते एतद्वचनसामर्थ्याल्लट्। **३१०२ सम्बोधने च ३।२।१२५॥** हे पचन्। हे पचमान। **३१०३ लक्षणहेत्वोः क्रियायाः ३।२।१२६॥** क्रियायाः परिचायके, हेतौ चार्थे वर्तमानाद्धातोर्लटः शतृशानचौ स्तः। शयाना भुञ्जते यवनाः। अर्जयन्वसति। हरिं पश्यन्मुच्यते। हेतुः फलं कारणं च। 'कृत्यचः (सू २८३५)।

सवर्णदीर्घः। विभाषा गम। 'विभाषा गमहन' इत्यादि स्पष्टम्। लटः शतृशानचौ। 'वर्तमाने लट्' इति पूर्वसूत्रविहितस्यैव एतौ शतृशानचौ। अनन्तरस्येति न्यायात्। इति 'वर्तमानसामीप्ये' इत्यादिभाष्ये स्पष्टम्। शतृप्रत्यये शकारऋकारावितौ। पचन्तमिति। पाकानुकूलव्यापाराश्रयमित्यर्थः 'क्रियाप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि' इति सिद्धान्तात्। शतुः शित्वेन सार्वधातुकत्वात् शपि 'अतो गुणे' इति पररूपम्। शानचि शचावितौ। आने मुक्। 'अङ्गस्य' इत्यधिकृतम् 'अतो येयः' इति पूर्वसूत्रादनुवृत्तेन षष्ठ्या विपरिणतेन अता विशेष्यते। तदन्तविधिः। तदाह—अदन्तस्येति। मुकि ककार इत्, उकार उच्चारणार्थः। कित्त्वादन्तावयवः। अनुवर्तमाने इति। 'वर्तमाने लट्', इति पूर्वसूत्रादनुवृत्तस्य लडित्यस्य षष्ठ्या विपरिणामेन उकार्थलाभे सतीत्यर्थः। अधिकेति। सूत्रारम्भसामर्थ्यादुक्तस्यापि अर्थस्य लाभार्थमित्यर्थः। सन् ब्राह्मण इति। 'अस भुवि' शतृप्रत्यये शपो लुक्, श्नसोरल्लोपः। माङीति। माङि प्रयुज्यमाने आक्रोशे गम्ये लटः शतृशानचाविति वक्तव्यमित्यर्थः। मा जीवन्निति। न जीवत्वयम्। अनुपकारित्वात् मृतप्राय इत्यर्थः। 'मा पचमान' इत्यप्युदाहार्यम्। 'लटः शतृशानचौ' इत्येव सिद्धेः किमर्थमिदमित्यत आह—माङि लुङिति। सम्बोधने च। 'लटः शतृशानचा'विति शेषः। प्रथमासमानाधिकरणार्थ आरम्भः। पूर्वसूत्रस्थपुनर्लड्ग्रहणस्य अधिकविधानार्थत्वादेव सिद्धे प्रपञ्चार्थमिदम्। लक्षणहेत्वोः लक्ष्यते ज्ञाप्यतेऽनेनेति लक्षणम्, ज्ञापकम्। तदाह-क्रियायाः परिचायके इति। धात्वर्थस्य लक्षणत्वे हेतुत्वे च द्योत्ये इति यावत्। कर्तैव प्रत्ययार्थः। शयाना भुञ्जते यवना इति। अत्र भोजनकालीनं शयनं भोक्तुर्यवनत्वसूचकम्। हेतावुदाहरति—अर्जयन्वसतीति।

प्रपीयमाणः सोमः । **३१०४ ईदासः ७।२।८३॥** आसः परस्याऽनस्य ईत्स्यात् । 'आदेः परस्य' (सू ४४)। आसीनः । **३१०५ विदेः शतुर्वसुः ७।१।३६॥** वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात् । विद्वान् । विदन् । विदुषी । **३१०६ तौ सत् ३।२।१२७॥** तौ शतृशानचौ सत्संज्ञौ स्तः । **३१०७ लृटः सद्वा ३।३।१४॥** व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं पश्य । करिष्यतोऽपत्यं कारिष्यतः । करिष्यद्भक्तिः । हे करिष्यन् । अर्जयिष्यन् वसति । प्रथमासामानाधिकरण्येऽपि क्वचित् । करिष्यतीति करिष्यन् । **३१०८ पूङ्यजोः शानन् ३।२।१२८॥** वर्तमाने । पवमानः । यजमानः । **३१०९ ताच्छील्यवयोवचनशक्तिषु चा-**

---

अर्जनाय वसतीत्यर्थः । हेतावुदाहरणान्तरमाह—हरिं पश्यन्निति । हरिदर्शनेन संसारदुःखान्मुच्यते इत्यर्थः । ननु धनाद्यर्जनस्य वाससाध्यतया कथं तस्य वासहेतुत्वमित्यत आह—हेतुः फलं कारणं चेति । इष्टसाधनताज्ञानस्य वासप्रवृत्तौ हेतुतया इष्टस्यार्जनस्यापि वासहेतुत्वमिति भावः । प्रपीयमाण इति । अत्र भिन्नपदस्थत्वात् कथं णत्वमित्यत आह—कृत्यच इति । ईदासः । आस इति पञ्चमी । आनस्येति । 'आने मुक्' इत्यतस्तदनुवृत्तेरिति भावः । विदेः शतुर्वसुः । वेत्तेरिति । 'विद ज्ञाने' इति लुग्विकरणस्यैव ग्रहणम्, 'शतुः' परस्मैपदत्वात् विद्यतेर्विन्तेश्चात्मनेपदित्वात् । यद्यपि विन्दतिरुभयपदी, तथापि तस्य न ग्रहणम्, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इत्युक्तेरिति भावः । वा स्यादिति । 'तुह्योस्तातङ्' इत्यतस्तदनुवृत्तेरिति भावः । विदुषीति । उगित्वान्ङीप्, वसोः सम्प्रसारणं, पूर्वरूपम्, षत्वम् । तौ सत् । 'लटः शतृशानचौ' इति सूत्रोपात्तौ शतृशानचौ तच्छब्दः परामृशति । तदाह—तौ शतृशानचाविति । लृटः सद्वा । लृटः शतृशानचौ वा स्त इत्यर्थः । व्यवस्थितेति । व्याख्यानादिति भावः । नित्यमिति । तेन तिङां निवृत्तिः । अप्रथमासामानाधिकरण्ये उदाहरति—करिष्यन्तमिति । प्रत्यये परतः उदाहरति—करिष्यतोऽपत्यं कारिष्यत इति । उत्तरपदे उदाहरति—करिष्यद्भक्तिरिति । करिष्यन्ती भक्तिरिति कर्मधारयः । सम्बोधने उदाहरति—हे करिष्यन्निति । शयिष्यमाणा भोक्ष्यन्ते यवना इति लक्षणे उदाहार्यम् । हेतावुदाहरति—अर्जयिष्यन्वसतीति । प्रथमासामानाधिकरण्येऽपि क्वचिदिति । अप्रथमासामानाधिकरण्याऽभावेऽपि क्वचिदित्यर्थः । कदाचिदित्यपि द्रष्टव्यम् । इदं च 'लृट् शेषे च' इति भविष्यदधिकारविहिते लृट्येव प्रवर्तते इति 'अनवक्लृप्त्यमर्ष' इत्यत्र भाष्ये स्पष्टम् । पूङ्यजोः शानन् । पञ्चम्यर्थे षष्ठी । वर्तमाने इति । शेषपूरणमिदम् । 'वर्तमाने लट्' इत्यतस्तदनुवृत्तेरिति भावः । लड्ग्रहणं तु निवृत्तम् । ततश्च णवुलादिवत्स्वतन्त्रोऽयम्, नतु लस्यादेशः । तथा च कर्तर्येवायम्, नतु भावकर्मणोः । नच लादेशत्वाऽभावे 'सोमं पवमान' इत्यत्र कर्मणि षष्ठी स्यादिति वाच्यम्, 'न लोक' इति सूत्रे

नशू ३।२।१२९॥ एषु द्योत्येषु कर्तरि चानश् । भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रुं निघ्नानः । ३११० इङ्धार्योः शत्रकृच्छ्रिणि ३।२।१३०॥ आभ्यां शतृ-स्यादकृच्छ्रिणि कर्तरि । अधीयन् । धारयन् । अकृच्छ्रिणि किम् । कृच्छ्रेण अधीते धारयति । ३१११ द्विषोऽमित्रे ३।२।१३१॥ द्विषन्शत्रुः । ३११२ सुञो यज्ञ-संयोगे ३।२।१३२॥ सर्वे सुन्वन्तः, सर्वे यजमानाः सत्रिणः । ३११३ अर्हः प्रशंसायाम् ३।२।१३३॥ अर्हन् । ३११४ आ क्वेस्तच्छीलतद्धर्मतत्साधु-कारिषु ३।२।१३४॥ क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधु-कारिषु कर्तृषु बोध्याः । ३११५ तृन् ३।२।१३५॥ कर्ता कटम् । ३११६ अलंकृञ्-

---

'तृन्' इति प्रत्याहार इत्युक्तत्वात् । ताच्छील्य । चानशि सत्यापिती । भोगं भुञ्जान इति । भोगशील इत्यर्थः । कवचं बिभ्राण इति । यौवनवत्वादिति भावः । शत्रुं निघ्नान इति । निहन्तुं शक्त इत्यर्थः । अतः परत्वाऽभावान्न मुक् । चानशः लादेशत्वाभावात् अनात्मनेपदत्वात् परस्मैपदिभ्योऽपि प्रवृत्तिः । इङ्धार्योः । शतृ-अकृच्छ्रिणीति छेदः । अकृच्छ्रम्-अदुःखम्, तदस्यास्तीति अकृच्छ्री । इङ्, धारि अनयोः द्वन्द्वात् पञ्चम्यर्थे षष्ठी । अधीयन्निति । सुखमध्येतेत्यर्थः । धारयन्निति । सुखेन धारयितेत्यर्थः । द्विषोऽमित्रे । द्विषः शतृप्रत्ययः स्यात् अमित्रे कर्तरीत्यर्थः । सुञो यज्ञ । यज्ञसंयुक्तेऽभिषवे वर्तमानात् सुनोतेः शतृप्रत्ययः इत्यर्थः । संयोगग्रहणं यज्ञस्वामिपरिग्रहार्थम् । तेन याजकेषु न भवति । तत्र सुन्वन्नित्येकवचनान्तं दर्शपूर्णमासज्योतिष्टोमादिविषयम्, एककर्तृकत्वात् । बहुवचनान्तं तु सत्रविषयमेव, तत्र ऋत्विजामपि यजमानत्वादिति मत्वा आह—सर्वे सुन्वन्त इति । अर्हः प्रशंसायाम् । अर्ह इति पञ्चमी । 'शतृप्रत्यय' इति शेषः । अर्हन्निति । पूजां प्राप्तुं योग्य इत्यर्थः । अत्र प्रशस्तस्यैव पूजायोग्यत्वात् प्रशंसा गम्यते । आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । आङभिविधौ । तदाह—क्विपमभिव्याप्येति । 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' इति सूत्रमभिव्याप्येति यावत् । तत्र ताच्छीलिकाः प्रत्ययाः प्रायेण सोपसर्गेभ्यो नेति 'आढ्यसुभग' इति सूत्रे भाष्ये स्पष्टम् । तच्छीलः तत्स्वभावः, फलमनपेक्ष्य स्वभावादेव प्रवर्तमान इति यावत् । सः धर्मः यस्य सः तद्धर्मा । स्वधर्मोऽयमिति प्रवर्तमानः । तस्य धात्वर्थस्य साधुकर्ता तत्साधुकारी । तृन् । धातोस्तृन्प्रत्ययः स्यात् तच्छीलादिषु कर्तृषु । तच्छीले उदाहरति—कर्ता कटमिति । कटकरणक्रियाशील इत्यर्थः । 'न लोक' इति षष्ठीनिषेधः, 'न लोक' इति सूत्रे 'तृ'न्नित्यनेन 'लटः शतृ' इत्यारभ्य एतत्सूत्रस्थनकारेण प्रत्याहाराश्रयणात् । तद्धर्मणि यथा—'मुण्डयितारः श्राविष्ठायना भवन्ति ऊढां वधूम्' । श्राविष्ठायना नाम देशविशेषीयाः वधूमुण्डनं स्वधर्म इत्यनुष्ठातार इत्यर्थः । तत्साधुकारिणि 'कर्ता कट'मित्येवोदाहरणम् । कटं साधु करोतीत्यर्थः । अलंकृञ् । अलंकृञ्, निराकृञ्, प्रजन, उत्पच, उत्पत, उन्मद, रुचि अपत्रप, वृतु, वृधु, सह, चर एषां

**अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ३।२।१३६॥** अलङ्करिष्णुरित्यादि । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्द्धिष्णुः । सहिष्णुः । चरिष्णुः । **३११७ णेश्छन्दसि ३।२।१३७॥** 'वीरुधः पारयिष्णवः' । **३११८ भुवश्च ३।२।१३८ ॥** छन्दसीत्येव । भविष्णुः । कथं तर्हि 'जगत्प्रभोरप्रभविष्णु वैष्णवम्' इति । निरङ्कुशाः कवयः । चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुरिति वृत्तिः । एवं क्षयिष्णुः । नैतद्भाष्ये दृष्टम् । **३११९ ग्लाजिस्थश्च क्स्नुः ३।२।१३९॥** छन्दसीति निवृत्तम् । गिदयं न तु कित्, तेन स्थ ईत्वं न । ग्लास्नुः । गित्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद्भुवः । 'श्र्युकः क्किति' ( सू २३८१ ) इत्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः । 'दंशेश्छन्दस्युपसंख्यानम्' ( वा २१२९ ) । 'दङ्क्ष्णवः पशवः' । **३१२० त्रसिगृधिधृषिक्षिपेः क्नुः ३।२।१४०॥** त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः । **३१२१ शमित्यष्टाभ्यो घिनुण् ३।२।१४१ ॥** उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा–शमिनीतरा इत्यत्र 'उगितश्च' ( सू १८७ ) इति ह्रस्वविकल्पः । न चैवं शमी शमिनावित्यादौ नुम्प्रसङ्गः । झल्ग्रहणमपकृष्य

---

द्वादशानां द्वन्द्वात्पञ्चमी । एभ्यः तच्छीलादिषु कर्तृषु इष्णुच् स्यात् । इत्यादीति । निराकरिष्णुः, प्रजनिष्णुः, उत्पचिष्णुः, उत्पतिष्णुः, उन्मदिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णुः, वर्धिष्णुः, सहिष्णुः, चरिष्णुः । णेश्छन्दसि । ण्यन्ताद्धातोरिष्णुच् स्यात् छन्दसीत्यर्थः । पारयिष्णव इति । पृधातोर्ण्यन्तादिष्णुचि णेर्लोपं बाधित्वा 'अयामन्ताल्वाय्य' इत्यय् । इदं सूत्रं वैदिकप्रक्रियायामेव व्याख्यातुमुचितम् । भुवश्च । छन्दसीत्येवेति । भूधातोरिष्णुच् स्यात् तच्छीलादिषु छन्दसीत्यर्थः । अण्यन्तार्थं आरम्भः । ग्लाजिस्थश्च । निवृत्तमिति । व्याख्यानादिति भावः । चात् भुव इत्यनुकृष्यते । ग्ला, जि, स्था एषां द्वन्द्वात्पञ्चमी । ग्ला, जि, स्था, भू इत्येभ्यः क्स्नुः स्यात् तच्छीलादिष्वित्यर्थः । ककार इत् । 'स्थास्नु' इत्यत्र कित्त्वलक्षणं 'घुमास्था' 'इतीत्वमाशङ्क्य आह—गिदयमिति । सूत्रे चर्त्वेन ककारनिर्देश इति भावः । गित्वान्न गुण इति । 'क्ङिति च' इत्यत्र गस्य चर्त्वेन ककारान्तःप्रश्लेषादिति भावः । ननु भूष्णुरित्यत्र इट् स्यात्, 'श्र्युकः क्किति' इति कित एव इण्निषेधात् । अत आह—श्र्युक इति । प्रश्लेषादिति । चर्त्वेनेति भावः । त्रसिगृधि । 'तच्छीलादिषु कर्तृषु'ति शेषः । त्रस्नुरिति । 'नेड्वशि'ति नेट् । गृध्नुः धृष्णुरित्यत्र कित्त्वान्न गुणः । शमित्यष्टाभ्यः । इतिशब्दः आद्यर्थः । शमादयः दिवादौ स्थिताः । तेभ्यः अष्टाभ्यो घिनुण् स्यात् तच्छीलादिष्वित्यर्थः । घित्वमुत्तरसूत्रार्थम् । 'अकर्मकेभ्य एव घिनुण्'

झलन्तानामेव तद्विधानात् । 'नोदात्तोपदेशस्य-' ( सू २७६३ ) इति वृद्धिनिषेधः । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी । उत्पूर्वान्मदेः अलंकृञादिसूत्रेणेष्णुजुक्तः, वासरूपविधिना घिनुणपि । उन्मादी । 'ताच्छीलिकेषु वासरूपविधिर्नास्ति' इति तु प्रायिकम् । **३१२२ सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसञ्ज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ३।२।१४२॥** घिनुण्स्यात् । संपर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती । **३१२३ वौ कषलसकत्थस्रम्भः ३।२।१४३॥** विकाषी । विलासी । विकत्थी । विस्रम्भी । **३१२४ अपे च लषः ३।२।१४४॥** चाद्वौ । अपलाषी । विलाषी । **३१२५ प्रे**

इति भाष्यम् । शमिनितरा शमिनीतरेति । **शमिन्शब्दात् स्त्रियां नान्तलक्षणङीबन्तात् तरबन्ताट्टाप्** । ह्रस्वविकल्पः इति । भाष्यमते **उगित्वाद्ध्रस्वः । काशिकामते तु उगित्वाऽभावान्न ह्रस्वः । नच ह्रस्वाभावे 'तसिलादिषु' इति पुंवत्त्वं शङ्क्यम्, 'संज्ञापूरण्योश्च' इति निषेधात् । ननु भाष्यरीत्या उगित्त्वाभ्युपगमे 'शमी शमिनौ' इत्यादौ 'उगिदचाम्' इति नुम् स्यादित्याशङ्क्य निराकरोति**—न चैवमिति । झल्ग्रहणमपकृष्येति । **'नपुंसकस्य झलचः' इति उत्तरसूत्रादिति भावः । एतच्च प्रकृतसूत्रे 'युवोरनाकौ' इति सूत्रे च भाष्ये स्पष्टम् । शमादिभ्यो घिनुणि उपधावृद्धिमाशङ्क्य आह**— नोदात्तेति । प्रमादीति । **मान्तत्वाऽभावान्न वृद्धिनिषेधः । ननु उत्पूर्वान्मदेरुन्मादीति कथं घिनुण् । अलंकृञादिसूत्रे उत्पूर्वान्मदेर्विशिष्य इष्णुचो विधानादित्यत आह**— उत्पूर्वादित्यादिना । **ननु कथमत्र ताच्छीलिके घिनुणि वाऽसरूपविधिप्रवृत्तिः । 'ताच्छीलिकेषु वासरूपविधिर्नास्ती'ति निषेधादित्यत आह**—ताच्छीलिकेष्विति । **इयं परिभाषा 'निन्दहिंस' इत्यादिवक्ष्यमाणसूत्रे ज्ञापितेति भाष्ये स्पष्टम्** । प्रायिकमिति । **एतच्च 'सूददीपदीक्षश्च' इति दीपग्रहणादिति 'जुचङ्क्रम्यदन्द्रम्य' इति सूत्रे भाष्ये स्पष्टम्** । सम्पृचानुरुधाङ्यमाङ्यस । **संपृच, अनुरुध, आङ्यम, आङ्यस, परिसृ, संसृज, परिदेवि, संज्वर, परिक्षिप, परिरट, परिवद, परिदह, परिमुह, दुष, द्विष, द्रुह, दुह, युज, आक्रीड, विविच, त्यज, रज, भज, अतिचर, अपचर, आमुष, अभ्याहन्, एषां सप्तविंशतेः द्वन्द्वात्पञ्चमी** । संपर्कीति । **'चजोः' इति कुत्वम् । अनुरोधीत्यादौ लघूपधगुणः । अदुपधेषु उपधावृद्धिः** । परिदेवीति । **'देवृ देवने' भ्वादिः । दीव्यतेस्तु ण्यन्तस्य न ग्रहणम्, कादाचित्कत्वात्, अण्यन्तैः साहचर्याच्च** । अभ्याघातीति । **'हनस्तोऽचिण्णलोः' इति तत्वम् । 'हो हन्तेः' इति कुत्वम्** । वौ कषलस । **कष, लस,**

**लपसृद्रुमथवदवसः ३।२।१४५॥** प्रलापी। प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी। **३१२६ निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरट-परिवादिव्याभाषाऽसूयो वुञ् ३।२।१४६॥** पञ्चम्यर्थे प्रथमा। एभ्यो वुञ्स्यात्। निन्दकः। हिंसकः इत्यादि। ण्वुला सिद्धे वुञ्वचनं ज्ञापकं 'तच्छीलादिषु वासरूपन्यायेन तृजादयो ने'ति। **३१२७ देविक्रुशोश्चोपसर्गे ३।२।१४७॥** आदेवकः। आक्रोशकः। उपसर्गे किम्। देवयिता क्रोष्टा। **३१२८ चलनशब्दार्थादकर्मकाद्युच् ३।२।१४८॥** चलनार्थाच्छब्दार्थाच्च अकर्मकात् युच् स्यात्। चलनः। चोपनः। कम्पनः। शब्दनः। रवणः। अकर्मकात् किम्। पठिता विद्याम्। **३१२९ अनुदात्तेतश्च हलादेः ३।२।१४९॥**

---

कत्थ, स्रम्भ् एषां द्वन्द्वात्पञ्चमी। एभ्यो घिनुण् स्यात् ताच्छील्यादिष्वित्यर्थः। अपे च लषः। चाद्वाविति। **वौ उपपदेऽपीत्यर्थः।** अपे वौ च उपपदे लषेः घिनुण् इत्यर्थः। ताच्छील्यादिष्वेव। प्रे लप। लप, सृ, द्रु, मथ, वद, वस् एषां षण्णां द्वन्द्वात्पञ्चमी। प्रे उपपदे एभ्यः घिनुण् स्यात् ताच्छील्यादिष्वित्यर्थः। निन्दहिंस। निन्द, हिंस, क्लिश, खाद, विनाश, परिक्षिप, परिरट, परिवादि, व्याभाष, असूय एषां दशानां द्वन्द्वः। पञ्चम्यर्थे प्रथमेति। सौत्रं पुंस्त्वमेकवचनं वेति भावः। विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन निर्देशः। शकारादकार उच्चारणार्थः। केचित्तु 'विनाशी'ति ण्यन्तमेव पठन्ति। परिवादीति तु ण्यन्तमेव। असूयेति कण्ड्वादियगन्तः। इत्यादीति। क्लेशकः, खादकः, विनाशकः, परिक्षेपकः, परिराटकः, परिवादकः, व्याभाषकः, असूयकः। ननु'असूयो वुञ्'इति असूयतेरेव वुञ्विधीयतां, न तु निन्दादिभ्योऽपि, तेषां ण्वुलैव सिद्धेः। लित्स्वरञित्स्वरयोस्तु नास्ति विशेषः, उभयथाप्याद्युदात्तत्वात्। असूयतेस्तु ण्वुलि 'लिति' इति प्रत्ययात् पूर्वं उकार उदात्तः। वुञि तु 'ञ्नित्यादिर्नित्यम्' इति धातोरकार उदात्त इति विशेषः। तस्मादसूयतेरेव वुञ्विधिरिति युक्तमित्यत आह—ण्वुला सिद्धे इति। तृजादयो नेतीति। तच्छीलादिषु वासरूपविधिसत्वे हि तद्विषये ण्वुलः सरूपतया वुञा नित्यं बाधेऽपि तृजादयः स्युः। अत्र वाऽसरूपविध्यप्रवृत्तौ तु 'तृन्' इति सूत्रेण तच्छीलादिषु तृनि प्राप्ते वुञ्विधिरर्थवान्। अतस्तच्छीलादिषु वासरूपविधिर्न प्रवर्तत इति भावः। इदं च प्रायिकम्। तत्फलं तु उत्पूर्वान्मदेरलंकृञादिसूत्रेण इष्णुजुक्तः, वासरूपविधिना घिनुणपीति मूल एवानुपदमुक्तम्। देविक्रुशोः। देवीति चुरादिण्यन्तस्य 'दिवु क्रीडा' इत्यस्य च ग्रहणम्। उपसर्गे उपपदे देवयतेः क्रुशेश्च तच्छीलादिषु वुञ् स्यादित्यर्थः। चलन। शब्द इति। 'शब्द शब्दने' चुरादिः। शब्दनं शब्दोच्चारणम्। धात्वर्थोपसंग्रहादकर्मकः। अनुदात्तेतश्च। आदिग्रहणाऽभावे हलन्तादित्यर्थः स्यात्। ततश्च जुगुप्सनः इति न स्यात्। सन्नन्तस्य हलन्तत्वाऽभावात्। अस्ति चानुदात्तेत्वं सन्नन्तस्य, 'गुप' इत्यनुदात्तेत्वस्य केव-

अकर्मकाद्युच् स्यात्। वर्तनः। वर्धनः। अनुदात्तेतः किम्। भविता। हलादेः किम्। एधिता। अकर्मकात् किम्। वसिता वस्त्रम्। **३१३० जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ३।२।१५०॥** 'जु' इति सौत्रो धातुर्गतौ वेगे च। जवनः। चङ्क्रमणः। दन्द्रमणः। सरणः। पूर्वेण सिद्धे पदग्रहणं 'लषपतपद—' ( सू ३१३४ ) इत्युकञा बाधा मा भूदिति। तेन 'ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्ती'ति। तेनाऽलंकृञस्तृन्। **३१३१ क्रुधमण्डार्थेभ्यश्च ३।२।१५१॥** क्रोधनः। रोषणः। मण्डनः। भूषणः। **३१३२ न यः ३।२।१५२॥** यकारान्ताद्युज्न स्यात्। क्नूयिता। क्ष्मायिता। **३१३३ सूददीपदीक्षश्च ३।२।१५३॥** युज्न स्यात्। सूदिता। दीपिता। दीक्षिता। 'नमिकम्पि—' ( सू ३१४७ ) इति रेण युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति 'ताच्छीलिकेषु वासरूपविधिर्नास्ति' इति प्रायिकमिति। तेन कम्रा कमना युवतिः। कम्प्रा

ले प्रयोजनाऽभावेन सन्नन्तार्थत्वात्। जुचङ्क्रम्यदन्द्रम्य। जु, चङ्क्रम्य, दन्द्रम्य, सृ, गृधि, ज्वल, शुच, लष, पत, पद एषां दशानां द्वन्द्वात्पञ्चमी। एभ्यः तच्छीलादिषु युच् स्यादित्यर्थः। धातुपाठे जुधातोरदर्शनादाह—जु इति सौत्र इति। चङ्क्रमण इति। यङन्ताद्युच्। 'यस्य हलः' इति यकारलोपः, अतो लोपः एवं दन्द्रमणः, सरणः, गर्धनः, ज्वलनः, शोचनः, लषणः, पतनः, पदनः, इत्यप्युदाहार्यम्। पूर्वेणेति। 'अनुदात्तेतश्च हलादेः' इत्यनेनेत्यर्थः। तेनेति। उकञ् ह्ययं तच्छीलाधिकारस्थः। तत्र वाऽसरूपविधिनैव उकञा 'अनुदात्तेतश्च हलादेः' इति विहितस्य पदेर्युचः बाधो न भविष्यतीति 'जुचङ्क्रम्य' इति युज्विधिरनर्थकः स्यात्। अतस्ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्ति इति विज्ञायते इत्यर्थः। 'निन्दहिंस' इति सूत्रे 'तच्छीलादिषु वासरूपविधिना तृजादयो ने'ति ज्ञापितम्। इह तु 'ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्ती'ति ज्ञाप्यते इति न पौनरुक्त्यम्। तृन्निति। अलम्पूर्वात् कृञः अलंकृञित्यादिसूत्रविहितेन तच्छीलाधिकारस्थेन इष्णुचा 'तृन्' इति सामान्यविहितः तच्छीलाधिकारस्थो बाध्यते इत्यर्थः। क्रुधमण्डार्थेभ्यश्च। 'क्रुध कोपे' 'मडि भूषायाम्' एतदर्थेभ्यः धातुभ्यो युच् स्यात् तच्छीलादिष्वित्यर्थः। न यः। 'य' इति पञ्चम्यन्तं धातुविशेषणम्। तदन्तविधिः। तदाह—यकारान्तादिति। क्नूयिता। क्ष्मायितेति। 'क्नूयी शब्दे उन्दने च' 'क्ष्मायी विधूनने' 'अनुदात्तेतश्च हलादेः' इति युच् निषिध्यते। तृनेव भवति। सूददीप। सूद, दीप, दीक्ष, एषां द्वन्द्वात्पञ्चमी। युज्नेति। शेषपूरणमिदम्। 'अनुदात्तेतश्च' इति प्राप्तो युच् प्रतिषिध्यते। नन्विह दीपग्रहणं व्यर्थम्, 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति विशेषविहितेन रप्रत्ययेन युचो बाधसिद्धेः। नच वाऽसरूपविधिना तद्बाधः शङ्क्यः, ताच्छीलिकेषु वासरूपविधेः प्रतिषेधादित्यत

कम्पना शाखा। यदि सूदेर्युज्न, कथं मधुसूदनः। नन्द्यादिः। **३१३४ लषपतपदस्थाभूवृषहनकमगमशॄभ्यः उकञ् ३।२।१५४॥** लाषुकः। पातुकः इत्यादि **३१३५ जल्पभिक्षकुट्टलुण्टवृङः षाकन् ३।२।१५५॥** जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी। **३१३६ प्रजोरिनिः ३।२।१५६॥** प्रजवी। प्रजविनौ। प्रजविनः। **३१३७ जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ३।२।१५७॥** जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। अव्यथी। अभ्यमी। परिभवी। प्रसवी। **३१३८ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ३।२।१५८॥** आद्यास्त्रयश्चुरादावदन्ताः। स्पृहयालुः। गृहयालुः। पतयालुः। दयालुः। निद्रालुः। तत्पूर्वो द्रा, तदो नान्तत्वं निपात्यते। तन्द्रालुः। श्रद्धालुः। 'शीङो

---

आह—नमिकम्पीति रेणेति। रप्रत्ययेनेत्यर्थः। प्रायिकमिति। तथा चाऽत्र वासरूपविधिना ताच्छीलिकेनापि रप्रत्ययेन युचो बाधासम्भवात् इह दीपेर्युचो निषेधोऽर्थवानिति भावः। तेनेति। ताच्छीलिकेऽपि क्वचिद्वासरूपविधेः सत्त्वादित्यर्थः। कम्रा कमनेति। इच्छाशीलेत्यर्थः। 'अनुदात्तेतश्च' इति युचः 'नमिकम्पि' इति रेण पक्षे बाध इति भावः। कम्प्रा कम्पनेति। चलनशीलेत्यर्थः। अत्रापि 'नमिकम्पि' इति रेण युचः पक्षे बाध इति भावः। आक्षिपति—यदीति। यदि 'सूददीपदीक्षश्च' इति सूदेर्युच्प्रतिषिध्यते तदा 'मधुसूदन' इति कथमित्यन्वयः। समाधत्ते—नन्द्यादिरिति। 'सूदि'रिति शेषः। तथाच 'नन्दिग्रहि' इति ल्युप्रत्यय इति भावः। लषपत। एभ्यो दशभ्यः उकञ् स्यात् तच्छीलादिष्वर्थेषु। इत्यादीति। पादुकः। आतो युक्, स्थायुकः। भावुकः। वर्षुकः। घातुकः 'हनस्तः' इति तत्वम्। 'हो हन्तेः' इति कुत्वम्। कामुकः। गामुकः। शारुकः। जल्पभिक्ष। एभ्यः पञ्चभ्यः षाकन् स्यात् तच्छीलादिष्वित्यर्थः। षकारावितौ। स्त्रियां षित्वान्ङीष्। जल्पाक इत्यादि। प्रजोरिनिः। जुः सौत्रो धातुः। प्रपूर्वादस्मात् इनिप्रत्ययः स्यात् तच्छीलादिष्वित्यर्थः। नकारादिकार उच्चारणार्थः। जिदृक्षि। जि, दृ, क्षि, विश्रि, इण्, वम्, अव्यय, अभ्यम, परिभू, प्रसू, एषां दशानां द्वन्द्वः। जि जये, जि अभिभवे। दृङ् आदरे। क्षि क्षये, क्षि निवासगत्योः। श्रिञ् सेवायां विपूर्वः। इण् गतौ। वम्—उद्गिरणे। व्यथ भयसञ्चलनयोः नञ्पूर्वः। निपातनात् नञो धातुना समासे 'न लोपो नञः' इति नकारलोपः। अम गत्यादिषु अभिपूर्वः। भू सत्तायाम् परिपूर्वः। षू प्रेरणे प्रपूर्वः। एभ्यः इनिः स्यात्तच्छीलादिष्वित्यर्थः। सूतिसूयत्योस्तु सानुबन्धकत्वात् नेह ग्रहणम्। स्पृहिगृहि। स्पृहि, गृहि, पति, दयि, निद्रा, तन्द्रा, श्रद्धा, एभ्यः सप्तभ्यः आलुच् स्यात्तच्छीलादिष्वित्यर्थः। स्पृहयालुरिति। स्पृहधातोरदन्तादालुच्। 'अयामन्त' इति णेरयादेशः णिलोपापवादः। अल्लोपस्य स्थानिवत्वान्न लघूपधगुणः। एवं गृहयालुः। पतयालुरि-

वाच्यः' ( वा २१४० ) । शयालुः । **३१३९ दाधेट्सिशदसदो रुः ३।२।१५९॥** दारुः । धारुः । सेरुः । शद्रुः । सद्रुः । **३१४० सृघस्यदः क्मरच् ३।२।१६०॥** सृमरः । घस्मरः । अद्मरः । **३१४१ भञ्जभासमिदो घुरच् ३।२।१६१॥** भङ्गुरः । भासुरः । मेदुरः । **३१४२ विदिभिदिच्छिदेः कुरच् ३।२।१६२॥** विदुरः । भिदुरम् । छिदुरम् । **३१४३ इण्नशजिसर्तिभ्यः क्वरप् ३।२।१६३॥** इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः । **३१४४ गत्वरश्च ३।२।१६४॥** गमेरनुनासिकलोपोऽपि निपात्यते । गत्वरी । **३१४५ जागुरूकः । ३।२।१६५॥** जागर्तेरूकः स्यात् । जागरूकः । **३१४६ यजजपदशां यङः ३।२।१६६॥** एभ्यो यङन्तेभ्य ऊकः स्यात् । 'दशा'मिति भाविना नलोपेन निर्देशः । यायजूकः । जञ्जपूकः । दन्दशूकः । **३१४७ नमिकम्पिस्म्यजसकमहिंसदीपो रः ३।२।१६७॥** नम्रः । कम्प्रः । स्मेरः । जसिर्नञ्पूर्वः क्रियासात-

---

त्यत्र तु अल्लोपस्य स्थानिवत्त्वाल्लोपधावृद्धिः । निद्रालुरिति । 'द्रा कुत्सायां गतौ' निपूर्वाद्दालुच् । तत्पूर्वो द्रेति । तच्छब्दपूर्वो द्राधातुः तन्द्रेत्यनेन गृह्यत इत्यर्थः । श्रद्धालुरिति । 'श्र'दित्यव्ययम् , तत्पूर्वात् धाधातोरालुच् । शीङो वाच्य इति । 'आलु'जिति शेषः । दाधेट् । दा, धेट्, सि, शद् , सद् एषां द्वन्द्वात्पञ्चमी । एभ्यो रुप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः । सृघस्यदः । सृ, घसि, अद् एषां द्वन्द्वात्पञ्चमी । घसिः प्रकृत्यन्तरम् । भञ्जभास । भञ्ज, भास, मिद् एषां द्वन्द्वात् पञ्चमी । एभ्यः घुरच् स्यात् तच्छीलादिष्वित्यर्थः । घचावितौ । भङ्गुर इति । 'चजोः' इति कुत्वम् । विदिभिदि । तच्छीलादिष्वित्येव । विदेर्ज्ञानार्थस्यैव ग्रहणम् , नतु लाभार्थस्य, व्याख्यानादित्याहुः । विदुर इत्यादौ कित्त्वान्न लघूपधगुणः । इण्नशजि । इण् , नश, जि, सृ एभ्यः क्वरप् स्यात् तच्छीलादिष्वित्यर्थः । कित्त्वान्न गुणः । पित्त्वं तु तुगर्थम् । गत्वरश्च । गमेरिति । गमेः क्वरप् अनुनासिकलोपश्च निपात्यते इत्यर्थः । झलादिप्रत्ययपरकत्वाऽभावादनुनासिकलोपस्याऽप्राप्तिः । पित्त्वात्तुक् । गत्वरीति । 'टिड्ढ' इति ङीप् । जागुरूकः । 'जागृ' इत्यस्य जागुरिति पञ्चम्यन्तं पदम् । तदाह— जागर्तेरिति । तच्छीलादिष्वित्येव । जागरूक इति । ऋकारस्य गुणः, रपरत्वम् । सिद्धरूपं तु न निपातितम् , उत्तरसूत्रे ऊक इत्यनुवृत्तिप्रसङ्गात् । यजजपदशां यङः । यज, जप, दश एषां त्रयाणां द्वन्द्वः । पञ्चम्यर्थे षष्ठी । तदाह—एभ्य इति । तच्छीलादिष्वित्येव । ननु दंशेर्नोपधत्वात् कथं दशामिति निर्देश इत्यत आह—भाविनेति । ऊके कृते सति भविष्यतो नलोपस्याऽत्र निर्देश इति यावत् । यायजूक इति । 'यस्य हलः' इति यलोपः । 'अतो लोपः' 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः । जञ्जपूक इति । 'जपजभदहदशभञ्जपशां च' इत्यभ्यासस्य नुक् । एवं दन्दशूकः । नमिकम्पि । नमि, कम्पि, स्मि, अजस, कम, हिंस, दीप् एषां द्वन्द्वात्पञ्चम्येकवचनम् । एभ्यः सप्तभ्यो रप्रत्ययः स्यात्

त्ये वर्तते। अजस्रम्, सन्ततमित्यर्थः। कम्रः। हिंस्रः। दीप्रः। **३१४८ सनाशंसभिक्ष उः ३।२।१६८॥** चिकीर्षुः। आशंसुः। भिक्षुः। **३१४९ विन्दुरिच्छुः। ३।२।१६९॥** वेत्तेर्नुम् इषेश्छत्वं च निपात्यते। वेत्ति तच्छीलो विन्दुः। इच्छति इच्छुः। **३१५० क्याच्छन्दसि ३।२।१७०॥** 'देवाञ्जिगाति सुम्नयुः'। **३१५१ आदृगमहनजनः किकिनौ लिट् च ३।२।१७१॥** आदन्तादृदन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत्। पपिः सोमम्। ददिर्गाः। बभ्रिर्वज्रम्। जग्मिर्युवा। 'जघ्निर्वृत्रममित्रियम्'। जज्ञिः। 'भाषायां धाञ्कृसृगमिजनिनमिभ्यः' (वा ७२२)। दधिः। चक्रिः। सस्रिः। जग्मिः। जज्ञिः। नेमिः। 'सासहिवावहिचाचलिपापतीनामुपसंख्यानम्' (वा ७२३)। यङन्तेभ्यः सह-

---

तच्छीलादिष्वित्यर्थः। अजसधातोः धातुपाठे अदर्शनादाह—जसिर्नञ्पूर्व इति। 'जसु मोक्षणे' अयं नञ्पूर्वः शक्तित्वभावात् क्रियासातत्ये वर्तते इत्यर्थः। निपातनाद्धातुना नञः समासे 'नलोपो नञः' इति नलोपः। सनाशंस। सन्, आशंस, भिक्ष एषां त्रयाणां द्वन्द्वात्पञ्चम्येकवचनम्। 'स'निति सन्प्रत्ययान्तं गृह्यते। 'षणु दाने', 'षण सम्भक्तौ' इत्यनयोस्तु न ग्रहणम्। गर्गादिषु विजिगीषुशब्दपाठाल्लिङ्गात्। एभ्यः उप्रत्ययः स्यात् तच्छीलादिष्वित्यर्थः। आशंसुरिति। 'आङः शसि इच्छायाम्' इत्यस्मादुः। विन्दुरिच्छुः। वेत्तेरिति। 'विद ज्ञाने' इत्यस्मादुप्रत्यये प्रकृतेर्नुमागमः। 'इषु इच्छायां'मित्यस्मादुप्रत्यये षकारस्य छत्वं च निपात्यते इत्यर्थः। वेत्तीति। धातुप्रदर्शनम्। तच्छील इति। वेदनशील इत्यर्थः। इच्छतीति। 'इषु इच्छायाम्' इति धातुप्रदर्शनम्। इच्छुरिति। एषणशील इत्यर्थः। क्याच्छन्दसि। क्यप्रत्ययान्तादुप्रत्ययः स्यात् तच्छीलादिषु छन्दसीत्यर्थः। सुम्नयुरिति। सुम्नं सुखम्। तदात्मन इच्छतीत्यर्थे सुम्नशब्दात् क्यच्। 'न च्छन्दस्यपुत्रस्य' इति निषेधात् 'क्यचि च' इति ईत्वम् 'अकृत्सार्व' इति दीर्घश्च न। 'सुम्नय' इति क्यजन्तादुप्रत्ययः अतो लोपः। आदृगम। आत्, ऋ, गम, हन, जन् एषां द्वन्द्वात्पञ्चमी। कि किन् अनयोर्द्वन्द्वः। लिट् चेति व्याचष्टे—तौ च लिड्वदिति। तच्छीलादिष्वित्येव। पपिरिति। पाधातोः किः। द्वित्वादि, आल्लोपः। ददिरिति। दाधातोः किः, द्वित्वादि। बभ्रिर्वज्रमिति। भृञः किः, द्वित्वादि। जघ्निरिति। हनः किः, द्वित्वादि। 'गमहन' इत्युपधालोपः। 'हो हन्तेः' इति कुत्वम्। जज्ञिरिति। जनेः किः, द्वित्वादि। एवं किन्यपि बोध्यम्। स्वरे विशेषः। छान्दसमप्येतत्सूत्रद्वयं भाषायामित्यादिवक्ष्यमाणवार्तिकविवेचनाय इहोपन्यस्तम्। भाषायामिति। वार्तिकमिदम्। धाञ्, कृ, सृ, गमि, जनि, नमि एभ्यः षड्भ्यः किकिनौ, तौ च लिड्वदिति वक्तव्यमित्यर्थः। दधिरित्यादि। किकिनोः कृतयोः द्वित्वादि यथासम्भवं ज्ञेयम्। नेमिरिति। नमेः किः। द्वित्वम्, एत्वाभ्यासलोपौ। सासहीति। सहेर्यङि द्वित्वादौ 'दीर्घोऽकितः' इति दीर्घे, किकिनोः कृतयोः 'यस्य हलः' इति यकार-

स्यादिभ्यः किकिनौ, पतेर्नीगभावश्च निपात्यते। ३१५२ **स्वपितृषोर्नजिङ्** ३।२।१७२॥ स्वप्नक्। तृष्णक्। तृष्णजौ। तृष्णजः। 'धृषेश्चेति वाच्यम्' इति काशिकादौ। धृष्णक्। ३१५३ **शॄवन्द्योरारुः** ३।२।१७३॥ शरारुः। वन्दारुः। ३१५४ **भियः क्रुक्लुकनौ** ३।२।१७४॥ भीरुः। भीलुकः। 'क्रुकन्नपि वाच्यः' (वा २१४५) भीरुकः। ३१५५ **स्थेशभासपिसकसो वरच्** ३।२।१७५॥ स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। कस्वरः। ३१५६ **यश्च यङः** ३।२।१७६॥ यातेर्यङन्ताद्वरच् स्यात्। 'अतो लोपः' (सू २३८०) तस्य 'अचः परस्मिन्—' (सू ५०) इति स्थानिवद्भावे प्राप्ते 'न पदान्त' (सू ५१) इति सूत्रेण यलोपं प्रति स्थानिवद्भावनिषेधात् 'लोपो व्योः—' (सू ८७३) इति यकारलोपः। अल्लोपस्य स्थानिवत्त्वमाश्रित्य आतो लोपे प्राप्ते 'वरे लुप्तं न स्था-

---

लोपे कृतो लोपे 'सासहि'रिति निर्देशः। एव वहेः चलेः पतेश्च यङन्तस्य किकिन्नन्तस्य निर्देशः। एषां निपातनस्य उपसंख्यानमित्यर्थः। तदाह—यङन्तेभ्यः सहेरयादिभ्य इति। नीगभाव इति। 'नीग्वञ्चु' इति प्राप्तस्य नीगागमस्याऽभाव इत्यर्थः। स्वपितृषोर्नजिङ्। पञ्चम्यर्थे षष्ठी। स्वपेः तृषेश्च नजिङ् स्यात् तच्छीलादिष्वित्यर्थः। जकारादिकार उच्चारणार्थः। ङकार इत्। स्वप्नगिति। स्वपनशील इत्यर्थः। स्वप्नजौ। स्वप्नजः। एवं तृष्णक्, तर्षणशील इत्यर्थः। धृषेश्चेति। 'नजिङि'ति शेषः। काशिकादाविति। भाष्ये तु न दृश्यते इति भावः। शॄवन्द्योरारुः। पञ्चम्यर्थे षष्ठी। 'शॄ हिंसायाम्' 'वदि अभिवादनस्तुत्योः' आभ्याम् आरुप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः। भियः। भीधातोः क्रु क्लुकन् एतौ स्तः तच्छीलादिष्वित्यर्थः। कित्त्वान्न गुणः। स्थेश। 'ष्ठा' गतिनिवृत्तौ, ईश ऐश्वर्ये, भासृ दीप्तौ, पिसृ पेसृ गतौ, कस गतौ, एभ्यः वरच् स्यात्तच्छीलादिष्वित्यर्थः। ईश्वरीति तु पुंयोगे ङीष्। यश्च यङः। 'या प्रापणे' इत्यस्य धातोरनुकरणस्य या इत्यस्य 'यः' इति षष्ठ्यन्तम्। तदाह-यातेरिति। याधातोर्यङ्, द्वित्वादि। 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः, यायाय इति यङन्ताद्वरचि विशेषमाह—अतो लोप इति। हलः परत्वाऽभावात् 'यस्य हलः' इति यकारलोपो न। यायाय वर इति स्थिते आह-लोपो व्योरिति, यकारलोप इति। ननु अतो लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वात् अकारेण व्यवधानात् वलपरत्वाभावात् कथमिह यलोप इत्यत आह-तस्येति। तस्य अल्लोपस्य यलोपे कर्तव्ये 'न पदान्त' इति स्थानिवत्त्वनिषेधादित्यर्थः। एवञ्च यङोऽकारस्य यकारस्य च लोपे यायावर इत्यत्र 'आतो लोप इटि च' इत्याल्लोपमाशङ्क्य निराकरोति—अल्लोपस्येति। यङकारलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वमाश्रित्य तदकारात्मकार्धधातुकपरत्वात् आकारस्य 'आतो लोप इटि च' इत्याल्लोपे प्राप्ते सति परिहार उच्यते इत्यर्थः। परिहारमेवाह—वरे लुप्तं न स्थानिवदिति। 'लुप्त'मिति भावे क्तः। 'न पदान्त' इति सूत्रे 'वरे' इत्यनेन वरेपरे विहितं न स्थानिवदिति लभ्यते। अल्लोपोऽयमाद्-

निवत्' यायावरः । **३१५७ भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ३।२।१७७॥** विभ्राट् । भाः । भासौ । धूः । धुरौ । विद्युत् । ऊर्क् । पूः । पुरौ । दृशिग्रहणस्याप्यपकर्षाज्जवतेर्दीर्घः । जूः । जुवौ । जुवः । ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते । ततः क्विप् । ग्रावस्तुत् । **३१५८ अन्येभ्योऽपि दृश्यते ३।२।१७८॥** क्विप् । छित् । भिद् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः, क्वचिद्संप्रसारणं, क्वचिद्द्वे, क्वचिद्ध्रस्वः । तथा च वार्तिकम्–'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च' (वा २१४७-४८)।'क्विब्वची'त्यादिनोणादिसूत्रेण केषाञ्चित् सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम् । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौति आयतस्तूः । कटं प्रवते कटप्रूः । जुरुक्तः । श्रयति हरिं श्रीः । 'द्युतिगमिजुहोतीनां द्वे च' (वा २१४१)। दृशिग्रहणादभ्याससंज्ञा । दिद्युत् । जगत् । 'जुहोतेर्दीर्घश्च' (वा २१४६)। जुहूः ।

---

**धातुके वरे परे विहितः । अतः तस्य स्थानिवत्वाऽभावात्र यकोऽकारमाश्रित्य 'आतो लोप इटि च' इत्यस्य प्रवृत्तिरित्यर्थः । एवञ्च 'न पदान्त' इति सूत्रे 'वरे' इत्यंशस्य, 'यलोपे' इत्यंशस्य च यायावर इत्युदाहरणमिति बोध्यम् ।** भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः । **भ्राज, भास, धुर्वि, द्युत, ऊर्जि, पॄ, जु, ग्रावस्तु, एभ्योऽष्टभ्यः क्विप्स्यात् तच्छीलादिषु कर्तृष्वित्यर्थः ।** विभ्राडिति । **'भ्रश्च' इति षः ।** भा इति । **भासेः क्विपि सकारान्तस्य रुत्वविसर्गौ ।** धूरिति । **धुर्वीधातोः क्विप् । 'राल्लोपः' इति वकारस्य लोपः । धुर् इति रेफान्तम् । सुलोपः । 'र्वोरुपधायाः' इति दीर्घः ।** पूरिति । **पॄधातोः क्विप् । 'उदोष्ठ्य' इत्युत्वम् , रपरत्वम् । पुर् इति रेफान्तम्, सुलोपे 'र्वोः' इति दीर्घः । जुधातोः क्विपि दीर्घं साधयितुमाह—**दृशिग्रहणस्याप्यपकर्षादिति । **उत्तरसूत्रादिति भावः । अत्र व्याख्यानमेव शरणम् । ननु 'ग्रावस्तु' इति कथं समस्तनिर्देशः सुबन्तस्य ग्रावशब्दस्य धातुना समासाऽसम्भवादित्यत आह—**ग्रावशब्दस्येति । ग्रावस्तुदिति । **ह्रस्वात्तुक् ।** अन्येभ्योऽपि । क्विबिति । **शेषपूरणमिदम् । भ्राजभास इत्यादिसूत्रोपात्तापेक्षया अन्येभ्योऽपि धातुभ्यः तच्छीलादिषु कर्तृषु क्विप् दृश्यते इत्यर्थः ।** विध्यन्तरेति । **विधीयते इति विधिः कार्यम् । कार्यान्तरोपसङ्ग्रहार्थमित्यर्थः । तदेव दर्शयति—**क्वचिद्दीर्घ इत्यादि । क्विब्वचीत्यादिनेति । **'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च' इत्यौणादिकसूत्रेणेत्यर्थः ।** तृना बाधा मा भूदिति । **वासरूपविधिस्तु ताच्छीलिकेषु नेति भावः ।** वागिति । **वच्धातोः क्विप् , वचनात् उपधाया दीर्घः, 'वचिस्वपि' इति सम्प्रसारणाऽभावश्च । एवं कटप्रूरित्यत्र दीर्घः ।** प्राडिति । **वचनान्न सम्प्रसारणम् ।** जुरुक्त इति । **'भ्राजभास' इत्यत्रेति शेषः । अतोऽत्र तद्ग्रहणं मास्त्विति भावः ।** श्रीरिति । **श्रिञः क्विपि दीर्घः ।** द्युतीति । **'द्युतिगमिजुहो-**

'दृ भये अस्य ह्रस्वश्च'। दीर्यति। दद्दत्। 'ध्यायतेः सम्प्रसारणं च' (वा २१५१)। धीः। ३१५९ भुवः संज्ञान्तरयोः ३।२।१७९॥ मित्रभूर्नाम कश्चित्। धनिकाऽधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः। ३१६० विप्रसम्भ्यो ड्वसंज्ञायाम् ३।२।१८०॥ एभ्यो भुवो डुः स्यान्न तु संज्ञायाम्। विभुर्व्यापकः। प्रभुः स्वामी। संभुर्जनिता। संज्ञायां तु विभूर्नाम कश्चित्। 'मितद्र्वादिभ्य उपसंख्यानम्' (वा २१५२)। मितं द्रवतीति मितद्रुः। शतद्रुः। शम्भुः। अन्तर्भावितण्यर्थोऽत्र भवतिः। ३१६१ धः कर्मणि ष्ट्रन् ३।२।१८१॥ धेटो धाञश्च कर्मण्यर्थे ष्ट्रन्स्यात्। षो ङीषर्थः। 'धात्री जनन्यामलकीवसुमत्युपमातृषु।' ३१६२ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३।२।१८२॥ दावादेः ष्ट्रन्स्यात्करणेऽर्थे। दान्त्यनेन दात्रम्। नेत्रम्। ३१६३ तितुत्रतथसिसुसरकसेषु च ७।२।९॥ एषां दशानां कृत्प्रत्ययानामिण्न स्यात्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्रम्। सेत्रम्। सेक्त्रम्।

त्यादीनां द्वित्वं किच्च' इति वाच्यमित्यर्थः। 'पूर्वोऽभ्यासः' इत्यत्र षाष्ठद्वित्वेऽत्र एव पूर्वखण्डस्याऽभ्याससञ्ज्ञावचनादाह—दृशिग्रहणादिति। 'अन्येभ्योऽपि दृश्यते इत्य' त्यर्थः। ततश्चाऽभ्यासकार्यं हलादिशेषादीति भावः। दिद्युदिति। 'द्युतिस्वाप्योः' इति सम्प्रसारणम्। जगदिति। गमेः क्विप् 'गमः क्वौ' इति मलोपे तुक्। जुहोतेर्दीर्घश्चेति। वार्तिकमिदम्। चात्क्विप्द्वित्वे। ह्रस्वश्चेति। वार्तिकमिदम्। दद्दृदिति। ह्रस्वे कृते तुक्। ध्यायतेरिति। वार्तिकमिदम्। चात् क्विप्। धीरिति। ध्यैधातोः क्विपि सम्प्रसारणं, पूर्वरूपे 'हलः' इति दीर्घ इति भावः। अत्र 'ध्यायतेः सम्प्रसारणं च' इत्युणादिषु पठितत्वादिदं वार्तिकं मास्त्वित्याहुः। वस्तुतस्तु उणादिसूत्राणि न पाणिनीयानि किन्तु ऋष्यन्तरप्रणीतानीति वक्ष्यते अतो न पौनरुक्त्यशङ्का। भुवः सञ्ज्ञान्तरयोः। 'क्वि'बिति शेषः। 'सञ्ज्ञान्तरयोरे'वेति नियमार्थं सूत्रम्। सञ्ज्ञायामुदाहरति—मित्रभूर्नामेति। अन्तरे उदाहरति—धनिकेत्यादि। यावद्द्रव्यभाविन्यः सञ्ज्ञाः। प्रतिभूशब्दस्तु सत्येव पुरुषे कदाचिन्न भवति, ऋणे प्रतिदत्ते सति प्रातिभाव्यस्य निवृत्तेः। विप्रसम्भ्यः। 'डु असञ्ज्ञाया'मिति छेदः। विभुरिति। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। सम्भुरिति। सम्भवति उत्पादयतीति सम्भुः। तदाह—जनितेति। मितद्र्वादिभ्यः इति। मितद्र्वादिसिद्ध्यर्थं डुप्रत्ययस्य उपसङ्ख्यानमित्यर्थः। शम्भुरिति। शं सुखं भवति उत्पादयतीत्यर्थः। तदेवोपपादयति—अन्तर्भावितेति। धः कर्मणि ष्ट्रन्। धेटः कृतात्वस्य धाञश्च ध इति पञ्चम्यन्तम्। तदाह—धेट इत्यादि। षकारात् तकारस्य ष्टुत्वसम्पन्नटकारेण निर्देशः, षस्य इत्सञ्ज्ञायां लोपे सति ष्टुत्वसम्पन्नस्य टस्य निवृत्तिः। तदाह—धात्रीत्यादि। दाम्नी। दाप्, नी, शस, यु, युज, स्तु,

मेढ्रम् । पत्रम् । दंष्ट्रा । नद्ध्री । **३१६४ हलसूकरयोः पुवः ३।२।१८३॥** पूङ्-पूञोः करणे ष्ट्रन्स्यात्, तच्चेत्करणं हलसूकरयोरवयवः । हलस्य सूकरस्य वा पोत्रम् । मुखमित्यर्थः । **३१६५ अर्तिलूधूसूखनसहचर इत्रः ३।२।१८४॥** अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् । **३१६६ पुवः संज्ञायाम् ३।२।१८५॥** पवित्रम् । येनाज्यमुत्पूयते, यच्चाऽनामिकावेष्टनम् । **३१६७ कर्तरि चर्षिदेवतयोः ३।२।१८६॥** पुवः इत्रः स्यात् ऋषौ करणे, देवतायां कर्तरि । ऋषिर्वेदमन्त्रः । तदुक्तमृषिणेति दर्शनात् । पूयतेऽनेनेति पवित्रम् । देवतायां तु 'अग्निः पवित्रं स मा पुनातु' ।

॥ इति पूर्वकृदन्तप्रकरम् ॥

---

**तुद, सि, सिच, मिह, पत, दश, नह, एषां अयोदशानां द्वन्द्वः । 'दाप् लवने' इत्यस्य पकारस्य स्थाने 'यरोऽनु' इति कृतमकारस्य निर्देशः । अत्र शासेः पतेश्च त्रप्रत्यये इट-माशङ्क्य आह—**तितुत्रत । **ति, तु, त्र, त, थ, सि, सु, सर, क, स एषां दशानां द्वन्द्वः । अत्र 'सरे'त्येकम् । ति, तन्तिः, 'स्त्रियाम्' इति क्तिन् । तु, सक्तुः 'तनिगमि' इत्यादिना तुप्रत्ययः । त्र, शस्त्रम्, पत्रम् । 'दाम्नी' इति त्रप्रत्ययः । त, हस्तः । औणादिकः तप्रत्ययः । क्तप्रत्यये तु हसितमित्येव । थ, कुष्ठम् । औणादिकः क्थप्रत्ययः । सि कुक्षिः । कुषेरौणादिकः क्सिप्रत्ययः । सु, इक्षुः, इषेरौणादिकः क्सुप्रत्ययः । सर, अक्षरम्, अशेः सरन् । क, शल्कः, शलेः कः । स, वत्सः, 'वदेः सः'** । मेढ्रमिति । **'मिह सेचने' त्रः । ढत्वधत्वष्टुत्वढलोपाः ।** दंष्ट्रेति । **दंशधातोः त्रः । क्ङित्प्रत्ययाभावान्नलोपो न । सूत्रे दशेति शपा निर्देशात् 'दंशसञ्ज' इति नलोपः । केचित्तु दशेत्यकार उच्चारणार्थः । नलोपनिर्देशात् क्वचिदन्यस्मिन्नपि प्रत्यये अक्ङित्यपि नलोप इति 'दशना दन्तः' इत्याहुः ।** नद्ध्रीति । **नह्यते अनयेति विग्रहः । चर्मरज्जुः । 'नह बन्धने' त्रः । 'नहो धः' 'झषस्तथोः' इति तस्य धः । षित्वान्ङीष् ।** हलसूकरयोः पुवः । पोत्रमिति । **'तितुत्रतथसिसुसर' इति नेट् ।** अर्तिलूत्र । **अर्ति, लू, धू, सू, खन, सह, चर एषां सप्तानां द्वन्द्वात्पञ्चमी ।** पुवः सञ्ज्ञायाम् । **'इत्र' इति शेषः । करणे इत्येव ।** पवित्रमिति । **पूयते अनेनाऽऽज्यमिति विग्रहः । तदाह—**येनाज्यमिति । **पूयते आचमनोदकादिकमनेनेति विग्रहं मत्वा आह—**यच्चानामिकेति । **अनामिका उपकनिष्ठिकाङ्गुलिः ।** कर्तरि च । पवित्रमिति । **पावमान्यादिसूत्रम् ।** अग्निः पवित्रमिति । **पुनातीत्यर्थः । सामान्याभिप्रायमेकवचनं नपुंसकत्वं च ।**

**इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां तृतीयाध्यायस्य द्वितीयपादे पूर्वकृदन्तप्रकरणं समाप्तम् ।**

## अथोणादयः ॥ २५ ॥

१ **कृवापाजिमिस्वदिसाध्यशूभ्य उण्**। करोतीति कारुः, शिल्पी कारकश्च। 'आतो युक्—' ( सू २७६१ ) वातीति वायुः। पायुर्गुदस्थानम्। जयत्यभिभवति रोगान् जायुः औषधम्। मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम्। स्वादुः। साध्नोति परकार्यं साधुः। अश्नुते आशु शीघ्रम्। 'आशुर्व्रीहिः पाटलः स्यात्।' २ **छन्दसीणः**। 'मान आयौ'। ३ **दृसनिजनिचरिचटिभ्यो ञुण्**। दार्यत इति दारु। 'स्नुः प्रस्थः सानुरस्त्रियाम्'। जानु। जानुनी। इह 'जनिवध्योश्च' ( सू २५१२ ) इति न निषेधः। अनुबन्धद्वयसामर्थ्यात्।

---

अथ कृवापाजीत्यादीन्युणादिसूत्राणि मूले प्रौढमनोरमायां च स्फुटं व्याख्यातानि। अथाप्यस्माभिरपि अनतिविस्तरेण व्याख्यायन्ते। तानि चेमानि सूत्राणि शाकटायनमुनिप्रणीतानि नतु पाणिनिना प्रणीतानीति, 'उणादयो बहुल'मिति सूत्रे भाष्ये 'नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्' इति वार्तिकव्याख्यावसरेऽभिहितम्। उणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थं बहुलग्रहणमिति कैयटः। नह्येषां पाणिनीयत्वे शास्त्रान्तरशब्दो युज्यते। उणादिप्रत्ययान्ताः शब्दाः पाणिनिमतेऽव्युत्पन्ना एव। अत एव 'आयनेयी' इति सूत्रे 'प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्, उणादयो ह्यव्युत्पन्नानि प्रातिपदिकानीति' भाष्ये उक्तम्। अत एव च 'आदेशप्रत्यययोः' इति सूत्रभाष्ये 'उणादयो ह्यव्युत्पन्नानि प्रातिपदिकानी'त्युक्त्वा 'तर्हि सर्पिषा यजुषेत्यादौ अप्रत्ययत्वात् षत्वाभावमाशङ्क्य, बहुलग्रहणात् प्रत्ययसंज्ञामवलम्ब्य षत्वं साधितम्, व्युत्पत्तिपक्षश्च निराकृतः। अतोऽप्युणादिसूत्राणां न पाणिनीयत्वम्। अत एव 'अजेर्व्यघञपोः' इति सूत्रभाष्ये अजधातोर्युंप्रत्यये प्रकृतेर्वीभावे वायुशब्दो व्युत्पादितः। उणादिसूत्राणां पाणिनीयत्वे हि 'कृवापाजी'त्युणादिसूत्रेणोप्रत्ययमाश्रित्यैव व्युत्पाद्येत। एवञ्च क्वचिद्भाष्ये उणादीनां व्युत्पन्नत्वाश्रयणं शास्त्रान्तरमूलकमेवेति शब्देन्दुशेखरे प्रपञ्चितम्। तथा च 'क्विब्वची'त्युणादिसूत्राणां, तथाविधवार्तिकानां च न पौनरुक्त्यशङ्का। अथोणादयः। कृवापाजि। डु कृञ् करणे, वा गतिगन्धनयोः, पा पाने, जि अभिभवे, डु मिञ् प्रक्षेपणे, स्वद आस्वादने, साध संसिद्धौ, अशू व्याप्तौ, एषां द्वन्द्वात् पञ्चमी। एभ्य उणप्रत्ययः स्यात्कर्त्रर्थे इत्यर्थः। कारुरिति। कर्तरि उणि 'अचो ञ्णिति' इत्यनेन वृद्धौ च रूपम्। 'विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः' इति मेदिनी। वाधातोरुण्प्रत्यये युग्विधिं स्मारयति—आतो युगिति। पायुर्गुदस्थानमिति। उणि 'आतो युक्' इति भावः। 'गुदं त्वपानं पायुर्ना' इत्यमरः। 'पा रक्षणे' इत्यस्मादुणि तु रक्षकोऽप्यभिधीयते। जायुरिति। उणि वृद्धौ आयादेशे रूपम्। 'अगदो जायुः' इत्यमरकोशः। डु मिञ् प्रक्षेपणे इत्यस्मादुणि वृद्धिं बाधित्वा 'मीनातिमिनोती'त्यादिना आत्वे 'आतो युक्चिण्कृतोः' इति युकि रूपम्। 'मायुः पित्तं कफः

चारु रम्यम्। 'चाटु प्रियं वाक्यम्'। मृगय्वादित्वात्कुप्रत्यये 'चटु' इत्यपि। **४ किञ्जरयोः श्रिणः।** किं शृणातीति किंशारुः सस्यशूकं, बाणश्च। जरामेति जरायुः गर्भाशयः। 'गर्भाशयो जरायुः स्यात्'। **५ त्रो रश्च लः।** तरन्त्यनेन वर्णा इति तालुः। **६ कृके वचः कश्च।** कृकेन गलेन वक्तीति कृकवाकुः। 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः। **भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः।** भरति बिभर्ति वा भरुः, स्वामी हरश्च। म्रियन्तेऽस्मिन्

---

श्लेष्मा' इत्यमरः। स्वादुरिति। स्वदते रोचते इति स्वादुः पः। विशेष्यनिघ्नोऽयम्। स्वादु फलमित्यादौ बोध्यम्। साध्नोति परकार्यमित्यर्थे कर्तरि उण्। आशु शीघ्रमिति। विलम्बाऽभावमात्रपरत्वे क्लीबम्। तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गमिति बोध्यम्। 'उणादयो बहुलम्' इति बहुलवचनात्प्रयोगानुसारेण व्यवस्था। रह त्यागे इत्यस्मादुणि उपधावृद्धौ राहुरिति भवति। एवं वस निवासे इत्यस्मादुण्। वसत्यस्मिन्सर्वमिति वासुः। वासुश्चासौ देवश्च वासुदेवः। यद्यपि वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यणि वासुदेव इति रूपं सिद्धम्, तथापि तद्व्युत्पत्त्यन्तरमिति भावः। छन्दसीणः। उणित्यनुवर्तते। इण् गतावित्यस्मात् धातोः छन्दसि उण् भवतीत्यर्थः। एति गच्छतीत्यायुः। पुंलिङ्गोऽयम्। दृसनिजनि। दॄ विदारणे, षणु दाने, जन जनने, चर गतौ, चट भेदने, एषां द्वन्द्वात्पञ्चमी। दारिविति। 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः। 'अचोञ्णिति' इति वृद्धिः। सानुः प्रस्थः। अस्मिन्नर्थे कोशं प्रमाणयति—स्नुः प्रस्थः सानुरस्त्रियामिति। जनधातोर्ञुणि रूपमाह—जानु इति। 'अत उपधायाः' इत्यनेनोपधावृद्धिरिति भावः। ननु यदुक्तम् अत उपधाया वृद्धौ जानु इति रूपमिति तदसङ्गतम् 'जनिवध्योश्चे'त्यनेनानयोरुपधाया वृद्धिर्न स्यात् चिणि ञ्णिति कृति चेत्यर्थकेन वृद्धिनिषेधादित्याशङ्क्याह—अनुबन्धद्वयसामर्थ्यादिति। एकेनैवानुबन्धेनाऽन्यत्र वृद्धौ अत्र निषेधे च सिद्धे द्व्यनुबन्धकरणम् अत्रापि वृद्धिर्भवितव्येति ज्ञापनार्थमिति बोध्यम्। चरधातोर्ञुणि उपधावृद्धौ चारु इति रूपम्। नपुंसकलिङ्गोऽयम्। चाटु इति। ननु उपधावृद्धेर्नित्यत्वात् चाटु इत्येव भाव्यम्, ननु चटु इति, प्रयुज्यते तु कथं? कथमित्याशङ्कायामाह—मृगय्वादित्वादिति। किञ्जरयोः श्रिणः। किं जर एतयोः शॄ हिंसायाम् श्रिण् आभ्यां ञुण् स्यात्। यथासंख्यमन्वयः। किमि शॄधातोर्ञुण्युदाहरति—किंशारुरिति। सस्यशूकमिति। 'किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' इति मेदिनी। त्रो रश्च लः। त्रः रः इति छेदः। तॄ प्लवनतरणयोरित्यस्मात् ञुण् स्यात् रेफस्य च लकारो भवतीत्यर्थः। तरन्त्यनेनेति तालुः। वृद्धौ रेफस्य लकार इत्यर्थः। कृके वचः कश्च। कृके उपपदे वचधातोः ञुण् स्यात्। चकारस्य च ककार इत्यर्थः। 'चजोः कु घिण्ण्यतोः' इत्यनेनाऽप्राप्तौ कविधिरयम्। कृकवाकुरिति। वचधातोर्ञुणि उपधावृद्धौ चस्य कत्वे रूपम्। कृकवाकुशब्दार्थं विवृण्वन् कोशमाह—कृक

भूतानि मरुर्निर्जलदेशः । शेते शयुः अजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता इममिति चरुः । त्सरुः खड्गादिमुष्टिः । तनुः स्वल्पम् । तन्यते कर्मपाशोऽनया इति तनुः, शरीरं च । 'स्त्रियां मूर्तिस्तनुस्तनूः । धनुः शस्त्रविशेषः । 'धनुषा च धनुर्विदुः ।' धनुरिवाऽशनि वक्रः' इति श्रीहर्षः । मयुः किन्नरः । 'मद्गुः पानीयकाकिका' इति रभसः । न्यङ्क्वादित्वात्कुत्वं, जश्त्वेन सस्य दः । ८ अणश्च । 'लवलेशकणाऽणवः ।' चात्कटिवटिभ्याम् । कटति रसनां कटुः । वटति वदतीति वटुः । ९ धान्ये नित् । धान्ये वाच्येऽण उप्रत्ययः स्यात्, स च नित् । नित्वादाद्युदात्तः । 'प्रियङ्गवश्च मेऽणवश्च मे ।' 'व्रीहिभेदस्त्वणुः पुमान् ।' निद्ग्रहणं 'फलिपाटि-' इत्यादिसूत्रमभिव्याप्य संबध्यते । १० शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च । शृणातीति शरुः । शरुरायुधकोपयोः । स्वरुर्वज्रम् । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । 'पुंसि भूम्न्यसवः प्राणाः' । 'वसुर्हदेऽग्नौ योक्त्रेंऽशौ वसु तोये धने मणौ' । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् 'बिदि अवयवे' बिन्दुः । ११ स्यन्देः सम्प्रसारणं धश्च । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । १२ उन्देरिच्चादेः । उनत्ति इन्दुः । १३ ईषेः किच्च । ईषेरुः स्यात्, स च कित्, आदेरिकारादेशश्च ।

---

वाकुर्मयूर चेत्यादिना । भृमृशीतॄ । भृञ्, भरणे, मृङ् प्राणत्यागे, शीङ् स्वप्ने, तॄ प्लवनतरणयोः, चर गतौ, त्सर छद्मगतौ, तनु विस्तारे, धन धान्ये, डु मिञ् प्रक्षेपणे, टु मस्जो शुद्धौ एषां द्वन्द्वात्पञ्चमी । एभ्यः उः प्रत्ययः स्यात् । उणि प्रकृते उविधानं वृद्ध्यभावार्थम् । भृञ्धातोरुप्रत्यये उदाहरति—भरुरिति । स्वामी हरश्चेति । 'भरुः स्वर्णे हरे पुंसि' इति कोशादिति भावः । शयुरिति । 'अजगरे शयु'रित्यमरादाह—शयुरजगर इति । अणश्च । 'अण शब्दे' इत्यस्मादुप्रत्ययः स्यात् । अणुः । चकारप्रयोजनमाह—चादिति । कटे वर्षादौ, वटे वेष्टने, आभ्यामपि उप्रत्ययो भवतीत्यर्थः । वटुरिति । 'वटुर्द्विजसुतः स्मृतः' इति मेदिनी । धान्ये नित् । अण् इत्यनुवर्तते, उरिति च । अण्धातोर्धान्यरूपेऽर्थे उप्रत्ययः, स च नित् भवतीत्यर्थः । नित्वप्रयोजनमाह—आद्युदात्त इति । अभिव्याप्येति । तस्मिन्नपि सूत्रेऽनुवर्तत इत्यर्थः । शॄस्वृस्निहि । शॄ हिंसायां, स्वृ शब्दोपतापयोः, स्निह उपतापे, त्रपूष् लज्जायां, असु क्षेपणे, वस निवासे, हन हिंसागत्योः, क्लिदू आर्द्रीभावे, बन्ध बन्धने, मन ज्ञाने, एषां द्वन्द्वात्पञ्चमी । उरित्यनुवर्तते । त्रपु सीसमिति । तद्धि अग्निं दृष्ट्वा त्रपते लज्जत इव । स्यन्देः । 'स्यन्दू प्रस्रवणे' इत्यस्मात् उप्रत्ययः स्यात्, सम्प्रसारणं यकारस्य भवति, दकारस्य धकारश्च भवति । उन्देरिच्चादेः । उनत्ति क्लेदयति विरहिण इति इन्दुः । उप्रत्ययो भवति आदेरुकारस्य इकारश्च भवति । ईषेः किच्च । ईष्धातोरुप्रत्ययः स्यात्, स च

ईषते हिनस्ति इषुः, शरः। 'इषुर्द्वयोः'। **१४ स्कन्देः सलोपश्च।** कन्दुः। **१५ सृजेरसुम् च।** चात्सलोपः उप्रत्ययश्च। रज्जुः। **१६ कृतेराद्यन्तविपर्ययश्च।** ककारतकारयोर्विपर्ययः। तर्कुः सूत्रवेष्टकम्। **१७ नावञ्चेः।** न्यङ्क्वादित्वात्कुत्वम्। नियतमञ्चति न्यङ्कुर्मृगः। **१८ फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च।** फलेर्गुक् फल्गुः। पाटेः पटिः। पाटयतीति पटुः। नम्यतेऽनेन नाकुर्वल्मीकम्। मन्यत इति मधु। जायत इति जतु। **१९ वलेर्गुक्च।** 'वल संवरणे' वल्गुः। **२० शः कित्सन्वच्च।** श्यतेरुः स्यात्, स च कित् सन्वच्च। शिशुर्बालः। **२१ यो द्वे च।** ययुरश्वोऽश्वमेधीयः। सन्वदिति प्रकृते द्वेग्रहण-

---

कित्, आदेरोकारस्य इकारादेशश्च। इषुः। स्कन्देः सलोपश्च। स्कन्दिर् गतिशोषणयोरित्यस्मात् धातोरुप्रत्ययः स्यात्, सकारस्य लोपश्च। कन्दुः। स्कन्दत्यस्मिन् जनताप इति कन्दुः। सृजेरसुम् च। सृज विसर्गे इत्यस्मात् उप्रत्ययः स्यात्, तत्सन्नियोगेनासुम्, आदेः सकारस्य लोपश्चेत्यर्थः। असुमो मित्वादन्त्यादचः परो भवति। सृ असृज् इति स्थिते ऋकारस्य यणि, सस्य श्चुत्वेन शः, जश्त्वेन जः, आदेः सकारस्य लोपः, उप्रत्यये रज्जुरिति भवति। कृतेराद्यन्तविपर्ययश्च। कृती छेदने इत्यस्मात् उप्रत्ययो भवति। आदेः ककारस्यान्ते निवेशः। अन्त्यस्य तकारस्यादौ निवेशः। उप्रत्यये परतो गुणः। तर्कुरिति रूपम्। सच यन्त्रविशेषः। नावञ्चेः। अञ्चु गताविस्यस्मात् नावुपसर्गे उप्रत्ययः स्यात्। कुत्वविधिं स्मारयति—न्यङ्क्वादित्वादिति। न्यङ्कुर्मृग इति। 'न्यङ्कुर्मुनौ मृगे पुंसि' इति मेदिनी। फलिपाटिनमिमनिजनाम्। फल निष्पत्तौ, पट गतौ, ण्यन्तस्यात्र पाटेति ग्रहणम्, णम प्रह्वत्वे शब्दे, मन ज्ञाने, जनी प्रादुर्भावे, एषां द्वन्द्वात्षष्ठी। एभ्य उप्रत्ययो भवति। जनामिति षष्ठी उत्तरत्र विधीयमानगुगाद्यपेक्षया। गुगित्यागमः कित्त्वाल्लिङ्गात्। इतरे आदेशाः। अत्र 'एकापि षष्ठी विषयभेदाद्भिद्यत' इति गुगपेक्षया अवयवषष्ठी, इतरादेशान्प्रति तु स्थानषष्ठीति बोध्यम्। वस्तुतस्तु 'अनागमानां सागमका आदेशा' इति पक्षस्यापि परिभाषेन्दुशेखरादौ दर्शनात् स्थानषष्ठ्यपि सम्यगेव। फलधातोरुप्रत्यये गुगागमेऽन्तावयवे कृते फल्गु इति रूपम्। पाटेरुप्रत्यये प्रकृतिभूतपाटेः पटः आदेशः। इकारः 'इक्श्तिपौ धातुनिर्देशे' इत्युक्तरीत्या बोध्यः। पटुरिति रूपम्। नाकुर्वल्मीकमिति। नमधातोर्नाकिरादेशः। 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः। मध्विति। मनधातोरुप्रत्यये धकारेऽन्तादेशे रूपम्। जत्विति। जनधातोरुप्रत्यये नकारस्य तकारः अन्तादेशः। वलेर्गुक् च। वल संवरणे इत्यस्माद्धातोः उप्रत्ययो भवति, तत्सन्नियोगेन प्रकृतेर्गुगागमश्च। वल्गु इति रूपम्। अत्र केचित् वल्गु इति पठन्ति, तत् 'तद्वल्गुना युगपदुन्मिषितेन तावत्' इत्यादिलक्ष्यविरोधादुपेक्ष्यम्। शः कित्सन्वच्च। शो तनूकरणे इत्यस्मादुप्रत्ययः, स च कित्, सन्वच्च भवति। शिशुरिति। शो इत्यस्मादुप्रत्यये तस्य

मित्वनिवृत्त्यर्थम् । २२ कुर्भ्रश्च । बभ्रुः । 'बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ ।' चादन्यतोऽपि । चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः । २३ पॄभिदिव्यधिगृधिधृषिभ्यः । कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । 'ग्रहिज्या-' ( सू २४१२ ) इति सम्प्रसारणम् । विरहिणं विध्यति विधुः । 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे ।' गृधुः कामः । धृषुर्दक्षः । २४ कृग्रोरुच्च । करोतीति कुरुः । गृणातीति गुरुः । २५ अपदुःसुषु स्थः । 'सुषामादिषु च' ( सू १०२२ ) इति षत्वम् । अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु । २६ रपेरिच्चोपधायाः । अनिष्टं रपतीति रिपुः । २७ अर्जिदृशिकम्यमिपशिबाधामृजिपशितुग्धुग्दीर्घहकाराश्च । अर्जयति गुणानृजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः कन्दर्पः । अन्धुः कूपः । 'पांशुर्ना न द्वयो रजः ।' 'तालव्या अपि दन्त्याश्च

---

कित्त्वात् 'आदेच' इत्यात्वे तस्य द्वित्वे 'सन्यतः' इत्यभ्यासस्येत्वे 'आतो लोप इटि च' इत्यालोपः । तस्याजादार्धधातुकक्ङिति विधानात् । तथा च शिश्रुरिति रूपम् । यो द्वे च । या प्रापणे इत्यस्य य इति षष्ठ्यन्तम् । या प्रापणे इत्यस्मादुप्रत्ययो भवति, प्रकृतेर्द्वित्वं च भवतीत्यर्थः । सन्वत्त्वे तु 'सन्यतः' इतीत्वं स्यात् । तस्मात्स न विहितः । तदेवाह—सन्वदितीत्यादिना । कुर्भ्रश्च । चकारात् द्वे इत्यनुवर्तते । भृञ् भरणे इत्यस्मात्कुप्रत्ययो भवति, प्रकृतेर्द्वित्वं चेत्यर्थः । भरतीति बभ्रुः । कोशमाह—बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ इति । धरणिकोशोऽयम् । ननु चक्रुरित्यादि कथमित्याशङ्कायामाह—चादन्यतोऽपीति । अन्येभ्योऽपि धातुभ्यः कुप्रत्ययः, प्रकृतिद्वित्वं च भवतीत्यर्थः । जघ्नुरिति । 'गमहन' इत्युपधालोपः । पॄभिदिव्यधिगृधिधृषिभ्यः । पॄ पालनपूरणयोः, भिदिर् विदारणे, व्यध ताडने, गृधु अभिकाङ्क्षायां, ञिधृषा प्रागल्भ्ये, एषां द्वन्द्वात्पञ्चमी । एभ्यः कुः स्यात् । पुरुरिति । कुप्रत्यये परतः 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । रपरत्वम् । विधुरित्यत्र प्रक्रियामाह—ग्रहिज्येति सम्प्रसारणमिति । व्यधधातोस्ताडनार्थत्वादाह—विरहिणमिति । कोशं प्रमाणयति—विधुः शशाङ्क इत्यादिना । विश्वकोशोऽयम् । कृग्रोरुच्च । डु कृञ् करणे, गॄ निगरणे इत्याभ्यां कुः स्यात् । उकारः अन्तादेशश्च रपरः । कुरुः, गुरुरिति रूपम् । अपदुःसुषु स्थः । अप, दुस्, सु एषु उपपदेषु स्थाधातोः कुप्रत्ययः स्यात् । आतो लोपे अपष्ठु दुःष्ठु सुष्ठु इत्यादि रूपम् । रपेरिच्चोपधायाः । रपधातोः कुप्रत्ययः स्यात्, उपधाया इकारादेशश्च । अर्जिदृशि । अर्ज अर्जने, दृशिर् प्रेक्षणे, कमु कान्तौ, अम गत्यादिषु, पशि नाशने सौत्रोऽयं धातुः, बाधृ लोडने, एषां षण्णां द्वन्द्वात् षष्ठी । एभ्यः कुप्रत्ययः स्यात् तत्सन्नियोगेन प्रकृतिभूतानां षण्णामर्ज्यादीनां मध्ये अर्जिदृश्योः ऋज पश एतौ सर्वादेशौ, कमेस्तुगागमः पशेरिति । इदित्त्वान्नुम् । दीर्घोऽनेन विधीयते । बाधधातोरन्त्यस्य हकारादेशः । एकापि षष्ठी विषयभेदाद्भिद्यत इत्युक्तत्वात् । यथा आदेशागमयोरन्वयः । कन्तुः

सम्बसूकरपांसवः ।' बाधते इति बाहुः । 'बाहुः स्त्रीपुंसयोर्भुजः ।' **२८ प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च ।** त्रयाणां कुः सम्प्रसारणं, भ्रस्जेः सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वात्कुत्वम् । भृज्जति तपसा भृगुः । **२९ लङ्घिबंह्योर्नलोपश्च ।** लघुः । 'वालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते' ( वा ४७९८ )। रघुर्नृपभेदः । बहुः । **३० ऊर्णोतेर्नुलोपश्च ।** ऊरु सक्थिः । **३१ महति ह्रस्वश्च ।** उरु महत् । **३२ श्लिषेः कश्च ।** श्लिष्यतीति श्लिकुर्भृत्यः, उद्यतो ज्योतिश्च । **३३ आङ्परयोः खनिशृभ्यां डिच्च ।** आ खनतीत्याखुः । परं शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि । **३४ हरिमितयोर्द्रुवः ।** 'द्रु गतौ' अस्मात् हरिमितयोरुपपदयोः कुः, स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः । मितं द्रवति मितद्रुः समुद्रः । **३५ शते च ।** शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः, शाखा च । तद्वान्द्रुमः । **३६ खरुशङ्कुपीयुनीलङ्गुलिगु ।** पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफ-

---

मदनः । पथिम्रदिभ्रस्जाम् । **प्रथ प्रख्याने, म्रद मर्दने, भ्रस्ज पाके, एभ्यः कुप्रत्ययः स्यात् सम्प्रसारणं च । भ्रस्जधात्ववयवसकारस्य लोपश्चेत्यर्थः । सलोप इत्यस्यान्याऽसम्भवात् भ्रस्जधातावेवान्वेति । प्रथधातोः कुप्रत्यये सम्प्रसारणे पृथुरिति रूपम् । भृगुरित्यत्र कुत्वं समर्थयते—**न्यङ्क्वादित्वादिति । लङ्घिबंह्योर्नलोपश्च । **लघि गतौ, बहि वृद्धौ, आभ्यां कुप्रत्ययः स्यात् , नकारलोपश्च । लघु बहु इति रूपम् । लघु इत्यत्र विशेषमाह—**वालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते । **'व' इति षष्ठ्यन्तम् । एतद्वयवस्य लकारस्य रत्वं वा आपाद्यत इत्यर्थः । एवं च रघुः इति रूपम् ।** ऊर्णोतेर्नुलोपश्च । **ऊर्णुञ्धातोः कुप्रत्ययः स्यात्, तत्संनियोगेन नुकारस्य लोपश्च । ऊरु इति रूपम् ।** महति ह्रस्वश्च । **महति विशेष्ये ह्रस्वश्च भवति । उरु इति रूपम् ।** श्लिषेः कश्च । **श्लिष आलिङ्गन इत्यस्मात् कुप्रत्ययः,कश्चान्तादेशः ।** श्लिकुर्भृत्य इति । **षस्य कत्वे रूपम् । श्लिकुरित्यस्यार्थान्तरमाह**—उद्यतो ज्योतिश्चेति । आङ्परयोः । **आङ्पराभ्यां खनु अवदारणे, शॄ हिंसायां, आभ्यां कुप्रत्ययः, स च डिद्भवति । डित्वाट्टिलोपः ।** आखुरिति । आखनतीति । **'भूमिं'मिति शेषः ।** परं शृणातीति । **शस्त्रं हिनस्तीत्यर्थः । पर्शुरित्यत्र व्युत्पत्तिमाह—**पृषोदरादित्वादिति । हरिमितयोर्द्रुवः । **द्रु गताविस्यस्माद्धातोर्हरिमितयोरुपपदयोः कुप्रत्ययः स्यात्, स च डिद्भवति ।** हरिद्रुरिति । **कुप्रत्ययः, डित्वात् टिलोपः । मितद्रुरिति चेत्थमेव रूपम् ।** शते च । **शतशब्दे चोपपदे द्रु गताविस्यस्माद्धातोः कुप्रत्ययो भवति, स च डिदिति सूत्रार्थः ।** **टिलोपः । द्रुरित्यत्र कथं कुप्रत्ययः केवलात्कुप्रत्ययविधेः कुत्राप्यदृष्टत्वादित्यत आह—**बाहुलकादिति । तद्वानिति । **'द्युद्रुभ्यां म' इति मत्वर्थीयो मप्रत्ययः ।** खरुशङ्कुपीयुनीलङ्गुलिगु । **खनु अवदारणे, शकि शङ्कायां,**

श्चान्तादेशः। खरुः कामः क्रूरो मूर्खोऽश्वश्च । 'शङ्कुर्ना कीलशल्ययोः।' पिबतेरीत्त्वं युगागमश्च । पीयुर्वायसः कालः सुवर्णं च । निपूर्वाल्लगि गतावस्मात्कुर्नेर्दीर्घश्च । नीलङ्गुः कृमिविशेषः शृगालश्च । 'नीलाङ्गुः' इति पाठान्तरम् । तत्र धातोरपि दीर्घः। लगे सङ्गे, अस्य अत इत्त्वं च । लगतीति लिगु चित्तम् । लिगुर्मूर्खः । **३७ मृगय्वादयश्च** । एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् । **३८ मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्** । मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वादङ्कूरोऽपि । **३९ व्यथेः सम्प्रसारणं किच्च** । 'विथुरश्चोररक्षसोः' । **४० मुकुरदर्दुरौ** । मुकुरो दर्पणः । बाहुलकान्मकुरोऽपि । 'दृ विदारणे' धातोर्द्विर्वचनमभ्यासस्य रुक्टिलोपश्च । 'दर्दुरस्तोयदे भेके

---

पा पाने, निपूर्वः लगि गतौ, लगे सङ्गे, इत्येतेभ्यः पञ्चभ्यो धातुभ्यः कुप्रत्यये एते निपात्यन्ते । निपातनमेवाह—खनते रेफश्चान्तादेश इति । नकारस्य रेफे आदेशे खरुरिति रूपम् । खरुरित्यस्यार्थं विवृणोति—काम इत्यादिना । 'खरुः पतिवरा कन्येत्यपि बोध्यम् । शङ्कुशब्दं कोशपूर्वकं विवृणोति-शङ्कुर्नेति । 'शङ्कुः कीले गरे शस्त्रे सङ्ख्यापादपभेदयोः । यादोभेदे च पापे च स्थाणावपि च दृश्यते ॥' इति विश्वः । पीयुरिति । ईत्त्वं युगागमश्च निपात्यते । नीलङ्गुरिति । 'नीलङ्गुः स्यात् कृमौ पुंसि भ्रमराल्यां तु योषिति' इति मेदिनी । मृगय्वादयश्च । मृगयु इत्यादयः शब्दाः कुप्रत्ययान्ता निपात्यन्ते । मृगयुः देवयुः इत्यादयः उदाहरणम् । आकृतिगण इति । तेन पीलुपाण्डुरित्यादिसिद्धिः। मन्दिवाशि । मदि स्तुत्यादौ, वाश्र शब्दे, मन्थ विलोडने, चते याचने, चङ्क इति सौत्रो धातुः, अकि लक्षणे, एभ्य उरच् स्यात् । मन्दुरा । 'वाजिशाला तु मन्दुरा' इत्यमरः। वाशुरेति । 'वाशुरा वाशितारात्र्योः' इति मेदिनी । चङ्कुर इति । 'चङ्कुरः स्यन्दने वृक्षे' इति मेदिनी । ननु अङ्कूर इति कथम्, अनेनोरच्प्रत्यये अङ्कुरशब्दस्यैव साधुत्वादित्याशङ्कायामाह—खर्जूरादित्वादिति । तेन ऊरप्रत्यये अङ्कूरशब्दोऽपि साधुरेवेति भावः । व्यथेः सम्प्रसारणं किच्च । व्यथ भयसञ्चलनयोरित्यस्माद्धातोरुरच् स्यात् । स च कित् । धातोः सम्प्रसारणं चेत्यर्थः । 'विथुर' इत्युदाहरणम् । न चाऽत्र उरचः कित्वविधानेनैव 'ग्रहिज्ये'ति धातोः सम्प्रसारणे सिद्धे पृथक् सम्प्रसारणविधानं व्यर्थमिति वाच्यम्, ग्रहिज्येति सूत्रे तवर्गचतुर्थान्तव्यधधातोर्ग्रहणात्, अस्य च तवर्गद्वितीयान्तत्वेन तेनाऽप्राप्तेः । मुकुरदर्दुरौ । मकि मण्डने, दृ विदारणे, इत्यनयोः मुकुर दर्दुर इति निपात्यते इत्यर्थः। आद्ये उरच्, धातोरुपधाया उकारश्च निपात्यते । नन्वेवं कथं मकुर इति, अनेन निपातितस्य उपधाया उत्वस्य नित्यत्वादित्यत आह—बाहुलकादिति । बाहुलकात् उपधाया उत्वविकल्प इति भावः। दृधातोर्निपातनमाह—धातोर्द्विर्वचनमित्यादिना । दृधातोर्द्वित्वे गुणे

स्ततः पर्णमुचोऽपरे । ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति' । १८१ जोरी च जीरोऽणुः । ज्यश्चेत्येके । १८२ सुसूधागृधिभ्यः क्रन् । सुरः । सूरः । धीरः । गृध्रः । १८३ शुसिचिमीनां दीर्घश्च । शुः सौत्रः । शूरः । सीरम् । चीरम् । मीरः समुद्रः । १८४ वाविन्धेः । वीध्रं विमलम् । १८५ वृधिवपिभ्यां रन् । वर्ध्रं चर्म । वप्रः प्राकारः । १८६ ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः । रन्नन्ता एकोनविंशतिः । निपातनाद्गु-

णेलुक् वक्तव्य इत्यर्थः । संज्ञायामुदाहरणं बृंहयति वर्द्धयति प्रजा इति ब्रह्मा । णेर्लुक् । छन्दसि तु 'वर्धन्तु त्वा सुष्टुतयः' । वर्धयन्त्वित्यर्थः । बाहुलकात्संज्ञाछन्दसोरभावेऽपि क्वचित् भवतीत्याह—वान्ति पर्णशुष इति । प्रथमतः पर्णशुषः वाता वान्ति । पर्णं शोषयन्तीत्यर्थः । पर्णशोषणानन्तरं पर्णमुचो वाताः वान्ति । पर्णं मोचयन्तीति पर्णमुचः । पर्णमोचनानन्तरं पर्णरुहः वाता वान्ति । पर्णं रोहयन्तीति पर्णरुहः । ततो देवः वृष्टिं करोतीत्यर्थः । अत्र संज्ञाछन्दसोरभावेऽपि णेर्लुक् । जोरी च । जु इति सौत्रो धातुः अस्मात् रक् स्यात् । ईकारश्चान्तादेश इत्यर्थः । जीर इति । 'जीरस्तु जरणे खड्गे' इति मेदिनी । ज्यश्चेत्येक इति । ज्या वयोहानौ, अस्मात् रकि 'ग्रहिज्ये'ति सम्प्रसारणं, पूर्वरूपं, 'हल' इति दीर्घे च, जीर इति रूपमित्यर्थः । इदमेव च सम्यक् । अत एव भाष्ये 'न धातुलोप'सूत्रे 'जीवेरदानुः'इति वार्तिकस्य प्रत्याख्यानार्थं 'नैतत् जीवेः रूपम् , अपितु ज्याधातोः रकि' इति उक्तम् । सुसूधागृधिभ्यः क्रन् । षुञ् अभिषवे, षूङ् प्राणिगर्भविमोचने, डु धाञ् धारणपोषणयोः, गृधु अभिकाङ्क्षायां, एषां द्वन्द्वात् पञ्चमी । एभ्यः क्रन्प्रत्ययः स्यादित्यर्थः। सुरेति । कित्त्वान्न गुणः। रका सिद्धे क्रन्विधिः नित्स्वरार्थः। 'सुरा हलिप्रिया हाला' इत्यमरः । सूर इति । 'सूरसूर्यर्यमादित्यद्वादशात्मदिवाकराः' इत्यमरः । धीर इति । घुमास्थेतीत्वम् । 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरः । शुसिचिमीनां दीर्घश्च । शु गतौ, षिञ् बन्धने, चिञ् चयने, डु मिञ् प्रक्षेपणे, एभ्यः क्रन्प्रत्ययः स्यात् , प्रकृतिभूतानामेषां दीर्घश्च । शु गताविप्यस्य धातुपाठेऽदर्शनादाह—शुः सौत्र इति । चीरमिति । 'माणिक्यभाष्यसिन्दूरचीरचीवरपिञ्जरम्' इत्यमरः । मीर इति । मिञ्धातोः रूपम् । वाविन्धेः । वावुपदे इन्धी दीप्ताविस्यस्मात्क्रन्स्यादित्यर्थः । वीध्रमिति । 'अनिदिता'मिति नलोपः । 'वीध्रं तु विमलात्मकम्' इत्यमरः । वृधिवपिभ्यां रन् । वृधु वृद्धौ, डु वप् बीजसन्ताने, आभ्यां रन्प्रत्ययः स्यात् । वर्ध्रमिति । रनि लघूपधगुणः । 'नध्री वर्ध्री वरत्रा स्यात्' इत्यमरः । वप्र इति । 'वप्रस्तापे पुमानस्त्री वेणुक्षेत्रचये तटे' इत्यमरः । ऋजेन्द्राग्र । ऋज गतिस्थानादिषु, इदि परमैश्वर्ये, अगि गतौ, वज गतौ, डु वप् बीजसन्ताने, कुबि आच्छादने, चुबि वक्त्रसंयोगे, क्षुर विलेखने, खुर छेदने, भदि कल्याणे, उच समवाये, भि भी भये, शुच शोके, गुङ् अव्यक्ते शब्दे, वन सम्भक्तौ,

णाऽभावः । ऋज्रा नायकः । इदि इन्द्रः । अङ्गेर्नलोपः । अग्रम् । 'वज्रोऽस्त्रीहीरके पवौ' । डु वप्, उपधाया इत्वम् । विप्रः । कुम्बिचुम्ब्योर्नलोपः । कुब्रमरण्यम् । चुब्रं मुखम् । 'क्षुर विलेखने' रेफलोपः । अगुणः । क्षुरः । 'खुर छेदने' रलोपो गुणाऽभावश्च । खुरः । भन्देर्नलोपः भद्रम् । 'उच समवाये' चस्य गः । उग्रः । ञि भी, भेरी । पक्षे लः । भेलो जलतरणद्रव्यम् । शुचेश्चस्य कः, शुक्रः । पक्षे लः, शुक्लः । गुड् । वृद्धिः । 'गौरोऽरुणे सिते पीते' । 'वन संभक्तौ' वप्रो विभागी । इणो गुणाभावः । 'इरा मद्ये च वारिणि' । 'मा माने' माला । १८९ **समि कस उकन्** । 'कस गतौ' सम्यक् कसन्ति पलायन्ते जनाः अस्मादिति संकसुकः, दुर्जनः, अस्थिरश्च । १८८ **पचिनशोर्णुकन्कनुमौ च** । पचेः कः । पाकुकः सूपकारः । नशेर्नुम् । नंशुकः । १८९ **भियः क्रुकन्** । भीरुकः । १९० **क्वुन्शिल्पिसंज्ञयोरपूर्वस्यापि** । रजकः । इक्षुकुट्टकः । चरकः । 'चष भक्षणे' । चषकः । शुनकः । भषकः । १९१ **रमे रश्च लो वा** । रमको विलासी । लमकः । १९२ **जहातेर्द्वे च** । जहकस्त्यागी कालश्च । १९३ **ध्मो धम च** । धम-

---

इण् गतौ, मा माने, एते रन्नन्ता निपात्यन्ते । ऋज् इत्यत्र उपधागुणमाशङ्कयाह—निपातनादिति । अगिधातोरिगित्त्वादाह—अङ्गेर्नलोप इति । शेषं स्पष्टम् । समि कस उकन् । कस गतौ, अस्मात्समि उपपदे उकन्प्रत्यय इत्यर्थः । सङ्कसुक इति रूपम् । पचिनशोर्णुकन्कनुमौ च । डु पचष् पाके, णश अदर्शने, आभ्यां णुकन्प्रत्ययः स्यात् । अनयोः क्रमेण कादेशनुमागमौ च भवत इत्यर्थः । णुकनो णित्त्वाद्वृद्धिः । पाकुकः नंशुक इति रूपम् । भियः क्रुकन् । ञि भी भये इत्यस्मात् क्रुकन्प्रत्यय इत्यर्थः । भीरुक इति रूपम् । 'भीरुकः कातरः त्रस्तो भीरुभीरुकभीलुकाः' इत्यमरः । क्वुन्शिल्पि । शिल्पिन्यभिधेये संज्ञायां च गम्यमानायां क्वुन्स्यात् । अपूर्वस्य निरुपपदस्येत्यर्थः । पञ्चम्यर्थे षष्ठी । अपिशब्दात्सोपपदादपि । शिल्पिन्युदाहरति—रजक इति । रञ्ज रागे इत्यस्मात् क्वुनि नलोपे अकादेशे च रूपम् । 'निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः' इत्यमरः । सोपपदादुदाहरति–इक्षुकुट्टक इति । कुट्ट छेदने, इक्षून् कुट्टयतीति इक्षुकुट्टकः । संज्ञायामुदाहरति—चरक इति । 'पातकोद्योगचरकतमालामलका नडाः' इत्यमरः । चषक इति । 'चषकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम्' इत्यमरः । शुनक इति । शुन गतावित्यस्मात्क्वुनि रूपम् । भषक इति । भष भर्त्सने इत्यस्माद्रूपम् । 'शुनको भषकः श्वा स्यादलर्कस्तु स योगितः' इत्यमरः । रमे रश्च लो वा । रमु क्रीडायामित्यस्मात् क्वुन्स्यात् , धातोः रेफस्य लकारश्च वेत्यर्थः । रमकः लमक इति रूपम् । जहातेर्द्वे च । ओ हाक् त्यागे, अस्मात् क्वुन्स्यात् , धातोर्द्वित्वं च स्यादित्यर्थः । जहक इति रूपम् । ध्मो धम च । ध्मा शब्दाग्निसंयोगयोः, अस्मात्क्वुन्स्याद्-

कः कर्मकारः । १९४ हनो वध च । वधकः । १९५ बहुलमन्यत्रापि । 'कुह विस्मापने' । कुहकः । कृतकम् । १९६ कृषेर्वृद्धिश्चोदीचाम् । कार्षकः कृषकः । १९७ उदकं च । प्रपञ्चार्थम् । १९८ वृश्चिकृष्योः किकन् । वृश्चिकः । कृषिकः । १९९ प्राङि पणिकषः । प्रापणिकः पण्यविक्रयी । प्राकर्षिकः । परदारोपजीवी । २०० मुषेर्दीर्घश्च । मूषिकः आखुः । २०१ स्यमेः संप्रसारणं च । चाद्दीर्घः । सीमिकः वृक्षभेदः । २०२ क्रिय इकन् । क्रयिकः क्रेता । २०३ आङि पणिपनिपतिखनिभ्यः । आपणिकः । आपनिकः इन्द्रनीलः, किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आखनिको मूषिको वराहश्च । २०४ श्यास्त्याहृञविभ्य इनच् । श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः । २०५ वृजेः किच्च । वृजिनम् । २०६ अजेरज च । वीभावबाधनार्थम् ।

धातोर्धमादेशश्चेत्यर्थः । धमक इति रूपम् । हनो वध च । वधक इति । हन हिंसागत्योः, क्वुनि धातोर्वधादेशे च रूपम् । बहुलमन्यत्रापि । अन्यधातोरपि क्वुन्स्यात् । कुहधातोः क्वुनि कुहक इति रूपम् । कृतकमिति । कृती छेदने । कृषेर्वृद्धिश्चोदीचाम् । कृष विलेखने, अस्मात्क्वुन्, उदीचां मते वृद्धिश्चेत्यर्थः । उदीचांग्रहणाद्विकल्पोऽयं वृद्धिविधिः । कार्षकः कृषक इति रूपम् । उदकं च । उन्दी क्लेदने, अस्मात् क्वुन् । ननु क्वुन्शिल्पिसंज्ञयोरित्यादिना संज्ञात्वात्सिद्धमित्यत आह—प्रपञ्चार्थमिति । वृश्चिकृष्योः किकन् । ओ व्रश्चू छेदने, कृष विलेखने आभ्यां किकन्स्यात् , वृश्चिक इति रूपम् । 'किष्कुर्हस्ते वितस्तौ च शूककीटे च वृश्चिके' इत्यमरः । कृषिक इति । 'क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलः' इत्यमरः । प्राङि पणिकषः । प्राङि उपपदे पण व्यवहारे स्तुतौ च, कष हिंसायामिति धातुभ्यां किकन्स्यादित्यर्थः । प्रापणिक इति । प्र आङ्पूर्वकपणधातोः रूपम् । प्राकर्षिक इति । कषधातोः रूपम् । मुषेर्दीर्घश्च । मुष स्तेये इत्यस्मात्किकन् स्यात धातोर्दीर्घश्चेत्यर्थः । मूषिक इति रूपम् । 'उन्दुरुर्मूषिकोऽप्याखुः' इत्यमरः । स्यमेः सम्प्रसारणं च । स्यमु शब्दे, अस्मात् किकन् , धातोः सम्प्रसारणं, दीर्घश्चेत्यर्थः । सीमिक इति रूपम् । क्रिय इकन् । डु क्रीञ् द्रव्यविनिमये इत्यस्मादिकन्प्रत्ययः इत्यर्थः । क्रयिक इति । गुणे अयादेशे च रूपम् । आङि पणिपनि । पण व्यवहारे स्तुतौ च, पन च, पत्लृ गतौ, खनु अवदारणे एषां द्वन्द्वात् पञ्चमी । आङि उपपदे एतेभ्यः इकन्प्रत्ययः स्यात् । आङि उपपदेऽनेन इकना रूपसिद्धेः 'प्राङि पणिकष' इत्यत्र पणिग्रहणं प्रपञ्चार्थम् । उपसर्गान्तरनिवृत्त्यर्थं वा तत् । श्यास्त्याहृञविभ्य इनच् । श्यैङ् गतौ, ष्ट्यै शब्दसङ्घातयोः, हृञ् हरणे, अव रक्षणादौ एभ्य इनच् स्यात् । श्येन इति । 'पत्री श्येन उलूकस्तु वायसारातिपेचकौ' इत्यमरः । स्त्येनश्चोरः । हरिण इति । 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इत्यमरः । वृजेः किच्च । वृजी वर्जने, अस्मात् इनच् स्यात् , स च किद्भवतीत्यर्थः । वृजिनमिति ।

अजिनम्। २०७ बहुलमन्यत्रापि। कठिनम्। नलिनम्। मलिनम्। कुण्डिनम्। २०७ द्यतेः 'यत्परुषि दिनम्'। दिवसोऽपि दिनम्। २०८ द्रुदक्षिभ्यामिनन्। द्रविणम्। दक्षिणः। दक्षिणा। २०९ अर्तेः किदिच्च। इरिणं शून्यम्। २१० वेपितुह्योर्ह्रस्वश्च। विपिनम्। तुहिनम्। २११ तलिपुलिभ्यां च। 'तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु'। पुलिनम्। २१२ गर्वेरत उच्च। गौरादित्वान्ङीष्। गुर्विणी गर्भिणी। २१३ रुहेश्च। रोहिणः। २१४ महेरिनण्च। चादिनन्। माहिनम्-महिनम् राज्यम्। २१५ क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च। वाक्। प्राट्। श्रीः। स्रवत्यतो घृतादिकमिति स्रूः, य-

'कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम्' इत्यमरः। 'वृजिनं कल्मषे क्लीबम्' इति मेदिनी। अजेरज च। अज गतिक्षेपणयोः, अस्मादिनच् अजेरजादेशश्चेत्यर्थः। न चाजेरजादेशविधानं व्यर्थमिति वाच्यम्, वीभावबाधनार्थं तदावश्यकत्वात्। 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः। बहुलमन्यत्रापि। अन्येभ्योऽपि धातुभ्यः इनच् वक्तव्य इत्यर्थः। कठिनमिति। कठ कृच्छ्रजीवने इत्यस्माद्रूपम्। नलिनमिति। णल गहने इत्यस्माद्रूपम्। मलिनमिति। मल धारणे इत्यस्माद्रूपम्। कुण्डिनमिति। कुडि दाहे इत्यस्माद्रूपम्। द्यतेरिति। दो अवखण्डने इत्यस्मादिनच् स्यादित्यर्थः। दिनमिति रूपम्। द्रुदक्षिभ्यामिनन्। द्रु गतौ, दक्ष वृद्धौ, आभ्यामिनन् स्यादित्यर्थः। द्रविणमिति। 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः। दक्षिण इति। 'दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि' इत्यमरः। अर्तेः किदिच्च। ऋ गतौ, अस्मादिनन्। स च कित्। धातोरित्वं चादेशः। रपरत्वम्। इरिणमिति। 'इरिणं शून्यमूषरम्' इत्यमरः। वेपितुह्योर्ह्रस्वश्च। टु वेपृ कम्पने, तुहिर् अर्दने, आभ्यामिनन् धातोर्ह्रस्वश्चेत्यर्थः। एकारस्य ह्रस्व इकारः। 'अटव्यरण्यं विपिनम्' इत्यमरः। तुहिनमिति। लघूपधगुणे ह्रस्वः। तलिपुलिभ्यां च। तल प्रतिष्ठायां, पुल महत्त्वे, आभ्यामिनन्स्यात्। तलिनशब्दार्थं विवृण्वन्नाह—तलिनं विरले स्तोक इति। पुलिनमिति। 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः। गर्वेरत उच्च। गर्व मोचने, अस्मादिनन्, अकारस्य उकार आदेशश्चेत्यर्थः। स्त्रीत्वविवक्षायामाह—गौरादित्वादिति। गुर्विणीति। 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः। रुहेश्च। रुह बीजजन्मनि प्रादुर्भावे च, अस्मादिनन् प्रत्यय इत्यर्थः। रोहिण इति। उपधागुणे रूपम्। गौरादित्वात् रोहिणी। 'अर्जुन्यघ्न्या रोहिणी स्यात्' इति वैश्यवर्गे अमरः। महेरिनण् च। मह पूजायां अस्मादिनण् स्यात्। चकारादिनन्नपि। माहिनमिति। इनणो णित्त्वादुपधावृद्धिः। महिनमिति। इननि रूपम्। क्विब्वचिप्रच्छि। वच परिभाषणे, प्रच्छ ज्ञीप्सायां, श्रिञ् सेवायां, स्रु गतौ, द्रुङ् गतौ, प्रुङ् गतौ, जु गतौ सौत्रः एषां द्वन्द्वात् षष्ठी। एभ्यः क्विप् स्यात्, दीर्घः क्वित्त्वात्प्राप्तसम्प्रसारणाऽभावश्च स्यादित्यर्थः। वागिति। क्विपः सर्व-

शोपकरणम् । द्रूर्हिरण्यम् । कटप्रूः कामरूपी कीटश्च । 'जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्' । **२१६ आप्नोतेर्ह्रस्वश्च** । आपः । अपः । अद्भिः । अद्भ्यः । **२१७ परौ व्रजेः षः पदान्ते** । व्रजेः क्विब्दीर्घौ स्तः पदान्ते तु षश्च । परिव्राट् । परिव्राजौ । **२१८ हुवः श्लुवच्च** । जुहूः **२१९ स्रुवः कः** । स्रुवः । **२२० चिक्च** । इकार उच्चारणार्थः । क इत्, कुत्वम् । स्रुक् । 'ध्रुवं च स्रुचश्च संमृड्ढि' । **२२१ तनोतेरनश्च वः** । तनोतेश्चिक्प्रत्ययः, अनो वशब्दादेशश्च । त्वक् । **२२२ ग्लानुदिभ्यां डौः** । ग्लौः । नौः । **२२३ च्विरव्ययम्** । डौरित्येव । ग्लौकरोति । 'कृन्मेजन्तः' ( सू ४४६ ) इति सिद्धे नियमार्थमिदम् ।

---

लोपितया कुत्वे दीर्घे 'वचिस्वपियजादीना'मिति प्राप्तसम्प्रसारणाभावे च रूपम् । प्राट् इति । प्रच्छधातोः क्विपि 'ग्रहिज्ये'ति सम्प्रसारणाभावे दीर्घे छस्य 'छ्वोः शूडनुनासिके च' इति शकारे व्रश्चेति षत्वे जश्त्वे चर्त्वे च रूपम् । श्रीरिति । दीर्घे रूपम् । 'कृदिकारा'दिति ङीष् तु न शङ्क्यः । कृतः य इकार इति व्याख्यानात्, अत्र इकारस्य कृदवयवत्वं नास्ति, कृत्प्रत्ययस्तु सर्वलुप्तः । स्रूरिति । स्रुधातोर्दीर्घे रूपम् । द्रूरिति । द्रुधातोः रूपम् । जूशब्दार्थं विश्वप्रमेदिनीकोशमाह—जूराकाशे सरस्वत्यामिति । आप्नोतेर्ह्रस्वश्च । आप्लृ व्याप्तौ, अस्मात्क्विप् स्यात्, प्रकृतेर्ह्रस्वश्चेत्यर्थः । आप इति । अप्तृन्निति दीर्घः । ह्रस्वश्रवणायाह—अप इति अद्भिरिति । 'अपो भि' इति तकारादेशः, जश्त्वम् । परौ व्रजेः षः पदान्ते । परावुपपदे व्रज गतावित्यस्मात् क्विप् दीर्घश्च भवतः । पदान्तस्य तु जकारस्य षकारश्चेत्यर्थः । पदान्तविषये षत्वे कृते उदाहरति—परिव्राडिति । जश्त्वचर्त्वे इति भावः । परिव्राजाविति । पदान्तत्वाऽभावान्न षत्वम् । हुवः श्लुवच्च । हु दानादनयोः, अस्मात्क्विप्, धातोर्दीर्घः, श्लुवत्त्वं च भवतीत्यर्थः । जुहूरिति । श्लुवद्भावाद्द्विर्वचने अभ्यासह्रस्वे च रूपम् । स्रुवः कः । स्रु गतावित्यस्मात् कप्रत्यय इति भावः । स्रुव इति । कित्त्वाद्गुणाऽभावे उवङि च रूपम् । 'ध्रुवोऽपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः' इत्यमरः । अयं स्रुवोऽभिजिहर्ति होमानिति मूल एव जुहोत्यादिव्याख्याप्रकरणे उक्तम् । चिक् च । स्रुव इत्यनुवर्तते । स्रु गतावित्यस्मात् चिक्प्रत्ययो भवतीत्यर्थः । कित्त्वं गुणनिषेधार्थम् । इकार उच्चारणार्थः । चस्य कुत्वे च स्रुक् इति रूपम् । तनोतेरनश्च वः । चिगित्यनुवर्तते । तनु विस्तारे इत्यस्मात् चिक्प्रत्ययः । तनूधात्ववयवस्य अन् इति संघातस्य व इत्यकारविशिष्टः संघातो भवतीत्यर्थः । चस्य कुत्वे च रूपमाह—त्वगिति । 'स्त्रियां तु त्वगसृग्धरा' इत्यमरः । ग्लानुदिभ्यां डौः । ग्लै हर्षक्षये, णुद प्रेरणे, आभ्यां डौप्रत्यय इति भावः । ग्लौरिति । टेरिति टिलोपः । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । नौरिति । टिलोपे रूपम् । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः । च्विरव्ययम् । डौरित्यनुवर्तते । प्रत्ययग्रहणपरिभाषया तदन्तपरम् । डौप्रत्ययान्तं शब्दस्वरूपं च्व्यन्तं चेदव्ययसंज्ञकं स्या-

उणादिप्रत्ययान्तश्च्व्यन्त एवेति । **२२४ रातेर्डैः** । राः । रायौ । रायः । **२२५ गमेर्डोः** । 'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' । बाहुलकाद्द्युतेरपि डोः । 'द्यौः स्त्री स्वर्गान्तरिक्षयोः' इति कोषः । **२२६ भ्रमेश्च डूः** । भ्रूः । चाद्गमेः । अग्रेगूः । **२२७ दमेर्डोसिः** । दोः । दोषौ । **२२८ पणेरिज्यादेश्च वः** । वणिक् । स्वार्थेऽण् । 'नैगमो वाणिजो वणिक्' । **२२९ वशेः कित्** । 'उशिगग्नौ घृतेऽपि च' । **२३० भृञ ऊच्च** । भूरिक् भूमिः । **२३१ जसिसहोरुरिन्** । जसुरिर्वज्रम् । सहुरिरादित्यः पृथिवी च । **२३२ सुयुरुवृञो युच्** । सवनश्चन्द्रमाः । यवनः । रवणः कोकिलः । वरणः । **२३३ अशो रश च** । अश्नो-

**दित्यर्थः** । ग्लौकरोतीति । **अग्लौः ग्लौः सम्पद्यते तथा करोतीत्यर्थः । अव्ययत्वप्रयोजनं तु सुपो लुक् । अस्य नियमार्थत्वमाह**—कृन्मेजन्त इत्यादिना । **नियमाकारमाह**—उणादिप्रत्ययान्त इत्यादिना । च्व्यन्त एवेति । **तेन नौग्लौरित्यादौ नाव्ययत्वम्** । रातेर्डैः । **रा दाने इत्यस्मात् डैप्रत्ययो भवतीत्यर्थः** । राः इति । **'रायो हली'त्यात्वम् । अर्थरैविभवा अपि' इत्यमरः** । गमेर्डोः । **गम्लृ गतावित्यस्मात् डोप्रत्यय इत्यर्थः** । गौरिति । **टिलोपे 'गोतो णि'दिति णिद्वद्भावे वृद्धौ च रूपम् । गोशब्दार्थं विवृण्वन् केशवोक्तमाह**—गौर्नादित्ये इत्यादिना । **'गौरिला कुम्भिनी क्षमा' 'अनड्वान् सौरभेयी गौः' माहेयी सौरभेयी गौः' इति चामरः । द्यौरिति रूपमाह**—बाहुलकादिति । **द्युत दीप्तावित्यस्मात्प्रत्यये टिलोपे च रूपम् । 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः** । भ्रमेश्च डूः । **भ्रमु अनवस्थाने, चात् गम्लृ गतौ, आभ्यां डूप्रत्ययः स्यादित्यर्थः । डित्वाट्टिलोपः । भ्रूरिति । 'ऊर्ध्वं दृग्भ्यां भ्रुवौ स्त्रियाम्' इत्यमरः** । अग्रेगूरिति । **सेवक इत्यर्थः** । दमेर्डोसिः । **दमु उपशमे, अस्माड्डोसिप्रत्यय इत्यर्थः । डित्वाट्टिलोपः । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः** । पणेरिज्यादेश्च वः । **पण व्यवहारे स्तुतौ च, अस्मात् इजिप्रत्ययः । आदेः पकारस्य वकारश्चेत्यर्थः । वणिक् इति कुत्वे चर्त्वे च रूपम् । अमरकोशस्थवाणिज इत्यस्योपपत्तिमाह**—स्वार्थेऽणिति । वशेः कित् । **वश कान्तावित्यस्मात् इजिः, स च कित्स्यात् कित्त्वात्सम्प्रसारणम्, कुत्वचर्त्वे** । भृञ ऊच्च । **'भृञ् भरणे' अस्मादिजिः कित्स्यात्, धातोरूकारः अन्तादेशश्च । भूरिगिति । ऊत्वं रपरत्वम्** । जसिसहोरुरिन् । **जसु मोक्षणे, षह मर्षणे, आभ्यामुरिन्प्रत्यय इत्यर्थः** । सुयुरुवृञो युच । **षुञ् अभिषवे, यु मिश्रणे, रु शब्दे, वृञ् वरणे, एभ्यो युच्प्रत्यय इत्यर्थः । 'युवोरनाकौ' इति अनादेशः । गुणे अवादेशे च सवनमिति रूपम् । 'अभिषवः सवनं च सा' इत्यमरः । 'यवनं त्वधरे स्नाने सोमनिर्दलनेऽपि च' इति मेदिनी । यवनो म्लेच्छविशेषः** । रवणः इति । **'रषाभ्याम्' इति णत्वम् । 'रवणः शब्दनो नान्दी' इत्यमरः** । वरण इति । **गुणः रपरत्वं णत्वम् । 'सेतौ च**

तेर्युच्स्यात् रशादेशश्च । रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् । २३४ उन्देर्नलोपश्च । ओदनः । २३५ गमेर्गश्च । गमेर्युच्स्याद्गश्चादेशः । गगनम् । २३६ बहुलमन्यत्रापि । युच्स्यात् । स्यन्दनः । रोचना । २३७ रञ्जेः क्युन् । रजनम् । २३८ भूसूधूभ्रस्जिभ्यश्छन्दसि । भुवनम् । सुवनः आदित्यः । धुवनो वह्निः । निधुवनं सुरतम् । भृजनमम्बरीषम् । २३९ कॄपॄवृजिमन्दिनिधाञः क्युः । किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनम् । २४० धृषेर्धिष च संज्ञायाम् । धिषणो गुरुः । धिषणा धीः । २४१ वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च । अतिप्रत्ययान्ताः । 'पृषु सेचने' गुणाभावः । पृषन्तौ । बृहत् । महान् । गमेर्जगादेशः । जगत् । २४२

वरणे वेणी नदीभेदकचोच्चये' इत्यमरः । 'प्राकारो वरणः सालः' इति च । अशेरश च । अशू व्याप्तौ इत्यस्मात् युच् स्यात् प्रकृते रशादेशश्चेत्यर्थः । नायमादेशः शित्, सर्वादेशत्वं त्वनेकाल्त्वात् । रशनेति । 'स्त्री कट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्यमरः । जिह्वावाची त्विति । 'रसज्ञा रसना जिह्वा' इति प्रसिद्ध इति भावः । दन्त्यसकारेति । रस आस्वादने चौरादिकः । ततो नन्द्यादित्वात् ल्युप्रत्यये अनादेशे रूपमिति भावः । उन्देर्नलोपश्च । उन्दी क्लेदने, अस्मात् युच्, धातोर्नकारस्य लोपश्चेत्यर्थः । उपधागुणः । ओदन इति । 'ओदनोऽस्त्री सदीदिविः' इत्यमरः । गमेर्गश्च । गम्लृ गतावित्यस्माद्युच्प्रत्ययः गश्चान्तादेश इत्यर्थः । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । बहुलमन्यत्रापि । स्यन्दन इति । स्यन्दू प्रस्रवणे इत्यस्मात् युजिति भावः । रोचनेति । रुच दीप्तावित्यस्मात्प्रत्ययः । रञ्जेः क्युन् । रञ्ज रागे अस्मात्क्युन्स्यात् । रजनमिति । कित्त्वान्नलोप इति भावः । ल्युटि तु रञ्जनमिति भावः । 'रञ्जनं रक्तचन्दनम्' इत्यमरः । भूसूधू । भू सत्तायां, षूङ् प्राणिप्रसवे, धूञ् कम्पने, भ्रस्ज पाके, एभ्यः क्युन्स्यात् । भुवनमिति । कित्त्वान्न गुणः । उवङिति भावः । 'विष्टपं भुवनं जगत्' इत्यमरः । एवं सुवन इत्यपि । निधुवनमिति । 'मैथुनं निधुवनं रतम्' इत्यमरः । भृजनमिति । क्युनः कित्त्वात् 'ग्रहिज्येति'ति सम्प्रसारणम् । सस्य जश्त्वेन दः । दस्य श्चुत्वेन जः । कॄपॄवृजि । कॄ विक्षेपे, पॄ पालनपूरणयोः, वृजी वर्जने, 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु, निपूर्वकडुधाञ्धारणपोषणयोः' एभ्यः क्युप्रत्यय इत्यर्थः । किरण इति । इत्वं रपरत्वम् णत्वम् । पुरण इति । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । निधनमिति । 'आतो लोप इटि च' इत्यालोपः । 'निधनं कुलनाशयोः' इत्यमरः । धृषेर्धिष च सञ्ज्ञायाम् । ञि धृषा प्रागल्भ्ये, अस्मात्क्युः, धातोर्धिषादेशश्च । धिषण इति 'गीष्पतिर्धिषणो गुरुः' इत्यमरः । धिषणेति । 'बुद्धिर्मनीषा धिषणा' इत्यमरः । वर्तमाने । पृषु सेचने, बृह वृद्धौ, मह पूजायां, गम्लृ गतौ, एभ्यः अतिप्रत्यय इत्यर्थः । शतृवच्चेति । तेन उगित्त्वान्नुमिति भावः । अतिप्रत्यये कृपूप-

**संश्चत्तृपद्वेहत्।** एते निपात्यन्ते। पृथक्करणं शतृवद्भावनिवृत्त्यर्थम्। सञ्चिनोतेः सुट्। इकारलोपः। संश्चत् कुहकः। तृपत् छत्रम्। विपूर्वात् हन्तेष्टिलोपः, इत एत्वं च। 'वेहद्गर्भोपघातिनी'। २४३ **छन्दस्यसानच्शुजृभ्याम्।** शवसानः पन्थाः। जरसानः पुरुषः। २४४ **ऋञ्जिवृधिमन्दिसहिभ्यः कित्।** ऋञ्जसानो मेघः। वृधसानः पुरुषः। मन्दसानोऽग्निर्जीवश्च। सहसानो यज्ञो मयूरश्च। २४५ **अर्तेर्गुणः शुट् च।** अर्शसानोऽग्निः। २४६ **सम्यानच्स्तुवः।** संस्तवानो वाग्मी। २४७ **युधिबुधिदृशिभ्यः किच्च।** युधानः। बुधानः। दृशानो लोकपालकः। २४८ **हुर्छेः सनो लुक् छलोपश्च।** जुहुराणश्चन्द्रमाः। २४९ **श्वितेर्दश्च।** शिश्विदानः पुण्यकर्मा। २५० **तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चाऽनिटौ।** शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः तौ चाऽनिटौ। शंस्ता स्तोता। शंस्तरौ। शंस्तरः। क्षदिः सौत्रो धातुः, शकलीकरणे भक्षणे च।

---

धगुणामाशङ्क्याह—गुणाभाव इति। निपात्यत इति शेषः। शतृवत्त्वातिदेशस्य फलप्रदर्शनायाह—पृषन्तीति। गम्धातोरतिप्रत्यये जगादेशे च जगदिति रूपम्। लटः शतरि तु महतीत्यादौ शपि 'आच्छीनद्योः' इति नुम् स्यात्। अतिप्रत्यये तु तस्यार्धधातुकतया न शप्। संश्चत्तृपद्वेहत्। चिञ् चयने, तृप प्रीणने, हन हिंसागत्योः, एते अतिप्रत्ययान्ता निपात्यन्त इत्यर्थः। ननु पूर्वसूत्र एव पठितव्ये पृथक् पठनं व्यर्थमित्यत आह—पृथक्करणमिति। संश्चदित्यत्राह—इकारलोप इति। वेहदित्यत्राह—इत ए इति। विशब्दसम्बन्धिन इकारस्येत्यर्थः। छन्दस्य। शु गतौ, जॄष् वयोहानौ आभ्यामसानच्प्रत्यय इत्यर्थः। ऋञ्जिवृधि। ऋजि गतौ, वृधु वृद्धौ, मदी हर्षे, षह मर्षणे, एभ्यः असानच्प्रत्ययः कित्स्यादित्यर्थः। अर्तेर्गुणः। ऋ गतौ, अस्मात् असानच्प्रत्ययः, धातोर्गुणः, प्रत्ययस्य सुडागमश्चेत्यर्थः। सम्यानच् स्तुवः। समि उपपदे ष्टुञ् स्तुतावित्यस्मात् आनच्प्रत्यय इत्यर्थः। गुणेऽवादेशः। युधिबुधि। युध सम्प्रहारे, बुधिर् अवबोधने, दृशिर् प्रेक्षणे, एभ्यः आनच् कित्स्यादित्यर्थः। युधान इति। हुर्छेः सनो। हुर्छा कौटिल्ये, अस्मात्सन्नन्तात् आनच् स्यात्, सनो लुक्, छलोपश्च। जुहुराण इति। प्रत्ययलक्षणेन सनमाश्रित्य द्वित्वम्। नच 'न लुमता' इति निषेधः। लुप्तप्रत्यये परतः तन्निमित्ताङ्गसञ्ज्ञकस्य कार्यं नेति तदर्थात्। द्वित्वं तु न सनि परतः तन्निमित्ताङ्गसञ्ज्ञस्य विधीयते, अपि तु तदन्तस्य। श्वितेर्दश्च। श्विता वर्णे, अस्मात् सन्नन्तादानच् सनो लुक्; तकारस्य दकारश्च। शिश्विदान इति। पूर्ववद्द्वित्वम्। 'शिश्विदानः पुण्यकर्मा चपलश्चिकुरः समौ' इत्यमरः। शिश्विदानोऽकृष्णकर्मेति क्वचित्पाठः। तस्याप्येष एवार्थः। तृन्तृचौ शंसि। शंसु स्तुतौ, क्षद्धातुः सौत्रः, आभ्यां तृन्तृचौ क्रमात्स्तः। तौ चाऽनिटावित्यर्थः। शस्तेति। तृन्।

अनुदात्तेत्। 'हृक्ये चक्षदानम्' इति मन्त्रात्। 'उक्षाणं वा वेहतं वा क्षदन्ते' इति ब्राह्मणाच्च। 'क्षत्ता स्यात्सारथौ द्वास्थे वैश्यायामपि शूद्रजे'। **२५१ बहुलमन्यत्रापि।** मन्-मन्ता। हन्-हन्ता। इत्यादि। **२५२ नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ।** न पतन्त्यनेन पितरो नरके इति नप्ता पौत्रो दौहित्रश्च। नयतेः षुग्गुणश्च, नेष्टा। त्विषेरितोऽत्वम्, त्वष्टा। होता। पोता, ऋत्विग्भेदः। भ्राजतेर्जलोपः भ्राता। जायां माति जामाता। 'मान पूजायाम्' न लोपः। माता। पातेराकारस्येत्वम्। पिता। दुहेस्तृच्, इट् गुणाऽभावश्च। दुहिता। **२५३ सुञ्यसेर्ऋन्।** स्वसा। **२५४ यतेर्वृद्धिश्च।** याता। 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्'। **२५५ नञि च नन्देः।** न नन्दति ननान्दा। इह वृद्धिर्नानुवर्तते इत्येके। 'ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा' इति शब्दार्णवः। **२५६ दिवेर्ऋः।** देवा। देवरः। 'स्वामिनो देवृदेवरौ' इत्यमरः। **२५७ नयतेर्डिच्च।** ना। नरौ। नरः। **२५८ सव्ये स्थश्छन्दसि।** 'अम्बा-

---

शंस्तराविति। अप्तृन्निति सूत्रे नप्त्रादिग्रहणं नियमार्थं 'औणादिकतृन्तृजन्तानां यद्युपधादीर्घस्तर्हि नप्त्रादीनामेवे'ति। तस्मादत्र न दीर्घ इति भावः। प्रशास्तारावित्यादौ तु आदिग्रहणात्तृचि दीर्घो भवत्येव, नप्त्रादिषु पाठात्। क्षत्तेति। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः। नप्तृनेष्टृत्वष्टृ। एते तृन्तृजन्ता निपात्यन्ते। नप्तृशब्दस्य व्युत्पत्तिमाह—न पतन्त्यनेनेति। नञि उपपदे पत्लृ गतावित्यस्मात्तृनि नञः प्रकृतिभावः। अच्छब्दलोपश्च निपात्यते। नेष्टेत्यत्राह—नयतेरिति। णीञ् प्रापणे इत्यस्मात्प्रत्ययः। त्वष्टेत्यत्राह—त्विषेरितोऽत्वमिति। त्विष दीप्तावित्यस्मात प्रत्यये इकारस्य अकार इत्यर्थः। होतेति। 'हु दानादनयो'रित्यस्मात् प्रत्ययः गुण इति भावः। पोतेति। पूञ् पवने इत्यस्मात् प्रत्ययः। भ्रातेत्यत्राह—भ्राजतेरिति। भ्राजृ दीप्तावित्यस्मात् प्रत्ययः। सुञ्यसेर्ऋन्। सावुपपदे असु क्षेपणे इत्यस्मात् ऋन्प्रत्यय इत्यर्थः। स्वसेति। यणादेशः अप्तृन्निति दीर्घः। यतेर्वृद्धिश्च। यती प्रयत्ने, अस्मात् ऋन् वृद्धिश्चेत्यर्थः। यातेत्यस्यार्थमाह—भार्यास्त्विति। अमरकोशोऽयम्। नञि च नन्देः। टु नदि समृद्धौ, अस्मान्नञ्युपपदे ऋन्। न नन्दतीति। 'सेवायां कृतायामपी'ति शेषः। ऋनि वृद्धिरप्यनेनैव पूर्वसूत्रादनुवृत्तेः। मतान्तरमाह—इहेति। अत्र मानमाह—ननान्दा तु स्वसा पत्युरिति। दिवेर्ऋः। दिवु क्रीडादिषु, अस्मात ऋप्रत्ययो भवतीत्यर्थः। ऋनि प्रकृते ऋविधिः नित्स्वराऽभावार्थम्। 'स्वामिनो देवृदेवरौ' इत्यमरः। नयतेर्डिच्च। णीञ् प्रापणे, अस्मात् ऋप्रत्ययः, स च डिद्भवतीत्यर्थः। डित्त्व टिलोपार्थम्। 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः' इत्यमरः। सव्ये स्थश्छन्दसि। ष्ठा गतिनिवृत्तौ, अस्मात् सव्यशब्दे उपपदे ऋप्रत्ययः, स

म्ब–' ( सू २९१८ ) इत्यत्र 'स्थास्थिन्स्थूणामुपसंख्यानम्' ( वा ४९६१ )। सव्येष्ठा सारथिः । सव्येष्ठारौ । सव्येष्ठरः । २५९ **अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः ।** अष्टभ्योऽनिप्रत्ययः स्यात् । अरणिरग्नेर्योनिः । सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकाद्रजनिः । २६० **आङि शुषेः सनश्छन्दसि ।** आशुशुक्षणिरग्निर्वातश्च । २६१ **कृषेरादेश्च चः ।** चर्षणिर्जनः । २६२ **अदेर्मुट् च ।** अद्मनिः अग्निः । २६३ **वृतेश्च ।** वर्तनिः । गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह । २६४ **क्षिपेः किच्च ।** क्षिपणिरायुधम् । २६५ **अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः ।** अर्चिर्ज्वाला । इदन्तोऽप्ययम् । 'अग्नेर्भ्राजन्ते अर्चयः । शोचिर्दीप्तिः । हविः । सर्पिः । 'इस्मन्–' ( सू २६८५ ) इति ह्रस्वः । छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि । 'छर्यतीसारशूलवान्' । २६६ **बृंहेर्नलोपश्च ।** 'बर्हिर्ना कुशशुष्मणोः' । २६७ **द्युतेरिसिन्नादेश्च जः ।** ज्योतिः । २६८ **वसौ रुचेः संज्ञायाम् ।**

---

च डिदित्यर्थः । सव्येष्ठ इति स्थले षत्वार्थमाह—अम्बाम्बेत्यत्रेति । तत्पुरुषे कृतीत्यलुक् । 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः । सव्येष्ठदक्षिणस्थौ च' इत्यमरः । अर्तिसृधृ । ऋ गतौ, सृ गतौ, धृञ् धारणे, धमिधातुः सौत्रः, अम गतौ, अश भोजने, अव रक्षणे, तॄ प्लवनतरणयोः, एभ्यः अनिप्रत्यय इत्यर्थः । अरणिरिति । 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । आङि शुषेः । आङि उपपदे शुष शोषणे इत्यस्मात्सन्नन्तादनिप्रत्यय इत्यर्थः । आशुशुक्षणिरिति । शुशुक्षेति सन्नन्तम् । 'रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः' इत्यमरः । कृषेरादेश्च चः । 'कृष विलेखने' अस्मादनिप्रत्यय इत्यर्थः । ककारस्य चकारश्च । चर्षणिरिति । 'पुगन्तलघूपधस्य च' इति गुणः । अदेर्मुट् च । अद भक्षणे, अस्मादनिप्रत्ययः, मुडागमश्च प्रत्ययस्य भवतीत्यर्थः । वृतेश्च । वृतु वर्तने, अस्मादनिप्रत्यय इत्यर्थः । 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' इत्यमरः । वर्तनीत्यत्र 'कृदिकारादि'ति ङीष् । क्षिपेः किच्च । क्षिप प्रेरणे, अस्मादनिप्रत्ययः, स च किद्भवतीत्यर्थः । कित्त्वान्न गुणः, क्षिपणिः । अर्चिशुचि । अर्च पूजायां, शुच शोके, हु दानादनयोः, सृप्लृ गतौ, छद अपवारणे ण्यन्तः, छर्द वमने, एभ्यः इसिप्रत्यय इत्यर्थः । अर्चिरिति । सान्तोऽयम् । 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः । इदन्तोऽप्ययमिति । ण्यन्तादर्चेः अच इरिति इप्रत्यये साधुरिति भावः । छादि इति ण्यन्तादिसि णिलोपे उपधाह्रस्वार्थमाह—इस्मन्निति । छर्यतीसारेति । छर्दिश्चातिसारश्च शूलं च यस्य सन्तीति विग्रहः । बृंहेर्नलोपश्च । बृहि वृद्धौ, अस्मादिसिः, नकारस्य लोपश्चेत्यर्थः । बर्हिरिति । उपधागुणे रूपम् । द्युतेरिसिन्नादेश्च जः । द्युत दीप्तौ, अस्मादिसिन्प्रत्ययः । आदेर्दकारस्य जकारश्चेत्यर्थः । वसौ रुचेः

वसुरोचिर्यज्ञः । २६९ **भुवः कित्** । भुविः समुद्रः । २७० **सहो धश्च** । सधिरनड्वान् । २७१ **पिबतेस्थुक्** । 'पाथिश्चक्षुःसमुद्रयोः' । २७२ **जनेरुसिः** । जनुर्जननम् । २७३ **मनेर्धश्छन्दसि** । मधुः । २७४ **अर्तिपृवपियजितनिधनितपिभ्यो नित्** । अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः । तनुषी । तनूंषि । धनुरस्त्रियाम् । 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति' । सान्तस्योदन्तस्य वा रूपम् । 'तपुः सूर्याऽग्निशत्रुषु । २७५ **एतेर्णिच्च** । आयुः । आयुषी । २७६ **चक्षेः शिच्च** । शित्वात् सार्वधातुकत्वेन ख्याञ्बाधः । चक्षुः । २७७ **मुहेः किच्च** । मुहुरव्ययम् । २७८ **बहुलमन्यत्रापि** । आचक्षुः । परिचक्षुः । २७९ **कृगृशृवृञ्चतिभ्यः ष्वरच्** । 'कर्वरो व्याघ्ररक्षसोः' । गर्वरोऽहङ्कारी । शर्वरी रात्रिः । 'वर्वरः प्राकृतो जनः' । चत्वरम् । २८० **नौ सदेः** । 'निषद्वरस्तु जम्बालः' । निषद्वरी रात्रिः । इत्युणादिषु द्वितीयः पादः ॥

## अथ उणादिषु तृतीयः पादः ।

२८१ **छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्व-**

---

सञ्ज्ञायाम् । **वसुशब्द उपपदे रुच दीप्तावित्यस्मादिसिन् प्रत्ययः स्यात्सञ्ज्ञायामित्यर्थः ।** वसुरोचिरिति । भुवः कित् । **'भू' सत्तायामित्यस्मात् इसिन्प्रत्ययः, स च कित् भवतीत्यर्थः । कित्त्वान्न गुणः ।** सहो धश्च । **षह मर्षणे इत्यस्मात् इसिन्प्रत्ययः, अन्त्यस्य धकारश्चेत्यर्थः ।** पिबतेस्थुक् । **पा पाने, अस्मादिसिन्, धातोश्च थुगागम इत्यर्थः । पाथिरिति रूपम् ।** जनेरुसिः । **जनी प्रादुर्भावे अस्मादुसिप्रत्यय इत्यर्थः ।** मनेर्धश्छन्दसि । **मनु अवबोधने, अस्मादुसिप्रत्ययः धातोरन्तादेशश्च धकार इत्यर्थः ।** अर्तिपृवपि । **ऋ गतौ, पृ पालनपूरणयोः, डु वप् बीजसन्ताने, यज देवपूजनादौ, तनु विस्तारे, धन धान्ये, तप सन्तापे, एभ्य उसिप्रत्ययः स्यात् । स च नित् भवतीत्यर्थः । नित्त्वं स्वरार्थम् ।** एतेर्णिच्च । **इण् गतावित्यस्मादुसिप्रत्ययः, स च णिद्भवतीत्यर्थः । णित्वाद्वृद्धिः ।** आयुरिति । चक्षेः शिच्च । **चक्षिङ् व्यक्तायां वाचि अस्मादुसिः । स च शिद्भवतीत्यर्थः । शित्वफलमाह —** सार्वधातुकत्वेनेति । **चक्षते रूपादिकमनुभवत्यनेनेति चक्षुः ।** मुहेः किच्च । **मुह वैचित्त्ये, अस्मादुसिः, स च किदित्यर्थः, कित्त्वान्न गुणः । 'मुहुः पुनः पुनः शश्वत्' इत्यमरः ।** कृगृशृ । **कृ विक्षेपे, गृ निगरणे, शृ हिंसायां, वृञ् वरणे, चते याचने, एभ्यः ष्वरच् स्यादित्यर्थः । षित्त्वं ङीषर्थम् ।** नौ सदेः । **नावुपपदे षद्लृ विशरणगत्यवसादनेष्वित्यस्मात् ष्वरच् स्यादित्यर्थः । षित्वफलं दर्शयन्नुदाहरति —** निषद्वरी रात्रिरिति । **इत्युणादिषु द्वितीयः पादः ।**

**अथ तृतीयः पादः** छित्वरछत्वरधीवर । **एते ष्वरच्प्रत्ययान्ता निपात्यन्त इत्यर्थः ।**

रसंयद्वराः । एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते । छिदिर् छद अनयोस्तका-रोऽन्तादेशः, छिदेर्गुणाभावश्च । छित्वरो धूर्तः । 'छत्वरो गृहकुञ्जयोः' । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकः । चिनोतेर्दीर्घश्च । चीवरं भिक्षुकप्रावरणम् । तीवरो जातिविशेषः । नीवरः परिव्राट् । गाहतेर्ह्रस्वत्वम् । गह्वरम् । कटे वर्षादौ । कट्वरं व्यञ्जनम् । यमेर्दकारः संयद्वरो नृपः । पदेः सम्पद्वर इत्येके । २८२ इण्सिञ्जिदीङुष्यविभ्यो नक् । 'इनः सूर्ये नृपे पत्यौ' । सिनः काण । जिनः अर्हन् । दीनः । उष्णः । ऊनः । २८३ फेनमीनौ । एतौ निपात्येते । स्फायतेः फेनः । मीनः । २८४ कृषेर्वर्णे । कृष्णः । २८५ बन्धेर्ब्रधिबुधी च । ब्रध्नः ।

निपातनमेवाह—अनयोस्तकार इति । छिदिर् द्वैधीकरणे, छद अपवारणे, आभ्यां ष्वरच्प्रत्ययः, तत्सन्नियोगेन धातोस्तकारोऽन्तादेशः गुणाऽभावश्च निपात्यत इत्यर्थः । 'छित्वरश्छेदने द्रव्ये धूर्ते वैरिणि च त्रिषु' इति मेदिनी । धीवर इति । डु धाञ् धारणपोषणयोः, अस्मात् ष्वरचि धातोरन्त्यस्य ईत्वं निपात्यत इत्यर्थः । एवं पा पाने, मा माने, आभ्यां ष्वरचि ईत्वं निपात्यत इति बोध्यम् । 'कैवर्ते दाशधीवरौ' 'पीवरो तु स्थूलपीवरे' इत्यमरः । मीवर इति । डु मीञ् हिंसायामित्यस्मादपि ष्वरचि साधुः । चीवरमिति । चिञ् चयने इत्यस्मात् श्नुविकरणात् ष्वरचि दीर्घो निपात्यत इत्यर्थः । तीवर इति । 'तायृ पूजानिशामनयो'रित्यस्मात् ष्वरचि, 'लोपो व्योः' इति यलोपे, ईत्वं निपात्यते । यद्वा, तीवधातोः प्रत्यये 'लोपो व्योः' इति वलोपे रूपम् । नीवर इति । णीञ् प्रापणे इत्यस्मात् ष्वरचि रूपम् । गह्वरेत्यत्राह—गाहतेरिति । गाहू विलोडने इत्यस्मादिति भावः । 'गह्वरं गण्डशैलास्तु' इत्यमरः । षित्त्वान्ङीषि गह्वरीति रूपम् । 'विपुला गह्वरी धात्री' इत्यमरः । कट्वरेति । कटे वर्षादौ, अस्मात्प्रत्ययः । संयद्वर इत्यत्राह—यमेर्दकार इति । इण्सिञ्जि । 'इण् गतौ, षिञ् बन्धने, जि जये, दीङ् क्षये, उष दाहे, अव रक्षणे, एभ्यः नक्प्रत्यय इत्यर्थः । कित्त्वान्न गुणः । इन इति । 'इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः' । 'इनः सूर्ये प्रभौ राजा' इत्यमरः । जिन इति । 'मारजिल्लोकजिज्जिनः इत्यमरः । दीन इति । 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः । ऊन इति । अवधातोरूपम् । नकः कित्त्वात् 'ज्वरत्वर' इत्यूठ् । फेनमीनौ । स्फायी वृद्धौ, मीञ् हिंसायाम्, आभ्यां नकि एतौ निपात्येते इत्यर्थः । आद्ये स्फाय् इत्येतस्य फे इत्यादेशः । 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । कृषेर्वर्णे । 'कृष विलेखने' अस्मात् वर्णेऽभिधेये नक् स्यादित्यर्थः । 'कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः' इत्यमरः । बन्धेर्ब्रधिबुधी च । बन्ध बन्धने, अस्मान्नक् स्यात्, प्रकृतेर्बुधि ब्रधि इत्यादेशौ च भवत इत्यर्थः । ब्रध्न इति । 'भास्क-

बुध्नः । २८६ धापवस्यज्यतिभ्यो नः । 'धाना भृष्टयवे स्त्रियः' । पर्णं पत्रम् । पर्णः, किंशुकः । 'वस्नो मूल्ये वेतने च' । अजेर्वी । वेनः । अत्नः आदित्यः । बाहुलकाच्छृणोतेः । श्रोणः पङ्गुः । २८७ लक्षेरट् च । लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याऽडागमश्च । चान्मुडित्येके । 'लक्ष्मणं नाम्नि चिन्हे च' । लक्षणो लक्ष्मणश्च रामभ्राता । 'लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा' । २८८ वनेरिच्चोपधायाः । वेन्ना नदी । २८९ सिवेष्टेर्यू च । दीर्घोच्चारणसामर्थ्यान्न गुणः । स्यून आदित्यः । बाहुलकात्केवलो नः । ऊठ् । अन्तरङ्गत्वाद्यण् । गुणः । स्योनः । २९० कृवृजसिद्रुपन्यनिस्वपिभ्यो नित् । कर्णः । वर्णः । 'जर्णश्चन्द्रे च वृक्षे च' । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा । २९१ धेट इच्च । 'धेनः सिन्धुर्नदी धेना । २९२ तृषिशुषिरसिभ्यः कित् ।

---

रोऽहस्करो ब्रध्नः' इत्यमरः । बुध्न इति । 'शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः । धापृवस्यज्यतिभ्यो नः । डु धाञ् धारणपोषणयोः, पॄ पालनपूरणयोः, वस निवासे, अज गतौ, अत सातत्यगमने, एभ्यो न प्रत्यय इत्यर्थः । नकि प्रकृते नप्रत्ययविधानं वेन इत्यादौ गुणार्थं, वस्न इत्यत्र सम्प्रसारणाऽभावार्थं च । धाना इत्यत्र अमरकोशमाह—धाना भृष्टयवे स्त्रिय इति । वस्न इति । 'मूल्यं वस्नोऽप्यवक्रयः' इत्यमरः । वेन इति । अजेर्वी आदेशः । श्रोण इति । 'पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते' इत्यमरः । लक्षेरट् च । लक्ष दर्शनाङ्कनयोः, लक्ष आलोचने, आभ्यां चुरादिण्यन्ताभ्यां नप्रत्ययः स्यादित्यर्थः, अडागमश्च प्रकृतेः । लक्ष्मण इति रूपसिद्ध्यर्थमाह—चान्मुडिति । वनेरिच्चोपधायाः । वन षण सम्भक्तौ, अस्मान्नप्रत्ययः, उपधाया इत्वं चेत्यर्थः । वेन्नेति । उपधाया इत्वे गुणः । सिवेष्टेर्यू च । षिवु तन्तुसन्ताने, अस्मान्नप्रत्ययः टेरिव् इत्यस्य स्थाने यू आदेशश्चेत्यर्थः । स्यून इत्यत्र यू आदेशे कृते 'सार्वधातुकार्धधातुकयोः' इति गुणमाशङ्क्याह—दीर्घोच्चारणसामर्थ्यादिति । यदि गुण इष्टस्तर्हि यु इति ह्रस्वमेव विदधीत, गुणे कृते विशेषाऽभावात् । एवं सति दीर्घोच्चारणं गुणाऽभावार्थं विज्ञायेतेति भावः । ननु तर्हि कथं स्योन इति अत्राह—बाहुलकात् केवलो न इति । 'यू' आदेशरहित इत्यर्थः । एवञ्च, नप्रत्यये च्छ्वोरिति वस्य ऊठि गुणात्पूर्वमन्तरङ्गत्वात् यणि गुणे च रूपमिति भावः । कृवृजसिद्रु । कॄ विक्षेपे, वृञ् वरणे, वॄ इति पाठे तु वॄ वरणे, जॄष् वयोहानौ, षिञ् बन्धने, द्रु गतौ पन स्तुतौ, अन प्राणने, ञि ष्वप् शये, एभ्यो नप्रत्ययः स्यात्, स च निदित्यर्थः । नित्वं स्वरार्थम् । वर्ण इति । 'रषाभ्याम्' इति णत्वम् । धेट इच्च । धेट् पाने, अस्मान्नप्रत्ययः स्यात्, इकारश्चान्तादेश इत्यर्थः । धेन इति । इकारस्य गुणे रूपम् । इत्वाऽविधाने तु आदेच इत्यात्वं स्यादिति भावः । तृषिशुषिरसिभ्यः । ञि तृषा पिपासायां, शुष शोषणे, रस शब्दे, एभ्यो नप्रत्ययः स्यात्, स च किदि-

तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं द्रव्यम् । २९३ सुञो दीर्घश्च । सूना वधस्थानम् । २९४ रमेस्त च । रमयतीति रत्नम् । २९५ रास्नासास्नास्थूणावीणाः । रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी । २९६ गादाभ्यामिष्णुच् । गेष्णुर्गायनः । देष्णुर्दाता । २९७ कृत्यशूभ्यां क्स्नः । कृत्स्नम् । अक्ष्णमखण्डम् । २९८ तिजेर्दीर्घश्च । तीक्ष्णम् । २९९ श्लिषेरच्चोपधायाः । श्लक्ष्णम् । ३०० यजिमनिशुन्धिदसिजनिभ्यो युच । यज्युरध्वर्युः । 'मन्युर्दैन्ये क्रतौ क्रुधि' । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युः शरीरी । ३०१ भुजिमृङ्भ्यां युक्त्युकौ । भुज्युर्भाजनम् । मृत्युः । ३०२ सर्तेरयुः । सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः । ३०३ पानीवि-

त्यर्थः । तृष्णेति । किस्त्वान्न गुणः । सुञो दीर्घश्च । षुञ् अभिषवे, अस्मान्नप्रत्ययः स्यात् धातोर्दीर्घश्चेत्यर्थः । सूनेति । धातोर्दीर्घविधिसामर्थ्यान्न गुणः, किदित्यनुवर्तनाद्वा । 'सूनाऽधोजिह्विकापि च' इत्यमरः । रमेस्त च । 'रमु' क्रीडायामस्माण्णप्रत्यय-न्तात् नप्रत्ययः स्यात्, तकारोऽन्तादेशश्चेत्यर्थः । रमेरिति ण्यन्तस्य निर्देशः । मित्त्वादुपधाह्रस्वः । रास्नासास्ना । रस आस्वादने, षस स्वप्ने, ष्ठा गतिनिवृत्तौ, वी गतिव्याप्तिप्रजनादिषु, एभ्यः नप्रत्यये इत्थं निपात्यन्त इत्यर्थः । रास्नेति । रस धातोः नप्रत्यये उपधादीर्घ इति भावः । 'नाकुली सुरसा रास्ना' इत्यमरः । सास्नेति । उपधादीर्घो निपात्यते । 'सास्ना तु गलकम्बले' इत्यमरः । स्थूणेति । 'ष्ठा गतिनिवृत्तौ'इत्यस्य रूपम् । प्रत्ययसन्नियोगेन धातोरूत्वं, प्रत्ययस्य णत्वं च निपात्यते । 'स्थूणा स्तम्भे च वेश्मनः' इत्यमरः । वीणेति । वीधातोः रूपम् । णत्वं निपात्यते । गादाभ्यामिष्णुच् । 'गै शब्दे, डु दाञ् दाने' आभ्यां इष्णुच्प्रत्यय इत्यर्थः । गेष्णुरिति । आद्गुणे रूपम् । कृत्यशूभ्यां क्स्नः । कृती छेदने, अशू व्याप्तौ' आभ्यां क्स्नप्रत्यय इत्यर्थः । कृत्स्नमिति । किस्त्वान्नोपधागुणः । अक्ष्णमिति । अश्वेति षत्वे, षढोरिति कत्वे, कवर्गात्परत्वात्षत्वे, रषाभ्यामिति णत्वे च रूपम् । तिजेर्दीर्घश्च । तिज निशाने, अस्मात् क्स्नप्रत्ययः, धातोर्दीर्घश्चेत्यर्थः । श्लिषेरच्चोपधायाः । 'श्लिष आलिङ्गने' अस्मात् क्स्नप्रत्ययः धातोरुपधाया अकारश्चेत्यर्थः । यजिमनि । 'यज देवपूजनादौ, मन ज्ञाने, शुन्ध शुद्धौ, दसु उपक्षये, जनी प्रादुर्भावे' एभ्यः युच्प्रत्यय इत्यर्थः । यज्युरिति । 'युवोरनाकौ' इत्यानादेशस्तु न, तत्र यु इति उकारेत्संज्ञकयोरेव ग्रहणात् । मन्युरिति । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । भुजिमृङ्भ्याम् । 'भुज पालनाभ्यवहारयोः' 'मृङ् प्राणत्यागे, आभ्यां क्रमात् युक्त्युकौ प्रत्ययौ स्तः । भुज्युरिति । युकः किस्त्वान्न गुणः । एवं मृत्युरित्यपि । सर्तेरयुः । सृ गतौ, अस्मात् अयुप्रत्यय इत्यर्थः । सरयुरिति । अयुप्रत्यये गुण इति

षिभ्यः पः । पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् । ३०४ च्युवः किच्च । च्युपो वक्त्रम् । ३०५ स्तुवो दीर्घश्च । स्तूपः समुच्छ्रायः । ३०६ सुशृभ्यां निच्च । चात्कित् । सूपः । बाहुलकादुत्वम् , शूर्पम् । ३०७ कुयुभ्यां च । कुवन्ति मण्डूका अस्मिन्कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः । ३०८ खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः । सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम् । 'खष्पौ क्रोधबलात्कारौ'। शीलतेर्ह्रस्वश्च । शिल्पं कौशलम् । शसु हिंसायाम् । निपातनात्षत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बाधतेः षः । 'बाष्पो नेत्रजलोष्मणोः' । वाष्पं च । रौतेर्दीर्घः । 'रूपं स्वभावे सौन्दर्ये' । पृ पर्पं गृहं बालतृणं पङ्गुपीठं च । 'तल प्रतिष्ठाकरणे' चुरादिणिचो लुक् । 'तल्पं शय्याऽट्टदारेषु' । ३०९ स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् । 'अयामन्त—' ( सू० २३११ ) इति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुः वावदूकः । मदयित्नुः मदिरा । ३१० कृहनिभ्यां क्त्नुः । कृत्नुः शिल्पी । हत्नुर्व्याधिः ।

---

भावः । पानीविषिभ्यः पः । पा पाने, णीञ् प्रापणे, विष्लृ व्याप्तौ, एभ्यः पप्रत्यय इत्यर्थः । नीप इति सिद्धयर्थमाह—बाहुलकादिति । 'तूलं च नीपप्रियककदम्बास्तु हलिप्रिये' इत्यमरः । च्युवः किच्च । च्युङ् गतौ, अस्मात् पः स्यात्स च कित्स्यात् । कित्वान्न गुणः । स्तुवो दीर्घश्च । ष्टुञ् स्तुतौ, अस्मात्पः स्यात् , धातोर्दीर्घश्चेत्यर्थः । 'फेनस्तूपौ सयूपकौ' इत्यमरः । शुशृभ्यां निच्च । 'षुञ् अभिषवे, शॄ हिंसायाम्' आभ्यां पः स्यात् , स च नित् भवति, चाद्दीर्घश्चेत्यर्थः । सूप इति । धातोर्दीर्घविधिसामर्थ्यान्न गुणः । शूर्पमित्यत्राह—बाहुलकादुत्वमिति । रपरत्वं दीर्घत्वं चेति भावः । कुयुभ्यां च । 'कु शब्दे, यु मिश्रणे' आभ्यां पः, स च नित् धातोर्दीर्घश्च चेत्यर्थः । 'तूदस्तु यूपः क्रमुकः' इत्यमरः । खष्पशिल्प । खनु अवदारणे, शील समाधौ, शसु हिंसायां, बाधृ लोडने, रु शब्दे, पृ पालनपूरणयोः, तल प्रतिष्ठाकरणे चुरादिण्यन्तः, एते पप्रत्ययान्ता इत्थं निपात्यन्त इत्यर्थः । निपातनमेवाह—खनतेर्नकारस्येति । 'खष्पः क्रोधे बलात्कारे' इति विश्वकोशादाह—खष्पौ क्रोधबलात्काराविति । शिल्पमित्यत्राह—शीलतेर्ह्रस्व इति । ह्रस्वनिपातनसामर्थ्यात् किदित्यनुवर्तनाद्वा गुणाऽभावः । शष्पमित्यत्राह—निपातनात्षत्वमिति । 'शष्पं बालतृणं घासः' इत्यमरः । बाष्प इत्यत्राह—बाधतेरिति । 'बाष्पमूष्माश्रु कशिपु' इत्यमरः । शेषं स्पष्टम् । स्तनिहृषिपुषि । 'स्तन देवशब्दे, हृष तुष्टौ, पुष पुष्टौ, मदी हर्षग्लेपनयोः, गदी देवशब्दे, एभ्यो ण्यन्तेभ्य इत्नुच् स्यात् । इत्नुचि कृते णेरयादेशविधि स्मारयति—अयामन्तेति । णेरयादेश इति । 'स्तनयित्नुर्बलाहकः' इत्यमरः । कृहनिभ्यां क्त्नुः । डु कृञ् करणे, हन हिंसागत्योः, आभ्यां क्त्नुप्रत्यय इत्यर्थः । कृत्नुरिति । कित्वान्न गुणः । कर्तेत्यर्थः । हत्नुरिति । 'अनुदात्तोपदे-

धिः शस्त्रं च। ३११ गमेः सन्वच्च। जिगत्नुः। ३१२ दाभाभ्यां नुः। दानुर्दाता। भानुः। ३१३ वचेर्गश्च। वग्नुः। ३१४ धेट इच्च। धयति तामिति धेनुः। ३१५ सुवः कित्। 'सूनुः पुत्रेऽनुजे रवौ'। ३१६ जहातेर्द्वेऽन्तलोपश्च। जह्नुः। ३१७ स्थो णुः। 'स्थाणुः कीले स्थिरे हरे'। ३१८ अजिवृरीभ्यो निच्च। अजेर्वी, वेणुः। वर्णुर्नददेशभेदयोः। 'रेणुर्द्वयोः स्त्रियां धूलिः'। ३१९ विषेः किच्च। विष्णुः। ३२० कृदाधारार्चिकलिभ्यः कः। बाहुलकान्न कस्येत्सञ्ज्ञा। 'कर्को धवलघोटकः'। दाको दाता। धाकोऽनड्वानाधारश्च। राका पौर्णमासी। अर्कः। 'कल्कः पापाशये पापे दम्भे

---

अवनतीत्यादिना अनुनासिकलोपः। गमेः सन्वच्च। गम्लृ गतौ' अस्मात् क्त्नुप्रत्ययः, स च सन्वद्भवतीत्यर्थः। जिगत्नुरिति। 'अनुदात्तोपदेश'इत्यादिना अनुनासिकलोपः। सन्वत्त्वात् द्वित्वम्, अभ्यासाऽकारस्य इत्वादिकार्यम्। दाभाभ्यां नुः। 'डुदाञ् दाने, भा दीप्तौ,' आभ्यां नुप्रत्यय इत्यर्थः। 'भानुर्हंसः सहस्रांशुः' इत्यमरः। वचेर्गश्च। वच परिभाषणे, अस्मात् नुप्रत्ययः, गकारश्चान्तादेश इत्यर्थः। धेट इच्च। धेट् पाने, अस्मान्नुप्रत्ययः स्यात्, इकारश्चान्तादेशः। आदेच' इत्यात्वे प्रसक्ते तदपवादोऽयम्। 'धेनुः स्यान्नवसूतिका' इत्यमरः। सुवः कित्। षूङ् प्राणिप्रसवे, अस्मात् नुप्रत्ययः स्यात्, स च किद्भवतीत्यर्थः। सूनुरिति। कित्वान्न गुणः। जहातेर्द्वेऽन्तलोपश्च। 'ओ हाक् त्यागे' अस्मान्नुप्रत्ययः, धातोर्द्वित्वं, अन्तस्याऽकारस्य लोपश्चेत्यर्थः। नुप्रत्ययस्य कित्त्वेऽप्यनजादित्वात् 'आतो लोप इटि च' इत्याकारलोपाऽप्राप्तेरयमारम्भः। जह्नुरिति। धातोर्द्वित्वे आलोपे च रूपम्। स्थो णुः। ष्ठा गतिनिवृत्तौ, अस्मात् णुः स्यादित्यर्थः। क्वचित्तु स्थाणुरित्येव पाठः। तस्मिन्पाठे यद्यपि अत्र स्थाधातोर्नुप्रत्यये णत्वं निपात्यत इति वक्तुं शक्यते, तथापि उत्तरत्रानुवृत्त्यर्थं णुप्रत्ययविधानमेव वरम्। अजिवृरी। 'अज गतिक्षेपणयोः, वृङ् सम्भक्तौ, री गतिरेषणयोः' एभ्यो णुर्नित्स्यादित्यर्थः। नित्वं स्वरार्थम्। अजधातोर्णुप्रत्यये आह—अजेर्वी इति। वेणुरिति। वेणुमस्करतेजनाः' इत्यमरः। विषेः किच्च। विष्लृ व्याप्तौ, अस्मात् णुः स्यात्, स च कित्, चकारात् निच्च। विष्णुरिति। कित्वान्न गुणः, नित्वं स्वरार्थम्। 'विष्णुर्नारायणः कृष्णः' इत्यमरः। कृदाधारार्चिकलिभ्यः। 'डु कृञ् करणे, डु दाञ् दाने, डु धाञ् धारणपोषणयोः, रा दाने, अर्च पूजायां, कल शब्दसंख्यानयोः' एभ्यः कप्रत्ययः स्यादित्यर्थः। ननु कप्रत्ययावयवककारस्य 'लशक्वतद्धिते' इतीत्संज्ञा प्राप्नोतीत्यत आह—बाहुलकादिति। 'पृष्ठयः स्थौरी सितः कर्कः' इत्यमरः। दाको दातेति। कर्तरि प्रत्ययादिति भावः। राकेति। 'पूर्णे राका निशाकरे' इत्यमरः। दाक धाक राक इत्यत्र यद्यपि 'केऽणः' इत्यनेन ह्रस्वः

Land revenue and cesses in 1903–4 amounted to 1·4 lakhs. From the north-east, lines of rocky bare hills gradually sink west and south into a plain, at first thinly wooded and poorly tilled, then with deeper soil, finer trees, and better tillage, till in the extreme west along the banks of the Sābarmatī the surface is broken by ravines and ridges. In the east the staple crop is maize, and in the west millet. Garden cultivation is neglected. Water is abundant. The *tāluka* is the healthiest and coolest part of the District. The rainfall is more certain than elsewhere, but the residents are extremely poor.

**Parāntīj Town** (*Parāntej*).—Head-quarters of the *tāluka* of the same name in Ahmadābād District, Bombay, with a station on the Ahmadābād-Parāntīj Railway, situated in 23° 26′ N. and 72° 51′ E., 33 miles north-east of Ahmadābād city. Population (1901), 8,175. Parāntīj is a prosperous town, and has been a municipality since 1855. The income during the decade ending 1901 averaged Rs. 7,000, and in 1903–4 amounted to Rs. 7,700. The chief exports are *ghī*, grain, and leather. Formerly there was a considerable local soap industry, but this has now greatly decreased. The town contains 6 schools, 5 for boys and one for girls, attended by 644 male and 109 female pupils. These include an English middle school with 19 pupils, and a mission orphanage with an industrial class attached to it. There is also a dispensary.

**Parasgad.**—South-easternmost *tāluka* of Belgaum District, Bombay, lying between 15° 36′ and 16° 9′ N. and 74° 49′ and 75° 19′ E., with an area (including the Murgod *mahāl* or petty subdivision) of 640 square miles. It contains one town, SAUNDATTI (population, 9,525), the head-quarters; and 124 villages, including MANOLI (5,308) and MURGOD (5,655). The population in 1901 was 108,311, compared with 110,584 in 1891. The density, 169 persons per square mile, is below the average for the District. The demand for land revenue in 1903–4 was 2·37 lakhs, and for cesses Rs. 19,000. A low range of sandstone hills running north-west and south-east divides Parasgad into two nearly equal parts. South-west of the hills, whose southern face is steep and rugged, lies a plain of fine black soil with many rich villages and hamlets, which suffered severely in the famine of 1876–7. The north-east, which is broken by low hills, is a high waving plateau overgrown with bush and prickly pear, the soil being mostly poor and sandy. In the extreme north, the sandstone gives place to trap, and the soil is generally shallow and poor. The Malprabha, which flows north-east through the middle of the *tāluka*, forms with its feeders the chief water-supply. Before the close of the hot season almost all the small streams dry up and stagnate, and the well and pond water becomes unwholesome. In the north and east the rainfall is scanty and uncertain; but in the south and west, and in the immediate

neighbourhood of the Western Ghats, it is plentiful. The annual fall at the *tāluka* head-quarters averages 23 inches.

**Parasnāth.**—Hill and place of Jain pilgrimage in the east of the Gīrīdīh subdivision of Hazāribāgh District, Bengal, and adjoining Mānbhūm, situated in 23° 58′ N. and 86° 8′ E. The mountain consists of a central narrow ridge, with rocky peaks, rising abruptly to 4,480 feet above sea-level from the plains on the south-west, and throwing out long spurs which extend towards the Barākar river on the north. A spur to the south-east forms the boundary between Hazāribāgh and Mānbhūm, and eventually subsides into an extended belt of high land with peaked hills in the latter District. The hill is now easily approached by the East Indian Railway to Gīrīdīh station, and thence by a short journey of about 18 miles along a metalled road. In 1858 Parasnāth was selected as a convalescent dépôt for European troops; but on account of the confined area of the plateau at the summit and the solitude, it was found unsuitable for the purpose and was abandoned in 1868. The building formerly used as the officers' quarters is now utilized as a *dāk*-bungalow. Pilgrims to the number of 10,000 flock annually from distant parts of India to this remote spot—the scene of Nirvāna or 'beatific annihilation' of no less than ten of the twenty-four deified saints who are the objects of Jain adoration. From the last of these, Pārsva or Pārsvanātha, the hill, originally called Samet Sikhar, has taken its better known name. Pilgrimage to Parasnāth is still as popular as ever among the Jains; and new shrines, a single one of which in white marble cost Rs. 80,000, are from time to time erected. The temples lie well apart from the plateau, and the improved means of communication hold out a possibility of the latter being again utilized as a small sanitarium.

[Sir W. W. Hunter, *Statistical Account of Bengal*, vol. xvi, pp. 216, 217.]

**Paratwāda.**—Civil station of Ellichpur town, Amraotī District, Berār, from which it is distant 2 miles. The population in 1901, when the town was garrisoned by a regiment of native infantry and a battery of the late Hyderābād Contingent artillery, was 10,410; but the troops were removed in 1905. The town is situated on the Sāpan and Bichan rivers. The municipality was created in 1894. The receipts and expenditure from that year till 1901 averaged Rs. 12,000. In 1903–4 the income was Rs. 16,437, chiefly derived from taxes and cesses; and the expenditure was Rs. 17,725, chiefly on conservancy and public works.

**Paravūr.**—Town in Travancore State, Madras. *See* PARŪR.

**Pārbati.**—A tributary of the Chambal, draining part of Central India and Rājputāna. Rising in the Vindhyas, in 22° 52′ N. and 76° 39′ E., at the village of Makgardha, it flows in a northerly direction

**षिभ्यः पः** । पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् । **३०४ च्युवः किच्च** । च्युपो वक्त्रम् । **३०५ स्तुवो दीर्घश्च** । स्तूपः समुच्छ्रायः । **३०६ सुशृभ्यां निच्च** । चात्कित् । सूपः । बाहुलकादुत्वम् , शूर्पम् । **३०७ कुयुभ्यां च** । कुवन्ति मण्डूका अस्मिन्कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः । **३०८ खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः** । सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य षत्वम् । 'खष्पौ क्रोधबलात्कारौ'। शीलतेर्ह्रस्वश्च । शिल्पं कौशलम् । शसु हिंसायाम् । निपातनात्षत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बाधतेः षः । 'बाष्पो नेत्रजलोष्मणोः' । वाष्पं च । रौतेर्दीर्घः । 'रूपं स्वभावे सौदर्ये' । पृ पर्पं गृहं बालतृणं पङ्गुपीठं च । 'तल प्रतिष्ठाकरणे' चुरादिणिचो लुक् । 'तल्पं शय्याऽट्टदारेषु' । **३०९ स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्** । 'अयामन्त—' ( सू० २३११ ) इति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुः वावदूकः । मदयित्नुः मदिरा । **३१० कृहनिभ्यां क्त्नुः** । कृत्नुः शिल्पी । हत्नुर्व्याधिः ।

---

भावः । पानीविषिभ्यः पः । **पा पाने, णीञ् प्रापणे, विष्लृ व्याप्तौ, एभ्यः पप्रत्यय इत्यर्थः । नीप इति सिद्धयर्थमाह**—बाहुलकादिति । **'तूलं च नीपप्रियककदम्बास्तु हलिप्रिये' इत्यमरः** । च्युवः किच्च । **च्युङ् गतौ, अस्मात् पः स्यात्स च कित्स्यात् । कित्वान्न गुणः** । स्तुवो दीर्घश्च । **ष्टुञ् स्तुतौ, अस्मात्पः स्यात् , धातोर्दीर्घश्चेत्यर्थः । 'फेनस्तूपौ सयूपकौ' इत्यमरः** । सुशृभ्यां निच्च । **'षुञ् अभिषवे, शॄ हिंसायाम्' आभ्यां पः स्यात् , स च नित् भवति, चाद्दीर्घश्चेत्यर्थः** । सूप इति । **धातोर्दीर्घविधिसामर्थ्यान्न गुणः । शूर्पमित्यत्राह**—बाहुलकादुत्वमिति । **रपरत्वं दीर्घत्वं चेति भावः** । कुयुभ्यां च । **'कु शब्दे, यु मिश्रणे' आभ्यां पः, स च नित् धातोर्दीर्घश्च चेत्यर्थः । 'तूदस्तु यूपः क्रमुकः' इत्यमरः** । खष्पशिल्प । **खनु अवदारणे, शील समाधौ, शसु हिंसायां, बाधृ लोडने, रु शब्दे, पृ पालनपूरणयोः, तल प्रतिष्ठाकरणे चुरादिण्यन्तः, एते पप्रत्ययान्ता इत्थं निपात्यन्त इत्यर्थः** । निपातनमेवाह—खनतेर्नकारस्येति । **'खष्पः क्रोधे बलात्कारे' इति विश्वकोशादाह**—खष्पौ क्रोधबलात्काराविति । **शिल्पमित्यत्राह**—शीलतेर्ह्रस्व इति । **ह्रस्वनिपातनसामर्थ्यात् किदित्यनुवर्तनाद्वा गुणाऽभावः । शष्पमित्यत्राह**—निपातनात्षत्वमिति । **'शष्पं बालतृणं घासः' इत्यमरः । बाष्प इत्यत्राह**—बाधतेरिति । **'बाष्पमूष्माश्रु कशिपु' इत्यमरः । शेषं स्पष्टम्** । स्तनिहृषिपुषि । **'स्तन देवशब्दे, हृष तुष्टौ, पुष पुष्टौ, मदी हर्षग्लेपनयोः, गदी देवशब्दे, एभ्यो ण्यन्तेभ्य इत्नुच् स्यात् । इत्नुचि कृते णेरयादेशविधिं स्मारयति**—अयामन्तेति । णेरयादेश इति । **'स्तनयित्नुर्बलाहकः' इत्यमरः** । कृहनिभ्यां क्त्नुः । **डु कृञ् करणे, हन हिंसागत्योः, आभ्यां क्त्नुप्रत्यय इत्यर्थः** । कृत्नुरिति । **कित्वान्न गुणः । कर्तेत्यर्थः** । हत्नुरिति । '**अनुदात्तोपदे-**

इति द्विरूपकोशः । सरकं गगनम् । कोरकः । कोरकं च । ७१४ **चीकयतेराद्यन्तविपर्ययश्च** । कीचको वंशभेदः । ७१५ **पचिमच्योरिच्चोपधायाः** । पेचकः । मेचकः । ७१६ **जनेररष्ठ च** । जठरम् । ७१७ **वचिमनिभ्यां चिच्च** । वठरो मूर्खः । 'मठरो मुनिशौण्डयोः' । बिदादित्वान्माठरः । गर्गादित्वान्माठर्यः । ७१८ **ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च** । 'ऊर्दरः शूररक्षसोः' । ७१९ **कृदरादयश्च** । कृदरः कुसूलः । सृदरं बिलसत् । सृदरः सर्पः । ७२० **हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे** । घातनो मारकः । ७२१ **क्रमिगमिक्षमिभ्यस्तुन्वृद्धिश्च** । क्रान्तुः पक्षी । गान्तुः पथिकः । क्षान्तुर्मशकः । ७२२ **हर्यतेः कन्यन्हिरच्** । कन्यन्प्रत्ययः । हिरण्यम् । ७२३ **कृञः पासः** । कर्पासः । बिल्वादित्वात्कार्पासं वस्त्रम् । ७२४ **जनेस्तु रश्च** । जतुर्हस्ती योनिश्च । ७२५ **ऊर्णोतेर्डः** । ऊर्णा । ७२६ **दधातेर्यन्नुट् च** । धान्यम् । ७२७

---

**'युवोरनाकौ'** इत्यकादेशः **'कमण्डलौ च करकः'** इत्यमरः । कटक इति । **कटे वर्षावरणयोः अस्माद्वुन् । 'भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम्' इत्यमरः ।** चीकयतेराद्यन्तविपर्ययश्च । **'चीक आमन्त्रणे' अस्मात्संज्ञायां वुन् स्यात्, धातोराद्यन्तवर्णयोः विपर्ययश्चेत्यर्थः । 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । दैत्यभेदे च ।** पचिमच्योरिच्चोपधायाः । **डु पचष् पाके, मच कल्कने आभ्यां वुन्स्यात्, उपधाया इकारादेशश्च ।** पेचक इति । **उपधाया इकारे लघूपधगुणे च रूपम् । 'उलूके करिणः पुच्छमूलोपान्ते च पेचकः' इत्यमरः ।** जनेररष्ठ च । **'जनी प्रादुर्भावे' अस्मादरप्रत्ययः, धातोष्ठकारश्चान्तादेशः । 'जठरः कठिनेऽपि स्यात्' इत्यमरः ।** वचिमनिभ्यां चिच्च । **वच परिभाषणे, मन ज्ञाने, आभ्यामरप्रत्ययः स्यात्, स च चित्, ठकारश्चान्तादेशः ।** ऊर्जिदृणातेरलचौ पूर्वपदान्त्यलोपश्च । **ऊर्क् शब्दे, दॄ विदारणे' इत्यस्मादलचौ प्रत्ययौ स्तः, पूर्वपदान्त्यवर्णस्य लोपश्च ।** ऊर्दर इति । **पूर्वपदान्त्यस्य लोपे धातोर्गुणे च रूपम् ।** कृदरादयश्च । **एते निपात्यन्ते ।** कृदर इति । **कु इत्यव्ययपूर्वकदृधातोरालप्रत्यये रूपम् । एवं सुपूर्वकात्सृदर इति ।** हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे । **'हन हिंसागत्योः' अस्माद्युन् स्यात्, आद्यन्तयोर्हकारनकारयोर्यथासंख्यं घकारतकारौ स्तः ।** क्रमिगमिक्षमि । **'क्रमु पादविक्षेपे, गम्लृ गतौ, क्षमूष् सहने' एभ्यः तुन्स्यात्, वृद्धिश्च ।** हर्यतेः कन्यन् हिरच् । **'हर्य गतिकान्त्योः' अस्मात्कन्यन्प्रत्ययः, प्रकृतेर्हिरजित्यर्थः । हिरचि चकार इत्संज्ञकः, अकार उच्चारणार्थः ।** हिरण्यमिति । **कित्त्वान्न लघूपधगुणः ।** कृञः पासः । **डु कृञ् करणे अस्मात्पासप्रत्यय इत्यर्थः ।** कर्पास इति । **धातोर्गुणः ।** जनेस्तु रश्च । **'जन जनने' अस्मात्तुप्रत्ययः रेफश्चान्तादेश इत्यर्थः । जतुरिति । नकारस्य रेफादेशः ।** ऊर्णोतेर्डः । **'ऊर्णुञ् आच्छादने' अस्माड्डप्रत्यय इत्यर्थः ।**

जीर्यतेः क्रिन् रश्च वः । 'जिव्रिः स्यात्कलपक्षिणोः' । बाहुलकात् 'हलि च' (सू० ३५४) इति दीर्घो न । ७२८ मव्यतेर्यलोपो मश्चाऽपतुट् चालः । मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य । ममापतालो विषये । ७२९ ऋजेः कीकन् । ऋजीक इन्द्रो धूमश्च । ७३० तनोतेर्डउः सन्वच्च । 'तितउः पुंसि क्लीबे च' । ७३१ अर्भकपृथुकपाका वयसि । 'ऋधु वृद्धौ' । अतो वुन् । भकारश्चान्तादेशः । प्रथेः कुकन्सम्प्रसारणं च । पिबतेः कन् । ७३२ अवद्याऽवमाऽधमाऽर्वरेफाः कुत्सिते । वदेर्नञि यत् । अवद्यम् । अवतेरमः । वस्य पक्षे धः । अवमः । अधमः । अर्तेर्वन् । अर्वा । रिफतेस्तौदादिकात् अः । रेफः । ७३३ लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः । तरौ प्रत्ययौ क्रमात्स्तो, धातोर्ह्रस्वः, प्रत्ययस्य पुट् । लिप्तं श्लिष्टम् । रिप्रं कुत्सितम् । ७३४ क्लिशेरीच्चोपधायाः कन्लोपश्च लो नाम् च ।

---

डित्वाट्टिलोपः । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः । दधातेर्यन्नुट् च । 'डु धाञ् धारणपोषणयोः' अस्माद्यप्रत्ययः तस्य नुडागमश्च । जीर्यतेः क्रिन् रश्च वः । 'जॄ वयोहानौ, अस्मात्क्रिन् स्यात्, धातोः रेफस्य वकारादेशश्चेत्यर्थः । जिव्रिरिति । क्रिनि 'ऋत इद्धातोः' इति इत्वे रपरत्वे रेफस्य वत्वे च रूपम् । मन्वत्र 'हलि चे'ति दीर्घो दुर्वार इत्यत आह—बाहुलकादिति । मव्यतेर्यलोपो । 'मव्य बन्धने' अस्मादलप्रत्ययः स्यात्, तस्यापतुडागमः, धातोर्यलोपः, परिशिष्टाम्त्यस्य वकारस्य मकारश्चेत्यर्थः । ममापताल इति । ऋजेः कीकन् । 'ऋज गतौ' अस्मात्कीकन्स्यात् । ऋजीक इति । कित्वान्न गुणः । तनोतेर्डउः सन्वच्च । 'तनु विस्तारे' अस्माड्डउप्रत्ययः, स सन्वच्च भवति । तितउरिति । डउप्रत्ययस्य सन्वत्त्वाद्द्वित्वमभ्यासेत्वम् डित्वाट्टिलोपः । डउरिति पृथगुच्चारणसामर्थ्यान्न गुणः 'प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान्, इत्यमरकोशः । अर्भकपृथुकपाका वयसि । एते निपात्यन्ते । निपातनप्रकारमेवाह—ऋधु वृद्धाविति । अस्माद्वुन्, अकादेशः, धकारस्य भकारः, लघूपधगुणः । पृथुक इत्यत्राह—प्रथेरिति । 'प्रथ प्रख्याने' अस्मात्कुकन्, धातोः सम्प्रसारणेन रेफस्य ऋकारः । कित्वान्न लघूपधगुणः । पिबतेरिति । 'पा पाने' इत्यस्मादित्यर्थः । 'पोतः पाकोऽर्भको डिम्भः, पृथुकौ चिपिटार्भकौ' इति चामरः । अवद्यावमाधमार्वरेफाः । एते निपात्यन्ते । निपातनमेवाह—वदेरिति । 'वद व्यक्तायां वाचि' अस्मान्नञि उपपदे यत्प्रत्यय इत्यर्थः । अवतेरिति । अव रक्षणादौ । अधम इत्यत्राह—वस्य पक्षे ध इति । अर्तेरिति । ऋ गतौ । रिफतेरिति । 'रिफ कत्थनादिषु' अस्मात् अप्रत्यय इत्यर्थः । 'निकृष्टप्रतिकृष्टाऽर्वरेफयाऽप्यावमाऽधमाः' इत्यमरः । लीरीङोर्ह्रस्वः । लीङ् श्लेषणे, रीङ् श्रवणे, आभ्यां तप्रत्ययरप्रत्ययौ क्रमात्स्तः, तस्य पुडागमः, धातोर्ह्रस्वश्चेत्यर्थः, प्रकृतिप्रत्ययसमुदायेन क्रमाच्छ्लेषणे कुत्सने च वाच्ये । क्लिशेरीच्चोपधायाः । क्लिशू विबाधने,

क्लिशेः कन्स्यादुपधाया ईत्वं, लस्य लोपो, नामागमश्च। कीनाशो यमः। कित्व-फलं चिन्त्यम्। ७३५ **अश्नोतेराशुकर्मणि वरट् च।** चकारादुपधाया ईत्वम्। ईश्वरः। ७३६ **चतेरुरन्।** चत्वारः। ७३७ **प्राऽ (प्रेऽ) ततेररन्।** प्रातः। ७३८ **अमेस्तुट् च।** अन्तर्मध्यम्। ७३९ **दहेर्गो लोपो दश्च नः।** गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारः। नगः। ७४० **सिचेः सञ्ज्ञायां हनुमौ कश्च।** सिञ्चतेः कप्रत्ययो हकारादेशो, नुम्च स्यात्। सिंहः। ७४१ **व्याङि घ्रातेश्च जातौ।** कप्रत्ययः स्यात्। व्याघ्रः। ७४२ **हन्तेरच् घुर च।** घोरम्। ७४३ **क्षमेरुपधालोपश्च।** चादच्। क्ष्मा। ७४४ **तरतेर्डिः।** त्रयः। त्रीन्। ७४५ **ग्रहेरनिः।** ग्रहणिः। ङीष्। ग्रहणी व्याधिभेदः। ७४६ **प्रथेरमच्।** प्रथमः। ७४७ **चरेश्च।** चरमः। ७४८ **मङ्गेरलच्।** मङ्गलम्।

इत्युणादिषु पञ्चमः पादः॥

---

**अस्मात्कन्स्यात् धातोरुपधाया ईत्वं, लकारस्य लोपो नामागमश्च।** कीनाश इति। **'कृतान्ते पुंसि कीनाशः' इत्यमरः।** चिन्त्यमिति। **उपधाया ईत्वविधिसामर्थ्यादेव गुणो न भविष्यतीति भावः।** अश्नोतेराशुकर्मणि। **'अशू व्याप्तौ' अस्माद्वरट् स्यात्, उपधाया ईत्वं च आशुकर्मणि वाच्ये।** ईश्वर इति। **ईश्वरो हि प्रार्थितः सन्वरादिकं शीघ्रं दातुं शक्तो भवति।** चतेरुरन्। **'चते याचने' अस्मादुरन्स्यात्, उरनि अकार उच्चारणार्थः नकार इत्।** चत्वार इति। **'चतुरनडुहो'रित्याम्।** प्राततेररन्। **प्रपूर्वादत सातत्यगमने इत्यस्मादरन्प्रत्ययः, अकार उच्चारणार्थः।** प्रातरिति। **'स्वरादिपाठादव्ययत्वम्।'** अमेस्तुट् च। **'अम गत्यादिषु' अस्मादरन् स्यात्, तस्य तुडागमश्च।** दहेर्गो लोपो दश्च नः। **'दह भस्मीकरणे' अस्मात् गप्रत्ययः, धातोरन्त्यस्य लोपः, दकारस्य नकारश्चेत्यर्थः।** सिचेः सञ्ज्ञायाम्। **'षिच क्षरणे' अस्मात्कप्रत्ययः धातोरन्त्यस्य हकारादेशः नुम् स्यात्।** व्याङि घ्रातेश्च जातौ। **वि आङित्युपसर्गे उपपदे घ्रा गन्धोपादान इत्यस्मात् कप्रत्ययः स्यात् जातौ वाच्यायाम्।** व्याघ्र इति। **कित्त्वादातो लोप इटि चेत्यालोपः।** हन्तेरच् घुर च। **'हन हिंसागत्योः'अस्मादच्प्रत्ययः, धातोर्घुरादेशश्च।** घोरमिति। **लघूपधगुणः।** क्षमेरुपधालोपश्च। **'क्षमूष् सहने' अस्मादच्प्रत्ययः धातोरुपधाया लोपश्चेत्यर्थः। 'क्ष्माऽवनिर्मेदिनी मही' इत्यमरः।** तरतेर्डिः। **'तॄ प्लवनतरणयोः' अस्मात् डिः स्यात्।** त्रिरिति। **डित्वाट्टिलोपः। तस्य नित्यं बहुवचनान्तत्वादाह**–त्रय इति। ग्रहेरनिः। **'ग्रह उपादाने' अस्मादनिप्रत्ययः।** ग्रहणिरिति। **'अट्कुप्वा'ङिति णत्वम्।** ङीषिति। **'कृदिकारादक्तिन' इत्यनेन। 'ग्रहणी रुक् प्रवाहिका'। इत्यमरः।** प्रथेरमच्। **'प्रथ प्रख्याने' अस्मादमच् स्यात्। प्रथम इति रूपम्।** चरेश्च। **'चर गतिभक्षणयो'रस्मादमच्स्यात्। 'प्रथिचरिभ्या'मित्येकयोग एव कर्तुं शक्यः।** मङ्गेरलच्। **मगि-**

## अथ उत्तरकृदन्तप्रकरणम् ॥ २६ ॥

३१६६ उणादयो बहुलम् ३।३।१ ॥ एते वर्तमाने सञ्ज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः । 'सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु' (भाष्यम्) । ३१७० भूतेऽपि दृश्यन्ते ३।३।२ ॥ ३१७१ भविष्यति गम्यादयः ३।३।३ ॥ ३१७२ दाशगोघ्नौ सम्प्रदाने ३।४।७३ ॥ एतौ सम्प्रदाने कारके निपात्येते । दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिः । ३१७३ भीमादयोऽपादाने ३।४।७४ ॥ भीमः । भीष्मः । प्रस्कन्दनः । प्ररक्षः । मूर्खः खलतिः । ३१७४ ताभ्यामन्यत्रोणादयः ३।४।७५ ॥ सम्प्रदानापादानपरामर्शार्थं ताभ्यामिति । ततोऽसौ भवति तन्तुः । वृ तदिति वर्त्म । चरितं तदिति चर्म । ३१७५ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१० ॥ क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्त-

---

गेत्यर्थः । अस्मादलच्प्रत्यय इत्यर्थः । मङ्गलमिति । धातोरिदित्वान्नुम् , 'श्वश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः । इति बालमनोरमायां उणादिषु पञ्चमः पादः ।

---

अथ उत्तरकृदन्तप्रक्रियाः निरूप्यन्ते—उणादयो बहुलम् । तृतीयेऽध्याये तृतीयपादस्येदमादिमं सूत्रम् । वर्तमाने संज्ञायां चेति । 'वर्तमाने लट्' इत्यतः पुवस्संज्ञायाम्' इत्यतश्च तदनुवृत्तेरिति भावः । अत एव 'नञि हन एह च' नञ्पूर्वाद्धन्तेरसिप्रत्यये प्रकृतेः एहादेशे व्युत्पन्नः अनेहस्शब्दो वर्तमानकाल एवेत्युक्तं भाष्ये । संज्ञाशब्दश्चाऽत्र रूढशब्दपरः । वैदिकानामपि शब्दानामुपलक्षणम् । अत एव 'नैगमरूढिभवं हि सुसाधु' इति वार्तिकम् । 'वैदिका रूढशब्दाश्चौणादिका' इति भाष्यं च सङ्गच्छते । रूढाश्चैते उणादिप्रत्ययान्ता अवयवार्थशून्या असन्तमप्यवयवार्थमाश्रित्य प्रायः कर्तरि व्युत्पाद्याः । 'उणादयो वे'त्यनुक्त्वा बहुलग्रहणस्य प्रयोजनमाह—केचिदविहिता अप्यूह्या इति । तदेवाह—संज्ञास्वित्यादि । भाष्यस्थोऽयं श्लोकः । डित्थो डविथ इत्यादौ धातुरूपाणि प्रत्ययाश्च यथासम्भवमूह्याः । गुणनिषेधादिकार्यवशात् अनूबन्धं विद्यात् । अनूबन्धमित्यत्र 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः । एतत् उणादिषु शास्त्रं शासितव्यम् । 'कृवापाजि' इत्यादि सूत्राणि तु शाकटायनप्रणीतानि, अस्यैव बहुलग्रहणस्य प्रपञ्च इत्यर्थः । भूतेऽपि दृश्यन्ते । 'उणादय' इति शेषः । वर्तमानाधिकारादिदं भूतग्रहणम् । दृशिः प्रयोगानुसारार्थः । इदं सूत्रं बहुलग्रहणप्रपञ्चार्थम् । भविष्यति गम्यादयः । भविष्यति काले गम्यादयः शब्दाः इनिप्रत्ययान्ता निपात्यन्त इत्यर्थः । ग्रामङ्गमीति निपातनान्नात्र णित्वम् । गमिष्यन्नित्यर्थः । प्रस्थायी प्रस्थास्यमान इत्यर्थः । तुमुन्ण्वुलौ । क्रियार्थायामिति । क्रियोद्दे-

त्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । अत्र वाऽसरूपेण तृजादयो न । पुनर्ण्वुलुक्तेः । **३१७६ समानकर्तृकेषु तुमुन् ३।३।१५८॥** अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन्स्यात् । इच्छति भोक्तुम् । वष्टि वाञ्छति वा । **३१७७ शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ३।४।६५॥** एषूपपदेषु धातोस्तुमुन्स्यात् । शक्नोति भोक्तुम् । एवं धृष्णोतीत्यादौ । अर्थग्रहणमस्तिनैव सम्बध्यते । अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् । **३१७८ पर्याप्तिवचनेष्वलमर्थेषु ३।४।६६॥** पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन्स्यात् । पर्याप्तो भोक्तुं, प्रवीणः

---

र्थभूतक्रियावृत्तिधातौ उपपदे इत्यर्थः । भविष्यतीत्यनुवर्तते । तुमुनि नकार इत्, मकारादुकार उच्चारणार्थः । ण्वुलि णकारेतौ वोरकादेशः । मान्तत्वादिति । तुमुनो मान्तकृत्त्वात् 'कृन्मेजन्तः' इत्यव्ययत्वमित्यर्थः । ततश्च 'अव्ययकृतो भावे' इति वचनाद्भावे तुमुन् । ण्वुल् तु कर्तर्येव । कृष्णं द्रष्टुमिति । 'न लोकाव्यय' इति न षष्ठी । कृष्णकर्मकभविष्यद्दर्शनार्थं यानमित्यर्थः । अत्र यातीत्युपपदम् । अत्र तुमुन्प्रत्ययप्रकृत्यर्थस्य दर्शनस्य यानार्थत्वं तुमुना द्योत्यं, वाच्यं वा । कृष्णं दर्शको यातीति । कृष्णं द्रक्ष्यन् तदर्थं यातीत्यर्थः । 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति न षष्ठी । ननु तुमुनो भावार्थकत्वे तद्विषये कर्तरि विहितानां तृजादीनामप्रवृत्तावपि ण्वुल्विषये कर्तरि तृजादयः कुतो न स्युः । न च विशेषविहितेनाऽनेन ण्वुला तृजादयो बाध्यन्ते इति वाच्यम् । वासरूपविधिना तद्बाधस्य पाक्षिकत्वादित्यत आह—अत्रेति । क्रियार्थक्रियोपपदे विषये वाऽसरूपविधिना पक्षे प्राप्ताः ये तृजादयस्ते न भवन्तीत्यर्थः । आदिना 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यादिसङ्ग्रहः । कुतोऽत्र तृजादयो नेत्यत आह—पुनर्ण्वुलुक्तेरिति । 'ण्वुल्तृचौ' इति कालसामान्ये कर्तरि विहितो ण्वुल् क्रियार्थक्रियोपपदे विषये भवतीति पुनरिह ण्वुल्विधानात् तदितरतृजादयो न भवन्तीति विज्ञायत इति भावः । समानकर्तृकेषु । 'तुमुन्ण्वुलौ क्रियायाम्' इत्येव सिद्धे किमर्थमिदमित्यत आह—अक्रियार्थेति । इच्छार्थेष्विति । 'इच्छार्थेषु लिङ्लोटौ' इत्यतस्तदनुवृत्तेरिति भावः । इच्छति भोक्तुमिति । अत्र इच्छतीत्युपपदार्थस्य इच्छाया भोजनोद्देश्यत्वाभावेऽपि तुमुन् । 'इच्छार्थेष्वि'त्यर्थग्रहणस्य प्रयोजनमाह—वष्टि वाञ्छति वेति । यद्यपि वशेः छान्दसेषु परिगणनं धातुपाठे । तथापि 'वष्टि भागुरिः' इति वार्तिकप्रयोगात् लोकेऽपि प्रयोग इति भावः । शकधृष । 'शकधृषज्ञा' इति सूत्रमक्रियोपपदार्थम् । शक्नोति भोक्तुमिति । अत्र शकेर्भोजनोद्देश्यत्वाऽभावेऽपि तुमुन् । एवमिति । धृष्णोति जानाति ग्लायति घटते आरभते लभते क्रमते उत्सहते अर्हति वा भोक्तुमित्युदाहार्यम् । अस्तिनैवेति । न तु शकादिभिरित्यर्थः । कुत इत्यत आह—अनन्तरत्वादिति । सन्निहितत्वादित्यर्थः । पर्याप्तिवचने । 'पर्याप्ति' इत्यस्य विवरणम्—

कुशलः पटुरित्यादि। पर्याप्तिवचनेषु किम्। अलं भुक्त्वा। अलमर्थेषु किम्। पर्याप्तं भुङ्क्ते। प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम्। **३१७९ कालसमयवेलासु तुमुन् ३।३।१६७॥** पर्यायोपादानमर्थोपलक्षणार्थम्। कालार्थेषूपपदेषु तुमुन्स्यात्। कालः समयो वेला अनेहा वा भोक्तुम्। प्रैषादिग्रहणमिहानुवर्तते। तेनेह न। 'भूतानि कालः पचतीति वार्ता'। **३१८० भाववचनाश्च ३।३।११॥** भाव इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः। यागाय याति। 'तुमर्थात्' (सू ५८२) इति चतुर्थी। **३१८१ अण्कर्मणि च ३।३।१२॥** कर्मण्युपपदे क्रियार्थायां क्रियायां चाण्स्यात्। ण्वुलोऽपवादः। काण्डलावो व्रजति। परत्वादयं कादीन्बाधते। कम्बलदायो

---

पूर्णेति। 'अलम्'शब्दस्य विवरणम्—सामर्थ्यवचनेष्विति। पर्याप्तो भोक्तुमिति। अन्यूनसामर्थ्यवानित्यर्थः। वचनग्रहणस्य फलमाह—प्रवीण इत्यादि। अलं भुक्त्वेति। अत्र अलमिति प्रतिषेधार्थम्। नतु पर्याप्त्यर्थकमिति भावः। पर्याप्तं भुङ्क्ते इति। बहुलमन्नं भुङ्क्ते इत्यर्थः। प्रभूततेति। 'अन्नस्ये'ति शेषः। कालसमयवेलासु। अक्रियोपपदेऽपि प्राप्त्यर्थमिदम्। ननु कालपर्यायाणां कतिपयानां ग्रहणात्तदितरस्मिन् अनेहशब्दे उपपदे न स्यादित्यत आह—पर्यायोपादानमर्थोपलक्षणार्थमिति। अनुवर्तते इति। प्रैषातिसर्गप्राप्तकालेष्वादिति भावः। भूतानीति। पृथिव्यादिपञ्चभूतानि, कालः पचति उपचयापचयादिविकारं प्रापयति इति वार्ता लोकवृत्तान्त इत्यर्थः। भाववचनाश्च। 'क्रियार्थायां क्रियाया'मिति भविष्यतीति चानुवर्तते। 'भावे चे'त्येव सिद्धे वचनग्रहणस्य प्रयोजनमाह—भाव इत्यधिकृत्येति। भावे इत्यधिकृत्य घञादयो विधास्यन्ते, ये सामान्यतः ते क्रियार्थायां क्रियायां उपपदे भविष्यति काले विशेषविहितेनाऽपि तुमुना समुच्चिता भवन्तीत्यर्थः। न च वाऽसरूपविधिना सिद्धमेतदिति शङ्क्यम्। 'ल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति' इत्युक्तेरिति भावः। ननु 'यागाय याती'त्यत्र यागस्य सम्प्रदानत्वाभावात् कथं चतुर्थी, नापि तादर्थ्ये चतुर्थी, तादर्थ्यस्य प्रत्ययेनैव लाभादित्यत आह—तुमर्थादिति। अण् कर्मणि च। चकारेण क्रियार्थायां क्रियायामिति समुच्चीयते तदाह—क्रियार्थायां क्रियायां चेति। तथा च क्रियार्थायां क्रियायां कर्मणि चेत्युपपदद्वये सत्येवास्य प्रवृत्तिः नान्यतरस्मिन्निति भाष्ये स्पष्टम्। कर्मण्येवोऽपवादः 'कर्तरि कृदि'त्यधिकारात्। अत्र 'ण्वुल्तृचौ' इति बाधित्वा 'कर्मण्यण्' इति सामान्यविधिना अण् प्राप्तः तं तावत्क्रियार्थायां क्रियायामुपपदे विशेषविहितस्तुमुन्ण्वुलाविति ण्वुल् बाधितुमुत्सहते, पुनर्ण्वुल्विधिसामर्थ्येन वाऽसरूपविधेरप्रवृत्तेरुक्तत्वात्। तमिमं ण्वुलं बाधितुमयमणिविधिः। तदाह—ण्वुलोऽपवाद इति। 'तुमुन्ण्वुलौ' इति विहितस्य ण्वुलोऽपवाद इत्यर्थः। एवं च ण्वुला बाधितस्य 'कर्मण्यण्' इत्यस्य अयमणिविधिः प्रतिप्रसवार्थं इति स्थितम्। ननु ण्वुला बाधित-

व्रजति। **३१८२ पदरुजविशस्पृशो घञ् ३।३।१६॥** भविष्यतीति निवृत्तम्। पद्यतेऽसौ पादः। रुजतीति रोगः। विशतीति वेशः। स्पृशतीति स्पर्शः। **३१८३ सृ स्थिरे ३।३।१७॥** 'सृ' इति लुप्तविभक्तिकम्। स्थिरे कर्तरि सर्तेः घञ्स्यात्। सरति कालान्तरमिति सारः। 'व्याधिमत्स्यबलेषु चेति वाच्यम्' (वा २१७४)। अतीसारो व्याधिः। 'उपसर्गस्य' इति दीर्घः अन्यर्भावितण्यर्थोऽत्र सरतिः। रुधिरादिकमतिशयेन सारयतीत्यर्थः। विसारो मत्स्यः। 'सारो बले दृढांशे च'। **३१८४ भावे ३।३।१८॥** सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ्स्यात्। पाकः पाकौ। **३१८५ स्फुरतिस्फुलत्योर्घञि ६।१।४७॥** अनयोरेच आत्वं स्याद्घञि। स्फारः। स्फालः। 'उपसर्गस्य घञि-' (सू० १०४४) इति दीर्घः। परी-

स्याऽण्यः प्रतिप्रसवेऽपि 'आतोऽनुपसर्गे' इति कप्रत्ययः कम्बलदायो व्रजती'त्यत्र दुर्निवारः। कप्रत्ययस्य कर्मण्यणपवादत्वात् तद्रूपत्वेन च वाऽसरूपविध्यप्रवृत्तेः। न चायं वैशेषिकोऽण्विधिः कप्रत्ययस्याप्यपवाद इति शङ्क्यम्। न ह्ययमपूर्वोऽण्विधिः। किन्तु लाघवात् 'कर्मण्यण्' इत्यणेवाऽत्र प्रतिप्रसूयते। स च 'कर्मण्यण्' इत्यण् सामान्यविहितः 'आतोऽनुपसर्गे कः' इति वैशेषिकस्य नाऽपवादः, प्रत्युत कप्रत्यय एव तदपवादः। अतः 'कम्बलदायो व्रजती'त्यत्र कर्मण्यणपवादं 'तुमुन्ण्वुलौ'विति ण्वुलं बाधित्वा कप्रत्ययः स्यादित्यत आह-परत्वादयं कादीन् बाधते इति। आदिना 'सामगो गुरुकुलं व्रजती'त्यादौ 'गापोष्ट'गित्यादिसङ्ग्रहः। 'अण्कर्मणि चे'ति ह्यावर्तते। प्रतिप्रसवविधिरपूर्वविधिश्च। तत्र प्रतिप्रसवविधिना ण्वुला अणो बाधनिवृत्तिः। अपूर्वविधिविहितस्य त्वणः तृतीयपादीयस्य द्वितीयपादस्थकप्रत्ययापेक्षया परत्वात् कादिप्रत्यया अणा अनेन बाध्यन्त इत्यर्थः। एतच्च भाष्ये स्पष्टम्। इत ऊर्ध्वम् 'लृट् शेषे च' इत्यादिसूत्रेषु क्रियार्थायां क्रियायामिति निवृत्तम्। भविष्यतीत्येवानुवर्तते इति बोध्यम्। पदरुज। कर्तरीत्येव। पद्यतेऽसाविति। करणस्याऽत्र विवक्षातः कर्तृत्वम्। 'एरच्' इत्यतः प्राक् घञाधिक्रियते। सृ स्थिरे। लुप्तविभक्तिकमिति। लुप्तपञ्चमीकमित्यर्थः। स्थिरे कर्तरीति। 'स्थिरे' इति कर्तृविशेषणम्। न तूपपदमिति भावः। सर्तेरिति। भ्वादेर्जुहोत्यादेश्च ग्रहणम्, न तु जुहोत्यादेरेव, व्याख्यानात्। तदाह—सरति कालान्तरमिति सार इति। अर्धर्चादिपाठात् पुस्त्वं, क्लीबत्वं च। अत एव च स्थिर इति नोपपदम्। व्याधीति। वार्तिकमस्थिरार्थम्। सारो बल इति। भाष्ये तु बले खदिरसार इत्युदाहृतम्। भावे। 'भावो भावना क्रिया, सा च धातुत्वेन सकलधातुवाच्ये'त्यादिभूवाद्यव्याख्यावसरे, सर्वधातुवाच्यं क्रियासामान्यं, तद्विशेषः पाकादिश्च धातुविशेषवाच्यः, तत्र क्रियासामान्यं भावशब्दार्थः, तिङ्वाच्यं लिङ्गसङ्ख्यान्वयाऽयोग्यं साध्यावस्थापन्नं, कृद्वाच्यं तु लिङ्गसङ्ख्यान्वययोग्यं सिद्धावस्थापन्नम्, कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति भाष्यादिति प्रपञ्चितम्। तदाह—'सिद्धाव-

हारः । 'इकः काशे' ( सू १०४५ ) । काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः स्यात् । नीकाशः । अनूकाशः । इकः किम् । प्रकाशः । 'नोदात्तोपदेश-' ( सू २७६३ ) इति न वृद्धिः । शमः । आचमादेस्तु आचामः । कामः । वामः । विश्राम इति त्वपाणिनीयम् । **३१८६ अकर्तरि च कारके संज्ञायाम् ३।३।१९॥** कर्तृभिन्ने कारके घञ् स्यात् । **३१८७ घञि च भावकरणयोः ६।४।२७॥** रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् । रज्यत्यस्मिन्रङ्गः । प्रास्यत इति प्रासः । सञ्ज्ञायाम् इति प्रायिकम् । को भवता लाभो लब्धः । इत उत्तरं 'भावे' 'अकर्तरि कारके' इति 'कृत्यल्युटो बहुलम्' ( सू २८४१ ) इति यावद्‌द्वयमप्यनुवर्तते । **३१८८ स्यदो जवे ६।४।२८॥** स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः । **३१८९ अवोदैधौद्मप्रश्रथहिमश्रथाः ६।४।२९॥** अवोदः अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । श्रन्थेर्नलोपो

---

स्यापन्न इत्यादिना । घञीति । 'पदरुज' इत्यतस्तदनुवृत्तेरिति भावः । इकः काशे । उत्तरपदे इति । 'अलुगुत्तरपदे' इत्यतस्तदनुवृत्तेरिति भावः । 'ढ्रलोपे पूर्वस्य' इत्यतो दीर्घ इत्यनुवर्तते । 'उपसर्गस्य घञ्यमनुष्ये' इत्यतो घञीति । तेनैव सिद्धे नियमार्थमिदम् । तदाह—इगन्तस्यैवेति । दीर्घः स्यादिति । 'घञी'ति शेषः । आचाम इति । 'अनाचमे'रिति पर्युदासान्न वृद्धिनिषेधः इति भावः । अपाणिनीयमिति । 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधादिति भावः । अकर्तरि । कारक इति प्रत्ययार्थनिर्देशः । न तूपपदम् , व्याख्यानात् । संज्ञाशब्देन रूढिर्विवक्षिता । तेन राग इति वक्ष्यमाणमुदाहरणं सङ्गच्छते । घञि । 'अनिदिताम्' इति नलोपप्रकरणे 'रञ्जेश्च' इत्युत्तरमिदं सूत्रम् । तदाह—रञ्जेर्नलोपः स्यादिति । सूत्रे शेषपूरणमिदम् । राग इति । 'चजोः कु घिण्ण्यतोः' इति जस्य गः । नलोपे कृते उपधावृद्धिः । रञ्जनक्रियेत्यर्थः । रञ्जनद्रव्यं वा । प्रास्यत इति । प्रपूर्वाद् 'असु क्षेपणे' इत्यस्मात् 'अकर्तरि च' इति करणे घञि प्रास इति रूपमित्यर्थः । प्रास्यन्ते क्षिप्यन्ते शत्रवोऽनेनेति प्रासः आयुधविशेषः । प्रायिकमिति । स्पष्टमिदं भाष्ये । ततश्च असंज्ञायामपि क्वचिदयं घञ् भवतीति भावः । तदाह—को भवतेति । लाभ इति । भावे घञ् । कः लाभः हिरण्यादिप्राप्तिरूपः लब्धः सम्पन्न इत्यर्थः । भवतेत्यस्य लब्ध इत्यत्रान्वयात् 'न लोक' इति षष्ठीनिषेधः । अनुवर्तत इति । अत्र व्याख्यानमेव शरणम् । 'स्यन्दू प्रस्रवणे' इत्यस्मात् 'अकर्तरि च' इति घञि कित्त्वाभावात् 'अनिदिताम्' इति नलोपो न प्राप्तः । तत्र स्यन्देश्चेत्युक्तौ यद्यपि नलोपः सिध्यति । तथापि कृते नलोपे उपधावृद्धिः स्यात् । तत्र नलोपमुपधावृद्ध्यभावं च ज्ञापयितुमाह—स्यदो जवे । स्यदो वेग इति । वेगे रूढोऽयम् । अन्यत्रेति । प्रस्रवणे इत्यर्थः । अवोदैधौद्म । अवोद, एध, ओद्म, प्रश्रथ, हिमश्रथ, एषां द्वन्द्वः । अवोद इति । घञि नलोपो निपात्यते । कृते नलोपे आद्गुणः । लघूपधगुणस्तु न भवति । 'न धातु-

ददथभावश्च। प्रश्रथः। हिमश्रथः। ३१९० परिमाणाख्यायां सर्वेभ्यः ३।३।२०॥ घञ्। अजपोर्बाधनार्थमिदम्। एकस्तण्डुलनिचायः। तण्डुलानां निचायः राशिः परिच्छिद्यते। द्वौ शूर्पनिष्पावौ। शूर्पेण निष्पावौ। द्वौ कारौ (अत्र विक्षिप्यमाणो धान्यादिःपरिच्छिद्यते)। 'दारजारौ कर्तरि णिलुक्च' (वा २१८२)। दारयन्तीति दाराः। जरयतीति जारः। (उपपतिः)। ३१९१ इङश्च ३।३।२१॥ घञ्। अचोऽपवादः।

---

लोपे' इति निषेधात्। पथ इति। 'श्रि इन्धी दीप्तौ' इत्यस्मात् घञि नलोपः। 'न धातुलोप' इति निषेधं बाधित्वा गुणश्च निपात्यते। ओघ इति। उन्देरौणादिके मनूप्रत्यये नलोपो गुणश्च निपात्यते। श्रन्थेरिति। 'प्रपूर्वस्य हिमपूर्वस्य च घञि'ति शेषः। परिमाणाख्यायाम्। घञिति। शेषपूरणम्। सर्वेभ्यो धातुभ्यः अकर्तरि कारके वाच्ये घञ् स्यात् प्रत्ययार्थस्य परिच्छेदे गम्ये इत्यर्थः। ननु 'अकर्तरि कारके' इत्येव सिद्धे किमर्थमिदमित्यत आह—अजपोरिति। 'एरच्' 'ऋदोरप्' इति वक्ष्यमाणयोर्बाधनार्थमित्यर्थः। 'अकर्तरि च' इति घञ् तु ताभ्यां विशेषविहिताभ्यां बाध्यते, सरूपत्वेन वाऽसरूपविधेरप्रवृत्तेरिति भावः। एकस्तण्डुलनिचाय इति। निश्चित्य चीयते सङ्गीक्रियते इति निचायः। कर्मकारके वाच्ये 'एरच्' इत्यस्यापवादो घञ्। तण्डुलनिचायशब्दे विग्रहं दर्शयति—तण्डुलानामिति। निचयशब्दस्य विवरणम्—राशिरिति। परिच्छिद्यतेरिति। तण्डुलावयवकसङ्घातात्मकः राशिरेकत्वेन परिच्छिद्यते इत्यर्थः। द्वौ शूर्पनिष्पावाविति। निष्पूयते तुषापनयनेन शोध्यते इति निष्पावः तण्डुलादिराशिः। कर्मणि घञ्। अबपवादः। शूर्पेण निष्पावःशूर्पनिष्पावः। 'कर्तृकरणे कृता बहुलम्' इति समासः। द्वित्वं तु शूर्पद्वारा निष्पावेऽन्वेति। अतः शूर्पद्वित्वमार्थिकम् न तु शाब्दमित्येकवचनं निर्बाधम्। द्वौ काराविति। कीर्यते विक्षिप्यते इति कारः। धान्यादिराशिः। कर्मणि घञ्, अबपवादः। तदाह—अत्र विक्षिप्यमाण इति। न च धातोरित्यधिकारादेव धातुमात्रासिद्धे सर्वग्रहणं व्यर्थमिति वाच्यम्। प्रकृत्याश्रय एवापवादो बाध्यते; न त्वर्थाश्रय इत्येतदर्थत्वात्। तेनेह न। एका तिलोच्छ्रितिः। उच्छ्रयते ऊर्ध्वीक्रियते इत्युच्छ्रितिः, ऊर्ध्वं कृतो राशिः। कर्मणि स्त्रियां क्तिन्। स च अर्थाश्रयत्वात् प्रकृत्याश्रयत्वाऽभावात् नानेन घञा बाध्यते। किन्तु 'एरच्' 'ऋदोरप्' इति प्रकृत्याश्रयावेव अजपौ बाध्येते इति भाष्ये स्पष्टम्। दारजाराविति॥ वार्तिकम्। दृ विदारणे, जॄ वयोहानौ आभ्यां ण्यन्ताभ्यां कर्तरि घञ् णिलोपं बाधित्वा णिलुक् चेत्यर्थः। दारयन्ति वित्तं, विद्रावयन्तीति दाराः भार्या। 'दाराः पुंसि च भूम्न्येव' इत्यमरः। घञि णिलुक्। ण्याश्रयवृद्धौ निवृत्तायां घञाश्रया वृद्धिः। तदाह—दारयन्तीति दारा इति। जरयति नाशयति कुलमिति जारः। जॄधातोर्ण्यन्तात् घञ् णिलुक्। णिलोपे सति तु तस्य परनिमित्तकत्वेन 'अचः परस्मिन्' इति स्थानिवत्त्वात् घञाश्रया वृद्धिः स्यात्। न च णिनिमित्तैव वृद्धिरस्त्विति वाच्यम्। 'जनीजॄक्नसुरञ्जोऽमन्ताश्च' इति मित्त्वे 'मितां ह्रस्वः' इति णिनिमित्तकह्रस्वापत्तेः।

उपेत्यास्मादधीयते उपाऽध्यायः । 'अपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा ङीष्' (वा २१८४) उपाध्याया । उपाध्यायी । 'शॄ वायुवर्णनिवृतेषु' (वा २१८५) । 'शॄ' इत्यविभक्तिको निर्देशः । शारो वायुः । करणे घञ् । शारो वर्णः । चित्रीकरणमिह धात्वर्थः । निव्रियते आव्रियतेऽनेनेति निवृतमावरणम् । बाहुलकात्करणे क्तः । 'गौरिवाऽकृतनीशारः प्रायेण शिशिरे कृशः' । अकृतप्रावरण इत्यर्थः । 'प्रदक्षिणप्रसव्यगामिनां शाराणाम्' इति वार्तिककारप्रयोगादक्षेष्वपि शार इति भवति । ३१६२ **उपसर्गे रुवः ३।३।२२॥** घञ् । संरावः । उपसर्गे किम् । रवः । ३१६३ **अभिनिसः स्तनः शब्दसंज्ञायाम् ८।३।८६॥** अस्मात्स्तनः सस्य मूर्धन्यः । अभिनिष्टानो वर्णः । शब्दसञ्ज्ञायां किम् । अभिनिःस्तनति मृदङ्गः । ३१६४ **समि युद्रुदुवः ३।३।२३॥** संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः पिष्टविकारोऽपूपविशेषः । सन्द्रावः । सन्दावः । ३१६५ **श्रिणीभुवोऽनुपसर्गे ३।३।२४॥**

---

णिलुकि तु तस्य परनिमित्तकत्वाऽभावेन स्थानिवत्त्वाऽभावान्न ह्रस्वप्रसङ्गः । तदाह— जरयतीति जार इति । उपपतिरिति । 'जारस्तूपपतिः समौ' इत्यमरः । इङश्च । घञिति । शेषपूरणम् । इङ् अध्ययने, नित्यमधिपूर्वः । अस्मादकर्तरि कारके घञित्यर्थः । अकर्तरि चेति सिद्धेराह—अचोऽपवाद इति । 'एरच्' इत्यस्यापवाद इत्यर्थः । उपेत्येति । समीपं प्राप्य यस्मादधीयते स उपाध्यायः इत्यर्थः । अपादाने घञिति भावः । 'आख्यातोपयोगे' इत्यपादानत्वम् । अपादाने इति । अपादानकारके वाच्ये स्त्रीत्वे गम्ये इङो घञ उपसंख्यानमित्यर्थः । तदन्ताच्च वा ङीषिति । वार्तिकम् । 'अपादाने स्त्रियाम्' इति विहितघञन्तात् इत्यर्थः । अत्र पठितमेव वार्तिकं स्त्रीप्रत्ययाधिकारे 'या तु स्वयमेव अध्यापिका तत्र वा ङीषित्युपन्यस्तं' मूले । ननु 'अकर्तरि च' इत्येव सिद्धे किमर्थं घञो विधानमिति चेन्न । 'घञनुक्रमणमजपोर्विषये' इति 'एरच्' 'ऋदोरप्' इत्यजपोरेव विषये 'अकर्तरि च' इति घञ्विधिरिति भाष्यवचनात् स्त्रीत्वे गम्ये 'स्त्रियां क्तिन्' इति क्तिन्विषये घञि अप्राप्ते 'अपादाने स्त्रियाम्' इति घञ्वचनात् । उपाध्यायेति । उपेत्य अस्याः सकाशादधीयते इत्यर्थः । शॄ वायुरिति । वार्तिकम् । अविभक्तिक इति । लुप्तपञ्चमीक इत्यर्थः । वायौ वर्णे निवृत्ते च कर्तरि शॄधातोर्घञित्यर्थः । अचोऽपवादः । शारो वायुरिति । शीर्यन्ते पर्णफलादीनि यैरिति विग्रहः । तदाह— करणे घञिति । चित्रीकरणमिति । शीर्यन्ते चित्रीक्रियन्ते पटादयः अनेनेति भावः । गौरिवेति । भाष्यस्थं श्लोकार्धम् । 'नीशारः' इत्यत्र 'उपसर्गस्य घञि' इति दीर्घः । अक्षे शारशब्दं साधयति—प्रदक्षिणेति । वार्तिककारप्रयोगादिति । पञ्चमस्य द्वितीये 'अनुपदसर्वान्नायानयम्' इति सूत्रभाष्ये स्थितमिदम् । उपसर्गे रुवः । 'घञिति शेषः । उपसर्गे उपपदे रुधातोर्घञित्यर्थः । अचोऽपवादः । समि युद्रुदुवः । समित्युपसर्गे उपपदे, यु द्रु दु एभ्यः घञित्यर्थः । अचोऽपवादः । श्रिणी । उपसर्गे असति, श्रि, णी, भू, एभ्यो

श्रायः। नायः। भावः। अनुपसर्गे किम्। प्रश्रयः। प्रणयः। प्रभवः। कथम् 'प्रभावो राज्ञः' इति। प्रकृष्टो भाव इति प्रादिसमासः। कथम् 'राज्ञो नयः' इति। बाहुलकात्। **३१९६ वौ क्षुश्रुवः ३।३।२५॥** विक्षावः। विश्रावः। वौ किम्। क्षवः। श्रवः। **३१९७ अवोदोर्नियः ३।३।२६॥** अवनायोऽधोनयनम्। उन्नायः ऊर्ध्वनयनम्। कथम् 'उन्नयः उत्प्रेक्षा' इति बाहुलकात्। **३१९८ प्रे द्रुस्तुस्रुवः ३।३।२७॥** प्रद्रावः। प्रस्तावः। प्रस्रावः। प्रे इति किम्। द्रवः। स्तवः। स्रवः। **३१९९ निरभ्योः पूल्वोः ३।३।२८॥** निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः। अभिलावः। निरभ्योः किम्। पवः। लवः। **३२०० उन्न्योर्ग्रः ३।३।२९॥** उद्गारः। निगारः। उन्न्योः किम्। गरः। **३२०१ कॄ धान्ये ३।३।३०॥** 'कॄ' इत्यस्माद्धान्यविषयकादुन्न्योर्घञ्स्यात्। उत्कारो निकारो धान्यस्य विक्षेप इत्यर्थः। धान्ये किम्। भिक्षोत्करः। पुष्पनिकरः। **३२०२ यज्ञे समि स्तुवः ३।३।३१॥** समेत्य स्तुवन्ति यस्मिन्देशे छन्दोगाः, स देशः संस्तावः। यज्ञे किम्। संस्तवः परिचयः। **३२०३ प्रे स्त्रोऽयज्ञे ३।३।३२॥** अयज्ञे इति च्छेदः। 'यज्ञे' इति प्रकृतत्वात्। प्रस्तारः। अयज्ञे किम्। बर्हिषः प्रस्तरो मुष्टिविशेषः। **३२०४ प्रथने वावशब्दे ३।३।३३॥** विपूर्वात्स्तृणातेर्घञ्स्यादशब्दविषये प्रथने। पटस्य विस्तारः। प्रथने किम्। तृणविस्तरः। अशब्दे किम्। ग्रन्थविस्तरः। **३२०५ छन्दोनाम्नि च ३।३।३४॥** 'स्त्र' इत्यनुवर्तते। विष्टारः पङ्क्तिच्छन्दः। विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ्। ततः कर्मधारयः।

---

**घञित्यर्थः। अजपोरपवादः।** बाहुलकादिति। **'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादित्यर्थः।** वौ क्षुश्रुवः। **वि इत्युपसर्गे उपपदे क्षु, श्रु धात्वोर्घञित्यर्थः। अबपवादः।** अवोदोर्नियः। **अव, उत्, अनयोरुपपदयोः नीधातोर्घञित्यर्थः अजपवादः। उन्नय इत्यस्य विवरणम्–उत्प्रेक्षेति।** प्रे द्रुस्तुस्रुवः। **प्र इत्युपपदे, द्रु, स्तु, स्रु, एभ्यः घञित्यर्थः। अबपवादः।** निरभ्योः। **निर्, अभि, अनयोरुपपदयोर्घञित्यर्थः। अबपवादः।** उन्न्योर्ग्रः। **उत्, नि, इत्युपपदयोर्घञित्यर्थः, अबपवादः।** कॄ धान्ये। **कॄ इति लुप्तपञ्चमीकम्। तदाह—**कॄ इत्यस्मादिति। यज्ञे समि स्तुवः। **समित्युपपदे स्तुधातोर्घञ् स्यात् यज्ञविषये प्रयोग इत्यर्थः। अधिकरणे ल्युटोऽपवादः। संस्तव इत्यस्य विवरणम्—**परिचय इति। प्रे स्त्रोऽयज्ञे। प्रकृतत्वादिति। **यज्ञे इति तु च्छेदो न भवति। पूर्वसूत्राद्यज्ञग्रहणानुवृत्त्यैव सिद्धेरित्यर्थः। प्र इत्युपपदे स्तृधातोर्घञित्यर्थः।** प्रस्तार इति। **इष्टकासंनिवेशविशेष इति याज्ञिकाः।** प्रथने वावशब्दे। **वौ अशब्दे इति च्छेदः। तदाह—**विपूर्वादिति। छन्दोनाम्नि च। **विपूर्वात् स्तृधातोर्घञ् स्यात्। अक्षरेयत्तात्मकच्छन्दसः संज्ञायामित्यर्थः। शब्दविषयत्वात् पूर्वेणाऽप्राप्ते वचनम्।** कर्मधारय इति। **विष्टारश्चासौ पङ्-**

३२०६ **छन्दोनाम्नि च ८।३।९४॥** विपूर्वस्य स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि । इति षत्वम् । ३२०७ **उदि ग्रहः ३।३।३५॥** उद्ग्राहः । ३२०८ **समि मुष्टौ ३।३।३६॥** मल्लस्य सङ्ग्राहः । मुष्टौ किम् । द्रव्यस्य सङ्ग्रहः । ३२०९ **परिन्योर्नीणोर्द्यूताभ्रेषयोः ३।३।३७॥** परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ्स्यात्क्रमेण द्यूते अभ्रेषे च विषये । परिणायेन शारान्हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताऽभ्रेषयोः किम् । परिणयो विवाहः । न्ययो नाशः । ३२१० **परावनुपात्यय इणः ३।३।३८॥** क्रमप्राप्तस्यानतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् । कालस्य पर्ययः, अतिपात इत्यर्थः । ३२११ **व्युपयोः शेतेः पर्याये ३।३।३९॥** तव विशायः । तव राजोपशायः । पर्याये किम् । विशयः । संशयः । उपशयः समीपशयनम् । ३२१२ **हस्तादाने चेरस्तेये ३।३।४०॥** (चिनोतेर्घञ् हस्तादाने गम्ये)। हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । हस्तादाने किम् । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति । अस्तेये किम् । पुष्पप्रचयः चौर्येण । ३२१३ **निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३।३।४१॥** एषु चिनोतेर्घञ् स्यात् । आदेश्च ककारः । उपसमाधानं राशीकरणम् , तच्च धात्वर्थः । अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । निवासे—काशीनिकायः । चितौ—आकायमग्नि

---

**चिश्चेति विग्रह इति भावः। ननु 'सात्पदाद्योः' इति निषेधादादेशसकाराऽभावात्कथमिह षत्वमित्यत आह—**छन्दोनाम्नीति । **वृत्तासनयो 'र्विष्टरः' इत्युत्तरं सूत्रम् । वेदप्रसिद्धसंज्ञायां विष्टरशब्दः निपात्यते इत्यर्थः ।** उदि ग्रहः । **उदित्युपपदे ग्रहधातोः घञित्यर्थः 'ग्रहवृदृनिश्चिगमश्च' इत्यप्प्रत्ययस्य वक्ष्यमाणस्याऽपवादः** समि मुष्टौ । **समित्युपपदे ग्रहधातोर्घञ् स्यात् मुष्टिविषये धात्वर्थे गम्ये इत्यर्थः ।** मल्लस्य संग्राह इति । **दृढग्रहणं मुष्टेरित्यर्थः ।** परिन्योः । द्यूते अभ्रेषे चेति । **द्यूतविषये नयने अभ्रेषविषये गमने च विद्यमानादित्यर्थः । अचोऽपवादः ।** शारान् । **अक्षान् ।** एषोऽत्र न्याय इति । **अभ्रेषेण वर्तनमित्यर्थः । उचितस्यार्थस्य अनपचारः अभ्रेषः । तदाह**—उचितमिति । परावनुपात्यय **इणः । परौ उपपदे इणधातोर्घञ् अनुपात्यये गम्ये इत्यर्थः ।** तव पर्याय इति । **अनतिक्रमणमित्यर्थः ।** कालस्य पर्यय इति । **अतिक्रम इत्यर्थः । तदाह**—अतिपात इति । व्युपयोः शेतेः । **वि, उप, इत्युपपदयोः शीङ् धातोः घञ् स्यात् पर्याये गम्ये इत्यर्थः । अजपवादः। पर्यायः प्राप्ताऽवसरता ।** हस्तादाने । **हस्तादाने गम्ये चिञ्धातोर्घञ् न तु स्तेये इत्यर्थः।। ननु वृक्षशिखरमात्रमारुह्य पुष्पावचयं करोतीत्यत्राऽतिव्याप्तिमाशङ्क्य आह**—प्रत्यासत्तिरिति । **आदेयस्य पुष्पादिद्रव्यस्य भूमिस्थितपुरुषीयहस्तग्रहणयोग्यावस्थितिरित्यर्थः ।** पुष्पप्रचयं चौर्येणेति । **'करोती'ति शेषः ।** निवास । **'अकर्तरि च कारके' इति 'भावे' इति चानुवर्तत एव ।** अन्ये इति । **निवासचितिशरीरात्मका अर्था इत्यर्थः । उपा-**

चिन्वीत । शरीरे—चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । समूहे—गोमयनिकायः । एषु किम् । चयः । 'चः कः' इति वक्तव्ये आदेरित्युक्तिर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः । पुनःपुना राशीकरणमित्यर्थः । **३२१४ सङ्घे चानौत्तराधर्ये ३।३।४२॥** चेर्घञ्, आदेश्च कः । भिक्षुनिकायः । प्राणिनां समूहः सङ्घः । अनौत्तराधर्ये किम् । सूकरनिचयः । स्तन्यपानादौ उत्तराधरभावेन शेरते । सङ्घे किम् । ज्ञानकर्मसमुच्चयः । **३२१५ कर्मव्यतिहारे णच्स्त्रियाम् ३।३।४३॥** स्त्रीलिङ्गे भावे णच् । **३२१६ णचः स्त्रियामञ् ५।४।१४॥** (णजन्तात्स्त्रियामञ्) । **३२१७ न कर्मव्यतिहारे ७।३।६॥** अत्र ऐज्न स्यात् । व्यावक्रोशी । व्यावहासी । **३२१८ अभिविधौ भाव इनुण् ३।३।४४॥ ३२१९ अणिनुणः ५।४।१५॥** (इनुणन्तादण् स्यात्स्वार्थे) । आदिवृद्धिः । 'इनण्यनपत्ये' (सू १२४५) । (अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात्) । स्वभावतः पुंलिङ्गे सांराविणं वर्तते । **३२२० आक्रोशेऽवन्योर्ग्रहः ३।३।४५॥** अव, नि, एतयो-

---

धिभूता इति । विशेषणभूता इत्यर्थः । अजपवादः । काशी निकाय इति । निचियते मोक्षोऽत्रेत्यधिकरणे घञ् । काशी मोक्षार्जनस्य निवास इत्यर्थः । 'चजोः कु घिण्ण्यतोः' इत्यस्य अव्यवहितयोरेव चजोः प्रवृत्तेरिह कत्ववचनम् । आकायमिति । आचीयते इति कर्मणि घञ् । शरीरे इति । उदाहरणसूचनमिदम् । समूहे इति । उपसमाधानस्योदाहरणसूचनम् । निचीयते राशीक्रियते इति भावे घञ् । ननु 'निवासचितिशरीरोपसमाधानेषु चः क' इत्येवास्तु । चकारस्य ककार इत्यर्थलाभादित्यत आह—चः क इति वक्तव्य इति । पुनःपुना राशीति । अत्र 'रो रि' इति लोपे 'ढ्लोप' इति दीर्घः । संघे चानौत्तराधर्ये । चेर्घञिति । शेषपूरणमिदम् । चेर्घञ् स्यात् सङ्घे वाच्ये न त्वौत्तराधर्ये इत्यर्थः । उत्तराधरयोर्भावः औत्तराधर्यम् । प्राणिनां समूहः सङ्घ इति । व्याख्यानमेवात्र शरणम् । कर्मव्यतिहारे । कर्मव्यतिहारः क्रियाविनिमयः परस्परकरणम्, तस्मिन्विषये धातोर्णच् स्यात् स्त्रीत्वे गम्ये इत्यर्थः । अत्र 'अकर्तरि च कारके' इति तु नानुवर्तते, व्याख्यानादिति बोध्यम् । व्यावक्रोशीति । परस्परं निन्दक इत्यर्थः । व्यावहासीति । परस्परं हासक इत्यर्थः । उभयत्रापि 'णचः स्त्रियामञ्' इति स्वार्थिकोऽञ् तद्धितः । 'टिड्ढ' इति ङीप् । अभिविधौ । कार्त्स्न्येन संबन्धः अभिविधिः तस्मिन् गम्ये इनुण् स्यात् भावेऽर्थे इत्यर्थः । 'अणिनुण' इत्यनेन सूत्रेण इनुणन्तात् अण् तद्धितः स्वार्थिक इत्यर्थः । आदिवृद्धिरिति । 'तद्धितेष्वचामादे'रित्यनेनेति शेषः । सांराविन् अ इति स्थिते 'नस्तद्धिते' इति टिलोपमाशङ्क्य प्रकृतिभावं स्मारयति—इनण्यनपत्य इति । स्वभावत इति । लोकाश्रयत्वाल्लिङ्गस्येति भावः । आक्रोशेऽवन्योर्ग्रहः । एतयोरिति । उपपदयोरिति शेषः । 'ग्रहवृदृनिश्चिगमश्च' इति वक्ष्यमाणस्य अप्प्रत्ययस्यापवादः । 'अवग्रह' इत्यस्य विग्र-

ग्रहेर्घञ्स्यात् शापे । अवग्राहस्ते भूयात् । अभिभव इत्यर्थः । निग्राहस्ते भूयात् । बाध इत्यर्थः । आक्रोशे किम् । अवग्रहः पदस्य । ( छेदः पदस्येत्यर्थः ) । निग्रहश्चोरस्य । ( निरोधश्चोरस्येत्यर्थः ) । **३२२१ प्रे लिप्सायाम् ३।३।४६ ॥** पात्रप्रग्राहेण चरति भिक्षुः । अन्यत्र पात्रप्रग्रहः । **३२२२ परौ यज्ञे ३।३।४७॥** उत्तरः परिग्राहः । स्फ्येन वेदेः स्वीकरणम् । **३२२३ नौ वृ धान्ये ३।३।४८॥** वृ इति लुप्तपञ्चमीकम् । नीवाराः । धान्ये किम् । निवरा कन्या । क्विन्विषयेऽपि बाहुलकादप् । प्रवरा सेना, प्रवरा गौरितिवत् । एवं च स्त्रीलिङ्गोऽपि । **३२२४ उदि श्रयतियौतिपूद्रुवः ३।३।४९ ॥** उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । कथं 'पतनान्ताः समुच्छ्रयाः' इति । बाहुलकात् । **३२२५ विभाषाऽऽङि रुप्लुवोः ३।३।५०॥** आरावः । आरवः । आप्लावः । आप्लवः । **३२२६ अवे ग्रहो वर्षप्रतिबन्धे ३।३।५१॥** विभाषेति वर्तते । दैवस्य अवग्रहः । अवग्राहः । देवकर्तृकमवर्षणमित्यर्थः । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य । **३२२७ प्रे**

---

**रणम्**—छेदः पदस्येति । **पुरोहितमित्यादिसमस्तपदस्य पुरः हितमित्यादि विभज्य पठनमवग्रह इत्यर्थः । अत्र शापानवगमात्र घञ् । 'निग्रह' इत्यस्य विवरणम्**—निरोधश्चोरस्येति । प्रे लिप्सायाम् । **प्र इत्युपपदे ग्रहधातोर्घञ् स्यात् लिप्सायामित्यर्थः । 'ग्रहवृदृनिश्चिगमश्च' इत्यपोऽपवादः ।** पात्रप्रग्राहेण चरति भिक्षुरिति । **'भिक्षाकाभाये'ति गम्यते ।** अन्यत्रेति । **लिप्सायामगम्यायामित्यर्थः ।** परौ यज्ञे । **परि इत्युपपदे ग्रहधातोर्घञ् स्यात् यज्ञे प्रयुज्यमाने इत्यर्थः । 'ग्रहवृह' इत्यपोऽपवादः ।** उत्तरः परिग्राह इति । **'वसवस्त्वा' इत्यादिमन्त्रैः पूर्वः परिग्राहो वेदेरुक्तः । तदपेक्षया द्वितीय इत्यर्थः ।** स्फ्येनेति । **स्फ्यः खड्गाकृतिः दारुमयः पात्रविशेषः । तेन समन्तादुल्लेखया वेदिदेशस्य स्वीकरणं परिग्राह इत्यर्थः ।** नौ वृ धान्ये । **नि इत्युपपदे वृधातोर्घञित्यर्थः । 'ग्रहवृह' इत्यपोऽपवादः ।** नीवारा इति । **'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः ।** निवरा कन्येति । **नितरां वरणीयेत्यर्थः । 'ग्रहवृह' इत्यप् । ननु 'प्रवरा कन्ये'त्यत्र कथमप्, स्त्रियां क्तिनः प्रसङ्गात्, नह्यत्र वाऽसरूपविधिः प्रवर्तते । अजब्भ्यां स्त्रीखलनाः विप्रतिषेधेन' इत्युक्तेरित्यत आह**—क्विन्विषयेऽपीति । **तत्र वृद्धप्रयोगं प्रमाणयति**—प्रवरा सेना, प्रवरा गौरितिवदिति । **ननु 'घञबन्ताः पुंसि' इत्यबन्तस्य पुंस्त्वात् स्त्रीत्वं दुर्लभमित्यत आह**—एवं चेति । **उक्तवृद्धप्रयोगादित्यर्थः । लोकाश्रयत्वाल्लिङ्गस्येति भावः ।** उदि श्रयति । **उत् इत्युपपदे श्रि, यु, पू, द्रु एभ्यः घञित्यर्थः । अजपोरपवादः ।** विभाषाङि रुप्लुवोः । **पञ्चम्यर्थे षष्ठी । आङि उपपदे रु, प्लु, आभ्यां घञित्यर्थः । अपोऽपवादः ।** अवे ग्रहो वर्षे । **अव इत्युपपदे ग्रहधातोर्घञ् वा स्यात् वर्षप्रतिबन्धे इत्यर्थः । पक्षे 'ग्रहवृह' इत्यप् ।** देवस्येति । **पर्जन्यस्येत्यर्थः । कर्तरि षष्ठी । तदाह**—देवकर्तृकमिति ।

**वणिजाम् ३।३।५२॥** प्रे ग्रहेर्घञ्वा वणिजां सम्बन्धी चेत्प्रत्ययार्थः । तुलासूत्रमिति यावत् । तुलाप्रग्राहेण चरति । तुलाप्रग्रहेण । **३२२८ रश्मौ च ३।३।५३॥** प्रग्रहः । प्रग्राहः । **३२२९ वृणोतेराच्छादने ३।३।५४॥** विभाषा प्र इत्येव । प्रावारः । प्रवरः । **३२३० परौ भुवोऽवज्ञाने ३।३।५५॥** परिभावः । परिभवः । अवज्ञाने किम् । सर्वतो भवनं परिभवः । **३२३१ एरच् ३।३।५६॥** चयः । जयः । 'भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्' ( वा २१९७–९८ ) । भयम् । वर्षम् । **३२३२ ऋदोरप् ३।३।५७॥** ऋवर्णान्तादुवर्णान्तादप् । करः । गरः । शरः । यवः । लवः । स्तवः । पवः । **३२३३ वृक्षासनयोर्विष्टरः ८।३।९३॥** अनयोर्विपूर्वस्य सः षत्वं निपात्यते । विष्टरो वृक्ष आसनं च । वृक्ष—इति किम् । वाक्यस्य विस्तरः । **३२३४ ग्रहवृदृनिश्चिगमश्च ३।३।५८॥** अप्स्यात् । घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः । गमः । 'वशिरण्योरुपसङ्ख्यानम्' ( वा २२०३ ) । वशः । रणः । 'घञर्थे कविधानम्' (वा २२०४) प्रस्थः । विघ्नः । 'द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्' ( वा ३४२९ ) ।

---

अवग्रहः पदस्येति । समस्तस्य पदद्वयस्य विच्छिद्य पाठ इत्यर्थः । प्रे वणिजाम् । 'ग्रहवृदृ' इत्यपोऽपवादः । तुलासूत्रमिति । व्याख्यानादिति यावत् । तुला घटा । रश्मौ च । प्रे उपपदे, ग्रहधातोर्घञ् रश्मावपि वाच्ये इत्यर्थः । चशब्दः उक्तसमुच्चये । वृणोतेराच्छादने । प्रे उपपदे वृधातोर्घञ्वा स्यादाच्छादने इत्यर्थः । पक्षे 'ग्रहवृदृ' इत्यप् । प्रावार इति । पट इत्यर्थः । 'उपसर्गस्य घञि' इति दीर्घः । परौ भुवोऽवज्ञाने । परि इत्युपपदे अवहेलनवृत्तेर्भूधातोर्घञ् स्यादित्यर्थः । एरच् । इवर्णान्ताद्धातोः अच् स्यात् भावे अकर्तरि च कारके इत्यर्थः । घञपवादः । भयादीनामिति । भयादीनां सिद्धये ञिभीप्रभृतिधातुभ्यः अच्प्रत्ययस्योपसङ्ख्यानमित्यर्थः । ननु 'एरच्' इत्येव सिद्धे भयग्रहणं व्यर्थमित्यत आह—नपुंसके क्तादिनिवृत्त्यर्थमिति । आदिना ल्युडादिसंग्रहः । अन्यथा परत्वात् क्तादयः स्युः । वाऽसरूपविधिस्तु नात्र भवति । अपवादत्वाऽभावादिति भावः । वर्षमिति । अत्र नपुंसके क्तल्युडादि बाधित्वा अच् अपूर्वो विधीयते । ऋदोरप् । पञ्चम्यर्थे षष्ठी । ऋत्, उ, अनयोः समाहारे सौत्रं पुंस्त्वम् । ऋदन्तादुवर्णान्ताच्च अप् स्याद्भावे अकर्तरि च कारके इत्यर्थः । घञपवादः । ग्रहवृदृ । ग्रह, वृ, दृ, निश्चि, गम्, एषां द्वन्द्वः । 'अप् स्या'दिति शेषः । घञचोरिति । निश्पूर्वाच्चिनोतेः अजपवादः, इतरेभ्यस्तु घञपवाद इति विवेकः । वशिरण्योरिति । वार्तिकम् । घञपवादः अप् । वश इति । वश कान्तौ, भावे अप् । इच्छेत्यर्थः । यद्यपि वशधातुः छान्दसः । तथापि 'वष्टि भागुरि'रित्यादिप्रयोगात् लोकेऽपि प्रयुज्यते इति भावः । रण इति । रणन्ति शब्दायन्ते अस्मिन्निति रणः संग्रामः । घञर्थे कविधानमिति । वार्तिकमिदम् । 'स्थास्नापाव्यधिहनियुध्यर्थम्'

चक्रम् । चिक्लिदम् । चङ्क्रमः । ( चक्नसः ) । **३२३५ उपसर्गेऽदः ३।३।५९॥** अप्स्यात् । **३२३६ घञपोश्च २।४।३८॥** अदेर्घस्लृ स्याद्व्यपि च । प्रघसः । विघसः । उपसर्गे किम् । घासः । **३२३७ नौ ण च ३।३।६०॥** नौ उपपदे अदेर्णः स्यादप् च । न्यादः । निघसः । **३२३८ व्यधजपोरनुपसर्गे ३।३।६१॥** अप्स्यात् । व्यधः । जपः । उपसर्गे तु, आव्याधः । उपजापः मन्त्रभेदः । **३२३९ स्वनहसोर्वा ३।३।६२॥** अप् । पक्षे घञ् । स्वनः । स्वानः । हसः । हासः । अनुपसर्ग इत्येव । प्रस्वानः । प्रहासः । **३२४० यमः समुपनिविषु च ३।३।६३॥** एष्वनुपसर्गे च यमेरब्वा । संयमः । संयामः । उपयमः । उपयामः । नियमः । नियामः । वियमः । वियामः । यमः । यामः । **३२४१ नौ गदनदपठस्वनः ३।३।६४॥** अब्वा स्यात् । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः । **३२४२ क्वणो वीणायां च ३।३।६५॥** नावनुपसर्गे च वीणाविषयाच्च क्वणतेरब्वा स्यात् । वीणाग्रहणं प्राग्-

---

इति वार्तिकशेषो भाष्ये पठितः । प्रस्थ इति । प्रतिष्ठन्तेऽस्मिन् धान्यानीति प्रस्थः । 'आतो लोप इटि च' इत्याल्लोपः । प्रस्नान्त्यस्मिन्निति प्रस्नः । प्रपिबन्त्यस्यामिति प्रपा । आविध्यन्त्यस्मिन्नित्याविधम् । 'ग्रहिज्यावयिव्यधि' इति सम्प्रसारणम् । इति सिद्धवत्कृत्य आह—विघ्न इति । विहन्यस्मिन्मनांसीति विघ्नः । 'गमहन' इत्युपधालोपः 'हो हन्तेः' इति कुत्वम् । आयुध्यतेऽनेनेत्यायुधमित्यप्युदाहार्यम् । द्वित्वप्रकरणे इति । 'एकाचो द्वे प्रथमस्य' इति द्वित्वप्रकरणे इत्यर्थः । के कृञादीनामिति । कप्रत्यये परे कृञादीनां एकाचः प्रथमस्य द्वे स्त इत्यर्थः । चक्रमिति । 'स्थास्ना' इत्यस्य उपलक्षणत्वात् कृञः कः । क्रियते शस्त्रबधः अनेनेति विग्रहः । कित्वान्न गुणः । द्वित्वम् अभ्यासकार्यम् । चिक्लिदमिति । कः द्वित्वादि । चङ्क्रम इति । पूर्ववत् । उपसर्गेऽदः । 'अद' इति छेदः । 'अप् स्या'दिति शेषः उपसर्गे उपपदे अद्धातोः अप् स्यादित्यर्थः । घञोऽपवादः । घञपोश्च । 'अदो जग्धिः' इत्यतः अद इति 'लुङ्सनोर्घस्लृ' इत्यतः घस्लृ इति चानुवर्तते । तदाह—अदेरिति । अपि चेति । अप्प्रत्यये चेत्यर्थः । विघस इति । अतिथिशिष्टमन्नमुच्यते । घास इति । 'शष्पं बालतृणं घासः' इत्यमरः । नौ ण च । णेति लुप्तप्रथमाकम् । निघस इति । 'घञपोश्च' इति घस्लृभावः । व्यधजपोः । पञ्चम्यर्थे षष्ठी । 'अप् स्या'दिति शेषः । व्यध, जप्, आभ्यां अप् स्यात्, न तूपसर्गे इत्यर्थः । उपजापो मन्त्रभेद इति । पैशुन्यमित्यर्थः । स्वनहसोर्वा । पञ्चम्यर्थे षष्ठी । अबिति शेषः । स्वन, हस, आभ्यामब्वेत्यर्थः । यमः समुप । सम्, उप, नि, वि, एषां द्वन्द्वः । चकारादनुपसर्गे इति समुच्चीयते । तदाह-एष्वनुपसर्गे चेति । नौ गदनद । गद, नद, पठ, स्वन, एषां द्वन्द्वः । अब्वेति । शेषपूरणमिदम् । क्वणो वीणायां च । नाविति । नौ उपपदे च तदितरस्मिन्ननुपसर्गे असति च वीणाविषयाच्चेत्यर्थः । ननु क्वणरचेत्ये-

र्थम् । निक्कणः । निक्काणः । क्कणः । क्काणः । वीणायां तु-प्रक्कणः । प्रक्काणः । **३२४३ नित्यं पणः परिमाणे ३।३।६६॥** अप् स्यात् । मूलकपणः । शाकपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । परिमाणे किम् । पाणः । **३२४४ मदोऽनुपसर्गे ३।३।६७॥** धनमदः । उपसर्गे तु, उन्मादः । **३२४५ प्रमदसंमदौ हर्षे ३।३।६८॥** हर्षे किम् । प्रमादः । संमादः । **३२४६ समुदोरजः पशुषु ३।३।६९॥** सम्पूर्वोऽजिः समुदाये, उत्पूर्वश्च प्रेरणे तस्मात्पशुविषयकादप्स्यात् । 'अघञपोः' इत्युक्तेर्वीभावो न । समजः पशूनां संघः । उदजः पशूनां प्रेरणम् । पशुषु किम् । समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् । **३२४७ अक्षेषु ग्लहः ३।३।७०॥** अक्षशब्देन देवनं लक्ष्यते, तत्र यत्पणरूपेण ग्राह्यं तत्र 'ग्लहः' इति निपात्यते । अक्षस्य ग्लहः । 'व्यात्युक्षीमभिसरणग्लहामदीव्यन् । अक्षेषु किम् । पादस्य ग्रहः । **३२४८ प्रजने सर्तेः**

---

तावता नौ उपसर्गे च क्कणः अब्बेत्यर्थंलाभात् वीणाविषयादपि क्कणः सिद्धेः वीणायामिति व्यर्थमित्यत आह-वीणाग्रहणं प्राद्यर्थमिति । सोपसर्गार्थमित्यर्थः । नित्यं पणः 'अबि'ति शेषः । 'पण व्यवहारे' इत्यस्मान्नित्यमप् स्यात् परिमाणविशेषे गम्ये इत्यर्थः । नित्यग्रहणाद्घञ्ग्रहणं निवृत्तम् । व्यवहारार्थमिति । विक्रयार्थमित्यर्थः । पण्यते विक्रयार्थं बध्यते मुष्टिमात्रमिति कर्मण्यप् । मूलकानां पण इति विग्रहः । मदोऽनुपसर्गे । अनुपसर्गे उपपदे मदेरबित्यर्थः । प्रमदसम्मदौ । प्रमद, संमद, एतावबन्तौ निपात्येते हर्षे गम्ये इत्यर्थः । कन्यानां प्रमदः । कोकिलानां सम्मदः इत्युदाहरणम् । 'प्रसमोर्मदो हर्षे' इत्येव सिद्धे निपातनं रूढिपरिग्रहार्थम् । समुदोरजः । समुदोः अजः इति छेदः । सम्, उत्, अनयोः उपपदयोरित्यर्थः । अक्षेषु ग्लहः । अक्षशब्दे उपपदे इत्यर्थे अक्षेष्विति बहुवचनानुपपत्तिरित्यत आह-अक्षशब्देनेति । लक्ष्यते इति । प्रायेण देवनस्य अक्षसाध्यत्वादिति भावः । तत्रेति । देवने इत्यर्थः । पणरूपेणेति । देवने जितवते पराजितेन देयं द्रव्यं, पणं तेन रूपेण ग्राह्यं यद्द्रव्यं तस्मिन् कर्मणि 'ग्रह उपादाने' इति धातोः 'ग्रहवृद' इत्यप्प्रत्ययान्तः कृतलत्वो ग्लहशब्दो निपात्यते इत्यर्थः । 'गृहू ग्रहणे' इत्यत्र तु 'ग्लह च' इति पठितम् । तत्र ग्लहेरप्प्रत्ययो निपात्यते । घञपवादः । अक्षस्य ग्लह इति । अक्षक्रीडायां पणत्वेन ग्राह्यमित्यर्थः । 'पणोऽक्षेषु ग्लहः' इत्यमरः । अत्र देवनत्वरूपेण देवनमक्षशब्दस्य लक्ष्यम्, न त्वक्षदेवनत्वेनेत्यभिप्रेत्योदाहरति—व्यात्युक्षीमिति । माघकाव्यस्थमिदम् । 'दिवस्तदर्थस्य' इति करणस्य कर्मत्वात् द्वितीया । अभिसरणग्लहाम् । अभिसरणं चौर्यसुरतार्थमभिगमनम् । तदेव ग्लहः पणरूपेण ग्राह्यं द्रव्यं यस्याः तथाविधां व्यात्युक्षीम् । 'उक्ष सेचने' परस्परं जलसेचनं व्यात्युक्षी तयेत्यर्थः । कर्मव्यतिहारे णच् स्त्रियाम्' इति णच् । व्यात्युक्षशब्दात् 'णचः स्त्रियामञ्' इति स्वार्थे अञ् वृद्धिः ।

३।३।७१॥ प्रजनं प्रथमगर्भग्रहणम्। गवामुपसरः। कथम् अवसरः प्रसर इति। अधिकरणे 'पुंसि संज्ञायाम्—' (सू ३२९६) इति घः। **३२४९ ह्वः सम्प्रसारणं च न्यभ्युपविषु ३।३।७२॥** निहवः। अभिहवः। उपहवः। विहवः। एषु किम्। प्रह्वायः। **३२५० आङि युद्धे ३।३।७३॥** आहूयन्तेऽस्मिन्नित्याहवः। युद्धे किम्। आह्वायः। **३२५१ निपानमाहावः ३।३।७४॥** आङ्पूर्वस्य ह्वयतेः सम्प्रसारणमब्वृद्धिश्चोदकाधारश्चेद्वाच्यः। 'आहावस्तु निपानं स्यादुपकूपजलाशये'। **३२५२ भावेऽनुपसर्गस्य ३।३।७५॥** अनुपसर्गस्य ह्वयतेः सम्प्रसारणमप् च स्याद्भावे। हवः। **३२५३ हनश्च वधः ३।३।७६॥** अनुपसर्गाद्धन्तेर्भावे अप्स्यात्। वधादेशश्चान्तोदात्तः। 'वधेन दस्युम्'। चाद्घञ्। घातः। **३२५४ मूर्तौ घनः ३।३।७७॥** मूर्तिः काठिन्यं, तस्मिन्नभिधेये हन्तेरप्स्यात्, घनश्चादेशः। अभ्रघनः। कथम् 'सैन्धवघनमानय' इति। धर्मशब्देन धर्मी ल-

---

भादिवृद्धिः। 'टिड्ढ' इति ङीप्। क्रीडायां जितवते पुंसे अभिसरणमेव पणत्वेन समयबन्धं कृत्वा प्रवृत्तेन परस्परजलसेचनेन अक्रीडन्निति यावत्। अत्र जलक्रीडायामभिसरणात्मकपणस्य अक्षसाधनकत्वाऽभावेऽपि ग्लहेरप् भवत्येव। सूत्रे अक्षशब्देन देवनसामान्यस्य विवक्षितत्वात्। अक्षक्रीडाया एव विवक्षितत्वे त्विह ग्लहेरप् न स्यादिति भावः। अक्षेषु किमिति। देवने किमित्यर्थः। पादस्य ग्रह इति। बन्धनार्थमिति भावः। अत्र ग्रहधातोः 'ग्रहवृद' इत्यप्। न तु लत्वम्। ग्लहेस्तु घञि पादस्य ग्लाह इत्येव। प्रजने सर्तेः। प्रजनं प्रथमगर्भग्रहणमिति। प्रशब्द आद्यर्थकः। प्रथमं जायते इति भावे घञ्। 'जनिवध्योश्च' इति नोपधावृद्धिरिति भावः। प्रजनाऽर्थकात् सृधातोरप् स्यादिति फलितम्। कथमिति। उपसरणं प्रसरणमित्यर्थे प्रजनाऽप्रतीतेरबभावात् घञि उपधावृद्धिः स्यादित्याक्षेपः। समाधत्ते—अधिकरण इति। उपसरन्त्यस्मिन्निति, प्रसरन्त्यस्मिन्निति च अधिकरणकारके कालेऽर्थे 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्यय इत्यर्थः। ह्वः सम्प्रसारणं च। नि, अभि, उप, वि एषु चतुर्षूपपदेषु ह्वयतेरप् सम्प्रसारणं च। घञोऽपवादः। निहव इति। अप्। वस्य सम्प्रसारणमुकारः, पूर्वरूपं, तस्य गुणाऽवादेशौ। प्रह्वाय इति। घञि वृद्ध्यायादेशौ। आङि युद्धे। आङि उपपदे ह्वयतेरप्, सम्प्रसारणं च युद्धे वाच्ये इत्यर्थः। निपानमाहावः। आहाव इति निपात्यते निपानं चेद्वाच्यमित्यर्थः। फलितमाह—आङ्पूर्वस्येति। हनश्च वधः। चकारो व्युत्क्रमः। तदाह—वधादेशश्चेति। अन्तोदात्त इति। सूत्रे वध इत्यन्तोदात्तस्योच्चारणादिति भावः। यद्यपि स्वतन्त्रवधेरेव 'घञर्थे कविधानम्' इत्येव सिध्यति। तथाप्यनुपसर्गादिति विशेषं वक्तुमिदम्। वस्तुतो वधिः स्वतन्त्रो नास्त्येवेति शब्देन्दुशेखरे। वधेन दस्युमिति। ऋग्वेदस्थोऽयं मन्त्रः स्वरप्रदर्शनाय पठितः। घात इति। 'हनस्तोऽचिण्णलोः' इति तत्वम्। 'चजोः' इति कुत्वम्। मूर्तौ घनः। अभ्र-

न्यते । ३२५५ अन्तर्घनो देशे ३।३।७८॥ वाहीकग्रामविशेषस्य संज्ञेयम् । अन्तर्घणः इति पाठान्तरम् । ३२५६ अगारैकदेशे प्रघणः प्रघाणश्च ३।३।७६॥ द्वारैकदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च । तत्र बाह्ये प्रकोष्ठे निपातनमिदम् । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति प्रघणः । प्रघाणः । कर्मण्यप् । पक्षे वृद्धिः । ३२५७ उद्घनोऽत्याधानम् ३।३।८०॥ अत्याधानमुपरि स्थापनम् । यस्मिन्काष्ठेऽन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः । अधिकरणेऽप् । ३२५८ अपघनोऽङ्गम् ३।३।८१॥ अङ्गं शरीरावयवः । स चेह न सर्वः, किं तु पाणिः पादश्चेत्याहुः । करणेऽप् । अपघातोऽन्यः । ३२५९ करणेऽयोविद्रुषु ३।३।८२॥ एषु हन्तेः करणेऽप्स्याद्घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्येके । 'पूर्वपदात्संज्ञायाम्–' ( सू ८५७ ) इति णत्वम् । संज्ञैषा कुठारस्य । दुर्वृक्षः । ३२६० स्तम्बे क च ३।३।८३॥ स्तम्बे उपपदे हन्तेः करणे कः स्यादप्च, पक्षे घनादेशश्च । स्तम्बघ्नः । स्तम्बघनः । करण इत्येव । स्तम्बघातः । ३२६१ परौ घः ३।३।८४॥ परौ हन्तेरप्स्यात्करणे घशब्दश्चादेशः । परिहन्यतेऽनेनेति परिघः । ३२६२ परेश्च घाङ्कयोः ८।२।२२॥ परेः रेफस्य लो वा स्याद्घशब्देऽङ्कशब्दे च । पलिघः । परि-

घन इति । अभ्रस्य काठिन्यमित्यर्थः, भाव इत्यनुवृत्तेः । कथमिति । सैन्धवकाठिन्यस्यानयनाभ्वयासम्भवादिति भावः । समाधत्ते–घमंशब्देनेति । अन्तर्घनो देशे । देशविशेषे वाच्ये अन्तरित्युपपदे हन्तेरप् प्रकृतेर्घनादेशश्चेत्यर्थः । निपातनात् 'पूर्वपदात्संज्ञायाम्' इति णत्वाऽभावः । अगारैकदेशे । अगारैकदेशशब्देन अगारैकदेशविशेषो विवक्षितः, व्याख्यानात् । तदाह—द्वारैकदेश इत्यादि । प्रकोष्ठौ दीर्घचतुरश्रभित्त्यौ, तौ अलिन्दनामानौ प्रवेशयोग्यौ । उद्घनोऽत्याधानम् । अत्याधानं वाच्यं चेत् उत्पूर्वात् हन्तेरप् । हस्य घत्वे च 'उद्घन' इति निपात्यते इत्यर्थः । अपघनोऽङ्गम् । अङ्गं वाच्यं चेत् अपपूर्वाद्धन्तेरप् । हस्य घत्वे चाऽपघन इति निपात्यत इत्यर्थः । पाणिपादश्चेति । अत्र व्याख्यानमेव शरणम् । करणे इति । अपहन्यतेऽनेनेति करणव्युत्पत्तेरिति भावः । करणेऽयोविद्रुषु । अयस्, वि, द्रु, एषां द्वन्द्वः । द्रुघन इति । असंज्ञात्वात 'पूर्वपदात्संज्ञायाम्' इति न णत्वमिति भावः, संज्ञात्वमते आह–द्रुघण इति । स्तम्बे क च । केति लुप्तप्रथमाकम् । अप् च पक्षे इति । अप्सम्बद्धस्यैव घनादेशस्यानुवृत्तेरिति भावः । स्तम्बघ्न इति । कप्रत्यये सति 'गमहन' इत्युपधालोपः । स्तम्बघात इति । घञि 'चजोः' इति कुत्वम् । परौ घः । 'करणे हन' इति, अबिति चानुवर्तते । तदाह–परौ हन्तेरिति । परेश्च घाङ्कयोः । रेफस्य लो वेति । 'कृपो रो लः' इत्यतो 'रो लः' इति 'अचि विभाषा' इत्यतो विभाषेति चानुवर्तत इति भावः । ननु 'कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः'

घः । पर्यङ्कः । पल्यङ्कः । इह 'तरप्तमपौ घः' ( सू २००३ ) इति कृत्रिमस्य न ग्रहणं, व्याख्यानात् । **३२६३ उपघ्न आश्रये ३।३।८५॥** उपपूर्वाद्धन्तेरप्स्यादुपधालोपश्च । आश्रयशब्देन सामीप्यं लक्ष्यते । पर्वतेनोपहन्यते सामीप्येन गम्यत इति पर्वतोपघ्नः । **३२६४ संघोद्घौ गणप्रशंसयोः ३।३।८६॥** संहननं संघः । भावेऽप् । उद्धन्यते उत्कृष्टो ज्ञायत उद्घः । कर्मण्यप् । गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने । **३२६५ निघो निमितम् ३।३।८७॥** समन्तान्मितं निमितम् । निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघाः वृक्षाः । समारोहपरिणाहाः इत्यर्थः । **३२६६ ड्वितः क्त्रिः ३।३।८८॥** अयं भाव एव स्वभावात् । 'क्त्रेर्मम्नित्यम्' ( सू १५७० ) क्त्रिप्रत्ययान्तान्मप् निर्वृत्तेऽर्थे । नित्यग्रहणात्क्त्रिमब्विषयः ।

---

इति न्यायादिह घसंज्ञकयोः तरप्तमपोरेव ग्रहणं स्यात्, न तु घशब्दस्य, 'स्वं रूपं शब्दस्य' इत्यत्र अशब्दसंज्ञेति पर्युदासाच्चेत्यत आह—इहेति । उपघ्न आश्रये । आश्रये गम्ये उपघ्न इति निपात्यते इत्यर्थः । फलितमाह—उपपूर्वादिति । लक्ष्यते इति । व्याख्यानादिति भावः । सङ्घोद्घौ । यथासङ्ख्यमन्वयः । गणे सङ्घ इति, प्रशंसायामुद्घ इति निपात्यते इत्यर्थः । सम्, उत्, अनयोरुपपदयोः हन्तेरप्प्रत्ययः टिलोपः घत्वं च निपात्यते इति यावत् । संहननमिति । मेलनमित्यर्थः, उपसर्गवशात् । गत्यर्थानामिति । 'सर्वे गत्यर्थाः ज्ञानार्थाः' इति न्यायादिति भावः । निघो । निमितं वाच्यं चेत् निघ इति निपात्यते इत्यर्थः । इहाप्यप् टिलोपः घत्वं च निपात्यते इत्यर्थः । निमितशब्दं व्याचष्टे—समन्तान्मितं निमितमिति । निः समन्तादित्यर्थे । अव्ययानामनेकार्थत्वादिति भावः । निर्विशेषमिति । इह 'नि' इत्यव्ययं निर्विशेषे, हन्तिर्ज्ञानार्थ इति भावः । समेति । समौ आरोहपरिणाहौ औन्नत्यस्थौल्ये येषामिति विग्रहः । ड्वितः क्त्रिः । डुः इत् यस्य सः ड्वित्तस्मात् क्त्रिप्रत्ययः स्यादित्यर्थः । ककार इत् । अयं भाव एवेति । अत्र भावे इत्येवानुवर्तते, न तु 'अकर्तरि च कारके' इत्यपीति भावः । स्वभावादिति । पाकादिना निर्वृत्तमित्यर्थे पक्त्रिममित्यादौ क्त्रिप्रत्ययान्तानां पाकादिष्वेव लोके प्रयोगदर्शनादिति भावः । क्त्रेर्मम्नित्यम् । चतुर्थस्य चतुर्थपादे इदं सूत्रम् । मप् नित्यमितिच्छेदः । निर्वृत्ते इति । 'निर्वृत्तेऽक्षद्यूतादिभ्यः' इत्यतस्तदनुवृत्तेरिति भावः । तद्धितप्रकरणे व्याख्यातमप्येतद् इह स्मरणाय पुनर्व्याख्यातम् । नन्विह नित्यग्रहणं व्यर्थम् । न च 'समर्थानां प्रथमाद्वा' इति महाविभाषानिवृत्त्यर्थं तदिति वाच्यम् । अत्र हि निर्वृत्तग्रहणमनुवर्तते । तथा च निर्वृत्तार्थविवक्षायां क्त्रिप्रत्ययान्तात् मप्प्रत्ययस्य नित्यतया पक्त्र्यादिना निर्वृत्तमिति वाक्यनिवृत्तावपि पाकोऽस्तीत्यादिवत् 'पक्तिरस्ति, भविष्यती'त्याद्यपि प्रसज्येत । तच्चाऽनिष्टम् । क्त्रिप्रत्ययान्तस्य निर्वृत्तार्थाऽविवक्षायामपि सर्वदा मप्प्रत्ययशिरस्कतायाः एवेष्टत्वादित्यत आह—नित्यग्रहणादिति । न हि महाविभाषानिवृत्त्यर्थं नित्यग्रहणम् । 'निर्वृत्तेऽक्षद्यू-

अत एव क्त्यन्तेन न विग्रहः । डु पचष् , पाकेन निर्वृत्तं पक्त्रिमम् । डु वप् । उप्त्रिमम् । ३२६७ ट्वितोऽथुच् ३।३।८९ ॥ अयमपि स्वभावाद्भाव एव । टु वेपृ, वेपथुः । श्वयथुः । ३२६८ यजयाचयतविच्छप्रच्छरक्षो नङ् ३।३।९० ॥ यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । 'प्रश्ने चासन्न' ( सू २७७७ ) इति ज्ञापकान्न सम्प्रसारणम् । ङित्त्वं तु विश्न इत्यत्र गुणनिषेधाय । रक्ष्णः । ३२६९ स्वपो नन् ३।३।९१॥ स्वप्नः । ३२७० उपसर्गे घोः किः ३।३।९२॥ प्रधिः । अन्तर्धिः । उपाधीयतेऽनेनेत्युपाधिः । ३२७१ कर्मण्यधिकरणे च ३।३।९३॥ कर्मण्युपपदे घोः किः स्यादधिकरणेऽर्थे । जलानि धीयन्तेऽस्मिन्निति जलधिः । ३२७२ स्त्रियां क्तिन् ३।३।९४॥ स्त्रीलिङ्गे भावादौ क्तिन्स्यात् । घञोऽपवादः । अजपौ तु परत्वाद्बाधते । कृतिः । चितिः । स्तुतिः । स्फायी–

---

तादिभ्यः क्त्रेस्तु मप् इत्येकसूत्रत्वेनैव सिद्धे पृथग्योगकरणादेव महाविभाषानिवृत्तिसिद्धेः । तथा च नित्यग्रहणसामर्थ्यान्नित्यमिति योगान्तरं विज्ञायते । तथा च निर्वृत्ते इति निवृत्तम् । तथा च 'क्त्रिप्रत्ययान्तः निर्वृत्तार्थयोगे तदयोगे च सर्वदा मप्प्रत्ययान्त एव स्या'दिति लभ्यते । एवञ्च क्त्रिप्रत्ययो मप्प्रत्ययं विना केवलः क्वापि न प्रयुज्यते इति लभ्यत इत्यर्थः । एतच्च भाष्ये स्पष्टम् । अत एवेति । क्त्रिप्रत्ययस्य मप्प्रत्ययं विना प्रयोगाऽभावात् 'पक्त्र्या निर्वृत्त'मिति स्वपदविग्रहो नास्ति । किन्तु पाकेन निर्वृत्तमित्यस्वपदविग्रह इत्यर्थः । उप्त्रिममिति । कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणमिति भावः । ट्वितोऽथुच् । अथुजिति छेदः । टुः इत् यस्येति विग्रहः । श्वयथुरिति । 'टु ओ श्वि गतिवृद्ध्योः' । इत्यस्य रूपम् । यजयाच । 'अकर्तरि च कारके' इति भाव इति चानुवर्तते । याच्ञेति । नस्य श्चुत्वेन ञः । विश्न इति । विच्छेर्नङ् । 'च्छ्वोः' इति शः । एवं प्रच्छेर्नङि रूपम् । 'ग्रहिज्या' इति सम्प्रसारणमाशङ्क्य आह—प्रश्ने चेति । ननु सम्प्रसारणाऽभावे ङित्त्वं व्यर्थमित्यत आह—ङित्त्वं त्विति । स्वपो नन् । नकारो नित्स्वरार्थः । उपसर्गे घोः किः । भावे अकर्तरि च कारके । कित्त्वमातो लोपार्थम् । प्रधिरिति । धाञो रूपम् । उपाधीयते इति । स्वनिष्ठधर्मः अन्यत्राऽऽसज्यते इत्यर्थः । कर्मण्यधिकरणे च । इह कर्म उपपदं, अधिकरणमर्थः व्याख्यानात् । तदाह—कर्मण्युपपद इत्यादि । स्त्रियां क्तिन् । 'कृत्यल्युटो बहुलम्' इत्यतः प्राक् स्त्रियामित्यधिक्रियते । स्त्रीलिङ्ग इति । स्त्रीत्वविशिष्टे भावे अकर्तरि च कारके इत्यर्थः । धातुमात्रादयं क्तिन् । घञोऽपवाद इति । 'हलश्च' इति घञमाश्रित्य घञोऽपवाद इत्यर्थः । एवञ्च स्त्रीत्वविशिष्टे भावादौ क्तिनेव । घञ् तु पुंस्त्वविशिष्टभावादाविति लभ्यते । वाऽसरूपविधिर्नात्र प्रवर्तते, 'अस्त्रिया'मित्युक्तेः । ननु तर्हि इकारान्तात्, ऋकारान्तात् , उकारान्ताच्च स्त्रीत्वविशिष्टे भावादौ 'एरच्' इति 'ऋदोरप्' इति च अजपावेव क्तिनं बाधित्वा स्यातां , विशेषविहितत्वात् ।

स्फातिः । 'स्फीतिकामः' इति तु प्रामादिकम् । क्तान्ताद्धात्वर्थे णिचि 'अच इः' इति वा समाधेयम् । 'श्रुयजीषिस्तुभ्यः करणे' ( वा २२११ )। श्रूयतेऽनया श्रुतिः । यजेरिषेश्च इष्टिः । स्तुतिः । 'ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः (वा ४८२६) । तेन नत्वम् । कीर्णिः । गीर्णिः । लूनिः । धूनिः । पूनिः । 'ह्लादः' ( सू ३०७३ ) इति योगविभागात्क्तिनि ह्रस्वः । प्रह्लत्तिः । 'ति च' ( सू ३०३७ ) । चूर्तिः । फुल्तिः । 'चायतेः क्तिनि चिभावो वाच्यः' ( वा ४४१८ ) । अपचितिः । 'सम्पदादिभ्यः क्विप्' ( वा २२३३ ) सम्पत् । विपत् । 'क्तिन्नपीष्यते' । सम्पत्तिः । विपत्तिः । **३२७३ स्थागापापचो भावे ३।३।९५॥** क्तिन्स्यादङोऽपवादः ।

स्त्रियां वाऽसरूपविध्यभावाच्चेत्यत आह—भजपौ स्विति । तौ तु पुंस्त्वविशिष्टे भावादौ सावकाशाविति भावः । स्फीतिरिति । 'लोपो व्योः' इति यलोपः । 'तितुत्र' इति नेट् । प्रामादिकमिति । 'स्फायः स्फी निष्ठायाम्' इति स्फीभावस्य निष्ठायामेव प्रवृत्तेरिति भावः । कथञ्चित्समाधत्ते—क्तान्तादिति । स्फायेः क्तप्रत्यये स्फीभावे स्फीतशब्दः । स्फीतस्याख्यानं क्रिया वा स्फीतिः । 'तत्करोति तदाचष्टे' इति णिच्, अल्लोपः । 'अच इः' इति भावे इप्रत्ययः । स्फीतिं कामयते इति स्फीतिकाम इति वा कथञ्चित्समाधेयमिति भावः । श्रुयजीषिस्तुभ्यः करणे । वार्तिकम् । एभ्यश्च-तुर्भ्यः करणे स्त्रियां क्तिन्नित्यर्थः । श्रुधातोः, स्तुधातोश्च 'ऋदोरप्' इति 'ओरप्' इति च प्राप्ते, यजीष्योस्तु 'हलश्च' इति घञि च प्राप्ते वचनम् , भावे, कर्तृव्यतिरिक्तकारके च सर्वत्र प्राप्ते करणग्रहणम् । इष्टिरिति । यजेः 'वचिस्वपि' इति सम्प्रसारणम् । व्रश्चादिना षत्वम् । ऋल्वादिभ्य इति । ऋकारान्ताल्ल्वादिभ्यश्च पर इत्यर्थः । तेनेति । निष्ठावद्वचनेनेत्यर्थः । नत्वमिति । 'रदाभ्यां निष्ठातः' इति नत्वस्य प्रकृतत्वादिति भावः । कीर्णिरिति । कृधातोः क्तिनि इत्वे रपरत्वे 'हलि च' इति दीर्घः । तकारस्य नत्वम्, णत्वम् । एवं गृधातोः गीर्णिः । ल्वादिभ्यः उदाहरति-लूनिरित्यादि । अथ 'प्रह्लत्तिः'रित्यत्र उपधाह्रस्वं साधयति ह्लाद इति । 'ह्लादो निष्ठायाम्' इत्युपधाह्रस्वविधौ 'ह्लाद'इति योगविभागात् अनिष्ठायामपि क्वचिद्ध्रस्व इति भावः । भाष्ये तु नैतद्दृष्टम् । अथ चरेः फलेश्च क्तिनि अकारस्य उत्वं स्मारयति-ति चेति । 'चरफलोश्च' 'उत्परस्यातः' इत्युत्तरमिदं सूत्रम् । तादौ प्रत्यये परे चरफलोरत उकारः स्यादिति व्याख्यातं यङ्लुक्प्रकरणे । चूर्तिरिति । चरेः क्तिनि अकारस्य उत्वे 'हलि च' इति दीर्घः । फुल्तिरिति । फलेः क्तिनि उत्वे रूपम् । रेफवान्तत्वाऽभावान्न दीर्घः । उभयत्रापि 'तितुत्र' इति नेट् । सम्पदादिभ्यः क्विप् । वार्तिकम् । 'भावे अकर्तरि च कारके स्त्रियाम्'इति शेषः । ननु अस्त्रियामिति निषेधेन वाऽसरूपविधेरभावात् क्विपाऽनेन क्तिनो बाधात् सम्पत्तिरित्यादि कथमित्यत आह—क्तिन्नपीष्यते इति । 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणेन सिद्धमित्याहुः । भाष्ये तु नैतद्दृश्यते । स्थागापा । क्तिन् स्यादिति । क्विप् तु अस्वरि-

प्रस्थितिः। उपस्थितिः। सङ्गीतिः। सम्पीतिः। पक्तिः। कथम् अवस्था संस्था इति। 'व्यवस्थायाम्' इति ज्ञापकात्। **३२७४ ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३।३।९७॥** अवतेः 'ज्वरत्वर' (सू २६५४) इत्यूठ्। ऊतिः। स्वरार्थं वचनम्। उदात्त इति हि वर्तते। यूतिः। जूतिः। अनयोर्दीर्घत्वं च निपात्यते। स्यतेः सातिः। 'द्यतिस्यति' (सू ३०७४) इतीत्त्वे प्राप्ते इह इत्त्वाऽभावो निपात्यते। सनोतेर्वा 'जनसन' (सू २५०४) इत्यात्त्वे कृते स्वरार्थं निपातनम्। हन्तेर्हिनोतेर्वा हेतिः। कीर्तिः। **३२७५ व्रजयजोर्भावे क्यप् ३।३।९८॥** व्रज्या। इज्या। **३२७६ संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः**

---

तत्वान्नानुवर्तत इति भावः। अङ इति। स्थादिभ्यस्त्रिभ्यः 'आतश्चोपसर्गे' इति वक्ष्यमाणस्य, पचेस्तु 'षिद्भिदादिभ्य' इति विहितस्याङ्प्रत्ययस्यापवाद इत्यर्थः। प्रस्थितिरित्यादि। 'द्यतिस्यतिमास्थाम्' इति इत्त्वम् 'घुमास्थागापा' इति च ईत्त्वम्। कथमिति। 'स्थागापा' इति क्तिना 'आतश्चोपसर्गे' इति वक्ष्यमाणस्य अङो बाधादिति भावः। समाधत्ते—व्यवस्थायामिति। ज्ञापकादिति। ऊतियूति। एते स्त्रियां क्तिन्नन्ता निपात्यन्त इत्यर्थः। ऊठिति। अकारवकारयोरित्यर्थः। ननु 'स्त्रियां क्तिन्' इत्येव सिद्धे किमर्थमिदमूतिग्रहणमित्यत आह—स्वरार्थमिति। कः स्वर इत्यत आह—उदात्त इतीति। 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्त' इति पूर्वसूत्रस्थमुदात्तग्रहणमेकवचनान्ततया विपरिणतमिहानुवर्तत इत्यर्थः। तथा च क्तिन उदात्तत्वं लभ्यते। अन्यथा 'ञ्नित्यादिर्नित्य'मिति प्रकृतेरुदात्तत्वं स्यादित्यर्थः। अनयोरिति। युधातोर्जुधातोश्चेत्यर्थः। स्यतेरिति। 'षोऽन्तकर्मणि' इत्यस्मात् क्तिनि सातिरिति रूपमित्यर्थः। 'आदेच' इत्यात्त्वम्। तत्र 'द्यतिस्यतिमास्थामित्ति किति' इति इत्त्वमाशङ्क्य आह—इह इत्त्वाभाव इति। सनधातोर्वा सातीति निपातनमित्याह—सनोतेर्वेति। सनेर्वा क्तिनि 'जनसन' इत्यात्त्वे कृते सातीति निपातनमित्यर्थः। अत्र 'द्यतिस्यति' इतीत्त्वस्याऽप्रसक्तेस्तदभावो न निपात्यते इति लाघवमिति भावः। ननु सनोतेः स्त्रियां क्तिनि सातीति रूपसिद्धेः किमर्थमिह सातीति निपातनमित्यत आह—स्वरार्थमिति। 'मन्त्रे वृष' इति पूर्वसूत्रात् उदात्तग्रहणाऽनुवृत्तेः क्तिन उदात्तत्वं सिध्यति। अन्यथा प्रकृतेरुदात्तत्वं स्यादित्यर्थः। हन्तेरिति। हनः क्तिनि नकारस्य निपातानादित्त्वे आद्गुणे हेतिरिति रूपम्। हिनोतेरिति। हिधातोः क्तिनि तु 'क्ङिति च' इति निषेधं बाधित्वा निपातनात् गुणे रूपमित्यर्थः। कीर्तिरिति। कॄत संशब्दने। स्वार्थिकण्यन्तात् 'ण्यासश्रन्थो युच्' इति युचं बाधित्वा क्तिन्निपात्यते। उदात्तश्च सः। व्रजयजोः। पञ्चम्यर्थे षष्ठी। स्त्रियामित्येव। व्रज्येति। 'व्रज गतौ' क्यप्। 'वृजयजोः' इति पाठे 'वृजी वर्जने' इत्यस्मात् क्यप्, वृज्या। इज्येति। 'वचिस्वपि' इति सम्प्रसारणम्। संज्ञायां समजनिषद। समज, निषद, निपत, मन, विद, षुञ्, शीङ्, भृञ्, इण्, नवानां समाहारद्वन्द्वात्पञ्चमी। 'अजे-

३।३।९९॥ समजादिभ्यः स्त्रियां भावादौ क्यप् स्यात्स चोदात्तः संज्ञायाम् । 'अजेः क्यपि वीभावो नेति वाच्यम्' ( वा १५९६ ) समजन्त्यस्यामिति समज्या सभा । निषीदन्त्यस्यामिति निषद्या आपणः । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः । मन्यतेऽनयेति मन्या गलपार्श्वशिरा । विदन्त्यनया विद्या । सुत्या अभिषवः । शय्या । भृत्या । ईयतेऽनया इत्या शिबिका । **३२७७ कृञः श च** ३।३।१००॥ कृञः इति योगविभागः । कृञः क्यप्स्यात् । कृत्या । 'श च' । चात् क्तिन् । क्रिया । कृतिः । **३२७८ इच्छा** ३।३।१०१॥ इषेर्भावे शो यगभावश्च निपात्यते । इच्छा । 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम्' ( वा २२१५ ) । शो यक्च निपात्यते । परिचर्या पूजा । परिसर्या परिसरणम् । अत्र गुणोऽपि । मृग अन्वेषणे चुरादावदन्तः । अतो लोपाऽभावोऽपि । शे यकि णिलोपः । मृगया । अटतेः शे यकि ट्यशब्दस्य द्वित्वम् । पूर्वभागे यकारनिवृत्तिर्दीर्घश्च । अटाट्या । 'जागर्तेरकारो वा' ( वा २२१६ ) । पक्षे शः । जागरा जागर्या । **३२७९ अ**

---

**कर्यंवजपोः' इति प्राप्ते आह**—अजेः क्यपीति । समजन्तीति । **सङ्गीभवन्तीत्यर्थः** । समज्या सभेति । **सम्पूर्वादजेः क्यप्** । **'समज्या तु सभा गोष्ठी' इत्यमरः** । निषद्येति । **निपूर्वात्सदेः क्यप्** । **'सदिरप्रतेः' इति षत्वम्** । **'आपणस्तु निषद्यायाम्' इत्यमरः** । निपत्येति । **निपूर्वात्पतेः क्यप्** । पिच्छिलेति । **निम्नोन्नता भूमिरित्यर्थः** । गलेति । **'पश्चाद्ग्रीवा शिरा मन्या' इत्यमरः** । विद्येति । **वेदशास्त्रादिरित्यर्थः** । सुत्येति । **सोमेज्या** । **षुञः क्यप्** । **तुक्** । इत्या शिबिकेति । **कोशो मृग्यः** । कृञः श च । **चात् क्यप् 'शेति' लुप्तप्रथमाकम्** । **कृञः शः स्यात् क्यप् चेति प्रतीयमानार्थः** । **एवं सति कृतिरिति क्तिन्न स्यात्, स्त्रियां वाऽसरूपविध्यभावात्** । **तदाह**—कृञ इति । योगविभाग इति । **तत्र क्यबित्यनुवृत्तिं मत्वा आह**—कृञः क्यप् स्यादिति । कृत्येति । **कृञः क्यपि तुक्** । **'श च'ेति द्वितीयखण्डोऽयम्** । चात्क्तिन्निति । **क्यपः पूर्वेणैव खण्डेन सिद्धत्वादिति भावः** । क्रियेति । **कृञः शः 'रिङ् शयग्लिङ्क्षु' इति रिङ्** । **शित्वेन सार्वधातुकतया ङित्वान्न गुणः** । **इयङिति भावः** । इच्छा । भावे श इति । **न त्वकर्तरि कारके चेत्यर्थः, निपातनसामर्थ्यादिति भावः** । यगभावश्चेति । **अन्यथा शित्वेन सार्वधातुकत्वात् यक् स्यादिति भावः** । परिचर्येति । **परिपूर्वाच्चरेः भावे शः यक् च** । परिसर्येति । **परिपूर्वात्सृधातोः शः, यक् च** । **अत्र शप्रत्ययस्य शित्त्वेन सार्वधातुकतया ङित्वात् गुणनिषेधमाशङ्क्य आह**—अत्र गुणोऽपीति । **परिसर्याशब्दे गुणोऽपि निपातित इत्यर्थः** । द्वित्वमिति । **'निपात्यते' इति शेषः** । यकारनिवृत्तिरिति । **'निपात्यत' इति शेषः** । **हलादिशेषस्तु नाऽत्र प्रवर्तते** । **तस्य षाष्ठद्वित्वविषयत्वादित्याहुः** । **यङन्तात्तु 'अ प्रत्ययात्' इति वक्ष्यमाणः अकारप्रत्ययः** । **तत्र अतो लोपे यलोपे च अटाटेति बोध्यम्** । जाग-

प्रत्ययात् ३।३।१०२॥ प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या । ३२८० गुरोश्च हलः ३।३।१०३॥ गुरुमतो हलन्तात् स्त्रियामकारः स्यात् । ईहा । ऊहा । गुरोः किम् । भक्तिः । हलः किम् । नीतिः । 'निष्ठायां सेट इति वक्तव्यम्' ( वा २२०८ ) । नेह । आप्तिः । 'तितुत्र—' ( सू ३१६३ ) इति नेट् । दीप्तिः । 'तितुत्रेष्वग्रहादीनामिति वाच्यम्' (४३९३) । निगृहीतिः । निपठितिः । ३२८१ षिद्भिदादिभ्योऽङ् ३।३।१०४॥ षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् । जॄष्—जरा । त्रपूष्-त्रपा । भिदा-विदारण एवायम् । भित्तिरन्या ( 'छिदा द्वैधीकरणे' । अन्यत्र छित्तिः छिद्रम् । गुहा गिर्योषध्योः । अत्र गिरेरेकदेशो गिरिशब्देन विवक्षितः । अन्यत्र गूढिः । आरा हारा कारा तारा धारा अत्र दीर्घत्वं निपात्यते । आरा शस्त्र्यामिति वक्तव्यम् । आर्तिरन्या ।

---

तेरकारो वेति । 'भावे वक्तव्य' इति शेषः । अकारप्रत्यये उदाहरति—जागरेति । आर्धधातुकलक्षणो गुणः । शप्रत्यये उदाहरति—जागर्येति । शित्त्वेन सार्वधातुकत्वात् यक् 'जाग्रोऽविचिण्णल्ङित्सु' इति च गुणः । अ प्रत्ययात् । 'अ' इति लुप्तप्रथमाकम् । भावे, अकर्तरि च कारके इत्येव । गुरोश्च हलः । धातोरित्यनुवृत्तं हला विशेष्यते । तदन्तविधिः । हलन्तधातोर्गुरुत्वाऽसम्भवाद्गुरुमान् लक्ष्यते । तदाह—गुरुमत इति । भावे अकर्तरि च कारके इत्येव । निष्ठायामिति । निष्ठायां परतो यः सेट्, तस्मादेव गुरुमतो हलन्तादकारप्रत्यय इत्यर्थः । आप्तिरिति । आप्धातोर्निष्ठायां सेट्त्वाभावात् नायमकारप्रत्ययः, किन्तु क्तिन्नेवेति भावः । दीप्तिरित्यत्र इटमाशङ्क्य आह—तितुत्रेति । तितुत्रेष्विति । 'तितुत्रतथसिसु' इति सूत्रे अग्रहादीनामिति वाच्यमित्यर्थः । निगृहीतिरिति । इटि 'ग्रहोऽलिटि' इति दीर्घः । 'ग्रहिज्या' इति सम्प्रसारणम् । निगृहीतिः, उपस्निहितिः, निकुचितिः, निपठितिः इति ग्रहादयो भाष्ये स्थिताः । षिद्भिदादिभ्योऽङ् । भावे अकर्तरि च कारके इत्येव । जरेति । ङित्वलक्षणं गुणनिषेधं बाधित्वा 'ऋदृशोऽङि' इति गुणः । विदारण इति । वार्तिकम् । विदारणम् ऊर्ध्वविदलनम् । तस्मिन्नेवार्थे भिदेरङन्तमित्यर्थः । छिदा द्वैधिकरण इति । इदमपि वार्तिकम् । यथाकथंचित्तिर्यगतिर्यग्वा द्वैधीभावे एव छिदेरङन्तमित्यर्थः । छित्तिरित्यस्य विवरणम्-छित्तिश्छिद्रमिति । भिदिर् विदारणे, छिदिर् द्वैधीकरणे, विद ज्ञाने, क्षिप प्रेरणे, गुह संवरणे, डु धाञ् धारणपोषणयोः, मिथृ मेथृ हिंसासेचनयोः, ऋ गतौ, हृञ् हरणे, क्षि क्षये, क्षि निवासगत्योः, तॄ प्लवनतरणयोः, धृञ् धारणे, लिख अक्षरविन्यासे, चुद प्रेरणे, पीड अवगाहने, डु वप् बीजसन्ताने, कॄ विक्षेपे, वस निवासे, मृजू शुद्धौ, कृप कृपायाम्, इति भिदादिगणः । गुहा गिर्योषध्योरिति । वार्तिकम् । गूढिरिति । क्तिनि ढत्वधत्वष्टुत्वढलोपदीर्घाः । आरा हारा कारा तारा धारा । अत्रेति । ऋ, हृ, कॄ, तॄ, धृञ्, एभ्यः अङि 'ऋदृशोऽङि गुणः'

आङोऽर्तेश्च क्तिन् । रेखा लेखा । अत्र गुणः । चूडा । धारा प्रपात इति वक्तव्यम् । धृतिरन्या ) मृजा । 'कृपेः सम्प्रसारणं च ( गण ३२ ) कृपा । **३२८२ चिन्तिपूजिकथिकुम्बिचर्चश्च ३।३।१०५॥** अङ् स्यात् । युचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । ( चात्तुला ) । **३२८३ आतश्चोपसर्गे ३।३।१०६ ॥** अङ् स्यात् । क्तिनोऽपवादः । प्रदा । उपदा । 'श्रदन्तरोरुपसर्गवद्वृत्तिः' ( वा ११३१—११४७ ) । श्रद्धा । अन्तर्धा । 'उपसर्गे घोः किः' ( सू ३२७० ) इत्यनेन किः । अन्तर्धिः । **३२८४ ण्यासश्रन्थो युच् ३।३।१०७॥** अकारस्यापवादः । कारणा । हारणा । आसना । श्रन्थना । 'घट्टिवन्दिविदिभ्यश्चेति वाच्यम्' ( वा २२२२ ) । घट्टना । वन्दना । वेदना । 'इषेरनिच्छार्थस्य' ( वा २२२३ ) । अन्वेषणा । 'परेर्वा' ( वा २२२४ ) ।

---

इति गुणे उपधाया दीर्घत्वं चेत्यर्थः । आरा शस्त्र्यामिति । वार्तिकम् । शस्त्री प्रतोदः, तस्यामेव आरेत्यकन्तमित्यर्थः । ननु ऋधातोः क्तिनि ऋतिरित्येवोचितम् , न त्वार्तिरित्यत आह—आङोऽर्तेश्चेति । आङ्पूर्वात् ऋधातोः क्तिनि 'उपसर्गादृति धातौ' इति वृद्धिरेकादेश इत्यर्थः । रेखा लेखेति । गणसूत्रम् । गुण इति । लिखेरङि उपधागुणः लकारस्य रेफश्चेत्यर्थः । चूडेति । गणसूत्रम् । धारा प्रपात इति । वार्तिकम् । द्रवद्रव्यप्रपातने इत्यर्थः । कृपेः सम्प्रसारणं चेति । गणसूत्रम् । कृपधातुर्घटादौ अकारमध्यः । अत्र भाष्ये इष्टानां गणसूत्रत्वं विज्ञेयम् । चिन्तिपूजि । एते चुरादयः । तेभ्यो 'ण्यासश्रन्थो युच्' इति प्राप्ते अङ्विधिः । तदाह—युचोऽपवाद इति । चिन्तेत्यादौ अङि णिलोपः । चकारोऽनुक्तसमुच्चयार्थः । अतस्तोलयतेरपि सङ्ग्रहः । तदाह–चात्तुलेति । आतश्चोपसर्गे । अङ् स्यादिति । उपसर्ग उपपदे आदन्ताद्धातोरङ् स्यात् भावे अकर्तरि च कारके इत्यर्थः । प्रदेति । प्रपूर्वाद्दाधातोरङ् । 'आतो लोप इटि च' इत्याल्लोपः । एवमुपदा । ननु श्रदिति अन्तरिति च अव्ययपूर्वाद्धाञः कथमङ् , तयोरुपसर्गत्वाऽभावादित्यत आह—श्रदन्तरोरुपसर्गवद्वृत्तिरिति । 'श्रच्छब्दस्य अङ्विधौ उपसर्गत्वं वाच्यम्' इति 'अन्तरशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्' इति च वार्तिकात्तयोरुपसर्गत्वात्तत्पूर्वकादादन्ताद्धातोरङ्प्रत्ययात्मककृत्प्रत्ययरूपा वृत्तिरित्यर्थः । वृत्तिरिति । वार्त्तस्याप्युपलक्षणम् । तेन अन्तर्धा अन्तर्धिः अन्तर्धायतीत्यादीति दिक् । ण्यास । णि, आस, श्रन्थ् , एभ्यः स्त्रियां भावादिषु युच् स्यादित्यर्थः । अकारस्येति । 'अ प्रत्ययात्' इति विहितस्येत्यर्थः । घट्टिवन्दीति । अण्यन्तत्वाद्युचो विधिः । वेदनेति । लाभार्थाद्विदेर्युच् । व्याख्यानात् । 'विद ज्ञाने' इत्यस्य तु वित्तिः । 'विद वेदनाख्यानिवासेषु' इति चुरादेस्तु 'ण्यासश्रन्थ' इति युचि वेदनेत्यपि । इषेरनिच्छार्थस्येति । 'युच्चकस्य' इति शेषः । अन्वेषणेति । मार्गणे इत्यर्थः । इच्छायां तु

पर्येषणा । परीष्टिः । **३२८५ रोगाख्यायां ण्वुल्बहुलम् ३।३।१०८॥** प्रच्छर्दिका-वमिः । प्रवाहिका-ग्रहणी । विचर्चिका-पामा । क्वचिन्न । अर्द, शिरोऽर्त्तिः । 'धात्वर्थनिर्देशे ण्वुल्वक्तव्यः' ( वा २२२५ ) । आसिका । शायिका । 'इक्श्तिपौ धातुनिर्देशे' ( वा २२२६ ) । पचिः । पचतिः । 'वर्णात्कारः' ( २२२७ ) 'निर्देश इत्येव । अकारः । ककारः । 'रादिफः' ( वा २२२८ ) । रेफः । 'मत्वर्थाच्छः' ( वा २२२९ ) । बहुलवचनादकारलोपः । मत्वर्थीयः ।

---

अन्विष्टिः । परेर्वेति । परिपूर्वकादिषेर्युज्वेत्यर्थः । परीष्टिरिति । 'प्रश्च' इति षः । रोगाख्यायाम् । स्त्रियामित्येव । प्रच्छर्दिकेत्यस्य विवरणम्—वमिरिति । वमनमित्यर्थः । प्रवाहिकेत्यस्य विवरणम्—ग्रहणीति । अतिसारविशेषः । विचर्चिकेत्यस्य विवरणम्—पामेति । क्वचिन्नेति । ण्वुलिति शेषः । बहुलग्रहणादिति भावः । अर्देति । अर्तिशब्दस्य 'अर्द हिंसायाम्' इति प्रकृतिदर्शनमिदम् । शिरोऽर्त्तिरिति । शिरःपीडेत्यर्थः । अर्देः क्तिन् । 'तितुत्र' इति नेट् । धात्वर्थनिर्देश इति । धात्वर्थे निर्देष्टव्ये धातोः स्वार्थे ण्वुल् बहुलमित्यर्थः । स्त्रियामित्येव । आसिका शायिकेति । आसनं शयनमित्यर्थः । इक्श्तिपाविति । धातुस्वरूपे निर्देष्टव्ये इक्श्तिपौ वक्तव्यावित्यर्थः । धातुस्वरूपमेव वाच्यमिति फलितम् । पचिः पचतिरिति । पचधातुरित्यर्थः । श्तित्वेन सार्वधातुकत्वाच्छप् । अकर्तृकवाचकत्वेऽपि 'उपसर्गात्सुनोतिसुवति' इति निर्देशात् शबादिविकरणाः । शित्वसामर्थ्यादिति तु प्राञ्चः । तन्न, पिबतिः गायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या, आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वादित्यलम् । अत्र स्त्रियामिति न सम्बध्यते । व्याख्यानात् । वर्णात्कार इति । वार्तिकम् । निर्देश इत्येवेति । अ, इ, उ, इत्यादिवर्णनिर्देशे कर्तव्ये वर्णानुकरणात्, अ, इ, उ, इत्यादिप्रातिपदिकात्स्वार्थे कारप्रत्ययः स्यादित्यर्थः । अकार इति । अवर्ण इत्यर्थः । इह कारप्रत्ययस्य धातोरविहितत्वेऽपि अधिकारबलात् कृत्संज्ञा । अतः प्रातिपदिकत्वात् सुबुत्पत्तिः । ककारस्य नेत्संज्ञा, प्रयोजनाऽभावात् । अनार्धधातुकतया 'आकार' इत्यादौ आतो लोपाऽप्रसक्तेः । अनार्धधातुकत्वादेव नेट् । बहुलग्रहणानुवृत्तेः क्वचिन्न । 'अस्य च्वौ' इत्यादौ । ककार इति । कवर्ण इत्यर्थः । प्रकृतावकार उच्चारणार्थः । 'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणं भवति' इति 'हयवरट्' इति सूत्रभाष्यात् । क्वचित्सङ्घातादपि कारप्रत्ययः यथा 'एवकार' इत्यादौ, 'वषट्कार' इति सूत्रनिर्देशात्, 'सर्वे चकाराः प्रत्याख्यायन्त' इति भाष्याच्च । रादिफ इति । 'वाच्य' इति शेषः । वाऽसरूपविधिना कारप्रत्ययोऽपि । अत्र स्त्रियामित्यस्य अनुवृत्तेरनभ्युपगमेन अस्त्रियामिति निषेधाऽभावात् । मत्वर्थाच्छ इति । मत्वर्थशब्दात् स्वार्थे छप्रत्ययो वाच्य इत्यर्थः । ननु 'मत्वर्थीय' इत्यत्र कथं 'यस्येति च' इत्यकारलोपः अतद्धितपरत्वात् अभत्वाच्चेत्यत आह—बहुलवचनादकारलोप इति । मत्वर्थीय इति । मतोरर्थो यस्य प्रत्ययस्य स मत्वर्थः । स एव मत्वर्थीयः ।

'इणजादिभ्यः' ( वा २२३० ) । आजिः । आतिः । 'इञ्वपादिभ्यः' ( वा २२३१ ) । वापिः । वासिः । स्वरे भेदः । 'इक्कृष्यादिभ्यः' ( वा २२३२ ) । कृषिः । गिरिः । ३२८६ संज्ञायाम् ३।३।१०९॥ अत्र धातोर्ण्वुल् । उद्दालकपुष्पभञ्जिका । ( वरणपुष्पप्रवाहिका । अभ्यूषखादिका । अभ्यूषः पूरिका अपूपविशेषः ) । ३२८७ विभाषाख्यानपरिप्रश्नयोरिञ्च ३।३।११०॥ परिप्रश्ने आख्याने च गम्ये इञ् स्यात् । चात् ण्वुल् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । कां त्वं कारिं-कारिकां-क्रियां-कृत्यां-कृतिं वा अकार्षीः । सर्वां कारिं-कारिकां-क्रियां-कृत्यां-कृतिं वा अकार्षम् । एवं गणिं—गणिकां-गणनाम् । पाचिं—पा-

---

'तसौ मत्वर्थे' इत्यत्र तु बहुलग्रहणान्न । 'शैषिकान्मतुबर्थीयात्' इत्यत्र भवार्थे गहादित्वात् छो बोध्यः । इणजादिभ्य इति । वाच्य इति शेषः । स्त्रियामित्येव । आजिरित्यत्र अजेर्वीभावमाशङ्क्य आह-बहुलमिति । इञ्वपादिभ्य इति । 'वाच्य' इति शेषः । स्त्रियामित्येव । ननु इणोऽनुवृत्त्यैव सिद्धे इञ्ग्रहणमनर्थकम् इत्यत आह-स्वरे भेद इति । 'ञ्नित्यादिर्नित्यम्' इति स्वरविशेष इञ्विधेः फलमित्यर्थः । इक्कृष्यादिभ्य इति । 'वाच्य' इति शेषः । कृषिरिति । कित्वान्न लघूपधगुणः । गिरिरिति । गॄधातोरिक् । कित्वान्न गुणः । 'ॠत इद्धातोः' इति इत्वे रपरत्वम् । संज्ञायाम् । वरणेति । वरणः वृक्षविशेषः । 'वारणान्यहोमार्थानी'त्यादौ याज्ञिकानां प्रसिद्धः । अभ्यूष इत्यस्य विवरणम्-पूरिकेति । तस्या अपि विवरणम्—अपूपविशेष इति । 'समितावेसने जीरहिङ्गुमारीचयोजिते । घृताक्ते जलसंयुक्ते पीठस्योपरि वेल्लिते । घृतेन वाऽपि तैलेन भर्जिता पूरिका मता ।' इति भोजनकौतूहले तल्लक्षणात् । विभाषाख्यान । स्त्रियामित्येव । पूर्वं परिप्रश्नः पश्चादुक्तकथनमाख्यानम् । अल्पाच्तरत्वादाख्यानशब्दस्य पूर्वंनिपातः । तदाह—परिप्रश्न इति । वाऽसरूपविधिना सिद्धे विभाषाग्रहणं व्यर्थमित्यत आह—विभाषोक्तेरिति । स्त्रियां वाऽसरूपविधेरप्रवृत्त्या विभाषाग्रहणाऽभावे इञ्ण्वुलावेव स्याताम् । न तु प्रत्ययान्तरमित्यर्थः । परिप्रश्ने उदाहरति—कां त्वमिति । कां त्वं कारिमकार्षीरित्यन्वयः । इञि रूपम् । एवं कारिकामित्यादावपि कां त्वमित्यस्य कार्षीरित्यस्य चान्वयो बोध्यः । कारिकामिति । ण्वुलि रूपम् । क्रियामित्यत्र 'कृञः श च' इति शः । कृत्यामित्यत्र 'कृञः श च' इति चकारात् क्यपि तुक् । कृतिमित्यत्र क्तिन् 'कृञः श च' इति चकारादित्युक्तम् । आख्याने उदाहरति—सर्वां कारिमित्यादि । अत्रापि 'सर्वां कारि'मित्यादिपक्षेषु 'सर्वा'मित्यस्य' 'अकार्ष'मित्यस्य चान्वयः । एवं गणिमिति । अत्रापि 'कामकार्षीः' 'सर्वामकार्ष'मिति प्रश्नप्रतिवचनानि योज्यानि । गणधातोरदन्तात् चुरादिणिजन्तादिञादि । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । गणनामिति । 'ण्यासश्रन्थः' इति युच् । अत्र क्तिन् तु न, युचा बाधात् । पचामित्यत्र 'षिद्भिदादिभ्यः' इति षित्वादङ् । इज्यामित्यत्र 'व्रजयजोर्भावे' इति क्यप् । 'वचि-

चिकां-पचां-पक्तिम्। इज्यां-इष्टिम्। **३२८८ पर्यायाऽर्हर्णोत्पत्तिषु ण्वुच् ३।३।१११॥** पर्यायः परिपाटी क्रमः। अर्हणमर्हः योग्यता। पर्यायादिषु द्योत्येषु ण्वुज्वा स्यात्। भवत आसिका। शायिका। अग्रगामिका। भवानिक्षुभक्षिकामर्हति। ऋणे-इक्षुभक्षिकां मे धारयसि। उत्पत्तौ—इक्षुभक्षिका उदपादि। **३२८९ आक्रोशे नञ्यनिः ३।३।११२॥** विभाषेति निवृत्तम्। नञ्युपपदेऽनिः स्यादाक्रोशे। अजीवनिस्ते शठ भूयात्। अप्रयाणिः। 'कृत्यल्युटो बहुलम्' (सू २८४१)। भावेऽकर्तरि च कारके संज्ञायामिति च निवृत्तम्। राज्ञा भुज्यन्ते राजभोजनाः शालयः। 'नपुंसके भावे क्तः' (सू ३०९०)। **३२९० ल्युट् च ३।३।११५॥** हसितम्। हसनम्। योगविभाग उत्तरार्थः। **३२९१ कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ३।३।११६॥** येन कर्मणा संस्पृश्यमानस्य कर्तुः शरीरस्य सुखमुत्पद्यते तस्मिन्कर्मण्युपपदे ल्युट् स्यात्। पूर्वेण सिद्धे नित्यसमा-

---

स्वपि' इति सम्प्रसारणम्। इष्टिरित्यत्र यजेः क्तिन्, व्रश्चेति षः। पर्यायार्ह। पर्यायशब्दस्य विवरणम्—परिपाटीति। तस्यापि विवरणम्—क्रम इति। परिपूर्वात्पटेः क्रमार्थाद्विणिजादिभ्य इति स्त्रियां भावे इण्। 'कृदिकारादक्तिनः' इति ङीष्। अर्हणमर्ह इति। भावे घञिति भावः। द्योत्येष्विति। भाव एवार्थे प्रत्यय इति भावः। क्रमे उदाहरति—भवत आसिकेति। आदौ आसनं, ततः शयनं, ततोऽग्रगमनमित्यर्थः। अर्ह उदाहरति—भवानिति। 'ऋणे' इत्युदाहरणसूचनम्। इक्षुभक्षणमृणत्वेन धारयसीत्यर्थः। 'उत्पत्तौ' इत्युदाहरणसूचनम्। उदपादीति। उत्पन्नेत्यर्थः। उत्पूर्वात्पदेः कर्तरि लुङि 'चिण् ते पदः' इति चिण्। आक्रोशे नञ्यनिः। निवृत्तमिति। व्याख्यानादिति भावः। अजीवनिरिति। अजीवनमित्यर्थः। अप्रयाणिरिति। अप्रयाणमित्यर्थः। क्तिन् तु न भवति। अनिना बाधात्। स्त्रियां वाऽसरूपविधेरभावात्। विभाषाऽनुवृत्तौ क्वचित्क्तिन् स्यादिति भावः। इति स्त्र्यधिकारः। कृत्यल्युटो बहुलम्। कृत्यसञ्ज्ञकाः प्रत्ययाः 'तयोरेव कृत्यक्तखलर्थाः' इति भावे कर्मणि च विहिताः। करणे अधिकरणे भावे च ल्युड्विहितः। ततोऽन्यत्रापि कृत्यल्युटः स्युरित्यर्थः। स्नानीयं चूर्णम्। 'करणे अनीयर्' इति सिद्धवत्कृत्य ल्युटि उदाहरति-राज्ञेति। कर्मणि ल्युडिति भावः। नपुंसके भावे क्तः। इदं सूत्रं 'निष्ठा'इति सूत्रप्रस्तावे प्रागेव प्रसङ्गाद्व्याख्यातं मूले। इह तु क्रमप्राप्तत्वात् पुनरुपन्यस्तम्। ल्युट् च। चात् क्तः। नपुंसके भावे इत्येव। ननु नपुंसके भावे क्तल्युटौ' इत्येव सिद्धे योगविभागो व्यर्थं इत्यत आह—योगेति। 'कर्मणि च येने'त्युत्तरसूत्रे ल्युट एवानुवृत्त्यर्थं इत्यर्थः। कर्मणि च येन। संस्पर्शशब्दः कृदन्तः, कृद्योगे कर्तुरिति कर्मणि षष्ठी। येनेति कर्तरि तृतीया। 'उभयप्राप्तौ कर्मणि'इति नियमात्। येन कर्मणेति। कर्तुः शरीरस्येति। शरीरावच्छिन्नस्येत्यर्थः। अर्धर्चादित्वाच्छरीरशब्दः पुंलिङ्गोऽपि। तेन 'कर्तृण' इत्येव भाष्यमिति निरस्तम्। ल्युट् स्यादिति। 'भावे

सार्थं वचनम् । पयःपानं सुखम् । ( ओदनभोजनं सुखम् । नन्वत्र पानादेव सुखम् । चन्दनानुलेपनं सुखमितिवत् । सत्यम् । यत्र संस्पर्शं विना सुखाभावस्तदर्थकत्वात् । यत्र साक्षात्परम्परया वा सुखं तत्रेति यावत् ) । कर्तुरिति किम् । गुरोः स्नापनं सुखम्, नेह गुरुः कर्ता, किन्तु कर्म । ( कर्मणीति किम् । तूलिकाया उत्थानं सुखम् । अग्निकुण्डस्य सेवनं सुखम् । प्रत्युदाहरणेष्वसमासः ) । **३२९२ वा यौ २।४।५७॥** अजेर्वी वा स्याद्यौ । प्रवयणम् । प्राजनम् । **३२९३ करणाधिकरणयोश्च ३।३।११७॥** ल्युट् स्यात् । इध्मप्रव्रश्चनः कुठारः । गोदोहनी स्थाली । खलः प्राक्करणाधिकरणयोरित्यधिकारः । **३२९४ अन्तरदेशे ८।४।२४॥** अन्तःशब्दाद्धन्तेर्नस्य णः स्यात् । अन्तर्हणनम् । देशे तु अन्तर्हननो देशः । अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति । तपरः किम् । अन्तरघानि । **३२९५ अयनं च ८।४।२५॥** अयनस्य णोऽन्तःशब्दात्परस्य । अन्तरयणम् । अदेश इत्येव । अन्तरयनो देशः । **३२९६ पुंसि संज्ञायां घः प्रायेण ३।३।११८॥** **३२९७ छादेर्घेऽद्व्युपसर्गस्य ६।४।९६॥** द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद्घे परे ।

---

**नपुंसके' इति शेषः ।** पूर्वेणेति ( **'ल्युट् च' इति पूर्वसूत्रेणेत्यर्थः ।** नित्येति । **उपपदसमासार्थमित्यर्थः । तस्य नित्यत्वात् ।** पयःपानं सुखमिति । **पयसा स्पृश्यमानशरीरावच्छिन्नस्य सुखजनकमित्यर्थः । उदाहरणान्तरमाह**—ओदनभोजनं सुखमिति । **शङ्कते**—अत्र पानादिति । **पानादेव सुखम्, न तु संस्पर्शनेनेत्यर्थः । भोजनादित्यपि द्रष्टव्यम् । तत्र दृष्टान्तमाह**—चन्दनानुलेपनं सुखमितिवदिति । **तथा च पयसा ओदनेन च स्वरूपतस्तावद्देवदत्तसुखाऽभावाद् कथमिदमुदाहरणमिति भावः । समाधत्ते**—सत्यमिति । यत्र संस्पर्शमिति । **यत्र विषये संस्पर्शं विना स्वरूपसतैव सुखं नोत्पद्यते तादृशविषयोपलक्षणं संस्पर्शग्रहणमित्यर्थः । फलितमाह**—यत्रेति । **स्पर्शनेन यत्र सुखं, यथा चन्दनानुलेपनं सुखमिति, यत्र संस्पर्शपूर्वकपानादेर्वा सुखम् यथा 'पयः पानं सुख'मित्यादौ तत्र सर्वत्राऽस्य प्रवृत्तिरित्यर्थः ।** तूलिकाया उत्थानं सुखमिति । **अत्र न कर्मोपपदमिति भावः ।** अग्निकुण्डस्येति । **'शीतकाले' इति शेषः । अत्राग्निकुण्डेन संस्पर्शो नास्ति, दाहप्रसङ्गादिति भावः । ननु 'तूलिकाया उत्थानम्' इत्यादिप्रत्युदाहरणेषु पूर्वसूत्रेण ल्युट् स्यादेवेति 'कर्मणी'त्यादि व्यर्थमित्यत आह**—प्रत्युदाहरणेष्विति । **असमास इति । नित्यस्योपपदसमासस्याऽभाव इत्यर्थः ।** करणाधिकरणयोश्च । **अर्थनिर्देशोऽयं, न तूपपदं, व्याख्यानात् । अजपौ परत्वादयं बाधते । तदुक्तं 'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन' इति ।** इध्मप्रव्रश्चन इति । **प्रव्रश्च्यतेऽनेनेत्यर्थे ल्युट् । 'इध्मस्य प्रव्रश्चन' इति विग्रहः ।** गोदोहनीति । **दुह्यतेऽस्यामित्यर्थे ल्युट् । गोर्दोहनीति विग्रहः ।** खलः प्रागिति । **व्याख्यानादिति भावः ।** पुंसि । **करणाधिकरणयोरि-**

दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः। प्रच्छदः। अद्वीति किम्। समुपच्छादः। आकुर्वन्त्यस्मिन्नाकरः। **३२६८ गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च ३।३।११६॥** घान्ता निपात्यन्ते। 'हलश्च' (सू ३३००) इति वक्ष्यमाणस्य घञोऽपवादः। गावश्चरन्त्यस्मिन्निति गोचरो देशः। सञ्चरन्त्यनेन सञ्चरो मार्गः। वहन्त्यनेन वहः स्कन्धः। व्रजः। व्यजस्तालवृन्तम्। निपातनाद्वीभावो न। आपणः पण्यस्थानम्। निगच्छन्त्यनेन निगमः छन्दः। चात्कषः। निकषः। **३२६६ अवे तॄस्त्रोर्घञ् ३।३।१२०॥** अवतारः कूपादेः। अवस्तारो जवनिका। **३३०० हलश्च ३।३।१२१॥** हलन्ताद्घञ् स्यात्। घापवादः। रमन्ते योगिनोऽस्मिन्निति रामः। अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः। विमार्गः समूहनी। **३३०१ अध्यायन्यायोद्यावसंहाराश्च ३।३।१२२॥** अधीयतेऽस्मिन्नध्यायः। नियन्त्युद्युवन्ति संहरन्त्यनेनेति विग्रहः। 'अवहाराधारावायानामुपसंख्यानम्' (वा २२३६)। **३३०२ उदङ्कोऽनुदके ३।३।१२३॥** उत्पूर्वादञ्चतेर्घञ् स्यात् न तूदके। घृतमुदच्यते उद्ध्रियतेऽस्मिन्निति घृतोदङ्कश्चर्ममयं भाण्डम्। अनुदके किम्। उदकोदञ्चनः। **३३०३ जालमानायः ३।३।१२४॥** आनीयन्ते मत्स्यादयोऽनेनेत्यानायः। जालम् इति किम्। आनयः। **३३०४ खनो घ च ३।३।१२५॥** चाद्घञ्। आखनः। आखानः। घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम्। तेन भजेः भगः पदम्। करणे घः। खल सञ्चये। अधिकरणे घः। खल इत्यादि।

---

स्यैव। पूर्वसूत्रापवादः। आदेर्श। 'अद्व्युपसर्गस्य' इति छेदः। ह्रस्वः स्यादिति। 'खचि ह्रस्वः' इत्यतस्तदनुवृत्तेरिति भावः। 'णिच्प्रकृतिभूतस्य छाद उपधाया' इति शेषः। 'ऊदुपधायाः' इत्यतस्तदनुवृत्तेः। एतेन णेरेव ह्रस्वः तत्सामर्थ्यात्तस्य लोपो नेति परास्तम्। गोचर। ननु 'पुंसि संज्ञायां घः' इत्येव सिद्धे किमर्थमिदमित्यत आह—हलश्चेति। वक्ष्यमाणस्येति। चात्कषः इति। व्याख्यानादिति भावः। अवे तॄस्त्रोर्घञ्। अवेत्युपसर्गे उपपदे तॄ स्तॄ आभ्यां घञ् स्यात्, पुंसि सञ्ज्ञायां प्रायेणेत्यर्थः। घापवाद इति। 'पुंसि संज्ञायाम्' इति विहितस्य घस्याऽपवाद इत्यर्थः। हलश्च। स्पष्टम्। अध्याय। अधिपूर्वक इङ्, निपूर्वक इण्, उत्पूर्वकः युधातुः, सम्पूर्वको हृञ्, एते घञन्ता निपात्यन्ते। 'पुंसि सञ्ज्ञायाम्' इति घापवादः। अवहारेति। अवहारः, आधारः, आवायः, एषां घञन्तानां निपातनस्योपसङ्ख्यानमित्यर्थः। उदङ्कोऽनुदके। घस्यापवादः। घृतोदङ्क इति। 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। जालमानायः। जालं वाच्यं चेत् आनाय इति घञन्तमित्यर्थः। खनो घ च। 'घ' इति लुप्तप्रथमाकम्। खनो घञ् स्यात् घश्चेत्यर्थः। नन्वत्र घित्करणं व्यर्थम्, घञोरभावेन कुत्वस्याऽप्रसक्तेरित्याशङ्क्य आह-घित्करणमिति। भजेर्भग इति। भज्यते इति कर्मणि घः। पदमिति। पद्यते ग-

'खनेर्डडरेकेकवका वाच्याः' ( वा २२३८ ) आखः । आखरः । आखनिकः । आखनिकवकः । एते खनिप्रवचनाः । **३३०५ ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल् ३।३।१२६॥** करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् स्यात् । 'तयोरेव—' ( सू २८३६ ) इति भावे कर्मणि च । कृच्छ्रे–दुष्करः कटो भवता । अकृच्छ्रे–भवता ईषत्करः । सुकरः । 'निमिमीलियां खलचोरात्वं नेति वाच्यम्' ( वा ३४८७ ) ईषन्निमयः । दुष्प्रमयः । सुविलयः । निमयः । मयः । लयः । **३३०६ उपसर्गात्खल्घञोः ७।१।६७॥** उपसर्गादेव लभेर्नुम् स्यात् । ईषत्प्रलम्भः । दुष्प्रलम्भः । सुप्रलम्भः । उपालम्भः । उपसर्गात् किम् । ईषल्लाभः । लाभः । **३३०७ न सुदुर्भ्यां केवलाभ्याम् ७।१।६८॥** उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात्खल्घञोः । सुलभम् । दुर्लभम् । केवलाभ्याम् किम् । सुप्रलम्भः । अतिदुर्लम्भः । कथं तर्हि अतिसुलभमतिदुर्लभमिति । यदा स्वती कर्मप्रवचनीयौ तदा भविष्यति । **३३०८ कर्तृकर्मणोश्च भूकृञोः ३।३।१२७॥** कर्तृकर्मणोरीषदादिषु चोपपदेषु भूकृञोः खल्स्यात् । 'यथासंख्यं नेष्यते' । कर्तृकर्मणी

---

ण्यतेऽनेनेति **विग्रहः** खनेरिति । **ड, डर, इक, इकवक, एषां चतुर्णां द्वन्द्वः ।** आख इति । **डे रूपम् ।** आखर इति । **डरे रूपम् । उभयत्रापि डित्वसामर्थ्याट्टिलोपः । इके उदाहरति**—आखनिक इति । **इकवके उदाहरति**—आखनिकवक इति । ईषद्दुःसुषु । निवृत्तमिति । **व्याख्यानादिति भावः । तर्हि 'कर्तरि कृत्' इति कर्तरि स्यादित्यत आह**—तयोरेवेति । **इह दुरिति कृच्छ्रार्थं एवान्वेति अकृच्छ्रार्थे तु ईषदिति सु इति चान्वेति । योग्यताबलात् । तदेतदाह**—कृच्छ्रे दुष्कर इत्यादिना । भवतेति । **'न लोक' इति षष्ठीनिषेधात् कर्तरि तृतीया । कृच्छ्रेत्यादि किम् । ईषत्कार्यम् । अल्पमित्यर्थः ।** निमीति । **निपूर्वो मिञ्, मीनातिः, लीङ्, एषामित्यर्थः । 'मीनातिमिनोतिदीङां ल्यपि च' 'विभाषा लीयतेः' इति प्राप्तमात्वं खलचोर्निषिध्यते । खलि उदाहरति**—ईषन्निमय इत्यादि । **'एरच्' इत्यचि उदाहरति**—निमय इत्यादि । उपसर्गात्खल्घञोः । ।लभेर्नुमिति । **'लभेश्च' इत्यतः 'इदितो नुम्' इत्यतश्च तदनुवृत्तेरिति भावः ।** न सुदुर्भ्याम् । **'केवलाभ्यामित्येतद्व्याचष्टे**—उपसर्गान्तरेति । सुप्रलम्भः अतिदुर्लम्भ इति । **अत्र सुदुरोरुपसर्गान्तरसहितत्वात् पूर्वसूत्रप्राप्तस्य न निषेधः ।** कथं तर्हीति । **सुदुरोरुपसर्गान्तरसहितत्वेन नुमोऽनिषेधादिति भावः । समाधत्ते**—यदेति । **'स्वती पूजायाम्' । यदा पूजार्थकाविमौ कर्मप्रवचनीयौ तदा उपसर्गत्वाऽभावात् न सुदुरोरुपसर्गसहितत्वम् । अतो निषेधो भविष्यतीति भावः । सोः पूजार्थतया उपसर्गत्वाऽभावात् पूर्वसूत्रान्न तत्र प्राप्तिरित्यपि बोध्यम् ।** कर्तृकर्मणोश्च । **कर्तृकर्मणोरिति सप्तमी । उपपदयोरिति लभ्यते, व्याख्यानात् । चकारादीषद्दुःसुष्विति समु-**

च धातोरव्यवधानेन प्रयोज्ये। ईषदादयस्तु ततः प्राक्। 'कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्' ( वा २२४१ )। खित्वान्मुम्। अनाढ्येन आढ्येन दुःखेन भूयते दुराढ्यम्भवम्। ईषदाढ्यम्भवम्। स्वाढ्यम्भवम्। ईषदाढ्यङ्करः। दुराढ्यङ्करः। स्वाढ्यङ्करः। च्व्यर्थयोः किम्। आढ्येन सुभूयते। **३३०९ आतो युच् ३।३।१२८॥** खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः। 'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः' (वा २२४३)। दुःशासनः। दुर्योधन इत्यादि। **३३१० षात्पदान्तात् ८।४।३५।** नस्य णो न। निष्पानम्। सर्पिष्पानम्। षात् किम्। निर्णयः। पदान्तात् किम्। पुष्णाति। पदे अन्तः पदान्तः इति सप्तमीसमासोऽयम्। तेनेह न। सुसर्पिष्केण। **३३११ आवश्यकाऽऽधमर्ण्ययोर्णिनिः ३।३।१७०॥** अवश्यङ्कारी। शतंदायी। **३३१२ कृत्याश्च ३।३।१७१॥** आवश्यकाऽऽधमर्ण्ययोरित्येव। अवश्यं हरि सेव्यः। शतं देयम्। **३३१३ क्तिच्क्तौ च संज्ञायाम् ३।३।१७४॥** धातोः क्तिच्क्तश्च स्यादाशिषि संज्ञायाम्। 'तितुत्र—' (सू ३१६३) इति नेट्। भवताद् भूतिः। **३३१४ न क्तिचि दीर्घ-**

---

**च्वीयते। भूकृञोरिति पञ्चम्यर्थे षष्ठी। तदाह—**कर्तृकर्मणोरीषदादिषु चोपपदेष्विति। **अत्र कर्तृकर्मणोरन्यतरस्मिन् ईषद्दुः-सुनामन्यतमे च इत्युभयस्मिन् समुचिते उपपदे इत्यर्थो विवक्षितः। न तु प्रत्येकमुपपदत्वम्, व्याख्यानात्। भाष्ये तथैवोदाहरणाच्च।** नेष्यत इति। **भूकृञोः, कर्तृकर्मणोरित्यस्य च न यथासङ्ख्यमित्यर्थः। ननु कर्तृकर्मणोरन्यतरस्य ईषदादीनामन्यतमस्य च उपपदस्य प्रयोगसन्निपाते कथं पौर्वापर्यमित्यत आह—**कर्तृकर्मणि चेत्यादि। **भाष्ये तथैवोदाहरणादिति भावः।** च्व्यर्थयोरिति। **अभूततद्भाव इत्यर्थः।** भूयत इति। **भावे लट्।** दुराढ्यम्भवमिति। **भावे खल्। अत्राढ्यस्य दुरुपपदस्य भूधातोः प्रागव्यवधानेन प्रयोगः। दुरस्तु ततः प्राक्।** दुराढ्यङ्कर इति। **अनाढ्यः आढ्यः दुःखेन क्रियते इत्यर्थः। अत्र आढ्यः कर्म उपपदम्।** ईषदाढ्यम्भवमित्याद्यप्युदाहार्यम्। **अत्र ईषद्दुस्सूनां व्यवहितत्वात् पूर्वसूत्रेणाप्राप्तौ विधिरयमारम्भ इति बोध्यम्।** आतो युच्। **कर्तृकर्मणोरिति नानुवर्तते, अस्वरितत्वात्। ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु आदन्ताद्धातोर्युच् स्यादित्यर्थः। तयोरेवेति भावे कर्मणि च।** खलोऽपवाद इति। **वाऽसरूपविधिस्तु न भवति 'क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्न' इत्युक्तेः।** दुष्पान इति। **'इदुदुपधस्य' इति षः।** भाषायामिति। **'छन्दसि गत्यर्थेभ्यः' 'अन्येभ्योऽपि दृश्यन्ते' इत्युत्तरमिदं वार्तिकम्। ईषद्दुस्सुष्वित्येव। खलोऽपवादः।** इति खलर्थाः प्रत्ययाः। आवश्यकाधमर्ण्ययोर्णिनिः। **कर्तरि कृदित्येव।** अवश्यंकारीति। **अवश्यमित्यव्ययम्।** शतन्दायीति। **'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठी न।** कृत्याश्चेत्यादि। **स्पष्टम्।** क्तिच्क्तौ च। आशिषीति। **'आशिषि लिङ्लोटौ' इत्य-**

श्च ६।४।३९॥ अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे। यन्तिः। रन्तिः। वन्तिः। तन्तिः। **३३१५ सनः क्तिचि लोपश्चास्यान्यतरस्याम् ६।४।४५॥** सनोतेः क्तिच्यात्वं वा स्याल्लोपश्च वा। सनुतात्। सातिः। सतिः। सन्तिः। देवा एनं देयासुः देवदत्तः। **३३१६ अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३।४।१८॥** प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात्। प्राचां ग्रहणं पूजार्थम्। 'अमैवाव्ययेन' ( सू. ७८३ ) इति नियमान्नोपपदसमासः। 'दो दद्घोः' (सू. ३०७७)। अलं दत्वा। 'घुमास्था—' (सू. २४६२)। पीत्वा खलु। अलंखल्वोः किम्। मा कार्षीद्। प्रतिषेधयोः किम्। अलङ्कारः। **३३१७ उदीचां माङो व्यतीहारे ३।४।१९॥** व्यतीहारेऽर्थे माङः क्त्वा स्यात्। अपूर्वकालार्थमिदम्। **३३१८ मयतेरिदन्यतरस्याम् ६।४।७०॥** मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि। अपमित्य याचते। अपमाय। उदीचां ग्रहणाद्यथा-

---

तस्तदनुवृत्तेरिति भावः। भवतादिति। आशिषि लोट्। भूतिरित्यस्य विवरणमिदम्। कर्तरि क्तिच्। न क्तिचि दीर्घश्च। अनिटामिति। 'अनुदात्तोपदेश' इति सूत्रमिहानुवर्तते इति भावः। रन्तिरिति। अत्र 'श्रयुकः किति' इत्यस्याऽप्रवृत्तेः 'तितुत्र' इत्येव नेट्। भूतिरित्यत्र तु परत्वात् 'श्रयुकः किति' इत्येवोचितम्। सनः आत्वमिति। 'विड्वनोरनुनासिकस्यात्'इत्यतस्तदनुवृत्तेरिति भावः। लोपश्चेति। 'अनत्यस्य नकारस्येति शेषः। क्ते उदाहरिष्यन्नाह-देवा एनं देयासुरिति। आशीर्लिङ्। देवदत्त इति। 'तयोरेवे'ति कर्मणि क्तः। क्तिचा बाधा मा भूदिति क्तविधिः। अन्यथा अपवादेन क्तिचा क्तो बाध्येत। वाऽसरूपविधिस्तु 'स्त्रियां क्तिन्' इत्यतः प्रागेवेति 'प्रैषातिसर्ग' इति सूत्रे भाष्ये स्पष्टम्। अलंखल्वोः। क्त्वा स्यादिति। भावार्थकोऽयम्। 'अव्ययकृतो भावे' इति वचनात्। एतदेव 'तुमर्थे सेसेन' इति सूत्रे भाष्ये स्पष्टम्। ननु 'उदीचां माङो व्यतीहारे' इत्युत्तरसूत्रे उदीचांग्रहणादस्य नित्यत्वावश्यकत्वात् प्राचांग्रहणं व्यर्थमित्यत आह—प्राचां ग्रहणं पूजार्थमिति। न च वाऽसरूपविधिराशङ्क्यः। तस्य 'स्त्रियां क्तिन्' इत्यतः प्रागेव प्रवृत्तेरुक्तत्वात्। 'अलं रोदनेने'त्यादि तु बहुलग्रहणात्समाधेयमित्यलम्। उपपदसमासे उपपमाशङ्क्य आह—अमैवाव्ययेनेति। अलं दत्वेति। दानेन किञ्चिदपि साध्यं नास्तीत्यर्थः। ईत्वं स्मारयति—घुमास्थेति। पीत्वा खल्विति। पानेन साध्यं नास्तीत्यर्थः। उदीचां माङो। व्यतीहारो विनिमयः 'समानकर्तृकयोः पूर्वकाले' इत्यनेन सिद्धिमाशङ्क्य आह—अपूर्वकालार्थमिति। मयतेरिदन्यतरस्याम्। 'वाऽन्यस्य संयोगादेः' इत्यतो वेति 'न ल्यपि' इत्यतो ल्यपीति चानुवर्तते इति भावः। अपमित्य याचत इति। त्वया गौर्दत्ता चेत् मया महिषो दीयते इत्येवं विनिमयं कर्तुं गां याचते इत्यर्थः। इह विनिमयस्य पूर्वकालिकत्वाऽभावात् 'समानकर्तृकयो'रित्यस्य न प्राप्तिः। प्रत्युत पा-

प्राप्तमपि । याचित्वा अपमयते । ३३१९ परावरयोगे च ३।४।२०॥ परेण पूर्वस्याऽवरेण परस्य योगे गम्ये धातोः क्त्वा स्यात् । अप्राप्य नदीं पर्वतः । परनदीयोगोऽत्र पर्वतस्य । अतिक्रम्य पर्वतं स्थिता नदी । अवरपर्वतयोगोऽत्र नद्याः। ३३२० समानकर्तृकयोः पूर्वकाले ३।४।२१॥ समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा

यनाया एव पूर्वकालिकत्वात् याचेः क्त्वाप्राप्तिः । गतिसमासे क्त्वो ल्यप्, ह्रस्वं । तुक् । अपमायेति । ह्रस्वाऽभावे रूपम् । 'ईयति' इति ईत्वं तु न, 'न ल्यपि' इति निषेधात् । उदीचां ग्रहणादिति । तेन मेङः क्त्वाप्रत्ययस्य विकल्पलाभात् तदभावे याचेः पूर्वकालक्रियावृत्तित्वात् समानकर्तृकयोरिति क्त्वेति भावः । परावरयोगे च । परावरयोर्योगे इति विग्रहः । योगशब्दस्य प्रत्येकमन्वयः । परयोगे अवरयोगे च क्त्वेति लभ्यते । परेण कस्य योग इत्याकाङ्क्षायाम् अवरस्येति लभ्यते । अवरेण कस्य योग इत्याकाङ्क्षायां परस्येति लभ्यते । तदाह—परेण पूर्वस्येति । अवरस्येत्यर्थः । पराऽवरशब्दौ हि क्रमात् व्यवहिताऽव्यवहितदेशवृत्तिवाचिनौ । क्त्वा स्यादिति । 'अव्ययकृतो भावे' इति वचनादयमपि भावार्थक एव । अवरस्य परयोगे उदाहरति—अप्राप्य नदीं पर्वत इति । विन्ध्यपर्वताद्दक्षिणदेशे निवसतः विन्ध्यं गङ्गां च नदीमधिकृत्य प्रवृत्तमिदं वाक्यम् । विन्ध्यस्योत्तरत एव हि गङ्गा । तथा च दक्षिणदेशस्थानां गङ्गोत्तरणेन विना विन्ध्यपर्वतः प्राप्यत्वेन स्थित इत्यर्थः, विन्ध्यस्य दक्षिणतो गङ्गाया अभावादिति भावः । तथा च दक्षिणदेशस्थानां विन्ध्यव्यवहिता गङ्गा । दक्षिणदेशीयापेक्षया अव्यवहितस्य विन्ध्यस्य दाक्षिणात्यापेक्षया व्यवहितया गङ्गया योगो गम्यते । तदाह—परनदीयोगोऽत्र पर्वतस्येति । अथाऽपरेण परस्य योगे उदाहरति—अतिक्रम्य पर्वतं स्थिता नदीति । दाक्षिणात्यानाम् अव्यवहितविन्ध्यपर्वतातिक्रमेणैव व्यवहिता गङ्गा प्राप्यत्वेन स्थितेत्यर्थः । अत्र अव्यवहितेन विन्ध्येन दाक्षिणात्यापेक्षया व्यवहितायाः गङ्गायाः योगो गम्यते । तदाह—अवरपर्वतयोगोऽत्र नद्या इति । इह अप्राप्तेरतिक्रमणस्य च विन्ध्यस्थितिपूर्वकालत्वाऽभावात् 'समानकर्तृकयोः पूर्व' इत्यस्य न प्राप्तिः । समानकर्तृकयोः । 'समानकर्तृकयो'रिति निर्धारणे षष्ठी । पूर्वकाल इत्यस्य पूर्वकालके धात्वर्थे इत्यर्थः । 'विद्यमाना'दिति शेषः । क्त्वा स्यादिति । अव्ययकृत्त्वाद्भावार्थकोऽयम् । भुक्त्वा व्रजतीति । पूर्वकालिकाद्भोजनात् उत्तरकालिकं व्रजनमित्यर्थः । द्वित्वमिति । समानकर्तृकयोरिति द्वित्वमविवक्षितमिति भावः । स्नात्वेति । स्नानभोजनपानोत्तरकालिकं व्रजनमित्यर्थः । अत्र व्रजनापेक्षया स्नानादीनां बहूनां पूर्वकालिकत्वेऽपि क्त्वेति भावः । एतच्च भाष्ये स्पष्टम् । 'पूर्वं भुङ्क्ते ततो व्रजती'त्यत्र तु पूर्वशब्देनैव पूर्वत्वस्यावगमात् 'उक्तार्थानामप्रयोगः' इति न्यायात् न क्त्वा । 'पूर्वं भुक्त्वा ततो व्रजती'त्यत्र तु न क्रिययोः पौर्वापर्यम्, किन्तु क-

भुक्त्वा पीत्वा व्रजति । 'अनुदात्त—' (सू २४२८) इत्यनुनासिकलोपः । विष्णुं नत्वा स्तौति । स्वरत्यादेः 'श्र्युकः क्किति' (सू २३८१) इति नित्यमिडभावः पूर्वविप्रतिषेधेन । स्मृत्वा । सूत्वा । धूत्वा । **३३२१ क्त्वि स्कन्दिस्यन्दोः ६।४।३१॥** एतयोर्नलोपो न स्यात्क्त्वि परे । स्कन्त्वा । उदित्त्वादिड्वा । स्यन्त्वा—स्यन्दित्वा । **३३२२ न क्त्वा सेट् १।२।१८॥** सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् । कृत्वा । **३३२३ मृडमृदगुधकुषक्लिशवदवसः क्त्वा १।२।७॥** एभ्यः सेट् क्त्वा कित् । मृडित्वा । 'क्लिशः क्त्वा-' (सू ३०४९) इति वेट् । क्लिशित्वा क्लिष्ट्वा । उदित्वा । उषित्वा । 'रुदविद-' (सू २६०६) इति कित्त्वम् । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा । **३३२४ नोपधात्थफान्ताद्वा १।२।२३॥** सेट् क्त्वा कित्स्याद्वा । श्रथित्वा श्रन्थित्वा । गुम्फित्वा । गुफित्वा । नोपधात् किम् । कोथित्वा । रेफित्वा । **३३२५ वञ्चिलुञ्च्यृतश्च १।२।२४॥** सेट्

---

द्वौरेव । अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा पश्चाद्व्रजत्यन्येभ्यो भोक्तृभ्य इत्यर्थः । 'आस्यते भोक्तु'मित्यत्र तु वासरूपविधिना लट् इति भाष्यादौ विस्तरः । 'नम' धातोः' क्त्वाप्रत्यये आह—अनुदात्तेतीति । स्वरतिसूतिसूयतिधूञ्भ्यः क्त्वाप्रत्ययस्य 'श्र्युकः क्किति' इति निषेधं बाधित्वा 'स्वरतिसूतिसूयति' इति इड्विकल्पमाशङ्क्य आह—स्वरत्यादेरिति । 'आर्धधातुकस्येट्' इत्यादेरिड्विधिकाण्डात् प्राक् 'नेड्वशि कृति' इत्यादेरिण्निषेधकाण्डस्यारम्भसामर्थ्यात् इह पूर्वविप्रतिषेधमाश्रित्य 'श्र्युकः क्किति' इति इण्निषेध एव प्रवर्तते इति भावः । क्त्वि स्कन्दिस्यन्दोः । नलोपो नेति । 'श्नान्नलोपः' इत्यतो नलोप इति 'नाञ्चेः पूजायाम्' इत्यतो नेति चानुवर्तते इति भावः । क्त्वीति । क्त्वाशब्दस्य सप्तम्येकवचनम् । 'आत' इति योगविभागादाल्लोपः । स्कन्त्वेति । स्कन्दिर् धातोः रूपम् । अनुदात्तोपदेशत्वादनिट् । स्यन्दूधातोः क्त्वाप्रत्यये आह—ऊदित्वादिड्वेति । न क्त्वा सेट् । किन्नेति । 'असंयोगाल्लिट् कित्' इत्यतः किदित्यनुवृत्तेरिति भावः । शयित्वेति । कित्त्वाऽभावात् न गुणनिषेधः । मृडमृद । 'न क्त्वा सेट्' इति निषेधस्यापवादः । मृडित्वेति । कित्त्वान्न लघूपधगुणः । मृदित्वेत्याद्युदाहार्यम् । क्लिश इति । 'क्लिश हिंसायाम्' दिवादौ । ततः क्त्वाप्रत्ययस्य 'क्लिशः क्त्वानिष्ठयोः' इति वेडित्यर्थः । 'क्लिशू विबाधने' इत्यस्य तु ऊदित्त्वाद्वेट् । उदित्वेति । वद्धातोः क्त्वाप्रत्ययः । 'वचिस्वपि' इति सम्प्रसारणम् । उषित्वेति । वसधातोः क्त्वा 'वसतिक्षुधोः' इति इट्, सम्प्रसारणम् । 'शासिवसि' इति षः । रुदविद इति कित्त्वमिति । 'न क्त्वा सेट्' इति निषेधस्यापवाद इति भावः । नोपधात्थफान्ताद्वा । थफौ अन्तौ यस्येति विग्रहः । 'न क्त्वा सेट्' इति नित्यनिषेधे प्राप्ते विकल्पोऽयम् । कित्त्वे सति नलोपः । तदभावे तु नेति मत्वा आह—श्रथित्वेत्यादि । कोथित्वा रेफित्वेति । कुथ पूतीभावे, रिफ कत्थनयुद्धहिंसादानेषु । इह 'रलो

क्त्वा किद्वा । वचित्वा वञ्चित्वा । लुचित्वा लुञ्चित्वा । ऋतित्वा अर्तित्वा । ३३२६ **तृषिमृषिकृषेः काश्यपस्य १।२।२५॥** एभ्यः सेट् क्त्वा किद्वा । तृषित्वा । तर्षित्वा । मृषित्वा मर्षित्वा । कृषित्वा कर्षित्वा । 'रलो व्युपधात्—' ( सू २६१७ ) इति वा कित्वम् । द्युतित्वा द्योतित्वा । लिखित्वा लेखित्वा । रलः किम् । सेवित्वा । व्युपधात् किम् । वर्तित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा । 'वसतिक्षुधोरिट्' ( सू ३०४६ ) । उषित्वा । क्षुधित्वा क्षोधित्वा । 'अञ्चेः पूजायाम्' ( सू ३०४७ ) । इति नित्यमिट् । अञ्चित्वा । गतौ तु अक्त्वेत्यपि । लुभित्वा । लोभित्वा । 'लुभो विमोहने' ( सू ३०४८ ) इतीट् । अविमोहने तु लुब्ध्वा । ३३२७ **जॄव्रश्च्योः क्त्वि ७।२।५५॥** आभ्यां परस्य क्त्व इट् स्यात् । जरीत्वा । जरित्वा । व्रश्चित्वा । ३३२८ **उदितो वा ७।२।५६॥** उदितः परस्य क्त्व इड्वा । शमित्वा । 'अनु-

---

व्युपधात्' इति विकल्पोऽपि न भवति, नोपधाग्रहणसामर्थ्यात् । वञ्चिलुञ्च्यृतश्च । 'न क्त्वा सेट्' इत्यस्यापवादः । कित्वविकल्पान्नलोपविकल्पः । ऋतेरुदाहरति—ऋतित्वा अर्तित्वेति । कित्वविकल्पाल्लघूपधगुणनिषेधविकल्पः । ऋतिः सौत्रो धातुः घृणायाम् । तस्यार्धधातुकविषये 'ऋतेरीयङ्' इत्यस्य विकल्पनात् । तदभावे कित्वमिह विकल्प्यते । तृषिमृषि । 'न क्त्वा सेट्' इत्यस्यापवादः । रल इति । उकारोपधात् इकारोपधाच्च रलन्तात् हलादेः परः सन् क्त्वा च सेटौ वा किताविति व्याख्यातं प्राक् । रल् प्रत्याहारः । वर्तित्वेति । 'वृतु वर्तने' इत्यस्य रूपम् । एषित्वेति । इषधातोः रूपम् । इह हलादित्वाऽभावान्न कित्वविकल्पः । किन्तु 'न क्त्वा सेट्' इति नित्यमेव कित्वाऽभावान्न गुणनिषेधः । वसधातोः क्षुधधातोश्च अनुदात्तोपदेशत्वात् इण्निषेधे प्राप्ते तदपवादं स्मारयति—वसतिक्षुधोरिडिति । उषित्वेति । 'मृडमृद' इति कित्वात् 'वचिस्वपि' इति सम्प्रसारणम् । 'शासिवसि' इति षः । अञ्चधातोः क्त्वाप्रत्ययस्य 'उदितो वा' इति इड्विकल्पे प्राप्ते आह—अञ्चेः पूजायामिति । गतौ त्विति । तत्र 'उदितो वा' इति वेट्कत्वात् । लुभित्वा लोभित्वेति । व्याकुलीकृत्येत्यर्थः । 'लुभ विमोहने' तुदादिः । 'विमोहनं व्याकुलीकरण'मिति वृत्तिः । 'रलो व्युपधात्' इति कित्वविकल्पः । तत्र 'तीषसह' इति इड्विकल्पे आह—लुभो विमोहने इतीडिति । नित्यमिति शेषः । विमोहनार्थाल्लुभः क्त्वानिष्ठयोरिट् स्यात्, न तु गार्ध्ये इति व्याख्यातं प्राक् । अविमोहने त्विति । गार्ध्ये तु 'तीषसह' इति इड्विकल्पे लुभित्वेत्यपि भवति । अभिकाङ्क्ष्येत्यर्थः । विमोहने तु लुब्ध्वेत्यपपाठः । जॄव्रश्च्योः क्त्वि । जरीत्वा जरित्वेति । 'श्र्युकः किति' इति निषेधे प्राप्ते विधिः । 'वॄतो वा' इति इटो दीर्घविकल्पः । व्रश्चित्वेति । अत्र ऊदित्वादिड्विकल्पे प्राप्ते नित्यमिट् । 'न क्त्वा सेट्' इति कित्वनिषेधान्न सम्प्रसारणम् । उदितो वा । क्त्व इति । जं-

नासिकस्य क्वि—' ( सू.२६६६ ) इति दीर्घः । शान्त्वा । द्यूत्वा देवित्वा । **३३२६ क्रमश्च क्त्वि ६।४।१८॥** क्रम उपधाया वा दीर्घः स्यात् झलादौ क्त्वि परे । क्रान्त्वा क्रन्त्वा । झलि किम् । क्रमित्वा । 'पूङश्च' ( सू ३०५० ) इति वेट् । पवित्वा पूत्वा । **३३३० जान्तनशां विभाषा ६।४।३२॥** जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे । भक्त्वा । भङ्क्त्वा । रक्त्वा । रङ्क्त्वा । 'मस्जिनशोः— ' ( सू २५१७ ) इति नुम् । तस्य पक्षे लोपः । नष्ट्वा । नंष्ट्वा । 'रधादिभ्यश्च' ( सू २५१५ ) इतीट्पक्षे नशित्वा । 'झलादाविति वाच्यम्' ( वा ५०६६ )। नेह । अञ्जित्वा । उदित्त्वाद्वेट् । पक्षे अक्त्वा, अङ्क्त्वा । 'जनसन-' (सू २५०४) इत्यात्त्वम् । खात्वा, खनित्वा । 'द्यतिस्यति' (सू ३०७४) इतीत्त्वम् । दित्वा । सित्वा । मित्वा । स्थित्वा । 'दधातेर्हिः' ( सू ३०७६ ) । हित्वा । **३३३१ जहातेश्च क्त्वि ७।४।४३॥** हित्वा । हाङस्तु हात्वा । 'अदो

**जग्ध्योः' इति पूर्वसूत्रात्तदनुवृत्तेरिति भावः । अप्राप्तविभाषेयम् । शमुधातोरिट्पक्षे उदाहरति—**शमित्वेति **। इडभावे त्वाह—**अनुनासिकस्येति । द्यूत्वा देवित्वेति । **दिव्धातो-रुदित्त्वात् क्त्वायामिड्विकल्पः । इडभावपक्षे 'च्छ्वोः' इति वस्य ऊठि इकारस्य यणि द्यूत्वेति रूपम् । इट्पक्षे तु 'न क्त्वा सेट्' इति कित्त्वनिषेधात् उपधागुण इति भावः ।** क्रमश्च क्त्वि । **'नोपधायाः' इत्यतः उपधाया इति 'तनोतेर्विभाषा' इत्यतः विभाषेति 'ढ्लोपे पूर्वस्य' इत्यतः दीर्घ इति 'अनुनासिकस्य क्वि' इत्यतः झल्ग्रहणं चानुवर्तते । तदाह—**क्रम उपधाया इत्यादि **। 'अनुनासिकस्य क्वि' इति नित्ये प्राप्ते विकल्पोऽयम् ।** क्रान्त्वेति **। क्रमुधातोरुदित्त्वादिड्विकल्पः । दीर्घपक्षे रूपम् ।** जान्तनशाम् **। 'श्नान्नलोपः' इत्यतो नलोप इति 'क्त्वि स्कन्दिस्यन्दोः' इत्यतः क्त्वीति चानुवर्तते । तदाह—**जान्तानामित्यादि **।** भक्त्वा भङ्क्त्वेति **। 'भञ्जो आमर्दने' इत्यस्य रूपम् ।** रक्त्वा रङ्क्त्वेति **। 'रञ्ज रागे' इत्यस्य रूपम् । नष्ट्वा नंष्ट्वेत्यत्राह—**मस्जि इति । तस्येति **। नशो नकारस्य 'जान्तनशाम्' इत्यनेन पाक्षिको लोप इत्यर्थः ।** झलादाविति **। 'जान्तनशां विभाषा' इति नलोपविकल्पः झलादावित्यर्थः ।** अञ्जित्वेति **। इटि झलादित्वाऽभावात् 'जान्तनशाम्' इति नलोपो नेति भावः ।** पक्षे इति **। इडभावपक्षे झलादित्वात् नलोपविकल्प इति भावः ।** आत्त्वमिति **। 'खनु अवदारणे' उदित्त्वाद्वेट् । इडभावपक्षे झलादित्वात् 'जनसनखनाम्' इत्यात्त्वमित्यर्थः ।** दित्वेति **। 'दो अवखण्डने' इत्यस्य रूपम् ।** सित्वेति **। 'षोऽन्तकर्मणि' इत्यस्य रूपम् ।** मित्वेति **। माधातोः रूपम् ।** स्थित्वेति **। स्थाधातोः रूपम् । धाधातोः क्त्वाप्रत्यये आह—**दधातेर्हिरिति **। 'ओ हाक् त्यागे' इत्यस्य क्त्वायां हिभावं दर्शयति—**जहातेश्च क्त्वि **।** हित्वेति **। त्यक्त्वेत्यर्थः ।** हाङस्त्विति **। 'जहातेश्च क्त्वि' इति हिभावविधौ 'जहाते'रिति निर्देशात् 'ओ हाक् त्यागे' इत्यस्य**

जग्धिः-' ( सू ३०८० )। जग्ध्वा। **३३३२ समासेऽनञ्पूर्वे क्त्वो ल्यप ७।१।३७॥** अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात्। तुक्। प्रकृत्य। अनञ् किम्। अकृत्वा। पर्युदासाश्रयणान्नेह। परमकृत्वा **३३३३ षत्वतुकोरसिद्धः ६।१।८६॥** षत्वे तुकि च कर्तव्ये एकादेशशास्त्रमसिद्धं स्यात्। कोऽसिचत्, इह षत्वं न। अधीत्य। प्रेत्य। 'ह्रस्वस्य—' ( सू २८५८ ) इति तुक्। **३३३४ वा ल्यपि ६।४।३८॥** अनुदात्तोपदेशानां वनतितनोत्यादिनामनुनासिकलोपो वा स्याल्ल्यपि। व्यवस्थितविभाषेयम्। तेन मान्तानिटां वा, नान्तानिटां वनादीनां च नित्यम्। आगत्य आगम्य। प्रणत्य प्रणम्य। प्रहत्य। प्रमत्य।

प्रहणम्, न तु 'ओ हाङ् गतौ' इत्यस्य। तस्य 'भृञामित्' इति इत्त्वे 'जिहाते'रिति निर्देशापत्तेः। जग्ध्वेति। जग्ध् क्त्वा इति स्थिते 'झषस्तथोर्धोऽधः' इति धः। 'झरो झरि' इति प्रकृतिधकारस्य पाक्षिको लोपः। समासे। 'अनञ्पूर्व'इति पर्युदासात् अव्ययपूर्वपद इति लभ्यते इति मत्वा आह—अव्ययेत्यादि। तुगिति।'ह्रस्वस्य पिति'इत्यनेनेति भावः। प्रकृत्येति। प्रशब्दः प्रकर्षे। तस्य 'कुगति'इति क्त्वान्तेन नित्यसमासः। परमकृत्वेति। अव्ययपूर्वपदत्वाऽभावान्न ल्यबिति भावः। षत्वतुकोरसिद्धः। 'एकः पूर्वपरयोः' इत्येकादेशप्रकरणे उक्तमिदं सूत्रम्। ततश्च 'असिद्ध' इत्यस्य 'एकादेश' इति शेषः। फलितं त्वाह एकादेशशास्त्रमिति। कार्याऽसिद्धत्वं निराकृत्य शास्त्राऽसिद्धत्वस्यैव भाष्ये सिद्धान्तितत्वादिति भावः। कोऽसिचदिति। 'एङः पदान्तादति' इति पूर्वरूपमिद्धैकादेशः। तस्य 'अन्तादिवच्च' इति परादित्वे ओसिचदिति पदम्। तस्य सकारस्य अपदादितया 'सात्पदाद्योः'इति निषेधाऽभावात् 'आदेशप्रत्यययोः' इति षत्वं प्राप्तम् एकादेशस्याऽसिद्धत्वान्न भवति, एकादेशस्याऽसिद्धत्वेन को असिचदिति स्थिते सकारस्य अकारेण व्यवधानात् इणः परत्वाऽभावात्। तदाह—इह षत्वं नेति। षत्वे एकादेशस्याऽसिद्धत्वे प्रासङ्गिकमुदाहृत्य प्रकृते ल्यपि तुग्विधावसिद्धमुदाहरति—अधीत्येति। 'इङ् अध्ययने' नित्यमधिपूर्वः तस्मात् क्त्वो ल्यप्। प्रेत्येति। प्रपूर्वादिण्धातोः क्त्वो ल्यप्। इहोभयत्र सवर्णदीर्घस्य आद्गुणस्य चाऽसिद्धत्वात् 'ह्रस्वस्य पिति' इति तुक्। एकादेशस्याऽसिद्धत्वाऽभावे तु ह्रस्वाऽभावात्तुक् न स्यात्। तदाह—ह्रस्वस्येति तुगिति। वा ल्यपि। 'अनुदात्तोपदेशवनतितनोत्यादिनामनुनासिकलोपः' इत्युत्तरमिदं सूत्रम्। तदाह—'अनुदात्तेत्यादि। अनुदात्तोपदेशानां, वनतितनोत्यादीनां च अनुदात्तोपदेशेत्युक्तो नलोपो ल्यपि वा स्यादित्यर्थः। व्यवस्थितविभाषेति। व्याख्यानादिति भावः। मान्तानिटां वेति। गम्नम्यम्रमां पाक्षिको मलोप इत्यर्थः। नान्तेति। नान्तेषु मन्यहनावनिटौ, तयोः वनादीनां च'अनुदात्तोपदेश' इत्यनेन नलोपो नित्यं स्यादित्यर्थः। नान्ताऽनिटामिति बहुवचनं तु प्रयोगबहुत्वाभिप्रायम्। मान्तानामुदाहरति—आगत्येति। गमेरनुनासिकलोपे तुक्। प्रणत्येति। नमेरनुनासिकलोपपक्षे तुक्। विरम्य विर-

प्रवत्य । वितत्य । 'अदो जग्धिः—' ( सू २०८० ) । 'अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते' । जग्धिविधौ ल्यब्ग्रहणात् । तेन हित्वदत्वात्वेत्वदीर्घत्वशूठिटो ल्यपि न । विधाय । प्रदाय । प्रखन्य । प्रस्थाय । प्रक्रम्य । आपृच्छ्य । प्रदीव्य । **३३३५ न ल्यपि ६।४।६९॥** ल्यपि परे घुमास्थादेरीत्वं न । घेट् । प्रधाय । प्रमाय । प्रगाय । प्रपाय । प्रहाय । प्रसाय । 'मीनातिमिनोति–' ( सू २५०८ ) इत्यात्वम् । प्रमाय । निमाय । उपदाय । 'विभाषा लीयतेः' ( सू २५०९ ) । विलाय विलीय । णिलोपः । उत्तार्य । विचार्य । **३३३६ ल्यपि ल-**

---

त्य, प्रयत्य प्रयम्य, इत्यप्युदाहार्यम् । मान्तयोरुदाहरति–प्रहत्य प्रमत्येति । हनो मन्यतेश्च नित्यं नलोपः । प्रवत्येति । वनेर्नित्यं नलोपः, तुक् । वितत्येति । तनोतेर्नित्यं नलोपः, तुक् । भाष्ये तु 'वा ल्यपि' इति सूत्रं न दृश्यते । 'अनुदात्त' इति सूत्रे 'अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि च' इति 'वा मः' इति च वार्तिके पठितम्, ल्यपि च 'अनुदात्तोपदेश' इति नलोपो भवति । मकारान्तानां तु वेत्यर्थः । अथ प्रजग्ध्येत्युदाहरणं मनसि निधाय तत्र अद् धातोः क्त्वो ल्यपि 'अदो जग्धिर्ल्यप्ति किति' इति जग्ध्यादेशविधिं स्मारयति—अदो जग्धिरिति । आदेशे इकार उच्चारणार्थः । ननु विधायेत्यत्र 'दधातेर्हिः' इति हिभावः प्राप्नोति । न च तस्य तादौ किति विधानात् ल्यपि कृते कथं तत्प्राप्तिः । अलाश्रयविधौ स्थानिवत्त्वाभावादिति वाच्यम् । परस्मादपि ल्यपः प्रागेवाऽन्तरङ्गत्वात् हिभावप्रवृत्तेर्दुर्निवारत्वात् । तथा प्रदायेत्यत्र तादौ किति विहितमित्वं ल्यपः प्रागेवाऽन्तरङ्गत्वात् प्राप्नोति । तथा प्रखन्येत्यत्र 'जनसनखनां सञ्झलोः' इति झलादिलक्षणमात्वं ल्यपः प्रागेव प्राप्नोति । तथा 'द्यतिस्यतिमास्थामित्ति किति' इति इत्वं ल्यपः प्रागेव प्राप्नोति । तथा प्रक्रम्येत्यत्र 'क्रमश्च क्त्वि' इति झलादौ क्त्वविहितमुपधादीर्घत्वं ल्यपः प्रागेव प्राप्नोति । तथा आपृच्छ्य प्रदीव्येत्यत्र 'च्छ्वोः' इति शूठौ झलादित्वलक्षणौ ल्यपः प्रागेव स्याताम् । तथा प्रदीव्येत्यत्र वलादिलक्षणः इट् ल्यपः प्रागेव प्राप्नोतीत्याशङ्क्य आह—अन्तरङ्गानपीति । कुत एतदित्यत आह—जग्धिविधाविति । 'अदो जग्धिर्ति किति' इत्येतावतैव प्रजग्ध्य इत्यत्रापि ल्यपः प्रागेवाऽन्तरङ्गत्वात् जग्ध्यादेशः सिद्धः । अतो ल्यब्ग्रहणं 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' इति ज्ञापयति । एवं च अन्तरङ्गजग्ध्यादेशापेक्षया प्राबल्याल्ल्यपि कृते सति तकारादित्वलक्षणजग्धिभावस्याऽप्रसक्तेः जग्धिविधौ ल्यब्ग्रहणमर्थवदिति भावः । तेनेति । हित्वं, दत्व, आत्वम्, इत्वं, दीर्घत्व, शूठौ, इट् च ल्यपि नेत्यर्थः । न ल्यपि । 'घुमास्थागापाजहातिसाम्' इत्यनुवर्तते । 'ईद्यति' इत्यतः ईत् इति च । तदाह—ल्यपि परे इत्यादि । धेडिति । प्रकृतिप्रदर्शनम् । प्रधायेति । 'आदेचः' इत्यात्वम् । प्रपायेति । निपीयेति तु पाङ् पाने इत्यस्य रूपम् । प्रसायेति । 'षोऽन्तकर्मणि' इत्यस्य रूपम् । लीङः क्त्वो ल्यपि आत्वविकल्पं स्मारयति—विभाषा लीयतेरिति । णिलोप इति ।

घुपूर्वात् ६।४।५६॥ लघुपूर्वात्परस्य णेरयादेशः स्याल्ल्यपि । विगणय्य । प्रणमय्य । प्रबेभिदय्य । लघुपूर्वात् किम् । सम्प्रधार्य । ३३३७ विभाषाऽऽपः ६।४।५७॥ आप्नोतेर्णेरयादेशो वा स्याल्ल्यपि । प्रापय्य । प्राप्य । ३३३८ क्षियः ६।४।५९॥ क्षियो ल्यपि दीर्घः स्यात् । प्रक्षीय । ३३३९ ल्यपि च ६।१।४१॥ वेञो ल्यपि सम्प्रसारणं न स्यात् । प्रवाय । ३३४० ज्यश्च ६।१।४२॥ प्रज्याय । ३३४१ व्यश्च ६।१।४३॥ उपव्याय । ३३४२ विभाषा परेः ६।१।४४॥ परेर्व्येञो वा सम्प्रसारणं स्याल्ल्यपि । तुकं बाधित्वा परत्वात् 'हलः' ( सू २५५९ ) इति दीर्घः । परिवीय । परिव्याय । कथम् 'मुखं व्यादाय स्वपिति' 'नेत्रे निमील्य हसति' इति । व्यादाननिमीलनोत्तरकालेऽपि स्वापहासयोर-

---

उत्पूर्वात् तृधातोर्णिचि वृद्धौ रपरत्वे उत्तारि इति रूपम् । विपूर्वाच्चरधातोर्णिचि उपधावृद्धौ विचारीति रूपम्, ताभ्यां क्त्वो ल्यपि णिलोप इत्यर्थः । ल्यपि लघुपूर्वात् । 'णेरनिटि' इत्यतो णेरिति 'अयामन्ताल्वाय्य' इत्यतः अय् इति चानुवर्तते । तदाह—लघुपूर्वादिति । लघुः पूर्वो यस्माद्वर्णादिति विग्रहः, । णिलोपापवादः । विगणय्येति । 'गण सङ्ख्याने' चुरादिः । कथादिरदन्तः । तस्माण्णिच् । अतो लोपः । क्त्वो ल्यपि णेरयादेशः । प्रबेभिदय्येति । भिदधातोर्यङि द्वित्वम् । 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः, जश्त्वं, 'यस्य हलः' इति यकारलोपः, अतो लोपः, क्त्वो ल्यपि णेरयादेशः । विभाषाऽऽपः । लघुपूर्वत्वाऽभावात् पूर्वेण अप्राप्ते विभाषेयम् । क्षियः । 'ल्यपि लघुपूर्वात्' इत्यतो ल्यपीति 'युप्लुवोर्दीर्घश्छन्दसि' इत्यतो दीर्घ इति चानुवर्तते । तदाह—क्षियो ल्यपीति । ल्यपि च । 'वेञः' इति सूत्रमनुवर्तते । 'न सम्प्रसारणे सम्प्रसारणम्' इत्यतः न सम्प्रसारणमिति च । तदाह—वेञो ल्यपीत्यादि । प्रवायेति । 'वेञ् तन्तुसन्ताने' क्त्वो ल्यप् । 'आदेच उपदेशे' इत्यात्वम् । इह 'ग्रहिज्यावयिव्यधिवष्टिविचति' इति सम्प्रसारणं न । ज्यश्च । ज्याधातोर्ल्यपि सम्प्रसारणं न स्यादित्यर्थः । प्रज्यायेति । इह 'ग्रहिज्यावयि' इति सम्प्रसारणं न । व्यश्च । व्येञो ल्यपि सम्प्रसारणं नेत्यर्थः । उपव्यायेति । 'व्येञ् संवरणे' क्त्वो ल्यपि 'आदेचः' इत्यात्वम् । 'ग्रहिज्यावयि' इति सम्प्रसारणं न । विभाषा परेः । 'व्यः' इति ल्यपीति, सम्प्रसारणमिति चानुवर्तते । तदाह—परेर्व्येञ इति । परिपूर्वाद्व्येञः क्त्वो ल्यपि यकारस्य सम्प्रसारणे पूर्वरूपे च कृते परि वि इति स्थिते, आह—तुकमिति । कथमिति । स्वापकाल एव मुखव्यादानं हासकाल एव नेत्रनिमीलनम् । एवं च व्यादाननेत्रनिमीलनयोः स्वापहासपूर्वकालकत्वाऽभावात् कथं क्त्वाप्रत्यय इत्याक्षेपः । समाधत्ते—व्यादानेति । यद्यपि स्वापहसनोत्पत्त्युत्तरकालके व्यादाननिमीलने, न तु तत्पूर्वकालके । तथापि व्यादानोत्पत्त्युत्तरकालके निमीलनोत्पत्त्युत्तरकालेऽपि स्वापहासौ अनुवर्तेते । तत्र स्वापोत्पत्तिकालीनव्यादानस्य हासोत्पत्तिकालीननिमी-

नुवृत्तेस्तदंशविवक्षया भविष्यति । **३३४३ आभीक्ष्ण्ये णमुल्च ३।४।२२॥** पौनः-पुन्ये द्योत्ये पूर्वविषये णमुल्स्यात् क्त्वा च । द्वित्वम् । स्मारं स्मारं नमति शिवम् । स्मृत्वा स्मृत्वा । पायं पायम् । भोजं भोजम् । श्रावं श्रावम् । 'चिण्णमुलोः–' ( सू २७६२ ) इति णमुल्परे णौ वा दीर्घः । गामं गामम् । गमं गमम् । 'विभाषा चिण्णमुलोः' ( २७६५ ) इति नुम्वा । लम्भं लाम्भम् । लाभं लाभम् । व्यवस्थितविभाषयोपसृष्टस्य नित्यं नुम् । प्रलम्भं प्रलम्भम् । 'जाग्रोऽविचिण्णल्–' ( सू २४८० ) इति गुणः । जागरं जागरम् । ण्यन्तस्याप्येवम् । **३३४४ न यद्यनाकाङ्क्षे ३।४।२३॥** यच्छब्द उपपदे पूर्वकाले यत्प्राप्तं तन्न, यत्र पूर्वोत्तरे क्रिये तद्वाक्यमपरं नाकाङ्क्षति चेत् । यदयं भुङ्क्ते ततः पठति । इह क्त्वाणमुलौ न । अनाकाङ्क्षे किम् । यदयं भुक्त्वा व्रजति ततोऽधीते । **३३४५ विभाषा-**

---

लनस्य च तत्कालीनत्वापहासपूर्वकालकत्वाऽभावेऽपि तदुत्तरकालानुवृत्तत्वापहासापेक्षया पूर्वकालकत्वसत्त्वात् क्त्वाप्रत्यय इत्यर्थः । 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इत्यादौ तु समानकर्तृकताऽविघाताय 'स्थितस्ये'त्याद्यध्याहार्यम् । आभीक्ष्ण्ये णमुल् च । 'समानकर्तृकयोः पूर्वकाले' इत्युत्तरमिदं सूत्रम् । तदाह—पूर्वविषये इति । यद्यपि वाऽसरूपविधिना क्त्वा सिद्धः । स्त्र्यधिकारात्प्रागेव वाऽसरूपविधिप्रवृत्तेऽपि क्त्वाविधौ वाऽसरूपवचनस्य वाऽसरूपसूत्रभाष्ये प्रपञ्चितत्वात् । तथापि 'विभाषाग्रेप्रथम' इति सूत्रे इमयोर्विधानाय चकारः । तत्र हि 'अग्रे भोजं व्रजति देवदत्तः' 'अग्रे भुक्त्वा' इत्यादौ देवदत्तकर्तृकभोजने यज्ञदत्तादिकर्तृकभोजनापेक्षया पूर्वकालत्वमग्रादिशब्देन बोध्यते, न तु व्रजनादिक्रियापेक्षया पूर्वकालत्वम् । ततश्च 'समानकर्तृकयोः' इति क्त्वाप्रत्ययस्य तत्र न प्रसक्तिः । नापि 'विभाषाग्रे' इत्यनेन आभीक्ष्ण्ये तत्राऽप्राप्तविधिरिति युज्यते । आभीक्ष्ण्ये पूर्वविप्रतिषेधेन 'आभीक्ष्ण्ये णमुल् च' इत्यस्यैव प्रवृत्तेरिष्टत्वादिति शब्देन्दुशेखरे विस्तरः । द्वित्वमिति । 'नित्यवीप्सयोः इत्यनेनेति शेषः । स्मृत्वास्मृत्वेति । 'नमति शिवम्' इत्यनुषज्यते पायंपायमिति । 'आतो युक् चिण्कृतोः'इति युक् । वा दीर्घ इति । गमेर्ण्यन्तात्णमुलि मितां ह्रस्वः' इति ह्रस्वे कृते 'चिण्णमुलोः' इति दीर्घविकल्प इत्यर्थः । व्यवस्थितेति । व्याख्यानादिति भावः । उपसृष्टस्येति । उपसर्गपूर्वस्येत्यर्थः । जागृधातोर्णमुलि वृद्धिमाशङ्क्य आह—जाग्र इति । ण्यन्तस्याप्येवमिति । जागृधातोर्णौ वृद्धिं बाधित्वा 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणे णिलोपे 'जागर'मित्येव रूपमिति भावः । न यद्यनाकाङ्क्षे । यत्प्राप्तमिति । क्त्वा णमुल् चेत्यर्थः । यत्रेति । यस्मिन्वाक्ये पूर्वोत्तरकालिकक्रियापदे स्तः, तद्वाक्यं वाक्यान्तरं नाकाङ्क्षति चेदित्यर्थः । पूर्वोत्तरकालिकक्रियापदद्वययुक्तं वाक्यान्तरं नाकाङ्क्षति चेत् इति यावत् । यदयमिति । 'य'दित्यव्ययम् । यदायं भुङ्क्ते ततः परं पठतीत्यर्थः । इदमेकं वाक्यं भुजिपठिक्रियापदद्वययुक्तं न वाक्यान्तरमाकाङ्क्षतीति भावः ।

ऽग्रेप्रथमपूर्वेषु ३।४।२४॥ आभीक्ष्ण्य इति नानुवर्तते। एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः। अग्रे भोजं व्रजति। अग्रे भुक्त्वा। प्रथमं भोजम्। प्रथमं भुक्त्वा। पूर्वं भोजम्। पूर्वं भुक्त्वा। पक्षे लडादयः। अग्रे भुङ्क्ते ततो व्रजति। आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः। अग्रे भोजं-भोजं-व्रजति। भुक्त्वा-भुक्त्वा। **३३४६ कर्मण्याक्रोशे कृञः खमुञ् ३।४।२५॥** कर्मण्युपपदे आक्रोशे गम्ये कृञः खमुञ् स्यात्। चौरङ्कारमाक्रोशति। करोतिरुच्चारणे। चौरशब्दमुच्चार्येत्यर्थः। **३३४७ स्वादुमि णमुल् ३।४।२६॥** स्वाद्वर्थेषु कृञो णमुल्स्यादेककर्तृकयोः पूर्वकाले। स्वादुशब्दस्य मान्तत्वं निपात्यते। अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते। स्वादुंकारं भुङ्क्ते। सम्पन्नंकारम्। लवणं-

यदयं भुक्त्वा व्रजतीति। भुजिव्रजिक्रियापदद्वयघटितमिदं वाक्यम्। ततः 'अधीत' इति वाक्यान्तरमाकाङ्क्षति। नात्रायं निषेध इति भावः। विभाषाग्रे। अग्रे, प्रथम, पूर्व, एषां द्वन्द्वः। अग्र इत्यव्ययम्। एदन्तं वा निपातनात्। नानुवर्तते इति। एतच्च भाष्ये स्पष्टम्। प्रथमं भोजमिति। 'प्रथम'मिति क्रियाविशेषणम्। पूर्वं भोजमिति। 'पूर्व'मिति क्रियाविशेषणम्। पक्षे इति। क्त्वाणमुलौ तावदप्रत्ययकृत्वा त्वाद्यर्थकौ। यदा तु कर्तृविवक्षा तदा लडादय इत्यर्थः। ननु अग्रेप्रथमपूर्वपदेषूपपदेषु क्त्वाणमुलौ परत्वादाभीक्ष्ण्येऽपि स्यातामित्यत आह—आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेनेति। व्याख्यानादिति भावः। कर्मण्याक्रोशे। कर्मणीत्युपपदनिर्देशः। आक्रोश इति चोत्यार्थ इति मत्वा व्याचष्टे—कर्मण्युपपदे आक्रोशे गम्ये कृञः खमुञिति। स्पष्टत्वात् न व्याख्येयमिति भावः। चौरङ्कारमिति। उपपदसमासे 'अरुर्द्विषदजन्तस्य' इति मुम्। स्वादुमि णमुल्। स्वादुमीत्यर्थग्रहणम्। व्याख्यानात्। तथा च स्वादुपर्याये उपपद इति लभ्यते। 'कर्मण्याक्रोशे' इति पूर्वसूत्रात् कृञ इत्यनुवर्तते ननु खमुञ् अस्वरितत्वात्। ततश्च 'आभीक्ष्ण्ये णमुल् च' इत्यतः णमुलित्यनुवर्तते, 'समानकर्तृकयोः पूर्वकाले' इति सूत्रं च। तदाह—स्वाद्वर्थेष्वित्यादिना। ननु स्वादुमशब्दस्य स्वादावित्येव निर्देश उचित इत्यत आह—स्वादुशब्दस्येति। नन्वत्र खमुञेवानुवर्तताम्। एवं च स्वादुमि मान्तत्वनिपातनमपि न कर्तव्यमित्याशङ्क्य च्व्यन्तमुदाहरति—अस्वाद्वीमिति। यवागूमपूपिकामित्यादि विशेष्यम्। अत्र णमुलि विवक्षिते मान्तत्वे निपातिते उदन्तत्वाऽभावात् 'वोतो गुणवचनात्' इति न ङीष्। खमुञि कृते 'अरुर्द्विषत्' इति मुमि तु स्वाद्वीङ्कारमित्येव प्रसज्येत। किञ्च च्व्यन्तस्याऽव्ययत्वात् 'अरुर्द्विषद्' इति मुम् दुर्लभः, तत्र मुम्विधौ 'अनव्ययस्ये'त्यनुवृत्तेः। ततश्च अस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते इत्यत्रापि मुम् न स्यात्, खमुञः खित्वस्य चौरङ्कारमित्यत्र सावकाशत्वात्। किञ्च 'च्वौ' इति दीर्घापत्तिः। अतो णमुलि स्वादुशब्दे मान्तत्वनिपातनमिति भावः। स्वादुमित्यर्थग्रहणस्य प्र-

कारम्। सम्पन्नलवणशब्दौ स्वादुपर्यायौ। वाऽसरूपेण क्त्वापि। स्वादुं कृत्वा भुङ्क्ते। **३३४८ अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३।४।२७॥** एषु कृञो णमुल्स्यात् सिद्धोऽप्रयोगोऽस्यैवंभूतश्चेत्कृञ्। व्यर्थत्वात्प्रयोगानर्हं इत्यर्थः। अन्यथाकारम्। एवङ्कारम्। कथङ्कारम्। इत्थङ्कारम् भुङ्क्ते। इत्थं भुङ्क्त इत्यर्थः। सिद्ध–इति किम्। शिरोऽन्यथा कृत्वा भुङ्क्ते। **३३४९ यथातथयोरसूयाप्रतिवचने ३।४।२८॥** कृञः सिद्धाऽप्रयोग इत्येव, असूयया प्रतिवचने। यथाकारमहं भोक्ष्ये, तथाकारं भोक्ष्ये, किं तवानेन। **३३५० कर्मणि दृशिविदोः साकल्ये ३।४।२९॥** कर्मण्युपपदे णमुल्स्यात्। कन्यादर्शं वरयति। सर्वाः कन्या इत्यर्थः। ब्राह्मणवेदं भोजयति। यं यं ब्राह्मणं जानाति लभते विचारयति वा तं

---

भोजनमाह—सम्पन्नकारमिति। अत्र 'अस्य च्वौ' इति ईत्वाऽभावोऽपि मान्तत्वनिपातनस्य फलं बोध्यम्। स्वादुपर्यायाविति। वृत्यादिग्रन्थेषु तथा दर्शनादिति भावः। वाऽसरूपेण क्त्वापीति। यद्यपि 'स्त्रियां क्तिन्' इत्यतः प्रागेव वाऽसरूपविधिरिति भाष्ये स्थितम्। तथापि तत्रैव भाष्ये 'क्त्वायां वा वचनम्' इति क्त्वाप्रत्ययविषये वाऽसरूपविधिप्रवृत्तेर्विशिष्य वचनादिह क्त्वापि भवतीत्यर्थः। 'वाऽसरूपविधिः स्त्रियामित्यधिकारात् प्रागूर्ध्वं च भवती'ति पक्षान्तरमपि तत्रैव भाष्ये स्थितम्। तत्पक्षे क्त्वायां वाऽसरूपप्रवृत्तिर्निर्बाधैवेत्यास्तां तावत्। अन्यथैवम्। अन्यथा, एवम्, कथम्, इत्थम्, एषामव्ययानां द्वन्द्वात्सप्तमीबहुवचनम्। सिद्धः अप्रयोगः प्रयोगाभावः यस्य कृञः स सिद्धाऽप्रयोग इति विग्रहः। तदाह–एषु कृञ इत्यादि। ननु कृञः अप्रयोगे कथं तदर्थावगतिः। अर्थाऽवगत्यभावे तत्प्रयोगो वा किमर्थं इत्यत आह—व्यर्थत्वादिति। निष्फलत्वादिति भावः। अर्थस्याऽविवक्षितत्वेऽपि णमुल्प्रत्ययसाधुत्वार्थं तत्प्रयोग इति भावः। तदेव दर्शयति—इत्थं भुङ्क्ते इत्यर्थ इति। 'समानकर्तृकयोः पूर्वकाले' इत्यसम्भवान्नानुवर्तते इति भावः। सिद्धेति किमिति। सिद्धाऽप्रयोगश्चेदिति किमर्थमित्यर्थः। भाष्ये 'अन्यथा कृत्वा चोदित'मिति प्रयोगात् समानकर्तृकत्वाऽभावेऽपि क्त्वाप्रत्ययो बोध्यः। यथातथयोः। इत्येवेति। यथा तथा अनयोरुपपदयोः कृञः णमुल् स्यात्सिद्धाऽप्रयोगश्चेत् कृञिति फलितम्। असूयया प्रतिवचनमिति विग्रहः। 'कर्तृकरणे कृता बहुलम्' इति समासः। तदाह—असूययेति। कर्मणि दृशिविदोः। कर्मणीति नाऽर्थनिर्देश इत्याह—कर्मण्युपपदे इति। कर्मण्युपपदे तदर्थस्य धात्वर्थं प्रति कर्मभूतस्य साकल्ये गम्ये दृशिविदिभ्यां णमुल् इति फलितम्। 'समानकर्तृकयोः पूर्वकाले' इत्यनुवर्तत एव। वरयतीति। 'वर ईप्सायाम्' चुरादौ कथादिरदन्तः। अल्लोपस्य स्थानिवत्त्वान्नोपधावृद्धिः। विदि विवृणोति—जानाति लभते विचारयति वेति। "सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे। विन्दते वि-

सर्वं भोजयतीत्यर्थः । **३३५१ यावति विन्दजीवोः ३।४।३०॥** यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः । यावज्जीवमधीयते । **३३५२ चर्मोदरयोः पूरेः ३।४।३१॥** कर्मणीत्येव । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते । **३३५३ वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ३।४।३२॥** कर्मण्युपपदे पूरेर्णमुल्स्यादूकारलोपश्च वा, समुदायेन वर्षप्रमाणे गम्ये । गोष्पदपूरं वृष्टो देवः । गोष्पदप्रं वृष्टो देवः । अस्य इति किम् । उपपदस्य मा भूत् । मूषिकाबिलप्रम् । **३३५४ चेले क्नोपेः ३।४।३३॥** चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल्स्याद्वर्षप्रमाणे । चेलक्नोपं ( शब्दायन् ) वृष्टो देवः । वस्त्रक्नोपम् । वसनक्नोपम् । ( यथा वर्षणे वस्त्रम् शब्दायते तथाऽवर्षदित्यर्थः ) । **३३५५ निमूलसमूलयोः कषः ३।४।३४॥** कर्मणीत्येव । कषादिष्वनुप्रयोगं वक्ष्यति । अत्र प्रकरणे पूर्वकाले इति न सम्बध्यते । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः । एकस्यापि धात्वर्थस्य निमूलादिविशेषणसम्बन्धाद्भेदः । तेन सामान्यविशेषभावेन विशेषणविशेष्यभावः । **३३५६ शुष्कचूर्णरूक्षेषु पिषः ३।४।३५॥** एषु कर्मसु पिषेर्णमुल् । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् । **३३५७ समूलाऽकृत-**

---

न्वृत्ति प्राप्तो ण्यन्नुलुकृन्नमूशेष्विदं क्रमात्'' इति प्रागुक्तम् । **तत्र सत्तार्थकस्य विदेरिह न ग्रहणम् अकर्मकत्वादिति भावः ।** यावति विन्दजीवोः । **यावच्छब्दे उपपदे विन्दतेः जीवतेश्च णमुलित्यर्थः । इह पूर्वकाल इति न सम्बध्यते, अयोग्यत्वात् अप्रतीतेश्च । एवमन्यत्रापि । यावज्जीवमधीते । यावन्तं कालं जीवति तावन्तं कालमधीते इत्यर्थः । 'अकर्मकधातुभिर्योगे' इति कर्मत्वात् यावच्छब्दाद्द्वितीया ।** चर्मोदरयोः पूरेः । **चर्मणि उदरे च कर्मण्युपपदे पूरयतेर्णमुलित्यर्थः ।** चर्मपूरं स्तृणातीति । **चर्म पूरयन् छादयतीत्यर्थः ।** गोष्पदप्रमिति । **पूरेर्णमुलि णिलोपे ऊलोपपक्षे च रूपम् । अत्र वृष्टेर्गोष्पदपूरणक्षमत्वादल्पत्वं गम्यते ।** अस्येति किमिति । **पूरेरित्यर्थकम् 'अस्येति' किमर्थमित्यर्थः ।** मूषिकाबिलप्रमिति । **'अस्येत्यनुक्तौ उपपदेऽपि ऊकारस्य लोपः स्यादिति भावः ।** चेले क्नोपेः । **चेल इत्यर्थग्रहणम् , व्याख्यानादिति भावः । 'क्नूयी शब्दे' इति भ्वादौ ।** तदाह—चेलक्नोपमिति । **क्नोपशब्दार्थं स्फोरयति**—शब्दायन्निति । **वर्षप्रमाणं स्फोरयितुमाह**—यथा वर्षण इति । निमूलसमूलयोः कषः । **निमूले समूले च कर्मण्युपपदे कषेर्णमुलित्यर्थः ।** वक्ष्यतीति । **'कषादिषु यथाविध्यनुप्रयोगः' इति णमुल्प्रकृतेरनुप्रयोगं वक्ष्यतीत्यर्थः ।** न सम्बध्यते इति । **अयोग्यत्वादप्रतीतेश्च इति भावः । णमुल्प्रकृतेरनुप्रयुज्यमानधातोश्च पौनरुक्त्यं परिहरति**—एकस्यापीति । **निमूलसमूलकषणापेक्षया केवलकषणमन्यत् । यथा इन्द्रो महेन्द्र इति भावः ।** तेन सामान्येति । **निमूलसमूलकषणात्मकं कषणमिति बोधः । यथा महादेवो देव इत्या-**

**जीवेषु हन्कृञ्ग्रहः ३।४।३६ ॥** कर्मणीत्येव । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवतीति जीवः । इगुपधलक्षणः कः । जीवन्तं गृह्णातीत्यर्थः । **३३५८ करणे हनः ३।४।३७॥** पादघातं हन्ति । पादेन हन्तीत्यर्थः । यथाविध्यनुप्रयोगार्थः सन्नित्यसमासार्थोऽयं योगः । भिन्नधातुसम्बन्धे तु 'हिंसार्थानां च—' ( सू ३३६९ ) इति वक्ष्यते । **३३५९ स्नेहने पिषः ३।४।३८ ॥** स्निह्यते येन तस्मिन्करणे पिषेर्णमुल् । उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः । **३३६० हस्ते वर्तिग्रहोः ३।४।३९॥** हस्तार्थे करणे । हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुलिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् । **३३६१ स्वे पुषः ३।४।४०॥** करण इत्येव । स्व इत्यर्थग्रहणम् । तेन स्वरूपे पर्याये विशेषे च णमुल । स्वपोषं पुष्णाति ।

---

**दाविति भावः ।** शुष्कचूर्णरूक्षेषु पिषः । कर्मस्विति । **'उपपदेष्वि'ति शेषः । अत्र पिषधातोरनुप्रयोगः ।** समूलाकृत । **समूल, अकृत,** जीव **एषां द्वन्द्वः । कर्मणीत्येव । समूलादिषु कर्मसूपपदेषु हन् कृञ् ग्रह् एभ्यो णमुलित्यर्थः । यथासङ्ख्यमत्रेष्यते । जीवशब्दस्य भावघञन्तत्वे प्राणधारणं गृह्णातीत्याश्रयणे हन्तीत्यर्थः स्यात्, न तु जीवन्तं गृह्णातीत्यर्थः स्यादित्यत आह—**जीवतीति । जीव इति । **ननु 'अकर्तरि च कारके' इति पर्युदासात् कथं कर्तरि घञित्यत आह—**इगुपधेति । करणे हनः । **ननु 'हिंसार्थानां च समानकर्मकाणाम्' इत्यनुपदं वक्ष्यमाणसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह—**यथाविध्यादि । **कषादिषु यथाविध्यनुप्रयोगसिद्ध्यर्थः सन् 'उपपदमतिङ्' इति नित्यसमासार्थोऽयमारम्भ इत्यर्थः । अनुप्रयोगार्थो, नित्यसमासार्थश्चेति यावत् । 'हिंसार्थानां चे'ति सूत्रं च कषादिबहिर्भूतं, तस्यात्र प्रवृत्तौ तु अनुप्रयोगो न स्यात् । किञ्च 'हिंसार्थानां च' इति सूत्रम् 'उपदंशस्तृतीयायाम्' इत्युत्तरं पठितम् । तस्याऽत्र प्रवृत्तौ 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति वैकल्पिक उपपदसमासः स्यादिति भावः । भाष्ये तु अहिंसार्थं, नित्यसमासार्थं चेति स्थितम् । तर्हि 'हिंसार्थानां चे'त्यस्य को विषय इत्यत आह—**भिन्नेति । **णमुल्प्रकृतिभूतहनधात्वपेक्षया धात्वन्तरयोगे तु 'दण्डोपघातं गाः कालयति** दण्डेनोपघातमित्यत्र **'हिंसार्थानां च' इत्यस्य प्रवृत्तिर्वक्ष्यत इत्यर्थः ।** स्नेहने पिषः । उदपेषमिति । **'पेषंवासवाहनधिषु च' इति उदकशब्दस्य उदादेशः ।** हस्ते वर्तिग्रहोः । **पञ्चम्यर्थे षष्ठी । हस्त इत्यर्थग्रहणम्, व्याख्यानात् । तथा च हस्तार्थक इति लभ्यते, करण इत्यनुवर्तते, तदाह—**हस्तार्थे करणे इति । **करणकारकीभूतहस्तपर्याये उपपदे ण्यन्तवृतुधातोर्ग्रहधातोश्च णमुलित्यर्थः ।** स्वे पुषः । **अर्थग्रहणम्**इति । **व्याख्यानादिति भावः ।** तेनेति । **स्वरूपे स्वशब्दे, स्वपर्याये धनादिशब्दे, विशेषेषु स्वविशेषवाचिगवादिशब्देषु चोपपदेषु णमुलित्यर्थः । एतच्च 'स्वं रूपम्' इति सूत्रे भाष्ये स्पष्टम् । तत्र स्वशब्दे उपपदे उदाहरति—**स्वपोषमिति । **ध-**

धनपोषम्। गोपोषम्। **३३६२ अधिकरणे बन्धः ३।४।४१॥** चक्रबन्धं बध्नाति। चक्रे बध्नातीत्यर्थः। **३३६३ संज्ञायाम् ३।४।४२॥** बध्नातेर्णमुलस-ञ्ज्ञायाम्। क्रौञ्चबन्धं बद्धः। मयूरिकाबन्धम्। अट्टालिकाबन्धम्। बन्धविशे-षाणां सञ्ज्ञा एताः। **३३६४ कर्त्रोर्जीवपुरुषयोर्नशिवहोः ३।४।४३॥** जीव-नाशं नश्यति। जीवो नश्यतीत्यर्थः। पुरुषवाहं वहति। पुरुषो वहती-त्यर्थः। **३३६५ ऊर्ध्वे शुषिपूरोः ३।४।४४॥** ऊर्ध्वे कर्तरि। ऊर्ध्वशोषं शुष्य-ति। वृक्षादिरूर्ध्व एव तिष्ठञ्छुष्यतीत्यर्थः। ऊर्ध्वपूरं पूर्यते। ऊर्ध्वमुख एव घटा-दिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः। **३३६६ उपमाने कर्मणि च ३।४।४५॥** चात्कर्तरि। घृतनिधायं निहितं जलम्। घृतमिव सुरक्षितमित्यर्थः। अजक-नाशं नष्टः। अजक इव नष्ट इत्यर्थः। **३३६७ कषादिषु यथाविध्यनुप्र-योगः ३।४।४६॥** यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्य इत्यर्थः। तथैवोदाहृतम् **३३६८ उपदंशस्तृतीयायाम् ३।४।४७॥** इतः प्रभृति पूर्वकाल इति सम्ब-ध्यते। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (सू ७८४) इति वा समासः। मूलकोप-दंशं भुङ्क्ते। मूलकेनोपदंशम्। दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात्तृती-या। यद्यप्युपदंशिना सह न शाब्दः सम्बन्धस्तथाप्यार्थोऽस्त्येव, कर्मत्वात्। एता-

---

नेन पुष्णातीत्यर्थः। पर्याये उपपदे उदाहरति—धनपोषमिति। स्वविशेष उपपदे उदाहरति—गोपोषमिति। अधिकरणे। अधिकरणे उपपदे बन्धधातोर्णमुलित्य-र्थः। संज्ञायाम्। अनधिकरणार्थं आरम्भः। कर्त्रोः। 'नशिवहोः' इति पञ्चम्यर्थे षष्ठी। कर्तरि जीवे उपपदे नशेः, कर्तरि पुरुषे उपपदे वहधातोर्णमुलित्यर्थः। ऊर्ध्वे शुषि। ऊर्ध्वे कर्तरीति। उपपदे शुषेः पूरेश्च णमुलिति शेषः। उपमाने। चात्कर्तरीति। कर्मणि कर्तरि च उपमाने उपपदे धातोर्णमुलित्यर्थः। कषादिषु। यस्मादिति। धातो-रिति शेषः। णमुलुक्त इति। 'निमूलसमूलयोः कषः' इत्यारभ्य 'उपमाने कर्मणि च' इत्यन्तैः सूत्रैरिति शेषः। तथैवोदाहृतमिति। 'निमूलकाषं कषतीत्यादा'विति शेषः। पृथं च पृथगिह नोदाहर्तव्यमिति भावः। उपदंशस्तृतीयायाम्। सम्बध्यते इति। 'मण्डूक-प्लुत्ये'ति शेषः। तृतीयाऽन्ते उपपदे उपपूर्वाद्दंशधातोर्णमुल् समानकर्तृकयोः पूर्व-काले इत्यर्थः। नित्यमुपपदसमासमाशङ्क्य आह—तृतीयाप्रभृतीनीति। ननु 'मूलकेनो-पदंशं भुङ्क्ते' इत्यत्र मूलकस्य उपदंशनं प्रति कर्मत्वात् कथं मूलकात् तृतीया, कथं वा उपदंशात् णमुल् इत्यत आह—दश्यमानस्येत्यादि। प्रधानक्रियानुरोधात् परत्वा-च्चेति भावः। ननु मूलकस्य भुजिक्रियां प्रति करणत्वे उपदंशनेन असामर्थ्यात्स-मासानुपपत्तिरिति शङ्कते—यद्यपीति। उपदंशिना सह मूलकस्य कर्मत्वेनान्वयः शब्द-गम्यो न भवति। तस्य भुजिक्रियां प्रति करणत्वेनान्वयस्योक्तत्वादित्याक्षेपः। समा-

त्तैव सामर्थ्येन प्रत्ययः समासश्च । 'तृतीयाया'मिति वचनसामर्थ्यात् । ( ततश्चायमर्थः । मूलकेन भुङ्क्ते इति शाब्दान्वये किं कृत्वेत्याकाङ्क्षया उपदश्येति तदेव कर्मत्वेनान्वेति )। **३३६९ हिंसार्थानां च समानकर्मकाणाम् ३।४।४८॥** तृतीयान्त उपपदेऽनुप्रयोगधातुना समानकर्मकाद्धिंसार्थात् णमुल्स्यात् । दण्डोपघातं गाः कालयति दण्डेनोपघातम् । दण्डताडम् । समानकर्मकाणाम् इति किम् । दण्डेन चोरमाहत्य गाः कालयति । **३३७० सप्तम्यां चोपपीडरुधकर्षः ३।४।४९॥** उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल्स्यात् । पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडम् , पार्श्वाभ्यामुपपीडम् । व्रजोपरोधं गाः स्थापयति । व्रजेन व्रजे उपरोधं वा । पाण्युपकर्षं धानाः सङ्गृह्णाति । पाणावुपकर्षम् । पाणिनोपकर्षम् । **३३७१ समासत्तौ ३।४।५०॥** तृतीयासप्तम्योर्धातोर्णमुल्स्यात्सन्निकर्षे गम्यमाने । केशग्राहं युध्यन्ते ( युद्धसंरम्भात् )। केशेषु गृहीत्वा । हस्तग्राहम् । हस्तेन

---

घत्ते—तथापीति । भुजिक्रियां प्रति शाब्दमर्यादया करणत्वेनान्वितस्यापि मूलकस्योपदंशनं प्रति आर्थिकः कर्मत्वेनान्वयोऽस्त्येव । मूलकस्योपदंशनं प्रति वस्तुतः कर्मत्वस्य सत्त्वादित्यर्थः । नन्वार्थिककर्मत्वान्वयमादाय कथं तृतीया, कथं वा णमुल्, कथं वा समास इत्यत आह—यतावतैवेति । कुत एतदित्यत आह—तृतीयायामिति । वचनसामर्थ्यादिति । यदि तृतीयान्ते शाब्दान्वय एवात्र विवक्ष्यते, तदा करणे इत्येवावक्ष्यत् 'करणे हनः' इतिवदिति भावः । मूलकस्य भुजिक्रियां प्रति करणत्वान्वयः शाब्दः । उपदंशे कर्मत्वान्वयः आर्थिकः इत्येतदुपपादयति—ततश्चायमर्थ इति । 'मूलकेन भुङ्क्ते' इत्यन्वयः शाब्दः । प्रधानक्रियानुरोधात्परत्वाच्च तृतीयाविभक्तेः प्रवृत्तेरिति भावः । किं कृत्वेति । किं कृत्वा मूलकेन भुङ्क्ते इत्याकाङ्क्षायां उपदश्येत्यन्वेतीत्यर्थः । तदेवेति । किमुपदश्येत्याकाङ्क्षायां तदेव मूलकमर्थात् कर्मत्वेनान्वेतीत्यर्थः। हिंसार्थानां च । दण्डोपघातं गाः कालयतीति । 'कल विक्षेपे' चुरादिः । तत्रानुप्रयुज्यमानकालयतेरुपहन्तेश्च गावः कर्म । अतः समानकर्मकत्वमुपहन्तेरिति भावः । दण्डेनोपघातमिति । 'तृतीयाप्रभृतीन्यन्यतरस्या'मिति उपपदसमासविकल्प इति भावः । दण्डताडमिति । 'तड आघाते' चुरादिः । सप्तम्यां चोपपीड । चात्तृतीयायामिति समुच्चीयते । 'कृष विलेखने' इति धातोः शपि कृतलघूपधगुणस्य कर्षेति निर्देशः । अतस्तौदादिकस्य निरासः । पीड, रुध, कर्ष, एषां समाहारद्वन्द्वात्पञ्चम्यर्थे प्रथमा । पुंस्त्वं चार्षम् । उपपूर्वः पीडरुधकर्षः इति मध्यमपदलोपिसमासः । तदाह—उपपूर्वेभ्य इति। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति उपपदसमासविकल्पं मत्वा आह—पार्श्वयोरुपपीडमिति । तौदादिकात्तु कृषेः क्त्वाप्रत्यय एव न तु णमुल् । क्षेत्रे उपकृष्य बीजान्यावपति । हलेनोपकृष्येति । यद्यपि तौदादिकोऽपि विलेखनार्थक एव । तथापि क्षेत्रविषयविलेखन एव तस्य प्रवृत्तेरित्याहुः । समासत्तौ । 'समासत्तिपदं' विवृणोति—

गृहीत्वा । **३३७२ प्रमाणे च ३।४।५१॥** तृतीयासप्तम्योरित्येव । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुलेन द्व्यङ्गुले वोत्कर्षम् । **३३७३ अपादाने परीप्सायाम् ३।४।५२॥** परीप्सा त्वरा । शय्योत्थायं धावति । एवं नाम त्वरते यदवश्यकर्तव्यमपि नापेक्षते । शय्योत्थानमात्रमपेक्षते । **३३७४ द्वितीयायां च ३।४।५३॥** परीप्सायामित्येव । यष्टिग्राहं युध्यन्ते । लोष्टग्राहम् । **३३७५ अपगुरो णमुलि ६।१।५३॥** 'गुरी उद्यमने' इत्यस्यैचो वा आत्स्याण्णमुलि । अस्यपगारं युध्यन्ते । अस्यपगोरम् । **३३७६ स्वाङ्गेऽध्रुवे ३।४।५४॥** द्वितीयायामित्येव । अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल् । भ्रूविक्षेपं कथयति । भ्रुवं विक्षेपं । अध्रुवे किम् । शिर उत्क्षिप्य । येनाङ्गेन विना न जीवनं तद्ध्रुवम् । **३३७७ परिक्लिश्यमाने च ३।४।५५॥** सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते णमुल्स्यात् । उरःप्रतिपेषं युध्यन्ते । कृत्स्नमुरः पीडयन्त इत्यर्थः । 'उरोविदारं प्रतिचस्करे नखैः' । ध्रुवार्थमिदम् । **३३७८ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ३।४।५६॥** द्वितीयायामित्येव । द्वितीयान्ते उपपदे विश्यादिभ्यो णमुल्स्याद्व्याप्यमाने, आसेव्यमाने चार्थे गम्ये । गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः । क्रियायाः पौनःपुन्यमासेवा । 'नित्यवीप्सयोः' ( सू

---

सन्निकर्षे गम्यमाने इति । संनिकर्षोऽव्यवधानेन संयोगः । केशग्राहमिति । **सन्निकर्षपरमेतत् । अत्यन्तं संनिहिता युध्यन्ते इत्यर्थः । तदाह**—यद्धसंरम्भादिति । **युद्धातिशयवशाद्योद्धारः परस्परं अत्यन्तं संनिहिता भवन्तीत्यर्थः** । प्रमाणे च । इत्येवेति । **तृतीयान्ते सप्तम्यन्ते चोपपदे धातोर्णमुल् स्यात् प्रमाणे गम्ये इत्यर्थः । इत्वः खण्डः खण्डिका ।** द्व्यङ्गुलेनेति । **'तत्पुरुषस्याङ्गुलेः' इति टजिति भावः** । अपादाने । **अपादाने उपपदे धातोर्णमुल् स्यात् परीप्सायां गम्यमानायामित्यर्थः । त्वरां दर्शयितुमाह**—एवं नामेत्यादि । द्वितीयायां च । **द्वितीयान्ते उपपदे धातोर्णमुलित्यर्थः ।** स्वाङ्गेऽध्रुवे । **'अध्रुवे' इति छेद इति मत्वा आह**—अध्रुव इति । **ननु 'शिर उत्क्षिप्ये'ति कथं प्रत्युदाहरणम् । शिरसोऽपि** अध्रुवत्वादित्यत **आह**—येनाङ्गेनेति । परिक्लि । उरोविदारमिति । **कृत्स्नमुर इत्यर्थः** । प्रतिचस्कर इति । **'कॄ विक्षेपे' प्रतिपूर्वात्कर्मणि लिट् । 'सुट्कात्पूर्वः' इति 'अडभ्यासव्यवायेऽपि' इति चानुवृत्तौ 'किरतौ लवने' 'हिंसायां प्रतेश्च' इति सुट् । नखैः प्रतिचिक्षिपे इत्यर्थः । ननु 'उरःप्रतिपेष'मित्यादौ स्वाङ्गत्वादेव पूर्वसूत्रेणैव सिद्धमित्यत आह**—ध्रुवार्थमिति । **उरो विना जीवनाऽभावात् उरः ध्रुवमिति भावः ।** विशिपति । गेहादिद्रव्याणामिति । **तथा च 'गेहानुप्रवेशमास्ते' इत्यत्र सर्वाणि गेहान्यनुप्रविश्येति पुनःपुनर्गेहमनुप्रविश्येति वा अर्थः । उभयथापि न द्वित्वमित्याह**—

२१४० ) इति द्वित्वं तु न भवति । समासेनैव स्वभावतस्तयोरुक्तत्वात् । यद्यप्याभीक्ष्ण्ये णमुलुक्त एव, तथापि असति ह्यासेवार्थकणमुलि आभीक्ष्ण्यणमुलः 'तृतीयाप्रभृतीनि' इत्यत्र सद्ग्रहाभावात् उपपदसंज्ञार्थमासेवायामिह पुनर्विधिः । गेहानुप्रवेशमास्ते । गेहंगेहमनुप्रवेशम् । गेहमनुप्रवेशमनुप्रवेशम् । एवं गेहानुप्रपातम् । गेहानुप्रपादम् । गेहानुस्कन्दम् । असमासे तु गेहस्य णमुलन्तस्य च पर्यायेण द्वित्वम् । **३३७९ अस्यतितृषोः क्रियान्तरे कालेषु ३।४।५७॥** क्रियामन्तरयति व्यवधत्त इति क्रियाऽन्तरः । तस्मिन्धात्वर्थे वर्तमानादस्यतेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषूपपदेषु णमुल्स्यात् । द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासम् । द्व्यहतर्षम् । द्व्यहं तर्षम् । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः । **३३८० नाम्न्यादिशिग्रहोः ३।४।५८॥** द्वितीयायामित्येव । नामादेशमाचष्टे । नामग्राहमाह्वयति । **३३८१ अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ३।४।५९॥** अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य च नीचैः कथनम् । उच्चैःकृत्य, उच्चैःकृत्वा, उच्चैःकारमप्रियमाचष्टे । नीचैःकृत्य, नीचैःकृत्वा, नीचैः-

---

नित्यवीप्सयोरिति द्वित्वं तु न भवतीति । कुत इत्यत आह—समासेनैवेति । ननु समासेन कथमिह कथनं व्याप्त्यासेवयोरित्यत आह—स्वभावत इति । ननु 'आभीक्ष्ण्ये णमुल् च' इत्यनेनैव सिद्धत्वात् इह आसेवाग्रहणं व्यर्थम् । न च क्त्वानिवृत्तिः फलमिति शङ्क्यम् । क्त्वाप्रत्ययस्यापि पक्षे इष्टत्वादिति शङ्कते—यद्यपीति । समाधत्ते—तथापीति । द्वितीयान्तस्योपपदसंज्ञार्थमित्यर्थः । नन्विह आसेवाग्रहणाऽभावे 'तत्रोपपद'मिति उपपदसंज्ञा कुतो नेत्यत आह—असति हीति । यद्यप्यासेवायां णमुल्विध्यभावेऽपि 'आभीक्ष्ण्ये णमुल् च' इति णमुल् सिध्यति, तथापि 'आभीक्ष्ण्ये णमुल् च, इति सूत्रे द्वितीयान्तस्य सप्तम्या निर्देशेन ग्रहणाऽभावादुपपदसंज्ञा न स्यात् । ततश्च 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति उपपदसमासविकल्पो न स्यादिति भावः । असमासे त्विति । व्याप्तौ णमुलि गेहस्य व्याप्यमानत्वात् द्वित्वम् । आसेवायां णमुलि तु णमुलन्तस्य द्वित्वम् । क्रियापौनःपुन्यस्यैव आसेवात्वादिति भावः । अस्यतितृषोः । द्व्यहात्यासमिति । द्व्यहमतिक्रम्येत्यर्थः । अतिपूर्वादस्यतेर्णमुल् । द्व्यहतर्षमिति । द्व्यहं तृष्णावतीः कृत्वेत्यर्थः । नाम्न्यादिशिग्रहोः । नाम्नि आदिशिग्रहोरिति च्छेदः । पञ्चम्यर्थे षष्ठी । द्वितीयान्ते नामन्शब्दे उपपदे आङ्पूर्वकदिशेः ग्रहधातोश्च णमुलित्यर्थः । अव्ययेऽयथाभि । अप्रियस्य नीचैः कथनं, प्रियस्योच्चैः कथनं च अभिप्रेतम् इष्टम्, तद्विपरीतम् अनभिप्रेतम् । तदाह—अयथाभिप्रेताख्यानं नामेत्यादि । 'तृतीया-

कारं प्रियं ब्रूते। **३३८२ तिर्यच्यपवर्गे ३।४।६०॥** तिर्यक्छब्द उपपदे कृञः क्त्वाणमुलौ स्तः समाप्तौ गम्यायाम्। तिर्यक्कृत्य गतः। तिर्यक्कारम्। समाप्य गत इत्यर्थः। अपवर्गे किम्। तिर्यक्कृत्वा काष्ठं गतः। **३३८३ स्वाङ्गे तस्प्रत्यये कृभ्वोः ३।४।६१॥** मुखतःकृत्य गतः, मुखतः कृत्वा, मुखतःकारम्। मुखतो भूय, मुखतो भूत्वा, मुखतो भावम्। **३३८४ नाधार्थप्रत्यये च्व्यर्थे ३।४।६२॥** नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभुवोः क्त्वाणमु स्तः। अनाना नाना कृत्वा नानाकृत्य, नानाकृत्वा, नानाकारम्। विनाकृत्य, विनाकृत्वा, विनाकारम्। नानाभूय, नानाभूत्वा, नानाभावम्। अनेकं द्रव्यमेकं भूत्वा एकधाभूय, एकधाभूत्वा, एकधाभावम्। एकधाकृत्य, एकधाकृत्वा, एकधाकारम्। प्रत्ययग्रहणं किम्। हिरुक्कृत्वा। पृथग्भूत्वा। **३३८५ तूष्णीमि भुवः ३।४।६३॥** तूष्णींशब्दे उपपदे भुवः क्त्वाणमुलौ स्तः। तूष्णींभूय। तूष्णींभूत्वा। तूष्णींभावम्। भूग्रहणं कृञो निवृत्त्यर्थम्। **३३८६ अन्वच्यानुलोम्ये ३।४।६४॥** अन्वक्छब्दे उपपदे भुवः क्त्वाणमुलौ स्त आनुकूल्ये गम्यमाने। अन्वग्भूय आस्ते। अन्वग्भूत्वा, अन्वग्भावम्। अग्रतः पार्श्वतः पृष्ठतो वाऽनुकूलो भूत्वा आस्त

---

प्रभृतीन्यन्यतरस्याम्' इति समासविकल्पं मत्वा आह—उच्चैःकृत्य उच्चैः कृत्वेति। समासपक्षे ल्यबिति भावः। उच्चैःकारमिति। अत्र समासतदभावयोर्नास्ति विशेषः। स्वरे तु विशेषः। तिर्यच्यपवर्गे। 'तिरश्चीति भवितव्यम् सौत्रो निर्देश' इति भाष्यम्। 'अपवर्ग' इत्यस्य विवरणम्—समाप्ताविति। स्वाङ्गे तस्प्रत्यये। पञ्चम्यर्थे षष्ठीद्विवचनम्। तस् प्रत्ययो यस्मादिति बहुव्रीहिः। तस्प्रत्ययान्ते स्वाङ्गे उपपदे कृञो भुवश्च क्त्वाणमुलावित्यर्थः। इह न यथासङ्ख्यं व्याख्यानात्। नाधार्थ। 'विनञ्भ्यां नानाञौ नसह'इति सूत्रे असहत्वे विनञ्भ्यां नाप्रत्ययो विहितः। 'सङ्ख्याया विधार्थे धा' इति धाप्रत्ययो विहितः। तस्य अर्थ इव अर्थो यस्य सः धाऽर्थः। नाप्रत्ययो, धार्थकश्च प्रत्ययो यस्मादिति बहुव्रीहिः। तदाह—नाधार्थप्रत्ययान्ते इति। नाप्रत्ययान्ते धार्थप्रत्ययान्ते उपपदे इत्यर्थः। अर्थग्रहणं धाप्रत्ययमात्रेऽन्वेति। तेन धमुञोऽपि ग्रहणं लभ्यते। नाप्रत्यये त्वर्थग्रहणं नान्वेति, नाप्रत्ययान्ते धार्थप्रत्ययान्ते च्व्यन्तविषये उपपदे इत्यर्थः। अत एव भाष्ये अर्थग्रहणं किम् द्विधाकृत्य द्वैधंकृत्येत्येवोक्तम्। तूष्णीमि भुवः। ननु 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इत्यतः अनुवृत्त्यैव सिद्धे भूग्रहणं व्यर्थमित्यत आह—कृञो निवृत्त्यर्थमिति। अन्वच्यानुलोम्ये। 'अनूचीत्येव वक्तुमुचितं सौत्रोऽयं निर्देशः। तिर्यच्यपवर्गे इतिवत्। आनुलोम्यम् आनुकूल्यम्। पृष्ठतो भूत्वेति। 'अग्निप्रथमाः प्रतिपद्य-

इत्यर्थः । आनुलोम्ये किम् । अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वेत्यर्थः ।

इत्युत्तरकृदन्तप्रकरणम् ।

इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम् ।
विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥
भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी ।
प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः ॥

**इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्धं समाप्तम् ॥**

---

न्ते अन्वगध्वर्युः' इत्यादौ अन्वक्छब्दस्य पृष्ठभागे प्रसिद्धेरिति भावः ।

इत्युत्तरकृदन्तप्रकरणम् ।

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकारादिबहुगुणविराजमानप्रौढाऽपरिमितमहाध्वरस्य श्रीशाहजी शरभजी तुक्कोजी भोसल-चोलमहीमहेन्द्राऽऽमात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्याध्वर्युणा, पञ्चपुरुषीपोष्येण, बाल्य एव तद्दयानिर्वर्तिताऽपरिमिताऽग्निविजम्भितवाजपेयसर्वपृष्ठाप्तोर्यामप्रमुखमखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन, पदवाक्यप्रमाणपारावारपारीणाऽग्रजन्मविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन अध्वरमीमांसाकुतूहलवृत्तिनिर्माणप्रकटितसर्वतन्त्रस्वातन्त्र्येण, बौधायनापस्तम्बसत्याषाढभारद्वाजकात्यायनाश्वलायनद्राह्यायणादिकल्पसूत्रतद्भाष्यपारीणमहादेववाजपेययाजिसुतेन अन्नपूर्णाम्बागर्भजातेन वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायाम् उत्तरार्धं सम्पूर्णम्



बालमनोरमा सम्पूर्णा ।



*

श्रीजयकृष्णकृत–सुबोधिनीव्याख्यासंवलिता

# वैदिकी-प्रक्रिया ॥ २७ ॥

## प्रथमोऽध्यायः ।

श्रीगणाधीशाय नमः ।

सिन्दूरेण विराजितं त्रिनयनं दिक्सङ्ख्यदोभिर्युतं
भक्तानुग्रहकारकं प्रमदयाऽऽश्लिष्टं सदानन्दनम् ।
अष्टाविंशतिवर्णकैश्च सततं यं चिन्तयन्ते जना-
स्तं देवं गणपं स्मरामि सततं चन्द्रार्धचूडं विभुम् ॥ १ ॥
यस्तर्कादिसमस्ततन्त्रकमलव्रातप्रसादेष्विव
प्रत्यक्षप्रमितः परः किरणवानन्वर्थगोवर्धनः ।
सोऽयं पण्डितमण्डलोद्भटरटद्वादीन्द्रवृन्दाग्रणीः
श्रीरामाऽङ्घ्रिनिषेवकः समजनि श्रीमौनिगोवर्द्धनः ॥ २ ॥
रघुनाथपदारविन्दसेवावशतस्तस्य बभूव नन्दनः ।
रघुनाथ इतीडयनामगम्यो रघुनाथाङ्घ्रिनिषेवकः सुधीः ॥ ३ ॥
बभूवुस्तस्य चत्वारस्तनयाः सुनया बुधाः ।
महादेवाभिधः श्रेष्ठो महाभाष्यसुभाषितः ॥ ४ ॥
रामकृष्णो द्वितीयोऽसौ रामकृष्णाऽङ्घ्रिसेवकः ।
तृतीयो जयकृष्णोऽस्मि श्रीकृष्णो नाम सूद्भवः ॥ ५ ॥
श्रीमत्सिद्धान्तकौमुद्याः स्वरवैदिकखण्डयोः ।
नत्वा मुनित्रयं हृद्यां टीकां कुर्वे सुबोधिनीम् ॥ ६ ॥
सुशब्दव्रातश्रीकुमुदवनविद्योतनकरी
सदा सद्व्युत्पत्तिप्रसरणपरानन्दनकरी ।
कुशब्दध्वान्तस्य प्रसभमभिविध्वंसनकरी
कृतिर्भूयादेषा बुधजनमनःप्राङ्गणचरी ॥ ७ ॥

इयता प्रबन्धेन लौकिकेषु शब्देष्वन्वाख्यातेष्वपि वैदिकान्वाख्यानमवशिष्यते । न चेदमप्रयोजनम् । 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति वदता भाष्यकारेणैव-

**३३८७ छन्दसि पुनर्वस्वोरेकवचनम् १।२।६१॥** द्वयोरेकवचनं वा स्यात्। पुनर्वसु नक्षत्रं, पुनर्वसू वा। लोके तु द्विवचनमेव। **३३८८ विशाखयोश्च १।२।६२॥** प्राग्वत्। विशाखा नक्षत्रम्। विशाखे वा। **३३८९ षष्ठीयुक्तश्छन्दसि वा १।४।९॥** षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात्। क्षेत्रस्य पतिना वयम्। इह वेति योगं विभज्य छन्दसीत्यनुवर्तते। सर्वे विधयश्छन्दसि वैकल्पिकाः। तेन 'बहुलं छन्दसि' ( सू० ३४०१ ) इत्यादिरस्यैव प्रपञ्चः। 'यचि भम्' ( २३१ )। **नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्** ( वा० १०५८ )। नभसा तुल्यं नभस्वत्। भत्वाद्रुत्वाभावः। अङ्गिरस्वदङ्गिरः। मनुष्यदग्ने। (उ०)

---

रक्षाया व्याकरणारम्भस्य प्रयोजनत्वेन मुख्यतयाऽभिधानात्। 'ब्राह्मणेन निष्कारणः-षडङ्गो वेदोऽध्येयो ज्ञेयश्चे'ति वेदार्थज्ञानोपायतया वेदाङ्गत्वेनैव व्याकरणाध्ययनविधानाच्च। नन्वेवमपि वैदिकशब्दानां लौकिकशब्दाऽभिन्नत्वात्तदनुशासनेनैव सिद्धे किमर्थन्तेषामनुशासनमिति चेन्न। लौकिकशब्देभ्यो भिन्ना अपि वैदिकशब्दाः सन्ति। तद्यथा 'त्मना देवेषु' 'मध्वा जभार' 'गृभ्णामि ते' इत्यादयो वेदे दृश्यन्ते। लोके तु 'आत्मना' 'जहार' 'गृह्णामी'त्यादयः। अत एव भाष्यकारो लौकिकेभ्यो वैदिकान्भेदेन व्यपदिशति-'अथ शब्दानुशासनं, केषां शब्दानां ? लौकिकनां वैदिकानां चेति' इति। तेषामन्वाख्यानमावश्यकमिति मनसि विभाव्याऽऽह-छन्दसीत्यादि। पुनर्वसुशब्देनोद्भूतावयवस्य ज्योतिःसमुदायस्याभिधानाद्द्वयोर्द्विवचने प्राप्ते एकवचनं विधीयते। तदाह—द्वयोरित्यादि। वा स्यादिति। द्वयोरेकवचनं वा स्यादिति 'जात्याख्यायाम्' इत्यतोऽन्यतरस्यामित्यनुवर्तनात्। लोके त्विति। 'गां गताविव दिवः पुनर्वसू'इत्यादौ। विशाखयोः। प्राग्वदिति। द्वयोरेकवचनं वा स्यादित्यर्थः। विशाखेति। अमरस्तु 'राधा विशाखेति' प्रयुञ्जानो द्विवचननियमं नेच्छति। सूत्रं तूदासीनम्। षष्ठीयुक्तश्छन्दसि वा। 'पतिः समास एव' इत्यतः पतिरिति वर्तते। 'पतिः समास एव' इति नियमादसमासे न प्राप्नोतीति वचनमारभ्यते—पतिनेति। घित्वात् 'आङो ना' इति नाभावः। षष्ठीति किम्। 'मया पत्या जरदष्टिर्यथासः'। छन्दसीति किम्। ग्रामस्य पत्ये। योगं विभज्येति। 'षष्ठीयुक्तश्छन्दसि' इति उक्त एवार्थः। ततो 'वा छन्दसि' इत्यनुवर्तते। यावदिह शास्त्रे कार्यं, तच्छन्दसि वा भवति। तदाह—नेत्यादिना। नभोऽङ्गिरसेति। नभस् अङ्गिरस् मनुष् एषां वति परे भत्वं वक्तव्यमित्यर्थः। नभस्वदिति। 'तेन तुल्यम्—' इति वतिः। भत्वफलमाह—रुत्वाऽभाव इति। 'ससजुषोः—' इति प्राप्तस्य। तत्र हि पदस्येत्यनुवर्तते। अङ्गिरसा तुल्यमङ्गिरस्वत्। अत्रापि देहलीदीपकन्यायेन 'रुत्वाऽभाव' इति सम्बध्यते। मनुष्यदिति। मनुषा तुल्यम्। अत्र भत्वात् 'आदेशप्रत्यययोः' इति षः। पदसञ्ज्ञायां

'जनेरुसिः' इति विहित उसिप्रत्ययो मनेरपि, बाहुलकात्। **वृषण्वस्वश्वयोः** (वा० १०५९)। वृषन् वर्षुकं वसु यस्य स वृषण्वसुः। वृषा अश्वो यस्यासौ वृषणश्वः। इहान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तो भत्वाद्वार्यते। अत एव 'पदान्तस्य' (सू० १९८) इति णत्वनिषेधोऽपि न। 'अल्लोपोऽनः' (सू० २३४) इत्यल्लोपो न। अनङ्गत्वात्। **३३६० अयस्मयादीनि छन्दसि १।४।२०॥** एतानि छन्दसि साधूनि। भपदसंज्ञाधिकाराद्यथायोग्यं संज्ञाद्वयं बोध्यम्। तथा च वार्तिकम्-**उभयसंज्ञान्यपीति वक्तव्यमिति** (वा १०६०)। स सुष्टुभा स ऋक्वता गणेन। पदत्वात्कुत्वम्। भत्वाज्जश्त्वाभावः। जश्त्वविधानार्थाया: पदसंज्ञाया भत्वसामर्थ्येन बाधात्। नैनं हिन्वन्त्यपि वाजिनेषु। अत्र पदत्वाज्जश्त्वम्। भत्वात्कुत्वाऽभावः। 'ते प्राग्धातोः (सू० २२३०)। **३३६१ छन्दसि परेऽपि १।४।८१॥ ३३६२ व्यवहिताश्च १।४।८२॥** हरिभ्यां याह्योक आ। आ मन्द्रैरिन्द्र हरिभिर्याहि। **३३६३ इन्धिभवतिभ्यां च १।२।६॥** आभ्यां परोऽपि-

तु रुत्वं स्यात् न षत्वम्। अपदान्तस्येति वचनात्। बाहुलकादिति। बहूनर्थान् लातीति बहुलम्। 'ला आदाने' अस्मात् 'आतोऽनुपसर्गे' इति कः। बहुलस्य भावो बाहुलकम्। मनोज्ञादित्वाद्वुञ्। वृषणित्येतद्वसु, अश्व, एतयोश्च परतो भं स्यात्। 'निपातनान्येतानि छन्दोविषयाणी'ति कैयटः। वृषण्वसुरिति। लोके वृषवसुः। वृषाश्वः। नलोपः प्राप्त इति। 'नलोपः प्रातिपदिकान्तस्य' इत्यनेन। अत एवेति। भत्वादेवेत्यर्थः। अनङ्गत्वादिति। 'अल्लोपोऽनः' इत्यत्राऽङ्गस्येत्यधिकारात्। अयस्मयादीनि। आनन्तर्याद्भसञ्ज्ञाद्वारेणैव निपातनं प्राप्तमित्याह—सञ्ज्ञाद्वयमिति। ननु 'अनन्तरस्य-' इति न्यायं बाधित्वोभयसञ्ज्ञाविधाने किं प्रमाणमित्याशङ्क्याह—तथा च वार्तिकमिति। कुत्वमिति। 'चोः कुः' इत्यनेन। जश्त्वाऽभाव इति। 'झलां जशोऽन्ते' इति प्राप्तस्य। ऋक्वतेति अयस्मयादिषु 'ऋक्वते'त्यादयः समुदाया एव बोध्याः। तेन जश्त्वमस्तु कुत्वं मा भूदिति वैपरीत्यं न प्रसज्येतेति। बोध्यम्। नैनमिति। वाचामिनाः प्रभवस्तेष्वप्येनं विद्वांसं न हिन्वन्ति। विवदितुं न गच्छन्तीत्यर्थः। ते प्रागिति। व्याख्यातम्। अस्यापवादमाह—छन्दसीत्यादि। गत्युपसर्गसञ्ज्ञकाश्छन्दसि परे प्रयोक्तव्याः। अपिशब्दात्पूर्वे। व्यव—। व्यवहिता अपि गत्युपसर्गसंज्ञकाः प्रयोक्तव्याः। सूत्रद्वयस्योदाहरणे आह—हरिभ्यामित्यादि। 'आयाही'ति प्राप्तम्। 'ते प्राग्' इत्यत्र संज्ञानियमपक्षो भाष्ये उक्तः। ते इत्यनेन प्रादीनुपेत्येतत्पर्यन्तान्स्वरूपेण परामृश्य धातोः प्राक् प्रयुक्तानामेषां पूर्वसूत्रैकवाक्यतया संज्ञाविधानात्। अस्मिंश्च पक्षे 'छन्दसि परेऽपि' 'व्यवहिताश्च' इति सूत्रद्वयं च कर्तव्यम्। इन्धि—।

ल्लिट् कित् स्यात् । समीधे दस्युहन्तमम् । पुत्र ईधे अथर्वणः । बभूव । इदं प्रत्याख्यातम् । **इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति वा । इति प्रथमोऽध्यायः ।**

## द्वितीयोऽध्यायः ।

**३३९४ तृतीया च होश्छन्दसि २।३।३।** जुहोतेः कर्मणि तृतीया स्याद्द्वितीया च । यवाग्वाऽग्निहोत्रं जुहोति । अग्निहोत्रशब्दोऽत्र हविषि वर्तते । 'यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत' इत्यादिप्रयोगदर्शनात् । अग्नये हूयत इति व्युत्पत्तेश्च । यवाग्वाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः । **३३९५ द्वितीया ब्राह्मणे २।३।६०।।** ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात् । षष्ठ्यपवादः । गामस्य तदहः सभायां दीव्येयुः । **३३९६ चतुर्थ्यर्थे**

---

इन्धीत्युच्चारणार्थेनेकारेण निर्देशः । 'सुट्तिथोः' इतिवत् न तु 'इकृश्तिपौ-'इति इका, नलोपापत्तेः । 'असंयोगात्-' इत्यतः लिट् किदित्यनुवर्तते । तदाह—लिट् किदिति । ञि इन्धी दीप्तौ, लिटः कित्त्वाद् 'अनिदिताम्-'इति नलोपः । संयोगात्परत्वात्पूर्वेणाऽप्राप्तौ वचनम् । बभूवेति । कित्त्वाद्वृद्ध्यभावे 'भुवो वुक्-' इति वुक् । अत्र पित्त्वात्पूर्वेणाऽप्राप्तौ वचनम् । इदमिति । 'इन्धी'ति सूत्रम् । छन्दोविषयत्वादिति । अयमभिप्रायः—इन्धेर्भाषायाम् 'इजादेश्च-' इत्यामा भाव्यम् । छन्दसि तु 'अमन्त्रे' इति प्रतिषेधाद् यद्यप्याम् नास्ति तथापि 'छन्दस्युभयथा' इति लिटः सार्वधातुकत्वे ङित्वात्समीधे इति नलोपः । श्नमभावस्त्वाऽर्द्धधातुकत्वात्, छन्दसि दृष्टानुविधानात् । वुको नित्यत्वादिति ।। 'परनित्य-' इति परिभाषया पराभित्यस्य बलीयस्त्वात् । कृताऽकृतप्रसङ्गित्वेन नित्यत्वात् । इति वैदिकीप्रकरणे प्रथमोऽध्यायः।

तृतीया—। 'कर्मणि द्वितीय' इत्यतः कर्मणीति वर्तते । अत्र द्वितीयायां प्राप्तायां तृतीया विधीयते, चशब्दात्सापि भवति । तदाह–कर्मणीति । यवाग्वेति । अत्र यवागूशब्दात्तृतीया । अग्नीहोत्रशब्दाच्च द्वितीया । अग्निहोत्रशब्दो हविर्वाचकः । जुहोतिश्च प्रक्षेपणार्थः । यवाग्वभिन्नं हविरग्नौ प्रक्षिपतीत्यर्थः । तदाह–यवाग्वाख्यमित्यादि । भिन्नविभक्त्यवरुद्धत्वेऽपि भिन्नार्थकविभक्त्यनवरुद्धत्वान्नामार्थयोरभेदान्वयः । भाष्ये चैतत्सूत्रं प्रत्याख्यातम् । अग्निहोत्रशब्दो ह्यग्नावपि वर्तते । 'यस्याग्निहोत्रं प्रज्वलित'मिति दर्शनात् । हूयतेऽस्मिन्निति व्युत्पत्तेश्च । तद्यदा यवागूशब्दात्तृतीया तदाऽग्निहोत्रशब्दो ह्यग्नौ वर्तते, जुहोतिश्च प्रीणने । यवाग्वा अग्निं प्रीणयतीत्यर्थः । यदा यवागूशब्दात् द्वितीया तदाऽग्निहोत्रशब्दो हविषि वर्तते, जुहोतिश्च प्रक्षेपणे । यवाग्वाख्यं हविर्द्रव्यं प्रक्षिपतीत्यर्थः द्वितीया—।'दिवस्तदर्थस्य' इति वर्तते । तदाह—ब्राह्मणेत्यादि । सोपसर्गस्य च्छन्दसि 'विभाषोपसर्गे' इत्यनेन व्यवस्थितविभाषयाऽपि

**बहुलं छन्दसि २।३।६२॥** षष्ठी स्यात् । पुरुषमृगश्चन्द्रमसः । गोधाकालका-दार्वाघाटस्ते वनस्पतीनाम् । वनस्पतिभ्य इत्यर्थः । **षष्ठ्यर्थे चतुर्थीति वाच्यम्** ( वा १५०९ ) । या खर्वेण पिबति तस्यै खर्वः । **३३९७ यजेश्च करणे २।३।६३॥** इह छन्दसि बहुलं षष्ठी । घृतस्य घृतेन वा यजते । **३३९८ बहुलं छन्दसि २।४।३९॥** अदो घस्लादेशः स्यात् । घस्तान्नूनम् । लुङि 'मन्त्रे घस' (सू०३४०२) इति च्लेर्लुक् । अडभावः । सग्धिश्च मे । **३३९९ हेमन्तशिशिरावहोरात्रे च छन्दसि २।४।२८॥** द्वन्द्वः पूर्ववल्लिङ्गः । हेमन्तश्च शिशिरश्च हेमन्तशिशिरौ । अहोरात्रे । 'अदिप्रभृतिभ्यः शपः' ( सू० २४२३ ) । **३४०० बहुलं छन्दसि २।४।७३॥** वृत्रं हनति वृत्रहा । अहिः शयत उप पृक्पृथिव्याः । अत्र लुङ् न । अदादिभिन्नेऽपि क्वचिल्लुक् । त्राध्वं नो देवाः । 'जुहोत्यादिभ्यः श्लुः' (सू०२४८९) । **३४०१ बहुलं छन्दसि २।४।७६॥** दाति प्रियाणि चिद्वसु ।

---

**सिद्धे निरुपसर्गार्थम् आरम्भः ।** षष्ठ्यपवाद इति । **'दिवस्तदर्थस्य' इति प्राप्तायाः ।** चतुर्थ्यर्थे । **बहुलग्रहणात् 'चन्द्रमसेरुदमी रात्र्यै' इत्यादौ षष्ठ्यभावः ।** यजेः—**। यजेर्धातोः करणे कारके छन्दसि विषये बहुलं षष्ठी स्यात् ।** बहुलम् । **'अदो जग्धिः—' इत्यत अद इति, 'लुङ्सनोः—' इत्यतः घस्लृ इति च । अदो बहुलं घस्लादेशः स्याच्छन्दसि ।** घस्तामिति । **अदेर्लुङि रूपम् ।** अडभाव इति । **'बहुलं छन्दसि' 'न माङ्योगे' इत्यनेन । नन्विदं 'लुङ्सनोः—' इत्यनेन सिद्धमित्याशङ्क्योदाहरणान्तरमाह—** सग्धिरिति । **अदनं ग्धिः । अदेः क्तिनि घस्लादेशे 'घसिभसोर्हलि च' इत्युपधालोपे 'झलो झलि' इति सलोपः । 'झषस्तथोः' इति धत्वम् । घस्य जश्त्वम् । नच जश्त्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वम् । 'न पदान्त—' इति सूत्रेण जश्त्वे तन्निषेधात् । ततः समानशब्देन समासे कृते 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सूत्रेण समानस्य सः ।** हेमन्तशिशिरौ— **'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति प्राप्तम् ।** अहोरात्रे इति । **अहश्च रात्रिश्चेति द्वन्द्वे कृते 'अहःसर्वैकदेश—' इत्यनेन समासान्तोऽच् । 'यस्येति च' इतीकारलोपः । 'रात्राह्नाहाः पुंसि' इति प्राप्तं क्लीबत्वमतन्त्रम् । 'अहोरात्राणि विदधत्' ।** छन्दसि किम् । **हेमन्तशिशिरे । अहोरात्रौ । यद्यपि पाठक्रमेणेदं 'बहुलं छन्दसि' इति घस्लादेशविधायकसूत्रात्पूर्वं व्याख्यातुं युक्तम् तथापि 'व्यत्ययो बहुलम्' इति वक्ष्यमाणेन लिङ्गव्यत्ययविधायकेन गतार्थमिति ध्वनयितुं तथा न व्याख्यातम् ।** बहुलं छन्दसि । **बहुलं शपो लुक् स्यात् । 'अदिप्रभृतिभ्यः' इत्युक्तं ततो न भवति । तथैवोदाहरति—**वृत्रं हनतीत्यादि । **हन्ति शेते इति लोके ।** त्राध्वमिति । **त्रैङ् पालने 'आदेच उपदेशेऽशिति' इत्यात्वम् । 'त्रायध्व'मिति लोके ।** दातीति ।

अन्यत्रापि । पूर्णां विवष्टि । **३४०२ मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः २।४।८०॥** एभ्यो लेर्लुक् स्यान्मन्त्रे । अक्षन्नमीमदन्त हि । घस्लादेशस्य 'गमहन' (सू०२३६३) । इत्युपधालोपे 'शासिवसि' ( २४१० ) । इति षः । माह्वर्मित्रस्य । धूर्तिः प्रणङ्मर्त्यस्य । 'नशेर्वा' (सू४३१) इति कुत्वम् । सुरुचो वेन आवः । मा न आधक् । आदित्याकारान्तग्रहणम् । आ प्रा द्यावापृथिवी । परावर्ग्भारभृद्यथा । अक्रन्नुषासः । त्वे रयिं जागृवांसो अनुग्मन् । मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणम् । अज्ञत वा अस्य दन्ताः । विभाषानुवृत्तेर्नेह । न ता अगृभ्णन्नजनिष्ट हि षः ।

इति द्वितीयोऽध्यायः ।

---

'ददाती'ति लोके । अन्यत्रापीति । जुहोत्यादिभिन्नेऽपि 'श्लुर्भवती'ति शेषः । विवष्टीति । 'वश कान्तौ' अदादिः । 'श्लौ' इति द्वित्वम् । 'भृञामित्' । 'बहुलं छन्दसि' इति सूत्रेणाभ्यासस्येकारः । 'व्रश्च—' इति षत्वम् । ष्टुत्वम् । मन्त्रे घस— । घस अत्तेरादेशः । ह्वर । ह्वृ कौटिल्ये । अस्य कृतगुणानुकरणं ह्वरेति । अकारस्तूच्चारणार्थः । णश अदर्शने । वृञ् वरणे । वृङ् संभक्तौ । दह भस्मीकरणे । आत् । आकारान्ताः प्रापूरणे इत्यादयः । वृजी वर्जने । डुकृञ् करणे । गम्लृ गतौ । जनी प्रादुर्भावे । अक्षन्निति । अत्तेर्लुङि झिः । घस्लादेशस्येति । 'लुङ्सनोः—' इति विहितस्य । मा ह्वरिति । माङि उपपदे ह्वरतेर्लुङि तिप् । 'इतश्च' इतीकारलोपः । च्लेर्लुकि कृते 'सार्वधातुके—' इति गुणे कृते रपरत्वे 'हल्ङ्याप्—' इति सलोपः । प्रणगिति । प्रपूर्वान्नशेर्लुङ् । 'हल्ङ्याप्—' इति लोपः 'उपसर्गादसमासेऽपि—' इति णत्वम् । मर्त्यस्येति । मकारेऽनुनासिके परे 'यरोऽनुनासिके' इति ङः । कुत्वमिति । पक्षे 'व्रश्च' इति षत्वेन नडिति रूपं बोध्यम् । आव इति । वृञो रूपम् । आधगिति । माङ्पूर्वाद्दहेर्लुङ् । 'दादेर्धातोः—' इति घः । 'एकाचो बश—' इति भष्भावः । आप्रा इति । आङ्पूर्वात्प्राधातोः सिप् । रुत्वे यत्वे च यलोपः । परावर्गिति । परापूर्वाद्वृजेस्तिप् । उपधागुणे 'चोः कुः' इति कुत्वम् । अक्रन्निति । झेर्ङित्वाद्गुणाऽभावे यण् । अनुग्मन्निति । अनुपूर्वाद्गच्छतेर्झिः । 'गमहन—' इत्युपधालोपः । ननु मन्त्रशब्दः संहितायां रूढ इति अज्ञतेत्यादौ ब्राह्मणप्रयोगे लुक् न प्राप्नोतीत्याशङ्क्याह—मन्त्रग्रहणमित्यादि । अज्ञतेति । 'गमहन—' इत्युपधालोपः । ब्राह्मणप्रयोगोऽयम् । मन्त्रेति किम् । अघसत् । अह्वार्षीत् । अनशत् । अवारीत् । अधाक्षीत् । अप्रासीः । अवर्जीत् । अकार्षीत् । अगमत् । अजनि । अजनिष्ट ।

इति वैदिकीप्रकरणे द्वितीयोऽध्यायः ।

# तृतीयोऽध्यायः

**३४०३ अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ३।१।४२॥** आद्येषु चतुर्षु लुङि आम् अक इत्यनुप्रयोगश्च । अभ्युत्सादयामकः । अभ्युदसीषददिति लोके । प्रजनयामकः । प्राजीजनदित्यर्थः । चिकयामकः । अचैषीदित्यर्थे चिनोतेराम् द्विर्वचनं कुत्वं च । रमयामकः । अरीरमत् । पावयांक्रियात् । पाव्यादिति लोके । विदामक्रन् । अवेदिषुः ।

**३४०४ गुपेश्छन्दसि ३।१।५०॥** च्लेश्चङ् वा । गृह्णानजूगुपतं युवम् । अगौप्तमित्यर्थः । **३४०५ नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ३।१।५१॥** च्लेश्चङ् न । मा त्वायतो जरितुः काममूनयीः । मा त्वाऽग्निर्ध्वनयीत् । **३४०६ कृमृद-**

---

अभ्युत्सादयाम् । अभ्युत्सादयामित्यादयश्छन्दसि विषयेऽन्तरस्यां निपात्यन्ते । षद्लृ विशरणगत्यवसादनेषु । जनी प्रादुर्भावे । रमु क्रीडायाम् । ण्यन्तेभ्य एभ्यो लुङि आम्प्रत्ययो निपात्यते । चिञ् चयने । शुद्धादस्मादाम्प्रत्यये द्विर्वचनं कुत्वं च । 'अक' इति प्रत्येकं सम्बध्यते, तदाह-आद्येष्विति । अक इति । कृञो लुङि तिपि च्लेः 'मन्त्रे घस' इत्यादिना लुक् । तिपो हल्ङ्यादिलोपः । अभ्युत्सादयामक इति । 'आमः' इति लुङो लुक् । अभ्युदसीषददिति । सदेर्ण्यन्ताल्लुङि चङि 'णौ चङ्युपधायाः' इति ह्रस्वः । 'चङि' इति द्विर्वचनम् । 'हलादिःशेषः' । 'सन्वल्लघुनि' इति सन्वद्भावे 'सन्यतः' इतीत्वम् । 'दीर्घो लघो'रिति दीर्घः । लोक इति । वेदेऽपि पाक्षिकमिदं बोध्यम् । 'विदाङ्कुर्वन्तु' इति सूत्रादन्यतरस्यांग्रहणानुवृत्तेः । पावयामिति । पवतेः पुनातेर्वा ण्यन्तादाशीर्लिङ्याम् । 'क्रिया'दित्यनुप्रयोगश्च । क्रियादिति । करोतेराशीर्लिङि रूपम् । 'लिङाशिषि' इत्यार्द्धधातुकत्वाद्विकरणाऽभावः । 'रिङ्शयग्' इति रिङ् । विदामक्रन्निति । विदेर्लुङि आम्, गुणाऽभावः लुङन्तकरोत्यनुप्रयोगश्च । गुपेः । आयप्रत्ययाऽभावस्थले एवेदं, सूत्रे केवलस्योच्चारणात् । अजूगुपतमिति । 'गुपू रक्षणे' । 'तस्थस्थमिपाम्' इति थसस्तम् । 'तुजादीनां दीर्घोऽभ्यासस्य' इत्यभ्यासस्य दीर्घः । अगौप्तमिति । ऊदित्वादिडभावे 'वदव्रज' इति वृद्धिः । 'झलो झलि' इति सिचो लोपः । इट्पक्षे अगोपिष्टम् । आयप्रत्यये अगोपायिष्टम् । इत्थं चत्वारि छन्दसि । लोके तु चङं वर्जयित्वा त्रीण्येवेति विवेकः । नोनयतीति । ऊन परिहाणे । ध्वन शब्दे । इल प्रेरणे । अर्द गतौ याचने च । एभ्यो ण्यन्तेभ्यश्च्लेः 'णिश्रि' इति प्राप्तश्चङादेशो नेत्यर्थः । तत्रोनयत्येलयती चुरादी ण्यन्तौ । ध्वनयतिरपि चुरादिरदन्तो घटादिर्णान्तश्च । अर्दयतिस्तु हेतुमण्ण्यन्तः । ऊनयीरिति । मध्यमपुरुषैकवचनम् । 'न माङ्योगे' इति आट्प्रतिषेधः । इदमिन्द्रं प्रति सव्यस्य ऋषेर्वचनम् । त्वायतस्त्वामिच्छतः जरितुः स्तोतुः मम,

**रुहिभ्यश्छन्दसि ३।१।५९॥** च्लेरङ् वा। इदं तेभ्योऽकरं नमः। अमरत्। अदरत्। यसानोः सानुमारुहत्। **३४०७ छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ३।१।१२३॥** कृतन्तेर्निसूपूर्वात्क्यपि प्राप्ते ण्यत्। आद्यन्तयोर्विपर्यासो, निसः षत्वं च। निष्टर्क्यं चिन्वीत पशुकामः। देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप्, दीर्घश्च। स्पर्धन्ते वा उ देवहूये। प्र उत् आभ्यां नयतेः क्यप्। प्रणीयः। उन्नीयः। उत्पूर्वाच्छिषेः क्यप्। उच्छिष्यः। मृङ्स्तृध्वृभ्यो यत्। मर्यः। स्तर्या। स्त्रियामेवायम्। ध्वर्यः। खनेर्यण्यतौ। खन्यः। खान्यः। यजेर्यः। शुन्धध्वं दैव्याय कर्मणे देवयज्यायै। आङ्पूर्वात्पृच्छेः क्यप्। आपृच्छ्यं धरुणं वाज्यर्षति। सीव्यतेः क्यप् षत्वं च। प्रतिषीव्यः। ब्रह्मणि वदेर्ण्यत्। ब्रह्मवाद्यम्। लोके तु 'वदः सुपि क्यप् च' (सू० २८५४) इति क्यब्ण्यतौ। भवतेः स्तौतेश्च ण्यत्। भाव्यः। स्ताव्यः। उपपूर्वाच्चिनोतेर्ण्यत्, आयादेशश्च पृडे उत्तरपदे। उपचाय्यपृडम्। **हिरण्य इति वक्तव्यम्।** (वा १९४५) उपचेयपृडमन्यत्। मृड सुखने पृड चेत्यस्मादिगुपधलक्षणः कः। **३४०८ छन्दसि वनसनरक्षिमथाम् ३।२।२७॥** एभ्यः कर्मण्युपपदे इन् स्यात्।

---

**काममभिलाषं, मा ऊनयीः। ऊनं मा कार्षीरित्यर्थः। औननदिति भाषायाम्।** ध्वनयीदिति। **तिप्। 'न माङ्योगे' इत्यट्प्रतिषेधः। भाषायां तु घटादेरदिध्वनत्। चुरादेरदिध्वनत्। ऐलयीत्। आर्दयीत्। आर्दिदत्। ऐलिलदिति लोके।** कृमृदृ। **'च्लि लुङि' इत्यतः च्लिरिति 'अस्यतिवक्ति' इत्यतोऽङिति 'इरितो वा' इत्यतो वेत्यनुवर्तते। तदाह**—च्लेरित्यादि। अकरमिति। **डु कृञ्करणे मिप्। अङि कृते 'ऋदृशोऽङि' इति गुणः।** अमरदिति। **मृङ् प्राणत्यागे। व्यत्ययेन परस्मैपदम्।** अदरदिति। **दृ विदारणे।** अरुहदिति। **रुह बीजजन्मनि प्रादुर्भावे च। लोके तु अकार्षीत्। अमृत। अदारीत्। अरुक्षत्।** छन्दसि। **निष्टर्क्यादयः शब्दाश्छन्दसि निपात्यन्त इति सूत्रार्थः।** क्यपि प्राप्त इति। **'ऋदुपधाच्च' इति सूत्रेण।** आपृच्छ्यमिति। **'प्रच्छ ज्ञीप्सायाम्' 'ग्रहिज्या' इति सम्प्रसारणम्।** प्रतिषीव्येति। **षिवु तन्तुसन्ताने। 'हलि च' इति दीर्घः।** उपचाय्यपृडमिति। **उपचाय्यं च तत्पृडं चेति कर्मधारयः।** हिरण्य इति। **हिरण्येऽभिधेये इत्यर्थः।** छन्दसि। एभ्य इति। **'वन षण सम्भक्तौ। रक्ष पालने मन्थ विलोडने। एभ्य इत्यर्थः। 'स्तम्बशकृतोरिन्' इत्यतः इन्निति वर्तते। तदाह**—इन् स्यादिति।

ब्रह्मवनिं त्वा क्षत्रवनिम् । उत नो गोषणिं धियम् । ये पथां पथिरक्षयः । चतुरक्षौ पथिरक्षी । हविर्मथीनामभि । **३४०६ छन्दसि सहः ३।२।६३॥** सुप्युपपदे सहेर्ण्विः स्यात् । पृतनाषाट् । **३४१० वहश्च ३।२।६४॥** प्राग्वत् । दित्यवाट् । योगविभाग उत्तरार्थः । **३४११ कव्यपुरीषपुरीष्येषु ञ्युट् ३।२।६५॥** एषु वहेर्ञ्युट् स्याच्छन्दसि । कव्यवाहनः । पुरीषवाहनः । पुरीष्यवाहनः । **३४१२ हव्येऽनन्तःपादम् ३।२।६६॥** अग्निश्च हव्यवाहनः । पादमध्ये तु 'वहश्च' ( सू ३४१० ) इति ण्विरेव । हव्यवाळग्निरजरः पिता नः । **३४१३ जनसनखनक्रमगमो विट् ३।२।६७॥** 'विड्वनोः' ( सू २९८२ ) इत्यात्वम् । अब्जाः । गोजाः । गोषा इन्दो नृषा असि । 'सनोतेरनः' ( सू ३६४५ ) । इति षत्वम् । इयं शुष्मेभिर्बिसखा इवारुजत् । आ दधिक्राः शवसा पञ्च कृष्टीः । अग्रेगाः । **३४१४ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ३।२।७१॥ श्वेतवहादीनां डस्पदस्येति वक्तव्यम् ।** ( वा २०३५-३६ ) यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस् वक्तव्य इत्यर्थः । श्वेतवाः । श्वेतवाहौ । श्वेतवाहः । उक्थानि उक्थैर्वा शंस-

---

**'वन षण सम्भक्ता'विति भ्वादिगणेन सह निर्दिष्टयोरेव ग्रहणं न तु वनु याचने, षणु दाने इति तानादिकयोः, सानुबन्धकत्वात् ।** ब्रह्मवनिमिति । **ब्रह्म वनति क्षत्रं वनति, गां सनतीति विवक्षायामिन् । तदन्ताद्द्वितीयैकवचनम् । सुषामादित्वात्षत्वम् ।** पथिरक्षय इति । **पन्थानं रक्षयन्तीति विग्रहः ।** पथिरक्षीति । **पन्थानं रक्षतीति विग्रहः । हविर्मन्थतीति विग्रहः ।** छन्दसि । **'षह मर्षणे' 'भजो ण्विः' इति वर्तते । तदाह–**ण्विः स्यादिति । **ननु 'तुरासाहं पुरोधाय' इति लोकेऽपि प्रयोगा दृश्यन्ते तेषां का गतिरिति चेत्, णिजन्ताद्क्विच् बोध्यः ।** पृतनाषाडिति । **'सहेः साडः सः' इति षत्वम् ।** वहः। प्राग्वदिति । **ण्विः स्यादित्यर्थः ।** हव्ये । **अन्तः–शब्दो मध्यमवाची । हव्यशब्दे उपपदे वहेर्ञ्युट् स्यात् पादमध्ये चेन्न । पदान्ते इति फलितोऽर्थः ।** हव्यवाळग्निरिति । **अत्र डस्य ळः, 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारे' इति प्रातिशाख्ये विहितः ।** जनसन । **जनादिभ्यो धातुभ्यश्छन्दसि विट् स्यात् ।** अग्रेगा इति । **'हलदन्तात्' इति सप्तम्यलुक् ।** मन्त्रे श्वेतवहो । **श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन्स्यात् । अलाक्षणिककार्यार्थं निपातनम् । श्वेतशब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि कारके ण्विन्प्रत्ययः । उक्थे कर्मणि करणे चोपपदे शंसतेः प्रत्ययः नलोपश्च । पुरःपूर्वस्य दाशृ दाने इत्यादेर्डत्वं कर्मणि च प्रत्ययः । डस्पदस्येति प्रत्येकमभिसम्ब-**

ति उक्थशा यजमानः । उक्थशासौ । उक्थशासः । पुरो दाश्यते दीयते पुरोडाः । **३४१५ अवे यजः ३।२।७२॥** अवयाः । अवयाजौ । अवयाजः । **३४१६ अवयाः श्वेतवाः पुरोडाश्च ८।२।६७॥** एते सम्बुद्धौ कृतदीर्घा निपात्यन्ते । चादुक्थशाः । **३४१७ विजुपे छन्दसि ३।२।७३॥** उपे उपपदे यजेर्विच् । उपयट् । **३४१८ आतो मनिन्क्वनिब्वनिपश्च ३।२।७४॥** सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः । चाद्विच् । सुदामा । सुधीवा । सुपीवा । भूरिदावा । घृतपावा । विच् । कीलालपाः । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (२९९८)। **३४१९ बहुलं छन्दसि ३।२।८८॥** उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात् । मातृहा । पितृहा । 'छन्दसि लिट्' (सू ३०९३)। भूतसामान्ये । अहं द्यावापृथिवी आ ततान । 'लिटः कानज्वा' (सू (३०९४)। 'क्वसुश्च' (सू ३०९५)। छन्दसि लिटः कानच्क्वसू वा स्तः । चक्राणा वृष्णि । यो नो अग्ने अररिवाँ अघायुः । 'णेश्छन्दसि' (सू ३११७)। ण्यन्ताद्धातोश्छन्दसि इष्णुच् स्यात्तच्छीलादौ । वीरुधः पारयिष्णवः । 'भुवश्च' (सू

ष्यते । भाविपदत्वाश्रयणेन चेदमुच्यते तदाह—यत्र पदत्वं भावीति । डसन्तस्येत्यर्थः । श्वेतवा इति । श्वेता एनं वहन्ति श्वेतवाः इन्द्रः । 'अत्वसन्तस्य' इति दीर्घः । उक्थशासाविति । नलोपे कृते 'अत उपधायाः' इति वृद्धिः । अवे । योगविभाग उत्तरार्थः । 'पुरोडाशावयजोर्ण्विन्' इत्येकयोगे श्वेतवहादीनामप्युत्तरत्राऽनुवृत्तिः स्यात् । यजेश्चाऽवपूर्वस्यैवानुवृत्तिः स्यात्केवलस्यैवेष्यत इति । अवयाः श्वेतवाः । ननु 'मन्त्रे श्वेतवहे'त्यादिना डसि कृते सौ 'अत्वसन्तस्य' इति दीर्घे रुत्वे च श्वेतवा इत्यादि सिद्धे नार्थोऽनेन योगेनेत्याशङ्कयाह—एते सम्बुद्धाविति । सम्बुद्धौ हि 'अत्वसन्तस्य' इति न प्राप्नोति तत्राऽसम्बुद्धावित्यनुवर्तनात् । विजुपे—। ननु छन्दसीति व्यर्थं ।'मन्त्रे'इत्यनुवृत्तेरेव भाषायां न भविष्यतीति चेत् । सत्यम् । ब्राह्मणसंग्रहार्थं छन्दोग्रहणम् । मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणम् । तदुक्तम्–'तच्चोदकेषु मन्त्राख्या, शेषे ब्राह्मणशब्दः' । सुधीवा । सुपीवेति । 'घुमास्था' इतीत्वम् । कीलालपा इति । कीलालं जलम् । 'पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः । तत् पिबतीति । पा पाने विच् । उपपदान्तरेऽपीति । ब्रह्मभ्रूणवृत्रभिन्नेष्वपीत्यर्थः । आततानेति । 'णलुत्तमो वा' इति णित्वपक्षे वृद्धिः । अररिवाँ इति । छन्दसीति । रा दाने लिटः क्वसुः । 'वस्वेकाजाद्घसाम्' इत्यादन्तत्वादिट् । ततो नञ्समासः । 'दीर्घादटि—' इति वक्ष्यमाणेन नस्य रुत्वम् 'आतोऽटि नित्यम्' इति रोः पूर्वस्याऽऽतो नित्यमनुनासिकः । प्रसङ्गादघायुशब्दं व्युत्पादयितुमाह—छन्दसीति । 'सुप आत्मनः—' इत्यत्र आत्मन इति

यातोपयात अनुगत ॥ इत्यक्षद्यूतादिः ॥१३७॥ १५६८ अण्महिष्यादिभ्यः ४।४।४८ महिषी प्रजापति प्रजावती प्रलेपिका विलेपिका अनुलेपिका पुरोहिता मणिपाली अनुचारक [अनुवारक] होतृ यजमान । इति महिष्यादिः ॥१३८॥ १६०३ किसरादिभ्यः ष्ठन् ४।४।५३ किसर नरद नलद स्थागल तगर गुग्गुलु उशीर हरिद्रा हरिद्रु पर्णी (पर्णी) इति किसरादिः ॥१३९॥ १६१२ छत्रादिभ्यो णः ४।४।६२ छत्र शिक्षा प्ररोहस्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्मन् विश्वधा तपस् सत्य अनृत विशिखा विशिक्षा भक्षा उद्स्थान पुरोडा विक्षा चुक्षा मन्द्र ॥ इति छत्रादिः ॥१४०॥ १६५१ प्रतिजनादिभ्यः खञ् ४।४।९९ प्रतिजन इदंयुग संयुग समयुग परयुग परकुल परस्यकुल अमुष्यकुल सर्वजन विश्वजन महाजन पञ्चजन ॥ इति प्रतिजनादिः॥१४१॥ १६५४ कथादिभ्यष्ठक् ४।४।१०२ कथा विकथा विश्वकथा सङ्कथा वितण्डा कुष्टविद् (कुष्ठविद्) जनवाद जनेवाद जनोवाद वृत्ति संग्रह गुणगण आयुर्वेद ॥ इति कथादिः ॥१४२॥ १६५५ गुडादिभ्यष्ठञ् ४।४।१०३ गुड कुल्माष सक्तु अपूप मांसौदन इक्षु वेणु सङ्ग्राम संघात संक्राम संवाह प्रवास निवास उपवास ॥ इति गुडादिः ॥१४३॥ इति चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः ।

१६६२ उगवादिभ्यो यत् ५।१।२ गो हविस् अक्षर विष बर्हिस् अष्टका स्खदा युग मेधा स्रुच् । नाभि नभं च । शुनः सम्प्रसारणं वा च दीर्घत्वं, तत्सन्नियोगेन चान्तोदात्तत्वम् । ऊधसोऽनङ् च । कूप खद दर खर असुर अध्वन् (अस्वन्) क्षर वेद बीज दीस (दीप्त) ॥ इति गवादिः॥१४४॥ १६६४ विभाषा हविरपूपादिभ्यः ५।१।४॥ अपूप तण्डुल अभ्युष (अभ्यूष) अभ्योष अवोष अभ्येष पृथुक ओदन सूप पूप किण्व प्रदीप मुसल कटक कर्णवेष्टक इर्गल अर्गल । अन्नविकारेभ्यश्च । यूप स्थूणा दीप अश्व पत्र ॥ इत्यपूपादिः ॥१४५॥ १६८२ असमासे निष्कादिभ्यः ५।१।२० निष्क पण पाद माष वाह द्रोण षष्टि ॥ इति निष्कादिः ॥ १४६ ॥ १७०५ गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत् ५।१।३९॥ अश्व अश्मन् गण ऊर्णा (उमा) उमा भङ्गा (गङ्गा) वर्षा वसु ॥ इत्यश्वादिः ॥१४७॥ १७१६ तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ५।१।५०॥ वंश कुटज बल्वज मूल स्थूणा (स्थूण) अक्ष अश्मन् अश्व श्लक्ष्ण इक्षु खट्वा ॥ इति वंशादिः ॥१४८॥ १७२९ छेदादिभ्यो नित्यम् ५।१।६४ छेद भेद द्रोह दोह नर्ति (नर्त) कर्ष तीर्थ सम्प्रयोग विप्रयोग प्रयोग विप्रकर्ष प्रेषण सम्प्रश्न विप्रश्न विकर्ष प्रकर्ष । विराग विरङ्गं च । इति छेदादिः ॥१४९॥ १७३१ दण्डादिभ्यो यत् ५।१।६६ दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भाग इभ भङ्ग ॥ इति दण्डादिः ॥१५०॥ १७५८ *महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम्* ५।१।९४ महानाम्नी आदित्यव्रत गोदान ॥ इति महानाम्न्यादिः ॥ १५१॥ १७६१ *अवान्तरदीक्षादिभ्यो डेनिर्वक्तव्य* ५।१।९४ अवान्तरदीक्षा तिलव्रत देवव्रत । इत्यवान्तरदीक्षादिः ॥१५२॥ १७६१ व्युष्टादिभ्योऽण् ५।१।९७ व्युष्ट नित्य निष्क्रमण प्रवेशन उपसंक्रमण तीर्थ आस्तरण सङ्ग्राम संघात॥ इति व्युष्टादिः ॥१५३॥ अग्निपदा-

दिभ्य उपसंख्यानम् अविनपद पीलुपद ( पीलुमूल ) प्रवास उपवास । इत्यविनपदादिरा-कृतिगणः ॥१५ ॥ १७६५ तस्मै प्रभवति सन्तापादिभ्यः ५।१ १०१ सन्ताप संनाह संग्राम संयोग सम्पराय संवेशन सम्पेष निष्पेष सर्ग निसर्ग विसर्ग उपसर्ग प्रवास उपवास संघात संवेष संवास सम्मोदन सक्तु । मांसौदनाद्विगृहीतादपि । इति सन्तापादिः ॥१५५॥ १७६९ *ऋतोरण्प्रकरणे उपवस्त्रादिभ्य उपसंख्यानम् * ५।१।१०५ उपवस्तृ प्राशितृ श्रुद्धा श्रद्धा । इत्युपवस्त्रादिः ॥१५६॥ १७७४ अनुप्रवचनादिभ्यश्छः ५।१ १११ अनु-प्रवचन उत्थापन उपस्थापन संवेशन प्रवेशन अनुप्रवेशन अनुवासन अनुवचन अनुवाचन अन्वारोहण प्रारम्भण आरम्भण आरोहण । इत्यनुप्रवचनादिः ॥ १५७ ॥ १७७४ * स्वर्गादिभ्यो यद्वक्तव्यः * ५।१।१११ स्वर्ग यशस् आयुस काम धन । इति स्वर्गादिः ॥ १५८ ॥ २७६ * पुण्याहवाचनादिभ्यो लुग्वक्तव्यः * ५।१।१११ पुण्याह-वाचन स्वस्तिवाचन शान्तिवाचन । इति पुण्याहवाचनादिः ॥ १५९ ॥ १७८४ पृथ्वादिभ्य इमनिज्वा ५।१।१२२ पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिञ्चन बाल होड पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु । इति पृथ्वादिः ॥१६०॥ १७८७ वर्णदृढादिभ्यः ष्यञ्च ५।१।१२३ दृढ वृढ परिवृढ भृश कृश वक्र शुक्र चुक्र आम्र कृष्ट लवण ताम्र शीत उष्ण जड बधिर पण्डित मधुर मूर्ख मूक स्थिर । वेर्यातलातमतिमनःशारदानाम् समो मतिमनसोः जवन इति दृढादिः१६१ १७८८ गुणवचनब्राह्मणादिभ्यः कर्मणि च ५।१ १२४। ब्राह्मण वाडव माणव । अर्हतो नुम् च । चोर धूर्त आराधय विराधय अपराधय उपधारय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् संवेशिन् सम्भाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यमस्थ अनीश्वर कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ निश्न बालिश अलस दुःपुरुष कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात । सर्ववेदादिभ्यः स्वार्थे । चतुर्वेदस्योभयपदवृद्धिश्च । शौटीर । आकृतिगणोऽयम् । इति ब्राह्मणादिः॥१६२॥१७८९ *चतुर्वेदादिभ्य उभयपदवृद्धिश्च* ५।१ १२४ चतुर्वेद चतुर्वर्ण चतुराश्रम सर्वविद्य त्रिलोक त्रिस्वर षड्गुण सेना अनन्तर सन्निधि समीप उपमा सुख तदर्थ इतिह मणिक । इति चतुर्वेदादिः ॥१६३॥ १७९३ पत्यन्तपुरोहितादिभ्यो यक् ५।१ १२८ पुरोहित । राजासे । ग्रामिक पिण्डिक सुहित बालमन्द ( बालमन्द ) खण्डिक दण्डिक वर्मिक कर्मिक धर्मिक शिलिक सूतिक मूलिक तिलक अञ्जलिक ( अन्तलिक ) ऋषिक ऋषिक पुत्रिक अविक छत्रिक पर्षिक पथिक चर्मिक प्रतिक सारथि आस्तिक सूचिक संरक्ष सूचक (संरक्षसूचक) नास्तिक अजानिक शाकर नागर चूडिक । इति पुरोहितादिः ॥१६४॥ १७९४ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ५ १।१२९ उद्गातृ उन्नेतृ प्रतिहर्तृ प्रशास्तृ होतृ पोतृ हर्तृ रथगणक पत्तिगणक सुष्ठु दुष्ठु अध्वर्यु वधू सुभग मन्त्रे । इत्युद्गात्रादिः ॥१६५॥ १७९५ हायनान्तयुवादिभ्योऽण् ५ १।१३० युवन् स्थविर होतृ यजमान । पुरुषासे । भ्रातृ कुतुक श्रमण ( श्रवण ) कटुक कमण्डलु कुस्त्री सुस्त्री दुःस्त्री सुहृदय दुर्हृदय सुहृद् दुर्हृद् सुभ्रातृ दुर्भ्रातृ वृषल

परिव्राजक सब्रह्मचारिन् अनृशंस । हृदयासे । कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ । श्रोत्रियस्य यलोपश्च । इति युवादिः ॥१६६॥ १७९८ द्वन्द्वमनोज्ञादिभ्यश्च ५।१।१३३ मनोज्ञ प्रियरूप अभिरूप कल्याण मेधाविन् आढ्य कुलपुत्र छान्दस छात्र श्रोत्रिय चोर धूर्त विश्वदेव युवन् कुपुत्र ग्रामपुत्र ग्रामकुलाल ग्रामषण्ड (ग्रामषण्ढ) ग्रामकुमार सुकुमार बहुल अवश्यपुत्र अमुष्यपुत्र अमुष्यकुल सारपुत्र शतपुत्र । इति मनोज्ञादिः ॥१६७॥ १८२५ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ५।२।२४ पीलु कर्कन्धू (कर्कन्धु) शमी करीर बल (कुवल) बदर अश्वत्थ खदिर । इति पील्वादिः ॥१६८॥ कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ । इति कर्णादिः ॥१६९॥ १८३७ तदस्य सञ्जातं तारकादिभ्य इतच् ५।२।३६ तारका पुष्प कर्णक मञ्जरी ऋजीष क्षण सूत्र मूत्र निष्क्रमण पुरीष उच्चार प्रचार विचार कुड्मल कण्टक मुसल मुकुल कुसुम कुतूहल स्तबक (स्तवक) किसलय पल्लव खण्ड वेग निद्रा मुद्रा बुभुक्षा धेनुष्या पिपासा श्रद्धा अभ्र पुलक अङ्गारक वर्णक द्रोह दोह सुख दुःख उत्कण्ठा भर व्याधि वर्मन् व्रण गौरव शास्त्र तरङ्ग तिलक चन्द्रक अन्धकार गर्व कुमुर (मुकुर) हर्ष उत्कर्ष रण कुवलय गर्ध क्षुध् सीमन्त ज्वर गर रोग रोमाञ्च पण्डा कज्जल तृष् कोरक कल्लोल स्थपुट फल कञ्चुक शृङ्गार अङ्कुर शैवल बकुल श्वभ्र आराल कलङ्क कर्दम कन्दल मूर्च्छा अङ्गार हस्तक प्रतिबिम्ब विघ्नतन्त्र प्रत्यय दीक्षा गर्ज । गर्भादप्राणिनि । इति तारकादिराकृतिगणः ॥ १७० ॥ १८६१ विमुक्तादिभ्योऽण् ५।२।६१ विमुक्त देवासुर रक्षोसुर उपसद् सुवर्ण परिसारक सदसत् वसु मरुत् पत्नीवत् वसुमत् महीयस् सत्वत् बर्हवत् दशार्ण दशार्ह वयस् हविर्धान पतत्रिन् महित्री अस्यहत्य सोमापूषन् इडा अग्नाविष्णू उर्वशी वृत्रहन् । इति विमुक्तादिः ॥१७१॥ १८६२ गोषदादिभ्यो वुन् ५।२।६२ गोषद (गोषद्) इषेत्वा मातरिश्वन् देवस्यत्वा देवीरापः । कृष्णोऽस्याखरेष्ठ देवींधिया (देवींधियम्) रक्षोहण युञ्जान अञ्जन प्रभूत प्रतूर्त कृशानु (कृशाकु) । इति गोषदादिः ॥१७२॥ १८६४ आकर्षादिभ्यः कन् ५।२।६४ आकर्ष (आकष) त्सरु पिशाच पिचण्ड अशनि अश्मन् निचय चय जय विजय आचय नय पाद दीपहृद ह्राद ह्लाद गद्गद शकुनि । इत्याकर्षादिः ॥१७३॥ १८८८ इष्टादिभ्यश्च ५।२।८८ इष्ट पूर्त उपासादित निगदित परिगदित परिवादित निकथित निषादित निपठित सङ्कलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत अवधान आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुलित । इतीष्टादिः ॥१७४॥ १८९५ रसादिभ्यश्च ५।२।९५ रस रूप वर्ण गन्ध स्पर्श शब्द स्नेह भाव । गुणात् एकाचः । इति रसादिः ॥१७५॥ १९०४ सिध्मादिभ्यश्च ५।२।९७ सिध्म गडु मणि नाभि बीज वीणा कृष्ण निष्पाव पांसु पार्श्व पर्शु हनु सक्तु मास (मांस) पार्ष्णिधमन्योर्दीर्घश्च । वातदन्तबलललाटानामूङ् च । जटा घटा कटाकालाः क्षेपे । पर्ण उदक प्रज्ञा सक्थि कर्ण स्नेह शीतश्याम पिङ्ग पित्त पुष्क पृथु मृदु मञ्ज मण्ड पत्र चटु कपि गण्डु ग्रन्थि श्री कुशा धारा वर्ष्मन्

पक्ष्मन् श्लेष्मन् पेश निष्पाद् कुण्ड । क्षुद्रजन्तूपतापयोश्च । इति पिच्छादिः ॥१७६॥ १९०७ लोमादिपामादिपिच्छादिभ्यः शनेलचः ५।२।१०० लोमन् रोमन् बभ्रु हरि गिरि कर्क कपि मुनि तरु । इति लोमादिः ॥१७७॥ पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रु (कद्रू) बलि सामन् ऊष्मन् कृमि । अङ्गात्कल्याणे । शाकीपलालीदद्र्वां ह्रस्वत्वं च ॥ विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः । लक्ष्म्या अच्च । इति पामादिः ॥१६८॥ पिच्छा उरस् ध्रुवक ध्रुवक । जटाघटाकालाः क्षेपे । वर्णां उदक पङ्क प्रज्ञा । इति पिच्छादिः ॥१७९॥ १९१० *ज्योत्स्नादिभ्य उपसंख्यानम्* ५।२।१०३ ज्योत्स्ना तमिस्रा कुण्डल कुतप विसर्प विपादिका । इति ज्योत्स्नादिः ॥१८०॥ १९२३ व्रीह्यादिभ्यश्च ५।२।११६ व्रीहि माया शाला शिखा माला मेखला केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा वडवा कुमारी नौ वीणा बलाका यवखदनौ कुमारी । शीर्षान्नञः । इति व्रीह्यादिः ॥१८१॥ १९२४ तुन्दादिभ्य इलच्च ५।२।११७ तुन्द उदर पिचण्ड यव व्रीहि । स्वाङ्गाद्विवृद्धौ । इति तुन्दादिः ॥१८२॥ १९३३ अर्शआदिभ्योऽच् ५।२।१२७ अर्शस् उरस् तुन्द चतुर पलित जटा घटा घाटा अभ्र अघ कर्दम अम्ल लवण । स्वाङ्गाद्धीनात् । वर्णात् । इत्यर्शआदिराकृतिगणः ॥ १८३ ॥ १९३७ सुखादिभ्यश्च ५।२।१३१ सुख दुःख तृप्त ( तृप्र ) कृच्छ्र अस्र ( आस्र ) आस्र अलीक करुण सोढ प्रतीप शील हल । माला क्षेपे । कृपण प्रणाय (प्रणय) दल कक्ष । इति सुखादिः ॥१८४॥ १९४१ पुष्करादिभ्यो देशे ५।२।१३५ पुष्कर पद्म उत्पल तमाल कुमुद नड कपित्थ बिस मृणाल कर्दम शालूक विगर्ह करीष शिरीष यवास (प्रवास) हिरण्य कैरव कल्लोल तट तरङ्ग पङ्कज सरोज राजीव नालीक सरोरुह पुटक अरविन्द अम्भोज अब्ज कमल कल्लोल पयस् । इति पुष्करादिः ॥१८५॥ १९४२ बलादिभ्यो मतुबन्यतरस्याम् ५।२।१३६ बल उत्साह उद्भास उद्वास उद्दास शिखा कुल चूडा सुल कूल आयाम व्यायाम उपयाम आरोह अवरोह परिणाह युद्ध । इति बलादिः ॥१८६॥ १९६३ दृशिग्रहणाद्भवदादियोग एव ५।३।१४ भवान् दीर्घायुः देवानां प्रियः आयुष्मान् । इति भवदादिः ॥१८७॥ २०१५ देवपथादिभ्यश्च ५।३।१०० देवपथ ( हंसपथ वारिपथ रथपथ ) स्थलपथ करिपथ अजपथ राजपथ शतपथ शङ्कुपथ सिन्धुपथ सिद्धगति उष्ट्रग्रीव वामरज्जु हस्त इन्द्र दण्ड पुष्प मत्स्य । इति देवपथादिराकृतिगणः ॥१८८॥ २०२८ शाखादिभ्यो यः ५।३।१०३ शाखा मुख जघन शृङ्ग मेघ अभ्र चरण स्कन्ध स्कद (स्कन्द) उरस् शिरस् अग्र (शाण) शरण । इति शाखादिः ॥१८९॥ २०६२ शर्करादिभ्योऽण् ५।३।१०७ शर्करा कपालिका कपाटिका कपिष्ठिका ( कनिष्ठिका ) पुण्डरीक शतपत्र गोलोमन् लोमन् गोपुच्छ नराची नकुल सिकता । इति शर्करादिः ॥१९०॥ २०६६ अङ्गुल्यादिभ्यष्ठक् ५।३।१०८ अङ्गुली भरुज बभ्रु वल्गु मण्डर मण्डल शष्कुली हरि कपि मुनि रुह खल उदश्वित् गोणी उरस् कुलिश । इत्यङ्गुल्यादिः ॥१९१॥ २०६९ दामन्यादित्रिगर्तषष्ठाच्छः ५।३।११६ दामनी औलपि बैजवापि औदकि औदङ्कि अच्युतन्ति ( आच्युतन्ति ) अच्युतदन्ति ( आच्युतदन्ति ) शाकुन्तकि आकिदन्ति ( आकिदन्ति ) औडवि काकदन्तकि शात्रुन्तपि सार्वसेनि बिन्दु वैन्दवि तुलभ मौञ्जायनि काकन्दि सावित्रीपुत्र । इति दाम-

न्यादिः ॥ १९२ ॥ २०७० पर्श्वादियौधेयादिभ्योऽणञौ ५।३।११७ पर्शु असुर रक्षस् बाह्लीक वयस वसु मरुत् सत्वत् दशार्ह पिशाच अशनि कार्षापण। इति पर्श्वादिः॥१९३॥ यौधेय कौशेय शौक्रेय शौभ्रेय धौतेय धार्तेय ज्याबाणेय त्रिगर्त भरत उशीनर। इति यौधेयादिः ॥१९४॥ २०७५ स्थूलादिभ्यः प्रकारवचने कन् ५।४।३ स्थूल अणु माषेषु ( माष इषु ) कृष्ण तिलेषु। यव व्रीहिषु। इक्षु तिल। पाद्यकालावदातसुरायाम्। गोमूत्र आच्छादने। सुरा अहौ। जीर्णशालिषु। पत्रमूल समस्तो व्यस्तश्च। कुमारीपुत्र कुमारीश्वशुर मणि। इति स्थूलादिः ॥१९५॥ २०९७ यावादिभ्यः कन् ५।४।२९ याव मणि अस्थि तालु जानु सान्द्र पीत स्तम्ब। ऋतौ उष्णशीते। पशौ लूनवियाते। अणु निपुणे। पुत्र कृत्रिमे। स्नात वेदसमाप्तौ। शून्य रिक्ते। दान कुत्सिते। तनु सूत्रे। ईयसश्च। ज्ञात अज्ञात। कुमारीक्रीडनकानि च (कुमारक्रीडनकानि च)। इति यावादिः ॥१९६॥ २१०२ विनयादिभ्यष्ठक् ५।४।३४ विनय समय। उपायो ह्रस्वत्वं च। सम्प्रति सङ्गति कथञ्चित् अकस्मात् समाचार उपचार समाय ( समयाचार ) व्यवहार सम्प्रदान समुत्कर्ष समूह विशेष अत्यय। इति विनयादिः ॥१९७॥ २१०६ प्रज्ञादिभ्यश्च ५।४।३८ प्रज्ञ वणिज् उशिज् उष्णिज् प्रत्यक्ष विद्वस् विदन् षोडन् विद्या मनस्। श्रोत्र शरीरे। जुह्वत्। कृष्ण मृगे। चिकीर्षत्। चोर शत्रु योध चक्षुस् वसु [एनस्] मरुत् क्रुञ्च सत्वत् दशार्ह वयस् [व्याकृत] असुर रक्षस् पिशाच अशनि कर्षापण देवता बन्धु। इति प्रज्ञादिः ॥१९८॥ २१११ *आद्यादिभ्य उपसंख्यानम्* ५।४।४४ आदि मध्य अन्त पृष्ठ पार्श्व। इत्याद्याकृतिगणः ॥१९९॥ ८७७ अव्ययीभावे शरत्प्रभृतिभ्यः ५।४।१०७ शरद् विपाश् अनस् मनस् उपानह् अनडुह् दिव् हिमवत् हिरुक् विद् सद् दिश् दृश् विश् चतुर् त्यद् तद् यद् एतद् कियत्। जराया जरस् च। प्रतिपरसमनुभ्योऽक्ष्णः। पथिन्। इति शरदादिः ॥२००॥ ८९७ द्विदण्ड्यादिभ्यश्च ५।४।१२८ द्विदण्डि द्विमुसलि उभाञ्जलि उभयाञ्जलि उभादन्ति उभयादन्ति उभाहस्ति उभयाहस्ति उभाकर्णि उभयाकर्णि उभापाणि उभयापाणि उभाबाहु उभयाबाहु एकपदी प्रोष्ठपदी आढ्यपदी ( आढयपदी ) सपदि निकुच्यकर्णि संहतपुच्छि अन्तेवासी। इति द्विदण्ड्यादिः ॥२०१॥ ८७७ पादस्य लोपोऽहस्त्यादिभ्यः ५।४.१३८ हस्तिन् कुद्दाल अश्व कशिक कुरुत कटोल कटोलक गण्डोल गण्डोलक कण्डोल कण्डोलक अज कपोत जाल गण्ड महिला दासी गणिका कुसूल। इति हस्त्यादिः ॥२०२॥ ८७८ कुम्भपदीषु च ५।४।१३९ कुम्भपदी एकपदी जालपदी शूलपदी मुनिपदी गुणपदी शतपदी सूत्रपदी गोधापदी कलशीपदी विपदी तृणपदी द्विपदी त्रिपदी षट्पदी दासीपदी शितिपदी विष्णुपदी सुपदी निष्पदी आर्द्रपदी कुणिपदी कृष्णपदी शुचिपदी द्रोणीपदी ( द्रोणपदी ) द्रुपदी सूकरपदी शकृत्पदी अष्टापदी स्थूणापदी अपदी सूचीपदी। इति कुम्भपद्यादिः ॥२०३॥ ८७९ उरःप्रभृतिभ्यः कप् ५।४।१५१॥ उरस् सर्पिस् उपानह् पुमान् अनड्वान् पयः नौः लक्ष्मीः दधि मधु शाली शालिः अर्थान्नञः। इत्युरःप्रभृतयः ॥ २०४ ॥

## षष्ठोऽध्यायः ।

७९ * शकन्ध्वादिषु पररूपं वाच्यम् * ६।१।९४ शकन्धुः कर्कन्धुः कुलटा । सीमन्तः केशवेशे । हलीषा मनीषा लाङ्गलीषा पतञ्जलिः । सारङ्गः पशुपक्षिणोः । इति शकन्ध्वादिः ॥२०५॥ १०७१ पारस्करप्रभृतीनि च संज्ञायाम् ६।१।१५७ पारस्करो देशः । कारस्करो वृक्षः । रथस्या ( रथस्था ) नदी । किष्कुः प्रमाणम् । किष्किन्धा गुहा । तद्बृहतोःकरपत्योश्चोरदेवतयोः सुट् तलोपश्च । प्रात्तुम्पतौ गवि कर्तरि । इति पारस्करादिः ॥२०६॥ ३६८१ उञ्छादीनां च ६।१।१६० उञ्छ म्लेच्छ जञ्ज जल्प ( जल्प ) जप वध । युग कालविशेषे रथाद्युपकरणे च । गरो दूष्ये ( गरो दुष्ये ) अवन्तः वेदवेगवेष्टबन्धाः करणे । स्तुयुद्रुवश्छन्दसि । वर्तनि स्तोत्रे । श्वभ्रे दरः । साम्बतापौ भावगर्हायाम् । उत्तमशश्वत्तमौ सर्वत्र । भक्षमन्थभोगमन्थाः देहाः । इत्युञ्छादिः॥२०७॥ ३६९१ वृषादीनां च ६।१।२०३ वृषः जनः ज्वरः ग्रहः हयः मयः गयः तायः तयः चयः अमः वेदः सूदः अंशुः गुहा । शमरणौ संज्ञायां सम्मतौ भावकर्मणोः । मन्त्रः शान्तिः कामः यामः आरा धारा कारा वहः कल्पः पादः । इति वृषादिराकृतिगणः । अविहितलक्षणमाद्युदात्तत्वं वृषादिषु ज्ञेयम् ॥२०८॥ ३७८५ विस्पष्टादीनि गुणवचनेषु ६।२।२४ विस्पष्ट विचित्र विचित्त व्यक्त सम्पन्न पटु पण्डित कुशल चपल निपुण । इति विस्पष्टादिः॥२०९॥ ३७७१ कार्तकौजपादयश्च ६।२।३७ कार्तकौजपौ सावर्णमाण्डकेयौ ( सावर्णिमाण्डूकेयौ ) अवन्त्यश्मकाः पैलश्यापर्णेयाः कपिश्यापर्णेयाः शैतिकाक्षपाञ्चालेयाः कटुकवाधूलेयाः शाकलशुनकाः शाकलशणकाः शणकबाभ्रवाः आर्चाभिमौद्गलाः कुन्तिसुराष्ट्राः चिन्तिसुराष्ट्राः तण्डवतण्डाः अविमत्तकामविद्धाः बाभ्रवशालङ्कायनाः बाभ्रवदानच्युताः कठकालापाः कठकौथुमाः कौथुमलौकाक्षाः स्त्रीकुमारम् मौदपैप्पलादाः वत्सजरन्तः सौश्रुतपार्थिवाः जरामृत्यूयाज्यानुवाक्ये । इति कार्तकौजपादिः ॥२१०॥ ३७७६ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलोदासीभाराणां च ६।२।४२ दासीभारः देवहूतिः देवभीतिः देवलातिः वसुनीतिः ( वसूनितिः ) ओषधिः चन्द्रमाः । इति दासीभारादिराकृतिगणः ॥२११॥ ३८१५ युक्तारोह्यादयश्च ६।२।८१ युक्तारोही आगतरोही आगतयोधी आगतवञ्ची आगतनन्दी आगतप्रहारी आगतमत्स्यः क्षीरहोता भगिनी भर्ता ग्रामगोधुक् अश्वत्रिरात्रः गर्गत्रिरात्रः व्युष्टित्रिरात्रः गणपादः एकशितिपाद् । पात्रेसमिताद्यश्च । इति युक्तारोह्यादिराकृतिगणः ॥२१२॥ ३८१९ घोषादिषु च ६।२।८५ घोष घट (कट) वल्लभ ह्रद बदरी पिङ्गल ( पिङ्गली ) पिशङ्ग माला रक्षा शाला ( कूट ) कुट कूटशाल्मली अश्वत्थ तृण शिल्पी मुनि प्रेक्षाकु ( प्रेक्षा ) इति घोषादिः ॥२१३॥ ३८२० छात्र्यादयः शालायाम् ६।२।८६ छात्रि पेलि भाण्डि व्याडि आखण्डि आटि गोमि । इति छात्र्यादिः ॥२१४॥ ३८२१ प्रस्थेऽवृद्धमकर्क्यादीनाम् ६।२।८७ कर्कि ( कर्की ) मघ्नी मकरी कर्कन्धु शमी करीरि (करीर) कन्दुक कुवल (कवल) बदरी । इति कर्क्यादिः ॥२१५॥ ३८२२ मालादीनां च ६।२।८८ माला शाला शोणा ( शोण )

**द्राक्षा ध्वाक्षा श्यामा काश्मी एक काम ।** **दिवोदासवध्र्यश्च** इति मालादिराकृतिगणः ॥ २१६ ॥ ३८५२ क्रत्वादयश्च ६।२।११८ **क्रतु दृशीक प्रतीक प्रतूर्ति हव्य भव्य भग ।** इति क्रत्वादिः ॥ २१७ ॥ ३८५९ आदिश्चिहणादीनाम् ६।२।१२५ **चिहण मदुर मद्गुर वैतुल पटत्क वैडालिकर्णक वैडालिकर्णि कुक्कुट चिक्कण चित्कण ।** इति चिहणादिः ॥ २१८ ॥ ३८६५ वर्ग्यादयश्च ६।२।१३१ **दिगादिषु वर्ग्यादयस्त एव कृतयदन्ताः ।** इति वर्ग्यादयः ॥ २१९ ॥ ३८६८ चूर्णादीन्यप्राणिषष्ठ्याः ६।२।१३४ **चूर्ण करिष करीष शाकिन शाकट द्राक्षा तूस्त कुन्दम दलप चमसी चक्कन चौल ।** इति चूर्णादिः ॥ २२० ॥ ३८६९ षट् च काण्डादीनि ६।२।१३५ **काण्ड चीर पलल सूप शाक कूल ।** इति काण्डादिः ॥ २२१ ॥ ३८७४ उभे वनस्पत्यादिषु युगपत् ६।२।१४० **वनस्पतिः बृहस्पतिः शचीपतिः तनूनपात् नराशंसः शुनःशेपः शण्डामर्कौ तृष्णावरूत्री लम्बाविश्ववयसौ मर्मृत्युः ।** इति वनस्पत्यादिः ॥ २२२ ॥ ३८८० सञ्ज्ञायामनाचितादीनाम् ६।२।१४६ **आचित पर्याचित आस्थापित परिगृहीत निरुक्त प्रतिपन्न अपश्लिष्ट प्रश्लिष्ट उपहित उपस्थित संहितागवि ।** इत्याचितादिः ॥ २२३ ॥ ३८८१ प्रवृद्धादीनां च ६।२।१४७ **प्रवृद्धं यानम् । प्रवृद्धो वृषलः । प्रयुता सूष्णवः । आकर्षे अवहितः अवहितो भोगेषु । खट्वारूढः । कविशस्तः ।** इति प्रवृद्धादिः ॥ २२४ ॥ आकृतिगणोऽयम् । तेन । **प्रवृद्ध यानम् । अप्रवृद्धो वृषकृतो रथ इत्यादि ।** ३८९४ कृत्योकेष्णुच्चार्वादयश्च ६।२।१६० **चारु साधु यौधिक ( यौधकि ) अनङ्गमेजय वदान्य अकस्मात् वर्तमानवर्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः सञ्ज्ञायाम् । विकारसदृशे । व्यस्तसमस्ते । गृहपति गृहपतिक । राजाह्नोश्छन्दसि ।** इति चार्वादिः ॥ २२५ ॥ ३९१० न गुणादयोऽवयवाः ६।२।१७६ **गुण अक्षर अध्याय सूक्त छन्दोमान ।** इति गुणादिराकृतिगणः ॥ २२६ ॥ ३९१८ निरुदकादीनि च ६।२।१८४ **निरुदक निरुपल निर्मक्षिक निर्मशक निष्कालक निष्कालिक निष्पेष दुस्तरीप निस्तरीप निस्तरीक निरजिन उदजिन उपाजिन । परेर्हस्तपादकेशकर्षाः ।** इति निरुदकादिराकृतिगणः ॥ २२७ ॥ २९२७ प्रतेरंश्वादयस्तत्पुरुषे ६।२।१९३ **अंशु जन ( राजन् ) उष्ट्र खेटक अजिर आर्द्रा श्रवण कृत्तिका अर्धपुर ।** इत्यंश्वादिः ॥२२८॥ ३९२८ उपाद्द्व्यजजिनमगौरादयः ६।२ १९४ **गौर तैष तैल लेट लोट जिह्वा कृष्णा कन्या गुध कल्प पाद ।** इति गौरादिः ॥२२९॥ ६२९ * त्रिचक्रादीनां छन्दस्युपसङ्ख्यानम् * ६।२।१२९ **त्रिचक्र त्रिवृत् । त्रिवङ्कुर ।** इति त्रिचक्रादिराकृतिगणः ॥२३०॥ ८३१ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६।३।३४ **प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा ( स्वा ) कान्ता ( क्षान्ता ) समा चपला दुहिता वामा अबला तनया ।** इति प्रियादिः ॥ २३१ ॥ ८३६ तसिलादिष्वाकृत्वसुचः ६।३ ३५ **तसिल् त्रल् तरप् तमप् चरट् जातीयर् कल्पप् देशीयर् रूपप् पाशप् थल् थाल् दार्हिल् तिल् थ्यन् ।** इति तसिलादयः ॥२३२॥ ९३६ * कुक्कुट्यादीनामण्डादिषु * ६।३।४२ **कुक्कुटी मृगी काकी अण्ड पद शाव भ्रकुंस भ्रुकुटी ।** इति कुक्कुट्यादिरण्डादिश्च ॥ २३३-२३४ ॥ १०३४ पृषोदरादीनि यथोप

दिष्टम् ६।३।१०९ **पृषोदर पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच बृसी मयूर ।** इति पृषोदरादिराकृतिगणः ॥ २३५ ॥ १०३८ वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम् ६।३।११७ **कोटर मिश्रक सिध्रक पुरगसारिक (शारिक)** इति कोटरादिः ॥२३६॥ **किंशुलुक शाल्व नड अञ्जन भञ्जन लोहित कुक्कुट ।** इति किंशुलुकादिः ॥ २३७ । १०४१ मतौ बह्वचोऽनजिरादीनाम् ६।३।११९ **अजिर खदिर पुलिन हंसक (हंस) कारण्ड ( कारण्डव ) चक्रवाक ।** इत्यजिरादिः ॥२३८ । १०४२ शरादीनां च ६।३।१२० **शर वश धूम अहि कपि मणि मुनि शुचि हनु ।** इति शरादिः ॥ २३९ ॥ १०४३ । * अपीलवादीनामिति वक्तव्यम् * ६।३।१२१ **पीलु दारु रुचि चारु गमु कमु ।** इति पीलवादिः ॥ २४० ॥ १३११ बिल्वकादिभ्यश्छस्य लुक् ६।४।१५३॥ **बिल्वक वेणु वेत्र वेतस तृण इक्षु काष्ठ कपोत क्रुञ्चा तक्षन् ।** नडाद्यन्तर्गणो बिल्वादिः । **छविधानार्थं ये नडादयस्ते यदा छसंनियोगेन कृतकुगागमास्ते** बिल्वकादयः ॥ २४१ ॥ इति षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः ।

स्नात्व्यादयश्च ६।१।४९ **स्नात्वी पीत्वी ।** इति स्नात्व्यादिराकृतिगणः ॥२४॥ १३८६ द्वारादीनां च ७।३।४ **द्वार स्वर स्वग्राम स्वाध्याय व्यल्कश स्वस्ति स्वर् स्फ्यकृत् स्वादु मृदु श्वस् श्वन् स्व ।** इति द्वारादिः ॥२४३॥ १५४९ स्वागतादीनां च ७।३।७ **स्वागत स्वध्वर स्वङ्ग व्यङ्ग व्यड व्यवहार स्वपति स्वपिति ।** इति स्वागतादिः ॥२४४॥ १४३८ अनुशतिकादीनां च ७।३।२० **अनुशतिक अनुहोड अनुसंवरण ( अनुसञ्चरण ) अनुसंवत्सर अङ्गारवेणु** असिहत्य [ **अस्यहत्य** ] **अस्यहेति वध्योग पुष्करसद् अनुहरत् कुरुकत कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्वलोक सर्वपुरुष सर्वभूमि प्रयोग परस्त्री । राजपुरुषात्ष्यञि । सूत्रनड ।** इत्यनुशतिकादिराकृतिगणोऽयम् ॥२२५॥ **तेन । अभिगम अधिभूत अधिदेव चतुर्विद्या इत्यादयोऽप्यत्र विज्ञेयाः ।** ४६४ * क्षिपकादीनां चोपसंख्यानम् ७।३।४५ **क्षिपका ध्रुवका चरका सेवका करका चटका अवका लहका अलका कन्यका ध्रुवका एडका ।** इति क्षिपकादिराकृतिगणः ॥१०६॥ १८६४ न्यङ्क्वादीनां च ७।३।५३ **न्यङ्कु मद्गु भृगु दूरेपाक फलेपाक क्षणेपाक दूरेपाका फलेपाका दूरेपाकु फलेपाकु तक्र ( तत्र ) वक्र ( चक्र ) व्यतिषङ्ग अनुषङ्ग अवसर्ग उपसर्ग श्वपाक मांसपाक ( मासपाक ) मूलपाक कपोतपाक उलूकपाक । संज्ञायां मेघनिदाघावदाघार्घाः । न्यग्रोध वीरुत् ।** इति न्यङ्क्वादिः ॥१४७॥ १५७१, १५८३ * काण्यादीनां चेति वक्तव्यम् * ७।४।३ **कण रण भण श्रण लुप हेठ ह्वायि वाणि ( चाणि ) लोटि ( लोठि ) लोपि ।** इति काण्यादिः ॥१४८॥ इति सप्तमोऽध्यायः ।

## अष्टमोऽध्यायः ।

३९३४ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ८।१।२७ **गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्ययन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ (भूयिष्ठ) वानाम ॥** इति गोत्रादिः ॥२४९॥ ३९७४ पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ८।१।६७ **काष्ठ दारुण अमातापुत्र वेश अनाज्ञात अनुज्ञात अपुत्र अयुत अद्भुत अनुक्त भृश घोर सुख परम सु अति ।** इति काष्ठादिः ॥२५०॥ १८९७ मादुपधायाश्च मतोर्वोऽयवादिभ्यः

*

# परिशिष्टे रूपलेखनप्रकारः ।

**अपोपवत्**—'पूङ्' धातोः "हेतुमति च" इत्यनेन णिचि अनुबन्धलोपे पू इ इति स्थिते "द्विर्वचनेऽचि" इति निषेधात् वृद्ध्यभावे "सनाद्यन्ता धातवः" इत्यनेन ण्यन्तस्य धातुसंज्ञायां लुङि तिपि इपावितौ "लुङ्-लङ्-लृङ्क्ष्वडु-दात्तः" इत्यनेन अडागमे "च्लि लुङि" इति च्लौ "णि-श्रि-द्रु-स्रुभ्यः" इत्यनेन च्लेश्चङादेशे अनुबन्धलोपे "चङि" इत्यनेन द्वित्वे उत्तरखण्डस्य वृद्ध्यवादेशयोः कृतयोः 'अपू पाव् इ अत्' इति स्थिते "णेरनिटि" इत्यनेन णिलोपे "णौ चङ्युपधाया ह्रस्वः" इत्यनेन उपधाह्रस्वे अभ्यासे आकाराभावेन "सन्यतः" इत्यस्याप्राप्त्या "ओः पुयण्ज्यपरे" इत्यनेन अभ्यासस्याकारस्य इकारे सन्वद्भावविषयत्वात् "दीर्घो लघोः" इति दीर्घे "अपीपवत्" इति जातम् ।

**अचीचकासत्**—"चकासृ दीप्तौ" अस्माण्णिचि तदन्ताल्लुङि तिपि इपावितौ "लुङ्-लङ्" इत्यडागमे मध्ये च्लौ तस्य "णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्" इत्यनेन चङादेशे "चङि" इत्यनेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे च "कुहोश्चुः" इति चुत्वे 'णेरनिटि' इति णिलोपे चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः इत्यर्थपक्षाश्रये "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावे "सन्यतः" इति इत्वे "दीर्घो लघोः" इति दीर्घे 'अचीचकासत्' इति । "अङ्गं यत्र द्विरुच्यते" इति मते अर्थात् "सन्वल्लघुनी"त्यस्य "चङ्परे णौ यल्लघु तत्परो योऽङ्गस्य अभ्यासः" इत्यर्थपक्षे सन्वद्भावाऽभावात् इत्वदीर्घयोरप्राप्तयोः "अचचकासत्" इति भवतीति ।

**औब्जिजत्**—'उब्ज आर्जवे' अयं धातुः उपदेशे दकारोपधः । तस्य "भुजन्युब्जौ पाण्युपतापयोः" इति सूत्रेण निपातनात् बकारे कृते निष्पन्नात् 'उब्ज्' धातोर्णिचि ण्यन्तस्य "सनाद्यन्ताः" इत्यनेन धातुसंज्ञायां लुङि तिपि अजादित्वादाडागमे "आटश्चे"ति वृद्धौ औब्ज् इ त्' इति स्थिते मध्ये च्लौ तस्य "णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्" इत्यनेन चङि "नन्द्राः संयोगादयः" इत्यनेन निषेधात् "चङि" इत्यनेन जिशब्दस्य द्वित्वे, नच साम्प्रतं संयोगादौ दकाराभावात् कथं "नन्द्राः" इत्यस्य प्रवृत्तिरिति वाच्यम् ? द्वित्वे कर्त्तव्ये अन्तरङ्गोऽपि नकारादेशः "नन्द्राः" इति निषेधे कृते प्रवर्त्तते दकारोच्चारणसामर्थ्यात् । एवञ्च "औब्जि जि अ त्' इति स्थिते "णेरनिटि" इति णिलोपे "औब्जिजत्" इति सिद्धम् ।

**अतिष्ठिपत्**—"ष्ठा गति-निवृत्तौ" इत्यस्य धात्वादेः षः सः" इति सत्वे "निमित्तापाये नैमित्तिकस्याप्यपायः" इति परिभाषया। ष्टत्वस्यापि निवृत्तौ स्थाइत्यस्माद्धातोः' "हेतुमति च" इति णिचि अनुबन्धलोपे "अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुक् णौ" इत्यनेन पुकि अनुबन्धलोपे स्थापि इति ण्यन्तस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लुङि तिपि इपावितौ "लुङ्-लङ्" इत्यडागमे मध्ये च्लौ तस्य "णि-श्रि-द्रु-स्रुभ्यः" इत्यनेन चङि "णौ चङ्युपधाया ह्रस्वः" इति ह्रस्वे "णेरनिटि" इति णिलोपे "चङि" इत्यनेन द्वित्वे अभ्यास-

संज्ञायां "सपूर्वाः खयः" इति अभ्यासावयवसकारपकारयोर्लोपे "अभ्यासे चर्च" इति चर्त्वे "सन्वल्लघुनि" इति सन्वद्भावे "सन्यतः" इति इत्वे षत्वे ष्टुत्वे च कृते अतिष्ठप अत् इति स्थिते "तिष्ठतेरित्" इत्यनेन उपधाया इदादेशे "अतिष्ठिपत्" इति।

**अध्यजीगपत्**—अधिपूर्वादिङ्धातोर्णिचि तदन्ताल्लुङि तिपि अडागमे च्लेश्चङादेशे "णौच संश्चङोः" इति इङो गाङादेशे पुकि उपधाह्रस्वत्वे 'अधि अ गप् इ अ त्' इति स्थिते 'गप्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'कुहो श्चुः' इत्यनेन अभ्यासस्य चुत्वे सन्वद्भावे 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति दीर्घे यणि 'अध्यजीगपत्' इति। नचात्र णिज्निमित्तस्य गाङो द्वित्वे कर्त्तव्ये स्थानिवद्भावो निषेधो वा शङ्क्यः, यत्र अभ्यासोत्तरखण्डे आद्योऽजवर्णोऽस्ति तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात्। इह तु गाङः पूर्वं सति हि द्वित्वे 'अजादेर्द्वितीयस्य' इति णिच एव द्वित्वं भवेत्ततः चङ्परणिज्निमित्तो गाङ् ततश्च प्रक्रियायां परिनिष्ठितरूपे वा अवर्णवदुत्तरखण्डं दुर्लभं कीर्तयतिसाम्यात्।

**जिघृक्षति**—'ग्रह् धातोः' "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि अनुबन्धलोपे सनः आर्धधातुकत्वात् इटि प्राप्ते "सनि ग्रहगुहोश्च" इति निषेधे धातुसंज्ञायां लटि तिपि अनुबन्धलोपे "रुदविदमुषग्रहिस्वपिप्रच्छः संश्च" इति सनः कित्वेन "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति सम्प्रसारणे पूर्वरूपे "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् "उरत्" इति अत्वे हलादिशेषे च "कुहोश्चुः" इति चुत्वे "सन्यतः" इति इत्वे सति हकारादिणः परस्य सस्य षत्वे प्राप्ते तस्यासिद्धत्वात् हस्य ढत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति भष्भावे "षढोः कः सि" इति कत्वे षत्वे "जिघृक्षति" इति।

**ईर्त्सति**—अर्द्धितुमिच्छति इति विग्रहे 'ऋध्' धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन सनि अनुबन्धलोपे "आप्ज्ञप्यृधामीत्" इति ईत्वे रपरत्वे ईर्ध् + स इति स्थिते "पूर्वत्रासिद्धीयमद्वित्वे" इति वचनात् पूर्वं चर्त्वे ततः "नन्द्राः" इति रेफं वर्जयित्वा "अजादेर्द्वितीयस्ये"ति 'त्स' इत्यस्य द्वित्वे अभ्याससंज्ञायाम् "अत्र लोपोऽभ्यासस्य" इति अभ्यासस्य लोपे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि शपावितौ "अतो गुणे" इति पररूपे 'ईर्त्सति' इति। इवन्त–ऋध–भ्रस्ज–दम्भु–श्रि–स्वृ–यु–ऊर्णु–भर–ज्ञपि–एभ्यः सन इट् वा स्यादित्यर्थक "सनीवन्तर्धे"ति इट् पक्षे तु—'अर्दिधिषति' इति बोध्यम्।

**ईप्सति**—आप्तुमिच्छतीति विग्रहे 'आप्' धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि अनुबन्धलोपे "आप्ज्ञप्यृधामीत्" इत्यनेन ईत्वे सन्नन्तस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि तिपि अनुबन्धलोपे "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् "अत्र लोपोऽभ्यासस्य" इत्यभ्यासस्य लोपे सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे पररूपे च 'ईप्सति" इति सिद्धम्।

**धीप्सति**—"दम्भ्" धातुः उपदेशे 'दन्भु' इति, तस्मात् "धातोः कर्मणः" इत्यनेन सनि अनुबन्धलोपे सन्नन्तस्य धातुसंज्ञायां लटि तिपि शपि पूर्वरूपे "सनीवन्तर्धभ्रस्ज–दम्भु–

श्रि-स्वृ-यूर्णु-भर-ज्ञपि-सनाम्" इत्यनेन विभाषया सनो झलादित्वाभावेन अकित्त्वान्नलोपाभावे 'दम्भ इ स ति' इति स्थिते "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे "सन्यतः" इति इत्वे इणः परस्य सस्य षत्वे "दिदम्भिषति" इति । इड्विकल्पपक्षे "दम्भ इच्च" इत्यनेन दम्भेरकारस्य इत्वे दिम्भ स ति इति स्थिते हलग्रहणस्य जातिपरत्वेन "हलन्ताच्च" इति कित्त्वे "अनिदिता"मिति उपदेशिनो नकारस्य लोपे द्वित्वे अभ्याससंज्ञायाम् "अत्र लोपोऽभ्यासस्य" इति अभ्यासलोपे "अभ्यासे चर्च्च" इति जश्त्वे भष्भावे "खरि च" इति चर्त्वे "धिप्सति" इति । "दम्भ ईच्च" इत्यनेन चकारादीत्त्वपक्षे "धीप्सति" इत्यप्यव्यवहितपूर्ववद्बोध्यम् ।

**ज्ञीप्सति**—'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इति सूत्रे ज्ञपिः पुगन्तो मित्संज्ञकः, पकारान्तश्चौरादिकश्च । तत्र घटादिस्थात् मारणतोषणनिशामनार्थात् ज्ञाधातोः हेतुमण्णिचि पुकि घटादित्वेन मित्वादुपधाह्रस्वे 'ज्ञपि' इति, तस्मादथवा 'ज्ञप मिच्चे'ति यः स्वतः पठितश्चुरादौ, तस्माण्णिचि उभयविधादपि ण्यन्ताज्ज्ञपिधातोः सनि 'सनीवन्तर्धे'ति इडभावपक्षे णेः परस्य सनः 'इको झल्' इति कित्त्वात्तस्मिन्परे णेर्गुणाभावे 'ज्ञप् इ स' इति स्थिते 'अज्झनगमां सनि' इत्यनेन प्राप्तदीर्घं परत्वाद्बाधित्वा 'णेरनिटि' इत्यनेन णिलोपे 'आप्ज्ञप्यृधामीत्' इत्यनेन ईत्वे 'ज्ञीप्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'अत्र लोपोऽभ्यासस्य' इत्यनेन अभ्यासलोपे' लटि तिपि शपि पररूपे 'ज्ञीप्सति' इति । इट्पक्षे तु 'जिज्ञपयिषति' इति बोध्यम् ।

**उचिच्छिषति**—"उच्छी विवासे" अत्र "छे च" इति तुकि कृते श्चुत्वेन "उच्छ्" इति निष्पन्नं भवति । तस्मात् सनि सन्नन्तस्य "सनाद्यन्ताः" इत्यनेन धातुसंज्ञायां लटि तिपि शपि सनः इटि 'उच्छ् इ स अ ति' इति स्थिते "पूर्वत्रासिद्धीयमद्वित्वे" इति निषेधात् द्वित्वे कर्त्तव्ये चुत्वस्य निषेधाभावेन 'च्छिस्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषेण छकारसकारयोर्निवृत्तौ 'उचिच्छिस अ ति' इति स्थिते सकारस्य प्रत्ययावयवत्वात् षत्वे पररूपे "उचिच्छिषति" इति सिद्धम् ।

नच "निमित्तापाये नैमित्तिकस्याप्यपायः" इति न्यायात् निमित्तकस्य छस्य हलादिशेषेणाऽपाये सति नैमित्तिकस्य तुकोऽपि निवृत्तेस्ततश्च तदादेशचकारस्य कथमभ्यासे श्रवणमिति वाच्यम्? 'च्छ्वो'रिति सूत्रस्थ-सतुग्ग्रहणेन तस्याऽनित्यत्वात् । अन्यथा 'पृष्टः' 'पृष्टवान्' इत्यत्र "च्छ्वो"रिति सूत्रेण छकारस्य शकारे सति निमित्ताऽभावादेव तुकोऽपि निवृत्तिसिद्धौ सतुग्ग्रहणं व्यर्थं स्यात् । किञ्च 'पुष्ययोगं जानाति' 'पुष्येण योजयति' इत्येतत्साधके 'पुष्ययोगे ज्ञी' इति वचने भाष्यकृत्कृतप्रत्ययापत्त्यनुवृत्तिर्वा उक्तपरिभाषायाः अनित्यत्वे ज्ञापकं बोध्यम् । अन्यथा कृल्लुकि निमित्तापायपरिभाषयैव कुत्वनिवृत्तौ सिद्धायां किं तदनुवृत्त्येति दिक् ।

**अरिरिषति**—'ऋ' धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि अनुबन्धलोपे आर्धधातुकसंज्ञायां "स्मिपूङ्रञ्ज्वशां सनि" इति इडागमे गुणे रपरे अरि+स् इति स्थिते "अजादेर्द्वितीयस्य" इति रिस् शब्दस्य "सन्यङोः" इत्यनेन द्वित्वे अभ्याससंज्ञायां

"हलादिः शेषः" इति सलोपे "सनाद्यन्ताः" इति धातुसंज्ञायां लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि पररूपे षत्वे 'अरिरिषति' इति ।

नच "द्विर्वचनेची"ति निषेधात् इडागमोत्तरं कथं गुण इति वाच्यम्' इसो द्वित्वकार्यित्वेन "कार्यमनुभवन्नि"ति परिभाषया निमित्तत्वाभावेन "द्विर्वचनेची"त्यस्याऽप्राप्तेः ।

**यंयम्यते**—यम्धातोर्यङि द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'नुगतोऽनुनासिकान्तस्य' इति नुकि तस्यानुस्वारे यङन्तस्य धातुत्वाल्लटि ङित्वादात्मनेपदे तप्रत्यये एत्वे शपि पररूपे 'यंयम्यते' इति । ननु नुको नकारस्य अपदान्तत्वादझल्परकत्वाच्चेति कथं तस्य 'नश्च' इत्यनुस्वार इति चेन्न, नुकानुस्वारो लक्ष्यते इत्युक्तत्वात् ।

**बोभवीति**—'भू' धातोर्यङि "यङोऽचि च" इत्यनेन तस्य लुकि प्रत्ययलक्षणेन "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् "अभ्यासे चर्च" इत्यनेन जत्वे "गुणो यङ्लुकोः" इत्यनेन अभ्यासोकारस्य गुणे 'बोभू' इत्यस्माल्लटि तिपि इपावितौ 'बोभू ति' इति स्थिते "श्तिपा शपे"ति निषेधात् "दिवादिभ्यः श्यन्" "रुधादिभ्यः श्नम्" इत्यादीनां प्राप्तावपि "कर्त्तरि शप्" इत्यस्य "श्तिपा शपे"ति निषेधाविषयत्वात् तेन शपि "चर्करीतञ्चे' त्यदादौ पाठात् शपेः लुकि 'यङो वा" इत्यनेन ईडागमे ऊकारस्य गुणे अवादेशे "बोभवीति" । "भूसुवोस्तिङ्" इति गुणनिषेधस्तु यङ्लुकि भाषायां न "बोभूतु तेतिक्ते" इति छन्दसि निपातनात् । अत एव यङ्लुग्भाषायामपि सिद्धः ।

**वर्वृतीति**—'वृतु वर्तने' अस्मात् यङि यङ्लुकि च कृते "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायाम् "उरत्" इत्यत्वे रपरत्वे हलादिशेषे च कृते 'ववृत' इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि तिपि अनुबन्धलोपे "यङो वा" इत्यनेन ईटि व वृत ई ति इति स्थिते "नाभ्यस्तस्याचि पिति सार्वधातुके" इत्यनेन निषेधात लघूपधगुणाऽभावे "रुग्रिकौ च लुकि" इत्यनेन अभ्यासस्य रुगागमे 'वर्वृतीति' इति सिद्धम् । एवञ्च रिकागमे "वरिवृतीति" रीगागमे "वरीवृतीति" इत्यपि बोध्यम् ।

**अजर्घाः**—'गृधु अभिकाङ्क्षायामित्यस्माद्धातोः यङ्लुकि "सन्यङोः" इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे "रुग्रिकौ च लुकि" इति सूत्रेण अभ्यासस्य रुकि "कुहोश्चुः" इति चुत्वे जश्त्वे प्रत्ययलक्षणेन यङन्तस्य धातुसंज्ञायां लङि सिपि अनुबन्धलोपे शपि लुकि 'पुगन्ते'ति गुणे रपरत्वे हल्ङ्यादिना सुलोपे जर्+गर्+ध् इति स्थिते "एकाचो वश" इति गकारस्य भष्भावत् घकारे जर्+घर्+ध् इति स्थिते धकारस्य श्चुत्वेन दकारे 'दश्च' इति रुत्वे "लुङ्लङि"ति अडागमे अजर्+घर्+र् इति स्थिते "रो रि" इति रेफलोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति दीर्घे रेफस्य विसर्गे 'अजर्घाः इति सिद्धम् । तदुक्तं केनचित्—

"गृधेर्यलोपे लङि सेरिलोपे हल्ङ्यादिलोपे रपरे गुणे च ।
भष्भावजश्त्वे च रुरेफलोपे ढ्लोपदीर्घे च भवेदजर्घाः ॥"

**सपत्नीवाचरतीति विग्रहे सिद्धानि रूपाणि समर्थ्यताम् ।**

सपत्नीवाचरतीति विग्रहे—सपत्नायते, सपतीयते, सपत्नीयते, इति त्रीणि रूपाणि भवन्ति । तथा हि—

शत्रुपर्यायात् अपत्नशब्दात् "शार्ङ्गरवाद्यञो ङीन्" इति ङीनि ततः सौ तदन्तात्सपत्नी-वाचरतीति विग्रहे "कर्तुः क्यङ् सलोपश्च" इति क्यङि कङ्योरित्सञ्ज्ञायां लोपे च "सुपो धातु-प्रातिपदिकयोः" इति सुपो लुकि "क्यङ्मानिनोश्च" इति पुंस्त्वेन ङीनो निवृत्तौ "अकृत्सार्व-धातुकयोः" इति दीर्घे 'सपत्नाय' इत्यस्य "सनाद्यन्ताधातवः" इति धातुसंज्ञायां लटि तप्रत्यये शपि शपयोरित्संज्ञायां लोपे च 'सपत्नाय अ त' इति स्थिते "अतो गुणे" इति पररूपे "टित आत्मनेपदानां टेरे" इति एत्वे "सपत्नायते" इति ।

समानः पतिः=स्वामी, यस्याः इति बहुव्रीहौ तु—सपतिशब्दात् "नित्यं सपत्न्यादिषु" इति नादेशे नान्तत्वात् ङीपि च कृते उक्तप्रकारेण क्यङि भाषितपुंस्कत्वात् पुंवद्भावेन ङीब्न-त्वयोर्निवृत्तौ दीर्घादिकार्ये 'सपतीयते' इति ।

विवाहजन्यसंस्कारविशेषनिमित्तकं पतिशब्दमाश्रित्य समानः पतिः=भर्ता, यस्याः इति बहुव्रीहौ उक्तरूपेण निष्पन्नस्य सपत्नीशब्दस्य नित्यस्त्रीत्वात् पुंस्त्वाभावेन क्यङादिकार्ये 'सपत्नीयते' इति ।

**लोहितायति**—'लोहित'शब्दात् भवत्यर्थे "लोहितादिडाज्भ्यः क्यष्" इति सूत्रेण क्यषि अनुबन्धलोपे, नच 'काम्यच्' इव क्यषोऽपि ककारः उच्चारणसामर्थ्यात् श्रूयत एवेति वाच्यम्? क्यषः ककारस्य भाष्ये प्रत्याख्यानात् । एवं च लोहित य' इति स्थिते "सनाद्यन्ता धातवः" इत्यनेन धातु संज्ञायां लटि "वा क्यषः" इत्यनेन परस्मैपदसंज्ञायां तिपि सार्वधातु-कसंज्ञायां शपि पररूपे दीर्घे च कृते "लोहितायति" इति । आत्मनेपदे तु "लोहितायते" इति भवति । अलोहितो लोहितो भवतीत्यर्थः ।

नच अभूत तद्भावविषयत्वं कथं लब्धमिति चेच्छृणु-प्रकृतिसूत्रे "अच्वेः" इत्यनुवर्तनात् लभ्यते । नन्वेवमभूततद्भावविषयत्वं डाचोऽपि विशेषणं स्यादिति चेन्न, अव्यक्तानुकरणाड्डाचो विहितत्वेन तस्य अभूततद्भावविषयत्वे अनुकरणत्वस्य भङ्गापत्तेः । एवञ्च आदिशब्दग्राह्याणां श्यामादिशब्दानामपि न विशेषणम्, आदिशब्दस्य भाष्ये प्रत्याख्यानात् । तथा च वार्ति-कम्—"लोहितडाज्भ्यः क्यष्वचनं, भृशादिष्वितराणि" आदिग्रहणमपनीय लोहितशब्दाड्डा-जन्तेभ्यश्च क्यष्वचनं कर्तव्यम्, इतराणि=लोहितादिगणपठितानि, प्रातिपदिकानि भृशा-दिष्वेव पठनीयानीत्यर्थः । एवञ्च लोहितादिगणपठित-श्यामादिशब्देभ्यः क्यङि नित्यमात्मने-पदमेवेति ज्ञेयमिति दिक् ।

**चन्दिद्रीयिषति**—चन्द्रीयतेः सनि "यथेष्टं नामधातुषु" इति वार्तिकबलात् द्वितीय-स्यैकाचो द्वित्वे रूपम् । अत्र "नन्द्राः" इति निषेधात् नकारस्य न द्वित्वमिति माधवः । वस्तुतस्तु आदिभूतादचः परेषां नदराणां न द्वित्वमित्येव भाष्यसम्मतत्वेन माधवमतं चिन्त्य-मेवेति दिक् ।

**याहि याहीति याति**—अत्र' क्रियासमभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः' इत्य-नेन लोट्, तस्य सर्वपुरुषवचनविषये परस्मैपदिभ्यः कर्तरि हिः, एवञ्च 'याही'ति । अत्र 'यथा-विध्यनुप्रयोगः पूर्वस्मिन्' इति लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः, तत अनुप्रयोगात् यथा यथं

लडादयस्तिबादयश्च भवन्ति। ततः संख्याकालयोः पुरुषविशेषार्थस्य चाऽभिव्यक्तिः। अत्र 'क्रियासमभिव्याहारे द्वे वाच्ये' इति द्वित्वे याहि याहीति याति, यातः, यान्ति, इत्यनुप्रयोगात् सर्वलकाराः सर्वपुरुषवचनानि च भवन्ति। पुनः पुनरतिशयेन वा एककर्तृकं वर्तमानकालिकं यानं यातीत्यर्थः। अत्र इति शब्दस्तु अभेदान्वये तात्पर्यं ग्राहयतीति दिक्।

**विनयति विपादिकाम्—पदव्यवस्थापूर्वकं साधनीयः।**

'णीञ् प्रापणे' अस्मात् "स्वरितञितः" इत्येव आत्मनेपदे सिद्धे "कर्तृस्थे चाऽशरीरे कर्मणि" इति सूत्रं नियमयति—"कर्मकारके कर्तृस्थे सति णीञ्धातोर्यदात्मनेपदं कर्तृगे फले ञित्वात्प्राप्तं, तच्छरीरावयवभिन्ने एव सति कर्तृकारके स्यात्" इति। नच सूत्रस्थशरीराग्रहणात् शरीरावयव इति कथमुच्यते इति चेत् सत्यम्? शरीरतादात्म्यापन्नस्यैव कर्तृतया शरीरस्य कर्तृस्थत्वासम्भवेन सूत्रे शरीरशब्दात् शरीरावयवी लक्ष्यते। तेन प्रकृते विपादिकायाः शरीरावयवत्वात् आत्मनेपदाभावेन 'वि' उपसर्गात् 'णी' धातोर्लटि तिपि "णो नः" इति नत्वे शपि गुणे अयादेशे "विनयति" इति। "पादस्फोटो विपादिका" इत्यमरः।

---

# परिशिष्टे पङ्क्तिलेखनप्रकारः।

**ईर्ष्यतेस्तृतीयस्येति वार्तिकार्थे विवदमानं मतं सोदाहरणं प्रतिपादयत।**

अयमाशयः—'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' इति वार्तिकेन तृतीयव्यञ्जनस्य तृतीयैकाचश्च द्वित्वं भवति। ततश्च तृतीयव्यञ्जनस्य द्वित्वपक्षे व्यञ्जनापेक्षया तृतीयव्यञ्जनं यकारस्तत्सहितस्य 'यि' इत्यैकाचो द्वित्वे णिलोपे च कृते 'ऐर्ष्यियत्' इति रूपं सिद्ध्यति। तृतीयैकाचो द्वित्वपक्षेऽत्र तृतीयैकाचोऽभावेन वार्तिकाप्रवृत्तौ 'अजादेर्द्वितीयस्य' इति 'ष्य' शब्दस्य द्वित्वे यलोपादिकार्ये च कृते 'ऐर्षिष्यत्' इति रूपम्। एवञ्च 'ऐर्ष्यियत्' इति रूपसिद्ध्यर्थं वार्तिकम्। 'ऐर्षिष्यत्' इति तु 'अजादेर्द्वितीयस्य' इत्यनेनैव सिद्धमिति दिक्।

**माभवानिदिधत्—**एध्धातोर्णिचि ण्यन्तस्य धातुत्वाल्लुङि तिपि च्लेश्चङि 'एध् इ अ त्' इति स्थिते पूर्वम् उपधाह्रस्वे ततो 'धी'त्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे माङ्योगादडभावे 'मा भवानिदिधत्' इति। नचाऽत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया अन्तरङ्गत्वात् द्वित्वमेव पूर्वं स्यादिति वाच्यम्, ओणे ऋदित्करणेन बहिरङ्गस्याप्युपधाह्रस्वस्य प्राबल्यबोधनात्। यदि तु उपधाह्रस्वात् प्रागेव अन्तरङ्गत्वात् द्वित्वं स्यात्तदा 'ओण् इ अ त्' इति स्थिते णिशब्दस्य द्वित्वे 'णौ चङ्युपधायाः' इति ह्रस्वे कर्त्तव्ये चङ्परको यो णिस्तदव्यवहितमक्रम् 'ओणिण्' इति, तस्योपधाया दीर्घाभावेन ह्रस्वाप्राप्त्या ह्रस्वनिषेधार्थम् ओणृ धातोॠकारोपादानं व्यर्थं स्यात् तदेव व्यर्थीभूय 'उपधा कार्यं द्वित्वात् प्रबलम् इति ज्ञापयति।

**शैषिकान्मतुबर्थीयेति कारिकां सोदाहरणं व्याख्यायत।**

शेषाधिकारे विहितः शैषिकः। भवार्थे अध्यात्मादित्वात् ठञ्। शैषिकात् = शेषाधिकारभवप्रत्ययान्तात्, शैषिकः सरूपः प्रत्ययो न भवति। तेन शालायां भवः शालीयः 'वृद्धाच्छः'। तदन्तात् शालीये भवः इति वाक्यार्थे स छ एव न भवति किन्तु वाक्यमेव। विरूपस्तु भवत्येव।

अहिच्छत्रे भवः आहिच्छत्रः भवार्थेऽण्। तदन्तादाहिच्छत्रे भवः इति वाक्यार्थे वृद्धाच्छो भवति, आहिच्छत्रीयः। एवं मतुबर्थीयात् सरूपो मतुबर्थकः प्रत्ययो न। धनवानस्यास्तीति मतुबन्तान्मतुब्न। विरूपस्तु स्यादेव, दण्डिमती शाला। इह मतुबन्तात् इनिप्रत्ययो भवत्येव। सन्नन्तात्सन्नेष्यते। अर्थद्वारा च सादृश्यम्। तेनेच्छासन्नन्तात्सन्न। स्वार्थसन्नन्तात्तु स्यादेव। जुगुप्सिषते। मीमांसिषते। इति।

**विस्मापयन्नित्यत्र काऽनुपपत्तिः, किञ्च समाधानम्।**

'विस्मापयन् विस्मितमात्मवृत्तौ' इत्यत्र मनुष्यवाचेति करणेनैव राज्ञो विस्मय इति सिंहरूपप्रयोजकाद् विस्मयाऽभावेन "नित्यं स्मयतेः" इति सूत्राऽप्रवृत्तौ, आत्वाऽभावेन 'पुग्' न स्यात्। यदि प्रयोजकाद् विस्मयः स्वीक्रियते, तदा "भीस्म्योर्हेतुभये" इत्यात्मनेपदमपि स्यात्। एवञ्च शतृप्रत्यययुक्तं रूपमनुपपन्नं भवतीति सन्देहावसरे "विस्मापयन्" इत्येव पाठ इति साम्प्रदायिकाः।

अथवा राजा विस्मयते, मनुष्यवाक् प्रेरयतीति मनुष्यवाक् राजानं विस्मापयते इति, तां मनुष्यवाचं सिंहः प्रेरयतीति सिंहः तया राजानं विस्मापयन्निति ण्यन्ताण्णौ मनुष्यवाग्रूपप्रयोजकाद् विस्मयो विद्यत इत्यात्त्वादिकार्यं सुलभमिति दिक्।

**ऊर्णुनविषति**—उर्णुधातोः सनि 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इत्यनेन विकल्पेन इटि 'विभाषोर्णोः' इत्यनेन ङित्त्वपक्षे गुणाभावात् 'नु' शब्दस्य द्वित्वे उत्तरखण्डे उवङि च कृते सन्नन्तस्य धातुत्वाल्लटि 'तिपि' शपि पररूपे षत्वे 'ऊर्णुनुविषति' इति। ङित्वाभावपक्षे गुणाऽवादेशयोः 'ऊर्णुनविषति' इति। इडभावपक्षे 'नन्द्राः' इति निषेधात् 'नुस्' शब्दस्य द्वित्वे 'इको झल्' इत्यनेन सन्नः कित्त्वात् गुणाभावे 'अज्झनगमां सनि' इति दीर्घे 'ऊर्णुनूषति' इति।

नन्वत्र परत्वात् गुणाऽवादेशयोः कृतयोः अभ्यासे उकारस्य श्रवणं न स्यादिति चेन्न, 'द्विर्वचनेचो'ति गुणनिषेधात्। नचात्र 'सन्यङोः' इति सन्नन्तस्य द्वित्वं प्रति कार्यित्वादिटो निमित्तत्वं न स्यादिति वाच्यम्, इटो द्वित्वरूपकार्यत्वाऽभावेन निमित्तत्वात्। अत्र 'सन्यङोः' इति सूत्रेण प्रथमतः सन्नन्तसमुदायस्य द्वित्वरूपकार्यं प्राप्तं भवति, परन्तु "अजादेर्द्वितीयस्ये"ति बलेन नुशब्दस्यैव द्वित्वरूपकार्यं भवति नन्विटः। इत्थं च 'कार्यमनुभवन्नि' ति परिभाषाया अवसर एव नास्तीति भावः। 'यत्र कार्यमनुभवन् कार्यी प्रवर्तते तत्रैव कार्यी निमित्तत्वेन न स्वीक्रियते' इति परिभाषार्थः। अत्र 'यदागमाः' इति परिभाषया इड्रूप सन् द्वित्वन्नानुभवति।

**यङ्लुगन्ताद् आत्मनेपदं कथन्नेति प्रदर्श्य यङ्लुको भाषायां प्रवृत्तौ किम्मानमिति विस्तरेण ब्रूत।** अयम्भावः—भूधातोर्यङ्लुकि 'बोभवीति' इत्यत्र प्रत्ययलक्षणेन ङित्वधर्ममानीय "अनुदात्तङित आत्मनेपदम्" इति सूत्रेणात्मनेपदं कथं न स्यादिति चेद्? न, ङित्वस्य प्रत्ययाप्रत्ययोभयवृत्तित्वेन प्रत्ययलक्षणसूत्राप्रवृत्तेः। यो हि धर्मः केवलप्रत्यये तिष्ठति, तस्यैव धर्मस्य प्रत्ययलक्षणेनानयनं भवति, यश्च धर्मः प्रत्ययेषु वर्तते, अथ च धातुष्वपि वर्तते, तस्य धर्मस्यानयनं न भवति। ङित्वधर्मश्च यङादिप्रत्ययेषु वर्तते अथ च शीङादिधातुष्वपि

वर्तते, इति तस्य धर्मस्यानयनं न भवति। अत एव शोभना दृषदो यस्मिन् प्रासादे इति विग्रहे प्रत्ययलक्षणेन असन्तत्वमादाय "अत्वसन्तस्य" इति दीर्घोऽपि न भवति। असन्तत्वस्योभयेष्वपि विद्यमानत्वात्।

**यङ्लुको भाषायां प्रवृत्तौ मानम्**—"भूसुवोस्तिङि" इति गुणनिषेधे सिद्धे, "बोभोतु-तेतिक्ते" इति गुणाभावनिपातनं छन्दस्येव गुणनिषेधो भवतीति नियमं करोति। एवञ्च यदि भाषायां यङ्लुक् न स्यात्तदा नियमस्य किमपि फलमेव नास्तीति यङ्लुक् भाषायामपि सिद्धो भवति। न च द्वित्वे 'बोभू' इति समुदाये भूधातोरभावेन "भूसुवोस्तिङि" इति सूत्राप्राप्तौ गुणाभावो निपातनीय एवेति वाच्यम्। षष्ठाध्यायीस्थसूत्रेण यद्द्वित्वं भवति तत्पुनरपि तस्यैवो-च्चारणं भवति, न तु नवीनस्य द्वितीयस्य भूशब्दस्य, "द्विः प्रयोगो द्विर्वचनं षाष्ठम्" इति सिद्धान्तात्।

**यकारवकारान्तानान्तूठ्भाविनामिति फक्किका साधु व्याख्येया।**

"छ्वोः शूठ्" इति सूत्रे भाष्ये किद्ग्रहणमनुवर्तते नवेति विचारे कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तम्। एतावानेव विशेषः। अनुवर्तमाने किद्ग्रहणे छः षत्वं वक्तव्यम्। अननुवर्त-माने त्वनेन छः शत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा प्रष्टुमित्यादि सिद्धये प्रश्चादिसूत्रे छग्रहणं न कर्तव्यम्। एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो यङ्लुक् नास्तीति युक्तप्रायम्। अन्यथा दिवेर्यङ्लुकि ईडभावपक्षे देदेति देदेषि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात्। तत्र किद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योति देद्योषीत्यादिरूपविशेषलाभात्, परन्त्विदं ज्ञापकं "छ्वोः शूठ्" इत्यनेन यत्रोठ् प्रवर्तते, तत्रैव प्रवर्तते। तज्ज्ञापनस्योक्तसूत्रस्य भाष्यमूलकत्वात्। "ज्वरत्वर" इत्यादिसूत्रेण यत्रोठ् भवति, तत्र यङ्लुग् भवत्येवेति युक्तं माधवादीनां सम्मतञ्च।

**हलिकल्योरदन्तत्वनिपातनस्य प्रयोजनं सोदाहरणं प्रदर्शयत।**

हलिकल्योरदन्तत्वनिपातनेन 'वृद्धौ सत्यां टिलोपः' इत्यस्य सिद्धिर्भवति। तथाहि—'वृद्धे-र्लोपो बलीयान्' इति भाष्यवचनात् पूर्वं टिलोपे अग्लोपित्वाद् दीर्घसन्वद्भावयोरभावात् 'अजहलत्' 'अचकलत्' इति रूपद्वयसिद्धौ हलिकल्योरदन्तत्वनिपातनं व्यर्थमेव, तदेव व्यर्थीभूय "वृद्धौ सत्यां टिलोपः" इति वचनं ज्ञापयति। इत्थं च स्वांशे चरितार्थम्। फलञ्च—'अपीपटत्—अपपटत्' इति रूपद्वयसिद्धिः। पूर्वोक्तभाष्यवचनेन पूर्वं टिलोपस्ततो वृद्धिरिति पक्षः सिद्धो भवति। हलिकल्योरदन्तत्वनिपातनेन च पूर्वं वृद्धिस्ततष्टिलोपः इति पक्षः सिद्धो भवति। एवञ्च प्रमाणद्वयेन मतद्वयं सिद्धं भवतीति पूर्वोक्तरूपद्वयस्यापि सिद्धिरिति दिक्।

**'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः' इति वार्तिकं सोदाहरणं व्याख्येयम्।**

आचारेऽर्थे एभ्यः क्विब्वा स्यादित्यर्थः। वाग्रहणात् क्यङपि। वार्तिके अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चच्प्रत्ययस्य प्रतिज्ञायते। नचात्र क्विप्प्रत्ययसन्नियोगेन अच्प्रत्ययस्यानुनासिकत्वादिनिपातनादगल्भादिघटकाकारस्य लोपेऽनेका-च्त्वाभावेन 'अवगल्भाञ्चक्रे' इत्यत्र आम् न स्यादिति वाच्यम्, 'साम्प्रतिकाभावे भूतपूर्व-

गतिराभीयते' इति परिभाषया आम्प्रत्ययस्य सिद्धत्वात् । उक्तवचने प्रमाणञ्च—"आचारेऽवगल्भ" इति प्रकृतवार्तिकमेव । नच आचारेऽर्थे–अवगल्भते, क्लीबते, होडते, इत्यादौ आत्मनेपदार्थं वार्तिकं सार्थकमिति वाच्यम्, "धातूनामनेकार्थाः" इति वचनेन प्रत्ययरहितगल्भादिधातोरप्याचारेऽर्थे शक्तिप्रदर्शनाद् 'अवगल्भते' इत्यादौ तङः सिद्धत्वात् । वार्तिके अवोपसर्गसिशिष्टपाठसामर्थ्यात् केवलगल्भादिधातोः उपसर्गान्तरविशिष्टाच्च क्यङेव भवतीति माधवादयः । परञ्च क्यङ्क्विपोर्नास्ति विवादो द्वाभ्यामपि भाव्यम् । किन्तु अवोपसर्गरहितगल्भादिभ्यः क्विपि सति परस्मैपदमेव स्यान्नत्वात्मनेपदमित्यैव वक्तुं युक्तम् । वार्तिकस्य मुख्यप्रयोजनं प्रयोगे आम्प्रत्ययस्य सिद्धिः । आत्मनेपद तु गौणफलमिति दिक् ।

**उपसर्गसमानाकारमिति व्याख्यायताम् ।**

अयम्भावः–युद्धे योऽयं ग्रामशब्द इति व्याख्यानेन केवलग्रामशब्दस्य युद्धे शक्त्यभावेन संग्रामशब्दस्य लाभात् 'तत्करोति' इत्यादिना णिचि 'सङ्ग्रामयते' इत्यादिसिद्धौ चुरादौ सङ्ग्रामयुद्धे इति विशिष्टग्रामशब्दो व्यर्थीभूय 'उपसर्गसमानाकारम्' इत्यादि वचन ज्ञापयति । तेन 'स्वमनायत' इत्यादौ उपसर्गस्य पृथक्करणं फलं भवति । अथ च ज्ञापकस्य सजातीयापेक्षत्वेन यत्रोपसर्गस्य सम्पूर्णरूपेण स्थितिस्तत्रैव पृथक्करण भवति, यत्र तु गुणादेशेनोपसर्गस्यापहरणं भवति तत्र पृथक्करणन्न भवति । ततश्च ओढ इवाचर्येति विग्रहे आङः पृथक्करणाभावेन अव्ययपूर्वपदत्वाभावाल्ल्यप् न भवतीति फलम् । ज्ञापकस्य विशेषापेक्षत्वे—'उस्योमाङ्क्ष्वाटः प्रतिषेधो वक्तव्यः' इति वार्तिकं तत्प्रत्याख्यानप्रकारकम्, 'आटश्च' इति सूत्रे चकारग्रहणं च प्रमाणम्, अन्यथा 'औढीयत्' इत्यादौ धातुसंज्ञायां कर्तव्यायामाङः पृथक्करणेन 'ओमाङोश्च' इति सूत्राप्रवृत्तौ वार्तिक व्यर्थमेव । एवञ्च पररूपादिकार्याप्रवृत्तौ पुनर्वृद्धिविधानार्थं चकारग्रहणमपि व्यर्थम् । 'आटश्च' इति सूत्रे चकारग्रहणम् 'अटश्च' इति वृद्धिविषये यावत् कार्यं प्राप्नोति तत्तत् सर्वं निवारयतीति चकारग्रहणेनैव पररूपन्न स्यादिति वार्तिकं निष्प्रयोजनमिति वार्तिकं प्रत्याख्यातं भगवता ।

**'कण्ड्वादिभ्यो यक्' इति सूत्रे धातोरित्यनुवृत्तेः प्रयोजनं लिखत ।**

अत्र सूत्रे "धातोरेकाचः" इत्यस्माद्धातोरिति वर्तते । तद्ग्रहणाभावे प्रातिपदिकादेव यक् स्यादित्यर्थे तु धातोर्लडादौ कण्डूवतीत्याद्यनिष्टापत्तिः स्यात् । सुखदुःखादिप्रातिपदिकेभ्यो यकि अल्लोपाऽसम्भवेन सुख्यतीत्याद्यप्यसिद्धिप्रसङ्गाच्च ।

नच धातोरित्यनुवर्तनात् प्रातिपदिकादित्यर्थः कथं लभ्यते इति चेच्छृणु–कण्डूञ् इति दीर्घपाठेन 'प्रातिपादिकाः' इति ज्ञायते । तथाहि–'कण्डूञ् गात्रविघर्षणे' इति धातौ कण्डु इति ह्रस्वान्त एव पठितव्यः । 'अकृत्सार्वधातुकयोः' इति दीर्घे कण्डूयते इति सिद्धे दीर्घान्तपाठो ज्ञापयति "कण्ड्वादयः प्रातिपदिकाः" इति । यदि च कण्ड्वादयः प्रातिपदिकास्तर्हि "कण्ड्वादिभ्यो यक्" इति सूत्रे कित्करणं व्यर्थं स्यात्, तदेव व्यर्थं सत् ज्ञापयति–"कण्ड्वादयो धातवः" इति, इत्थं च कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वञ्च सिद्धम् । अत एवोक्तं भाष्ये–"धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥",

इति। एवञ्च धातुपक्षे 'कण्डूयते' इत्यादीनां सिद्धिः। प्रातिपदिकत्वपक्षे—यकि असति सति' क्विपि च कृते—कण्डूः, धातुत्वादुवङि–कण्ड्वा, कण्डुवः इति। प्रातिपदिकत्वे–यणि कण्ड्वौ, कण्वः इत्यादि।

**णेरणाविति सूत्रं सोदाहरणं व्याख्यायताम्।**

अत्र सूत्रे चत्वारि वाक्यानि प्रतीयन्ते। तथाहि—'णेः' इत्येकं वाक्यम्। "अणौ यत्कर्म णौ चेत्" इति द्वितीयम्। 'स कर्त्ता' इति तृतीयम् 'अनाध्याने' इति चतुर्थम्। आत्मनेपदस्याधिकारः। द्वितीययोगे कर्मपदस्य क्रियापरत्वम्। तृतीययोगे द्वितीययोगस्यानुवृत्तिः, तत्र कर्मपदस्य कर्मकारकबोधकत्वम्। तथा च–ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव ण्यन्तेनोच्यते, अणौ यत्कर्मकारकं स चेण्णौ कर्त्ता स्यान्नत्वाध्याने इति तदर्थः। एतदुदाहरणानि तु अपरिस्पन्दनसाधनसाध्याः कर्तृस्थभावकाः सपरिस्पन्दनसाधनसाध्याः कर्तृस्थक्रियाश्च। तथाहि–(१) पश्यन्ति भवं भक्ताः। (२) पश्यति भवः। (३) दर्शयन्ति भवं भक्ताः। (४) दर्शयते भवः। इति क्रमिकोदाहरणानि बोध्यानि।

**उदाहरणसङ्गमस्तु इत्थम्**—पश्यति भवः इति द्वितीयकक्षायां या क्रियोच्यते सैव क्रिया दर्शयते भव इति चतुर्थकक्षायामुच्यते। एवञ्च क्रियासाम्यात् प्रथमकक्षायां भवरूपकर्मणः कर्तृत्वाच्चात्मनेपदं सिद्धम्भवति। एवं कर्तृस्थक्रियायामारोहयते हस्तीत्यत्रापि अथवा पश्यन्ति भवमारोहयन्ति हस्तिनमिति प्रथमकक्षायामेव कर्मणो हेतुत्वारोपाण्णिचि दर्शयति भवः आरोहयति हस्तीति। ततश्च णिजर्थव्यापारस्य अध्यारोपितकर्तृव्यापारस्य च त्यागेन दर्शयते भव इति तृतीयकक्षायामेव तङ् भवति। न च भवरूपकर्मणः कर्तृत्वात् दर्शयति भवो भक्तानिति द्वितीयकक्षायां कथं तङ् न स्यादिति वाच्यम्, अध्यारोपितकर्तृव्यापारेण साम्येऽपि णिजर्थव्यापारस्याधिक्येन समानक्रियात्वाभावात्। तृतीयकक्षायां तु धातूपात्तव्यापारस्य णिजर्थव्यापारस्य च त्यागेन समानक्रियात्वात्तङ्सिद्धिः। न च तृतीयकक्षायामपि चाक्षुषज्ञानविषयीकरणरूपव्यापारयुक्तायाः पश्यन्ति भवं भक्ता इति प्रथमकक्षास्थक्रियाया अपेक्षया न्यूनता स्यादिति वाच्यम्, एवकारेणाधिक्यांशस्यैव निस्सारितत्वात्।

**'आहध्वं मा रघूत्तम'मिति प्रयोगे शङ्कासमाधी निरूप्येताम्।**

ननु आहध्वम् इत्यादिप्रयोगे रघूत्तमस्य कर्मत्वेन स्वीयाकर्मकत्वाभावादकर्मकत्वाभावाच्च "आङो यमहनः" इति सूत्रेण आत्मनेपदाभाव इति चेद्? न। प्राप्येत्यध्याहारमाश्रित्य रघूत्तमम्प्राप्य मा हध्वम् इति प्राप्तिक्रियाम्प्रत्येव रघूत्तमस्य कर्मतया हन्तेरकर्मकत्वादात्मनेपदस्य निर्बाधात्। न च प्राप्येत्यध्याहारे श्वशुराज्जिह्रेतीतिवदत्रापि कर्मणि पञ्चम्या भाव्यमिति वाच्यम्। ल्यबन्तं विनैव यत्र ल्यबन्तार्थप्रतीतिस्तत्रैव "ल्यब्लोपे कर्मण्यधिकरणे च" इति वचनस्य प्रवृत्तित्वात्। अत्र तु ल्यबन्तं विना ल्यबन्तार्थभानं न भवति, प्रत्युत मारणमेव प्रतिभातीति तस्याविषयत्वम्। अथवा भेत्तुमित्यादि तुमुन्नन्ताध्याहारो वा कर्तव्यः। एवम् 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र विषमविलोचनस्य वक्षः प्राप्य आजघ्ने इति व्याख्यानेन हन्धातोरकर्मकत्वात्प्रयोगः साधुः। अथवा वक्षो भेत्तुमिति तुमुन्नन्ताध्याहारः कर्तव्यः,

यथा लोके मल्लोऽतिहर्षात्स्वस्यैव वक्षस्ताडयति तथा विषमविलोचनस्य समीपमेत्य स्वकीयमेव वक्षः आजघ्ने ।

**'अनुपराभ्यां कृञः' इति सूत्रस्य प्रयोजनं ब्रूत ।**

नन्वनेन सूत्रेण कर्तरि परस्मैपदविधानात् कर्मकर्तर्यपि तत्प्रसक्तिरिति चेन्मैवम्, कार्यातिदेश–शास्त्रातिदेशपक्षद्वयमध्ये कार्यातिदेशपक्षस्यैव प्राधान्यात् कर्मकर्तर्यात्मनेपदविधायकस्य "कर्मवत्कर्मणा तुल्यक्रियः" इत्यस्योक्तसूत्रापेक्षया परत्वादनेन तद्बाधे तदप्रसक्तेः । नच कार्यातिदेशपक्षेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेशस्यैव देशत्वाङ्गीकारात्, शास्त्रातिदेशपक्षे "कर्मवत्कर्मणा" इत्यनेनात्मनेपदाद्यविधानेन तद्विधायकं "भावकर्मणोः" इति शास्त्रस्यवातिदेशात्तस्य च "अनुपराभ्याम्" इत्यतः पूर्वत्वेनानेनैव तद्बाधाद्दोषस्तदवस्थ 'एवेति चेदत्रोच्यते–' "अनुपराभ्यां कृञः" इत्यत्र "कर्तरि कर्मव्यतिहारे" इत्यस्मादेकं कर्तृग्रहणमनुवर्तते, तथा "शेषात् कर्तरि परस्मैपदम्" इत्यतो द्वितीयं कर्तृग्रहणमनुवर्तते । तथा च स्वभाव एव यः कर्ता न तु विवक्षाधीनः कर्मकर्ता तथाविधकर्तर्येव अनुपराभ्यां कृञः परस्मैपदमिति लभ्यते । एवञ्च कर्मकर्तरि नास्य प्रवृत्तिरिति सूत्रस्य प्रयोजनं ब्रवीमिति दिक् ।

**प्रकृतो मितां ह्रस्व एव तु न विकल्पितः इत्यादि फक्किका विशदं व्याख्यायताम्**

नच "चिण्णमुलोः" इति सूत्रे दीर्घग्रहणं व्यर्थम्, "चिण्णमुलोरन्यतरस्याम्" इत्येतावतैव "मितां ह्रस्वः" इति पूर्वसूत्रादननुवृत्तस्य ह्रस्वस्यैव विकल्पे दीर्घविकल्पासिद्धेरिति वाच्यम् । शामिता–शमिता इत्युक्तप्रयोगयोः ह्रस्वविकल्पो न स्यात्, प्रथमणिलोपस्य "अचः परस्मिन्" इति स्थानिवत्त्वेन व्यवहिततया चिण्परकणिपरकत्वाभावात् । दीर्घविकल्पविधौ तु प्रथमस्य णिचो लोपो न स्थानिवत्, दीर्घविधौ स्थानिवत्त्वनिषेधात् । भाष्यकारस्तु 'नपदान्त' इति सूत्रे 'पूर्वत्रासिद्धे न स्थानिवत' इत्येव सिद्धत्वात् तत्र द्विर्वचनसवर्णानुसारदीर्घजश्चरविधीन् प्रत्याख्यातवान् । नच ण्यन्ताण्णौ 'चिण्णमुलोः' इति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, 'चिण्णमुलोः' इति दीर्घस्य पूर्वत्रासिद्धीयत्वाभावात् । ततश्च प्रथमणिचा व्यवहितत्वात् दीर्घानापत्तिः । एवञ्च तत्र दीर्घे कर्तव्ये स्थानिवत्त्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात् कथं दीर्घग्रहणं प्रत्याख्यातमिति वाच्यम्, 'चिण्णमुलोः' इति दीर्घविधौ णाविति णित्वजातिप्रधानो निर्देशः । चिण्णमुल्परकणित्वजातौ परत इति यावत् । णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्त्वेऽपि दीर्घस्य निर्बाधत्वात् । एवञ्च ह्रस्वदीर्घयोर्विशेषाभावात् ह्रस्वविकल्प एव क्रियताम् मास्तु दीर्घग्रहणमिति भाष्यतात्पर्यम् ।

**बोध्यते माणवकं धर्मः**—बुध्यर्थकस्याऽपि प्रधाने गौणे वा कर्मणि स्वेच्छया लादयो भवन्ति । अत एव बोध्यते माणवकं धर्मः "बोध्यते माणवको धर्मम्" इति वा भवतीति ।

बीजञ्चात्र मूलस्थ–द्विकर्मणां धातूनां कर्मप्रत्ययस्य व्यवस्थैव । तथा हि—

"गौणे कर्मणि दुह्यादेः प्रधाने नी–हृ–कृष्–वहाम् ।
बुद्धि–भक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥" इति ।

